SARASVATĪBHAVANA-GRANTHAMĀLĀ

[Vol. 91]

# VĀKYAPADĪYAM

[Part II]

( **Vākyakāṇḍam** )

*by*

**BHARTṚHARI**

*With the Commentary of*
*Puṇyarāja*

&

Ambākartrī
*by*

**Pt. RAGHUNĀTHA SARMĀ**




Research Publication Supervisor
DR. BHAGIRATHA PRASADA TRIPAṬHI 'VAGĪŚA ŚĀSTRI'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,

VARANASI
1980

Published by—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.

Available at—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi–221002.

Second Edition : 1100 Copies
Price : 16-00

**Printed by—**
**Surendra Mishra**
**Manager,**
Sampurnanand Sanskrit Vishvavidyalaya Pr

सरस्वतीभवन-ग्रन्थमाला

[ ९१ ]

भर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ द्वितीयो भागः ]

( वाक्यकाण्डम् )

पुण्यराजकृतया टीकया

श्रीरघुनाथशर्मप्रणीतया

अम्बाकर्त्रीव्याख्यया च

सहितम्



अनुसन्धानप्रकाशनपर्यवेक्षकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्

२०३७ तमे वैक्रमाब्दे　　१९०२ तमे शकाब्दे　　१९८० तमे खैस्ताब्दे

# प्रास्ताविकम्

अम्बाकर्त्रीसंवलितस्य वाक्यपदीयस्य वाक्यविचारात्मकमिद द्वितीयकाण्डं यद्यपि बहुभ्यो वर्षेभ्यः प्रागेव मुद्रणातीतत्वमभजत् , तदनुरागिभिश्चानारतं प्रकाशनार्थं पुनः पुनराग्रहो विधीयते स्म, तथापि साधनसाङ्कर्याच्चिरेण तदिदानी पुनः प्रकाशमानीयते द्वादशवर्षानन्तर-मिति सामोदं समुदीरणम् ।

यद्यपि सन्ति द्वित्राणि व्याख्यानानि वाक्यपदीयस्य प्राचीनानि, तथापि टीकेयं तान्यतिशेत इति ब्रह्मकाण्डस्य तृतीयकाण्डखण्डाना च प्रास्ताविकेषु सोदाहरणं प्रदर्शितम् । काण्डेऽस्मिन् काण्डान्तरवद् महाभाष्यकारमतग्राह्यत्वं सर्वत्र प्रत्यपादि श्रीशर्मप्रणीतायामम्बा-कर्त्र्याख्यायां व्याख्यायाम् । पुण्यराजस्तु महाभाष्यकारं निराकुर्वन्नाह—'भाष्यकारस्त्वभिप्रायान-भिज्ञ एवान्तरङ्गत्वाद् गौणमुख्ययोर्मुख्ये संप्रत्यय इत्येवमत्र [ न ] प्रगृह्यसंज्ञा । अतोऽन्तर-ङ्गस्य कार्यस्याप्राप्तिरिति स्थितम्' इति । अम्बाकर्त्र्यां श्रीशर्ममहोदयस्तु यथोत्तरं मुनीनां प्रामाण्यमूरीकृत्य महाभाष्यकारपक्षस्यौचित्यं प्रत्यपादयत्—"भाष्यकारस्तु वार्त्तिककृतः प्रागु-क्ताभिप्रायानभिज्ञ एवं मन्यते—'गोऽभवदित्यत्रापरनिमित्तकत्वेनान्तरङ्गत्वात् प्राप्तापि प्रगृह्यसंज्ञा गौणमुख्यन्यायेन न भवतीति । अत्र यथोत्तरं मुनीना प्रामाण्यमिति भाष्यकारमतमेव युक्तम् । व्याकरणस्य च क्वचिल्लक्षणाग्राहकत्वमेव युक्तम्, यत्रार्थस्य लोके गौणत्वेन व्यवहारः प्रत्ययश्च, लोकव्यवहारानुरोधित्वाद् व्याकरणस्य । अत एव व्याकरणेन सिद्धमपि रूपं लोके न प्रयुज्यते इति' इति ।

यत्र पुण्यराजः सम्यग् व्याख्यातुं न शशाक, तत्र व्याख्यायामम्बाकर्त्र्यां तद्व्याख्या पर्यालोचिता हेतुं प्रदर्शयता व्याख्याकारेण । क्वचित् पुण्यराजव्याख्यानमुपेक्ष्यकोटौ परिगणितम्, क्वचिन्निराकृतम् , क्वचिच्च तस्य व्यर्थत्वमभिहितम् । 'आवृत्तेरनुमानं वा' ( २।३६८ ) इति कारिकाव्याख्याने पुण्यराजव्याख्यामालोचयन्नाह श्रीशर्ममहोदयः—'वस्तु-तस्तु—अत्र पुण्यराजव्याख्याने आवृत्तेरनुमाने हेतुर्न निर्दिष्टो भवति, सारूप्यादित्यस्य एक एवोच्चारितो भवतीत्यत्र हेतुत्वोपगमात् । वाक्यभेदश्च भवतीतीदं व्याख्यानमुपेक्ष्यं प्रतिभाति' इति । 'अथ यज्ज्ञानमुत्पन्नम्' ( २।२४३ ) इति कारिकाव्याख्यानप्रसङ्गे पुण्य-

राजीयव्याख्यां पर्यालोचयन् व्याख्यत्--"यत्तु--'अस्मिन् व्यापारभेदे' इत्यस्य 'नञ एवमात्मके व्यापारविशेषे बुद्धिनिषेधात्मकेऽङ्गीक्रियमाणे सति' इति व्याख्यानं कृतं श्रीपुण्यराजेन, तद् विरुद्धम्, 'तन्मिथ्येति नञा कृतम्' इति पूर्वार्द्धवाक्येनाति स्पष्टमेवेति" इति। 'नष्टरूपमिवाख्यातम्' (२।३३७) इत्यत्राम्बाकर्त्रीकारो व्याहरत्--"यत्तु श्रीपुण्यराजेनैवं व्याख्यातम्-'द्वारं द्वारं कर्म इत्यत्र कर्मपदेनैवाख्यातमसत्कल्पमाक्षिप्तं यद्यत्रोच्यते, तदा युगपत् परस्परविरुद्धयोः सिद्धासिद्धयोरर्थयोरेकस्मिन् शब्दे प्रधानत्वेन वाच्यत्वमापतितम्, न चैतत् परिदृष्टम्' इति। अत्र द्वारं द्वारमिति पुनरुक्तिः कर्मपदप्रयोगश्च व्यर्थः, द्वारमित्येतावन्मात्रेणैव 'पिधेहि' इत्यादेराख्यातस्याक्षेपसंभवात्, तत्र तत्र शास्त्रेषूपन्यासाच्च। अत्र श्रीपुण्यराजवाक्ये आक्षिप्तमित्यस्य मदुक्तव्याख्यानमेव ज्यायः। अध्याहृतमित्यर्थकत्वे 'एकस्मिन् शब्दे' इत्याद्यग्रिमग्रन्थविरोधः। 'पिधेहि' इत्याख्यातस्याध्याहारे शब्दद्वयसंभवादिति" इति।

एवं तावदम्बाकर्त्रीकारैः सोहापोहं पूर्वाचार्यव्याख्यानपर्यालोचनप्रसङ्गे सम्पूर्णो व्याकरणाम्बुधिर्मथितः। मध्ये मध्ये शास्त्रान्तरीयवचनोपन्यासेन तदीयं सकलशास्त्रज्ञत्वमभिव्यज्यते। पूर्ववर्तिग्रन्थमतालोचनपूर्वकं स्वकीयपक्षस्थापनमाधुनिकोऽनुसन्धानविधिर्नाम। पण्डिताग्रगण्यानां श्रीशर्मणां व्याख्यानमिदं कमपि गवेषणाग्रन्थमतिक्रमितुमलम्। साम्प्रतिके गवेषणाविधौ पाठालोचनं नाम मन्यतेऽन्यतरोऽभ्युपायः। श्रीशर्मभिर्यथास्थानं विवादग्रस्ताः पाठा अपि पर्यालोचिताः सन्ति वाक्यपदीयस्य--"अत्र कारिकायां क्वचित् पुस्तके 'यदि प्राप्तं प्रधानं च' इति पाठः, स तु हेयः, युगपद्भावसत्त्वयोरिति षष्ठ्यन्तस्य सम्बन्धासम्भवादिति" इति (२।३३७)। "क्वचित्तु 'अर्थः कृत्स्नोऽनुमीयते' इत्यस्य स्थाने 'अर्थः कुत्र न नीयते' इति पाठः, स तु प्रकृतासंबद्ध इति स्फुटमेव। कथञ्चित् प्रकृते संयोजनेऽप्यक्षरास्वारस्यमिति" इति (२।१६१)। 'यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम्' (२।३०) इत्यत्र व्याख्याया श्रीशर्ममहोदयैरुक्तम्--"अत्र पुण्यराजसम्मतः 'नादैरेकं प्रकाशितम्' इति पाठोऽत्रत्यतट्टीकायां दर्शनात् प्रतीयते। भरतमिश्रकृतस्फोटसिद्धिग्रन्थदर्शनेन तु 'भागैरेकं प्रकाशितम्' इति पाठो भाति" इति। एवं तावत् पाठनिर्धारणमधिकृत्यापि श्रीपुण्यराजः पर्यालोचितः। पुण्यराजकृतव्याख्याभाषाविषये (२।३८७) अम्बाकर्त्र्यां विहितं संशोधनमवधानमर्हति विदुषाम्--"यत्तु पुण्यराजेनोक्तम्--'यद्येकैकं शतं शतं दण्ड्येत, तदा वीप्साविषयोऽपह्नुतः स्यात्। तथा शतकर्मकमत्र दण्डनं प्राधान्येन विधीयते' इति। अत्र 'वीप्सया

विषयोऽपह्नुतः स्यात्' इति पाठः साधुर्भाति" इति ( २।३८७ )। 'प्रतिभा यत्प्रभूतार्था' इति पुण्यराजकृतव्याख्यायामुद्धृतकारिकाया अन्वेषणार्थमम्बाकर्त्र्यामुक्तम्। एवं तावदधिटीकं सूक्ष्मेक्षिका प्रवर्तते श्रीशर्ममहोदयस्य।

प्रतिकारिकमम्बाकर्त्र्यां मतान्तराणि पक्षाश्च स्पष्टीक्रियन्ते। यत्र निगूढोऽर्थः स्फोरणीयतामापद्यते तत्र 'अयं तु विशेषः' ( २।१-२ ), 'तदेव निर्गलितोऽर्थः' ( २।१६१ ), 'इयांस्तु विशेषः' ( २।१२८ ), 'कारिकाया निगूढोऽभिप्रायस्तु' ( २।६१ ) इत्यादिशब्दैरुपक्रमो विधीयते।

इत्थं ग्रन्थग्रन्थिविमोचनपटीयसी विशदेयं वाक्यपदीयव्याख्या संस्कृतवाङ्मये प्रथमतोऽवतीर्णा १६६८ खीस्ताब्दे च ( द्वितीयकाण्डात्मिका ) प्रकाशमुपागता। काण्डत्रयात्मके सम्पूर्णे वाक्यपदीये समुपलभ्यमाना प्रथमेयमम्बाकर्त्री नाम व्याख्या साम्प्रतम्। वाक्यपदीयस्य द्वितीयकाण्डोऽय यावदधिगतया स्वोपज्ञव्याख्यया, पुण्यराजकृतवृत्त्या, तद्द्वयमाधारीकृत्य प्रततयाऽम्बाकर्त्रीव्याख्यया च समुल्लसितः; अनुसन्धानाधिकारिणामन्यतमेन श्रीरामगोविन्दशुक्लेन संशोधितः सरस्वतीभवनग्रन्थमालाया एकोननवतितमप्रसूनतया पुनः प्रकाशमानीयमानो विद्वज्जनानां स्वान्तनिशान्तं समुद्भासयन् नूनं समादृतो भविष्यतीति प्रत्येति।

कार्तिकपूर्णिमायाम्<br>२०३७ वै०<br>( २२-११-८० खी०शनौ )

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>**निदेशकः**<br>**अनुसन्धानसंस्थानस्य**

# पुण्यराजपद्यानुसारिणी विषयसूची

**विषयः** **पद्यानि**

# उपोद्घातः

अथेदानीं पण्डितप्रकाण्डैर्नानाशास्त्रानुशीलनविमलधिषणैर्व्याकरणागमनिगूढार्थविवेचननिपुणैः श्रीरघुनाथशर्ममहाभागैर्विरचितां वाक्यपदीयद्वितीयकाण्डस्याम्बाकर्त्रीनाम्नीं प्रमेयबहुलां व्याख्यां प्रकाशयद् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याङ्गभूतमनुसन्धानसंस्थानमेतत् परमं प्रमोदमावहति। वाक्यपदीयप्रथमकाण्डभूतस्य ब्रह्मकाण्डस्यैषा टीका १९६३ ईसवीये वर्षे अस्मादेव संस्थानात् प्रकाशितचराऽभूत्। पञ्चवर्षाभ्यन्तरे एव महामतिभिर्व्याख्याकर्तृभिर्द्वितीयकाण्डभूतस्य वाक्यकाण्डस्येयं व्याख्या विद्वज्जनमानसोल्लासाय साम्प्रतं १९६८ वर्षे प्राकाश्यं नीयते। तत्र ब्रह्मकाण्डस्य व्याख्यायाः प्रकाशनावसरे श्रीसुब्रह्मण्य-अय्यरमहोदयैर्वाक्यपदीयस्य व्याख्यातृविषये बहु ध्यातव्यं तत्त्वं स्वोपोद्घाते विशदीकृतम्। तद्विषयपरिपूर्तये वयमिह भर्तृहरिसमयादिविषये संक्षेपेण किञ्चिद् वदामः।

व्याकरणनये सर्वत्र व्यवहारे प्रवृत्तिनिमित्तत्वाद् वाक्यमेव प्राधान्यं भजते। प्रवृत्तिनिवृत्तिहेतुत्वं वाक्य एव परिशिष्यते। गामानयेति वाक्यश्रवणानन्तरमेव मध्यमवृद्धस्य सास्नादिमत्पशवानयने प्रवृत्तिरवलोक्यते। गां माऽऽनयेति वाक्यान्तरश्रवणनिबन्धनैव तस्मात् कार्यात् तस्य निवृत्तिः। अत एव वाक्यस्यैव कोऽपि महिमा जागर्ति व्याकरणागमे। वाक्यस्य स्वरूपविमर्शः, अर्थागमप्रक्रियाविवेचनादि वैयाकरणैर्निपुणं तर्केण युक्त्या च निरूपणीयं विद्यते। वाक्यस्य विश्लेषणादेव पदानामवगतिर्भवति, पदसमूहत्वाद् वाक्यस्य। विश्लेषणानर्हत्वे वाक्यस्य तद्घटकपदानां ज्ञानं कथमपि साधयितुं नैव पार्यते। अत एव पदाद् वाक्यं गरीयः। वाक्यपदयोर्विवेचनफलैव वाक्यपदीयस्य निर्मितिः। अत एव वाक्यस्वरूपप्रतिपादकस्य द्वितीयकाण्डस्य जागर्ति किमपि माहात्म्यम्। पदस्वरूपविमर्शकस्य तृतीयकाण्डस्य तदवरत्वेऽपि मूलग्रन्थस्यानिवार्याङ्गत्वं नूनं स्वीकरणीयं भवति। ये खलु वदन्ति यत् तृतीयकाण्डविरहितस्यैव ग्रन्थस्य वाक्यपदीयेति संज्ञा व्यपदिश्यते, ते तु मन्मते नैव समीक्ष्य विवेचकाः। पदस्वरूपप्रतिपादककाण्डं विहाय पदविवरणराहित्येन वाक्यपदीयेति ग्रन्थस्याभिधानं नैव संगच्छते। विविधानां विषयाणां विवरणाद्धेतोस्तस्य प्रकीर्णकाण्डाभिधाने न विद्यते कस्यापि विवेचकस्य वैमत्यम्, परन्तु तृतीयकाण्डमपि पदस्वरूपविवृतिमन्मूलग्रन्थस्यैवाङ्गभूतमित्येव नूनं निर्णेतुं क्षम्यते। प्रथमकाण्डं शब्दब्रह्मस्वरूपविमर्शकत्वाद्धेतोः समग्रस्यैव ग्रन्थस्य प्रस्तावनाभूतं मूलतत्त्वं विशदमुपन्यस्यति। अत एव वाक्यपदीयेत्यभिधानं त्रिकाण्डात्मकस्य ब्रह्म-वाक्य-पदप्रतिपादनात्मकस्य समग्रस्य ग्रन्थस्य विशदं संगच्छते। भर्तृहरिग्रन्थस्य वाक्यपदीयेति संज्ञा आदिकाण्डद्वय एवौचित्यं भजत इत्यभियुक्तानां कथनं नैव विश्वासपदवीमाटीकते।

उपरि निर्दिष्टं मदीयं मतं पुण्यराजस्य कथनेनानेन किमपि दृढतरं प्रमाणीभवति —

वर्त्मनामत्र केशाञ्चिद् वस्तुमात्रमुदाहृतम् ।
काण्डे तृतीये न्यक्षेण भविष्यति विचारणा ॥

( वा० प० २ । ४८३ )

इति कारिका पुण्यराज इत्थं विवृणोति—

"अत्रास्मिन् वाक्यकाण्डे काण्डद्वये वा केषाञ्चिदेव न्यायवर्त्मनां वस्तुमात्रं बीजमात्रं प्रदर्शितमिव । शिष्टे तु तृतीयेऽस्य ग्रन्थस्य पदकाण्डद्वयनिष्यन्दभूते न्यक्षेणादरविशेषेण स्वसिद्धान्तपरसिद्धान्तवर्तिनां विचारणा युक्तायुक्तविचारपूर्वकनिर्णीतिर्भविष्यति । ततो नायमेतावान् व्याकरणागमसंग्रह इति" ।

किं तात्पर्यमस्य व्याख्यानस्य ? तृतीयकाण्डमस्यैव ग्रन्थस्य शिष्टभागः । नहि काण्डद्वय एव परिसमाप्यते व्याकरणागमसंग्रहः । यावत् तृतीयकाण्डमपि स स्वस्मिन्नन्तर्भावयतीति कथनस्यायमेवाभिप्रायः । समुल्लसति यत् काण्डत्रयात्मक एव ग्रन्थो वाक्यपदीयेति नाम्ना व्यपदेशमर्हतीति विषये विज्ञा एव प्रमाणम् ।

तत्र भर्तृहरेर्देशकालौ तावदनुसंदध्मः । भर्तृहरिर्हरिर्हरिवृषभ इति त्रिभिरभिधानै-र्वाक्यपदीयस्य प्रणेता वैयाकरणधौरेयो नानाव्याकरणग्रन्थेषु तदितरशास्त्रीयग्रन्थेषु च बहुशो निर्दिश्यते । स्वजन्मना भारतवर्षस्य कं देशमलञ्चकार स महात्मेति प्रश्नः प्रमाणा-भावात् साम्प्रतमपि पूर्णं समाधानं नैवाकलयति । तस्य जीवनचरितविषयेऽपि तूर्णीभावा-वलम्बनमेव श्रेयस्करम् । न च मूलकारिकासु, न वा प्रथमकाण्डस्य सकलाया स्वोपज्ञवृत्तौ, न वा द्वितीयकाण्डस्य विच्छिन्नाया स्वोपज्ञवृत्तावेतद्रहस्योद्घाटनक्षमो निर्देशकल्पो निभाल्यते, न वा कोऽपि सङ्केताभासः साक्षात् क्रियते । भर्तृहरिः स्वगुरुमपि नाम्ना नैव निर्दिशति । तस्य विषये इदमेवाभिप्रैति यद् वाक्यपदीयस्यास्य मूलं स्वगुरुणैव संगृहीतमिति—

न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।
प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः ॥

( वा० प० २ । ४८४ )

भर्तृहरेर्गुरोर्नाम आचार्यवसुरात एवासीदिति तु—

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥

( वा० प० २ । ४८३ )

इति कारिकाया व्याख्यानानन्तरं पुण्यराजो वदति—"अथ कदाचिद् योगतो विचार्य तत्र भगवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात् प्रणीत इति स्वरचितस्यास्य ग्रन्थस्य गुरुपूर्वक्रमममभिधातुमाह न्यायप्रस्थानेति" । अत एव वसुरातो भर्तृहरेर्मान्यो गुरुः ।

वाक्यपदीयस्य मूलं व्याकरणागमसंग्रहस्तैरेव महात्मभिर्विरचित इति विषये **न** विद्यते किञ्चि**द्** द्वापरत्वम् ।

भर्तृहरेरभिजनविषये किञ्चिद् विचारयामः । कुत्रापि स जन्मस्थानस्य संकेतं नैव विधत्ते । परन्तु केषाञ्चित् सम्भाव्यमानतया विशुद्धानां प्रमाणानां सद्भावात् काश्मीराभिजनोऽयं महात्मा भर्तृहरिरिति प्रतीयते । वाक्यपदीयमिति प्रयोगं काशिका "शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" ( अष्टाध्यायी ४।३।८८ ) इति सूत्रेण द्वन्द्वरूपाद् वाक्यपदेति शब्दात् छप्रत्यययोगेन निष्पादयति । वाक्यपदीयेत्यभिधानस्यायमेव प्राचीनतमः प्रथमावतारः संकेतस्य । काशिका काशिषु भवेति निर्दिशति पदमञ्जरीकारो हरदत्तमिश्रः । परत्वस्या रचयितारौ जयादित्यवामनौ काश्मीरकावास्तामिति विद्यते सार्वत्रिकी प्रसिद्धिः । निकटस्थेन ग्रन्थकर्त्रा केनचिद् निकटस्थस्य ग्रन्थरचयितुः परिचयो नैसर्गिकत्वेन सम्भाव्यते । वाक्यपदीयेति ग्रन्थाभिधानं काश्मीरकाभ्या विरचिता काशिकैव सर्वप्रथम संकेतयति । अतो भर्तृहरिणा साकं तयोः परिचयो नितान्तं घनिष्ठो निकटस्थश्चेति कथनं सम्भावनाकोटिं नैव परिवृणक्ति ।

अन्यच्च काश्मीरकैरेव प्रत्यभिज्ञादर्शनग्रन्थेषु शैवाचार्यैर्भर्तृहरेः कारिकाः क्वचित् खण्डनाय क्वचिच्च स्वमतमण्डनाय प्रथमं बहुश उद्धृता आलोचिता विवेचिताश्च । तत्र शैवाचार्याणां संकेतो न केवलं भर्तृहरिरचिताः कारिका एवाकलयति, प्रत्युत प्रथमकाण्डस्य भर्तृहरिनिर्मिता स्वोपज्ञवृत्तिमपि तावद् विमर्षणधिया विमृशति । तत्रस्था कारिकां वा विशिष्टं लक्षणं वा समुद्धृत्य विवृण्वन्ति आलोचयन्ति चैते तन्त्रशास्त्रमर्मज्ञा विद्वांसः । तद् यथा—

( क ) **सोमानन्दः** ( ८८० ई० ) स्वीयशिवदृष्टिनाम्नो ग्रन्थस्य द्वितीयाह्निके वैयाकरणानां शब्दाद्वैतवादमधिक्षिपति । प्रसङ्गेऽस्मिन् वाक्यपदीयस्य प्रथमां कारिकाम् 'अनादिनिधनं ब्रह्म' ( १।१ ) तथा 'न सोऽस्ति प्रत्ययो लोके' ( १।१२३ ) कारिका चोद्धरति । भर्तृहरिविरचितेति धिया—

अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।

इति कारिकामपि शब्दान्ते निर्दिशति । नेयं कारिका भर्तृहरिरचिता यावत् १।१४२ कारिकायाः स्वोपज्ञवृत्तावन्यतः कस्मादपि ग्रन्थादत्र निर्दिष्टा ।

( ख ) उत्पलाचार्यः सोमानन्दस्य साक्षात् शिष्यः शिवदृष्टेर्व्याख्याकारः ( ९२५ ई०-९५० ई० ) भर्तृहरेः कारिकामुद्धरति, तस्य स्वोपज्ञवृत्तिमपि । यथा प्रथमकारिकायाः स्वोपज्ञवृत्तौ विवर्तस्य प्रख्याततमं लक्षणं शिवदृष्टेः स्वटीकायामुद्धरति—"एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः ।"

भर्तृहरेर्वाक्यपदीयस्य व्याख्यातारावुभावपि कश्मीराभिजनाववेति विदाङ्कुर्वन्तु विपश्चितः। हेलाराजः परममाहेश्वराचार्यस्याभिनवगुप्तस्य गुरूणामन्यतमो बभूव। तस्याविर्भावकालस्तु ईस्वीयदशमशतकस्य मध्यभागः (९५० ई०)। तेन वाक्यपदीयस्य त्रयाणामपि काण्डानां प्रमेयबहुला निगूढार्थप्रबोधिनीव्याख्या विरचितेत्यत्र नास्ति लेशोऽपि संशीतेः। तृतीयकाण्डस्य तेन निर्मिता प्रकाशाख्या व्याख्या प्रसिद्धा मुद्रिता चोपलभ्यते। आद्ययोः काण्डयोर्व्याख्या तेन निरमायीति स स्वयमेव निगदति, परन्तु दुर्दैवहतकेन विनष्टाया हा हन्त नामापि न श्रूयते, तत्प्राप्तिस्तु दूरे आस्ताम्। एवमेव पुण्यराजोऽपि काश्मीरक एव।

एव काश्मीरकेण जयादित्येन (षष्ठी शती) सर्वप्राचीनं ग्रन्थस्य नामनिर्देशात्, प्राचीनैः काश्मीरकैः शैवाचार्यैर्ग्रन्थस्थकारिकाणां स्वग्रन्थेषु प्रथमं समुद्धरणात्, काश्मीरकाभ्यां हेलाराजपुण्यराजाभ्यां ग्रन्थस्य व्याख्यानिबन्धनाच्चानुमातुं शक्यते यद् वाक्यपदीयस्य रचयिता तत्रभवान् भर्तृहरिः काश्मीराभिजन एव बभूव। एतद्विषयेऽन्यदपि दार्ढ्याय प्रस्तावितस्य मतस्यैतस्य प्रमाणमपेक्ष्यते।

भर्तृहरिकालोऽप्यनुमानेन साधयितुं शक्यते। वाक्यपदीयस्यान्तरङ्गपरीक्षणादवसीयते यत् चन्द्राचार्यादयो विद्वांसो भाष्यबीजान्यनुसरन्तो नीतवन्तो बहुशाखत्वं व्याकरणागमस्य—

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः॥
(वा० प० २।४८९)

अस्यां कारिकायां भर्तृहरिणा नामग्राहं निर्दिष्टोऽयं चन्द्राचार्यः कस्मिन् देशे कस्मिंश्च काले बभूवेति प्रमाणाभावाद् नैव साधु निश्चीयते। राजतरङ्गिण्यां कल्हणश्चन्द्राचार्यं स्वीयव्याकरणप्रणेतृत्वेन स्पष्टं स्मरति—

चन्द्राचार्यादिभिर्लब्ध्वा देशं तस्मात्तदागमम्।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम्॥
(राजतरङ्गिणी १।१७६)

उभयोर्ग्रन्थयोर्नाम्ना निर्दिष्टश्चन्द्राचार्योऽभिन्न एवाचार्य इति तु निश्चप्रचमेव। कल्हणकथनानुसारेण चन्द्राचार्येण कोऽपि स्वनाम्नाङ्कितो विशिष्टो व्याकरणग्रन्थोऽपि निरमायीति स्फुटं प्रतीयते। व्याकरणशास्त्रस्येतिहासे चन्द्रगोमिना प्रणीतो विद्यते चान्द्रव्याकरणेत्याख्यां वहन् पाणिनीयसम्प्रदायात् पृथग्भूतो नवीनव्याकरणक्रमान्वितः प्रसिद्धो ग्रन्थः। 'गोमिन्'शब्दः पूज्यार्थमभिधत्ते। अत एव 'चन्द्रगोमी' इत्यस्यैव चन्द्राचार्येति नाम्ना वाक्यपदीये राजतरङ्गिण्यां च व्यपदेशो नितान्तमौचित्यं भजते। चन्द्राचार्यस्याविर्भावकालः स्वतन्त्रेण

प्रमाणेन नैव साधु निर्णीतो वर्तते, येन तदवान्तरभावित्वाद् भर्तृहरेरपि समयो निःसंदिग्धं निर्णीयेत।

( १ ) पूर्वमेवोल्लिखितं यत् काशिका वाक्यपदीयग्रन्थं नाम्ना निर्दिशतः। अतो वाक्यपदीयस्य निर्माणं काशिकायाः प्रणयनात् पूर्वमेवाभवत्। काशिका "प्रकाशनस्थेयाख्ययोश्च" (१।३।२३) इति सूत्रस्य व्याख्यायाम् 'संशय्य कर्णादिषु तिष्ठते यः" (किराताजु० ३।१४) इति किराताजुर्नीयं पद्य दृष्टान्तत्वेनोद्धरति। अत एव काशिका भारवेः ( ४५० ई० ) सकाशादर्वाक्तनी रचना। तस्या निर्माणकालस्तु ८७५ ई० अनुमातुं पार्यते। एतस्मात् समयात् प्राक्तनोऽयं भगवान् भर्तृहरिरिति तु निश्चितम्।

(२) हरिस्वामी ( ५३८ ईशवीयवर्षे ) शतपथब्राह्मणस्य भाष्ये वाक्यपदीयस्याद्यं पद्यं समुद्धरति--'वाग्वा अनुष्टुब् वाचो वा इदं सर्वं प्रभवति' ( श० प० ब्रा० १।३।२।१६ ) इत्यंशस्य व्याख्यानावसरे स्वाभीष्टार्थस्य दृढीकरणाय प्रमाणत्रयं संकेतते प्रथमं मनुवचनम्, तदनन्तरमागमवचनं तैत्तिरीयोपनिषत्स्थम् "तस्माद्वा एतस्मादात्मन आकाशः संभूतः"। अन्ते च कथयति--"अन्ये तु शब्दब्रह्मैवेदं 'विवर्ततेऽर्थभावेन प्रक्रिया इत्यत आहुः"। उद्धरणक्रमतोऽवसीयते यत् 'विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः' कारिकाया प्रणेता भर्तृहरिस्तदाविर्भावकालाद् नातिदूरस्थ आसीत्। भर्तृहरिर्हरिस्वामिनो निकटस्थः पूर्ववर्ती आचार्यो बभूवेत्येवानुमातुं पार्यते।

(३) प्रख्यातो बौद्धदार्शनिको दिङ्नागः स्वीये 'त्रैकाल्यपरीक्षा'नाम्नि भोटभाषानिबद्धे गीर्वाणवाण्यामनुपलब्धे ग्रन्थे प्रथमश्लोकस्य स्वोपज्ञवृत्ता समुद्धृतं कारिकाद्वयमेतद् भोटभाषया परिणमयति--

अथ विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते[१]॥

एतेन दिङ्नागाचार्याद् भर्तृहरेः पूर्वकालिकत्वं ध्रुवमुन्नेतुं पार्यते। दिङ्नागस्य समयस्तु ५०० ई० निश्चीयते प्रत्नेतिहासविद्भिः।

प्रमाणत्रयेण दृढीकृतोऽयं निष्कर्षो यत् काशिकाया हरिस्वामिनो दिङ्नागस्य च पूर्वकालिकोऽयं वाक्यपदीयस्य रचयिता भर्तृहरिः ईसवीयवर्षस्य ४०० वर्षादारभ्य

---

१. **डेक्कनकालेज सं० 'सवृत्ति वाक्यपदीयम्' पृ० १३-१४, ( श्रीसुब्रह्मण्य अय्यर द्वारा सम्पादित पूना, १९६६ )।**

४५० ई० पर्यन्तं यावत् प्रादुर्बभूव । सामान्यरूपेणायमेव कालखण्डस्तस्याविर्भावेण संघटत इति[१] ।

वाक्यपदीयं ब्रह्मकाण्ड-वाक्यकाण्ड-पदकाण्डेति नाम्ना प्रख्यातैस्त्रिभिः काण्डैर्विभक्तं कारिकामयो ग्रन्थः । एतस्य विरचने न केवलं भर्तृहरेः, अपि तु तस्य गुरोराचार्यवसुरातस्यापि निर्माणकौशलं जागर्ति । नायं केवलं भर्तृहरिनिर्माणकौशलनिबन्धनः सम्प्रदायविहीनो ग्रन्थः, अपि तु वसुरातप्रयोज्यो व्याकरणागमः प्राक्तनव्याकरणपरिपाटीं नूनमनुबध्नाति । ग्रन्थेऽस्मिन् कारिकाणां स्वरूपसंख्यादिविमर्शनमपि नानाहस्तलेखानुशीलनमूलकमनुसन्धानसातत्यमभिकाङ्क्षते । श्री-अभ्यङ्कर-लिमयेमहाभागाभ्यां सम्पादितस्य वाक्यपदीयस्य प्रथमकाण्डे १५६ कारिका विद्यन्ते । परन्तु श्रीसुब्रह्मण्य-अय्यरद्वारा सम्पादिते वृत्तिपद्धतिभ्यां समन्विते प्रथमकाण्डे १४७ एव कारिकाः समुपलभ्यन्ते । १०८ कारिकात आरभ्य ११५ कारिकां यावदष्टौ कारिकाः प्राचीनात् कस्मादपि ग्रन्थादत्र प्रमाणोपन्यासाय समुद्धृता इति स्वीयं मतं निष्ठया सोऽभिव्यनक्ति । स्वोपज्ञवृत्तौ विद्यमानस्तत्रत्य उपोद्घातो मतमिदं साधूपोद्बलयति । इत्थं क्रियमाणे हस्तलेखादिसाहाय्याद् वृत्तित्रयसमीक्षणे मूलकारिकाणां संख्या स्वरूपं च निर्णेतुं प्रभवति समालोचकः । तत्तु कारिकाणां तात्पर्यार्थविमर्शे नितान्तमुपयोगि । तदर्थं प्रभूतः प्रयासोऽवलम्बनीयो भविष्यति ।

अधुना पुण्यपत्तनात् प्रकाशितस्य वाक्यपदीयमूलग्रन्थस्य कारिकाणां संख्या इत्थं व्यवस्थिता दृश्यते—

(क) प्रथम( ब्रह्म )काण्डे १५६ कारिकाः ।

(ख) द्वितीय( वाक्य )काण्डे ४८७ कारिकाः ।

(ग) तृतीय( पद )काण्डे—
,, प्रकीर्णकाण्डे वा

| | |
|---|---|
| (१) जातिसमुद्देशे | १०६ कारिकाः |
| (२) द्रव्यसमुद्देशे | १८ ,, |
| (३) सम्बन्धसमुद्देशे | ८८ ,, |
| (४) भूयोद्रव्यसमुद्देशे | ३ ,, |
| (५) गुणसमुद्देशे | ६ ,, |
| (६) दिक्समुद्देशे | २८ ,, |
| (७) साधनसमुद्देशे | १६७ ,, |

१. भर्तृहरिसमयविषये विशेषतो द्रष्टव्यं वाक्यपदीयस्य भूमिका, पृ० १२-१३ ( अभ्यङ्कर-लिमये द्वारा सम्पादित, पूना, १९६५ ) ।

| | | |
|---|---|---|
| (८) क्रियासमुद्देशे | ६४ | ,, |
| (९) कालसमुद्देशे | ११४ | ,, |
| (१०) पुरुषसमुद्देशे | ९ | ,, |
| (११) संख्यासमुद्देशे | ३२ | ,, |
| (१२) उपग्रहसमुद्देशे | २७ | ,, |
| (१३) लिङ्गसमुद्देशे | ३१ | ,, |
| (१४) वृत्तिसमुद्देशे | ६२७ | ,, |
| | १३२३ कारिकाः | |

काण्डत्रयस्य कारिकाणा समग्रा संख्या[१] = १९६६ । तृतीयकाण्डस्य चतुर्दशसमुद्देशानां नामानि पूनासंस्करणादत्र पद्येनानेन निर्दिश्यन्ते--

जातिर्द्रव्यं च सम्बन्धो भूयोद्रव्यं गुणस्तथा ।
दिक् साधनं क्रिया कालः पुरुषो दशमः स्मृतः ।
संख्या चोपग्रहो लिङ्गं वृत्तिः पुनरिति स्मृता ।।

**प्रथमकाण्डस्य टीका**—काण्डत्रयात्मकस्य वाक्यपदीयस्य मुख्यो भागः कारिकारूपः । दार्शनिकविषयं प्रतिपादयन्त्य इमाः कारिकाः प्रमेयबहुलाः पारिभाषिकशब्दप्रयोगप्रचुरा व्याख्यानादृते स्वीयं गम्भीर रहस्यं किं कस्मैचिदपि विदुषे प्रकटयितुं क्षमा भविष्यन्ति ? न भविष्यन्तीति प्रश्नस्यास्य उत्तरं सद्यः परिस्फुरति । अत एव ग्रन्थकर्त्रा भर्तृहरिणैव आद्यकाण्डद्वयस्य वृत्तिः सरलार्थप्रतिपादनपरा सुबोधिनी स्वयमेवोपनिबद्धा । तत्र ब्रह्मकाण्डस्य स्वोपज्ञवृत्तिस्तु चारुदेवशास्त्रिभिर्महता प्रयत्नेन प्रकाशिता वाक्यपदीयरहस्यजिज्ञासून् भृशमुपकुर्वती विराजतेतराम् । तद्वृत्तिमूलिकैव काचिद् व्याख्या प्रथमकाण्डस्य हेलाराजेनाकारीति स स्वयमेव तृतीयकाण्डस्य स्वनिर्मिते प्रकाशाभिधे व्याख्याने स्वाभिप्रायमभिव्यनक्ति—

काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः ।
प्रबन्धो विहितोऽस्माभिरागमार्थानुसारिभिः ।।
तच्छेपभूते काण्डेऽस्मिन् सप्रपञ्चे स्वरूपतः ।
श्लोकार्थद्योतनपरः प्रकाशोऽयं विधीयते ।।

अत्र प्रथमपद्ये 'यथावृत्ति' पदं नितान्तं माहात्म्यमाधत्ते । वृत्तिपदेनात्र स्वोपज्ञवृत्तेरेव निर्देशः । आद्यकाण्डद्वये भर्तृहरेरासीत् स्वोपज्ञा वृत्तिः, यदाश्रयनिबन्धनमेव हेलाराजविहितवृत्तिविरचनमभूत् । तृतीयकाण्डस्य स्वोपज्ञवृत्तिरासीदिति विषये हेलाराजः स्वपरिचितिं

---

१. डेक्कनकालेज पूना, वाक्यपदीयतृतीयकाण्डं हेलाराजीयवृत्तिसहितम् १९६३ पृ० ४४-४५ ।

नाविष्कुरुते । नासीत् सेति नो विश्वासः । यदि भवेत् चेत, तर्हि तस्या उल्लेखः कोऽपि पद्येऽस्मिन् विहितो भवेत् । हेलाराजकृता साम्प्रतमनुपलब्धेय ब्रह्मकाण्डीया वृत्तिः शब्दप्रभेति नाम्ना प्रथिता बभूवेति स एव स्वयं प्रमाणयति—

( क ) [1]क्रमाख्या कालशक्तिर्ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणावभासोपगमविधायिनी, नापरो द्रव्यभूतः काल इति ।

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥
( वा० प० १।३ )

इत्यत्र शब्दप्रभाया निर्णीतोऽयमर्थः !

( ख ) ज्ञानं त्वस्मद्विशिष्टानां तासु सर्वेन्द्रियं विदुः ।
अभ्यासान्मणिरूप्यादिविशेषेष्विव तद्विदाम् ॥
( वा० प० ३।१।४६ )

अस्याः[2] कारिकाया व्याख्यानावसरे हेलाराजः कथयति "तदेवागमप्रामाण्यमाश्रित्य सर्वज्ञसिद्धिरत्र सूचिता पूर्वार्धेन । विस्तरेणागमप्रामाण्यं वाक्यपदीयेऽस्माभिः प्रथमकाण्डे शब्दप्रभाया निर्णीतमिति तत एवावधार्यम् ।"

अस्माकं दुर्भाग्यात् शब्दप्रमेयमस्तंगतैव प्रतीयते । यदि कुत्रचिदस्या हस्तलेखः समुपलभ्येत, तर्हि वाक्यपदीयस्य निगूढार्थावगतये उत्सव एव सुधियां भविष्यति ।

ब्रह्मकाण्डे समुपलभ्यमाना वृत्तिर्भर्तृहरिरचिता स्वोपज्ञवृत्तिरिति विषये नास्ति लेशोऽपि संशीतेः[3] । वृत्तिरियं कारिकासु निहितार्थं विवृण्वती शास्त्रीयशब्दप्राचुर्यमण्डिता क्वचिदस्फुटार्था च नैव स्वीयमभिप्रायं सद्यो विदुषां पुरतः प्रस्फोटयति । तदर्थं वृषभदेवेन[4]

---

१. संख्यैषा श्री-अभ्यङ्कर-आचार्यलिमयेमहाभागाभ्यां सम्पादितवाक्यपदीयानुसारिणी वर्तते । पूनाविश्वविद्यालयात् १९६५ ई० वर्षे प्रकाशितमेतत् संस्करणं नानोपयोगिसामग्रीसवलितं प्रामाणिकं पाण्डित्यमण्डितं चेति नास्त्यत्र संदेहः । एतदर्थं सम्पादकमहाभागयोरुपकारितां प्रदर्शयन्ति वाक्यपदीयरहस्यजिज्ञासवः सर्वे विद्वांसः ।

२. तदेव पृ० ५४ ।

३. श्रीमद्भिः सुब्रह्मण्य-अय्यरमहाभागैर्विषयोऽयं दृढतमप्रमाणोपन्यासेन नूनं समर्थितः । तन्मतावगतये द्रष्टव्यो ब्रह्मकाण्डस्याङ्ग्लभाषानुवादे भूमिकाभागः पृ० १८-१८, ( प्रकाशकः—डेक्कनकालेज पूना, १९६५ )

४. वृत्तिपद्धतिसहितं वाक्यपदीयम् ( प्रथमकाण्डम् ), सं० सुब्रह्मण्य-अय्यरमहोदयः, प्रकाशकः पूर्ववत्, १९६६ ) ।

पद्धत्याख्या व्याख्या व्यरचि, यस्या कारिकाणा स्वोपज्ञवृत्तेरुभयोरपि गंभीरं तात्पर्यं विशदैः शब्दैर्हृदयङ्गमया शैल्या च विवेच्यमानं जिज्ञासूना हृदयानि नूनं स्पृशति, अर्थं च विस्तरेण प्रकाशयति। वृत्त्यर्थावगतिस्तु पद्धत्यनुशीलनमूलिकैवेति तथ्यम्। परिशुद्धानां हस्तलेखाना-मभावात् स्थले-स्थले पद्धतिरेषाऽस्फुटतां भजन्ती रहस्यवेदिनां शिरःशूलं नितरां जनयतीति सत्येऽपि सा भृशमुपकारिणीति नास्ति सन्देहः।

**द्वितीयकाण्डस्य टीका**—भर्तृहरिविरचिता वाक्यकाण्डीया स्वोपज्ञवृत्तिस्तु न साम-ग्र्येणोपलभ्यते। चारुदेवशास्त्रिभिर्यत् प्रकाशितम्, तदेव बहु मन्यामहे। केरलदेशाद् मलयालम्-लिप्यां मूलतो लिखिता देवनागर्याऽपि सैव परिणता मद्रासस्य हस्तलेखपुस्तकालये संरक्षिता या प्रतिलिपिर्वर्तते सा तु नितान्तमशुद्धा मध्ये मध्ये विच्छिन्नाऽप्रकाशनयोग्या नैव हिताय वर्तते विदुषाम्। पुण्यराजेन रचिताऽस्य काण्डस्य एकैव टीका साम्प्रतमुपलभ्यते। सा तु स्वोपज्ञवृत्तिमाधारीकृत्य प्रवृत्ता तस्याः सारांशप्रतिपादनपरेति ध्रुवमुन्नेतुं पार्यते। द्वितीय-काण्डस्य टीका प्रारम्भ एव प्रथमकाण्डीयटीकायाः सत्तामभिव्यनक्ति। पुण्यराजेन प्रथमकाण्डेऽपि स्वीया व्याख्या कृता भवेदिति नूनं सम्भाव्यते। पुण्यराजस्य स्थितिर्द्वादशशतके बभूवेति साधारण्येन नो विश्वासः।

**तृतीयकाण्डस्य टीका**—पदकाण्डस्य तृतीयस्य कृत्स्ना टीका हेलाराजेन विहिता प्रकाशा-भिधा कारिकास्थतात्पर्यं वैशद्येन प्रतिपादयति। प्रायः सम्पूर्णा अल्पेष्वेव स्थानेषु भ्रष्टा समुप-लभ्यते। व्याख्याया अवसाने स स्वीयं परिचयमपि ददाति, तद्यथा—"काश्मीरभूमिपालस्य राज्ञो जयापीडस्य अमात्यपदवीधुरन्धरस्य लक्ष्मणस्य वंशे स स्वजनुर्लेभे।" तस्य पिताऽऽसीद् भूतिराजः प्रकाशटीकाया स स्वीयानन्यान् ग्रन्थान् नामतो निर्दिशति—(क) क्रियाविवेकः (वाक्यपदीये तृतीयखण्डे, पृ० ६०); (ख) अद्वयसिद्धिः (तदेव, पृ० ११७);(ग)वार्त्तिकोन्मेषः। हेलाराजः परममहेश्वराचार्याणां श्री-अभिनवगुप्तपादानां गुरूणामन्यतमो गुरुर्बभूवेति तन्त्रा-लोकतो ज्ञायते। अभिनवगुप्तपादानामाविर्भावकालस्तु तद्रचितानां केषाञ्चिद् ग्रन्थानामन्ते तैरेव प्रतिपादिताद् ग्रन्थनिर्माणकालाद् नूनमवधारितुं शक्यते। तैः क्रमस्तोत्रस्य रचना ६६ लौकिकवर्षे (९९० ई०), भैरवस्तवस्य निर्माणम् ६८ लौकिकवर्षे क्रमस्तोत्ररचनातो वर्षद्वयानन्तरम् (=९९२ ई०), ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिण्याः प्रणयम् ९० लौकिक-वर्षे (=१०१४ ई०) विहितम्। तेन तेषामाविर्भावकालः ९५० ई० वर्षादारभ्य १०२० ई० वर्षं यावत् साधारण्येनस्थापयितुं शक्यते। तेषां गुरुचरणा हेलराजमहाभागा अपि दशम-शतकस्य प्रारम्भकालेऽभूवन्निति सिद्धान्तः सद्यो मानसे स्फुरति। अतः ९२५ ई० वर्षादारभ्य १००० ई० वर्षपर्यन्तं हेलाराजाणामाविर्भावकालः। एतन्मध्ये एव वाक्यपदीयस्य व्याख्या एभिर्निर्मितेति कथनं साधु प्रतीयते।

**वर्तमानटीका**—ग्रन्थेऽस्मिन् कारिकानन्तरं यावल्लब्धा स्वोपज्ञवृत्तिः समग्रा पुण्यराज-वृत्तिश्च प्रकाशिते। पण्डितवर्यैः श्रीरघुनाथशर्ममहाभागैर्द्वितीयकाण्डे विरचितैषाम्बाकर्त्रीटीका कारिकाणा गूढार्थं प्रतिपादयति, पुण्यराजस्यापि व्याख्याया दुरूहस्थलानि विशदयति।

सम्प्रदायानुगामिनी व्याख्यैषा पण्डितानां छात्राणां च भृशमुपकारिणीत्यत्र नास्ति संशयलेशः। प्रथमकाण्डस्योपोद्घाते व्याख्याया एतस्या ये ये विशिष्टा गुणा वर्णिताः, ते ते सर्व एव अस्यामपि व्याख्यायां सातत्यमनुबध्नन्ति। व्याख्यारत्नमेतत् प्रकाशयन् वाराणसेयसंस्कृत-विश्वविद्यालयस्यैषोऽनुसन्धानविभागः स्वीयं कर्मापि महिमानमाकलयति। तृतीयकाण्डस्यापि व्याख्यां पण्डितवरेण्याः श्रीरघुनाथशर्माणो नातिचिराद् विलिख्य स्वशास्त्रीयजीवनस्य महत् कार्यमेतत् शोभनां परिणतिं नेष्यन्ति।

काशीपतेर्विश्वनाथस्य पुरतो ममापि हृद्येषा प्रार्थना तन्मानसावर्जिनी सद्यः स्फुरतु—

यस्ते ददाति खमस्य वरं ददासि
 यो वा मदं वहति तस्य दमं विधत्से।
इत्यक्षरद्वयविपर्ययकेलिशीलः
 किं नाम कुर्वति नमो न मनः करोषि॥

तथास्तु।

वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी
**आश्विनी पूर्णिमा, सं० २०२५**
दि० ५–१०–६८

**बलदेव उपाध्यायः**
सञ्चालकः
अनुसन्धानसंस्थानस्य



# विज्ञापना

इदमतीव प्रमोदस्थान यद् वाक्यपदीयद्वितीयकाण्डस्य स्वोपज्ञवृत्ति-पुण्यराजकृतटीका-रघुनाथशर्मरचिताम्बाकर्त्र्या सहितस्य द्वितीयं संस्करणं प्रकाशमानीतम्। अस्मिन् संस्करणे स्थलनिर्देशः, अनुच्छेदकल्पनम्, पुनरुक्तपरिहारः, टीकया सह कारिकाया सहावस्थानस्थापनञ्च मया कृतम्। एवं कृत्वापि पृष्ठसंख्यावृद्धेः परिहार एव न कृतः, किन्तु तासां न्यूनतापि विहिता। अस्य संस्करणस्य पत्राणि, अक्षराणि, अक्षरविन्यासश्च मनोहरो विहितः। विषयविभागाय, उन्मिषितनवविचाराणा ग्रहणाय चानुच्छेदविभागो बहुशः कृतः। इत्थमस्य संस्करणस्य रोचकताधायकं यद् यत् सम्भावितं तत्कृतम्।

अयं काण्डो वाक्यकाण्डनाम्ना प्रसिद्धः। तत्र वाक्यलक्षणम्, वाक्यभेदाः, पदार्थः, वाक्यार्थो वाक्यार्थभेदाश्च मुख्या विचारविषयाः। एषा विचाराणा संग्रहेण कथनमवशिष्यते। अतः 'द्वितीयकाण्डसारः' संगृह्यते।

वाक्यसम्बन्धेऽष्टौ विकल्पाः सम्भवन्ति—१. आख्यातशब्दः, २. संघातः, ३. संघातवर्तिनी जातिः, ४. एकोऽनवयवः शब्दः, ५. क्रमः, ६. बुद्ध्यनुसंहृतिः, ७. आद्यं पदम्, ८. पृथक् सर्वं पदं साकाङ्क्षम्।

१. **आख्यातशब्दो वाक्यम्**—यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थावगतिस्तत्र केवलमाख्यातशब्दोऽपि वाक्यम्। 'यथा—पिधेहि इति, वर्षति इति। अत्र द्वारम् इति कर्माक्षेपात् परिपूर्णार्थत्वे द्वारं पिधेहि' इति वाक्यं भवत्येव। एवं वर्षतीत्युक्ते 'देवो जलं वर्षति' इति कर्तृकर्माक्षेपात् परिपूर्णार्थत्वे वाक्यं भवत्येव। तदाह -

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते॥ ३२६।

२. **संघातो वाक्यम्**—पदसंघातो वाक्यमित्यर्थः। एषा मते पिधेहि, वर्षतीति केवलाख्यातस्य न वाक्यत्वम्, किन्तु द्वारम्, देवः, जलम् इति कर्तृकर्माक्षेपात् तत्संहतस्यैव। एवं द्वारम्, जलम् इत्यादिपदाना न वाक्यत्वं नियमेन पिधानक्रियाया वर्षणक्रियाया वा अनुपस्थितेः। तदाह—

गुणभावेन साकाक्षं तत्र नाम प्रवर्तते।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते॥ ४८।

३. **संघातवर्तिनी जातिर्वाक्यम्**—सुप्तिङन्तपदसंघातवर्त्तिनी जातिर्वाक्यम्। अयमाशयः—'देवदत्त गामभ्याज दण्डेन' इति पदसंघाते वाचकत्वं न सम्भवति,

शक्तेरानन्त्यव्यभिचारदोषप्रसंगात् । अतः पदसंघातगताया एकस्या जातेरेव वाचकत्वम्, तस्या एव च वाक्यत्वम् । तदाह—

यथाक्षेपविशेषेऽपि कर्मभेदो न गृह्यते ।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः ॥ २० ।

४. एकोऽनवयवः शब्दो वाक्यम्—वाक्यस्फोटोऽखण्डः, तत्र वर्णपदापोद्धारकल्पनायामपि वस्तुतः पदे वर्णाः, वर्णेष्ववयवाः, वाक्ये पदानि च नैव सन्ति । तदाह—

यथैक एव सर्वार्थप्रत्ययः प्रविभज्यते ।
दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा ॥ ७ ।

५. क्रमो वाक्यम्—पूर्वापरीभूतानि पदान्येव वाक्यम् ।

अयं भावः—'देवदत्त गामभ्याज दण्डेन' इत्यत्र देवदत्तपदार्थस्य कर्तृत्वम्, गोपदार्थस्य कर्मत्वम्, अभ्याजैव क्रिया, दण्ड एव करणम् । एते विशेषा वाक्यार्थाभावात् प्रागपि सन्त एवानभिव्यक्ताः । पश्चात् क्रमेण प्रतीतेभ्योऽवगम्यन्त एवेति क्रमव्यतिरेकेण शब्दात्मकं वाक्यं नाभिधायकम्, किन्तु क्रम एव वाक्यम् । तदाह—

सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः ।
ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम् ॥ ४९ ।

६. बुद्धयनुसंहृतिर्वाक्यम्—कल्पितानां पदबुद्धीनाम् अनुक्रमेण संहृतिः अनुसंहृतिः । वाक्यमखण्डम्, तत्र पदानि न सन्ति, किन्तु पदानि पदबुद्धयः कल्पितानि । इत्थं पदसमुदायरूपत्वं बुद्धया प्रकल्प्य वाक्यत्वव्यवहारः । तदाह —

यदन्तःशब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाक्ये तदैकता ॥ ३० ।

७. आद्यं पदं वाक्यम्—अनेकपदारब्धं सखण्डं वाक्यम् । प्रथमोपस्थितत्वात् शक्तावच्छेदकानुपूर्वीजल्पनायां लाघवाच्च 'देवदत्त गामभ्याज दण्डेन' इत्यत्राद्यं देवदत्तपदमेव वाचकम्, इतरपदानि तु तत्सहकारीणि तच्छक्तिद्योतकानि । यथा 'साक्षात् क्रियते' इत्यत्र 'साक्षात्' पदं साक्षात्कारार्थवाचकम्, 'क्रियते' इति तु पूर्वपदस्य साक्षात्कारार्थे शक्तिद्योतकमित्याद्यपदस्यैव वाक्यत्वम् । तथा च सकलविशेषणखचितः पदार्थान्तरसंसृष्ट एवार्थः प्रथमतरमेवोपक्रान्त इति स एव देवदत्तपदार्थो वाक्यार्थः । इत्थमाद्यं पदं वाक्यम् । तदाह—

विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः ।
शब्दान्तराभिसम्बन्धाद् व्यज्यन्ते प्रतिपत्तृषु ॥ १७ ।

८. पृथक् सर्वं पदं साकाङ्क्षं वाक्यम्—पृथगिति वाक्यात् पृथक्कारे, साकाङ्क्षं = पदान्तरसाकाङ्क्षं सर्वमाद्यं मध्यमन्त्यञ्च पदं समुदितं वाक्यम् । तदाह जैमिनिः—

'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्' इत्यन्यदपि वाक्यलक्षणत्रयं विद्यते। तत्र वार्त्तिककाराः 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' इत्येकम्, 'एकतिङ्वाक्यम्' इत्यपरं वाक्यलक्षणं वदन्ति। एषां सङ्घातपक्षेऽन्तर्भावः।

एषु वाक्यविकल्पेषु पक्षद्वयं वर्तते—सखण्डवाक्यपक्षः, अखण्डवाक्यपक्षश्च। इह च 'पदप्रकृतिः संहिता' इति निरुक्तम् (१।१७)। पदानि प्रकृतिर्यस्या इति सखण्डपक्षः। पदानां प्रकृतिः कारणमित्यखण्डपक्षः प्रादुर्भवति। तत्र जातिः सङ्घातवर्तिनी, एकोऽनवयवः शब्दः, ३. बुध्यनुसंहृतिः इति त्रीणि लक्षणान्यखण्डवाक्यपक्षे। ४. आख्यातशब्दः, ५. क्रमः, ६. सङ्घातः ७. आद्यं पदम् ८. पृथक् सर्वं पदं साकाङ्क्षम् इति पञ्च सखण्डपक्षे लक्षणानि। इत्थं सङ्कलनया अष्ट लक्षणानि।

तत्राखण्डपक्षे त्रिष्वपि लक्षणेषु प्रतिभावाक्यार्थः। सखण्डपक्षे सङ्घातः क्रमो वाक्यम् इत्यनयोः पक्षयोरभिहितान्वयवादः संसर्गश्च वाक्यार्थः।

आख्यातशब्द इति पक्षेऽन्विताभिधानवादः क्रिया च वाक्यार्थः, पदमाद्यम्, पृथक् सर्वं पदं साकांक्षमिति पक्षद्वये संसृष्ट एवार्थो वाक्यार्थः, अन्विताभिधानवादश्च।

**संघातपक्षे एव**-सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः।
तदर्थान्तरसंसर्गाद् भजते भेदरूपताम्॥ ४४।

भेदेनाकाङ्क्षतस्तस्य या परिप्लवमानता।
अवच्छिनत्ति संबन्धस्तां विशेषे निवेशयन्॥ ४५।

कार्यानुमेयः सम्बन्धो रूपं तस्य न दृश्यते।
असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते॥ ४६।

इत्यादिकारिकाभिरन्विताभिधानवादः, संसर्गवशान्निराकाङ्क्षो विशेषावस्थितः पदार्थ एव वाक्यार्थः।

एवं सर्ववाक्यलक्षणसाधारणम् 'प्रयोजनं वाक्यार्थः' इत्ययमपि पक्षः। अत्रान्विताभिधानपक्षः। तदाह पूर्वपक्षोत्तरपक्षाभ्याम्—

अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्।
यस्य तस्य न सम्बन्धो वाक्यानामुपजायते॥ ११३।

तत्र क्रियापदान्येव व्यपेक्षन्ते परस्परम्।
क्रियापदानुषक्तस्तु सम्बन्धोऽतः प्रतीयते॥ ११४।

इत्थं परमार्थतो वाक्यस्यैकत्वेऽपि विकल्पप्रपञ्चाः पुरुषाणामनेकशास्त्रभावनासमाश्रयाः प्रतिभाप्रभवा एव। तदाह—

अविकल्पेऽपि वाक्यार्थे विकल्पा भावनाश्रयाः।
अत्राधिकरणे वादाः पूर्वेषां बहुधा गताः॥ ११६।

अनेकजन्मार्जिताभ्यासात् प्रतिभाहेतुश्शब्दः। तेन बालानां तिरश्चां तस्या उदयः। वाक्यार्थस्यैव मुख्यत्वेपि पदपदार्थापोद्धाराश्रयेण प्रतिनिध्यादिकल्पनम्। तत्र पदस्यार्थः पदार्थ इति द्वादशधा पदार्थकल्पनम् ११९ कारिकातः १३४ कारिकापर्यन्तम्। अयं च पदार्थभेदः प्रतिपत्त्रप्रत्ययानुसारेण भिद्यते। अस्य विवेचनं पदकाण्डे कृतः।

प्रतिभावाक्यार्थ इत्युक्त्वा तस्याः स्वरूपं कारणम्, मूलम्, भेदाश्च निरूपिताः। इयं च स्वसंवेदनविषयापि परेषामसमाख्येयाम्, अविचारिता चार्थानामुपश्लेषं करोति। अतः फल-मुखेनाश्रयमुखेनाभिव्यञ्जकमुखेन निरूपयितुं शक्या, इमां लोको नातिवर्तते। सिद्धा चेयम् येन सर्वे समारम्भाः, अयत्नजा द्रव्यानां परिपाके मदादिशक्तय इव प्रतिनियतसंस्कारजन्या सिद्धैव। जन्मान्तराभ्यासहेतुरियम्। अत एव जात्यन्वयसिद्धासु प्लवनादिक्रियादिषु दृष्टा। इयं षड्विधा—१. स्वाभाविकी। यथा–कपेः शाखाप्लवनादौ, प्रकृतेः महदाकारेण परिणामश्च। २. चरणनिमित्ता-यथा-सदाचारप्राप्तं शास्त्रविहिततपःस्वाध्यायादिकम्। ३. अभ्यास-निमित्ता, यथा–कूपतटाकखननाभ्यासनिमित्ता। ४. योगनिमित्ता। यथा–योगिनां परस्याभिप्राय-ज्ञानम्। ५, अदृष्टनिमित्ता। यथा—प्रेतपिशाचादीनामन्तर्धानादिः। ६. विशिष्टैरुपपादिता। यथा–सञ्जयादीनां कृष्णद्वैपायनादिभिरुपपादिता।

इत्थमनेकप्रकारापि प्रतिभा सर्वैवागमिकवाक्यनिबन्धना वाक्यप्रतिपत्रा प्रलये व्याकरण-नाशेऽपि प्रकृतौ बीजरूपेण निबद्धा जगदुत्पत्तौ पश्यन्तीमध्यमानादादिरूपेण विवर्तमाना वर्णपदवाक्यरूपेण विस्तारमाप्नुवती पुनः पुनर्व्यक्तरूपेण प्रत्यवभासते। प्रतिभैव वाक्यार्थो वैयाकरणमतेऽध्यासश्च सम्बन्धः। अस्यैव विशेषविचारोऽवशिष्टे वाक्यकाण्ड इत्यलं विस्तरेण।

अस्य प्रकाशनात् पूर्वं संशोधनायानुसन्धानसंस्थाननिदेशकेन डॉ० भागीरथप्रसाद-त्रिपाठिमहाभागेन नियुक्तोऽहं यथामति संशोध्य प्रकाशनाय समर्पयम्। अस्य प्रकाशने दत्ता-वधानः प्रकाशनाधिकारी डॉ० हरिश्चन्द्रमणित्रिपाठी सततमाशीर्वादमर्हतीति शम्।

वाराणस्याम्
**रामविवाहपञ्चम्याम्**
२०३७ वै०



**विदुषामाश्रयः**
**रामगोविन्दशुक्लः**
अनुसन्धानाधिकारी

**सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

# वाक्यपदीयद्वितीयकाण्डविषयसूची

भर्तृहरिप्रणीतम्

# वाक्यपदीयम्

हरिवृषभरचित'स्वोपज्ञवृत्ति'-

पुण्यराजप्रणीत'प्रकाश'-

श्रीरघुनाथशर्मविरचित-'अम्बाकर्त्री' टीकात्रयोपेतम्

## अथ द्वितीयकाण्डम्

एवं शब्दस्य प्रयोजनसहितं स्वरूपादिकं लेशतो निर्णीतम्। तस्य च साधारण्येन वाचकत्वं व्यवस्थापितम्। इदानीं मतभेदेन केषाञ्चित्पदं वाचकमन्येषां वाक्यमिति वाचकात्मनो वाक्यस्वरूपस्य तावद्वितस्य स्वरूपप्रतिपादनाय द्वितीयकाण्डप्रारम्भः।

तत्राचार्यमतभेदाश्रयेण तावद्वाक्योद्देशार्थमाह—

**आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी।**
**एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥१॥**

---

### अम्बाकर्त्री

यस्या विभज्य विज्ञानाद् व्याहाराद् व्यवहारतः।
स्वर्गे लोके च कामाप्तिस्तां नौमि जननीं गिरम् ॥

एवमतीते आगमसमुच्चयापरनाम्नि ब्रह्मकाण्डे संग्रहेण शब्दस्य स्वरूपं तज्ज्ञानतत्प्रयोगफलम्। तत्र च वार्त्तिकभाष्यसंग्रहादिसमाश्रयेण शास्त्रान्तरसमाश्रयेण च नित्यत्वानित्यत्वयोरुत्पत्त्यभिव्यक्त्योः सखण्डत्वाखण्डत्वयोर्जातिव्यक्तिभेदेन वाचकत्वादौ च मतभेदाः सावधारणं प्रदर्शिताः। किन्तु तत्र शब्दस्य वाचकत्वं पदवाक्यसाधारण्येन व्यवस्थापितम्। इदानीन्तु केषाञ्चित् पदं वाचकमन्येषां वाक्यमिति मतभेदसत्त्वेऽपि सिद्धान्ते वाचकात्मना वाक्यस्वरूपस्य तावद् विस्तरेण स्वरूपप्रतिपादनाय द्वितीयकाण्डप्रारम्भः।

तत्राचार्याणां मतभेदसमाश्रयेण तावद् अष्टधा वाक्यस्वरूपमुद्दिशति—'आख्यातशब्दः' इत्यादिना 'बहुधा न्यायदर्शिनाम्' इत्यन्तेन कारिकाद्वयेन।

अयमर्थः—न्यायदर्शिनां विदुषां वाक्यं प्रति वाक्यविषये बहुधा अष्टधा मतिर्भिन्ना। अत्र न्यायो वाक्यविषयकस्तर्कः। ते चाष्टौ पक्षभेदा इमे। १. आख्यातशब्दो वाक्यम्।

**पदमाद्यं पृथक् सर्वं पदं साकाङ्क्षमित्यपि ।**
**वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम् ॥२॥**

---

२. संघातः, पदसंघातः । ३. संघातवर्तिनी जातिः । ४ एकोऽनवयवः शब्दः । ५. क्रमः । ६. बुद्ध्यनुसंहृतिः । ७. आद्यं पदम् । ८. पृथक् सर्वं पदं साकाङ्क्षम् ।

तत्राख्यातशब्दो वाक्यमिति वादिनाम् आख्यातशब्द एव वाक्यमिति नाभिप्रायः, 'देवदत्त गामभ्याज दण्डेन' इत्यादौ सुप्तिङन्तचये वाक्यत्वव्यवहारस्य सर्वजनीनस्यापलापप्रसङ्गात् । किन्तु क्वचिद् आख्यातशब्दोऽपि वाक्यम्, यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थावगतिः । यथा पिधेहीति । तदिदं शब्दार्थनिर्णयप्रकरणे दर्शयिष्यति—

'आख्यातशब्दे नियतं साधनं यत्र गम्यते ।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते ॥ इति ।
(वा० प० २।३२६)

अत्र 'तदप्येकं वाक्यम्' इत्युक्त्या अन्यदपि वाक्यमस्तीति गम्यते ।

पदसंघातो वाक्यमिति वादिनस्तु पिधेहीत्यादौ न केवलाख्यातस्य वाक्यत्वम्, किन्तु द्वारमिति कर्माध्याहृत्य तत्संहतस्यैवेति । केवलाख्यातशब्दस्य वाक्यत्ववत् केवलसुबन्तस्य द्वारमित्यादेर्वाक्यत्वन्तु न, तत्र नियमेन पिधानक्रियाया अनुपस्थितेः ।

सुप्तिङन्तपदसंघातवर्तिनी जातिर्वाक्यमिति वादिनामभिसन्धिस्तु 'देवदत्त गामभ्याज दण्डेन' इत्यादिपदसंघातरूपवाक्येषु अस्ति कश्चन प्रतिवाक्यं भिद्यमानो जातिविशेषः, येन प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमानेऽपि'देवदत्त गामभ्याज दण्डेन' इति वाक्ये एकत्वप्रत्यभिज्ञा भवति । तत्र प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणञ्च भिद्यमाने पदसंघाते वाचकत्वं न संभवति, शक्तेरानन्त्यव्यभिचारदोषप्रसङ्गात् । अतः पदसंघातगताया जातेरेकस्या एव वाचकत्वमिति तस्या एव वाक्यत्वमिति ।

एकोऽनवयवः शब्दो वाक्यमिति केषाञ्चिन्मतम् । एतन्मते वाक्यस्फोटोऽखण्डः, तत्र वर्णपदापोद्धारकल्पनायामपि वस्तुतो वर्णाः पदानि वा तत्र न सन्तीति । पदानां क्रमः, पौर्वापर्यम्, पूर्वापरीभूतानि पदान्येव वाक्यमित्यपरे । एतन्मते वाक्यस्फोटस्य सखण्डत्वं पदसमुदायारब्धत्वञ्चेति ।

बुद्ध्यनुसंहृतिर्वाक्यमित्यन्ये । एतस्मिन् कल्पे वाक्यमखण्डम्, तत्र पदानि न सन्ति, किन्तु पदानि पद्बुद्धयश्च कल्पितानि । तत्र पदबुद्धीनां कल्पितानामनुक्रमेण संहार=उपसंहार इति पदसमुदायरूपत्वं बुद्ध्या प्रकल्प्य वाक्यत्वव्यवहारः ।

आद्यं पदं वाक्यमित्यपि केषाञ्चिन्मतम् । अस्मिन् पक्षेऽनेकपदारब्धं सखण्डं वाक्यम् । अस्मिन् मते प्रथमोपस्थितत्वात् शक्तताच्छेदकानुपूर्वीकल्पनायां लाघवाच्च आद्यं पदमेव वाचकम्, इतरपदानि तु तत्सहकारीणि तच्छक्तिद्योतकानि । यथा 'साक्षात्

एतेऽष्टौ वाक्यविकल्पा आचार्याणाम्। तत्राखण्डपक्षे जातिः सङ्घातवर्त्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रीणि लक्षणानि। खण्डपक्षे तु—आख्यातशब्दः, क्रमः, सङ्घातः, पदमाद्यम्, पृथक्सर्वं पदं साकाङ्क्षमिति पञ्च लक्षणानि। अत्रापि सङ्घातः क्रम इत्यभिहितान्वयपक्षे लक्षणद्वयम्। आख्यातशब्दः,

---

क्रियते' इत्यत्र साक्षात्पदमेव साक्षात्कारवाचकम्, क्रियते इति तु पूर्वपदस्य तदर्थे शक्तिद्योतकमित्याद्यपदस्यैव वाक्यत्वमिति।

पृथक् सर्वं पदं साकाङ्क्षं वाक्यमितिवादिनामयं भावः—पृथग्, वाक्यात् पृथक्कारे, साकाङ्क्षं पदान्तरसाकाङ्क्षम्, सर्वम् आद्यं मध्यमन्त्यञ्च पदं समुदितं वाक्यमिति। तदुक्तं परमर्षिणा—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति।

प्रकृतकारिकाद्वयस्य गभीराशयस्तु—वाक्यविषये आचार्याणामष्टौ विकल्पाः। तत्रापि वाक्यस्फोटोऽखण्ड इति पक्षे जातिः संघातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रीणि वाक्यलक्षणानि। वाक्यस्फोटः सखण्ड इति पक्षे तु—आख्यातशब्दः, क्रमः, संघातः पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति पञ्च लक्षणानि। तत्रापि संघातः, क्रम इत्यभिहितान्वयपक्षे लक्षणद्वयम्।

तथा हि–पदमेव शक्तम्, न तु वाक्यम्। वाक्यार्थभूतः पदार्थानां संसर्गस्तु आकाङ्क्षाभास्यः। आकाङ्क्षा च तत्तच्छाब्दबोधं प्रति नियतः पदानां समभिव्याहारविशेषः। अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वय आकाङ्क्षाभास्य इति ये वदन्ति, तेऽभिहितान्वयवादिनः। तथा च पदानां संघातो वाक्यम्, पदानां पौर्वापर्यरूपः क्रमो वा वाक्यमिति पक्षेऽभिहितान्वयवाद आपतति पदानामेव शक्तत्वात्, पदसंघातरूपे वाक्ये शक्त्यनभ्युपगमात्। एष चाभिहितान्वयवादो नैयायिकानाम्। तत्र च संसर्गस्याकाङ्क्षाभास्यत्वं व्युत्पत्तिवादादौ प्रपञ्चितम्।

आख्यातशब्दः, पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमिति वाक्यस्य लक्षणत्रयं त्वन्विताभिधानपक्षे बोध्यम्।

तथाहि—कार्यान्विते इतरपदार्थान्विते वा स्वार्थे पदानां शक्तिरित्यन्वयरूपः संसर्गोऽपि शक्तिभास्य एव। तत्रान्वयत्वेनान्वयसामान्यं शक्तिभास्यम्, तादात्म्यादिरूपः संबन्धविशेषस्तु वाक्यलक्षणया लभ्यत इत्यन्विताभिधानवादिनो मीमांसकाः। तदुक्तम्—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम्॥ इति।

अन्विताभिधानवादोपपत्तिस्तु—तत्तदर्थविषयकशाब्दबोधं प्रति वृत्त्या तत्तत्पदजन्यतत्तदर्थविषयकोपस्थितिः कारणमिति कार्यकारणभावः स्वीकर्तव्यः। अन्यथा घटमानयेत्यादौ घटपदसम्बन्धितयोपस्थितस्याकाशस्यापि शाब्दबोधे भानापत्तिः। अत एतादृशकार्यकारणभावस्वीकारेऽन्वयांशेऽपि शक्तिरभ्युपेतव्यैव। अत्र पक्षे आख्यातशब्द इतरपदार्थान्वित-

पदमाद्यम्, पृथक्सर्वं पदं साकाङ्क्षमित्यन्विताभिधानपक्षे लक्षणत्रयमिति विभागः।

इह च "पदप्रकृतिः संहिता" इति प्रातिशाख्यम्। तत्र पदानां प्रकृतिः कारणं पदप्रकृतिः संहितेत्यखण्डपक्षः। पदानि प्रकृतिर्यस्याः सेति खण्डपक्षः प्रादुर्भवति।

तत्राख्यातशब्दो वाक्यमिति परस्ताच्छब्दार्थनिर्णय इति प्रकरणे दर्शयिष्यति। यथा—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते॥ इति (वा० प० २।३२६)

"केवलेन पदेनार्थः" इत्यादिना।

---

स्वार्थबोधकः, आद्यं पदमितरपदार्थान्वितस्वार्थबोधकम्, पृथक् साकाङ्क्षं सर्वं पदमितरतत्तत्पदार्थान्विततत्तत्स्वार्थबोधकमितिरीत्या अस्मिन् वाक्यलक्षणत्रयेऽन्विताभिधानवादसंभवः।

ये तु वदन्ति न भाट्टा अन्विताभिधानवादिन इति तेषां मते संसृष्टे क्रियायाश्चान्विताभिधानम्', 'यस्माद्भावनाक्रिययोः पर्यायता प्रायशो लक्ष्यते' इति हरिवाक्ययोः का गतिः (हरिटीका वा० प० २ काण्डे १।२ का०), भावना लिङर्थत्वेन वाक्यार्थ इति भट्टाभिप्रायात्। 'सामान्यार्थस्तिरोभूतः' (वा० प० २।१५) इति कारिकाव्याख्यावसरे पुण्यराजवचनं त्वन्विताभिधान एव, तत्र वादे संसर्गविशेषस्य वाक्यलक्ष्यत्वात् 'अशब्दो यदि वाक्यार्थः' इति कारिका, एवं तावदभिहितान्वयवादी निरस्तः' इति टीकाऽपि न विरुध्यते, कारिकाया यदिशब्दघटितत्वेनाभिहितान्वयवादस्य मीमांसकानभिप्रेतत्वबोधनादिति।

तत्र पदप्रकृतिः संहिता' इति प्रातिशाख्यम्। तत्र पदानां नैरन्तर्येण सन्निवेशविशेषरूपवाक्यरूपा संहिता पदानां स्वघटकानां प्रकृतिः, अपोद्धारकल्पनया विवर्तोपादानकारणं सर्पस्य रज्जुरिवेति वाक्यस्याखण्डत्वपक्षेऽर्थः। वाक्यरूपायाः संहितायाः सखण्डत्वपक्षे तु पदानि प्रकृतिर्घटादेर्मृदादिरिवोपादानकारणं यस्या इत्यर्थः। तत्राख्यातशब्दो वाक्यमिति परस्ताच्छब्दार्थनिर्णयप्रकरणे दर्शयिष्यति। तद्यथा—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते॥ इति (वा० प० २।३२६)

अस्यार्थः—यत्राख्यातशब्दे केवले पिधेहीत्यादिरूपे प्रयुज्यमाने सति द्वारादिरूपं नियतं साधनं गम्यते। एकं केवलं पिधेहीत्यादिरूपं समाप्तार्थम्, इतरपदार्थनिराकाङ्क्षस्वार्थबोधकम्, तदपि केवलाख्यातशब्दरूपं पदमपि वाक्यमित्यभिधीयते। अत्र तदपि इत्युक्त्या ससाधनाख्यातशब्दोऽपि वाक्यमिति गम्यते।

'केवलेन पदेनार्थः' (वा० प० २।४१) इत्यादिना।

श्लोकाष्टकेन सङ्घातो वाक्यमिति दर्शयिष्यति। "यथैक एव सर्वार्थः" इत्यादिना "देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः" इत्यन्तेन ग्रन्थेन, तथा "अव्यक्तः क्रमवान्" इत्यादिना "व्यावृत्तभेदो येनार्थः" इत्यन्तेन चाखण्ड एव स्फोटलक्षणः शब्दो वाक्यमिति दर्शितम्। उक्तञ्च— "येनोच्चारितेन सास्नालाङ्गूलखुरककुदविषाण्यर्थरूपं प्रतिपाद्यते स शब्दः", तथा—"स्फोटः शब्दो ध्वनिः शब्दगुणः" इति।

स्फोटश्च द्विविधः—बाह्य आभ्यन्तरश्चेति। बाह्योऽपि जातिव्यक्तिभेदेन द्विविधः। तत्र जातिलक्षणस्य जातिः सङ्घातवर्तिनीति, व्यक्तिलक्षणस्यैकोऽनवयवः शब्द इति। आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरित्यनेनोद्देशः। तत्र जातिव्यक्तिलक्षणस्य बाह्यस्य 'यथैक एवे'त्यादिना पुनः 'अव्यक्तः क्रमवानि'त्यादिना ग्रन्थेन स्वरूपमुक्तम्। 'यदन्तः शब्दतत्त्वमि'त्यादिना श्लोकचतुष्टयेन आन्तरस्य स्वरूपमुक्तम्, 'संप्रत्यये'त्यादिश्लोकचतुष्टयेन क्रमो वाक्यमिति दर्शयिष्यति। 'नियतं साधने साध्यमि'त्यनेन च श्लोकद्वयेन पदमाद्यं पृथक्सर्वं पदं साकाङ्क्षमिति लक्षणद्वयं व्याख्यास्यति। अन्यदपि वार्त्तिककारीय पारिभाषिकं शास्त्रे वाक्यलक्षणमस्ति।

"आख्यातं साव्ययकारकविशेषणं वाक्यमेकतिङिति" च।

---

श्लोकाष्टकेनेति। यः स्फोटो नादैरभिव्यक्तः सन् अर्थप्रतिपादकः स शब्दः, ध्वनिस्तु तस्य शब्दस्य गुणो व्यञ्जकतया उपकारकोऽङ्गभूत इति।

स्फोटश्च द्विविधो बाह्य अभ्यन्तरश्चेति। तत्राद्यः परश्रवणगोचरः। आभ्यन्तरस्तु मनोमात्रगोचरः। बाह्योऽपि जातिव्यक्तिभेदेन द्विविधः। तत्र जातिलक्षणस्य स्फोटस्य 'जातिः संघातवर्तिनी' इति निर्देशः। व्यक्तिलक्षणस्य तु 'एकोऽनवयवः शब्दः' इति। आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरित्यनेनेति। तत्र जातिव्यक्तिलक्षणस्य बाह्यस्य स्फोटस्य 'यथैक एव' (वा० प० २।७) इत्यादिना, पुनः 'अव्यक्तः क्रमवान्' (वा० प० २।१९) इत्यादिना ग्रन्थेन स्वरूपमुक्तम्। 'यदन्त शब्दतत्त्वम्' (वा० प० २।३०) इत्यादिना श्लोकचतुष्टयेन आन्तरस्य स्फोटस्य स्वरूपमुक्तम्। 'सन्त एव विशेषा ये' (वा० प० २।४९) इत्यादिना 'समानेऽपि त शब्दत्वे' (वा० प० २।५३) इत्यन्तेन श्लोकपञ्चकेन क्रमो वाक्यमिति दर्शयिष्यति। 'नियतं साधने साध्यम्' (वा० प० २।४७) इत्यादिना श्लोकद्वयेन 'पदमाद्यम्' 'पृथक् सर्वं पदं साकाङ्क्षम्' इति लक्षणद्वयं व्याख्यास्यति। अन्यदपि वार्त्तिककारीयं पारिभाषिकं शास्त्रमात्रोपयोगि वाक्यलक्षणमस्ति।

'आख्यात साव्ययकारकविशेषण वाक्यम्' (महा० भा० २।१।१ वा० ९) इति।

अस्यार्थः—अव्ययेन कारकैर्विशेषणेन च सहितमाख्यातं तिङन्तं वाक्यमिति। तद्यथा—मृदु प्रपचति, स्थाल्या तण्डुलमिति। अत्र प्रेत्यव्ययम्। स्थाल्यां तण्डुलमिति कारकद्वयम्। मृदु इति आख्यातस्य विशेषणम्। एतच्च साव्ययकारकविशेषणत्वं यथासंभवं

जरन्मीमांसकोक्तं लौकिकमप्यस्ति–"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति। अनयोः सङ्घातपक्षेऽन्तर्भावः।

एतेऽपि प्रथममेव 'निघातादिव्यवस्थार्थमि'त्यादिना विचारयिष्यन्ते। इत्थमष्टावेव वाक्यविकल्पा मतभेदेन सम्पद्यन्त इति बोद्धव्यम्।

यत्पुनरनेन वृत्तावुक्तम्—उदाहरणमात्रमेतत्, अन्यान्यपि वाक्यलक्षणानि दर्शयिष्यतीति। तद्वार्त्तिककारीयवाक्यलक्षणादेरन्तर्भावमनपेक्ष्येति मन्तव्यम्।

---

बोध्यम्, न तु नियतमिति। 'एकतिङ् वाक्यम्' (पा० महा० भा० २।१।१ वा० १०) इत्यपि वार्त्तिककारीयं शास्त्रमात्रोपयोगि पारिभाषिकं लक्षणमस्ति।

अस्यार्थः—एकं तिङन्तं परपदार्थान्वितार्थं यस्मिन् पदकदम्बके तदपि वाक्यं भवतीति। एतच्च वाक्यं प्रायोऽभिप्रायेण, तेन पचति भवति, पश्य मृगो धावति, इत्यादीनामपि वाक्यत्वं पूर्वलक्षणेन संपन्नमिति।

लौकिकमपि वाक्यलक्षणं जरन्मीमांसकोक्तमस्ति। 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" (जै० सू० २।१।४६) इति। अस्यार्थः—यत् पदकदम्बकं परस्परान्वितपदार्थकं तदर्थैकत्वादेकं वाक्यम्, किन्तु तद्घटकपदानां विभागे ततः पृथक्कारे, तत्पदकदम्बकं साकाङ्क्षं पृथक्कृतपदार्थविषये साकाङ्क्षं यदि स्यादिति। अनयोर्द्विविधयोरपि शास्त्रीयलौकिकवाक्यलक्षणयोः पदसङ्घातो वाक्यमिति पक्षेऽन्तर्भावः।

एते द्विविधे अपि वाक्यलक्षणे निघातादिव्यवस्थार्थम्' इत्यादिना प्रथममेव विचारयिष्येते। तत्रापि प्रथमकारिकया शास्त्रीयं लक्षणम्, द्वितीयकारिकया तु लौकिकं लक्षणं विचारितमित्यवधेयम्। इत्थमष्टावेव प्रागुक्ता वाक्यविकल्पा मतभेदेन संपद्यन्त इति बोद्धव्यम्।

यत् पुनर्भगवता भर्तृहरिणा स्वोपज्ञवृत्तावुक्तम्—'उदाहरणमात्रमेतत्, अन्यान्यपि वाक्यलक्षणानि दर्शयिष्यति' इति, तद् वार्त्तिककारीयवाक्यलक्षणादेरेष्वष्टसु संभवन्तमप्यन्तर्भावमस्फुटतयाऽनपेक्ष्येति मन्तव्यम्। उद्दिष्टानाञ्च वाक्यलक्षणानामष्टानां यथान्यासमग्रे कारिकाभिरेव दर्शितक्रमेण स्वरूपमुन्मीलयिष्यतीति तत्रैव मयाऽपि तत् प्रदर्शयिष्यत इति नार्थ इह तत्प्रदर्शनेन तथाप्यत्रोद्दिष्टा वाक्यविकल्पा अव्याकृतस्वरूपा न सुबोधाः। अत्र च ग्रन्थेऽग्रे तेषां व्याकृतिर्व्यवहिता विप्रकृष्टा नैकत्र सुलभा चेति तेषां वाक्यविकल्पानां स्वरूपमात्रप्रतिपादनपरः संक्षिप्तः स्याद्वादरत्नाकरग्रन्थः संगृह्यते।

आख्यातशब्दो वाक्यमिति। आख्यातशब्देन हि व्यावहारिकस्य प्रवृत्तिनिवृत्तिलक्षणस्यालौकिकस्य कारकसंभिन्नस्य वाक्यार्थस्याभिधाने सति नामपदानि नियमायानुवादाय वा प्रयुज्यमानान्याख्यातपदवाच्यस्यैवार्थस्येतरव्यावृत्तिरूपसंस्कारकारीणि विज्ञायन्त इति।

अपरे पदाना संघातो वाक्यमिति प्रतिपन्नाः। इतरे तु देवदत्त गामभ्याजेति वर्णैर्ध्वनिविशेषैः क्रमभाविभिरनित्यैरयुगपदवस्थानैरभिव्यज्यमानमेकमभिव्यञ्जकत्वेनाने-

उद्दिष्टानां च वाक्यलक्षणानां यथान्यासमग्रे कारिकाभिरेव दर्शितक्रमेण स्वरूपमुन्मीलयिष्यतीति नार्थ इह तत्प्रदर्शनेन ।

वाक्यलक्षणप्रसङ्गेन च तथा वाक्यार्थस्य सम्बन्धस्य च मतभेदं दर्शयिष्यति । तत्राखण्डपक्षे त्रिष्वपि लक्षणेषु प्रतिभा वाक्यार्थः । यथा दर्शयिष्यति—

"विच्छेदग्रहणेऽर्थानां प्रतिभान्यैव जायते ।
वाक्यार्थ इति तामाहुः" इति (२।१४४) ।

---

काधारं देवदत्तादिपदवर्णव्यतिरिक्तं जातिस्फोटं नित्यमनवयवं वाक्यं प्रतिपेदिरे । अन्ये तु ओङ्कारोऽनवयवः शब्दः परिकल्पितवर्णपदविभागो वाक्यमित्याहुः । पदानां क्रमो वाक्यमिति कतिपये परिकीर्तयन्ति । तेषा हि मते वर्णाना क्रमः पदं पदानां क्रमो वाक्यमिति । बुद्धेरनुसंहारमन्तस्तत्त्वं वाक्यमन्ये मन्यन्ते । यथा हि—संहृतसकलक्रमस्यैकस्यादेशप्रदेशत्वेऽप्यन्तरात्माऽन्तर्यामीत्येवमाख्यायमानस्य प्रतिप्राणिवृत्तेः शब्दतत्त्वस्याक्षरचिह्नादिभिरिवातथाभूतैः क्रमवद्भिर्भागैर्योऽयं बुद्धेरनुसंहारः क्रमशः पूर्ववर्णभागग्राहिणीभिर्बुद्धिभिर्जनितो यः संस्कारस्तत उत्पन्नस्य स्मरणस्य बलादन्त्यवर्णभागग्रहणतुल्यकालः स वाक्यमिति ।

आद्यं पदं वाक्यमिति परे समीरयन्ति । यदेव पदं प्रथमतः प्रयुज्यते तदेव वाक्यम्, तेनैवेतराक्षेपात् । यतः प्रथमतः प्रयुज्यमानं पदं क्रियावाचि साधनवाचि वा भवेत् । क्रियासाधनयोश्च परस्पराविनाभूतत्वात्तयोर्यदेव पदमादौ प्रयुज्यते, तदेव स्वार्थस्य धर्मभूतमर्थान्तरमपि तत्र सन्निधापयति, धूम इवाग्निमित्येवं प्रथममुपादीयमाने पदे सर्वार्थोपग्राहिण्याख्यातशब्द इव नियमानुवादफलानि पदान्तराण्यभ्यनुज्ञायन्त इति ।

पृथक् सर्वं पदं सापेक्षं वाक्यमिति कतिचिदुपवर्णयन्ति । पृथगिति संघातादवच्छिनत्ति, सर्वमित्याद्यपदादाख्यातशब्दाच्चावच्छिनत्ति । तेन सर्वाण्येव पदान्यन्योन्यसापेक्षाणि प्रत्येकं वाक्यमित्यर्थः, (स्याद्वादरत्नाकरे, ४।१० ) ।

वाक्यलक्षणनिरूपणप्रसङ्गेन च वाक्यार्थस्य संबन्धस्य च मतभेदं प्रदर्शयिष्यति । तत्राखण्डपक्षे—जातिः संघातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहृतिरिति त्रिष्वपि लक्षणेषु प्रतिभा वाक्यार्थः, प्रतिभास्वरूपञ्चाग्रे दर्शयिष्यति—

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ इति (वा० प० २।१४२)

अस्यार्थः—अखण्डाद् वाक्याद् बुद्ध्यापोद्धृतेभ्यो देवदत्तादिपदेभ्यः स्वार्थानां विच्छेदेन ग्रहणकाले एव देवदत्तादिपदार्थमतिव्यतिरिक्तैव काचन अखण्डवाक्यार्थविषया असत्यैरेवोपाधिभूतैर्देवदत्तादिपदार्थैरुपपादिताऽभिव्यञ्जिता प्रतिभा जायते, तां वैयाकरणा वाक्यार्थविषयकत्वाद् वाक्यार्थ इत्याहुरिति । यतश्चाग्रे प्रतिभायाः सुविशदं स्वरूपं भेदाश्च प्रदर्शयिष्यन्तेऽतो नेह तत् प्रतन्यते ।

अवशिष्टेषु पञ्चसु लक्षणेषु मध्यादाख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः। यथा वक्ष्यति— 'क्रिया क्रियान्तराद्भिन्ना" (२।४१४) इत्यादि।

यथा च—

प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम्।
फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः॥ इति।

सङ्घातपक्षे क्रमपक्षे च संसर्गो वाक्यार्थः। स च—

---

अथावशिष्टेषु पञ्चसु वाक्यलक्षणेषु मध्यादाख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः। तच्चाग्रे वक्ष्यति—

"क्रिया क्रियान्तराद् भिन्ना नियताधारसाधना।
प्रक्रान्ता प्रतिपत्तृणां भेदाः संबोधहेतवः॥" इति।
(वा० प० २।४१७)

अयमर्थः—क्रियावाचकपदमात्रश्रवणे सति नियताधारा नियतसाधना च क्रिया, अत एव च क्रियान्तराद्भिन्ना प्रथमतरमेव प्रतिपत्तृणां बुद्धौ प्रक्रान्ता, वाक्ये साधनभेदा आधारभेदाश्च प्रयुज्यमानाः प्रतिपत्तृणां संबोधहेतवः, प्रतिपत्तृणां या क्रियाविशेष-प्रतिपत्तिस्तत्संवादिबोधहेतवः, तेन प्रतिपत्तृणां प्रक्रमोपजातक्रियाविशेषप्रतिपत्तिसंवादमात्रं फलं भवतीति यावदिति।

अन्यच्च—

प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम्।
फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः॥ इति।

इयं कारिकाऽन्वेषणीया। अस्यां कारिकायां क्रियाया वाक्यार्थभूताया विशेषण-त्रयमुद्दिष्टम्। तत्राद्यम्—प्रतिभा यत्प्रभूतार्था इति। यस्या नियताधारनियतसाधनविशिष्टायाः क्रियायाः प्रभूतः प्रसूतोऽर्थोऽखण्डवाक्यार्थरूपो विषयो यस्याः सा यत्प्रभूतार्था इति बहुव्रीहिः। अत्र प्रतिभाविषयेऽर्थे तादृशक्रियाप्रसूतत्वञ्च तादृशक्रियाज्ञाप्यत्वरूपं बोध्यम्। द्वितीयं तु क्रियाविशेषणम्—यामनुष्ठानमाश्रितमिति। अत्रानुष्ठानं पुरुषस्य क्रियायां प्रवृत्तिः, नियताधारां नियतसाधनाञ्च क्रियामुद्दिश्य लोकस्य प्रवृत्तिरिति। तृतीयं तु क्रिया-विशेषणं फलं प्रसूयेत यत इति। नियताधारनियतसाधनक्रियात एव हि फलं प्रसूयते, न त्वेतादृशक्रियातः। सा तादृशी क्रिया वाक्यगोचरो वाक्यार्थ इति। अत्र विशेषणत्रयेण नियताधारनियतसाधनक्रियायाः स्वरूपं प्रतिभाहेतुत्वेन प्रवृत्तिहेतुत्वेन च विशदीकृत्य तस्या एव वाक्यार्थत्वं विधीयते, न तु केवलाया इत्यवधेयम्।

पदानां संघातो वाक्यमिति, पदानां पौर्वापर्यरूपः क्रमो वाक्यमिति च पक्षद्वये पदार्थानां संसर्गो वाक्यार्थः। स च—

सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेतं सम्प्राहुरनेकपदसंश्रयम् ॥

इत्यादिना दर्शयिष्यते । तथा सङ्घातपक्ष एव 'सर्वभेदानुगुण्यम्" इत्यादिना प्रकारान्तरेणाभिहितान्वयपक्षे प्रतिपाद्यमाने "कार्यानुमेयः सम्बन्धो रूपं तस्य न विद्यते" इत्यनेन श्लोकेन विशेषविश्रान्तः पदानामेवार्थो वाक्यार्थ इति लक्ष्यते ।

---

"संबन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥" ( वा० प० २।४२ ) इत्यत्रोक्तः ।

अयमर्थः—पदस्य साकाङ्क्षस्य पदान्तरेण संबन्धे सति यत्तु पदार्थापेक्षयाऽन्यद् अर्थेषु वाक्यार्थेषु आधिक्यमुपजायते उपजायमानं दृश्यते । तद्यथा वीरः पुरुष इति वीरत्वपुरुषत्वयोर्गुणविशेषजातिविशेषयोरेकार्थसमवायप्रतिपत्तिपूर्वकं सामानाधिकरण्यं वाक्यार्थः पदार्थापेक्षयाऽधिक उपजायमानो दृश्यते । अनेकपदसंश्रयम् अनेकपदाश्रितम् अनेकपदनिमित्तकम्, पदार्थोपस्थितिद्वाराऽनेकपदज्ञाप्यमिति यावत् । अनेकपदज्ञाप्यत्वादेव तं पदार्थयोः संसर्गरूपं वाक्यार्थमेव प्राहुर्न तु पदार्थमिति । तथा पदसंघातो वाक्यमिति पक्ष एव—

सर्वभेदानुगुण्यन्तु सामान्यमपरे विदुः ।
तदर्थान्तरसंसर्गाद् भजते भेदरूपताम् ॥ ( वा० प० २।४४ ) इति ।

अस्यार्थः—अपरे केचन पदार्थान्तरसंसर्गं विना यत्तु कस्यचित् पदार्थस्य सर्वभेदानुगुण्यं सर्वेषां भेदानां पदार्थविशेषाणामानुगुण्यम् अन्वयानुकूलत्वम् अन्वययोग्यत्वम्, तदेव पदार्थस्य सामान्यं रूपं विदुः । तत्तु पदार्थस्य सामान्यं रूपम् अर्थान्तरसंसर्गात् पदार्थान्तरसम्बन्धात्, भेदरूपतां पदार्थविशेषरूपतां भजते । पदात् सामान्येन प्रतीयमानः पदार्थ एव पदान्तरसम्बन्धे तदुपस्थाप्यपदार्थान्तरसंसर्गितया प्रतीयमानो विशेषरूपतामापन्नो वाक्यार्थः । पदार्थयोः संसर्गो वाक्यार्थ इति यावत् । अत्र च प्रकारान्तरेणाभिहितान्वयवाद एव प्रतिपाद्यते । तथा हि—अभिहितयोः शक्त्योपस्थापितयोः पदार्थयोरन्वयः पदयोः समभिव्याहारविशेषरूपाकाङ्क्षाभास्य इत्यभिहितान्वयवादस्वरूपम् । अस्मिंश्च पक्षे पदार्थयोरन्वयस्य पदसमभिव्याहारविशेषरूपवाक्यार्थत्वं स्फुटमेवोक्तम् । तद्वक्ष्यत्यग्रे—'अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्' ( वा० प० २।११४ ) इति ।

एवमनया कारिकया सर्वभेदानुगुण्यमित्यादिकया प्रकारान्तरेणाभिहितान्वयपक्षे प्रतिपाद्यमाने--

"कार्यानुमेयः संबन्धो रूपं तस्य न दृश्यते ।
असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते ॥" ( वा० प० २।४६ ) इति ।

पदमाद्यम्, पृथक्सर्वं पदं साकाङ्क्षमित्यस्मिन् तु पक्षद्वये संसृष्ट एव प्रथमतरं प्रक्रम्यते वाक्यार्थः । यथा निरूपयिष्यति—

"तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते" (इति),

तथा—

पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु ।। इति ।

---

अस्यार्थः—पदार्थव्यतिरेकेण वाक्यार्थत्वेन कल्पितः पदार्थानां परस्परं संबन्धः पदार्थव्यतिरेकेणासन्नेव नियमेनानुमेय एव, न तु पदसमुदायवाच्यः । किं तर्हि सान्वययोग्य-सर्वपदार्थान्तरान्वयानुगुणसामान्यरूपो यः पदार्थः स एव पदार्थान्तरसन्निधानाद् विशेषविश्रान्तो वाक्यार्थः । स च कार्यानुमेयः, कार्येण पदार्थानां विशेषविश्रान्तिलक्षणेनानुमीयत इति कार्यानुमेयः, तस्य सम्बन्धस्य रूपम् 'इदं तत्' इति न दृश्यते न ज्ञायते । अत एवात्यन्त-मसत्त्वभूतम्, पदार्थव्यतिरेकेण नास्ति सत्त्वं यस्य तमेवंभूतमाचार्याः प्रतिजानते प्रतिज्ञया निर्दिशन्तीति । तदेवमनेन श्लोकेन पदानामेवार्थो यः सर्वपदार्थान्वययोग्यः सामान्यरूपः स एव पदार्थान्तरसन्निधानाद् विशेषविश्रान्तो वाक्यार्थ इति लभ्यते । अस्मिंश्चाभिहितान्वयवादस्यैव मतविशेषे वाक्यार्थत्वेनाभिमतस्य सबन्धस्य प्रागुक्तरीत्या कार्यानुमेयत्वमेव, न त्वाकाङ्क्षा-भास्यत्वमित्यप्यनेन श्लोकेन विज्ञायते ।

अन्विताभिधानमाश्रित्य तु पदमाद्यमिति पृथक् सर्वं पदं साकाङ्क्षमिति चास्मिन् पक्षद्वये पदस्यैकस्य पदान्तरसंसर्गात्, एकस्य पदार्थस्य पदार्थान्तरससर्गाद् वा प्रथमतरमेव एकपदार्थसंसृष्टापरपदार्थरूप एव वाक्यार्थः प्रतिपत्तृबुद्ध्यारूढो भवति । यथा निरूपयिष्यति—

"तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते ।
व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु ।।" (वा० प० २ । १८) इति ।

अस्यार्थः—तेषाम् एकपदार्थविशिष्टापरपदार्थविशेषरूपे एकस्मिन् वाक्यार्थे आद्य पदम्, बहून् शब्दान् वा प्रत्येकं वाचकत्वेनाभ्युपगच्छतामन्विताभिधानवादिनां तु कृत्स्नो वाक्यार्थः प्रतिभेदं प्रतिपदं प्रतिवर्णं वा समाप्यते । एकेनैव पदेनाद्येनेतरेण वा कृत्स्नो वाक्यार्थो निराकाङ्क्षो बोध्यत इति यावत् । न चैवमितरवर्णपदवैयर्थ्यमत उत्तरार्धेनोत्तरमाह-व्यक्तोपव्यञ्जनेति । यतोऽर्थस्य वाक्यार्थस्य प्रतिपत्तृषु बोद्धृषु सिद्धिः प्रसिद्धिः, व्यक्तोप-व्यञ्जना व्यक्तैः स्फुटतया श्रावणप्रत्यक्षगोचरैरितरपदैरुपव्यञ्जनमभिव्यक्तिर्यस्याः सा तथाभूता, अतो नेतरपदोदीरणवैयर्थ्यमिति ।

किञ्च—

"पूर्वैरर्थैरनुगतो यथाऽर्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु ।।" ( वा० प० ४१८ ) इति ।

"अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् ।"

**इत्यनेन प्रयोजनं वाक्यार्थत्वेन प्रदर्शितम् ।**

**तत्केषाञ्चिन्मते सर्वलक्षणसाधारणमिति न प्रयोजनवाक्यार्थो वाक्य-लक्षणेषु पृथग् विभज्यते ।**

---

अस्यार्थः—अभिहितान्वयवादे यथा पूर्वपूर्वपदार्थानुगतस्तत्संसृष्टः परः परः पदार्थो वाक्यार्थः, पदार्थयोः संसर्गस्य पदयोः समभिव्याहारविशेषरूपाकाङ्क्षालभ्यत्वेन प्रथमं पूर्वपदश्रवणकालेऽप्रतीयमानत्वात् । तथाऽन्विताभिधानवादे आद्येषु पूर्वेष्वर्थवस्तुषु प्रतीय-मानेषु परस्य परस्य पदार्थस्य संसर्गः प्रकान्त एव प्रथमतरमेव प्रतीतो भवतीति शेषः । इतरपदार्थान्वितस्यैव पदार्थत्वादिति भावः । तदेवमभिहितान्वयवादे 'कार्यानुमेयः संबन्धः' ( २।४६ ) इति श्लोकेन विशेषविश्रान्तः पदानामेवार्थो वाक्यार्थ इति लभ्यते ।

अन्विताभिधानवादे तु 'पदमाद्यम्' इति 'पृथक् सर्वं पदं साकाङ्क्षम्' इति च पक्षद्वये प्रथमतरमेव संसृष्टा वाक्यार्थोऽव्यक्तं प्रतीयते, पदान्तरसन्निधानकाले तु व्यज्यमानो व्यक्तं प्रतीयत इति निर्धारितम् ।

केषाञ्चित्तु मते न वाक्यार्थ आकाङ्क्षाभास्यः कार्यानुमेयो वा, अभिहितान्वयवादि-नामिव; नाप्यन्विताभिधानवादिनामिव शक्तिभास्यः, किन्तु पदार्थः पदाभिधेयः, वाक्यार्थस्तु वाक्यस्य प्रयोजनमिति । तदेतद् वक्ष्यति—

"अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् ।" (वा० प० २।११४) इति ।

अयं भावः—पदार्थः पदस्याभिधेय इति, वाक्यश्रवणे देशकालाव्यवधानरूपयासत्त्या पदैरुपस्थापिताः पदार्था योग्यतया परस्परं संबध्य प्रतीयन्त इति न पदस्य वाक्यस्य वा वाक्यार्थे शक्तिः, किन्तु वाक्यश्रवणे प्रतीयमानो वाक्यार्थो वाक्यप्रयोजनम् । तद्भावे भावात् तदभावेऽभावात् । यथा गङ्गापदस्य तीरे लक्षणया प्रयोगे तीरे शैत्यपावनत्वादिप्रतीतिः प्रयोजनम्, न तु शैत्यपावनत्वादौ गङ्गापदस्य शक्तिर्लक्षणा वा तथा । न चैवं सति गङ्गा-पदस्य यथा शैत्यपावनत्वादौ व्यञ्जनावृत्तिः स्वीक्रियते, तथा वाक्यस्यापि वाक्यार्थे व्यञ्जना-वृत्तिः स्वीक्रियतामिति वाच्यम्, व्यञ्जनाया अनुमानेन गतार्थत्वात् । तदेतत् प्रपञ्चितं व्यक्तिविवेके महिमभट्टैरिति नेह प्रतन्यते । तथा च न वाक्यस्य वाक्यार्थे वृत्तिरिति ।

तदेतन्मतं दूषितमस्यैव श्लोकस्योत्तरार्धेन—

"यस्य तस्य न सम्बन्धो वाक्यानामुपपद्यते ॥" इति ।

अयं भावः—यस्य वादिनो वाक्यप्रयोजनं वाक्यार्थो न वाक्याभिधेय इति, तस्य वादिनो मते वाक्याना परस्परं संबन्धो महावाक्येषु दृश्यमानो नोपपद्यते । अभिधेयद्वारको हि शब्दानां संबन्धो भवति । अभिधेयं च वाक्यानां नास्तीत्यसंबन्धानि वाक्यानि प्राप्नु-वन्तीति ।

**तदेवं प्रतिभा, संसर्गः, संसर्गवशान्निराकाङ्क्षो विशेषावस्थितः पदार्थ एव, संसृष्ट एवार्थः क्रिया, प्रयोजनं चेति षड् वाक्यार्था इहोपदर्शिताः।**

**संसर्ग. संसर्गवशाद्विशेषावस्थिते पदार्थे च वाक्यार्थेऽभिहितान्वयः।**

---

तदेतद् वाक्यप्रयोजनं वाक्यार्थ इति केषाञ्चिन्मतं सर्वेषु वाक्यलक्षणेषु सत्सु संभवतीति वाक्यलक्षणेषु पृथग्विभज्यमानेषु न पृथग् विभज्यते। अस्मिन् वाक्यलक्षणे वाक्यार्थो वाक्यप्रयोजनमिति।

तदेवं षड् वाक्यार्था इह द्वितीयकाण्डे ग्रन्थकृतोपदर्शिताः। प्रतिभा, पदार्थाना संसर्गः, पदार्थान्तरसंसर्गात् पूर्वं सामान्यरूपः पदार्थान्तरसाकाङ्क्षः,पश्चात्तु पदार्थान्तरसंसर्गवशान्निराकाङ्क्षो विशेषरूपेऽवस्थितः पदार्थान्तरसंसर्गोपलक्षितः पदार्थ एव वाक्यार्थः, पदार्थान्तरसंसर्गविशिष्टः पदार्थ एव वाक्यार्थश्चतुर्थः, क्रिया वाक्यार्थ इति पञ्चमः पक्षः वाक्यस्य योजनं वाक्यार्थ इति षष्ठ इति।

तत्र संसर्ग ससर्गवशाद् विशेषावस्थिते पदार्थे च वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एव आपतति।

उभयत्रापि पक्षे संसर्गभानस्य पदसमभिव्याहारविशेषरूपाकाङ्क्षाप्रयोज्यत्वात् पदार्थान्तरसंसृष्टः पदार्थो वाक्यार्थ इति, तत्तद्विशेषणविशिष्टसाधनान्विता क्रियैव वाक्यार्थ इति पक्षे चान्विताभिधानवाद. स्पष्ट एव, पक्षद्वयेऽप्यन्वयस्य पदशक्त्या प्रतीयमानत्वात्। प्रतिभायां त्वखण्डस्य वाक्यार्थस्य विषयत्वात् पदार्थान्वयशून्या एकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताभिधानचर्चा। प्रयोजने तु वाक्यार्थे स्वीक्रियमाणेऽभिहितान्वयवाद एव। तत्र प्रतीयमानस्य पदार्थद्वयसंसर्गरूपस्य प्रयोजनस्याकाङ्क्षामात्रलभ्यत्वादित्यवधेयम्।

यद्यपि विधिर्वाक्यार्थ इति, नियोगो वाक्यार्थ इति, भावना वाक्यार्थ इति पक्षत्रितयमपि शास्त्रेषु दृश्यते। तथा हि—इष्टसाधनत्वाख्यो विधिर्लिङ्लेट्लोट्तव्याद्यन्तधातुप्रयोगे प्रतीयमानो लिङाद्यर्थोऽपि तत्तत्साधनान्वितक्रियान्वितो वाक्यात् प्रतीयमानो वाक्यार्थ इति **मण्डनमुरारिमिश्रप्रभृतयः।**

तथा च लोके गामानयेत्यादौ गोकर्मकमानयनमिष्टसाधनमिति बोधः। वेदे तु स्वर्गकामो यजेतेत्यादौ यागः स्वर्गसाधनमिति, स्वर्गस्यैव फलत्वेनेष्टत्वादिति। नियोगो लिङाद्यर्थः। स च कार्यापूर्वविधिपदैरप्यभिधीयते। तल्लक्षणन्तु कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत इति। स च कार्यरूपो नियोगो लोके क्रियारूप एव। तथा च गामानयेत्यादौ गोकर्मकमानयनं कार्यमिति बोधः। वेदे तु स्वर्गकामो यजेतेत्यादौ यागादिक्रियातिरिक्तो यागादिक्रियाविषयको यागादिक्रियाकरणकस्तत्तत्फलकामिनियोज्यकश्च। तदुक्तम्—

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।
कार्येऽसघटिताकारे विषयत्वेन संमतः॥ इति।

संसृष्टे क्रियायां चान्विताभिधानम्। प्रतिभायां त्वेकरसैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताविधानचर्चा। प्रयोजने त्वभिहितान्वय एव।

विधिर्नियोगभावनासंज्ञास्तु वाक्यार्था न निरूपिताः, यस्माद्भावनाक्रिययोः पर्यायता प्रायशो लक्ष्यते। केवलं प्रकृत्यर्थप्रत्ययार्थतायामत्र वैयाकरण-मीमांसकयोर्विवादः।

---

नियोज्यलक्षणन्तु "नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति। ममेदं कार्यमिति यस्य प्रत्ययः स नियोज्यः, स च तत्तत्फलकामस्तत्तत्फलोपभोक्ता इति तदर्थः। यद्यपि कृतिसाध्यस्य नियोगस्य न सविषयकत्वम्, तस्य यागादिक्रियाजन्यापूर्वरूपत्वात्, तथापि कृतेः सविषयत्वात् कृतिघटितस्य तस्य सविषयकत्वम्। तथा च स्वर्गकामो यजेतेत्यस्मात् स्वर्गकामनियोज्यकं यागादिविषयकं कार्यमिति बोधः।

इदं च प्रभाकरमतं गुरुमतमित्यपि शास्त्रेष्वाख्यायते। भावना वाक्यार्थ इति तु भट्टमतम्। सा च द्विविधा—शाब्दीभावना आर्थीभावना चेति। तत्र लोके प्रयोक्तुरभिप्राय-विशेषो लिङाद्यर्थः। तद्यथा गामानयेत्यत्र गोकर्मकमानयनं गुरोरभिप्रेतमिति बोधः। वेदे तु कर्तृपुरुषाभावाद् लिङादिशब्दनिष्ठा प्रेरणारूपव्यापारविशेषरूपा भावनैव लिङाद्यर्थः, स्वर्गकामो यजेतेत्यादौ लिङ्श्रवणेऽयं लिङ् मा प्रवर्तयतीति प्रत्ययात्। मत्समवेतप्रवृत्त्यनुकूल-व्यापारवानयं लिङ् इति तदर्थः। सा च लिङादिशब्दनिष्ठत्वात् शाब्दी इति। सा च यजेतेत्यादौ लिङ्त्वांशेनाभिधीयते। आर्थी भावना तु पुरुषप्रवृत्तिरूपा यागाद्यनुकूला, पुरुषरूपार्थनिष्ठत्वादार्थी। सा च यजेतेत्यादावाख्यातत्वांशेनाभिधीयते। तथा च स्वर्गकामो यजेतेत्यतो यागेन स्वर्गं भावयेदिति वाक्यार्थबोधः। स्वर्गकामकर्तृका यागादिकरणिका स्वर्गसाध्यिका भावनेति। सर्वत्रैव चार्थभावनायां धात्वर्थस्य प्रायेण करणत्वेनान्वयः। गुणविधौ तु साध्यत्वेनान्वयो धात्वर्थस्य। यथा दध्ना जुहोतीति। दध्ना होमं भावयेदिति। दधिकरणिका होमसाध्यिका भावनेति। क्वचित्तु आश्रयत्वेनापि धात्वर्थस्य भावनायामन्वयः। यथा दध्नेन्द्रियकामस्य जुहुयादिति। अत्र हि निरूपकत्वसंबन्धेन होम-निष्ठेन दधिकरणत्वेनेन्द्रियं भावयेदिति बोधः। होमाश्रयिका दधिकरणिका इन्द्रियसाध्यिका भावनेति बोधः। शाब्दभावनायां तु सर्वत्र पुरुषप्रवृत्तिरूपा आर्थी भावना साध्यत्वेनान्वेति, लक्षणया अर्थवादवाक्यजन्यन्तु प्राशस्त्यज्ञानमितिकर्तव्यतारूपेण, लिङादिज्ञानन्तु करणत्वेनेति। तथा च स्वर्गकामो यजेतेत्यादौ अर्थवादज्ञाप्यप्राशस्त्यज्ञानेनोपकृत्य लिङादिज्ञानेन आर्थी-भावना भावयेदिति बोधः। प्राशस्त्यज्ञानेतिकर्तव्यताका अर्थभावनासाध्यिका लिङादिज्ञान-करणिका भावनेति बोधः। वैयाकरणाना मते तु भावना धात्वर्थ इति।

तदेवं विधिनियोगभावनासंज्ञास्तु वाक्यार्था मतभेदेनाभिप्रेतास्त्वत्र न निरूपिताः। यस्माद् भावनाक्रिययोः पर्यायता प्रायशो लक्ष्यते। क्रिया वाक्यार्थ इति तु निरूपितमेवात्रेति

किञ्च, भावना सकर्मिकेवाकर्मिकापि क्रियेति सत्यपि भेदे साध्यत्वाविशेषादभेद एवानयोः। यथा धात्वर्थभूता क्रिया साध्यरूपैव, तथा भावनाऽपीति कथमवान्तरभेदाद्भेदोऽनयोर्भवेत्? विधिनियोगौ तु लिङ्लोट्कृत्यान्तेष्वेव वाक्येष्वर्थावित्यसर्वविषयत्वादनादृताविहेति न तत्प्रदर्शनं कृतम्।

तत्तदनादिवाक्यार्थविकल्पाहितवासनाप्रबोधजन्मा क्रमवद्भिरिवाक्रमैर्बहीरूपतयाऽध्यस्तैः पदार्थैश्चित्रीकृत इव विकल्पविशेषोल्लिख्यमान आकारो बहीरूपतयाऽध्यस्तो निर्विभाग एव शाक्यानां वाक्यार्थ इति प्रायशः प्रतिभासोदर एवासौ मन्तव्यः।

---

तेन गतार्थत्वात्। केवलं भावना प्रकृत्यर्थः (धात्वर्थः) इति वैयाकरणा। प्रत्ययार्थः—आख्यातार्थ इति मीमांसका इत्येतावानेव विप्रतिपत्तिविषयो विशेषः।

किञ्च, भावना सकर्मिकैव भवति, भावस्य फलस्य तत्र कर्मत्वात्, क्रिया तु नदीवृद्ध्यादिरूपा 'नदी एधते' इत्यादावकर्मिकाऽपि भवति, अन्यत्र सकर्मकत्वसत्त्वेऽपि। एवं भावनाक्रिययोः सकर्मकत्वस्य नैयत्यानैयत्यरूपभेदसत्त्वेऽपि साध्यत्वस्य भावनाक्रिययोरुभयोरविशिष्टत्वादभेद एव।

किञ्च, धात्वर्थभूता यागादिक्रिया यथा साध्यरूपैव, तदुक्तम्—

"यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥"(वा०प०३,क्रि० १)इति।

कृदभिहिता तु यागादिक्रिया सिद्धत्वेन प्रतीयत इति। तदुक्तम्—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति। तथा भावनाऽपि प्रकृत्यर्थः प्रत्ययार्थो वा भवतु साध्यरूपैव प्रतीयत इति कथमनयोः सकर्मकत्वस्य नैयत्यानैयत्याभ्यामवान्तरभेदमादाय भेदो भवेत्? विधिनियोगौ तु लिङ्लोट्कृत्यान्तेष्वेव वाक्येष्वर्थाविति सर्ववाक्याविषयत्वादिह वाक्यार्थनिरूपणावसरे ग्रन्थकृताऽनादृताविति तयोर्वाक्यार्थत्वेन प्रदर्शनं न कृतमिति।

यस्तु विज्ञानवादिनां शाक्यानां वाक्यार्थः, तथा हि—यत् स्वलक्षणमात्रविषयकं व्यक्तिमात्रविषयक ज्ञानं तन्निर्विकल्पकम्; तच्चाभ्रान्तम्। यत्तु धर्मधर्मिसंसर्गविषयकं पदार्थद्वयसंसर्गविषकं वा ज्ञान तत्सर्वं सविकल्पकं भ्रान्तञ्च। एतच्च विकल्पपदेनापि आख्यायते। तथा चानादियः पूर्वः पूर्वो वाक्यार्थविषयको विकल्प उत्तरोत्तरवाक्यार्थविकल्पस्य हेतुभूतः, तेनोत्तरोत्तरवाक्यार्थविकल्पे स्वकार्ये आहिता या वाक्यार्थविषया वासना तस्या यो वाक्यश्रवणेन प्रबोधः, वाक्यार्थविकल्पे वाक्यार्थाकारोल्लेखस्याभिमुख्येनाकूल्यम्, तज्जन्मा कश्चन विज्ञानस्याकारविशेषो वाक्यार्थः। स चान्तरोऽपि बहीरूपतयाऽध्यस्तः, निर्विभागोऽपि अक्रमोपजातप्रत्ययगोचरैरपि क्रमोपजातप्रत्ययगोचरैरिवान्तरैरपि बहीरूपतयाऽध्यस्तैः पदार्थैश्चित्रीकृत इव समन्वित इव विकल्पविशेषेण शाब्दबोधनाम्ना उल्लिख्यते।

वाक्यमपि तत्तदनादिवाक्यविकल्पाहितवासनाप्रबोधजन्म क्रमवद्भि-रिवाक्रमैः पदैश्चित्रीकृत इव बहीरूपतयाऽध्यस्यमानो विशिष्टविकल्पोल्लिख्यमान आकारविशेष एव बहीरूपतयाध्यस्त इति प्रायशो बुद्ध्यनुसंहृतिरित्यस्य सोदर-मेवेति न तन्मतानुसारेण वाक्यवाक्यार्थयोरिहासंग्रहो वेदितव्यः।

नैयायिकादीनां तु पूर्वपूर्ववर्णस्मृतिसचिवोऽन्त्यो वर्णो नश्यदवस्थानुभव-विषयीक्रियमाणः पदं यथा, तथैव पूर्वपूर्वपदस्मृतिसचिवमन्त्यमेव पदं

---

यद्यप्यस्मिन् मते वाक्यार्थस्य निर्विभागत्वेन तद्विषयकबोधस्य विकल्परूपत्वं न युज्यते, संसर्गानवगाहित्वात्, तथापि तद्विषयस्य वाक्यार्थस्य पदार्थैश्चित्रीकृतत्वेनैव लक्ष्यमाणत्वेन पदार्थसंसर्गावभासरूपत्वेन विकल्पविशेषरूपत्वं युज्यते। स च प्रायशः प्रतिभासोदर एव मन्तव्यः, प्रतिभाया विज्ञानाकारस्य तादृशवाक्यार्थस्य चाखण्डत्वसाम्यात्।

अयन्तु विशेषः—प्रतिभाया गोचरो वाक्यार्थो बहिरस्ति वस्तुभूतः, विज्ञानाकार-विशेषस्तु वाक्यार्थो नास्ति बहिर्वस्तुभूत इति। अत एव प्रतिभासोदरत्वमुक्तम् न तु प्रतिभात्वमेवेति। तथा चैतस्य शाक्यपक्षस्य प्रतिभा वाक्यार्थ इति पक्षे एव यथाकथञ्चि-दन्तर्भावोऽवान्तरभेदसत्त्वेऽपीति।

किञ्च, विज्ञानवादिमते वाक्यमपि पूर्वपूर्वेणानादिना वाक्यविषयकेण विकल्पेनोत्त-रोत्तरस्मिन् वाक्यविकल्पे स्वकार्ये आहिता या वाक्यविषया वासना, तस्या यः प्रबोधः स्वविषयविषयकज्ञानरूपकार्यजननाभिमुख्यरूपस्तज्जन्यो निर्विभागोऽप्यक्रमोपजातप्रत्यय-गोचरैरपि क्रमोपजातप्रत्ययगोचरैरिव पदैश्चित्रीकृत इव विविधजातीयैः पदैर्घटित इव विज्ञानपरिणामतया आन्तरोऽपि बहीरूपतयाऽध्यस्यमानः पदानां संसर्गावगाहिना विकल्प-विशेषेण गोचरीक्रियमाण आकारविशेष एवेति। तथाचान्तरोऽपि बहीरूपतयाऽध्यस्तो विज्ञानाकारविशेष एव वाक्यमिति विज्ञानवादिमतं प्रायशो बुद्ध्यनुसंहृतिर्वाक्यमित्यस्य सोदरमेवेति।

अत्र सादृश्यमूलको विज्ञानवाद्यभिमते विज्ञानाकारविशेषे वाक्ये बुद्ध्यनुसंहृति-सोदरत्वारोपः। तच्च सादृश्यम् आन्तरत्वेन एकबुद्धिविषयत्वेन च। भेदस्तु विज्ञानवादिनां विज्ञानाकारविशेषो वाक्यम्, बुद्ध्यनुसंहृतिर्वाक्यमिति वादिनां त्वेकस्या बुद्धावनुसंहृतानि क्रमवन्ति पदान्येव वाक्यमिति। तथा च शाक्याभिमतस्य वाक्यार्थस्य प्रतिभायां तदभिमतस्य वाक्यस्य च बुद्ध्यनुसंहृतावन्तर्भावेण न तदभिमतयोस्तयोरसंग्रहोऽत्र वेदितव्यः।

नैयायिकादीनान्तु मते पूर्वपूर्वे ये वर्णास्तद्विषया समूहालम्बनात्मिकोत्पद्यमानावस्था एका या स्मृतिस्तत्सहकृतो योऽन्त्यो वर्णो नश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन गोचरी-क्रियमाणः स एव पदं यथा, तथा पूर्वपूर्वाणि यानि पदानि तेषां यैका समूहालम्बनात्मिकोत्पद्य-मानावस्था स्मृतिस्तत्सहकृतमन्त्यमेव पदं नश्यदवस्थेन श्रावणप्रत्यक्षरूपेणानुभवेन विषयी-क्रियमाणं वाक्यमिति। इदं प्रायशः पदसंघातो वाक्यमिति पक्ष एवान्तर्भवति।

नश्यदवस्थानुभवविषयीक्रियमाणं वाक्यमिति प्रायशः संसर्गपक्ष एवान्तर्भवति। तथा पूर्वपूर्वपदार्थस्मरणसचिवेनान्त्येन पदेनोपजन्यमाना प्रतीतिर्वाक्यार्थ इति प्रायशः संसर्गपक्ष एवास्यान्तर्भाव इति न तदसंग्रहेणाऽव्याप्तिरत्र वक्तव्या।

अथात्राऽनवयव एवैकस्मिन् स्फोटात्मके वाक्ये प्रतिभा लक्षणे च वाक्यार्थे वाक्यवाक्यार्थयोरध्यासरूपः सम्बन्धः। यद्वक्ष्यति ' वाक्यवृत्तस्य वाक्यार्थे वृत्तिः" इत्यादि।

अवशिष्टेषु पक्षेषु वाच्यवाचकभावलक्षणो योग्यताख्य एव शब्दार्थयोः सम्बन्धो मीमांसकदृष्ट्या। शाक्यदर्शनानुसारेण तु विज्ञानवादनयेन बौद्धे शब्दार्थे सर्वत्र कार्यकारणभाव एव। वाक्यार्थवादे तु तत्र संकेतलक्षणोऽसौ बोद्धव्यः।

---

वर्णानां पदाना चोच्चरितप्रध्वंसिनां युगदवस्थानाभावेन वस्तुभूतबाह्यसंघातासंभवेऽपि पूर्वोक्तरीत्या स्मृत्यनुभवरूपाभ्यां बुद्धिभ्यां युगपदुल्लेखाद् यौगपद्योपपत्त्या बौद्धसंघातसंभवात्। विभुविशेषगुणद्वयस्य च युगपदवस्थितिर्विरुद्धेत्युत्पद्यमानावस्थया स्मृत्या विनश्यदवस्थस्यानुभवस्य न विरोधः। एवं पूर्वपूर्वपदानां येऽर्थास्तद्विषयकं यदेकं स्मरण समूहालम्बनात्मकं तत्सहकृतेनान्त्येन पदेनोत्पाद्यमाना या परस्परसंसृष्टसर्वप.ार्थविषया प्रतीतिः सैव वाक्यार्थविषयत्वाद् वाक्यार्थ इति।

इदमपि मतं प्रायशः संसर्गपक्ष एवान्तर्भवति, परस्परसंसृष्टपूर्वपूर्वपदार्थसंसृष्टस्य चरमपदार्थस्यैव वाक्यार्थत्वे पदार्थानां पदशक्यत्वेन संसर्गस्यैवान्ततो वाक्यार्थत्वात्। एवञ्च न नैयायिकसंमतवाक्यार्थासंग्रहेणात्र वाक्यार्थलक्षणानामव्याप्तिर्वक्तव्येति।

अथ पूर्वोक्तेष्वष्टसु वाक्येष्वनवयवे एकस्मिन् स्फोटात्मके वाक्ये षट्सु च वाक्यार्थेषु प्रतिभारूपे वाक्यार्थे वैयाकरणानां संमते वाक्यवाक्यार्थयोरध्यासरूपः संबन्धः। अत्र— अध्यस्यत इत्यध्यास इति कर्मणि घञन्तेनाध्यस्यमानं वाक्यवाक्यार्थयोस्तादात्म्यमेव संबन्ध इति ज्ञेयम्। यद्वक्ष्यति—

"वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया" ( वा० प० २।२६४ ) इति।

अयमर्थः—वाक्यरूपस्यैकोऽनवयवः शब्द इत्येवंलक्षणलक्षितस्य वाक्यार्थे वृत्तिः, वाक्यार्थे बोधनीये प्रवृत्तिः, वाक्यार्थबोधनाय प्रवृत्तिरिति यावत्। अन्यानपेक्षयाऽन्यद् वाक्यस्वरूपातिरिक्तं प्रवृत्तिनिमित्तं तदनपेक्षया, वाक्यस्वरूपमात्रप्रवृत्तिनिमित्तापेक्षयेति यावत्।

तथा च वाक्यार्थे यदि वाक्यस्वरूपस्य तादात्म्याध्यासो न स्यात्, तदा वाक्यस्वरूपस्य वाक्यार्थधर्मत्वाभावाद् वाक्यस्वरूपं वाक्यस्य वाक्यार्थबोधाय प्रवृत्तौ निमित्तं न स्यात्। घटपदस्य घटबोधाय प्रवृत्तौ हि घटधर्मो घटत्वं प्रवृत्तिनिमित्तं भवतीति।

एकोऽनवयवः शब्द इति पक्षातिरिक्तेषु सप्तसु पक्षेषु वाच्यवाचकभावलक्षणो योग्यताख्य एव संबन्धो मीमांसकदृष्ट्या। वाक्ये हि वाचकत्वयोग्यता वाचकतावच्छेदकानु-

नैयायिकाद्यनुसारेण च संकेतलक्षण एवासावित्येवमत्र वाक्यवाक्यार्थसम्बन्धानां संक्षेपतः स्वरूपं बोद्धव्यम्। सम्बन्धेषु मध्यादत्राध्यासमेव दर्शयिष्यति। पदकाण्डे तु सर्वानभिधास्यति।

तत्र वैयाकरणस्याखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यासश्च सम्बन्ध इति पदवादिपक्षदूषणपरः परं टीकाकारो व्यवस्थापयतीत्यस्य काण्डस्य संक्षेपः ॥१-२॥

---

पूर्वी विशेषरूपधर्मविशेषरूपा। वाक्यार्थे च वाच्यत्वयोग्यतावाच्यतावच्छेदकतत्तद्धर्मविशेषरूपा। वाक्याद् वाक्यार्थबोधदर्शनेन तयोर्वाच्यवाचकभावरूपः सम्बन्धः कल्प्यते, असंबद्धस्य बोध्यत्वे बोधकत्वे चातिप्रसङ्गात्। वाच्यवाचकभावरूपसंबन्धेन च तयोर्वाच्यत्वयोग्यता वाचकत्वयोग्यता च कल्प्यते। सा च तयोः स्वरूपं धर्मविशेषो वा भवत्वित्यन्यदेतदिति।

शाक्यदर्शनानुसारेण तु विज्ञानवादनयेन बौद्धे पदार्थे वाक्यार्थे वा बौद्धस्य पदस्य वाक्यस्य वा कार्यकारणभाव एव संबन्धः विज्ञानाकारविशेषस्य पदस्य वाक्यस्य वा विज्ञानाकारविशेषे पदार्थे वाक्यार्थे वा तत्तद्विषयके ज्ञाने च कारणत्वात्। विशेष्यविशेषणभावादिरूपः सम्बन्धो वाक्यशक्य इत्यर्थवत्सूत्रभाष्यादिविज्ञाते वैयाकरणमते संसर्गरूपे वाक्यार्थे वाक्यस्य संकेतलक्षणः शक्तिरूप एव संबन्धः।

अन्विताभिधानवादेऽपि पदात् सामान्यरूपेण प्रतीयमानोऽपि संसर्गो विशेषरूपेण वाक्यादेव पतीयत इति वाक्यस्य तत्र संकेत एव। अभिहितान्वयवादिनैयायिकाद्यनुसारेण च पदद्वयसमभिव्याहारविशेषरूपाकाङ्क्षाभास्योऽपि संसर्गस्तत्तत्पदानां तत्तदर्थे शक्त्यभावे न प्रतीयेतेति परम्परया संकेतलक्षणः शक्तिज्ञाप्य एवेत्येवमत्र वाक्यवाक्यार्थसंबन्धानां संक्षेपतः स्वरूपं बोद्धव्यम्।

अत्र प्रागुक्तेष्वध्यासवाच्यवाचकभाव-कार्यकारणभावसंकेतलक्षणेषु वाक्यवाक्यार्थयोः संबन्धेषु मध्यादत्र वाक्यकाण्डेऽध्यासमेव वाक्यावाक्यार्थयोः संबन्धं दर्शयिष्यति। पदकाण्डे तु तृतीये सर्वानेवाभिधास्यति।

तत्र वैयाकरणानां मतेऽखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थः, अध्यास एव च संबन्ध इति; पदं शब्दः, पदानां संघातो वाक्यमिति वादिपक्षं दूषयित्वाऽखण्डं वाक्यं शब्द इति पक्षव्यवस्थापनपरः टीकाकारो भर्तृहरिर्व्यवस्थापयतीत्येवमस्य वाक्यकाण्डस्य संक्षेपोऽत्र बोद्धव्यः॥ १–२ ॥

ननु 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' 'एकतिङ् वाक्यम्' इति वार्त्तिककारीयं लक्षणद्वयम्, 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्, विभागे स्यात्' इति जरन्मीमांसकोक्तं लक्षणम्, एतयोश्च वार्त्तिककारमीमांसकोक्तयोर्लक्षणयोः किमेकस्मिन् लक्ष्ये समावेश उत भिन्नविषयतेति विचारार्थमाह—निघातादिव्यवस्थार्थमिति।

अथ वार्त्तिककारमीमांसकोक्तयोर्वाक्यलक्षणयोः किं समावेश उत भिन्नविषयतेति विचारार्थमाह—

**निघातादिव्यवस्थार्थं शास्त्रे यत् परिभाषितम् ।**
**साकाङ्क्षावयवं तेन न सर्वं तुल्यलक्षणम् ॥ ३ ॥**

इह पदविधिः सामर्थ्ये सति परिभाषितः। तत्र सत्यपि पदानां सामर्थ्ये निघातादयः क्वचिन्नेष्यन्ते। यथा—अयं दण्डो हरानेन। ओदनं पच मम भविष्यति। ओदनं पच तव भविष्यतीति। अत्रानेनेति सर्वनाम्ना दण्डस्य परामर्शाद्धरतिना सह तस्य सामर्थ्यम्। तथा युष्मदर्थस्यौदनेन सम्बन्धात् पचत्यर्थस्य तेन सह सामर्थ्यम्। एवं च सति सामर्थ्ये तिङतिङ इति निघातः प्राप्नोति। तेमयावेकवचनस्येति चादेशौ। न चेष्यन्ते, वाक्यभेदात्। सामर्थ्याभावेऽपीष्यन्ते। यथा—नद्यास्तिष्ठति कूले, शालीनां ते ओदनं दास्यामीति।

---

अयमर्थः—साकाङ्क्षावयवमित्यग्रिमश्लोकेन वक्ष्यमाणं सर्वं मीमांसकोक्तं लक्षणं वार्त्तिककृता निघातादिव्यवस्थार्थं निघातयुष्मदस्मदादेशादिव्यवस्थाऽर्थं शास्त्रे यत्परिभाषितं वाक्यलक्षणम्, आख्यातं साव्ययकारकविशेषणं वाक्यमिति, एकतिङ् वाक्यमिति च। अत्राद्यस्य साव्ययं सकारकं सविशेषणं चाख्यातं वाक्यं भवतीत्यर्थः। सविशेषणमित्यस्य च प्रत्यासत्त्या कारकविशेषणसहितमित्यर्थः। तेन संबन्धिनां संग्रहः। तद्यथा—'यत्ते दिवो दुहितर्मर्तभोजनम्' इत्यत्र 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति पराङ्गवद्भावेन दिव इत्यस्याष्टमिको निघातः। किञ्च, सविशेषणमित्यस्य क्रियाविशेषणसहितमित्यप्यर्थः। तेन व्रजानि देवदत्त इत्यत्र देवदत्तेत्यस्याष्टमिको निघातः, एकवाक्यस्थत्वादिति। तद् वक्ष्यति पञ्चमकारिकायाम्। तेन वाक्यलक्षणद्वयेन तुल्यलक्षण तुल्यस्वरूपं न भवति, क्वचित् समावेशात् क्वचिदसमावेशादिति। तद्यथा—नद्यास्तिष्ठति कूले इत्यत्र वार्त्तिककृदुक्तयोर्द्वयोरपि लक्षणयोर्मीमांसकोक्तस्य च लक्षणस्य समावेश इति निघातसिद्धिः। 'शालीनां ते ओदनं दास्यामि' इत्यत्रापि वार्त्तिककृन्मीमांसकोक्तयोर्द्वयोरपि लक्षणयोः समावेश इति युष्मदादेशसिद्धिः, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या' इति वार्त्तिकोक्तेः। 'अयं दण्डो हरानेन, ओदनं पच तव भविष्यति' इत्यादौ तिङन्तद्वयघटिते तु एकतिङ् वाक्यमिति वार्त्तिककृदुक्तलक्षणं नास्ति 'अयं दण्डो हरानेन' इत्यत्राप्यस्ति क्रियाध्याहारेण तिङन्तद्वयसत्त्वात्। मीमांसकोक्तं तु वाक्यलक्षणमस्ति, तिङन्तद्वयसत्त्वेऽपि दण्डकरणकहरणक्रियाबोधरूपस्य पाकनिर्वृत्ते ओदने भविष्यत्कालिकत्वस्वाम्योत्पत्तिबोधरूपस्य चैकस्य प्रयोजनस्य सत्त्वात्। न चेष्यन्ते एतादृशस्थलेषु निघातयुष्मदस्मदादेशा इति वार्त्तिककारीयमेव लक्षणं ज्याय इति।

अयं भावः—इह व्याकरणे समर्थः पदविधिरिति सूत्रेण सदसंबन्धी विधिः पदयोः परस्परान्वययोग्यतारूपे सामर्थ्ये सति भवतीति परिभाषितम्। तत्र सत्यपि पदानां सामर्थ्ये

अत्र नद्यास्तिष्ठतीत्यस्य च सम्बन्धानुपपत्तेः सामर्थ्यं नास्ति। इष्यते च निघातः। तथा शालीनां युष्मदश्च सामर्थ्याभावः। इष्यते च तेमयावेकवचनस्येति युष्मादादेश इत्यालोच्य वार्त्तिककृता निघातादिव्यवस्थार्थमारब्धम्–'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति।

एवं चायं दण्ड इत्यत्र सत्यपि सामर्थ्ये नास्ति निघातस्य प्रसङ्गोऽवध्यधिमतोभिन्नवाक्यतयावस्थानात्। अस्तीत्यध्याहारेण ह्ययं दण्ड इत्येकं वाक्यम्। हरानेनेति च द्वितीयं वाक्यम्। नद्यास्तिष्ठतीत्यादौ त्ववध्यवधिमतोः पदयोः सामर्थ्याभावेऽप्येकवाक्यव्यवस्थितौ प्रवर्तन्त एव निघातादय इति नास्त्येषामव्यवस्था। समानवाक्ये निघातादयो वक्तव्या इत्युक्तम्। तत्र वाक्ये विज्ञाते समानवाक्यत्वं ज्ञायत इति प्रसङ्गात्तत्र वार्त्तिककारेणादावेव वाक्यलक्षणमुक्तम्—'आख्यातं साव्ययकारकविशेषणं वाक्यमेकतिङिति च' इति।

---

क्वचिन्निघातादयो नेष्यन्ते। यथा—अयं दण्डो हरानेन, ओदनं पच मम भविष्यति, ओदनं पच तव भविष्यति ( महा० भा० २।१।१।११ वार्त्तिके ) इति।

अत्रानेनेति सर्वनाम्ना दण्डस्य परामर्शाद् हरतिना सह तस्य सामर्थ्यम् 'एवं च सति सामर्थ्ये तिङ्ङतिङ इति निघातः प्राप्नोति। ( महा० भा० ८।१।२८ )।

तेमयावेकवचनस्य इति च तेमयावादेशौ। ( महा० भा० ८।१।२२ )।

न चेष्यन्ते वाक्यभेदात्। सामर्थ्याभावेऽपीष्यन्ते। यथा नद्यास्तिष्ठति कूले, शालीनां ते ओदनं दास्यामि। ( महा० भा० २।१।१।१३ ) इति।

अत्र नद्यास्तिष्ठतीत्यस्य च संबन्धानुपपत्तेः सामर्थ्यं नास्ति, इष्यते च निघातः। तथा शालीनां युष्मदश्च सामर्थ्याभावः। इष्यते च तेमयावेकवचनस्येति युष्मदादेश इत्यालोच्य वार्त्तिककृता निघातादिव्यवस्थार्थं वार्त्तिकमारब्धम्—"समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" इति।

एवं चायं दण्ड इत्यत्र दण्ड इति हरेति पदयोः प्रागुक्तरीत्या सत्यपि सामर्थ्ये नास्ति निघातस्य प्रसङ्गः, परत्वाववधेरतिङन्तपदस्य दण्ड इत्यस्य, अवधिमतश्च तिङन्तपदस्य हरेत्यस्य भिन्नवाक्यस्थत्वात्। अस्तीत्यध्याहारेण नियतेन ह्ययं दण्ड इत्येकं वाक्यम्। हरानेनेति च द्वितीयं वाक्यम्। नद्यास्तिष्ठति कूले इत्यादौ त्वतिङन्ततिङन्तपदयोरवध्यवधिमतोः परस्परं सामर्थ्याभावेऽप्येकवाक्ये एकतिङ्घटिते व्यवस्थित्या प्रवर्तन्त एव निघातादय इति नास्ति निघातादीनामव्यवस्था, यतः सामर्थ्यमस्तु मास्तु वा, समानवाक्ये निघातादयो वक्तव्या इत्युक्तम्। तत्र वाक्ये विज्ञाते समानवाक्यत्वं विज्ञायत इत्यभिप्रेत्य प्रसङ्गात् तत्र वार्त्तिककारेणादावेव वाक्यलक्षणमुक्तम्—'आख्यातं साव्ययकारकविशेषणं वाक्यम्, एकतिङ् वाक्यमिति च' ( महा० भा० २।१।१ )।

एवं च मीमांसकोक्तेनास्य सर्वत्र समावेशोऽस्ति, न वेति विचार्यते। शास्त्रे वाक्यकारेण निघातादिव्यवस्थार्थं यद्वाक्यलक्षणं परिभाषितं तेन मीमांसकोक्तं वाक्यलक्षणं सकलं न तुल्यलक्षणम्। साकाङ्क्षावयवमित्यनेन मीमांसकोक्तं वाक्यलक्षणं सूचितम्। तत्र क्वचिदेते समाविशतः। यथा नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामीति। अयं दण्डो हरानेन ओदनं पच तव भविष्यतीत्यादावसमावेशः। मीमांसकवाक्यलक्षणसमाश्रयणेनात्र प्राप्नुवन्ति निघातादयः, एकप्रयोजनत्वात्। न चेष्यन्ते। तस्माद्वार्त्तिककारीयमेव वाक्यलक्षणं ज्यायः ॥३॥

अथात्र प्रसङ्गान्मीमांसकवाक्यलक्षणमर्थद्वारेण प्रदर्शयितुमाह—

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते ॥ ४ ॥**

---

एवञ्च मीमांसकोक्तेन लक्षणेन सह वार्त्तिककृदुक्तस्य लक्षणस्य समावेशोऽस्ति, न वेत्यनेन पद्येन विचार्यते। शास्त्रे वार्त्तिककृता निघातादिव्यवस्थार्थं यद्वाक्यलक्षणं परिभाषितं तेन सह मीमांसकोक्तं वाक्यलक्षणं सकलं न तुल्यलक्षणम्। कारिकायां साकाङ्क्षावयवमित्यनेन मीमांसकोक्तं वाक्यलक्षणं सूचितम्। तत्र क्वचिद् वाक्यकृन्मीमांसकोक्ते लक्षणे समाविशतः। यथा—नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामीति। क्वचित्तु न समाविशतः। यथा—अयं दण्डो हरानेन ओदनं पच तव भविष्यतीत्यादाविति। मीमांसकोक्तवाक्यलक्षणसमाश्रयणेनात्र प्राप्नुवन्ति निघातादयः, एतद्देशविद्यमानदण्डकरणकहरणक्रियाबोधरूपस्यैकस्य प्रयोजनस्य सत्त्वात्। एवम्—ओदनं पच तव भविष्यतीत्यत्रापि स इत्यध्याहारेण तत्पदेन पक्वौदनपरामर्शात् त्वत्कर्तृकपाकनिर्वृत्तत्वनिष्ठस्वाम्यनिरूपकौदनकर्तृकभविष्यत्कालिकसत्ताबोधरूपस्यैकस्य प्रयोजनस्य सत्त्वात्। न चात्रेष्यन्ते निघातादयः। तस्माद् वार्त्तिककारीयमेव वाक्यलक्षणं ज्याय इति ॥३॥

अथात्र प्रसङ्गात् "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्" इति मीमांसकोक्तं वाक्यलक्षणमर्थद्वारेण प्रदर्शयितुमाह—**साकाङ्क्षावयवं भेद** इति।

तत्र प्रथमं मीमांसकोक्तवाक्यलक्षणवाक्यस्यार्थ एतत्कारिकाऽभिप्रेतः प्रदर्श्यते, पश्चात्तु कारिकार्थः। अर्थैकत्वात् प्रयोजनैकत्वाद् एकं वाक्यं भवति। न च प्रागुक्तरीत्या ओदनं पच तव भविष्यतीत्यादावपि तत्पदाध्याहारेणैकाभिधेयत्वस्यापि संभव इति वाच्यम्, असंभवात्।

तथाहि पदसंघातो वाक्यम्, पदार्थाना संसर्गो वाक्यार्थ इति मतमालम्ब्य हीदं लक्षणं प्रवृत्तम्, अन्यथा साकाङ्क्षं चेद्, विभागे स्यादित्युक्तेर्वाक्याखण्डत्वपक्षेऽसामञ्जस्यापत्तेः। संघातो वाक्यम्, संसर्गो वाक्यार्थ इति मतं चाभिहितान्वयवादे एव संभवति। तथा चाभिहितान्वयवादे वाक्यार्थरूपः संसर्ग आकाङ्क्षाभास्य इति वाक्यस्य शक्त्यभावान्नाभिधेयः। मीमांसकसंमतेऽन्विताभिधानवादेऽप्यन्वयः पदशक्य एवेति वाक्यानभिधेय

भेदे विभागे विशेषजिज्ञासायां यत्साकाङ्क्षावयवम्, अविभागे तु परानाकाङ्क्षाः शब्दाः पदानि यस्मिन् तत्परानाकाङ्क्षशब्दकम्। कर्मप्रधानं क्रियापदप्रधानमित्यर्थः। तस्यैव प्रधानाभिधेयप्रयुक्तत्वादित्यभिप्रायः। गुणवद्विशेषणपदयुक्तम्। एकार्थमेकप्रयोजनम् ॥४॥

इदानीं वार्त्तिककारीयस्य वाक्यलक्षणस्याव्याप्तिमाशङ्कयाह—

**सम्बोधनपदं यच्च तत् क्रियाया विशेषकम्।**
**व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ ५ ॥**

---

एवेति। विभागे पदानां वाक्यात् पृथक्कारे तद् वाक्यं चेद् यदि साकाङ्क्षं पृथक्कृतपदसाकाङ्क्षं स्यादिति।

एतदर्थकारिकार्थस्तु यत्पदकदम्बकं भेदे, पदस्य कस्यचिद् वाक्याद् विभागे सति सामान्यरूपेणार्थावबोधेऽपि विशेषजिज्ञासायां सत्यां साकाङ्क्षपदघटितम्, विभागाभावे तु परानाकाङ्क्षशब्दकम्। परपदानाकाङ्क्षा वाक्यघटकपदातिरिक्तपदानाकाङ्क्षाः शब्दाः पदानि यस्मिन् तत् परानाकाङ्क्षशब्दकम्। एतच्च—साकाङ्क्षं चेद्, विभागे स्यादिति लक्षणवाक्यांशादर्थापत्त्या लभ्यते। कर्मप्रधानं क्रियापदप्रधानमित्यर्थः।

तथाहि—कस्याञ्चित् क्रियायां प्रवृत्तये कुतश्चित् क्रियातो निवृत्तये वा वाक्यं प्रयुज्यते। अतः सर्वत्रैव वाक्ये विधीयमाना प्रतिषिध्यमाना वा क्रियैव प्रधानमिति। अत एव सिद्धार्थपदघटितं वाक्यं वाक्यार्थानवबोधकमाहुर्मीमांसकाः। अत एव तेऽर्थवादवाक्यानां विध्येकवाक्यतयोपनिषद्वाक्यानां चोपासनादिविधिशेषतया प्रामाण्यमुपपादयन्ति।

तदुक्तम्—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति, 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति च। वाक्ये क्रियारूपप्रधानाभिधेयबोधायैव हि क्रियापदं प्रयुज्यतेऽध्याह्रियते वाक्यान्तरस्थं संयोज्यते वेति कर्मप्रधानमित्यस्याभिप्रायः। गुणवद् विशेषणपदयुक्तमित्यर्थः।

अत्र गुणपदेनाप्रधानं विशेषणमुच्यते। एकार्थम् एकप्रयोजनवदित्यर्थः। अत्र कर्मप्रधानमित्येतावन्मात्रोक्तौ केवलस्याप्याख्यातपदस्य वाक्यत्वापत्तिस्तद्वारणाय गुणवदिति। तावन्मात्रोक्तौ नीलो घट इत्यादेरपि वाक्यत्वापत्तिः, अतः कर्मप्रधानमिति। एतद्द्वयोक्तावपि गां बधान पात्रेण कुडयेन वेति निराकाङ्क्षपदघटितस्यापि वाक्यत्वापत्तिः, अतः साकाङ्क्षावयवं भेद इत्युक्तमिति। परानाकाङ्क्षशब्दकमिति तु साकाङ्क्षावयवं भेदे इत्यस्यैवार्थिकोऽर्थ इति न ततो व्यतिरिच्यत इति ॥४॥

इदानीं वार्त्तिककारीयस्य वाक्यलक्षणस्याव्याप्तिमाशङ्कयाह—**संबोधनपदमिति।**

व्रजानि देवदत्तेत्यत्र देवदत्तेत्येतत्पदं नाव्ययम्, न च कारकम्, नापि तद्विशेषणमिति वाक्यलक्षणेनासंगृहीतत्वादाष्टमिक आमन्त्रितस्य चेति निघातो न प्राप्नोतीति चोद्यम्। आख्यातं साऽव्ययं सकारकं सविशेषणमिति सामान्येनाभिधानात् सक्रियाविशेषणस्याप्याख्यातस्य वाक्यतेत्यदोषः।

तथा हि—अत्र संबोध्यमानदेवदत्तविषया व्रजतिक्रिया, असंबोध्यमानदेवदत्तविषयायाः संबोध्यमानयज्ञदत्तविषयाया वा पृथगेवेति विशिष्टैवात्र व्रजतिक्रिया।

क्रियायाश्च विशेषणं कदाचित् सामानाधिकरण्येन भवति। यथा—सुष्ठु करोति शोभनं करोतीति। अत्र करोत्यर्थस्य सुष्ठित्वत्यादिविशेषणविशिष्टस्यैव प्रतीतेः सुष्ठित्वत्यादीनां करोत्यादिक्रियया सामानाधिकरण्यम्।

---

अयमर्थः—व्रजानि देवदत्त इत्यत्र यच्च, चस्त्वर्थे यत्तु। संबोधनपदं देवदत्तेति, तत् क्रियायाः, संबोध्यमानदेवदत्तविषयाया व्रजनक्रियाया असंबोध्यमानदेवदत्तविषयकव्रजनक्रियातः, संबोध्यमानयज्ञदत्तविषयकव्रजनक्रियातो वा विशेषकं व्यावर्तकमिति। तथा सति व्रजानि देवदत्तेत्यत्र देवदत्तेति संबोधनपदस्य क्रियाविशेषकत्वे सति, प्रकृते देवदत्तेति संबोधनपदस्याष्टमिको निघातः सिद्धौ भवति, देवदत्तेति संबोधनपदस्य समानवाक्यस्थत्वादिति।

अयं भावः—"आख्यातं साव्ययकारकविशेषणं वाक्यम्" इति वार्त्तिककारीयं वाक्यलक्षणम्। व्रजानि देवदत्त इत्यत्र देवदत्तेत्येतत्पदं नाव्ययम्, न च कारकम्, नापि च कारकविशेषणं क्रियाविशेषणं वा, प्रकृते व्रजनक्रियायामस्मदर्थस्य कर्तृत्वादिति वाक्यलक्षणेन व्रजानि देवदत्त इत्यस्यासंगृहीतत्वाद् आष्टमिकः 'आमन्त्रितस्य च' इति निघातो देवदत्तपदस्य न प्राप्नोति, समानवाक्यस्थत्वाभावादित्याशङ्क्य समाधानं संबोधनपदं यच्चेति।

समाधानाभिसन्धिस्तु—आख्यातं साव्ययं सकारकं सविशेषणमिति वाक्यलक्षणे सविशेषणमिति सामान्येनाभिधानं कारकविशेषणसहित क्रियाविशेषणसहितं वेति क्रियाविशेषणसहितस्याप्याख्यातस्य वाक्यत्वान्नात्र दोषः।

तथाहि—अत्र संबोध्यमानदेवदत्तविषया व्रजतिक्रियाऽसंबोध्यमानदेवदत्तविषयकव्रजनक्रियातः, संबोध्यमानयज्ञदत्तविषयकव्रजनक्रियातो वा पृथगेवेति देवदत्तेन व्यावृत्तैवात्र व्रजनक्रियेति। अत्र देवदत्तस्य व्रजनक्रियाविषयत्वञ्च तत्रोद्देश्यत्वरूपं बोध्यम्।

न चैवं देवदत्तस्य क्रियाविशेषणत्वे कर्मत्वं नपुंसकत्वञ्च स्यात्, क्रियाविशेषणानां कर्मत्व नपुंसकलिङ्गता चेति वचनादिति वाच्यम्, क्रियाविशेषणाना द्वैविध्यात्। तथाहि—क्रियाया विशेषणं कदाचित् सामानाधिकरण्येन भवति। यथा सुष्ठु करोति, शोभनं करोतीति। अत्र करोत्यर्थस्य सामानाधिकरण्येन सुष्ठ्वित्यादिविशेषणविशिष्टस्यैव प्रतीतेः सुष्ठ्वित्यादीना करोत्यादिक्रियया सह सामानाधिकरण्यम्। एवञ्च सुष्ठ्वित्यादिकमसत्त्व-

एवं चासत्त्वभूतायाः क्रियाया विशेषणमित्यसत्त्वप्रधानत्वाल्लिङ्गसर्वनाम्ना नपुंसकेन योगः क्रियायाश्चेत् निर्वर्त्यत्वात् कर्मत्वमिति न्यायसिद्धमेव 'कर्मत्वं नपुंसकता चेति 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च' इति नारम्भणीयं वचनम्। वैयधिकरण्येनापि विशेषणं भवति, यथा—व्रजानि देवदत्तेति।

अत्र हि देवदत्त व्रजानीति देवदत्तस्य व्रजनक्रियायाश्च सामानाधिकरण्यं नास्ति। केवलमामन्त्र्य देवदत्तं व्रजत्यसाविति देवदत्तामन्त्रणविशेषिता केवला या विलक्षणा व्रजनक्रियेत्याख्यातं सविशेषणमेवेति वाक्यलक्षणसद्भावात् प्रवर्तत एव निघातः। देवदत्त व्रजानीत्येवमुदाहरणं न प्रदर्शितम्। आमन्त्रितं पूर्वमविद्यमानवदिति न निघातः स्यादिति ॥ ५ ॥

पुनरप्यव्याप्तिं वार्त्तिककारलक्षणस्याशङ्क्य परिहर्तुमाह—

**यथानेकमपि क्त्वान्तं तिङन्तस्य विशेषकम्।**
**तथा तिङन्तं तत्राहुस्तिङन्तस्य विशेषकम् ॥ ६ ॥**

---

भूतायाः क्रियाया अभेदेन विशेषणमित्यसत्त्वप्रधानत्वाल्लिङ्गसर्वनाम्ना नपुंसकलिङ्गेन सामान्येन योगस्तस्य।

किञ्च, क्रियाया निर्वर्त्यत्वादभेदेन तद्विशेषणस्य निर्वर्त्यकर्मत्वमिति न्यायसिद्धमेवाभेदेन क्रियाविशेषणाना कर्मत्वं नपुंसकता चेति क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता चेति वचनं न्यायसिद्धमेव नापूर्वम्। वैयधिकरण्येनापि क्रियायां विशेषणं भवति—तद्यथा व्रजानि देवदत्तेति।

अत्र संबोधनमभिमुखीकरणरूपं प्रथमाविभक्त्यर्थः। तच्च देवदत्तपदार्थ प्रकृत्यर्थे विषयत्वरूपकर्मत्वसंबन्धेन विशेषणम्, प्रत्ययार्थत्वेऽपि शब्दस्वभाववैचित्र्यात्। एवमामन्त्रणरूपस्य लिङर्थस्यापि तत्रैवान्वयस्तत एव। देवदत्तस्य च व्रजनक्रियायामुद्देश्यत्वसंबन्धेनान्वय इति संबोध्यमानदेवदत्तोद्देश्यिका आमन्त्रणोत्तरकालिकी व्रजनक्रियेति बोधः। आमन्त्रणञ्चात्र कामचारानुज्ञाप्राप्तिफलकं संबोधनम्। तदुक्तं हरिणैतत्कारिकाव्याख्यावसरे—केवलमामन्त्र्य देवदत्तमसौ व्रजतीति।

अत्र 'आमन्त्र्य' इत्यस्य कामचारानुज्ञाप्राप्तये संबोध्य इत्यर्थः। अत्र च 'देवदत्त व्रजानि' इति देवदत्तस्य व्रजनक्रियायाश्च सामानाधिकरण्यं नास्ति। केवलमामन्त्र्य देवदत्तं व्रजत्यसाविति देवदत्तामन्त्रणविशेषिता केवलव्रजनक्रियातो विलक्षणा व्रजनक्रियेत्याख्यातं देवदत्तेन सविशेषणमेवेति वाक्यलक्षणसद्भावात् प्रवर्तत एव व्रजानि देवदत्तेत्यत्र निघातः। 'देवदत्त व्रजानि' इति तु तिङ्ङतिङ इति निघातस्योदाहरणं न प्रदर्शितम्। आमन्त्रितं पूर्वमविद्यमानवदिति देवदत्तपदस्याविद्यमानवद्भावेन तिङ्ङतिङ इत्यस्य तत्राप्रवृत्तेरिति दिक् ॥ ५ ॥

ननु देवदत्त पूर्वं स्नानि पचानि ततो भुनजै ततो व्रजानि तत इत्यत्र पुनरप्याख्यातं

इह पूर्वं स्नाति पचति ततो व्रजति तत इत्यत्र तत इत्येतस्मादुत्तरस्य व्रजतीत्यस्य निघातो न प्राप्नोति, वाक्यभेदात्। इष्यते च। अत्र तिङन्तादुत्तरस्य तु तिङन्तस्यातिङिति प्रतिषेधान्निघातनिवृत्तिः सिद्धेति नात्र स्नातीत्यस्मादुत्तरस्य पचतिशब्दस्य निघात. प्राप्नोतीति चोद्यमुद्भावनीयम्। इष्टस्य निघातस्याप्राप्तिरेवात्रोद्भावनीया।

अत्रोच्यते—नास्त्यत्र वाक्यभेदः। व्रजतीत्येतत्प्राधान्येनैकं क्रियापदमत्र स्थितम्। अन्यानि क्रियान्तराणि तद्विशेषणान्येव। यथा स्नानभोजनपानैः कृदन्तैर्विशिष्यते व्रजतिक्रिया, तथात्र तिङन्तैः स्नातिप्रभृतिभिः प्रधानं व्रजतिक्रियैव विशिष्यत इत्येकैवात्र सविशेषणा व्रजतिक्रिया। केवळायास्त्वस्याः

---

सविशेषणमिति वाक्यलक्षणस्याव्याप्तिः, आख्यातमित्यत्रैकवचनस्य विवक्षितत्वात्। अत्र चानेकाख्यातसत्त्वेन वाक्यभेदात् तत इत्यस्मात् परस्य भुनजै इत्यस्य व्रजानि इत्यस्य च निघाताप्राप्तिरित्याशङ्कय परिहर्तुमाह —**यथाऽनेकमपि क्त्वान्तमिति।**

अयमर्थः –'यथा स्नात्वा पक्त्वा भुक्त्वा व्रजति' इत्यत्रानेकमपि क्त्वान्तं तिङन्तस्य विशेषकम्, तथा देवदत्त पूर्वं स्नानि पचानि ततो भुनजै ततो व्रजानि तत इत्यत्रानेकमपि तिङन्तं तिङन्तस्य प्रधानीभूतव्रजनक्रियाबोधकस्य 'व्रजानि' इत्यस्य विशेषकं स्वोत्तरकालिकत्वसंबन्धेन विशेपणमाहुर्वाक्यविद इति।

अत्रानेकस्य तिङन्तस्य प्रधानक्रियाविशेषणत्वं न साक्षात् खलेकपोतन्यायेन, किन्तु क्रमेणावान्तरक्रियासंबन्धमनुभूय विशिष्टस्य प्रधानीभूतक्रियाविशेपणत्वात्, अत एव तत इति पदत्रयं संगच्छते।

अयं भावः—पूर्वं स्नाति पचति ततो व्रजति तत इत्यत्र तत इत्येतस्मादुत्तरस्य व्रजतीत्यस्य निघातो न प्राप्नोति, आख्यातभेदेन वाक्यभेदात्। इष्यते चात्र निघातः। अत्र तिङन्तादुत्तरस्य तिङन्तस्य तिङ्ङतिङ इति सूत्रेऽतिङ इति प्रतिषेधाद् निघाताभावः सिद्ध इति नात्र वाक्ये स्नातीत्येतस्मादुत्तरस्य पचतिशब्दस्य निघातः प्राप्नोतीति शङ्कोद्भावनीया। किन्त्विष्टस्य व्रजतीत्यत्र निघातस्याप्राप्तिरेवात्रापाद्या।

अत्र समाधीयते—नास्त्यत्र वाक्यभेदः। तत्रैव हि वाक्यभेद इष्यते, यत्रानेकं तिङन्तमनेकप्रधानीभूतक्रियाबोधकमस्ति। अत्र तु व्रजतीत्येतदेवमेव क्रियापदं प्रधानीभूतक्रियाबोधकमस्ति, अन्यानि तु क्रियान्तरबोधकानि तिङन्तपदानि तद्विशेषणान्येव। यथा स्नानभोजनपानै. क्त्वान्तपदबोध्यैः स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यत्र प्रधानीभूता व्रजतिक्रिया विशिष्यते, तथा—पूर्वं स्नाति पचति ततो भुङ्क्ते ततो व्रजति ततो इत्यत्र तिङन्तैः स्नातिप्रभृतिभिः प्रधानं व्रजतिक्रियैव साक्षात् परम्परया वा यथायथं विशिष्यत इत्येकैवात्र सविशिष्टक्रियाविशेषणा व्रजतिक्रिया प्रधानम्, केवळाया व्रजतिक्रियायाः पृथग्भूतैवेत्येतत्

पृथगेवेत्येतत्सविशेषणमेकमेव वाक्यमिति वाक्यभेदाभावान्नास्ति निघातासिद्धिदोषः। एकवाक्यत्वे च तिङन्तादुत्तरस्य तिङन्तस्यातिङिति प्रतिषेधान्निघाताभावः। यथा वक्ष्यति—

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङां तिङ्भ्यो निघातस्य पर्युदासस्तथार्थवान्॥ इति।

एवं चातिङ्ग्रहणे सप्रयोजने स्थिते वार्त्तिककारेण यदुक्तम्—अतिङ्ग्रहणमनर्थकं समानवाक्याधिकारादिति तत्राभिप्रायो वाच्यः। एवं वादिनस्तस्य वाक्यभेदोऽत्राभिमत इत्यभिप्राय आख्यातं साव्ययकारकविशेषणमित्यत्रैकवचनस्य विवक्षितत्वादिति। तथा च टीकाकारः प्रदर्शयिष्यति—

---

प्रकृतमनेकतिङन्तपदघटितमपि सविशेषणमेकमेव वाक्यमिति वाक्यभेदाभावान्नास्ति अजतिपदे निघातासिद्धिदोषः। आख्यातं साव्ययकारकविशेषणं वाक्यमिति वाक्यलक्षण आख्यातमित्येकवचनस्य विवक्षितत्वेऽपि प्रधानीभूतक्रियाबोधकमाख्यातमत्रैकमेवेत्यवधेयम्। एकवाक्यत्वादेव च प्रकृतवाक्ये स्नातीत्येतस्मात्तिङन्तादुत्तरस्य पचतीत्यस्य तिङन्तस्य तिङिति वाक्येन निघातः प्राप्तः, अतिङ् इति वाक्येन प्रतिषिध्यत इति स प्रतिषेधः सार्थकः, अन्यथा समानवाक्यत्वाभावादेवात्र निघाताप्राप्तिरिति स प्रतिषेधो व्यर्थः स्यात्। एतच्चाग्रे वक्ष्यति—

"बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता।
तिङा तिङ्भ्यो निघातस्य पर्युदासस्तथाऽर्थवान्॥" (वा० प० २।४५०) इति।

अयमर्थः—बहुष्वपि तिङन्तेषु परस्परसाकाङ्क्षेषु सत्स्वेकवाक्यतेष्यत एव। अत्र 'साकाङ्क्षेषु' इत्युक्त्या 'अर्थैकत्वादेकं वाक्य साकाङ्क्षं चेद्ऽविभागे स्यात्' इति मीमासकोक्तं वाक्यलक्षणं सूचितम्। आख्यातं साव्ययकारकविशेषणं वाक्यमिति वार्त्तिकोक्तलक्षणमप्यनेकतिङन्तपदघटिते वाक्ये प्रागुक्तरीत्या घटत एव। एकतिङ् वाक्यमिति लक्षणमप्येक प्रधानक्रियाबोधकं तिङन्तं यत्रेति व्युत्पत्तिसमाश्रयणेनानेकतिङन्तपदघटिते साकाङ्क्षे वाक्ये घटत एवेति। तथा सति बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यत्वस्वीकारे सति तिङ्भ्यः, तिङन्तेभ्यः, परेषां तिङाम्, तिङन्तानां निघातस्य पर्युदासः, अतिङ इति प्रतिषेधः, अर्थवान्, सार्थकः। अन्यथा समानवाक्यत्वाभावादेव तत्र निघाताप्राप्तौ 'अतिङः' इति प्रतिषेधो व्यर्थः स्यादिति।

एवञ्चातिङ्ग्रहणे सप्रयोजने स्थिते वार्त्तिककारेण यदुक्तम्—'अतिङ्ग्रहणमनर्थम्, समानवाक्याधिकारात्' (महा० भा० ८।१।२८, वा० १) इति तत्राभिप्रायो वाच्यः। एवं वादिनस्तस्य साकाङ्क्षेष्वपि बहुषु तिङन्तेषु वाक्यभेदोऽभिमत इत्यभिप्रायः, आख्यातं साव्ययकारकविशेषणमित्यत्रैकवचनस्य विवक्षितत्वात्। आख्यातमिति च तिङन्तसामान्यबोधकम्, न तु प्रधानीभूतक्रियाबोधकतिङन्तबोधकमिति। तथा च टीकाकारः ( महाभाष्यटीकाकारो भर्तृहरिः ) अग्रे स्वयमेव प्रदर्शयिष्यति—

एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम् ।
तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥ इति ।

सूत्रकारस्य त्वतिङ्ग्रहणादेकमेवाखण्डं वाक्यमर्थैकत्वादाख्यातभेदेऽप्यभिप्रेतमिति गम्यते । तदभिप्रायानुसारेणैव निरूपयिष्यति—

अनेकाख्यातयोगेऽपि वाक्यं न्यायपथानुगैः ।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥
(वा० प० २।३५३) इति । ६ ॥

---

एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम् ।
तस्य तिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥ (वा० प० २।४५१) इति ।

अयमर्थः—यस्य वार्त्तिककारस्य मते तु शास्त्रे व्याकरणशास्त्रे एकतिङ् वाक्यमिति नियतं वाक्यलक्षणम्, तस्य मते तिङ्ङतिङ इति सूत्रेऽतिङ्ग्रहणेनार्थः प्रयोजनं न विद्यते, बहुषु तिङन्तेषु साकाङ्क्षेष्वपि वाक्यभेदात् समानवाक्याधिकारस्थनिघातस्याप्राप्तेरिति ।

सूत्रकारस्य त्वर्थैकत्वादेकं वाक्यमिति मीमांसकोक्तलक्षणानुसारेणाख्यातभेदेऽप्येकमेवाखण्डं वाक्यमभिप्रेतमिति गम्यते तिङ्ङतिङ इत्यत्र अतिङ्ग्रहणकरणादिति तदभिप्रायानुसारेणैवाग्रे निरूपयिष्यति—

अनेकाख्यातयोगेऽपि वाक्यं न्यायपथानुगैः ।
एकमेवेष्यते कैश्चिद् भिन्नरूपमिव स्थितम् ॥ (वा० प० २।३५३) इति ।

अयमर्थः—कैश्चिद् व्याकरणसूत्रकृद्भिः, न्यायपथानुगैः, नितरामीयते प्रतीयते निर्णीयते सिद्धान्तो येनासौ न्यायोऽधिकरणम् । तल्लक्षणन्तु—

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनञ्च पञ्चैतत् प्राञ्चोऽधिकरणं विदुः ॥" इति ।

अत्र विशयः संशयः । न्यायस्याधिकरणस्य पन्था मार्गो न्यानेन सिद्धान्तनिर्णयरूपो मीमांसकमार्गस्तदनुगैः, अर्थैकत्वादेकं वाक्यमिति मीमांसकलक्षणमेव मन्यमानैः, अनेकाख्यातयोगे आख्यातभेदाद् भिन्नरूपमिव स्थितमपि वाक्यमेकमेवेष्यते । विभागे साकाङ्क्षत्वादिति ।

यद्यप्यग्रे पठ्यमानेऽस्मिन् पद्ये 'न्यायपथानुगैः' इत्यस्य पदस्य स्थाने 'न्याय्यापवादयोः' इति पाठभेदो दृश्यते । तत्र च न्यायादपेतं न्याय्यमिति व्युत्पत्त्या औचित्येन प्राप्तमुत्सर्गशास्त्रमेव न्याय्यपदाभिधेयमत्र । अत एव 'प्राप्यापवादयोरुत्सर्गापवादयोः' इति व्याख्यातं पुण्यराजेन । तत्रोत्सर्गशास्त्रीयप्राप्तावौचित्यञ्च उत्सर्गशास्त्रीयोद्देश्यतावच्छेदके यदपवादशास्त्रीयलक्ष्यसाधारण्यं तत्प्रयोज्यत्वरूपं स्वाभाविकत्वमेव । अपवादपदेन चात्र नियमः, प्रतिषेधः, व्याप्यशास्त्रं चेति त्रितयमपि बाधकं गृह्यते, तथाप्यनेकतिङन्तपदघटितं लौकिकं शास्त्रीयं चोत्सर्गापवादसमुदायरूपं वाक्यं सामान्येनोद्दिश्य न्याय्यापवादयोरित्ये-

टीकाकारश्चामुमेव पक्षं सूत्रकाराभिप्रायसमाश्रयणेन युक्तियुक्तं मन्यमानो बहीरूप आन्तरो वा निर्विभागः शब्दार्थमयो बोधस्वभावः शब्दः स्फोटलक्षण एव वाक्यमिति क्रमेण व्याजिहीर्षुश्चित्रज्ञानचित्ररूपदृष्टान्तप्रदर्शनपूर्वमुपक्रमते। तत्र चित्रबुद्धिदृष्टान्तप्रदर्शनार्थमाह—

**यथैक एव सर्वार्थप्रत्ययः प्रविभज्यते।**
**दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा ॥ ७ ॥**

चित्रज्ञानं सर्वाकारमेकमेव। प्रविभागस्त्वस्य दृश्यभेदसमाश्रयेण क्रियते। नीलपीताद्यनेकाकारमेव विज्ञानमुपजातमिति। वस्तुस्थित्या तत्र ज्ञान आकारभेदो नास्ति। तथा वाक्यवाक्यार्थयोः स्वरूपं बोद्धव्यम्।

---

तदर्थाविरोधि न्यायपथानुगैरित्येतदर्थतः पठितमित्यवधेयम्। उत्सर्गापवादयोरित्यर्थको न्याय्यापवादयोरिति पाठ एव च तत्र समुचितः, यतोऽग्रे—

"नियमः प्रतिषेधश्च विधिशेषस्तथा सति।
द्वितीये यो लुगाख्यातस्तच्छेपमलुकं विदुः ॥" (वा० प० २।३४९)

इति विध्यपवादयोरेकवाक्यत्वपरैव कारिकोपलभ्यत इति ॥ ६ ॥

वाक्यपदीयकारस्त्वर्थैकत्वादेकं वाक्यमिति लक्षणमेव सूत्रकाराभिप्रेतत्वेन युक्तियुक्तं मन्यमानो व्यक्तोच्चारणदशायां बहिरुपलभ्यमानत्वाद् बहीरूपः, स्वीयमानसोच्चारणदशायामन्तरुपलभ्यमानत्वाद् आन्तरो वा पदवर्णविभागरहितः शब्दार्थयोः परस्परतादात्म्याध्यासाद् ध्वन्यात्मकस्य शब्दस्यार्थस्य च विवर्तोपादानत्वादपि शब्दार्थोभयस्वरूपः, अर्थप्रकाशकत्वेन वस्तुतो ज्ञानस्यैव तत्तत्स्थानाभिघातसमुपजातध्वनिधर्मरूषितस्य शब्दाकारेण प्रतीत्या च बोधस्वभावः, स्फोटरूपः शब्द एव वाक्यमित्युपपादनक्रमेण व्याजिहीर्षुर्निर्विभागस्यापि विभागवत्तया भाने चित्रज्ञानचित्ररूपदृष्टान्तप्रदर्शनं पूर्वमुपक्रमते। तत्र चित्रज्ञानदृष्टान्तप्रदर्शनार्थमाह—**यथैक एव सर्वार्थ** इति।

अयमर्थः—यथैक एव परब्रह्मस्वरूपः प्रकाशः सर्वार्थविषयकः, दृश्यभेदानुकारेण दृश्यानां घटपटमठादीनां यो भेदस्तदनुकृत्याऽभिन्नोऽपि भिन्न इव प्रविभज्यते प्रविभागेण प्रतीयते व्यवह्रियते च घटज्ञानं पटज्ञानं मठज्ञानञ्च परस्परं भिन्नमिति, तथा वाक्यार्थानुगमः, तथा वाक्यवाक्यार्थयोरखण्डयोरपि यथायथं पदभेदपदार्थभेदयोरनुगमः, वस्तुतोऽसम्बन्धेऽपि सम्बन्धभानमिति।

यद्वा एकमेव समूहालम्बनात्मकं घटपटमठा इति सर्वार्थविषयकं ज्ञानं दृश्यभेदानुकारेण घटज्ञानं पटज्ञानं मठज्ञानमित्यनेकाकारत्वेन प्रविभज्यते। यद्वा चित्ररूपविषयकं ज्ञानं चित्ररूपस्यैकत्वेनैकमपि चित्ररूपे कल्पितं नीलपीतादिरूपावयवभेदं समाश्रित्य नीलपीताद्यनेकाकारमेव विज्ञानमुपजातमिति व्यवह्रियत इत्यर्थ इति।

वाक्यार्थानुगमस्तथेत्यनेन हि वाक्यवाक्यार्थयोरखण्डत्वं पानकरसमयूराण्डरसचित्ररूपनरसिंहगवयचित्रज्ञानवत् समानमेवेत्युच्यते । यथा वाक्यं निर्विभागं स्फोटलक्षणं वाचकम्, तथा वाक्यार्थोऽपि तथाविध एवेत्यनयोरेकयोगक्षेमत्वमुक्तम् ॥ ७ ॥

एवमान्तरं दृष्टान्तमुपदर्श्य बाह्यमप्युपदर्शयितुमाह—

**चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः ।**
**नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ॥ ८ ॥**

चित्रं हि रूपमवयविगतमनंशमेकमेव । तस्यैकावयवगतैर्यथा नीलादिभिर्भेदेन निदर्शनं प्रदर्शनं येषां तैः पृथग्रूपैरेव समाख्यानं क्रियते ॥ ८ ॥

---

अयं भावः—यथा चित्ररूपस्य ज्ञानम्, यद्वा चित्रमेव वा ज्ञानं नीलपीतादिरूपैः सर्वाकारमेकमेव, चित्ररूपस्यैकत्वात्, नीलपीताद्यनेकाकारमेव विज्ञानमुपजातमित्येवंरूपेणास्य प्रविभागस्तु कल्पितनीलपीतादिरूपद्वयभेदसमाश्रयणेन क्रियते, वस्तुस्थित्या तु तत्र चित्ररूपज्ञान आकारभेदो नास्ति, तत्र चित्ररूपस्यैकस्यैव विषयत्वेनैकस्यैवाकारस्य सत्त्वात्, तथा वाक्यवाक्यार्थयोः स्वरूपमपि वस्तुतः पदपदार्थभेदरहितं बोद्धव्यं पदपदार्थभेदवत्तयाभानेऽपि ।

तथा हि—वाक्यार्थानुगमस्तथेत्यनेन वाक्यवाक्यार्थयोरखण्डत्वं पानकरस-मयूराण्डरस-चित्ररूप-नरसिंह-गवयशरीर-चित्रज्ञानानां समानमेवेत्युच्यते । तथाहि—यथा पानके मधुराद्यनेकरसभानेऽपि चित्रो रस एक एव, यथा च चित्रवर्णस्य मयूरशरीरस्योपादानभूते मयूराण्डरसे जलाभे नीलपीताद्यनेकरूपभानेऽपि चित्ररूपमेकमेव, यथा वा सर्वत्रैव चित्ररूपमेकमेव नीलपीताद्यनेकरूपभानेऽपि, यद्वा मयूराण्डरसगतं चित्ररूपमेकमेवोदाहरणम्; यथा च नरसिंहशरीरे जातिद्वयभानेऽप्येकैव नरसिंहत्वजातिः, कल्पभेदेन नरसिंहशरीरभेदात्; यथा वा गवयशरीरे गोत्वाश्वत्वजात्योर्भानेऽपि गवयत्वजातिरेकैव, यथा च चित्ररूपज्ञाने नीलपीताद्यनेकाकारप्रतिभासेऽपि चित्ररूपाकारमेकमेव विज्ञानम्, तथा वाक्यवाक्यार्थयोः पदपदार्थभेदप्रतिभासेऽप्यखण्डत्वं बोध्यम् ।

किञ्च, यथा वर्णपदविभागशून्यं स्फोटलक्षणं वाक्यमेव वाचकम्, तथा पदार्थविभागविरहितोऽखण्ड एव वाक्यार्थो वाच्य इत्यनयोर्वाक्यवाक्यार्थयोरेकयोगक्षेमत्वम् 'वाक्यार्थानुगमस्तथा' इत्यनेनोच्यते । एकयोगक्षेमत्वं चात्र तयोरखण्डत्वप्रयुक्तं तद्रूपमेव वा लाक्षणिकं बोध्यमिति ॥ ७ ॥

एवमान्तरं चित्रज्ञानरूपं दृष्टान्तमुपदर्श्य चित्ररूपात्मकं बाह्यमपि दृष्टान्तमुपदर्शयितुमाह—**चित्रस्यैकस्य रूपस्येति** ।

अयमर्थः—यथा एकस्य चित्रस्य रूपस्य भिन्नलक्षणैः, भिन्नस्वरूपैः, भेदनिदर्शनैश्च

तथा प्रकृते किमित्याह—

**तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।**
**शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते ॥ ९ ॥**

एकस्य निर्विभागस्य वाक्यस्य सर्वतः परिपूर्णस्य वाक्यान्तरगतैः पदान्तरैरन्वाख्यानं तथैव क्रियत इति ॥ ९ ॥

न वा पदस्यार्थे प्रयोगादित्यस्मिन् दर्शने यथाखण्डमेव पदं प्रकृतिप्रत्ययादिभिः कल्पितैरेव विभज्यते तथा वाक्येऽप्यसत्यभूतानामेवाबुधबोधनाय पदानां विभागो द्रष्टव्य इति प्रदर्शयितुमाह—

**यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।**
**अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ॥१०॥**

पदे हि यथा प्रकृतिप्रत्ययविभागोऽसत्य एव बालव्युत्पादनाय क्रियते, तथा वाक्ये वाक्यार्थप्रतिपादनायापोद्धारः पदानामुपवर्ण्यत इति बोद्धव्यम् ॥ १० ॥

---

भेदेन निदर्शनं प्रदर्शनं व्यवहारो वा येषां तैः सर्वथा पृथग्रूपैरेव नीलादिभिः समाख्यानं क्रियते, अत्रेदं नीलमत्रेदं पीतमित्यादीति ।

अयं भावः—चित्रं हि रूपं घटपटाद्यवयविगतं नीलपीतादिरूपावयवरहितमेकमेव, गुणत्वात् । तस्यैव चित्ररूपस्यैकस्य कपालतन्त्वादिरूपावयवगतैर्नीलादिभिर्भेदेन प्रदृश्यमानैः प्रदर्श्यमानैश्च सर्वथाभिन्नरूपैरेवात्रेदं नीलमत्रेदं पीतमिति कल्पितेनावयवभेदेन समाख्यानं क्रियत इति ॥८॥

तथा प्रकृते किमित्याह—**तथैवैकस्येति** ।

अयमर्थः—तथैवैकस्य वाक्यस्य पूर्णस्यात एव सर्वतः सर्वस्मिन् इत्यर्थे सर्वत इत्याद्यादित्वात् सार्वविभक्तिकस्तसिः । स्वान्वयायोग्यतत्तदर्थबोधके पदे निराकाङ्क्षस्य वाक्यान्तर्गतत्वेन प्रतीयमानैरपि वाक्यस्याखण्डत्वात् तदनन्तर्गतैरत एव पदान्तरैरन्वाख्यानं क्रियते, गामभ्याज दण्डेनेति पदचतुष्टयघटितं वाक्यमिति ॥ ९ ॥

"न वा पदस्यार्थे प्रयोगात्" ( महा० भा० १।२।६४, वा० १९ ) । अयमर्थः—न-वा-पदं प्रकृतिप्रत्ययादिभिः सावयवम् अखण्डस्यैव पदस्यार्थे बोधनीये शक्त्या प्रयोगादिति । अस्मिन् दर्शने यथाऽखण्डमेव पदं कल्पितैरेव प्रकृतिप्रत्ययादिभिः प्रविभज्यान्वाख्यायते, तथा वाक्येऽप्यखण्डेऽबुधबोधनायासत्यभूतानामेव पदानां विभागान्वाख्यानं द्रष्टव्यमिति प्रदर्शयितुमाह—**यथा पद** इति ।

अयमर्थः—यथाऽखण्डे निर्विभागे पदे बालव्युत्पादनाय प्रकृतिप्रत्ययादयः कल्पनया प्रविभज्यन्ते, तथाऽखण्डे वाक्येऽपि कल्पितानां पदानामपोद्धारः प्रविभागो वाक्यार्थप्रतिपादनायोपवर्ण्यते, वाक्यार्थप्रतिपत्तेः पदार्थप्रतिपत्तिपूर्वकत्वादिति ॥१०॥

तत्र वाक्यादपोद्धृतानां पदानां केवलमितरपदसारूप्यमात्रं दृश्यत इति प्रतिपादयितुमाह—

**वर्णान्तरसरूपं च वर्णभागेषु दृश्यते ।**
**पदान्तरसरूपाश्च पदभागा अवस्थिताः ॥११॥**

यथा संध्यक्षरेषु भागा वर्णान्तरसरूपा दृश्यन्ते, परमार्थतस्त्वव्यपवृक्तत्वान्निर्विभागा एव । एवं वाक्ये पदान्तरसरूपाः पदरूपा भागाः पदभागाः । पदे वा निरंशे ये भागाः प्रकृतिप्रत्ययरूपास्तेऽवस्थिता इति ॥ ११ ॥

एतदेव व्यक्तीकुर्वन्नाह—

**भागैरनर्थकैर्युक्ता वृषभोदकयावकाः ।**
**अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम् ॥१२॥**

न हि वृषभे ऋषभस्योदकयावकयोर्वोदयावशब्दयोरर्थानुगमः कश्चिदस्ति, अपि तु शास्त्रे पदस्य प्रकृतिप्रत्ययोरन्वयव्यतिरेकाभ्यां विना कथमङ्गो व्युत्पाद्येत ? एवञ्च निरंशमेव वाक्यं वाचकमित्येव युक्तम् ॥१२॥

---

तत्र कल्पनया वाक्यादपोद्धृताना पदानां केवलं स्वतन्त्रपदसारूप्यमात्रं दृश्यते, न तु तत्र वाक्येऽपोद्धृतानि पदानि वस्तुगत्या सन्तीति प्रतिपादयितुमाह—**वर्णान्तरसरूपत्वमिति** ।

अत्र पूर्वार्धस्यादौ यथेति, उत्तरार्धस्यादौ तथा इति वाक्यशेषः । पदभागा अवस्थिता इति भर्तृहरिटीकासम्मतः पाठः । अयमर्थः— यथा ऐ औ इत्यादिषु संध्यक्षरेषु ॠलृवर्णयोश्च वर्णभागेषु वर्णान्तरसरूपत्वं यथायथम् अ, इ, उ, र, ल, इति स्वतन्त्रवर्णसादृश्यमसत्यमेव दृश्यते, परमार्थतस्त्वखण्डत्वान्निर्विभागा एव वर्णाः । तथा वाक्ये च 'गामभ्याज दण्डेन' इत्यादौ पदान्तरसरूपाः, गामित्यादिस्वतन्त्रपदचतुष्टयसदृशाः, पदभागाः पदसरूपा भागा असत्या एवावस्थिताः । यद्वा पदे निरंशे भागाः प्रकृतिप्रत्ययादयोऽसत्या एवावस्थिता इति ॥११॥

एवं यद्यपि सर्वत्रैव पदे भागाः कल्पिता एव तथाऽनर्थका एव, तथापि क्वचित् कल्पिताभ्यामन्वयव्यतिरेकाभ्या कल्पितानां प्रकृतिप्रत्ययादीनां पदभागानां कल्पितार्थवत्ताऽप्यस्तीति व्यक्तीकुर्वन्नाह—**भागैरनर्थकैर्युक्ता** इति ।

अयमर्थः—यथा वृषभोदकयावकशब्दा अनर्थकैर्भागैर्ऋषभोदयावशब्दैर्युक्तास्तथैव पचतिपाचकादयोऽपि प्रकृतिप्रत्ययरूपैरनर्थकैरेव भागैर्युक्ताः, किन्तु पचतिपाचकादिपदेषु शास्त्रकृत्कल्पितानां प्रकृतिप्रत्ययादीनां कल्पितावन्वयव्यतिरेकौ प्रकृतिप्रत्ययादीनां पदभागानां कल्पितेऽर्थवत्त्वव्यवहारे निबन्धनं निमित्तम्, वृषभोदकयावकपदेषु तु नैवमिति ।

**शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।**
**विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते ॥१३॥**

( स्वोपज्ञवृत्तिरूपं विवरणम् )—यस्तावन्निमित्तरूपफलभेदादप्रसिद्धभेद-क्रमवद्भिरयुगपद्भावैरवयवैर्युक्त इत्येवं प्रतीतः शब्दस्तस्यैवं नित्यत्वपक्षे योऽयं परिकल्पितो व्यवहारविषयो द्रव्यशक्तिनिमित्तानुपाती शब्देषु प्रत्ययस्तद्रूपो विभागः स नास्ति । कुतो बुद्धिष्वलब्धयौगपद्यासु बुद्ध्यन्तरस्य बुद्ध्यन्तरे

अथ वाक्यार्थस्यापि तथैव निर्विभागत्वं प्रतिपादयितुमाह—शब्दस्येति । शब्दस्य स्फोटलक्षणस्य विभागो नास्ति, तद्वाच्यस्य प्रतिभारूपस्यार्थस्य कुतो भविष्यति, यथा निदर्शयिष्यति—

"विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यर्थ इति तामाहुः" (वा० प० २।१४४, इति ।

---

अयं भावः—वृषभे ऋषभशब्दस्य, उदके वकशब्दयोर्वोदयावशब्दयोरर्थानुगमो नहि कश्चिदस्ति । एवं पचत्यादिपदेष्वपि प्रकृतिप्रत्ययादिभागानुगमस्तदर्थानुगमो वा नास्ति, किन्तु शास्त्रे पचत्यादिपदेषु कल्पिताभ्यां प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां विना कथमज्ञः पचत्यादिपदं व्युत्पाद्येतेति पचत्यादिपदेषु प्रकृतिप्रत्यययोः कल्पिताऽर्थवत्तेति । एवञ्च निरंशं पदमिव निरंशं वाक्यमेव वाचकमित्येव युक्तमिति स्थितम् ॥१२॥

अथ वाक्यवद् वाक्यार्थस्यापि निर्विभागत्वं प्रतिपादयितुमाह—शब्दस्येति ।

अयमर्थः—यदि प्रागुक्तरीत्या शब्दस्याखण्डवाक्यस्फोटरूपस्य पदलक्षणो विभागो वस्तुतो नास्ति, तर्हि तद्वाच्यस्य प्रतिभारूपस्याखण्डस्यार्थस्य विभागः कुतो हेतोर्भविष्यति । यथाऽग्रे प्रतिभाया वाक्यार्थभूताया अखण्डं रूपं स्वयमेव निदर्शयिष्यति मूले –

"विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥" (वा० प० २।१४५) इति ।

अत्र पदार्थैरुपपादितामित्यस्यासत्यभूतैः पदार्थैः कल्पितैरुपपादितामित्यर्थः । तेन न प्रतिभारूपस्य वाक्यार्थस्य पदार्थैः सखण्डत्वमिति । तथा च यथा वाक्ये पदकल्पनानुरोधेन पदार्थकल्पना, तथा पदे प्रकृतिप्रत्ययानुरोधेन प्रकृत्यर्थप्रत्ययार्थरूपपदार्थैकदेशकल्पना । एवं सत्यपि अविद्वान् मूढः पदे प्रकृतिप्रत्ययविभागेन शास्त्रकृत्कल्पितेन पदे प्रक्रियाभेदेन च प्रकृतिप्रत्ययार्थभेदमसत्यमपि प्रतिपद्यत इति वयं तत्र किं कुर्म इति ।

अयं भावः—ये खलु युगपदवस्थितास्ते प्रसिद्धभेदाः प्रसिद्धक्रमवन्तश्चावयवा भवन्ति, यथा पटस्यावयवास्तन्तवः । तन्तूनां हि युगपदवस्थानेन परस्परं भेदः पौर्वापर्यरूपः क्रमश्च प्रसिद्धः, पदावयवत्वेनाभिमतानां वर्णानां तु तत्तत्स्थानाभिघातरूपनिमित्तभेदात् स्वरूपभेदात्

सततसन्निधानेनानुग्रहं कुर्वति व्यवहारं प्रत्येकबुद्धिप्रत्यवमृष्टरूपेषु मूर्त्तिभेद-क्रमयुक्तेषु व्यर्थरूपेषु विभागरूपेणाविभागमापादितेष्वात्मान्तरत्वादनवयवाया-मतथाभ्युपगतभेदरूपबुद्धावुपसंसृष्टबुद्धिमात्रारूपनिर्भासेषु सत्यप्यात्मभेदे सर्वा-र्थेषु विभागो भविष्यति । तस्मात् समीहितपौर्वापर्योऽर्थात्मा स्वरूपादप्रच्युतोऽपि सर्वो विभागातीततत्त्व एव ।

विभागैः प्रक्रियाभेदमिति भेदग्रहणं हि तस्यार्थात्मनः शब्दात्मनश्चाभिन्नस्य प्रतिपत्तिद्वारम् । पदप्रतिपत्तिपूर्विका हि सामान्यविशेषावग्रहणोपाया लघुप्रक्रमा विभागेनाविभक्तस्य प्रतिपत्तिः, प्रकृतिप्रत्ययादिप्रतिपत्तिवत् । गुरुप्रक्रमा त्वत्र संसृष्टरूपस्य प्रतिपत्तिरविभागेन प्रतिपदं पाठवत् । कुशलस्तु प्रतिपत्ता सर्वमेव भेदमभेदानतिक्रमेण पश्यति । प्रक्रियाभेदास्तु शास्त्रे विभागनिबन्धनम् ।

---

श्रावणप्रत्यक्षरूपफलभेदाच्च न यौगपद्यम्, यौगपद्याभावे च तेषां परस्परं भेदः क्रमो वा न प्रसिध्यति । तथा चैवं निमित्तरूपफलभेदादयुगपद्भावैरवयवत्वेनाभिमन्यमानैरत एवाप्रसिद्ध-भेदक्रमवद्भिर्वर्णैर्युक्तत्वाभावेऽपि तैर्युक्त इत्येवं यः प्रतीतः शब्दस्तस्य शब्दनित्यत्वपक्षे प्रागुक्तरीत्या वर्णरूपावयवयुक्तत्वप्रतीत्या योऽयं परिकल्पितो व्यवह्रियमाणश्च पदव्यञ्जकद्रव्य-रूपाणां वर्णानां पदाभिव्यक्तिशक्तिरूपं निमित्तमनुसृत्य जायमानः पदेष्वखण्डरूपेषु समारो-पितरूपो विभागः स वस्तुतः पदेषु नास्ति ।

एवं शब्दनित्यत्वपक्षेऽखण्डेषु वाक्येष्वपि पदप्रविभागो वस्तुगत्या नास्ति यदा, तदा पदार्थबुद्धिषु क्षणिकत्वेनालब्धयौगपद्यासु (अयुगपदवस्थितासु) सतीषु पूर्वपूर्वस्मिन् बुद्ध्यन्तरे सततसन्निधानेनोत्तरोत्तरस्य बुद्ध्यन्तरस्य संस्कारजननक्रमेण स्वविषयपदार्थस्मृतिजननद्वारा स्वविषयपदार्थविषयकत्वसंपादनरूपानुग्रहं कुर्वति सति वाक्यार्थव्यवहारजननाय एकया चरमया सर्वपदार्थविषयया बुद्ध्या गोचरीकृतरूपेषु, एवं स्वरूपभेदेन क्रमेण च पौर्वापर्य-लक्षणेन बोद्धेन युक्तेष्वपि वाक्यार्थाद् विभक्तरूपेण व्यवहारानुपयोगित्वाद् व्यर्थरूपेषु, अत एव व्यवहाराय बुद्ध्याऽविभागमापादितेषु, पूर्वपूर्वबुद्धिभ्यश्चरमबुद्धेरत्यन्तं स्वरूपभेदाद् अनवयवायाम् = पूर्वपूर्वबुद्धिरूपावयवशून्यायाम्, अत एवासन्तमेवातथाभूतं पदार्थभेदम-भ्युपगम्य वाक्यार्थमुल्लिखन्त्यामेकस्या चरमबुद्धावुपसंसृष्टत्वेन प्रतीयमाना या बुद्धयः तासां या मात्राः पदार्थरूपा विषयाः तद्रूपेण निर्भासमानेषु सर्वेषु पदार्थेषु स्वरूपभेदे सत्यपि एकबुद्धिगोचरीकृतस्याखण्डस्य वाक्यार्थस्य विभागः कुतो हेतोर्भविष्यति ? तस्मात् पदार्थभेदेनाभीष्टपौर्वापर्यमपि वाक्यार्थस्वरूपं सर्वमपि स्वरूपादप्रच्युतं विभागातीततत्त्वमेव । विभागे तु वाक्यार्थस्वरूपमेव प्रच्युतं भवेदित्येतत्कारिकापूर्वार्धाशयः ।

विभागैः प्रक्रियाभेदमित्युत्तरार्धस्य त्वयं भावः—अखण्डे स्फोटरूपे वाक्येऽपोद्धार-कल्पनया पदभेदग्रहणम्, अखण्डे वाक्यार्थे च प्रतिभारूपे तथैव पदार्थभेदग्रहणं शब्दात्म-नोऽभिन्नस्य वाक्यस्यार्थात्मनश्चाभिन्नस्य प्रतिपत्तिद्वारम् ।

तथा हि—हरिद्रुर्मितद्रुर्दुर्दशो दुस्तर इत्यत्र मितद्रुरवगृह्यो हरिद्रुरनवगृह्यः[१]। तत्र विभागे प्रक्रिया भिद्यते। हरिद्रुर्हरितरवो हरिद्रव इति। तथा दुस्तर इत्यपि तरतेस्तृणातेर्वा। अतश्च विभागे भिद्यमानायां प्रक्रियायामनवग्रहः। तथा—इन्द्राणी वरुणानी पूतक्रतायी। इन्द्रादीनामानुक्, पूतक्रतोरै चेति सामान्यविशेषवता लक्षणेन भेदेनान्वाख्याने शास्त्रप्रक्रियाभेदेनाविद्वांसः प्रतिपद्यन्ते ॥१३॥

तस्य पदानुरोधेन पदार्थस्यापि प्रकृतिप्रत्ययानुरोधेन भागकल्पना। मूढस्तु विभागेन प्रक्रियाभेदं प्रक्रियाभेदे चार्थभेदमसत्यमपि प्रतिपद्यत इति किं कुर्मः।

---

तथाहि—वस्तुतोऽविभक्तस्य वाक्यस्य प्रतिपत्तिर्वाक्यात् पदविभागेन कल्पितेन पदप्रतिपत्तिपूर्विका सामान्यविशेषावग्रहणोपाया लघुप्रकारा। तथाहि पूर्वं गामिति पदस्यानेकवाक्यसाधारण्यात् सामान्यरूपस्यावग्रहणम्, ततो 'गामभ्याज' इति खण्डवाक्यरूपस्य विशेषस्यावग्रहणम्। ते चोपायौ गामभ्याज दण्डेनेति वाक्यप्रतिपत्ताविति।

तद्यथा—पदाद् विभागेन प्रकृतिप्रत्ययप्रतिपत्तिपूर्विका पदप्रतिपत्तिर्लघुप्रकारा। नानापदसंसृष्टरूपस्य वाक्यस्यैकस्य पदविभागं विना प्रतिपत्तिस्तु प्रतिपदं पाठवद् गुरुप्रकारा। अनादृतश्च प्रतिपदपाठः पस्पशाह्निके भाष्ये "अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः" इति वदता भाष्यकृता। कुशलस्तु प्रतिपत्ता वाक्ये वस्तुभूतस्यानतिक्रमेण कल्पितं सर्वं पदभेदं पश्यति। शास्त्रे प्रक्रियाभेदास्तु पदभेदनिबन्धम्।

तथा हि—हरिद्रुर्मितद्रुर्दुर्दशो दुस्तर इति। अत्र मितद्रुः पदभेदेनावगृह्यते मितं द्रवतीति। हरिद्रुस्तु नावगृह्यते, पदभेदे संशयात्। तथा हि हरिद्रुशब्दो हरितशब्दे तान्ते उपपदे रुधातोः क्विपि, हरिशब्दे उपपदे द्रवतेर्वा निष्पन्न इत्यनवगृह्यः। तत्र पदविभागे प्रक्रिया भिद्यते, हरिद्रुर्हरितरवार्थो हरिद्रवार्थो वेति। तथा दुर्दश इति दुष्टा दशा यस्येत्यवगृह्यते। तथा दुस्तर इति तरतेस्तृणातेर्वेति नावगृह्यते। अतश्च वाक्यात् पदविभागे भिद्यमानायां प्रक्रियायामनवग्रहः। तथा—इन्द्राणी वरुणानी भवानी पूतक्रतायी। अत्रेन्द्रादीनामानुक् आगमो ङीष् प्रत्ययश्च, अन्त्ये पूतक्रतोरै चेत्यन्त्यस्यैकारादेशो ङीष् प्रत्ययश्च। तदेवम् इन्द्रवरुणेत्यादिना पूतक्रतोरैचे (पा० ४।१।३६) त्यनेन च सामान्यविशेषवता शास्त्रेण प्रकृतिप्रत्ययभेदेन इन्द्राण्यादीनामन्वाख्याने क्रियमाणे शास्त्रप्रक्रियाभेदेन प्रकृतिप्रत्ययभेदमविद्वांसः प्रतिपद्यन्ते।

वस्तुतस्तु इन्द्राण्यादिपदमखण्डमेव, प्रकृतिप्रत्ययभेदेन तदन्वाख्यानं तु लघुस्तत्प्रतिपत्त्युपायः। इन्द्रवरुणेत्यादिसूत्रे पूतक्रतोरै चेत्यत्रापि प्रकृतिः सामान्यम्, आगमः प्रत्ययश्च विशेष इति ज्ञेयम्। तदेवं पदे प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च वाक्ये पदविभागस्तत्तदर्थ-

---

१. उक्तं च कैयटेन—'तदुक्तं हरिद्रुरनवगृह्यत इति। हरिद्रुरित्यत्र किं हरिशब्द इकारान्तः, अथ हरित्शब्दस्तकारान्त इति सन्देहात्" ( प्रदीप ३।१।१०६ )।

कथं पुनः श्रूयमाणरूपा एव देवदत्तादयः प्रतीयमानाभिधेया अनर्थकाः स्युरित्येतद् विचारयिष्यामः । अपि तु—

**ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।**
**देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥१४॥**

यथा हि विच्छेदेनोच्चार्यमाणे ब्राह्मणकम्बल इति ब्राह्मणशब्द उपलभ्यमानस्वरूपोऽपि विच्छेदग्राहिभिः समाप्तिमनपेक्षमाणैः प्रतिपत्तृभिः, प्रतीयमानार्थोऽप्यनर्थक एवेति प्रसिद्धः। एवं सत्यपि रूपविच्छेदग्रहणे सम्प्रत्यये चानर्थका एव वाक्यरूपापन्ना देवदत्तादिसरूपा अत्यन्तमसन्तः परिकल्पितात्मानो विभागाभिमताः ॥१४॥

युक्तं चैतत् यद्वाक्ये पदार्थभेदो नास्तीति दृष्टान्तप्रदर्शनपूर्वकमाह—ब्राह्मणार्थ इति। यथा ब्राह्मणकम्बलशब्दे ब्राह्मणशब्दस्य न कश्चिदर्थो विद्यते, तथैव देवदत्त गामभ्याजेत्यादौ वाक्ये देवदत्तादीनां पृथगर्थो नास्तीत्यनर्थकान्येव पदानि। अतश्च स्थितमेतद् यदखण्डं निराकाङ्क्षमेकं पदव्यतिरिक्तं वाक्यं पदार्थव्यतिरिक्तो वाक्यार्थश्च तथैवेति ॥१४॥

---

विभागश्च पदपदार्थप्रतिपत्त्युपायो वाक्यवाक्यार्थप्रतिपत्त्युपायश्च लघुप्रक्रमो न तु वास्तव इति सिद्धम् ॥१३॥

कथं पुनर्देवदत्त गामभ्याज दण्डेनेति वाक्ये श्रूयमाणरूपाः प्रतीयमानाभिधेया एव च देवदत्तादयोऽनर्थका अवास्तवाश्च स्युरित्याशङ्कायाम्, युक्तमेतद् यद् वाक्ये पदपदार्थभेदो नास्तीति दृष्टान्तप्रदर्शनपूर्वकमाह—**ब्राह्मणार्थ इति**।

अयमर्थः—यथा ब्राह्मणकम्बलशब्दे ब्राह्मणशब्दस्य न कश्चिदर्थो विद्यते, ब्राह्मणकम्बल इत्यस्य विच्छिद्योच्चारणे ब्राह्मणशब्दे आनर्थक्यस्य स्फुटमुपलभ्यमानत्वात्, ब्राह्मणपदतदर्थयोः स्वान्वययोग्येतरपदतदर्थयोरसमन्वितत्वात्; तथैव 'देवदत्त गामभ्याज दण्डेन' इत्यादौ वाक्ये देवदत्तादीनां पृथगर्थो नास्तीत्यनर्थकान्येव पदानि । अतो व्यवस्थितमेतद् यदखण्डं निराकाङ्क्षमेकं पदव्यतिरिक्तं वाक्यं पदार्थव्यतिरिक्तश्च वाक्यार्थ इति ।

अयं भावः—यथा कालव्यवधानेन पदान्तरवाक्यान्तरव्यवधानेन चोच्चार्यमाणे ब्राह्मणकम्बल इति समस्ते पदे ब्राह्मणशब्द उपलभ्यमानस्वरूपोऽपि विच्छेदग्राहिभिरत एव पदसमाप्तिमनवेक्षमाणैः प्रतिपत्तृभिः प्रतीयमानस्वार्थोऽप्यनर्थक एवेति प्रसिद्धः। एवं सत्यपि ब्राह्मणशब्दस्वरूपस्य कालादिकृतविच्छेदाग्रहणेऽर्थसंप्रत्यये चानर्थका एव स्वतन्त्रब्राह्मणादिपदसरूपा वाक्यरूपापन्नाः वाक्यघटकाः अत्यन्तमसन्तः परिकल्पितात्मानो वाक्याद् विभज्यमानत्वेनाभिमता ब्राह्मणादिशब्दा इति ॥१४॥

देवदत्तादीनां च भागाभिमतानामर्थयोगाभ्युपगमे सामान्येऽवस्थितानां पदानां विशेषेऽवस्थानमित्येतस्मिन् सत्येकान्तेन परिगृह्यमाणे—

**सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते ।**
**उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥१५॥**

इह सामान्यवृत्तिरुच्चरितो देवदत्तशब्दः सामान्यार्थसम्बद्ध एव तिरोभवति । तत्र येन शब्देनाविर्भावकाल एव विशिष्टोऽर्थो न प्रतिलब्धः स शब्दः विशेषेऽवस्थातु न पुनरुत्सहते । न च सामान्यविशेषयोर्विवक्षा युगपत् संभवति । विशेषविवक्षायां हि सर्वस्यानियमेन सामान्यादवच्छेदो विज्ञायते । तत्रोपात्तस्य नित्ये शब्दार्थसम्बन्धे कुतस्त्यागः, युक्तिनिरूपणेषु चार्थात्मस्वभिधानक्रियायोगाभावे विनिवृत्तोऽनवधार्यमाणात्मा शब्दः शब्दोपक्रमस्यार्थस्याभावादविषयः क्वावस्थाप्यताम् ।

---

यत्पुनर्भावनारूपा क्रियैव वाक्यार्थः, अन्विते एव च स्वार्थे सामान्यरूपे पदानां शक्तिः, अन्वयविशेषस्तु वाक्यलक्ष्यः आकाङ्क्षादिवशात् परस्परसमन्वितः पदसंघात एव वाक्यमिति मीमांसकैरुच्यते, तन्न युक्तम्, देवदत्तादीनां वाक्यभागत्वेनाभिमतानामर्थयोगाभ्युपगमे सामान्येऽवस्थितानां पदानां विशेषेऽवस्थानमित्येतस्यार्थस्यैकान्तेन परिग्रहासंभवादित्यभिप्रेत्याह—**सामान्यार्थस्तिरोभूत** इति ।

अयमर्थः—'इह देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यत्र देवदत्तपदं सकलपदार्थान्वयसाधारणार्थवाचित्वेन पदान्तरसंनिधानात् प्राक् सामान्यार्थकमेव शब्दानां क्रमवर्तित्वेन प्रागेव पदान्तरसंनिधनादाविर्भूय तिरोभूतमिति पदान्तरसंनिधानकालेऽविद्यमानतया पदान्तरार्थान्वितस्वार्थरूपे विशेषे नावतिष्ठते, स्मर्यमाणतया कथञ्चित् पदान्तरसंनिधानोपपादनेऽपि प्राक् सामान्यार्थबोधनाय उपात्तस्य वाच्यवाचकभावरूपस्य संबन्धस्य कुतस्त्यागः, मीमांसकैः शब्दार्थयोः संबन्धस्य नित्यत्वाभ्युपगमेन त्यागासम्भवात्, शब्दार्थयोः सम्बन्धस्यानित्यत्वाभ्युपगमेऽपि पदान्तरसन्निधानकाले सामान्यार्थबोधनान्निवृत्तो देवदत्तादिशब्दो विशेषार्थे वाच्यवाचकभावरूपसंबन्धविरहात् क्व कस्मिन्नर्थेऽवतिष्ठतामिति योजना ।

अयं भावः—'इह देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यत्र देवदत्तादीनि पदान्येव वाक्यम् । तत्र देवदत्तपदं तावद् यदि प्रथमं सामान्यार्थमात्रे वर्तते तदा पदान्तरसंनिधानकाले शब्दानां क्रमवर्तित्वेन तस्य तिरोधानादसत्त्वमेवेति तदा कुतः पदान्तरश्रवणकाले ततो विशेषार्थप्रतीतिः । असत्त्वादेव च न पदान्तरसंनिधानकाले तस्य विशेषेऽवस्थानम् । पदान्तरसंनिधानकाले स्मर्यमाणतया देवदत्तादिपदस्य विद्यमानत्वमभ्युपगम्यापि न तस्य विशेषेऽवस्थानं युज्यते, यत उपात्तस्य कुतस्त्याग इति ।

यत् पुनर्मीमांसकैरुच्यते यथा पदसंघात एवाकाङ्क्षायोग्यतासन्निधानवशात् परस्परसमन्वितो वाक्यं संसर्गश्च वाक्यार्थ इति तद् दूषयितुमाह—सामान्यार्थ इति। इह देवदत्त गामभ्याज शुक्लां दण्डेनेति देवदत्तादीन्येव पदानि वाक्यम्। तत्र देवदत्तपदं तावद् यदि सामान्यमात्रे प्रथमं वर्तते तत्तस्य गवादिपदकाले वाचः क्रमवर्तित्वात्तिरोधानादसत्त्वमेवेति कुतः पदान्तरश्रवणकाले तदर्थप्रतीतिः। असत्त्वादेव च न पदान्तरसंनिधाने तस्य विशेषेऽवस्थानम्।

अभ्युपगम्यापि स्मर्यमाणतया पदान्तरसंनिधाने विद्यमानत्वं पदस्य न विशेषेऽवस्थानं युज्यत इत्याह—उपात्तस्येति। सामान्य-सामान्यार्थस्तिरोभूतो लक्षणस्य सकलपदार्थसाधारणस्यार्थस्य पूर्वमुपात्तस्य वाच्यत्वेन परिगृहीतस्येदानीं पदान्तरसंनिधाने त्यागः कुतो युज्यते शब्दार्थसम्बन्धस्यानित्यताप्राप्तेः।

न च तथा मीमांसकस्याभ्युपगम इति। तदप्यभ्युपगम्योच्यते—निवृत्त इति। स्वार्थान्निवृत्तोऽसौ पदान्तरसन्निधाने शब्दः क्वेदानीमवतिष्ठताम्। शब्दान्तरबोध्येऽर्थे तस्य वाचकभावविरहात् स्थितिः कथं युज्यते ॥१५॥

---

अयमर्थः—पूर्वमुपात्तस्य, वाच्यत्वेन परिगृहीतस्य सकलपदार्थसाधारणस्य सामान्य-लक्षणस्यार्थस्येदानीं पदान्तरसंनिधाने त्यागः कुतो युज्यते, शब्दार्थसम्बन्धस्यानित्यताप्राप्तेः, मीमांसकस्य च शब्दार्थसम्बन्धनित्यत्वाभ्युपगमात्। तदनित्यत्वाभ्युपगमेऽप्याह—निवृत्तः क्वावतिष्ठतामिति। पदान्तरसंनिधाने सामान्यरूपात् स्वार्थान्निवृत्तोऽसौ देवदत्तादिशब्दः क्वावतिष्ठताम्; पदान्तरबोध्येऽर्थे तस्य वाचकत्वविरहात् स्थितिः कथं युज्यत इत्यर्थ इति।

अयमपरोऽप्यभिसन्धिः कारिकार्थाविरुद्धः—इह सामान्यार्थवृत्तिमान् देवदत्तशब्द उच्चारितो वर्णानां पदानाञ्च क्रमिकत्वेनायौगपद्यात् पदान्तरसंनिधानात् प्रागेव सामान्यार्थ-सम्बद्ध एव च तिरोभवति। तत्रैवं सति येन शब्देन स्वाविर्भावकाल एवार्थविशेषो वृत्त्यभावान्न प्रतिलब्धः स सामान्यार्थः शब्दस्तिरोभूतो विशेषेऽवस्थातुं न पुनरुत्सहते, तस्य सामान्यार्थस्य शब्दस्य तदानीमभावात्, स्मर्यमाणत्वेन यथाकथञ्चित् सद्भावकल्पनेऽप्यर्थ-विशेषे वृत्त्यभावात्, शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति, सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति नियमाच्च। एकस्य शब्दस्य युगपत् सामान्यविशेषयोरर्थयोर्विवक्षा तु न सम्भवति। सामान्यं ह्यनियतं सर्वविशेषसाधारणत्वात्, विशेषश्च नियतः प्रत्येकं व्यावृत्त-रूपत्वात्, अत एव विशेषविवक्षायां सर्वस्य विशेषस्यानियतात् सामान्यादवच्छेदो व्यावृत्तिः विज्ञायते।

तदेवं न सामान्यविशेषयोर्युगपत् विवक्षा संभवति। तथा च तदसम्भवे नित्ये शब्दार्थसम्बन्धेऽभ्युपगम्यमाने सामान्यार्थबोधार्थमुपात्तस्य देवदत्तादिशब्दस्य विशेषार्थ-

एव तर्ह्यशब्दो वाक्यार्थः। शब्देष्वात्मरूपमात्राप्रतिपत्तिहेतुषु तिरोभूतेष्वपदेश्यसंस्कारविशेषायां बुद्धावुपजातायां पदेषु पदार्थमात्रं प्रत्याय्य निवृत्तेष्वशब्दवाच्योऽसत्त्वभूतः सम्बन्धः संज्ञार्थानां सामान्यरूपाणां भेदहेतुरुपप्लवमानः शोकहर्षादिवदुत्तरेषु बुद्ध्यन्तरेष्वनुसन्धीयते। एतस्मिन् दर्शन उच्यते—

अशब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्।
एवं च सति सम्बन्धः शब्दस्यार्थेन हीयते ॥१६॥

कथं वर्णेष्वप्यनर्थकेषु स्वरूपमात्रं बुद्धौ संनिवेश्य निवृत्तेष्वभ्यासान्नियतनिमित्तमानख्येयोपायमर्थरूपं बुद्ध्यन्तरेष्वनुसन्धीयते। तथा च शब्दार्थयोः

अथोच्यते—अर्थप्रतिपत्तिर्दृष्टा देवदत्तेत्यादिकात् समुदायात् सा कथमपह्नूयते। तत्राह—अशब्द इति।

---

बोधकत्वे सति सामान्यार्थबोधकत्वस्य कुतस्त्यागः, तत् त्यागे को हेतुः। पदान्तरयोगेण च निरूपणीयेषु विशेषार्थेषु देवदत्तादिपदस्य सामान्यार्थे वृत्तस्य वृत्त्यभावेन विशेषार्थाभिधानरूपक्रियायोगाभावे विशेषार्थबोधनाद् विनिवृत्तः, देवदत्तादिशब्देनोपक्रमे बोधितस्य च सामान्यार्थस्य तदानीं पदान्तरसनिधानकाले बुद्ध्यभावादविषयः तदानीमर्थद्वयशून्यः, अत एव किमयं देवदत्तशब्दः सामान्यार्थक आहोस्विद् विशेषार्थक इत्येवमनवधार्यमाणस्वरूपो देवदत्तादिशब्दः कस्मिन्नर्थेऽवस्थाप्यतामिति ॥ **१५ ॥**

एवमन्विताभिधानवादे प्रत्याख्याते यद्यभिहितान्वयवादमभ्युपगम्य प्रब्रूयात्, एवं तर्हि वाक्यार्थः संसर्गो न वृत्त्या शब्दगम्यः, किन्तु समभिव्याहारविशेषरूपाकाङ्क्षाभास्यः।

तथा हि—ध्वनिभिरभिव्यक्तः शब्दः 'प्रत्यक्षं प्रति विषयः कारणम्' इति न्यायेन स्वस्वरूपविषयकश्रावणप्रत्यक्षं प्रति कारणम्। तथा चात्मस्वरूपात्मकमात्रा (विषय) प्रतिपत्तिहेतुषु शब्देष्वभिव्यञ्जकध्वनीनां क्षणिकत्वेन तद्विनाशेन तिरोभूतेषु प्रतिपत्तृबुद्धौ चातीन्द्रियत्वेनानपदेश्या अव्यवहार्या ये पदविषयकाः श्रावणप्रत्यक्षजनिताः संस्कारविशेषास्तद्वत्यामुपजातायां सत्यां पदेषु संसर्गरहितं पदार्थमात्रं प्रत्याय्य प्रतिनिवृत्तेष्वशब्दवाच्यो लिङ्गसंख्याद्यनन्वयित्वेनासत्त्वभूतः पदार्थानां संबन्धः संज्ञार्थाना (विशेष्यभूताना नामार्थानां धात्वर्थाना वा) सामान्यरूपाणां भेदहेतुः विशेषेऽवस्थापकः पदसमभिव्याहारविशेषरूपाकाङ्क्षाबुद्ध्यनन्तरं बुद्धावुपप्लवमानः आकाङ्क्षावशादाविर्भवन्, यथा 'चैत्र! पुत्रस्ते जातः', 'कन्या ते गर्भिणी' इत्यादौ वाक्यार्थबोधानन्तरं हर्षशोकादयः प्रतिपत्तृबुद्धावनुसंधीयन्ते, तथा पदार्थबुद्ध्यनन्तरं प्रागुक्तस्वरूपः संबन्ध उत्तरेषु बुद्ध्यन्तरेष्वनुसंधीयत इत्येतस्मिन् दर्शन उच्यते—**अशब्दो यदीति**।

यद्वा—ननु देवदत्तेत्यादिकात् पदसमुदायादर्थप्रतिपत्तिर्दृष्टा सा कथमपह्नूयते पूर्वकारिकयेति प्राप्ते आह—**अशब्दो यदीति**।

**सम्बन्धो हीयते। तथैव तु द्रव्यगुणकर्माणि विनिविष्टनिमित्तरूपाणि प्रबोजकै-र्निमित्तैः सम्बद्धान्याख्यायन्ते। ज्ञानं च विनिविष्टज्ञेयरूपम्। अपरेण सम्बन्ध-कल्पेन ज्ञेयैरर्थैः सम्बन्ध इत्याख्यायते। ज्ञानाच्चोपगृहीतबुद्धिरूपो बुद्धचा सम्बन्ध उच्यते। तथा शब्दोऽप्यपरेण योग्यताख्येन सम्बन्धकल्पेनोपगृहीतार्थरूपो विनि-वेशिताभिधयतत्त्व. शब्दार्थयोर्भेदे तेन तेनार्थेन सम्बन्ध इत्युच्यते। अर्थभावपरि-णतिपक्षे तु सर्वतो नेदीयान् सम्बन्ध इति ॥ १६ ॥**

उक्तनीत्या शब्दा न युज्यन्ते वाचकाः। तदभावाच्चाशब्दो वाक्यार्थो यद्यभ्यु-पगम्यते तदयमपरस्ते दोपः। पदार्थोऽपि पदप्रतिपाद्यो न कश्चिद् अनेकवर्ण-वर्त्तित्वाद् वाच उच्चरितप्रध्वंसित्वाच्च वर्णानामिति पदमप्येकं नास्ति। तदभावात् कः पदार्थः स्यात्। इत्थमशब्दोऽवाचको वाक्यार्थ इति वाच्यवाचकभावलक्षणः सम्बन्धः शब्दार्थयोस्त्यक्तः स्यान्मीमांसकेनेत्याह—एवं चेति ॥१६॥

---

अयमर्थः—पूर्वकारिकोक्तरीत्या शब्दा न युज्यन्ते वाक्यार्थस्य वाचकाः तदभावाच्च यद्यशब्दो वाचकशब्दरहितो वाक्यार्थोऽभ्युपगम्यते, तदाऽयमपरस्ते दोपः—पदार्थोऽपि तथाऽशब्दो भवेत्, पदार्थोऽपि पदप्रतिपाद्यो न कश्चित् स्यात्, अनेकवर्णघटितत्वात् पदस्य, उच्चरितप्रध्वंसित्वाच्च वर्णानामिति पदमप्येकं नास्ति, तदभावात् कः पदार्थः स्यात्? एवम-शब्दो वाचके शब्दरहितो वाक्यार्थ इति वाच्यवाचकभावलक्षणः शब्दार्थयोः संबन्धस्त्यक्तः स्यान्मीमांसकेनाभिहितान्वयवादाभ्युपगमे। तदेत्तदुक्तम्—एवञ्च सति संबन्धः शब्दस्यार्थेन हीयत इत्युत्तरार्धेनेति।

अयं भावः—पदस्य सखण्डत्वपक्षेऽनेकवर्णघटितत्वात् पदानाम् उच्चरितप्रध्वंसि-त्वाच्च वर्णानां वर्णा अप्यनर्थकाः पदमप्यनर्थकम् एकस्य पदस्वरूपस्याभावेनार्थेन सह तस्य संबन्धासंभवात्। तथा चास्मिन् पक्षे वर्णेष्वप्यनर्थकेषु स्वविषयकसंस्काररूपेण स्वरूपमात्रं प्रतिपत्तृबुद्धौ संनिवेश्य निवृत्तेषु नियत योग्यताख्य शब्दस्यार्थे संबन्धरूपं निमित्तमाश्रित्य ज्ञायमानम् अनाख्येयोपायान्तरमर्थरूपं पूर्वपूर्वबुद्धयगोचरमपि पुनः पुनः पाठादुत्तरबुद्धिषु कथमनुसंधीयते, तथा चात्र पक्षे शब्दार्थयोः सबन्धो हीयते। शब्दवदेव द्रव्यगुणकर्माण्यु-पादानोपादेयभावरूपं यदुपादेये उपादानस्य विनिवेशप्रयोजकं रूपं तद्रूपनिमित्तवशाद् उपादेये विनिविष्टोपादानरूपाण्युपादानाकारतामापन्नानि परस्पर सबद्धान्याख्यायन्ते।

ज्ञानमपि द्रव्यगुणादिसंबन्धप्रकारादन्येन संबन्धप्रकारेणाध्यासिकतादात्म्यरूपेण स्वस्मिन् विनिविष्टज्ञेयरूपं ज्ञेयाकारतामापन्नं ज्ञेयैरर्थैः सह सबन्ध इत्याख्यायते ज्ञानाच्चोप-जातसंस्कारवशादुपगृहीतबुद्धिरूपो बुद्धया संबन्ध इत्युच्यते। तथा शब्दोऽपि ज्ञानज्ञेययो-राध्यासिकतादात्म्यादपरेण योग्यताख्येन सम्बन्धप्रकारेण स्वस्मिन्नुपगृहीतार्थरूपो विनि-वेशितस्वाभिधेयतत्त्वः शब्दार्थयोर्भेदे सत्यपि तेन तेन स्वाभिधेयेन सम्बन्ध इत्युच्यन्ते। शब्दस्यैवार्थरूपेण परिणाम इति पक्षे तु नेदीयान् सम्बन्धः शब्दार्थयोः, परिणामपक्षे वस्तु-भूततादात्म्यसम्बन्धोपपत्तेरिति ॥ १६ ॥

**विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः ।**
**शब्दान्तराभिसम्बन्धाद् व्यज्यन्ते प्रतिपत्तृषु ॥१७॥**

केषाञ्चित्तु प्रक्रियान्तरवादिनामक्षादिवदश्नोत्यादिक्रियायोगविशेषे विशेषान्तरयुक्ता देवदत्तादयो वाक्यविषया नित्यं परितः परिच्छिन्नार्थवृत्तयो विशेषशब्दवाचकस्य विशेषस्य प्रतिपत्तृभिः सामान्यापहृतबुद्धिभिः परोक्षविशेषैरपरिच्छेदात् सामान्यशब्दप्रतिरूपकाः शब्दान्तराभिसम्बन्धादागन्तुना केनचिदप्यर्थेनायुज्यमाना नित्यसिद्धनियतत्वान्नियमं विशेषान्तराध्यारोपरूपं

एवं तावदभिहितान्वयवादी निरस्तः। इदानीमन्विताभिधानसमाश्रयणेन पदमाद्यं पृथक् सर्वपदं साकाङ्क्षमित्युद्दिष्टे वाक्यलक्षणे प्रदर्शयितुकाम आह—विशेषशब्दा इति। इह देवदत्त गामभ्याजेत्यत्र देवदत्तपदं गां बधानेत्यस्माद् विशिष्टमेव वक्त्रा समुदीरितं भ्रमात्तु सकलसाधारणं प्रतिभाति। उत्तरकालं गवादिपदसम्बन्धाद् विशिष्टा प्रतिपत्तिरभिव्यज्यत इति तदेव वाक्यम्। सकलविशेषणखचितश्च प्रथमतरमेवोपक्रान्तः संसृष्ट एवार्थो वाक्यार्थ इति। यथा वक्ष्यति—

पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः।
संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु॥ इति ॥१७॥ (वा० प० २।४११)

---

एवं तावदभिहितान्वयवादी निरस्तः षोडशकारिकया, इदानीमन्विताभिधानसमाश्रयणेन "पदमाद्यं पृथक् सर्वं पदं साकाङ्क्षमित्यपि" इति कारिकांशेनोद्दिष्टं वाक्यलक्षणद्वयं व्याचिख्यासुराह—विशेषशब्दा इति।

अयमर्थः—इह 'देवदत्त गामभ्याज दण्डेन' इत्यत्र देवदत्तपदं गामभ्याज दण्डेनेत्यनेनान्वितं विशिष्टमेव प्रयोक्त्रा समुच्चारितम्, अन्यथा तादृशविशेषार्थविवक्षाया अभावे सामान्यार्थस्य सकलवाक्यसाधारणस्य देवदत्तपदस्य प्रयोगे देवदत्तपदानन्तरं 'गामभ्याज दण्डेन' इति न प्रयुञ्जीत, वाक्यार्थविशेषान्वयित्वेन सामान्यार्थकत्वात्मकस्वरूपहानापत्तेरिति रीत्या केषाञ्चिन्मते प्रथमतरमुच्चारिता विशेषशब्दा विशेषार्थवाचका अपि देवदत्तादिशब्दा आनुपूर्वीसाम्यप्रयुक्तभ्रमात् सामान्यप्रतिरूपकाः सामान्यार्थकदेवदत्तादिशब्दसदृशाः सकलवाक्यसाधारणाः प्रतिभान्ति। उत्तरकालं गवादिपदान्तरसम्बन्धे तु पूर्वं विद्यमानैव देवदत्तादिपदानां विशिष्टार्थप्रतिपादकता तदानीमभिव्यज्यत इति रीत्याद्यं देवदत्तादिपदमेव वाक्यम्।

तदेतदुक्तं भवति—सकलविशेषणखचितः पदार्थान्तरसंसृष्ट एवार्थः प्रथमतरमेवोपक्रान्त इति स एव देवदत्तादिपदार्थो वाक्यार्थ इत्याद्यं पदं वाक्यमिति वाक्यलक्षणपक्षे

**चातिक्रान्ताः केवलमनुवादमात्रेण शब्दान्तराणां यथायथमर्थाभिधानसिद्धये व्यज्यन्ते प्रतिपत्तृषु प्रयोक्तृभिर्निर्धारितविशेषा इत्यभिप्रायः ॥१७॥**

**निर्भागैकशब्दाभिधेयं त्वेकं वाक्यार्थं प्रतिपन्नाः स्वमतमुपपादयन्तो निदर्शयन्ति—**

**तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते ।**
**व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु ॥१८॥**

एतदेव स्फुटीकर्तुमाह—**एषां** त्विति । उपक्रम एव विवक्षितार्थप्रत्यायनाय विशिष्टपदोदीरणमारभत इत्याद्य एव पदे प्रत्येकं वा सकलस्य वाक्यार्थस्य

---

योजनीयम् । अनयैव रीत्या विनिगमनाविरहात् पृथक् सर्वं पदं साकाङ्क्षमिति वाक्यलक्षणपक्षेऽपि वाक्यघटकस्य सर्वस्य पदस्य साकाङ्क्षस्य वाक्यत्वं तदर्थस्य च वाक्यार्थत्वमवसेयम् । यथा वक्ष्यति—

पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु ॥ ( वा० प० २।४११ ) इति ।

अयमर्थः—यथाऽभिहितान्वयवादे पूर्वैरर्थैरनुगतः परः परोऽर्थात्मा प्रतीयत इति संसर्ग एव वाक्यार्थस्तथाऽन्विताभिधानवादे आद्येष्वर्थवस्तुषु प्रतीयमानेषु सत्सूत्तरोत्तरपदार्थानुगतः प्रथमतरमेव प्रक्रान्तोऽव्यक्तमवबुद्धो देवदत्तादिपदार्थ उत्तरोत्तरपदार्थसंसृष्ट एव वाक्यार्थ इति । इदञ्च पद्यम् आद्यं पदं वाक्यमिति, पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति च वाक्यद्वयसाधारणमविशेषादित्यवधेयम् ।

अयं भावः—केषाञ्चित्तु प्रक्रियान्तरवादिनामन्विताभिधानवादिनां मते रूपस्पर्शव्याप्त्यादिरूपाश्नोत्यादिपदप्रतिपाद्यक्रियायोगविशेषप्रवृत्तिनिमित्तकमक्षादिपदं यथा, तथा देवकर्तृकदानकर्मत्वरूपार्थविशेषान्तरयुक्ता अपि देवदत्तादयः शब्दा नित्यं वाक्यविषया इत्यतोऽपि सर्वतः परिच्छिन्नार्थवृत्तयः सर्वतो व्यावृत्तेऽर्थे वर्तमानाः गवादिशब्दविशेषवाच्यस्य गवादिरूपार्थविशेषस्य प्रथमतर देवदत्तादिपदोच्चारणकाले देवदत्तादिपदस्य सामान्यार्थवाचकत्वविभ्रमापह्नुतबुद्धिभिरत एव तदानीं परोक्षगवादिरूपार्थविशेषैः प्रतिपत्तृभिरपरिच्छेदात् सामान्यशब्दसदृशा इति कृत्वा गवादिशब्दान्तराभिसम्बन्धात् प्रागागन्तुना केनचिदप्यर्थविशेषेण युज्यमानत्वेनाप्रतीयमाना इति गवादिरूपार्थविशेषव्याप्यत्वस्य नित्यसिद्धत्वेऽपि व्याप्यव्यापकभावनियमं गवाद्यर्थविशेषान्तराध्यारोपरूपं चातिक्रान्ता इति कृत्वा प्रयोक्तृभिर्निर्धारितपदार्थान्तरान्वितस्वार्थविशेषाः केवलं शब्दान्तराणामनुवादमात्रेण प्रतिपत्तृषु यथायथमर्थविशेषाभिधानसिद्धये पदान्तरप्रयोगेण व्यज्यन्त इति ॥१७॥

एवं ये आद्यं पदं वाक्यमिति, पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति वा पक्षेऽन्विताभिधानवादमाश्रयन्तो निर्भागमेकं यत् पदं तदभिधेयमेकं वाक्यार्थं समनन्तरसप्तदशकारिकोक्तं प्रतिपन्नाः, ते तत् स्वमतं स्फुटीकरिष्यन्तस्तत्र च समायातं पदान्तरोच्चारणवैयर्थ्यरूपं दूषण-

**तेषामेवमुपगृहीतसर्वविशेष एकस्मिन्नर्थे बहुशब्दानभ्युपगच्छतामविकल्पः कृत्स्नो वाक्यार्थः प्रतिपदं प्रतिवर्णं वा समाप्यते। तदेतत् पक्षान्तरैः सह दर्शनं समाप्तिरवगन्तव्या।** **यद्येकस्मादेव** पदात् सकलवाक्यार्थप्रतीतिस्तर्हीतरपदवैयर्थ्य-मित्याशङ्कयाह—**व्यक्तेति। प्रतिपत्तृषु** वाक्यार्थस्य सिद्धिरवगतिर्व्य**क्तो**पव्यञ्जना। व्यक्ता उदीरिता उपव्यञ्जना अभिव्यञ्जकाः पदविशेषा यस्याः सा तथोक्ता। अभिव्यक्ताभिव्यञ्जका वाक्यार्थावगतिरिति पदान्तराणां वाक्ये नास्त्येव वैयर्थ्य-मित्यन्विताभिधानप्रदर्शनम्। दूषणमस्याग्रे तत्र तत्राभिधास्यति। यथा—**नियमार्था श्रुतिर्भवेदित्यादि।**

तथाहि—**यद्येकेन पदेन सकलवाक्यार्थस्याशेषविशेषणखचितस्यावगति-स्तदोत्तरेषां पदानां नियमायानुवादाय वोच्चारणं स्यात्।** न चैतद्युक्तमिति वक्ष्यामः।

---

मुद्धृत्य तदुपपादयन्तस्तन्मतस्वरूपं तत्र प्रसक्तदूषणोद्धारप्रकारञ्च निदर्शयन्ति—**तेषां तु कृत्स्नो वाक्यार्थ इति।**

अयमर्थः—तेषां तु निर्भागैकशब्दाभिधेयमेकं वाक्यार्थमन्विताभिधानवादं चाभ्युप-गच्छतां तेषां तु कृत्स्नः = सकलो वाक्यार्थः, प्रतिभेद प्रतिभाग प्रतिपद प्रतिवर्णं वेति यावत्। समाप्यते। प्रयोक्ता विवक्षितस्यार्थान्तरान्वितस्वार्थस्य प्रत्यायनायोपक्रम एव विशिष्टस्य अर्थविशेषान्वितस्वार्थवाचकत्वेन सामान्यार्थकाद् देवदत्तादिपदाद् विलक्षणस्य देवदत्तादिपदस्योदीरणमारभत इति हेतोराद्य एव पदे, अविशेषेण वा प्रत्येकं पदेषु सकलस्य वाक्यार्थस्य समाप्तिर्भवतीत्यर्थः।

नन्वेवं यद्येकस्मादेव पदात् सकलवाक्यार्थप्रतीतिस्तर्हीतरपदानां वैयर्थ्यमित्या-शङ्कयाह—**व्यक्तेति। यतः** प्रतिपत्तृषु = बोद्धृषु, अर्थस्य = वाक्यार्थस्य, सिद्धिः = अवगतिः, व्यक्तोपव्यञ्जना व्यक्ताः = उदीरिताः, उपव्यञ्जनाः = अभिव्यञ्जकाः पदविशेषा यस्याः सा तथोक्ता। अभिव्यक्ताभिव्यञ्जका एव हि वाक्यार्थावगतिरिति वाक्ये पदान्तराणां नास्त्येव वैयर्थ्यमिति रीत्याऽनेन पद्येनान्विताभिधानवादप्रदर्शनम्। अस्य चान्विताभिधानवाद-माश्रित्य वाक्यविकल्पेन सम्भवतः प्रकृतकारिकाद्वयोक्तस्य मतद्वयस्य दूषणमग्रे तत्र तत्राभिधास्यति। तद्यथा—

> अथाधारः स **एवास्य** नियमार्था श्रुतिर्भवेत्।
> नियमद्योतनार्था वा अनुवादोऽथवा भवेत्॥
> कश्चिदेवार्थवांस्तत्र शब्दः शेषास्त्वनर्थकाः। इति।

(वा० प० २।२४४-२४५)

सर्वथैवमानर्थक्यमेव पदानामर्थानां चास्मिन् मते स्यादित्यध्यर्थकारिकाभिप्रायः।

तथाहि—**यद्येकेन** पदेन सकलवाक्यार्थस्याशेषविशेषणखचितस्यावगतिस्तदोत्तरेषां पदानामनभीष्टपदार्थान्तरान्वयनियमनायानुवादाय वोच्चारणं स्यात्। न चैतद् युक्तम्, नियमे

**विचारयिष्यते । एवं व्यक्तेषु ह्युपव्यञ्जनेष्वर्थः प्रतिपत्तृषु प्रसिद्धिं लभते । न तु सन्निधानमात्राद् अनभिव्यक्तोपव्यञ्जन इति ॥१८॥**

**एकस्मादेव पदात् समस्तविशेषणखचितस्य वाक्यार्थस्य प्रतीतिरुत्तरेषामानर्थक्यं स्यादेव । न च तस्मादेव वाक्यार्थप्रतीतिर्दृश्यते ।**

**व्यक्तोपव्यञ्जनेत्यसमाधानमेव । यतः किमेकस्माद् वाक्यार्थावसायोऽन्येषामुपव्यञ्जकत्वम् । अथ समस्तेभ्य एव तेभ्यः । सर्वथोत्तराणि पदानि वाक्यार्थप्रतीतय उपादीयन्त एवेत्यन्विताभिधानमसमञ्जसमेव । एकस्य वा परपदोच्चारणकाले तिरोधानादभिहितान्वयस्याप्यसम्भव इत्यर्थभागे दूषणम् । शब्दभागसमाश्रयणेन द्वयोरपि पक्षयोर्दूषणं पदानि वाक्ये तान्येवेत्यादिश्लोकद्वयेनाभिधास्यति ॥१८॥**

---

हि पाक्षिकप्राप्तौ पाक्षिकमप्रामाण्यम्, अनुवादे तु सर्वथैवाप्रामाण्यमिति सर्वथा दोषात् । एकस्मादेव पदात् समस्तविशेषणखचितस्य वाक्यार्थस्य प्रतीतावुत्तरेषां पदानामानर्थक्यं तु स्यादेव नाप्येकस्मादेव पदाद् वाक्यार्थप्रतीतिर्दृश्यते ।

'व्यक्तोपव्यञ्जना' इत्युत्तरार्धेन पदान्तरोच्चारणवैयर्थ्यस्य समाधानं तु न समञ्जसम्, यतो यद्येकस्मादेव पदाद् वाक्यार्थावसायोऽन्येषामुपव्यञ्जकत्वम्, अथवा समस्तेभ्य एव तेभ्यः सः, उभयथाऽप्युत्तराणि पदानि वाक्यार्थप्रतीतय उपादीयन्त एवेत्यन्विताभिधानमसमञ्जसमेव । नापीतरपदानामुपव्यञ्जकत्वम्, नापि च समस्तेभ्यः पदेभ्यो वाक्यार्थावसायः, एकस्य पदस्य परपदोच्चारणकाले तिरोधानात् पदानां समभिव्याहारविशेषरूपाकाङ्क्षानियमस्याभिहितान्वयवादस्यापि समभिव्याहारविशेषासम्भवेऽसंभव इत्यर्थभागसमाश्रयणेनात्र वाक्यस्य सखण्डपक्षे दूषणम् । शब्दभागसमाश्रयणेनाप्यत्र वाक्यस्य सखण्डत्वपक्षे वादद्वये दूषणमग्रे वक्ष्यते । तद्यथा--

पदानि वाक्ये तान्येव वर्णास्ते च पदे यदि ।
वर्णेषु वर्णभागानां भेदः स्यात् परमाणुवत् ॥
भागानामनुपश्लेषान्न वर्णो न पदं भवेत् ।
तेषामव्यपदेश्यत्वात् किमन्यदपदिश्यताम् ॥ इति ।

( वा० प० २।२८-२९ )

अयमर्थः—पदानां वाक्यानाञ्च सखण्डत्वपक्षे यदि यानि पदानि वाक्यात् पृथगुपलब्धानि तान्येव समुदितानि वाक्ये यदि, ये च वर्णाः पदात् पृथगुपलब्धास्त एव समुदिताः पद इति रीत्या वर्णेभ्यो न व्यतिरिक्तो वाक्यपदयोरात्मेति प्रतिज्ञायते, तदा वर्णेष्वपि वर्णभागानां भेदे विभागकल्पना स्यात् । अत्र भेदेन विषयेण विषयिणि कल्पना लक्ष्यते । अत्र वर्णानां वर्णभागानाञ्च यावत्प्रत्यक्षं तावत्परिच्छिन्नमहत्परिमाणवत्त्वेन सावयवत्वं कल्पितं स्यात् त्र्यणुकपर्यन्तम्, द्व्यणुकस्यापि च सावयवत्व महदारम्भकत्वेन कल्पितं स्यात्, यथाऽन्यत्रापि घटादिष्ववयविष्ववयवकल्पना परमाणुपर्यन्तं क्रियते, अत्र परमाणुवदिति

**अव्यक्तः क्रमवाञ्शब्दः उपांश्वयमधीयते ।**
**अक्रमस्तु वितत्येव बुद्धिर्यत्रावतिष्ठते ॥१९॥**

उपाधिमतो ह्येकस्य शब्दस्य विभागा इवावस्थिताः संहितासंहितयोर्द्रुतमध्यमविलम्बितासु वृत्तिषु शनैरुच्चैरुपांशु परमोपांशु संहृतक्रमं चेति । तत्र

सम्प्रति प्रतिभाभेदव्याचिख्यासयाऽखण्डपक्षमेवानुबध्नन्नाह—अव्यक्त इति । इह निरंश एवाभिन्नो व्यक्तिस्फोटो जातिस्फोटो वा बहीरूप आन्तरः शब्दार्थ-

---

परमाणूनामिव कल्पनेत्यर्थे तत्र तस्येवेति षष्ठ्यर्थोपसंग्राहेण वतिः । तथा च निमित्तस्वरूपफलभेदात् क्रमजातानामयुगपदवस्थितानां वर्णभागानां वर्णानां पदानाञ्च परस्परं संबन्धाभावाद् वर्णभागानां समूहरूपो वर्णो न भवेत्, वर्णानां समूहरूपं पदं न भवेत्, पदानां समूहरूपं वाक्यं वा न भवेत् ।

किञ्च, तेषामपकर्षपर्यन्तं गतानां परमाणुरूपाणां वर्णभागानाम् अव्यपदेश्यत्वात् अव्यवहार्यत्वात् किं तेभ्यः समुदितेभ्योऽन्यद् वर्णः पदं वाक्यं वा यद्वर्णत्वेन पदत्वेन वाक्यत्वेन वाऽपदिश्यता व्यवह्रियताम् । तेभ्यः परमाणुकल्पेभ्यो भागेभ्यो वर्णपदवाक्यव्यवहारासंभव इति न वर्णपदवाक्यानां सखण्डत्वमिति । अयं तु प्रकृतकारिकायाः संग्रहेण परमार्थः ।

ये खल्वाद्यं पदं वाक्यमिति, पृथक् सर्वं पदं साकाङ्क्षं वाक्यमिति च वाक्यविकल्पद्वयमाश्रित्योपगृहीतक्रियाकारकतद्विशेषरूपसर्वविशेषे शुक्लां गामभ्याज दण्डेनेत्यादिपदसमुदायप्रतिपाद्य एकस्मिन्नर्थे बहूनामाद्यपदानां वाक्यघटकानां वा पदानां प्रागुक्तरीत्या शक्तिमभ्युपगच्छन्ति, तेषां तु कृत्स्नो वाक्यार्थः प्रतिपदं प्रतिवर्णं वा समाप्यते । तदेतद् वाक्यविकल्पद्वयमन्यैः षड्भिर्वाक्यविकल्पैः सह यथौचित्यं प्रत्याख्यानप्रसाधनाभ्यां विचारयिष्यतेऽग्रे—'पदानि वाक्ये तान्येव' ( वा० प० २।२८ ) इत्यादिकारिकया ।

तथा च प्रकृते वाक्यविकल्पद्वयपक्षे व्यक्तेषु पदान्तररूपेषु वाक्यार्थोपव्यञ्जनेषु वाक्यार्थः प्रतिपत्तृषु प्रसिद्धिं लभते, न तु बहिःसंनिहितोऽपि वाक्यार्थोऽनभिव्यक्तोपव्यञ्जनः सन्निधानमात्रात् प्रतिपत्तृबुद्धिगोचरो भवतीति । तथा च प्रकृते वाक्यविकल्पद्वयपक्षेऽपि वाक्यार्थप्रतीयते पदान्तराणामपेक्षणीयत्वे प्रकृतवाक्यविकल्पद्वयासंभवेन न वाक्यस्य सखण्डत्वम्, किन्त्वखण्डमेव वाक्यं वाक्यार्थश्चेति हृदयम् ॥१८॥

एवं वाक्यवाक्यार्थयोः सखण्डत्वं निगूढाभिप्रायं प्रत्याख्याय सम्प्रति प्रतिभारूपाखण्डवाक्यार्थभेदव्याचिख्यासया वाक्यस्याखण्डत्वपक्षमेव सानुबन्धम् साभिनिवेशम् आह—अव्यक्त इति ।

अयमर्थः—इहाभिव्यञ्जकध्वनिरूपोपाधिसंबन्धाद् वर्णप्रविभागवत्तया पदप्रविभागवत्तया च प्रतीयमानोऽपि व्यक्तिस्फोटो जातिस्फोटो वा वाक्यरूपो बहिरुपलभ्यमानत्वाद् बहीरूपो ज्ञानस्य परिणामत्वादान्तरो वा संस्काररूपेण शब्दार्थोभयरूपो वस्तुगत्या निरंशो

प्राणवृत्त्यनुग्रहे सत्येव यत्र शब्दरूपं परैरसंवेद्यं भवति तदुपांशु। अन्तरेण तु प्राणवृत्त्यनुग्रहं यत्र केवलमेव बुद्धौ समाविष्टरूपो बुद्ध्युपादान एव शब्दात्मा तत् परमोपांशु।

यत्र तु प्रतिसंहृतक्रमशक्तियोगया बुद्ध्या निमित्तान्तरोपसंप्राप्तमव्यक्ते शब्देऽध्यारोपितं हि शब्दानां क्रमरूपमिव साक्षात्क्रियते तत् प्रतिसंहृतक्रमम्।

शब्दानां क्रमरूपोपसंहारविषयायां बुद्धावसम्प्रख्याततत्त्वमिव प्रतिपद्यमानायामारभ्यते शब्दातीतो व्यवहारः।

मयो वा बुद्ध्यनुसंहारो वाक्यमिति स एव वाचक उपपन्नः। यस्तु भेदप्रतिभासः सोऽसावुपाधिकृत एवेत्यर्थः। तथोपांशु परमोपांशु व्यक्तो व्यक्ततरश्च विलम्बितो विलम्बिततरश्च द्रुतो द्रुततरश्चेत्यादिकाः प्रतिभासा अभिव्यञ्जकध्वनिकृता न पुनः सत्या इति बोद्धव्यम्।

---

वर्णपदप्रविभागरहितः, अभिव्यक्तेः प्राक् प्रयोक्तृबुद्धावभिव्यक्तेरुत्तरञ्च प्रतिपत्तृबुद्धौ निलीनस्य क्रमप्रविभागयोरप्रतीतेः, निरंशत्वाच्च नित्यो नित्यत्वाच्च प्रतिक्षण प्रतिपुरुषं प्रत्युच्चारणञ्चाभिन्न एव यः प्रतिपत्तृबुद्धावनुसंह्रियमाणक्रमरूपोऽक्रमः स एव वाचक उपपन्नः। यस्तु तत्र भेदप्रतिभासः सोऽसावुपाधिकृत एव। तथोपांशूच्चारितोऽयं शब्दः, अयं परमांशुः व्यक्तो व्यक्ततरश्च, विलम्बितो विलम्बिततरश्च द्रुतो द्रुततरश्चेत्यादिका भेदप्रतिभासा अभिव्यञ्जकध्वनिकृता न पुनः सत्याः।

तस्माद् यः शब्द आन्तराभिव्यञ्जकध्वनिवशाद् व्यक्त उपांशु कृत्वाऽधीयते सोऽभिव्यञ्जकध्वनिकृतात् क्रमात् क्रमवान् द्रुतत्वादिनानाविधावस्थायुक्तश्च प्रतीयते।

परमार्थतस्तु—असावक्रम एव स्फोटात्मा प्रतिभासमानः, यत्राभिव्यञ्जकध्वनिरूपोपाधिवशात् कल्पितांशभेदे सति प्रत्यंशं बुद्धिर्वितत्येव विस्तारं प्राप्येव अवतिष्ठते वितत्येवावस्थिता क्रमं गृह्णातीति। अनेन 'एकोऽनवयवः शब्दः' (२।१) इत्युद्दिष्टस्य व्यक्तिस्फोटस्य स्वरूपमुक्तमिति बोद्धव्यमिति।

अयं भावः—वस्तुगत्यैकस्य निरंशस्यापि शब्दस्य व्यञ्जकध्वनिरूपोपाधिसंनिधाने तद्रूपारोपेण परस्पर विभज्यमाना अवयवा इवावस्थिताः प्रतीयन्ते संहितायाम्, असंहितायाम्, द्रुतमध्यमविलम्बितासु वृत्तिषु शनैरुच्चैरुपांशु परमांशु प्रतिसंहृतक्रमञ्च यथायथमुच्चारणे साक्षात्कारे चेति।

तत्र संहिता वर्णानां परः संनिकर्षः 'परः सनिकर्षः संहिता' (पा० १।४।१०९) इति सूत्रेण परिभाषितः। असंहिता=पदपाठोऽवग्रहः। द्रुतमध्यमविलम्बितास्तूच्चारणभेदेनानुगतार्था वृत्तयो यथाक्रम ग्रन्थानामभ्यासे चिन्तने शिष्यान् प्रत्युपदेशे उपयुज्यन्ते। तदुक्तम्—

**संसृष्टशक्तयश्च क्रमसंहारेण समाविष्टवाचां प्रयोक्तॄणां शब्दा बुद्धौ प्रयत्नेन प्राणे करणेषु च क्रमवृत्तितामनुभूय प्रतिपत्तृष्वपि क्रमप्रत्यस्तमयेनैव समावेशं प्रतिपद्यन्ते ।**

**तत्रोपलब्ध्युपायानुपाती क्रमवृत्तिलक्षितो भेदो व्यावहारिकमपि शब्दतत्त्वं नानुपतति । क्रमसंहारानाश्रयणे हि व्यवहार एव विच्छिद्यते ।**

**तस्माद्यः शब्दो व्यक्त उपांशु कृत्वाधीयते सोऽभिव्यञ्जकध्वनिकृतात् क्रमात् क्रमवान्नानाविधावस्थायुक्तः प्रतीयते ।**

---

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता ।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता ॥ इति ।

शनैरुच्चारणमुच्चैरुच्चारणं तु शरीराद् बहिः । तत्र प्राणव्यापारानुग्रहे सत्येव यत्र शब्दरूपं पुरुषान्तरासंवेद्य स्वसंवेद्यमेव शरीरान्तरुच्चार्यते तदुपांशु भवति । यत्र तु प्राण-व्यापारकृतानुग्रहं विना केवलं बुद्धावेव समाविष्टरूपं संश्रितक्रमञ्च शब्दरूपं केवलं स्वबुद्ध्यैव गृह्यते, न तु स्वश्रोत्रेणापि तत् परमोपांशु ।

यत्र तु चित्तवृत्तिनिरोधानुकूलयत्नरूपेण योगकौशलेन बुद्धेः पदगतक्रमाभिव्यक्ति-शक्तिसम्बन्धस्य प्रतिसंहारे उपरोधे क्रियमाणेऽपि शब्देऽध्यारोपितक्रमविषयको यः श्रावण-प्रत्यक्षजनितः संस्कारस्तदुद्बोधरूपनिमित्तान्तरोपसंप्राप्तं तदानीमव्यक्ते शब्देऽध्यारोपितं वस्तुगत्याऽविद्यमानं शब्दानां क्रमरूपमिव साक्षात्क्रियते तत्प्रतिसंहृतक्रमम् । सोऽयं सविकल्पः समाधिः ।

यदा तु शब्दाना क्रमरूपस्योपसहारोऽभावो बुद्ध्या गोचरीक्रियते न तु क्रमरूपम्, सा च बुद्धिस्तदानीं बुद्ध्यन्तरेण पुरुषेण वा गृह्यमाणाप्यव्यक्तत्वादगृहीतकल्पा, तदा शब्दाना क्रमरूपोपसहारविषयाया बुद्धावसङ्ख्यातत्वम् अविज्ञातत्वम् इव प्राप्नुवत्यां यो निर्विकल्पसमाधिकालिकः स्वस्वरूपावस्थानेन स्वस्वरूपमात्रभानरूपो व्यवहारः शब्दातीतः स तदानीमारभ्यते अनुभूयते स्वयं स्वप्रकाशसंवदा ।

न च निर्विकल्पकसमाधौ बुद्धिवृत्तीनामभावे कथमेतदुच्यत इति वाच्यम्,

"वृत्तायस्तु तदा सन्ति अज्ञाता आत्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात् ॥"

इत्यभियुक्तवचनात् शब्दातीतत्वाच्च तस्य व्यवहारस्य वाङ्मनसागोचरात्मस्वरूप-विषयत्वादिति । साम्प्रतं प्रयोक्तृत्वं गतानामपि प्राक् प्रतिपत्तृत्वदशाया बुद्धौ क्रमसंहारेण क्रमास्तमयेन समाविष्टशब्दतत्त्वानां पुसां बुद्धौ शक्तिरूपेण संसृष्टाः शब्दा विवक्षाजनिते-नाभिव्यक्त्यनुकूलेन प्रयत्नेन शब्दा यथाक्रमं प्राणे कण्ठताल्वादिस्थानेषु च क्रमेण स्थिति-मनुभूय बहिरभिव्यक्ताः परश्रवणगोचराः प्रतिपत्तृबुद्धिष्वपि क्रमप्रत्यस्तमयेनैव समाविष्टा भवन्तीति स्थितिः ।

तस्माच्च नभोगादिवत् प्राप्तदेशविभागैवैका यत्र बुद्धिः स एवाद्यन्तयोरेको वाक्याख्यः शब्द इति ॥१८॥

एतस्मिंश्चैकत्वपक्षे निरवयवा शब्दव्यक्तिरेवैका स्यात्। या वा शब्दव्यक्तिः शब्दाकृतिरेव वाक्यमिति प्रतीयेत। तत्र निरवयवस्यैकस्यार्थस्य कुतो भेदसादृश्ये ? भेदसिद्धिविशेषो ह्यात्मान्तरं सादृश्यं च। नह्यात्माभेदः सादृश्यं

परमार्थतस्त्वसावक्रम एव स्फोटात्मा प्रतिभासः, उपाधिवशात्तु तत्र बुद्धिर्विततेवानुगम्यत इति बोद्धव्यम्। अनेनैकोऽनवयवः शब्द इत्युद्दिष्टस्य व्यक्तिस्फोटस्य स्वरूपमुक्तमिति बोद्धव्यम् ॥१९॥

अथ जातिः सङ्घातवर्तिनीत्युद्दिष्टस्य जातिस्फोटस्यापि दृष्टान्तप्रदर्शनद्वारेण स्फुटीकरणायाह—यथाक्षेपेति।

इह भ्रमणलक्षणा कर्मजातिर्यथा विशिष्टप्रयत्नजनितेनाक्षेपविशेषेणाभिव्यक्ता, प्रत्येकपरिसमाप्तत्वात्। न च पार्श्वस्थेन सा विज्ञायते। भ्रमणानामावृत्तौ

---

एवञ्च शब्दोपलब्ध्युपायध्वनिरूपानुपाती वस्तुगत्याऽक्रमेऽपि वाक्ये समारोपितध्वनिक्रमस्थित्या लक्ष्यमाण आद्यन्तमध्येषु पदभेदो व्यावहारिकमपि वाक्यरूपं शब्दतत्त्वं वस्तुगत्या नानुपततीत्यतो व्यावहारिकस्यापि वाक्यरूपस्य शब्दतत्त्वस्याखण्डत्वमेव। व्यवहारे प्रयुज्यमाने वाक्ये हि पदक्रमविशेषप्रत्यस्तमयस्यानाश्रयणे पदार्थभेदप्रतिपत्तावखण्डवाक्यार्थाप्रतिपत्त्या व्यवहार एव विच्छिद्यत। अखण्डवाक्यार्थबोधेन हि क्रियासु प्रवृत्तिरूपो व्यवहारः, न तु पदार्थभेदप्रतिपत्त्या।

ततश्च नभोगवत् समुद्रगन्तृवच्च गृहीतवर्णपदरूपदर्शाविभागैवैका यत्र वाक्यरूपे शब्दतत्त्वे बुद्धिः, स एवाद्यन्तमध्यभागेषु कल्पितष्वेको वाक्याख्यः शब्दोऽनवयवत्वेन नित्यत्वात्, नित्यत्वेन च व्यक्तिभेदाभावात्। तथा च 'एकोऽनवयवः शब्दः' ( २।१ ) इत्युद्दिष्टमखण्ड व्यक्तिस्फोटात्मकं वाक्यम्, प्रतिभारूपश्चाखण्ड एव वाक्यार्थ इत्यत्राभिप्रेतमिति ॥१९॥

एतस्मिन्ननवयवं व्यक्तिस्फोटात्मकमेकं वाक्यमिति वाक्यैकत्वपक्षे समनन्तरपद्योक्ते निरवयवा शब्दव्यक्तिरेवैका वाक्यं स्यात्, या वा शब्दव्यक्तिर्भवतु निरवयवा सावयवा वा, शब्दगताकृतिरेव तु वाक्यजातिस्फोटरूपा वाक्यमिति साधु प्रतीयते। निरवयवाया एकस्या वाक्यव्यक्तेः स्फोटरूपत्वे हि व्यक्तिभेदाभावेन न तत्र जातिः। एवमभ्युपगमे च निरवयवस्यैकस्य शब्दरूपस्य पदार्थस्य कुतो भेदसादृश्ये। अनुभूयते च कालभेदेन पुरुषभेदेन चोच्चार्यमाणे 'देवदत्त गामभ्याज शुक्लां दण्डेन' इति वाक्ये भेदः सादृश्यञ्च।

किञ्च, वाक्ये वर्णपदयोर्भेदः सादृश्यञ्चानुभूयते। भेदस्य प्रत्ययविशेषेण हि शब्दस्यात्मान्तरंस्वरूपभेदः सादृश्यञ्चानुमीयते। नह्येकत्वपक्षे स एवास्या भेदः सादृश्यं वा संभवति, अत एकस्मिन्नपि स्वीक्रियमाणे वाक्याख्ये शब्दतत्त्वे सामान्यविशेषभावसमाश्रयेण

वा। अपि तु विनापि सामान्यविशेषाभ्यां सामान्यविशेषान्तरवत् प्रसिद्धिः। तद्यथाऽप्रसिद्धरूपस्यापि निरवयवस्योत्क्षेपणत्वादेः। [ तत्राह ]—

यथाक्षेपविशेषेऽपि कर्मभेदो न गृह्यते।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः ॥२०॥
वर्णवाक्यपदेष्वेवं तुल्योपव्यञ्जना श्रुतिः।
अत्यन्तभेदे तत्त्वस्य सरूपेव प्रतीयते ॥२१॥

आक्षेपविशेषाद्धि स्वजातिप्रयुक्ते भिन्नात्मनि प्रतिभेदं विनिविष्टस्वजातिविशेषे भ्रमणादौ कर्मणि कम्पनरेचनोत्क्षेपणादिभ्यो यो भेदः स न गृह्यते। आवृत्तौ तु दिग्विशेषावधिसंयोगविभागोपाधिकायामुपलब्धायामनुपलब्धपूर्वाऽव्यक्तोपलब्धा वा भ्रमणरेचनाख्या जातिरुपलब्धॄणां स्वनिमित्तप्रत्ययहेतुः तु भ्रमणं भ्रमणं प्रति प्रतिपत्त्रा सा गृह्यते। एवं वर्णपदवाक्येषु श्रुतिरभिव्यञ्जको ध्वनिरत्यन्तभेदे तत्त्वस्य वर्णपदवाक्यस्फोटलक्षणस्य या भिव्यञ्जिका सरूपेव प्रतीयते परमार्थतो भिन्नाऽपि सती कीदृशी? तुल्योपव्यञ्जनेति। तुल्यः सदृश

---

जातिव्यक्तिभावसमारोपेण भेदसादृश्यं उपपादनीये। तत्र ज सामान्यविशेषौ न वस्तुभूतौ, अपि तु विनाऽपि सामान्यविशेषाभ्यां घटादिषु प्रतीयमानानारोपितसामान्यविशेषान्तरवत्प्रसिद्धिरेकस्या निरंशायामपि शब्दव्यक्तावभिव्यञ्जकध्वनिकृतभेदमादाय सामान्यविशेषरूपारोपसंभवात्।

तद्यथा—प्रत्येकं व्यावृत्तत्वेन क्षणिकत्वेन च निरवयवस्यापि भ्रमणादेरुत्क्षेपणाद्यपेक्षया प्रागप्रसिद्धरूपभेदस्यापि दिग्विशेषावधिकसंयोगविभागोपाधिकाया मण्डलाकारेणावृत्तावुत्क्षेपणादितो रूपभेदोऽवगम्यते। एव तुल्यध्वनिरूपोपव्यञ्जनसत्त्वे वाक्यव्यक्तिस्फोटस्य निरवयवस्यापि वर्णपदाभ्यां सादृश्यं गृह्यते, अतुल्यध्वनिरूपोपव्यञ्जनसत्त्वे तु ताभ्यां तस्य भेदोऽनुभूयत इत्यभिप्रेत्याह - यथाक्षेपविशेषेऽपीति।

यद्वा—'जातिः सङ्घातवर्तिनी' ( १।१ ) इत्युद्दिष्टस्य जातिस्फोटरूपस्य वाक्यस्य भ्रमणत्वादिजातिविशेषरूपदृष्टान्तोपन्यासमुखेन स्फुटीकरणायाह—यथाक्षेपविशेषेऽपीति।

तत्र शब्दव्यक्तिस्फोटस्य वाक्यत्वाभिप्रायेण प्रवृत्ते पूर्वस्मिन् कल्पेऽयमर्थः—यथा कर्मभेदहेतौ क्षेपविशेषे तत्तत्कर्मानुकूलप्रयत्नविशेषे सत्यपि भ्रमणादिकर्मणामुत्क्षेपणादिकर्मभ्यो भेदो न गृह्यते, भ्रमणादिकर्मणा मण्डलाद्याकारेणावृत्तौ त ( अत्रावृत्तिः क्रियायाः पौनःपुन्येन जन्म ) अनुभूयमानाया भ्रमणादिकर्मभिः स्वगता भ्रमणत्वादिजातिर्व्यज्यते, एवं वर्णपदवाक्येषु स्वरूपाणामत्यन्तभेदेऽपि तुल्यध्वनिरूपोपव्यञ्जना श्रुतिक्रिया सरूपेव, असादृश्येऽपि सदृशीव प्रतीयते। अतुल्यध्वनिरूपोपव्यञ्जनोपनिपाते तु तेषां परस्परं भेदो गृह्यत इति।

**ननु च नित्यत्वग्रहणे न तस्य पौर्वापर्यं स्यात्। एकस्मिंस्तु वाक्याख्ये निरवयवे एकग्रहणविषये वर्णपदविषयं पौर्वापर्यं न संभवतीति। अत इदमुच्यते—'एकस्यैव तु सा शक्तिः' इति। यदेवमिति। क्रमप्रत्यवभासत्वमेकत्वानतिक्रमेणाक्रमे बुद्धिलक्षणे क्षणिकवादिनः सर्वस्य विरुद्धरूपमिवाविरुद्धं भवति।**

**त्रय्यन्तविदां तु—विश्वात्मन्येकत्वानतिक्रमेण क्रमप्रत्यवभासत्वं भवति। तथा शब्देऽपि स्यादिति नास्ति विरोधः। स्वशक्तियोगाद्धि प्रत्यवभासमात्रभेदान्नात्रोपायापायौ क्वचिदपि पक्षे विद्येते॥ २२।**

नित्येषु हि परमार्थतः पूर्वापरभावोऽसंभव्युपाधिकृतो दृश्यत एव। ननु सदैकरूपतया किं नावभासते? नहि तत्र स्वभावभेदस्य सम्भव इत्याशङ्क्योक्तम्—एकस्येत्यादि। एकस्वभावोऽपि तथाविधशक्तियुक्त एव वस्तुस्वाभाव्यात्। यद्वं वैतत्येन पूर्वापरभावस्वरूपतया उपाधिभेदानुवर्तनेनावभासत इति। ॥२२॥

---

संहारकर्ता। तस्य हि कालाख्या कर्तृशक्तिः कदाचित् कस्यचित् कार्यस्योत्पत्तिं प्रतिबध्नाति, तदानीमेव च कस्यचित् कार्यस्योत्पत्तिमभ्यनुजानातीति प्रतिबन्धाभ्यनुज्ञाभ्यां कार्येष्वेव पौर्वापर्यरूपं क्रमं प्रकल्पयति, न नित्येषु। न ह्यणूनामविशिष्टे कालत्रयेऽपि सत्तायोगे पौर्वापर्यरूपः क्रमोऽस्तीति।

ननु वाक्यस्य नित्यत्वपक्षग्रहणे न तस्य वर्णपदविषयं पौर्वापर्यं स्यात्, कार्येष्वेव क्रमस्य दृष्टत्वात्। एकस्मिंस्तु वाक्याख्ये निरवयवे एकग्रहणविषयेऽभ्युपगम्यमाने बुद्धिभेदमादायाप्यनुपपद्यमानं वर्णपदविषयं पौर्वापर्यं न सम्भवतीति प्राप्ते इदमुच्यते—**एकस्यैव तु सा शक्तिर्यदेवमवभासत** इति।

अयं भावः—सर्वभावक्षणिकत्ववादिनां सर्वेषां बौद्धानां मतेऽपि वाक्ये एकत्वानतिक्रमेण क्रमप्रत्यवभासत्वं विरुद्धरूपमप्यक्रमे संस्कारवशात् पूर्वपूर्वबुद्धिविषयवर्णपदावगाहिनि चरमे वाक्यबुद्धिलक्षणे भावेऽविरुद्धमिव भवति, उपस्थितिक्रमेणैव वर्णानां पदानाञ्च तस्या बुद्धेर्गोचरत्वात्।

वेदान्तविदां तु विश्वविवर्तोपादानतया विश्वात्मनि ब्रह्मण्येकत्वानतिक्रमेण सर्वेषां भावानां सृज्यमानानां सर्गक्रमप्रत्यवभासत्वं भवति, तस्य विश्वात्मनो वस्तुस्वाभाव्येन क्रमप्रत्यवभासशक्तियोगात्। तथा निरवयवे नित्ये च वाक्ये वस्तुस्वाभाव्येन क्रमप्रत्यवभासशक्तियोगाद् वर्णपदविषयं क्रमप्रत्यवभासत्वं स्यादिति नास्ति विरोधः। नित्ये निरवयवे च वाक्येऽवयवभेदप्रयुक्तक्रमभेदस्य वस्तुतोऽभावेऽपि स्वशक्तियोगाद्धि क्रमप्रत्यवभासमात्रस्य भेदान्नात्र व्यक्तिजातिभेदेन भिन्ने वाक्यपक्षद्वयेऽपि वस्तुगत्या क्रमस्योपायापायौ विद्येते, तत्र क्रमस्य प्रतिभासमात्रशरीरस्यावास्तवत्वादिति॥२२।

कथं पुनर्वाक्यपदह्रस्वदीर्घप्लुतव्यञ्जनादिषु नित्येष्वविशिष्टेषु कालभेद उपपद्यते—

चिरं क्षिप्रमिति ज्ञाने कालभेदादृते यथा ।
भिन्नकाले प्रकाशेते स धर्मो ह्रस्वदीर्घयोः ॥२३॥

तद्यथा चिरमिति ज्ञानस्य यदात्मकत्वं क्षिप्रमित्येतस्मिंश्च ज्ञानेऽपि । न च तयोरात्मनोः कश्चिदपि स्थितिकालभेदोऽस्ति । लब्धात्मकं हि सर्वज्ञानमविशिष्टकालं ज्ञानान्तरेण ।

अथ च चिरमित्येकं ज्ञानं ज्ञानान्तरेणातिक्रान्तप्रत्यवमर्शरूपेण तद्भावनाविशेषावधानाच्च भाविनापि प्रत्यवमर्शरूपेण प्रकृष्टतामिव कालाध्वनः प्रदर्शयति । क्षिप्रमित्येतस्मिंस्तु लघुप्रवृत्तिरूपेण प्रत्यपकृष्यत इव कालाध्वा ॥२३।

पुनरप्युपाधिभेदेनैव शब्दस्य भेदप्रतिभासो न स्वतः, नित्यत्वादिति दृष्टान्तप्रदर्शनपूर्वकमाह—चिरमिति ।

---

ननु पदसमूहरूपवाक्योच्चारणे पदोच्चारणापेक्षयाऽधिकः कालः पदोच्चारणे तु ततो न्यूनः । एवं ह्रस्वदीर्घप्लुतव्यञ्जनाद्युच्चारणेषु कालभेदः प्रत्यक्षसिद्धः । तत्र नित्येषु निरवयवेष्वक्रमेष्वविशिष्टसत्तायोगिषु, अत एवाविशिष्टकालेषु वाक्यपदादिषु कथं कालभेद उपपद्यत इत्याशङ्क्य पुनरप्युपाधिभेदेनैव वाक्यादेः कालभेदप्रतिभासो न स्वतः, नित्यत्वेन निरवयवत्वादिति दृष्टान्तप्रदर्शनपूर्वकमाह—चिरं क्षिप्रमिति ।

यथा बहुविषयके समूहालम्बनात्मके ज्ञाने बहुविशेषणके वैकविषयके ज्ञान इदं ज्ञानं चिरमिति प्रत्ययः, एकविशेषणकैकविशेष्यके च ज्ञाने इदं ज्ञान क्षिप्रमिति प्रत्ययः, कालभेदादृते नित्ये निरवयवे चैतन्यरूपे ज्ञाने गुणरूपत्वेन निरवयवे वा ज्ञाने कालभेदं विनाऽपि चिरं क्षिप्रमितीमे ज्ञाने भिन्नकाले ज्ञेयगतकालभेदेन भिन्नकाले इव प्रतीयेते । स धर्मः स्वभावः ह्रस्वदीर्घयोरवगन्तव्यः । ह्रस्वदीर्घयोरपि स्फोटरूपयोर्न स्वतः कालभेदः, किन्तु व्यञ्जकध्वनिगतकालभेदप्रयुक्त एवेति योजना ।

तथा चायमर्थः फलति—चिरमिति ज्ञानं क्षिप्रमिति च ज्ञानं यथा ज्ञानत्वाविशेषादेककालमपि ज्ञेयगतकालभेदसमाश्रयणेन भिन्नकालमिव प्रथते, चिरमिति ज्ञानं विततप्रतिभासमिवाभाति, क्षिप्रमिति ज्ञानञ्च ततो विपरीतम् । स धर्मस्तद्वद् ह्रस्वदीर्घयोः स्वभावोऽवगन्तव्यः, न तु वस्तुगत्या वर्णस्फोटे नित्यत्वेनाविशिष्टकाले कालभेदप्रयुक्तं ह्रस्वत्वदीर्घत्वादिकं स्वतोऽस्तीति नास्ति स्फोटस्य स्वतः कालभेद इति ।

अयं भावः—यथा चिरमिति ज्ञानस्य यत्कालात्मकत्वं क्षिप्रमित्येतस्मिंश्च ज्ञानेऽपि तत्कालात्मकत्वमेव । नहि तयोर्ज्ञानात्मनोः कश्चिदपि स्थितिकालभेदोऽस्ति । उत्पत्त्याऽभिव्यक्त्या या लब्धस्वरूपं ह्यवस्थितं सर्वं ज्ञानमविशिष्टकालम् तुल्यकालं ज्ञानान्तरेणेति, यत एवं प्रागुक्ते ज्ञानद्वये स्वतः कालभेदाभावेऽपि चिरमित्येकं ज्ञानं ज्ञानान्तरेण क्षिप्रमित्येव-

चिरमिति ज्ञानं क्षिप्रमिति च यथा ज्ञानत्वाविशेषादेककालमपि ज्ञेयसमाश्रयणेन भिन्नकालमिव प्रथते। चिरज्ञानं विततप्रतिभासमिवाभाति। क्षिप्रज्ञानमेतद्विपरीतम्। तद्वद् ह्रस्वदीर्घयोर्धर्मः स्वभावोऽवगन्तव्यः। न तु ह्रस्वादिरूपता काचित् स्फोट इति नास्ति स्फोटस्य स्वतो भेदः॥ २३।

**कथं दीर्घप्लुतादिषु कालाध्वपरिमाणभेददर्शनमविरुद्धम्?**

**न नित्यः परमात्राभिः कालो भेदमिहार्हति।**
**व्यावर्त्तिनीनां मात्राणामभावे कीदृशः क्रमः॥२४॥**

---

मभिलप्यमानेन सह यदीदं ज्ञानमतीतं तदाऽतिक्रान्तस्मृतिरूपेण सह यदि तु भावि, तदा तद्विषयकभावनाविशेषरूपं यदवधानं तद्बलाद्भाविनाऽपि प्रत्यवमर्शरूपेण अनुमानागमादि-जन्यबुद्धिरूपेण सह स्वकालरूपाध्वनः प्रकृष्टतामिव प्रदर्शयति। क्षिप्रमित्येतस्मिंस्तु लघु-प्रवृत्तिरूपसत्त्वेन चिरमिति ज्ञानापेक्षया कालरूपोऽध्वाऽपकृष्यत इवेति॥२३।

ननु नित्यं वाक्यपदादिकं स्वाभिव्यञ्जकध्वनिरूपोपाधिवशाद् भिन्नं न वक्तुं युक्तम्, नित्यत्वेन निरवयवस्याभिन्नस्वभावस्य स्फोटात्मकस्य वाक्यपदादेरुपाधिवशाद् भिन्नत्वा-भिधाने स्वभावभेदप्रसङ्गादिति कथं वाक्यपदह्रस्वदीर्घादिषु नित्यत्वेनाविशिष्टकालेषु काल-रूपाध्वनः परिमाणभेददर्शनमविरुद्धमित्याशङ्कते—**न नित्यः परमात्राभिरिति।**

अयमर्थः—इह आत्मादिवत् कालोऽपि नित्य एवाभ्युपगतः,

व्यापारव्यतिरेकेण कालमेके प्रचक्षते।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम्॥ (वा० प० ३ काल० १)

इत्यादिलक्षणकथनात्। तस्यैवं लक्षणलक्षितस्य स्वतो भेदासंभवात् क्षणलवनिमेषे-त्यादिव्यवहारः कथमुपपद्यते? अथ परस्य मात्राभिः=अवयवैः कल्पिताभिरकल्पिताभिर्वा कालस्य भेद उपचर्यते।

यथा परमाणोः स्वावच्छिन्ननभोदेशत्यागोपलक्षितः कालः क्षणः क्षणद्वयं च लव इत्यादि, तथा निरंशे वाक्ये स्वाभिव्यञ्जकध्वनेर्मात्रा आरोप्यौपाधिकभेदपरिकल्पनायां कः प्रद्वेषः? यदि ब्रूषे न वयं नित्यमेकमित्यादिलक्षणलक्षितं कालं व्यापारव्यतिरिक्तं जन्यभाव-व्यतिरिक्तं वा जानीमः, किन्तु पूर्वापरीभूतावयवा क्रियैव कालः, पूर्वापरीभूता जन्य-पदार्थावयवा एव वा स्वमात्रभिन्नाः कालः, तत्समाश्रयणेन चायं क्रमयौगपद्यव्यवहारः, न पुनस्तद्व्यतिरिक्तनित्यस्वभावकालकृत इति, तदाऽप्याह—**व्यावर्तिनीनामिति।**

ताः पूर्वापरीभूताः क्रियामात्राजन्यपदार्थमात्रा वा क्रमेणोदयविनाशयोगिन्योऽयुग-पदवस्थिता इति विशरारूणां तासां कीदृशः क्रमः? कथं च तासां क्रमसमारोपेण निरंशेऽपि काले क्षणलवादिकालभेदव्यवहार इति? कथं च दीर्घप्लुतादिषु कालभेददर्शनमिति? इह शास्त्रे, नित्यानित्यत्वेन लक्षितः। कालः परमात्राभिः परस्य स्वातिरिक्तस्य व्यापारस्य

नित्यपक्षेऽनित्यपक्षे वा कालस्य मात्राणां वा आश्रीयमाणे न कालात्मनः सत्यतः कौचित् प्रकर्षापकर्षौ विद्येते। यदि नित्यः कालः, नास्यादित्यगतिभिर्बह्वीभिरात्मपरिमाणमुत्कृष्यते, नाप्यल्पाभिरपकृष्यते। क्रोशयोजनादिपरिमाणमिव भिद्यमानाभिर्गन्तृक्रियाभिः। कालस्यैव चोपाधिविशिष्टस्य परिमाणत्वात् कुतोऽस्यापरं परिमाणमित्येतत्कालसमुद्देशे व्याख्यास्यते।

अथ गतिरपि नित्या सर्वमेवाव्यतिपाति च प्रतिज्ञायते। अथैता व्यावर्तिन्य एव विश्वस्य मात्राः, तत्र न पूर्वमपरेणानुसन्धीयते, सर्वं समीहितमसं-

अथोच्यते—न नित्यमुपाधिवशाद्भिन्नं वक्तुं युक्तम्, स्वभावभेदप्रसङ्गादित्याशङ्क्याह—न नित्य इति। इह कालोऽपि नित्य एवाभ्युपगतो नित्यमेकमित्यादि-

जन्यपदार्थस्य वा कस्यचिद् मात्राभिः=अवयवैः काले समारोपितैः कालो निरंशो भेदं नार्हति। व्यावर्तिनीनां परस्परं व्यावृत्तानां मात्राणाम्=व्यापारमात्राणां जन्यभावमात्राणां वा, अभावे=यौगपद्येनावस्थानाभावे, क्रमः=पौर्वापर्यलक्षणः, कीदृशः? नास्त्येव क्रम इत्यर्थः। क्रमाभावे च नास्ति तत्कृतः कालभेदस्तदभावे च नास्ति तद्दृष्टान्तेनौपाधिको वाक्यभेद इति योजना।

अयं भावः—कालस्य नित्यत्वपक्षे शास्त्रे 'नित्यमेकं विभु द्रव्यम्' इत्यादिलक्षणलक्षितस्य नित्यत्वे समाश्रीयमाणे, अतीतः कालो भावी काल इत्यादिप्रत्ययबलादनित्यत्वे वा तस्य समाश्रीयमाणे एवं कालपरिच्छेदकत्वेन मात्रापदव्यपदेश्यानां क्रियाणां भावानां वा सत्कार्यवादानुरोधेन नित्यत्वेऽबाधितप्रत्यक्षबलादनित्यत्वे वा समाश्रीयमाणे वस्तुतः कालस्वरूपस्य न कौचित् प्रकर्षापकर्षौ विद्येते।

तथा हि—यदि नित्यः कालः, नादित्यगतिभिर्बह्वीभिर्नित्याभिरनित्याभिर्वा कालस्य परिमाणमुत्कृष्यते, नाप्यल्पाभिरपकृष्यते, आदित्यगतिनिष्ठयोर्बहुत्वाल्पत्वयोर्वैयधिकरण्येन कालगतोत्कर्षाप्रयोजकत्वात्, नित्यत्वेनाभिन्नरूपे काले प्रतियोग्यनुयोगिसापेक्षयोर्भेदसमानाधिकरणयोरुत्कर्षापकर्षयोरसंभवाच्च। यथा क्रोशयोजनादिपरिमाणं परस्परं परतो वा भिद्यमानाभिर्गन्तृक्रियाभिर्नोत्कृष्यते, न वाऽपकृष्यते, तद्वत्कालपरिमाणमप्यादित्यगतिभिरिति। किञ्च, काल एव हि यत्किञ्चित्क्रियारूपोपाधिविशिष्टः क्रियान्तरस्य जन्यभावान्तरस्य वा परिमाणम्। यथा गोषु दुह्यमानासु गत इति गोदोहनक्रियारूपोपाधिविशिष्टः कालो गमनक्रियायाः परिमाणमिति रीत्याऽन्यपरिमाणस्य कालस्य कुतोऽपरं परिमाणमित्येतत्कालसमुद्देशे व्याख्यास्यते। तथा चान्यभावपरिमाणभूते काले परिमाणान्तराभावेऽसत्तत्परिमाणगतोत्कर्षापकर्षयोरभावे च दीर्घप्लुतादिषु कालपरिमाणभेददर्शनं तदुत्कर्षापकर्षकृतमसंभवित्वाद् भ्रान्तिरेव।

अथ कालोऽपि नित्यः, तत्परिच्छेदिकाऽऽदित्यगतिरपि नित्या, सर्वमेव च भावजातमव्यतिपाति=सत्कार्यवादानुरोधेन नित्यम् इति प्रतिज्ञायते। यदि चोदयव्यययोगिन्योऽनित्या एव परस्परं व्यावर्तमाना विश्वस्य मात्राः=स्वरूपाणि, न तु प्रतिभावमभिन्नरूपाः।

सृष्टमेव व्यतिपतति, निरुपाख्ययोश्च पूर्वापरयोः कोटयोर्मध्यमनवबद्धं पश्चात् पुरस्ताच्चानालम्बनमनुपाख्यं पूर्वभागापरभागप्रत्यवमर्शिनेवाहङ्कारेणानुस्यूतमपकर्षपर्यन्तगतमभेदमप्यसतः पररूपस्योपग्रहेण चात्यन्तमनुपग्राहि परिमाणाभेदेऽपि मिथ्याध्यासादविदुषो दीर्घमिव प्रकाशते ।

तदेतस्मिन् पक्षे एकधर्मावबद्धेष्वेकधर्मप्रतिष्ठितेष्वभिन्नकालेषु सर्वव्यवहारेषु कीदृशः सतामत्यन्तासतां च मात्राभेदानां क्रमः ?

नहि शशविषाणस्योष्ट्रविषाणेन हिमवता वा कश्चिदपि क्रमो विद्यते ।

लक्षणकथनात् । तस्येदानीं क्षणलवनिमेषेत्यादिव्यवहारः कथमुपपद्यते ? अथ परमात्राभिस्तस्य भेद उपचर्यते । यथा परमाणोः स्वावरुद्धनभोदेशत्यागोपलक्षितः कालः क्षणः, क्षणद्वयं च लव इत्यादि । तथा निरंशे वाक्य औपाधिकभेदपरिकल्पनायां कः प्रद्वेषः ?

---

तत्राविद्यमानत्वान्न पूर्वमपरेण सहानुसन्धीयते । सर्वञ्च क्रमवत्त्वेन समीहितम् इष्टं परस्परमसंसृष्टमेव व्यतिपतति = विनश्यति । एवं पूर्वकालेऽपरस्य, अपरकाले च पूर्वस्यासत्त्वेन निरुपाख्ययोश्च पूर्वापरयोः कोट्योर्मध्यकालोऽनवबद्धः = असंबद्धः युगपदनवस्थिताभ्या पूर्वापरकोटिभ्याम्. अत एवानालम्बनः = पूर्वापरकोटिरूपमध्यत्वनिरूपकरहितः, अत एवानुपाख्यः = वाग्व्यवहारागोचरः, युगपदविद्यमानयोरपि पूर्वापरभागयोः प्रत्यवमर्शिना सदा विद्यमानात्मविषयकेणाहङ्कारेणानुस्यूतः = गोचरीकृतः अपकर्षपर्यन्तगतत्वादभेद्योऽपि स्वस्मिन्नसतः स्वोपाधिक्रियादिगतस्य भेदस्य पररूपस्योपग्रहेण च विरोधात् स्वगतमभेदमत्यन्तमनुपग्राहयन् वाक्यपदादिषु नित्येष्वनित्येषु वा प्रागुक्तरीत्या कालपरिमाणाभेदेऽपि पररूपस्य ध्वनिधर्मस्य कालरूपपरिमाणकृतदैर्घ्यस्य मिथ्याऽध्यासादविदुषो दीर्घ इव प्रकाशते ।

तदेतस्मिन् पक्षे पदत्ववाक्यत्वादिरूपैकधर्मावबद्धेषु पदवाक्यादिरूपैकाखण्डधर्मिप्रतिष्ठितेषु, अत एवाभिन्नकालेषु पदवाक्यादिविषयकसर्वव्यवहारेष्वभिव्यञ्जकध्वनिगतानां सतां मात्राभेदानाम् = अवयवविशेषाणाम् अत्यन्तासताञ्च पदवाक्यादिगतानां मात्राभेदाना कीदृशः क्रमः ? सतामवयवानामयुगपदवस्थितत्वात्, असताञ्च निःस्वरूपत्वेन क्रमानाश्रयत्वात् ।

किञ्च, नहि सता ध्वन्यवयवाना क्रमेणात्यन्तासता पदवाक्याद्यवयवाना क्रमवत्त्वमारोपेणापि संभवति, सदसतोः परस्परसंबन्धासंभवात्, संबन्धमनपेक्ष्यैवारोपस्वीकारे त्वतिप्रसङ्गात् ।

नहि शशविषाणस्यासतोऽसतोष्ट्रविषाणेन सता वा हिमवता स्वगतक्रमारोपेण संपाद्यमानः कश्चिदपि क्रमो लोके विद्यते । एवञ्च कथं सतां ध्वन्यवयवाना क्रमस्यासत्सु पदवाक्यावयवेष्वारोपसंभवः ?

**यद्यप्येकस्यार्थस्य संमुखीभावे सद्भिः समानकालैर्भिन्नकालैश्च व्यापारैः सह क्रमो न संभवति, तथाप्येतस्मिन् दर्शने नान्यथा क्रमः संभवतीत्येवम्भूतव क्रमव्यवस्था, सत्यमेवम्भूता क्रमव्यवस्था, न तु कस्यचिन्मूर्त्तिपरिमाणभेदातिक्रमेण परिकल्पितपरिमाणभेदो विद्यते। सहोत्पादा हि सर्वे भावाः कालान्तरावस्था-परिकल्पिते कालाध्वनि मन्वन्तराख्ये क्षणाख्ये वा नात्मतत्त्वमतिक्रामन्तोऽनैकान्तिकेनागन्तुनाप्यनागन्तुकेन भेदेन संस्पृश्यन्ते।**

**नहि तेभ्यो व्यतिरिक्तः क्षणाख्यः कालाध्वा मन्वन्तराख्यो वा कश्चिदन्यो विद्यते, यस्मिन्नधिकरणभूते प्राप्तविशेषभावाः कालान्तरावस्थायिनो नित्याः क्षणिका इति वा प्रतिज्ञाभेदविषयतामापद्येरन् ॥ २४॥**

अथ ब्रूषे न वयं नित्यमेकमित्यादिलक्षणलक्षितं कालं व्यतिरिक्तं जानीमः, पूर्वापरीभूताः पदार्थमात्रा एव स्वभावभिन्नाः कालः, तत्तदाश्रयणेन चायं **क्रमयौगपद्यव्यवहारः, न पुनस्तद्व्यतिरिक्तनित्यस्वभावकालकृत इति।** तत्राप्याह–व्यावर्त्तिनीनामिति। ताः पूर्वापरीभूताः पदार्थमात्रा उदयव्यययोगिन्य एवेति

---

यद्यप्येवमेकस्याखण्डस्य वस्तुनः पदरूपस्य वाक्यरूपस्य वा संमुखीभावे = प्रत्यक्षगोचरत्वे सिद्धिः समानकालैर्भिन्नकालैश्च व्यापारैः सह क्रमो न संभवति = तादृशां व्यापाराणां क्रमैरेकस्मिन् पदादिरूपे वस्तुन्यारोपितस्यैकस्य तस्य वस्तुनः क्रमवत्त्वं न संभवति, समानकालानामविशिष्टकालत्वेन क्रमशून्यत्वात्, भिन्नकालानां चायुगपदवस्थितत्वेन पौर्वापर्यरूपक्रमासंभवात्; तथाप्येतस्मिन् दर्शने ध्वन्यवयवधर्मस्य क्रमस्यासत एव बुद्ध्या परिकल्पितस्यासत्स्वेव पदवाक्याद्यवयवेष्वारोप इति प्रकारादन्यथा क्रमो न संभवतीत्येवंभूतैव **क्रमव्यवस्था।**

ननु सत्यमेवम्भूता क्रमव्यवस्था, किन्तु कस्यचिदपि वस्तुनो मूर्तिपरिमाण-**भेदातिक्रमेण** = स्वरूपस्य यत्परिमाणं महत्त्वह्रस्वत्वदीर्घत्वादिरूपमनारोपितं वस्तुभूतं तदतिक्रमेण = तदतिरिक्तः परिकल्पितः परिमाणभेदः = अन्यधर्मगतः समारोपितः काल-परिमाणविशेषो नहि विद्यते, यतः सर्वे भावाः कालैक्यमादाय सहोत्पादाः = एकस्मिन् काले समुत्पन्नाः एकस्य कालस्यैवान्तरालावस्था या आदित्यगत्यादिकल्पिता तद्रूपे परिकल्पिते क्षणाख्ये मन्वन्तराख्ये वा कालाध्वनि वर्तमानाः कालावैशिष्ट्यलक्षणमात्मनस्तत्त्व-मतिक्रामन्तोऽप्यनैकान्तिकेन = अनियतेन व्यभिचारिणा आगन्तुकेन = आरोपितेन अनागन्तुकेन = अनारोपितेन अपि भेदेन न संस्पृश्यन्ते।

नहि तेभ्यः सहोत्पादेभ्यो भावेभ्यो व्यतिरिक्तः कश्चिदन्यः कालाध्वा क्षणाख्यो मन्वन्तराख्यो वा विद्यते, यस्मिन्नधिकरणभूते सति प्राप्तविशेषभावाः = तेनाधिकरणभूतेन परस्परं व्यावृत्तिमासादितवन्तो भिन्नभिन्नकालावस्थायिनो नित्याः क्षणिका इति वा प्रतिज्ञा-विषयतामापद्येरन्।

विशरारूणां तासां कीदृशः क्रमः, कथं च तत्समाश्रयणेन कालव्यवहार इति यत्किञ्चिदेतत् ॥२४॥

एवं तर्हि क्रमवतीभ्यो मात्राभ्य उत्पन्ना बुद्धिः प्रचितमात्रा वाऽप्रचितमात्रा वा परिमाणभेदव्यवहाराय कल्पिष्यते, सर्वथा साध्वनुपात्तमात्रारूपैव—

**ताभ्यो या जायते बुद्धिरेका सा भागवर्तिनी ।**
**सा हि स्वशक्त्या भिन्नेव क्रमप्रत्यवमर्शिनी ॥२५॥**

अथ तथाविधपदार्थसमाश्रयणेन बुद्धिरुपजायमाना कालव्यवहारं निर्वर्तयिष्यतीत्याशङ्क्याह—ताभ्य इति ।

---

तदयमत्र संग्रहः—यदि नित्यो निरवयव एकः कालः, स च क्रियामात्राभिर्जन्यभावमात्राभिर्वोपाधिभिर्भिद्यमानः क्षणलवादिपदव्यपदेश्य उत्कृष्टोऽपकृष्टश्च भवन् व्यवहारोपयोगीत्युच्यते, तन्न संभवति, अन्यमात्राभिरन्यस्योत्कर्षापकर्षयोरदृष्टेरसंभवाच्च ।

किञ्च, क्रियारूपोपाधिविशिष्टस्य कालस्यान्यभावपरिमाणत्वमिति कुतो भावान्तरस्य कालपरिच्छेदकत्वेन कालपरिमाणत्वम् ? तत्परिच्छेद्यस्य तत्परिच्छिन्नत्वासंभवादत्यपरिच्छिन्न एव कालः । यदि तु सर्वमेव जगत् सत्कार्यवादानुसारेण नित्यम्, तदाऽपि न नित्येन निरवयवेनाक्रमेण तथाविधस्य कालस्य परिच्छेदसंभवः । यदि तु सर्वमनित्यमेव क्षणभङ्गवादानुसारेण दृष्टिसृष्टिवादानुसारेण वा, तदाऽपि पूर्वापरयोर्युगपदनवस्थितत्वान्न क्रमसंभव इति कुतस्तत्क्रमारोपेण कालस्य क्रमवत्त्वं भेद उत्कर्षापकर्षौ वा ?

किञ्च, सर्वभावानित्यत्वपक्षे कस्यचिदपि भावस्य मध्यकालः पूर्वापरकोटिभ्या युगपदनवस्थिताभ्यामसंसृष्ट इति स्वरूपेणानुपाख्योऽपि पूर्वापरकोटिप्रत्यवमर्शिनाऽहङ्कारेण गोचरीकृतोऽपकर्षपर्यन्तगतोऽभेद्योऽभिन्नकालपरिमाणोऽप्यसतः क्रियागतस्य भावान्तरगतस्य वा क्रमरूपस्य भेदरूपस्य वा समारोपात्तदुपग्रहेण मिथ्याध्यासाद् दीर्घ इव ह्रस्व इव चोत्कृष्ट इवापकृष्ट इव च प्रतीयते । तदेवं न परमात्रासु सतीष्वसतीषु वा क्रमः । न च काले नित्ये निरवयवे स्वतः परतो वा क्रम इति कालभेदाभावे दीर्घप्लुतादिष्वभिन्नकालेषु कालभेददर्शनं सर्वथा नोपपद्यत इति शङ्कोपपादिकाया एतत्कारिकाया परमाशयः ॥ २४ ।

नन्वेवं काले स्वतः परतो वा क्रमासंभवेऽपि पूर्वपूर्वमिथ्याध्याससमुपजातवासनावशादध्यारोपितक्रमवतीभ्यः परमात्राभ्यो विषयत्वेन कारणीभूताभ्य उत्पन्नाः क्रमवत्पदार्थगोचराः क्रमवत्यो बुद्धयः प्रचितमात्राः = बह्ववयवाः अप्रचितमात्राः = अल्पावयवाः वा कालपरिमाणभेदव्यवहाराय सर्वथा कल्पिष्यन्ते, परमात्राक्रमं सन्तमसन्तं वाऽनुपादायैवेत्याशङ्क्याह—**ताभ्यो या जायत** इति ।

अयमर्थः—ताभ्यः पदार्थमात्राभ्यो बुद्धिविषयभूतेभ्यः पदार्थावयवेभ्यो या जायते बुद्धिः साऽपि न शक्नोति कालव्यवहारं निर्वर्तयितुम्, यत एकाऽसौ बुद्धिर्निर्विभागेति कथं पूर्वापरव्यवहारं निर्वर्तयेत् ?

**एकत्वाद्धि बुद्धावात्मभूतानि संसर्गिणीनां विरोधिनीनां वा मात्राणां भिन्नानि तत्त्वानि न संभवन्ति। सा त्वेका भागवर्जिता बुद्धिः प्रकाशस्वरूपत्वान्मात्राणां क्रमसंकीर्णपौर्वापर्य्याणां तद्रूपापरित्यागेनासंहार्यमपि संहृत्यैव प्रत्यवमृशति। एवम्भूत एव बुद्धिप्रत्यवमर्शः॥ २५।**

ताभ्यः पदार्थमात्राभ्यो या जायते बुद्धिः साऽपि न शक्नोति कालव्यवहारं निर्वर्तयितुम्। यत एकासौ बुद्धिर्निर्विभागेति कथं पूर्वापरव्यवहारं निर्वर्तयेत्। तत्राह—सा हीति। बुद्धिर्हि भिन्नेव स्वशक्त्या क्रमप्रत्यवमर्शिनी भविष्यति। यतः क्रमोल्लेखानुषङ्गेणैवासावनुभववासनावशादुपजायत इति कालव्यवहारनिर्वर्तनचतुरैव सा॥२५।

---

अत्रोपपत्तिमाहोत्तरार्धेन—सा हीत्यादि। हि=यतः सा बुद्धिरभिन्नाऽपि भिन्नेव स्वशक्त्या स्वभावभूतया पदार्थमात्राणां स्वविषयाणां क्रमप्रत्यवमर्शिनी भविष्यति स्वस्मिन् वस्तुभूतक्रमासत्त्वेऽपीति।

एवं तु कारिकायाः पदसमन्वयः—ताभ्यः पदार्थमात्राभ्यः, विषयत्वेन कारणतया, या बुद्धिर्जायते सा वस्तुत एका केवला, भागवर्जिता अवयवरहिता।

नन्वेवं सति कथं तत्र भागावभासस्तत्प्रयुक्तः क्रमावभासश्चेत्याशङ्क्याह—सा हीति। अत्र हिशब्दस्तुशब्दार्थे। सा त्वेका भागवर्जिताऽपि बुद्धिरभिन्नाऽपि भागवर्जिताऽपि स्वशक्त्या स्वभावभूतयाभिन्नेव स्वविषयपदार्थमात्राक्रमं स्वस्मिन्नारोपितं स्वक्रममिव प्रत्यवमृशतीति।

अयं भावः—प्रकाशमात्रस्वरूपत्वाद् बुद्धिरेका, एकत्वाद्धि बुद्धौ तादात्म्यवन्ति स्वसंसर्गिणीनां प्रकाशस्वभावाना स्वमात्राणां परस्परं भिन्नानि तत्त्वानि=स्वरूपाणि न सम्भवन्ति, विरोधिनीनाम्—विरुद्धस्वभावाना वा जडानां स्वविषयपदार्थमात्राणां भिन्नानि तत्त्वानि न सम्भवन्ति। सा तु प्रकाशस्वरूपत्वादेका भागवर्जिता बुद्धिर्बुद्धिविषयोस्तादात्म्याध्यासात् स्वस्मिन् सङ्कीर्णपौर्वापर्याणां स्वविषयपदार्थमात्राणां क्रमं तादात्म्याध्यासादेव पदार्थमात्रारूपापरित्यागेन स्वस्मिन् प्रत्यवमृशति विषयविषयिणोर्विरुद्धस्वभावत्वेन स्वस्मिन्नसंहार्यमपि=अनाधेयमपि संहृत्येव=आधायेव। एष एवंभूत एव बुद्ध्या स्वस्मिन् स्वविषयपदार्थमात्राणां क्रमस्य प्रत्यवमर्शः।

एवञ्च, बुद्धावपि प्रकाशमात्रस्वरूपायामभागायां क्रमो नास्तीति कुतस्तत्कृतो नित्ये निरवयवे काले क्रमो भेदो वेति। तदभावे च कुतो दीर्घप्लुतादिषु पदवाक्यादिषु च कालभेदः क्रमो वेति॥२५।

**क्रमोल्लेखानुषङ्गेण तस्यां यद् बीजमाहितम् ।**
**तत्त्वनानात्वयोस्तस्य निरुक्तिर्नावतिष्ठते ॥२६।**

**इह यद् व्यवहितानां मात्राणामनुपाख्यानां पूर्वासु बुद्धिषूपयुक्तसामर्थ्यानां सामापर्शिनी ( सामिस्पर्शिनी ) न रूपोपग्रहोल्लेख्या······बीजानामिव व्यपदेशातीतं तत्त्वम् ।**

**एतद् दूषयितुमाह—तस्यामिति । तस्यां बुद्धौ यदाहितं पदार्थमात्राभिरनुभववशाद् बीजं वासनारूपं संस्कारस्वभावं तत् किं व्यतिरिक्तं तस्या उताव्यतिरिक्तमिति द्वयी गतिः । व्यतिरेके तस्यास्तेन न किञ्चिदिति कथं तद्वशात् क्रमादिको व्यवहारः ? अव्यतिरेके पुनरपि सैवैका निर्विभागेति पदार्थमात्रावत्**

---

नन्वस्ति तावद् बुद्धिष्वबाधितः पदार्थमात्राणां क्रमवतीनां क्रमोल्लेखः, स चाबाधितत्वादेवानारोपितो बुद्धिस्वभावभूतः । इत्थं क्रमवतीभिः पूर्वबुद्धिभिस्तादृश एव संस्कारो जन्यते, अनुभवसंस्कारयोः समानविषयत्वेनैव कार्यकारणभावात् । इत्थञ्च तादृशसंस्कारवशात् तादृश एवोत्तरोऽनुभव इत्यनादौ संसारे बीजाङ्कुरन्यायेनानुभववासनयोः कार्यकारणभावः, यतश्चैवं क्रमोल्लेखानुषङ्गेणैवासावनुभवो वासनावशादुपजायते, अतो दीर्घप्लुतादिषु पदवाक्यादिषु च कालपरिमाणभेदनिवर्तनचतुरैव सा बुद्धिरित्येतद् दूषयितुमाह—**क्रमोल्लेखानुषङ्गेणे**ति ।

अयमर्थः—तस्यां बुद्धौ पदार्थमात्राभिरनुभववशाद् यद् बीजं वासनारूपं संस्कारस्वभावमाहितम् । तत्किं स्वाश्रयाद् बुद्धेर्व्यतिरिक्तमुताव्यतिरिक्तमिति द्वयी गतिः । व्यतिरेके तस्यास्तेन न किञ्चित् कर्तुं शक्यमसम्बन्धादिति कथं तद्वशाद् वर्णपदादिषु क्रमादिको व्यवहारः ? अव्यतिरेके पुनरपि सैवैका निर्विभागेति पदार्थमात्रावत् कथं कालव्यवहारं निर्वाहयेदिति संस्काररूपस्य क्रमवद्बुद्धिबीजस्य बुद्धेरन्यत्वानन्यत्वाभ्यां निर्वचनं कर्तुं न पार्यत इति रीत्या तुच्छमेव बुद्धौ वासनारूपबीजाधानाभिधानमिति । तस्यां बुद्धौ **क्रमोल्लेखानुषङ्गेण** क्रमनिष्ठा या विषयता तस्या निरूपकत्वस्य सम्बन्धेन यद्बीजं क्रमवत्संस्काररूपम् आहितम्, पूर्वानुभवेनेति शेषः । तस्य संस्काररूपस्य बीजस्य बुद्ध्यपेक्षया तत्त्वस्य अभेदस्य, नानात्वस्य भेदस्य वा, निरुक्तिर्निर्वचनं नावतिष्ठते । यद्वा स्वत एकत्वस्य नानात्वस्य वा निर्वचनं नावतिष्ठते । एतच्चोपपादयिष्यतेऽनुपदमेवैतत्कारिकाया भावनिरूपणावसरे । युक्त्यभावान्न प्रसिध्यतीति योजना ।

अयं भावः—इह या कालेन व्यवहितानामतीतानां पदार्थमात्राणामसत्त्वेनानुपाख्येयरूपाणां पूर्वासु बुद्धिषु क्रमोपग्रहे उपयुक्तसामर्थ्यानां सामिस्पर्शिनी = अर्धसम्बन्धवती अव्यक्तरूपयोगवती, अत एव न तासां पदार्थमात्राणां रूपोपग्रहेणानुभव इवोल्लेख्या वासना, यतस्तस्यास्तत्त्वं = स्वरूपं बीजानामिव व्यपदेशातीतम् ।

कुतःस्तत्र विरुद्धफलानां मात्रोपहितानामात्म शक्तिबीजानामेकस्यां बुद्धौ लौकिकमेकत्वं लौकिकं वा नानात्वं निर्वक्तु' न शक्यते ? कथं हि विरुद्धात्मकमनवयवमेकं वस्तु स्यादनेको वा विरुद्ध आत्मा कथमेकस्य प्रकल्पकः ।। २६ ।

कालव्यवहारं कथं निर्वाहयेदिति तत्त्वनानात्वाभ्यां निर्वचनं बुद्धेः कर्तुं न पार्यत इति यत्किञ्चिदेतत् ।।२६।

**भावनासमये त्वेतत् क्रमसामर्थ्यमक्रमम् ।**
**व्यावृत्तभेदो येनार्थो भेदवानुपलभ्यते ।।२७।**

भेदभावनानुगतबुद्धीनामेकत्वेन व्यवहरतामनादिना मिथ्याभ्यासेन विहितसमवायानामेकस्यां बुद्धावव्यतिरिक्तास्वनपायोपायिनीषु सर्वमात्रासु क्रमाख्यायाः

पुनश्चातकाण्डकललवद्विभक्त एव युक्त इति प्रतिपादयितुमाह—भावनेति । ब्रह्मकाण्डे सर्वशङ्कानिवारणपूर्वकं स्फोटस्वरूपं निरूपितमेव । तस्मादेतद्-

---

तथा हि—यथा व्रीह्यादिबीजानां तत्त्वमङ्कुरनालकाण्डादिरूपमप्यव्यक्तत्वेनाङ्कुरादिव्यपदेशातीतम्, तथा पदार्थमात्राणा क्रमैर्विषयभूतैः क्रमवदपि वासनायास्तत्त्वमव्यक्तत्वेन क्रमव्यपदेशातीतम् । कुत इति चेत्, तत्र बुद्धौ परस्परविरुद्धपदार्थमात्रोपहितानाम्, अत एव विरुद्धानुभवरूपफलजनकानां बुद्धिशक्तिरूपाणा वासनाबीजानामेकस्यां बुद्धौ लौकिकमेकत्वं लौकिकं वा नानात्वं निर्वक्तुं न शक्यते ।

कथं हि वस्तुगत्या एकमनवयवं वस्तु परस्परविरुद्धपदार्थमात्राविषयकानुभवरूपविरूद्धफलजननेन कार्यरूपतया विरुद्धात्मकं स्यात् ? अनेको वा पदार्थमात्रा इव परस्परविरुद्धो वासनारूपस्य बीजस्यात्मा कथमेकस्यानवयवस्य प्रकाशमात्रात्मकस्य बुद्धिस्वरूपस्य प्रकल्पकः ? नह्यनेकमेकस्यानवयवस्य प्रकल्पकं लोके दृष्टमिति ।

एवञ्च क्रमवद्बुद्धिबीजत्वेन प्रकल्पितस्य क्रमवतो वासनातत्त्वस्यैकत्वान्यत्वाभ्यामनिर्वाच्यत्वे न तद्वस्तुभूतमिति न ततः क्रमवद्बुद्धिजननप्रत्याशा इति हृदयमिति ॥ २६ ।

एवं कालक्रमं बुद्धिक्रमं वादाय वस्तुतोऽक्रमस्य पदरूपस्य वाक्यरूपस्य वा स्फोटस्य क्रमवत्त्वासंभवे उपपादिते पुनरप्यविभक्तवर्णरूपं चातकाण्डकललमिवाविभक्त एकः पदस्फोटो वाक्यस्फोटो वा युक्त इति प्रतिपाददितुमाह— **भावनासमय** इति ।

अयमर्थः—ब्रह्मकाण्डे सर्वशङ्कानिवारणपूर्वकं स्फोटस्वरूपं निरूपितमेव । तस्मादेतद्वाक्यमक्रमं स्फोटस्वभावमेकं वाचकम् । स्वप्रतिपाद्यवाक्यार्थस्य पदार्थघटितत्वभावनाऽवसरे तु पदार्थप्रतिपादकत्वेन कल्पितपदरूपोपाधिवशात् क्रमसामर्थ्यम्, क्रमे सामर्थ्यं शक्तिर्यस्य तत् क्रमसामर्थ्यमवगतम् । येनार्थो वाक्यार्थरूपो वाच्यस्वरूपो व्यावृत्तावयवभेदोऽखण्ड एव सन्नपि भावनापरिकल्पितपदार्थरूपोपाधिवशादवयवभेदवानिवोपलभ्यते, न परमार्थत इति ।

**शक्तेः सामर्थ्यमविद्यमानं प्रकल्प्यते क्रमप्रसिद्धये। तद्व्यावृत्तभेदोऽपि सर्वो प्रा (सर्वो वाक्यरूपः) शब्दाख्योऽर्थो विरुद्धधर्मक्रमरूपोपग्रहेणासतामपि भेदेन प्रयुक्त इवोपलभ्यते।**

**तथाहि—ऊर्ध्वमधस्तिर्यगित्येकत्वेऽपि दिशा यथायथं विनिविष्टभावनाविशेषाः सर्वप्राणिनः। गुरुत्वादियुक्ता लोष्टादयोऽपि नात्मवत् प्राणिनां भावनासमयमनुवर्तन्ते। एकं तु वाक्यं प्रतिपद्यमानस्यासदपि नित्यत्वादत्यन्तनानात्वं व्यवहारेण॥ २७।**

वाक्यमक्रमं स्फोटस्वभावमेकं वाचकम्। स्वपदार्थभावनावसरे तूपाधिवशात क्रमसामर्थ्यं क्रमे सामर्थ्यं शक्तिर्यस्य तत् क्रमसामर्थ्यमवगतम्। येनाथ

---

अयं भावः—वस्तुत एकत्वेनोपलक्षितं स्वगतवर्णपदादिभेदशून्यं यद्वाक्यं तेन लोके व्यवहरताम्, तथापि तत्राध्यारोपितपदभेदभावनानुगतबुद्धीनाम्, अत एवानादि पूर्वेण पूर्वेण वाक्ये पदभेदाध्यारोपलक्षणेन मिथ्याऽध्यासेन वाक्ये कल्पितपदसमवायानां पुंसामेकस्यां स्वगतभेदशून्यायां निरवयवत्वेनैव चापायोपजनशून्यायां नित्यायां बुद्धौ गोचरीभूतासु बुद्धिस्वभावभूतासु बुद्धितोऽव्यतिरिक्तासु, अत एव परस्परमप्यव्यतिरिक्तासु, अनपायोपायिनीषु=अपायोपजनरहितासु, अपायो विनाशः, उपाय उपगमः, उत्पत्तिस्तद्रहितासु, सर्वासु पदार्थमात्रासु=पदार्थरूपेषु विषयेषु—अत्र मीयत इति व्युत्पत्त्या मात्रा विषयः, बुद्धिगतत्वेन प्रतीयमानक्रमाख्यशक्तेरनुकूलं सामर्थ्यं यद्यपि नास्ति, बुद्धिगोचरीभूतानां पदार्थमात्राणां वस्तुतोऽक्रमत्वात्, तथापि बुद्धौ क्रमप्रसिद्धये तत्कल्प्यते पदार्थमात्रास्वविद्यमानमपि। ततश्च वस्तुगत्या व्यावृत्तभेदोऽपि=स्वगतवर्णपदभेदशून्योऽपि सर्वो वाक्यरूपः शब्दाख्य एकोऽनवयवः पदार्थः स्वविरुद्धसावयववस्तुधर्मस्य क्रमरूपस्योपग्रहेण स्वस्मिन्नसतापि भेदेन संप्रयुक्त इव=भेदवानिव उपलभ्यते।

तथा हि—दृश्यते लोकेऽसताप्यध्यारोपितेन भेदेनाभिन्नस्यापि भिन्नत्वव्यवहारः। तद्यथा—वस्तुतो दिश एकत्वेऽप्यवधिविशेषाध्यारोपेण विनिविष्टदिग्भेदभावनाविशेषाणां सर्वेषां प्राणिनामूर्ध्वमधस्तिर्यगिति दिग्भेदव्यवहारो लोके दृश्यते। किञ्च, लक्षणप्रमाणाभ्यां वस्तुतत्त्वज्ञानम्, न तु भावनाविशेषात्।

तथा हि—यथा नित्यो निरवयव आत्मा जायते नश्यति स्थूलः कृशो गौरः कृष्ण इत्यादिकं प्राणिनां भावनासमयं नानुवर्तते, नोत्पत्त्यादिधर्मा भवति, तथा गुरुत्वादियुक्ता उद्रिक्ततमःकार्या लोष्टादयोऽपि 'इदं लोष्टमस्माल्लोष्टाल्लघु' इत्यादिकं प्राणिनां भावनासमयं नानुवर्तन्ते, लाघवं ह्युद्रिक्तसत्कार्यस्य तेजसो धर्मः, न तूद्रिक्ततमःकार्यस्य लोष्टस्य। "गुरुवरणकमेव तमः" (सांख्यका० १३) इत्युक्तत्वात्। लोष्टे लघुत्वस्याविद्यमानस्यापि व्यपदेशस्तु अपकृष्टगुरुत्वमपेक्ष्येति।

वाच्यस्वरूपो व्यावृत्तभेदोऽखण्ड एव पदार्थोपाधिवशाद्भेदवानिवोपलभ्यते, न परमार्थतः ॥ २७ ।

**पदानि वाक्ये तान्येव वर्णास्ते च पदे यदि ।**
**वर्णेषु वर्णभागानां भेदः स्यात् परमाणुवत् ॥ २८ ।**

यस्य पुनस्तानि पदान्येवोपलभ्यमानानि वस्तु सन्ति वाक्येऽभिमतानि, न तद्व्यतिरिक्तमेकमनंशमस्त्यखण्डस्वभावं वाक्यम्, तस्य पदान्यपि न वर्णव्यतिरेकेण विद्यन्ते। वर्णा अपि भागवन्त इति प्रकर्षप्राप्तो भेद एव सर्वत्र स्यादिति पदवादिनं दूषयितुमाह—पदानीति ।

---

एवञ्च यथा नित्ये निरवयव आत्मन्यसन्तोऽप्युत्पत्त्यादयो धर्माः प्राणिनां भावनासमयमनुरुध्य प्रवृत्तेन व्यवहारेण तत्र गोचरीक्रियन्ते, यथा च लोष्टेऽविद्यमाना अपि लघुत्वादयः, एवमेवैकं नित्यमक्रमं वाक्यं प्रतिपद्यमानस्य पुरुषस्य मते वाक्ये नित्यत्वादत्यन्तमसदपि स्वगतनानात्वं भावनासमयप्रयुक्तव्यवहारेण गोचरीक्रियत इत्येवमक्रमस्यापि वाक्यस्य भावनासमयेऽध्यारोपितक्रमवत्तामादाय क्रमवत्स्वविषयकबुद्धिजननसामर्थ्यमवगतं भवतीति ॥ २७ ।

यस्य पुरुषस्य मते तु वाक्यात् पृथक् स्वतन्त्राणि यानि पदान्युपलभ्यन्ते, तान्येव वाक्य उपलभ्यमानानि वस्तुसन्ति समुदितानि वाक्यम्, न तु तद्व्यतिरिक्तमेकमनंशमखण्डस्वभावं वाक्यमस्ति, तस्य पुरुषस्य मते पदान्यपि न वर्णव्यतिरेकेण विद्यन्त इति वक्तुं शक्यते, न्यायस्य समानत्वात्। एवं वर्णा अप्यनुभववशाद् भागवन्त इति न स्वभागसमुदायातिरिक्ता वर्णा अपि सिध्येयुः इत्येवमवयवकल्पनाधारायाः प्रकर्षप्राप्तो भागभेद एव सर्वत्र स्यात्, न तु अवयवधाराया विश्रान्तिः क्वचिदपीति रीत्या पदसमुदायो वाक्यमिति वादिनं दूषयितुमाह—**पदानि वाक्ये तान्येवेति** ।

यानि वाक्यात् पृथक् स्वतन्त्राणि पदान्युपलभ्यन्ते, तान्येव समुदितानि वाक्ये यदि, तथा ये पदात् पृथक् स्वतन्त्रा वर्णा उपलभ्यन्ते, त एव समुदिताः पदे यदि, तदा वर्णेष्वपि वर्णभागानां भेदः स्यात्, परमाणुवत् परमाणुरिव। अत्रेवार्थे वत्शब्दो निपातः। प्रयुज्यते च पर्वतो वह्निमान् धूमान् महानसवदिति। न त्वत्र वतिप्रत्ययः, प्रथमान्तात्तद्विधायकाभावात्। यथा–अवयविनो घटादेर्भागभेदकल्पनायां क्रियमाणायां परमाणुरवशिष्यते, तथा वाक्यस्यापि भागभेदकल्पनायां परमाणुवदव्यपदेश्योंऽशः परिशिष्येदिति पदमपि न वस्तुसत सिध्येदिति योजना ।

अयमर्थः – यथाऽवयवव्यतिरिक्तस्यावयविन एकस्यानङ्गीकरणेऽवयवानामपि भागवत्त्वाद् भागकल्पनाया अतिप्रकर्षात् परमाणुनामवशेषः । तेषामपि केषाञ्चिन्मते

यथावयवव्यतिरेकेणावयविन एकस्यानङ्गीकरणेऽवयवानामपि भागवत्त्वाद् भागपरिकल्पनाया अतिप्रसङ्गात् परमाणूनामवशेषः। तेषामपि केषाञ्चिन्मते षट्केन युगपद्योगात् सांशतायामणीयसोऽप्यवयवस्यानुपपत्तिः। अतश्च व्यपदेश्यपदार्थविरहितं निरीहमेव जगदापतितम्॥ १८॥

**भागानामनुपश्लेषान्न वर्णो न पदं भवेत्।**
**तेषामव्यपदेश्यत्वात् किमन्यदपदिश्यताम्॥२९॥**

**यदि वाक्ये तान्येव पदानि यानि पृथगुपलब्धानि वर्णाश्च ये पृथगुपलब्धास्त एव समुदिता यदि पदेष्वाश्रीयन्ते, न च वर्णेभ्यो वाक्यपदयोरात्मा व्यतिरिक्त इति प्रतिज्ञायते। तथा सति वर्णेष्वपि यावदपकर्षपर्यन्तगतिस्ताव-**

**तथैव वर्णभागानामनुपश्लेषान्न वर्ण एकः कश्चित् स्यात्। तदभावे पदमपि न भवेदिति प्रतिपादयितुमाह—भागानामिति।**

---

प्राच्यादयश्चतस्रो दिशः, ऊर्ध्वमधश्चेति द्वे दिशौ इति दिक् षट्केन युगपद्योगात् सांशत्वकल्पनायामणीयसोऽप्यवयवस्यानुपपत्तिः, अतश्च 'इदं सत्' इति व्यपदेश्यपदार्थविरहितं व्यवहारागोचरीभूतं निरीहमेव जगदापतितमिति।

किञ्च, प्रागुक्तरीत्या वर्णभागानामसत्त्वेन वर्णेऽनुपश्लेषान्न वर्ण एकः कश्चित् स्यात्, तदभावे पदमपि न भवेदिति प्रतिपादयितुमाह—**भागानामनुपश्लेषादि**ति।

तदेवं भागानामसत्त्वेन वर्णे पदे वानुपश्लेषान्न वर्णो न पदं भवेत्। किञ्चैवं तेषां वर्णपदादीनामसत्त्वेनाव्यपदेश्यत्वात् किं तदन्यदस्ति यद् वाचकत्वेन व्यपदिश्यतामिति योजना।

अयमर्थः—उक्तरीत्या वाक्ये पदरूपाणां भागानां पदे च वर्णरूपाणां भागानामसत्त्वात् पदव्यपदेशविरहाद् वाक्यव्यपदेशविरहाच्च पदवाक्ययोः सखण्डत्वपक्षे एतद्व्यतिरिक्तं किं वाचकमपदिश्यताम्। अखण्डस्यानङ्गीकरणात् सखण्डानां पदानामुक्तेन न्यायेन (युक्त्या) अनुपपत्तेरिति न कश्चित् पदरूपो वाक्यरूपो वा शब्दो वाचकः स्यात्। अस्ति च वाक्यार्थस्य प्रतीतिः, सा च सनिमित्ता भवितुमर्हतीति मत्वा एक एव नित्यः पदाभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो जातिस्फोटो वा पदरूपो वाक्यरूपो वा वाचकः स्वीकार्य इति सिद्धान्त इति।

अयं तु कारिकाद्वयस्यैतस्य निगूढोऽभिसन्धिः—यदि वाक्ये तान्येव पदानि यानि वाक्यात् पृथगुपलब्धानि, वर्णाश्च ये पृथगुपलब्धास्त एव समुदिता यदि पदेष्वाश्रीयन्ते, न च वर्णेभ्यो व्यतिरिक्तो वाक्यपदयोरात्मा इति प्रतिज्ञायते, तदा वर्णेष्वपि यावदपकर्षपर्यन्तगतिस्तावद्वर्णभागानां भेदः प्रसज्यते, यथा घटादेरवयवानां परमाणुपर्यन्ते भेदः। तथा

द्वर्णभागानां परमाणुकल्पो भेदः प्रसज्यते। तथा च क्रमवतामलब्धयौगपद्यानां भागानामन्योन्यासंस्पर्शान्न वर्णो नाम कश्चिदेकः पदं वा विद्यते। अव्यपदेश्यत्वाद्धि तेषु प्रतिभागं व्यवहाराभावात् किं तदेकमस्ति शब्दरूपं यदिदं तदित्युपाख्यायेत। एवं तर्हि नानिर्देश्यभागभेदरूपेण बहिरनुपसंहारेण शब्दतत्त्वेन व्यवहारोऽस्तीति ॥ २६।

अतश्चोक्तरीत्या भागानामसत्त्वाद् व्यपदेशविरहात् किमत्र वाचकमेतद्व्यतिरिक्तमन्यदपदिश्यताम्। अखण्डस्यानङ्गीकरणात् पदानामुक्तेन न्यायेनानुपपत्तेरिति न कश्चिद् वाचकः स्यात्। अस्ति च वाक्यार्थस्य प्रतीतिः। सा सनिमित्ता भवितुमर्हतीत्येक एव नित्यः पदाभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो जातिस्फोटो वा वाचकोऽङ्गीकार्य इति सिद्धान्तः॥ २९।

**यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम्।**
**तदाहुरपरे शब्दं तस्य वाक्ये तथैकता ॥३०।**

एवं तावद् बहीरूपं व्यक्तिस्फोटं जातिस्फोटं वा वाचकमाश्रित्य वाक्यं व्याख्यातम्। इदानीमन्तरेवानवयवं बोधस्वभावं शब्दार्थमयं निर्विभागं शब्दतत्त्वमिति यद् गीतं तदेव नादैर्बहिः प्रकाशितं वाक्यमाहुराचार्या इत्यान्तरं बुद्ध्यनुसंहृतिरित्युद्दिष्टं व्याख्यातुमाह—यदन्तरिति।

---

चोत्पादविनाशयोः क्रमवतामलब्धयौगपद्यानां वर्णभागानां पदभागानां च परस्परमसम्बन्धान्न वर्णो नाम कश्चिदेकः पदं वाक्यं वा विद्यते। अपकर्षपर्यन्तानाञ्च परमाणुकल्पनां भागानां नित्यत्वेन यौगपद्यसम्भवेऽप्यतीन्द्रियत्वेनाव्यपदेश्यत्वात् तेषु प्रत्येकं व्यवहाराभावात्, परमाणुकल्पानामपि भागानाम् 'षट्केन युगपद्योगात्' इति न्यायेनानवधिभागकल्पनायां तु पदरूपाणां वाक्यरूपाणां वा शब्दानामसत्त्वादेव च किं तदेवमस्ति शब्दरूपं पदं वाक्यं वा, यदिदं तदित्युपाख्यायेत।

तदेवं पदरूपस्य वाक्यरूपस्य वा शब्दस्य भागभेदा अतीन्द्रियत्वेनानिर्देश्या उत्पादविनाशयोः क्रमवन्तश्चेति बहिः कस्मिंश्चिदेकस्मिन्नवयविन्यनुपसंहृताः=उपसंहारो यौगपद्येन भानं तद्विरहिता इति न तादृशभागभेदवता शब्दतत्त्वेन लोके व्यवहारः सम्भवतीत्यखण्ड एव पदरूपो वाक्यरूपो वा व्यक्तिस्फोटो जातिस्फोटो वाङ्गीकरणीय इति २८–२९॥

एवं तावद् बहीरूपं बोधातिरिक्तं व्यक्तिस्फोटं जातिस्फोटं वाऽखण्डं वाचकमाश्रित्य वाक्यस्वरूपं व्याख्यातम्। इदानीं कार्यकारणसंघातस्यान्तरेवानवयवं बोधस्वरूपं वासनात्मना शब्दार्थोभयात्मकमपि तयोस्तदानीमव्यक्तत्वेन निर्विभागमिव स्वरूपेण च निर्विभागमेव शब्दतत्त्वं पदरूपं वाक्यरूपं वेति शास्त्रेषु यद् गीतं तदेव तत्तत्स्थानकरणनिष्पादितैर्नादैर्बहिः

**बाह्यस्याक्षरचिह्नादिवच्छब्दव्यपदेशमात्रायुक्तस्य यदुदयास्तमयनिबन्धनं वाचस्तत्त्वमक्षरचिह्नादिवदेवातथाभूतैः क्रमवद्भिर्भागैरक्रमं प्रकाश्यते, तदेव मुख्यं शब्दस्यात्मरूपमित्यपरे मन्यन्ते ।**

---

प्रकाशितं वाक्यमाहुराचार्या इत्यान्तरं बुद्ध्यनुसंहृतिरित्युद्दिष्टं वाक्यस्वरूपं व्याख्यातुमाह—**यदन्त**रिति ।

अत्र पुण्यराजसम्मतः 'नादैरेकं प्रकाशितम्' इति पाठोऽत्रत्यतट्टीकादर्शनात् प्रतीयते । भरतमिश्रकृतस्फोटसिद्धिग्रन्थदर्शनेन तु 'भागैरेकं प्रकाशितम्' इति पाठो भाति ।

तथा हि भरतमिश्रः स्फोटसिद्धौ स्फोटदर्शनभेदान् व्याचक्षाण इमामेव वाक्यपदीयकारिकां मनसि कृत्वाह—"बुद्ध्यनुसंहारमन्तस्तत्त्वमेकं भागैः प्रकाशितमपरे शब्दमाहुः" (पृ० २५–२६) इति । तेनापि स्ववाक्ये भागैरित्युपादानात् तस्य पाठस्योपादेयत्वं पुरातनत्वं च द्रढीयः कृतं भवति ।

एष त्वत्र निर्णयः—अस्याः कारिकायाष्टीकाया हरिकृतायाम्—'अतथाभूतैः क्रमवद्भिर्भागैरक्रमं प्रकाश्यते" इति व्याख्यानदर्शनेन भागैरित्येव पाठो ग्रन्थकृतोऽभिप्रेत इति । अत्र कारिकायां 'तु' शब्दः पूर्वपक्षव्यावृत्त्यर्थः ।

अयमर्थः—यद् बहीरूपं व्यक्तिस्फोटं जातिस्फोटं वा वाचमाश्रित्य वाक्यस्वरूपमुक्तम्, तन्न; किन्तु यद् अन्तः, हृदयान्तरवस्थितं बोधरूपं शब्दतत्त्वम्, एकमक्रममप्यतथाभूतैः क्रमवद्भिर्भागैः, नादरूपैः प्रकाशितम्, तदेवापर आचार्याः शब्दं पदस्वरूपमाहुः; तथा तस्य पदस्वरूपस्य शब्दस्यैकतां स्वगतसजातीयभेदशून्यता तथा वाक्येऽपि योग्यत्वात्तादृशीमेवैकतामाहुः, तत्र तयोः सजातीयभेदशून्यता तदेवेदमिति प्रत्यभिज्ञायमानत्वात्, स्वगतभेदशून्यता च प्रत्यभिज्ञायमानत्वेन नित्यत्वात्, नित्यत्वेन निरवयवत्वात्, निरवयवत्वेन च स्वधर्मस्य क्रमस्याभावात्, कालधर्मस्य नादधर्मस्य बुद्धिधर्मस्य च क्रमस्य प्रागेव सप्रपञ्चं प्रत्याख्यानादिति ।

तदेवं वाक्यविचारे प्रस्तुते तस्यान्तरस्य बोधरूपस्यैकता निरंशतैवानया कारिकया प्रतिपाद्यत इति तदेव सत्यत्वाद् वाक्यमस्तु, किं तद्व्यतिरिक्तेन कल्पितवर्णपदभेदवता कल्पितेनासत्येन वाक्येनेत्यर्थ इति ।

अयं भावः—बाह्यस्य शब्दस्य पदरूपस्य वाक्यरूपस्य चाक्षरचिह्नलिप्यादिवद् गौण्या वृत्त्या शब्दव्यपदेशमात्रयुक्तस्य, न तु वस्तुगत्या शब्दव्यपदेशार्हस्य, वर्णपदसमूहरूपतयाऽनुभूयमानस्य तस्य वर्णानां पदानां च क्षणिकत्वेन समूहासंभवेन स्वरूपासंभवात्, रेखागवयादिवत् कल्पितस्यासत्यस्य नित्यरवयवपदाभिव्यक्तय उदयमानस्य तेनैव हेतुना = अभिव्यज्यमानत्वेनैव हेतुना यदुदयास्तमयनिबन्धनं वाचस्तत्त्वमक्षरचिह्नलिप्यादिवदेवातथाभूतैः क्रमवद्भिर्भागैर्नादरूपैरक्रममपि क्रमवत्तया प्रकाश्यते, तदेव मुख्यं शब्दस्यात्मरूपमित्यपरे मन्यन्ते ।

**स चैष बुद्ध्यनुसंहारलक्षण आन्तरः शब्दात्मा तत्र समाम्नातः। तस्य चेत्थम्भावे विच्छिन्नपदरूपप्रविभागदर्शन एक एवायं वाक्याख्यः शब्दो यथैव वर्णपदाख्य इति प्रसिद्ध एष समाम्नाये मार्गः ।। ३० ।**

वाक्यविचारे प्रस्तुते तस्यान्तरस्यैकता निरंशतैव प्रतिपाद्यत इति तदेव सत्यत्वाद्वाक्यमस्तु किं तद्व्यतिरिक्तेनासत्येन वाक्येनेत्यर्थः ।। ३० ।

**अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाश्यते ।**
**एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ ।। ३१ ।**

**यथैवाव्यपदेश्यशब्दभागोपायमन्तर्निवेशि वाक्तत्त्वमभिन्नं मुख्यः शब्दात्मेति प्रसिद्धं तथा व्यतिपातिनीषु व्यावहारिकीषु बाह्यास्वर्थमात्रास्वव्यप-**

न केवलं वाक्यं तथा यावद्वाक्यार्थोऽप्यखण्डः प्रतिभात्मकः पदार्थभागैरभिव्यज्यत इति प्रसङ्गादाह—अर्थभागैरिति ।

---

स चैष बुद्धावनुसंधीयमानरूपत्वेन बुद्ध्यनुसंहारलक्षण आन्तरः शब्दात्मा वाक्याख्योऽत्र प्रकरणे उद्देशग्रन्थे वाक्यविकल्पावसरे समाम्नातः। तस्य च पदरूपस्य वाक्यरूपस्य वा शब्दस्य नित्यत्वे निरवयवत्वेऽक्रमत्वे चैवमभ्युपगते वर्णपदयोरिव वाक्येऽपि पदरूपावयवप्रविभागदर्शनस्य विच्छेदादेक एवायं वाक्याख्यः शब्द इति ।

स एष आन्तराखण्डबोधस्वरूपवाक्यस्फोटप्रतिपत्तिफलको भागः समाम्नाये प्रसिद्धः। तेषां च कतिपये मन्त्राः स्फोटप्रतिपादनपरा उदाहृता व्याकरणमहाभाष्ये । तद्यथा—"चत्वारि शृङ्गा त्रयो अस्य पादाः" ( ऋक् ४।५८।३ ) इति । "चत्वारि वाक् परिमिता पदानि" ( ऋक् १।१६४।४५ ) इति, 'सक्तुमिव तितउना पुनन्त" ( ऋक् १०।७१।२ ) इति च पस्पशाह्निकं द्रष्टव्यम् ॥ ३० ।

न केवलं वाक्यमेवाखण्डं वर्णपदरूपभागरहितम् किं तर्हि वाक्यार्थोऽप्यखण्डः प्रतिभात्मकः पदार्थरूपभागरहितोऽपि बुद्ध्या प्रकल्पितैः पदार्थभागैरनृतैरभिव्यज्यत इति प्रसङ्गादाह—अर्थभागैरिति ।

अयमर्थः—तेषाम् आन्तरं बोधस्वरूपमखण्डं वासनारूपेण शब्दार्थोभयात्मकं वाक्यमिति वादिनामाचार्याणा मते तथा वाक्यवद् वाक्यार्थोऽप्यान्तरोऽखण्डः प्रतिभात्मकः, अर्थभागैः पदार्थभागैः, बुद्ध्या प्रकल्पितैरनृतैः प्रकाश्यते = अभिव्यज्यते । यदेवं तौ शब्दार्थौ वाक्यवाक्यार्थापृथक्स्थितावभिन्नौ । यतो वस्तुत एकस्यैवात्मनो बोधस्वरूपस्य सामान्यस्य तौ भेदौ विशेषाविति । तयो. परस्परमभिन्नत्वञ्च तदभिन्नाभिन्नस्येति न्यायेनेति । शब्दार्थयोर्बहिःस्थितयोरौपाधिकभेदप्रतिभासेऽप्यान्तरेण बोधस्वरूपेण तयोरभेद एवेति तात्पर्यम् ।

**देश्योपचीयमानविशेषं क्रमेण प्रत्यर्थनियतमुत्पद्यमानं बुद्धितत्त्वं बाह्यवस्तुतत्त्वेनैव प्रत्युपभुज्यते ।**

**नित्यपक्षे वा क्रमशक्तिरूपनिर्भासमात्रया विवर्तते । नहि प्रतिलब्धार्थरूपविपर्यासं बुद्धिमन्तरेण बाह्यं वस्तु व्यावहारिकीष्वर्थक्रियासु समर्थं भवति । तस्मादन्तर्निविष्टरूपेणार्थेन सर्वो व्यवहारः क्रियते ।**

**अन्ये तु संक्रान्तविषयरूपाया बुद्धेरात्मनि समवायाद् बुद्धिरूपनिवेशेन तद्रूपतामिवापन्ने बोधात्मके पुरुषे पुरुषार्थस्य प्रसिद्धिं मन्यन्ते ।**

---

अयं भावः—द्वौ शब्दात्मानावाभ्यन्तरो बाह्यश्चेति । तत्राभ्यन्तरो बोधस्वरूपोऽभिव्यङ्ग्यो, बाह्यस्तु स्थानकरणाभिघातजन्यो नादरूपोऽभिव्यञ्जकः । तत्र यथैवाव्यपदेश्यशब्दभागोपायम् = असत्त्वेनाव्यपदेश्यः, इदं तदित्यनिर्देश्यः, शब्दभागरूप. पदात्मकभागरूपो ग्रहणोपायो यस्य तत् तथाभूतं वाक्यस्वरूपं बोधस्वरूपेण बुद्ध्यन्तर्निविष्ट वाक्यरूपं वाक्तत्त्वं स्वरूपतोऽभिन्नं मुख्यः शब्दात्मेति प्रसिद्धम्, तथाऽर्थयोरपि बहिरन्तर्निविष्टयोर्द्वयोर्मध्ये बाह्यासु व्यतिपातिनीषु = परस्परं व्यावृत्तरूपास्वनियतरूपासु व्यवहारगोचरीभूतास्वर्थमात्रासु = मात्राशब्दोऽत्र स्वरूपपरः, विषयभूतासु ग्राहकत्वेनोपजायमानम्, अव्यपदेश्योपचीयमानविशेषम् = असत्त्वेनाव्यपदेश्याः, पदार्थावयवग्रहणक्रमेणोपचीयमाना अवयवविशेषा यस्य = बुद्धितत्त्वस्य तत्तथाभूतं प्रत्यर्थं नियतं पदार्थावयवग्रहणक्रमेणोत्पद्यमानमप्यभिन्नं बुद्धितत्त्वं बाह्यस्तु गोचरतया बाह्यवस्तुतादात्म्येनैव प्रत्युपभुज्यते । उपभोगस्य सुखदुःखान्यतरसाक्षात्काररूपस्य बुद्धिधर्मत्वाद् बाह्यवस्तूना च बुद्धावसंनिधानात् । इदं सर्वस्यार्थजातस्यानित्यत्वपक्षे उक्तम् ।

सत्कार्यवादानुरोधेनार्थनित्यत्वपक्षे तु नित्यत्वेनाक्रमोऽप्यर्थः क्रमेण स्वप्रत्ययभासानुकूला या बुद्धितत्त्वे शक्तिस्तद्रूपा वा निर्भासमात्रा = मात्रा स्वरूपम्, तद्रूपेण विवर्तते । अर्थस्यैव स्वप्रत्ययभासरूपेणाध्यारोपितक्रमरूपेण विवर्त इति यावत् । नहि बाह्यं वस्तु विपर्यासेनाध्यासरूपेण बुद्धितादात्म्यमनवाप्य व्यावहारिकीष्वर्थक्रियासु समर्थं भवति । अप्रतिबुद्ध्यमानस्य तादात्म्येनाध्यासिकेन बुद्धिमनारूढस्यार्थक्रियाजनकत्वादर्शनात् । तस्माद् वासनात्मनाऽन्तर्निविष्टरूपेण, अत एव प्रतिबुध्यमानेनार्थेन सर्वो व्यवहारः क्रियते ।

एवञ्च बौद्ध एव शब्दो वाचको बौद्ध एव चार्थो वाच्य इति स्थितम् ।

अन्ये तु सांख्यमतं कयाचिद् विधयाऽनुसरन्तो बुद्धेः स्वच्छत्वात् तत्र विषयस्य प्रतिबिम्बरूपे संक्रमे सति संक्रान्तविषयरूपाया बुद्धेरात्मनि स्वभावतो निर्मले प्रतिबिम्बरूपेण समवायात् = संबन्धात् बोधात्मके पुरुषे संक्रान्तार्थस्य बुद्धिरूपस्य प्रतिबिम्बरूपेण निवेशेन तादृशबुद्धिरूपतामिवापन्ने तादृशे पुरुषे सति पुरुषार्थस्य विषयदृष्टिरूपस्य भोगस्य पुरुषेऽसङ्गे प्रसिद्धिं मन्यन्ते । अर्थस्य बुद्धौ प्रतिबिम्बः, अर्थप्रतिबिम्बसहितायाश्च बुद्धेः पुरुषे प्रतिबिम्ब इति रीत्याऽसङ्गेऽपि पुरुषेऽर्थदृष्टिरूपो भोग इति । तदुक्तम्—

**प्रकाशस्वभावया बुद्धया चितिस्वरूपस्यार्थरूपस्य च प्रतिबिम्बक-योगेनोपग्रहे सम्भवति प्राप्तविषयरूपविपर्यासायामुपगृहीतपुरुषरूपायां बुद्धौ भोग्य-भोक्तृशक्त्योरत्यन्तविभक्तयोरत्यन्तसंकीर्णयोरविभागप्राप्ताविव सत्यां विभागः प्रकल्पते ।**

**[1]अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति ।**

**तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्ते [बुद्धेः] रनुकारमात्रया बुद्धिवृत्त्या विशिष्टज्ञानस्य प्रवृत्तिराख्यायते ।**

---

कस्मिंश्चिद् दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ इति । (योगवा० उपशम० ६१।१३)

किञ्च, न केवलं पुरुषेऽर्थप्रतिबिम्बवत्या बुद्धेः प्रतिबिम्बः, किन्तर्हि पुरुषस्याप्यर्थ-प्रतिबिम्बवत्या बुद्धौ प्रतिबिम्ब इति रीत्यापि पुरुषस्यार्थदृष्टिरूपो भोगः । अत एव पुरुष-प्रतिबिम्बवत्यां बुद्धावर्थं पश्यन्त्यां पुरुषोऽर्थं पश्यतीति व्यपदेशः । वस्तुतोऽसङ्गस्य पुरुषस्य न भोक्तृत्वं किन्तु बुद्धेरेव ।

एवञ्च प्रकाशस्वभावया स्वच्छया बुद्धया सह चितिस्वरूपस्यार्थस्वरूपस्य च प्रतिबिम्ब-द्वारकेण योगेनार्थरूपस्य चोपग्रहे = अनुकारे संभवति विपर्यासेन = मिथ्याज्ञानेन प्राप्तविषय-रूपायाम् उपगृहीतपुरुषरूपायाञ्च बुद्धौ भोग्यशक्तिभोक्तृशक्तयोरत्यन्तविभक्तयोरत्यन्तासंकीर्ण-योरविभागप्राप्ताविव सत्या विभागः = प्रत्यर्थं विभज्यमानो नानाविधो व्यवहारः प्रकल्पते = प्रसिध्यति ।

यतो भोक्तृशक्तिश्चितिरूपा नित्यत्वेनापरिणामिनी विभुत्वापरिच्छिन्नत्वाभ्या नीरू-पत्वेन च क्वचिदपि चोपाधौ बुद्धयादिरूपे परिच्छिन्नेऽप्रतिसंक्रमा = अप्रतिबिम्बिता अपि परिणामिन्यर्थे बुद्धितत्त्वेऽविद्याप्रयुक्ततादात्म्याध्यासरूपग्रन्थिवशेन प्रतिसंक्रान्तेव द्रष्टा बुद्धि-तत्त्वस्य वृत्तिमनुपतत्ययःपिण्ड इव दहनादिका वह्निवृत्तिम् ।

तस्याश्च प्राप्तचैतन्योपग्रहरूपायाः = गृहीतचैतन्यप्रतिबिम्बाया बुद्धेरनुकारमात्रया = अनुकरणरूपया बुद्धिवृत्त्या चित्प्रतिबिम्बवत्याऽर्थाकारया च विशिष्टज्ञानस्य = अर्थसंसर्ग-

---

१. इदं पञ्चशिखवाक्यं व्यासभाष्य इत्थं लिखितम्—"अपरिणामिनी हि भोक्तृशक्तिर-प्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योप-ग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" इति (२।२०)।

सर्वेषु च पक्षेष्वन्तर्निवेशिन इव [एव] प्राप्तानुसंहारात् शब्दादन्तर्निविष्ट-रूपेष्विव (ष्वेव) प्रतिसंहृतेष्वविभक्तेषु विभागरूपानतिक्रमेणार्थेषु गृह्यमाणेष्वेक एवायं परिसमाप्तिप्राप्तानुसंहारो बुद्ध्यात्मा प्रतिपादकप्रतिपत्तव्यशक्त्योरविभागेन पृथगात्मनोर्भेदशक्तिरूपापरित्यागमात्रया व्यवतिष्ठते । नित्यवादिनां त्वनागन्तुक-मनतिक्रान्तमनुपचयापचयम् ॥३१॥

तेषामान्तरवाक्यवादिनामाचार्याणां मते आन्तर एवात्रापि वाक्यार्थ इति बोद्धव्यम् । तौ च शब्दार्थावभिन्नावेकस्यान्तरस्य तत्त्वस्य सम्बन्धिनौ वस्तुतो बहिः स्थितौ भेदाविव प्रतिभासेते इति बोध्यमित्याह—एकस्यैवेति ॥३१॥

---

विषयकस्य सविकल्पकज्ञानस्य प्रवृत्तिः = व्यवहार आख्यायते । बुद्धिवृत्तिरेव सविकल्पकं ज्ञानं तेनैव च व्यवहारः, निर्विकल्पकं तु चिद्रूपं ज्ञानं संसर्गाविषयकं प्रातिपदिकार्थमात्र-विषयकमिति यावत् ।

तथा च सर्वोऽपि बाह्यः शब्दोऽनित्योऽन्तर्निविष्टस्याभिन्नस्य मुख्यस्य वाक्तत्त्वस्य विवर्तभूतः, बाह्यं च वस्तु सर्वं बुद्धेर्विषयभूतमनित्यं तत्तादात्म्यापन्नं च बुद्धितत्त्व प्रत्यर्थ-नियतमुत्पद्यमानमर्थव्यवहारगोचरीभूतमुपभुज्यत इत्येकः पक्षः ।

सत्कार्यवादानुरोधेन सर्वोऽप्यर्थो नित्यः । स च स्वप्रत्यवभासरूपेण विवर्तमानो व्यवह्रियते = उपभुज्यते चेति द्वितीयः पक्षः ।

स्वच्छाया स्वप्रकाशाया बुद्धौ प्रतिबिम्बितो बाह्योऽर्थो बुद्ध्या गृह्यमाणो व्यवह्रियते = उपभुज्यते चेति तृतीयः पक्षः ।

सर्वेष्वपि चैषु पक्षेषु यदा बहिरुच्चारितः शब्दः श्रोत्रेण गृह्यमाणः स्वपरिसमाप्तिकाले श्रोत्रद्वारेणैव बुद्धौ प्रविष्टस्तत्र प्राप्तानुसंहारः = प्राप्तप्रविलयः तदा बुद्धौ प्राप्तानुसंहारादन्त-र्निवेशिन एव शब्दाद् बुद्धावन्तर्निविष्टरूपेष्वेवार्थेषु गृह्यमाणेषु प्राक् शब्दाद् विभक्तरूपेणा-नुभवानन्तरं विभागरूपानतिक्रमेणैव वासनारूपेण बुद्धौ प्रतिसंहृतेष्वविभक्तेषु, एक एवायं बुद्ध्यात्मा शब्दार्थयोः परिसमाप्तौ स्वस्मिन् तयोः प्राप्तानुसंहारः शब्दार्थोभयरूपः प्रति-पादकप्रतिपत्तव्यशक्त्योः शब्दार्थनिष्ठयोरविभागेनोपलक्षितोऽपि पृथगात्मनोः शब्दार्थयोर्या भेदशक्तिः भेदरूपा = विभागरूपा शक्तिः तद्रूपापरित्यागमात्रयोपलक्षितो व्यवतिष्ठते । अविभक्तोऽपि वासनारूपशब्दार्थोभयविभागवानेव वर्तत इति यावत् ।

प्रागुक्तरीत्या शब्दार्थोभयनित्यत्ववादिना तूभयमनागन्तुकं नित्यम्, अत एवानु-पचयापचयमारोपितबहुविधावस्थाभेदप्रतीतावप्यनतिक्रान्तस्वभावमिति ॥३१॥

**प्रकाशकप्रकाश्यत्वं कार्यकारणरूपता ।**
**अन्तर्मात्रात्मनस्तस्य शब्दतत्त्वस्य सर्वदा ॥३२॥**

**अयमन्तर्मात्राशब्दोऽनपायिन्यपायिनीभ्यां द्वाभ्यां शब्दशक्तिभ्यामनुगतः। तस्यैतस्मिन्नात्मन्यविभक्तमपि प्रकाशकत्वेन प्रकाश्यत्वं विभक्तमिव प्रत्यवभासते। अन्योन्यानुविधायिरूपतया च कार्यकारणरूपता, तस्यादेशस्यान्तर्मात्रेत्येवमाख्यायमानस्य शब्दात्मनः सर्वदा।**

**सर्वदेति नास्यान्यः कालाध्वा विद्यते। भावाभावविभागाभावप्रतिपत्त्यर्थं**

ननु शब्दार्थौ वाच्यवाचकाविति प्रसिद्धम्। अतः कथं तयोरभेद इत्या-

---

ननु शब्दार्थौ वाच्यवाचकाविति प्रसिद्धम्। स च वाच्यवाचकभावः प्रकाश्यप्रकाशकभावपर्यवसायी। तथा चैकस्यैकदा कर्मकर्तृव्यपदेशविरोधात् कथं शब्दार्थयोरभेदः? किञ्च, शब्दार्थयोः प्रकाश्यप्रकाशकभावोऽर्थप्रकाशस्य कार्यत्वे शब्दस्य कारणत्वे च सत्येवोपपद्यते। सचायं कार्यकारणभावः शब्दार्थयोरभेदे न संभवति, शब्दस्य स्वप्रकाशहेतुत्वानङ्गीकारात्। शब्दस्य स्वप्रकाशत्वे हि शब्दश्रवणानन्तरमनुभूयमानस्तदर्थसंशयो नोपपद्येत इत्याशङ्क्याह—**प्रकाशकेति।**

तस्य प्रागुक्तरीत्या अखण्डस्याक्रमस्य, अन्तर्मात्रात्मनो बुद्ध्यन्तरवस्थिता या मात्रा मीयत इति व्युत्पत्त्या विषयस्तदात्मकस्य शब्दतत्त्वस्य शक्तिद्वययोगात् सर्वदा प्रकाशकप्रकाश्यत्वम्, एकस्मिन्नपि प्रकाश्यप्रकाशकभावः, कार्यकारणरूपता प्रकाश्यत्वेन कार्यता प्रकाशकत्वेन कारणता चेति योजना।

अयमर्थः—तस्य हि शब्दतत्त्वस्यान्तरस्य ज्योतीरूपस्य शक्तिभेदादयं प्रकाश्यत्वप्रकाशकत्वाभ्यां कार्यत्वकारणत्वाभ्यां च भेदप्रतिभासो न विरुद्धः। एतच्चादावेवोक्तमागमकाण्डे 'एकस्य सर्वबीजस्य' (श्लो० ४) इत्यादिनेति।

अयं भावः—योऽयं बहिःशब्दः श्रवणेनोपलभ्यते स न बाह्यः, किन्त्वन्तर्मात्राबुद्ध्यन्तरवस्थितो विषयरूपः, स चान्तर्मात्रारूपः शब्दो ज्योतीरूपोऽखण्डोऽक्रमोऽपि द्वाभ्यां शब्दशक्तिभ्यामनुगतः। तत्रैकाऽनपायिनी शक्तिः प्रकाशकत्वरूपा, शाश्वतिकत्वात्। अपरा तु प्रकाश्यत्वरूपाऽपायिनी, कादाचित्कत्वात्। तस्य शब्दतत्त्वस्यैतस्मिन् शक्तिद्वययुक्त आत्मनि =स्वरूपे प्रकाशकत्वेन सहाविभक्तमपि प्रकाश्यत्वं बहिर्विभक्तमिव प्रत्यवभासते। शब्दार्थप्रकाशयोरन्योऽन्यान्वयव्यतिरेकानुविधायितया च कार्यकारणरूपता प्रागुपदर्शिता तस्य शब्दतत्त्वस्य विभुत्वनित्यत्वनिरवयवत्वैर्देशपरिच्छेदरहितस्यापि बुद्धिरूपोपाधिसंबन्धेनान्तर्मात्रेत्येवमाख्यायमानस्य योऽयं 'सर्वदा' इति व्यपदेशः स 'नास्यान्यो भूतभविष्यद्वर्तमानभेदभिन्नः कालाध्वा विद्यते' इति कृत्वा।

किञ्च, तस्य नित्यत्वेन कालत्रयपरिच्छेदशून्यस्य व्यवहारप्रदर्शनासंभवाद् व्यवहारप्रदर्शनाय सर्वदेत्युच्यमानं तस्य कालानवच्छेदं द्योतयत्। तत्र भावाभावविभागाभावं प्रति-

तु व्यवहारप्रदर्शनाय सर्वदेत्युच्यते । भावाभावविभागाभावादन्तर्मात्रानिवेशिशब्दार्थकत्वम् ।

सर्वदैवानपायिनिर्भासोप(ग)मोऽपि चास्याव्यतिरेकानतिक्रमेण तथैव व्यवस्थितः, सर्वव्यतिरेकानतिक्रमात् [व्यतिरेकातिक्रमात्] तत्र किं कृतं कदाचित् संप्रत्ययहेतुत्वम् ।

सर्वदा कदाचिदित्येतदव्यतिरिक्तस्याधाराधेयभावविकल्पना, अवस्थितेरर्थस्य मिथ्याभ्यासभावनानुगमात् परिकल्पितभेदमात्मतत्त्वमेव तत्राविशेषो विशेष इव व्यामोहं जनयति ।। ३२ ।

शङ्कयाह्—प्रकाशकेति । तस्य हि शब्दतत्त्वस्यान्तरस्य ज्योतीरूपस्य शक्तिभेदादयं भेदप्रतिभासो न विरुद्धः । एतच्चादावेवोक्तमागमकाण्डे 'एकस्य सर्वबीजस्य' इत्यादिना ।। ३२ ।

---

पादयति, भूतादिकालपरिच्छेदो हि भावस्याभावस्य वा भवति, इदं त्वान्तरं शब्दतत्त्वं बोधाव्यतिरिक्तं ब्रह्मणो नार्थान्तरमिति निर्धर्मकत्वाद् इदं तदित्यव्यपदेश्यं भावाभावविलक्षणं वाङ्मनसागोचरम् । भावाभावविभागाभावादेव चास्य ब्रह्मरूपतया करणरूपोपाधिसंबन्धेन परिच्छिन्नत्व चान्तर्निवेशि शब्दार्थत्वम् । तदुक्तं भागवते—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ।।

( ११।१२।१७ इति । )

अयमर्थः—योऽयं बहिरनुभूयते शब्दः स एष जीवो बोधस्वरूपः परमार्थतः परब्रह्मणोऽभिन्नरूपः, विवरप्रसूतिः विवरे=आकाशे प्रसूतिर्ध्वनिभिरभिव्यक्तिर्यस्य स तथाभूतः, प्राणेन घोषेण तत्तत्स्थानाभिघाताद् ध्वनिरूपतया परिणतेन प्राणेनाभिव्यक्तो व्यञ्जकध्वनिभिः सहैव श्रोत्ररन्ध्रेण पुनरपि बुद्धिरूपा गुहा प्रविष्ट इति । अयञ्च बोधस्वरूपस्य जीवस्यावस्थाविशेषः । शब्दो द्विधा—सूक्ष्मः, स्थूलश्च । तत्राद्यः परा-पश्यन्ती-मध्यमारूपैर्मनोमयं सूक्ष्म रूपमुपेत्य स्थितः । मात्रा-स्वर-उदात्तादिर्द्वितीयः, वर्ण इति वैखरीरूपेण स्थविष्ठ इति ।

किञ्चास्य सर्वदा प्रकाशकप्रकाश्यत्वमित्युक्त्या सर्वदैवानपायिनिर्भासोपगमोऽप्यविभक्तस्याविभागानतिक्रमेण तथैव=अन्तर्निवेशिशब्दार्थत्वमिव शक्तिभेदहेतुकविभागकल्पनया व्यवस्थितम्, अविभक्ते निर्भास्यनिर्भासकभावासंभवात् । अन्यथा तत्र शब्दतत्त्वेऽविभक्ते सर्वव्यतिरेकातिक्रमात् किं कृतं कदाचित् संप्रत्ययहेतुत्वम् ।

किञ्च, तस्याव्यतिरिक्तस्य अविभक्तस्य शब्दतत्त्वस्य 'सर्वदा' 'कदाचित्' इत्येतत्प्रतीयमानं व्यवह्रियमाणं च कालसामान्यावच्छिन्नत्वं कालविशेषावच्छिन्नत्व च कालशब्दयोराधाराधेयभावविशेषस्य कल्पनैव, न तु वस्तुभूता, अर्थस्य बौद्धस्य बोधरूपस्यावस्थितेः=नित्यत्वेन स्थिरत्वाद् नित्यस्य च कालपरिच्छेदासंभवात् । अतोऽवस्थितेऽर्थे यः कालसंबन्ध-

**तस्यैवास्तित्वनास्तित्वसामर्थ्ये समवस्थिते ।**
**अक्रमे क्रमनिर्भासे व्यवहारनिबन्धने ॥ ३३ ।**

**एकस्यात्मनो ह्यन्तर्मात्रानिवेशिनः शब्दार्थतत्त्वस्यात्मभूते नित्ये अनागमागपमे एकत्वमनतिक्रान्ते द्वे सामर्थ्ये भावाभावाख्ये एकबुद्धिगतमिव क्रमरूपमक्रमे संवेद्येते यथैव [ तथैव ] भावाभावावित्येका प्रख्या ।** अत्र ग्रन्थपातः

इदमपि तस्य **शक्तिभेदादवभासत** इति प्रसङ्गादाह—**तस्यैवेति**

तस्य तदेवैकं निर्विभागं परं तत्त्वमाश्रित्यायं सकललोकसंव्यवहारः **शक्तिभेदात्** प्रतीयते, किं **पुनरयं वाच्यवाचकविभागमात्ररूप इत्यखण्डपक्ष एव युक्तः ॥ ३१ ।**

---

विषयकः सर्वदा कदाचिदिति मिथ्याप्रत्ययस्तज्जनितभावनायाः =वासनायाः अनुगमात् तत्र भावान्तररूपोपाधिपरिकल्पितभेदं वस्तुत एकमविभक्तमात्मतत्त्वमेव बोधरूपं शब्दरूपतया 'सर्वदा' 'कदाचित्' इति प्रतीयते ।

एवञ्च तत्र शब्दतत्त्वे वस्तुगतया सन्नप्यविशेषः =कालकृतपरिच्छेदरूपविशेषाभावो वस्तुभूतो विशेष इव सर्वदा कदाचिदित्येवंरूपं व्यामोहं जनयतीति । तथा च बोधरूपतयाऽऽत्मतत्त्वरूपमेव शब्दतत्त्वं देशकालानवच्छिन्नमिति सिद्धम् ॥ **३२** ।

न केवलमविभक्तस्य शब्दतत्त्वस्य शक्तिभेदाद् वाच्यवाचकविभागप्रतिभासः, किं तर्हि तस्यैवैकस्यान्तरस्य शब्दार्थोभयात्मकस्य बोधरूपस्य शब्दतत्त्वस्य नित्यौ शब्दार्थयोर्भावावपि स्वरूपमित्येकरूपावक्रमावपि तयोर्भावाभावौ शक्तिभेदात् क्रमवन्तौ कादाचित्कौ प्रत्यवभासेते इति प्रसङ्गादाह—**तस्यैवेति** ।

अयमर्थः—तस्यैव एकस्याऽऽत्मरूपस्य शब्दार्थोभयात्मकस्य शब्दतत्त्वस्य, अस्तित्वनास्तित्वसामर्थ्ये भावाभावसामर्थ्ये समवस्थिते स्तः । ते च सामर्थ्ये आश्रयनित्यत्वात् स्वरूपनित्यत्वाच्चाऽक्रमे अपि क्रमनिर्भासे, अखण्डे वाक्यस्फोटे यद् वर्णपदादीनां क्रमरूपं यच्च तेषां भावाभावयोः क्रमरूपं प्रतीयते तद्धेतू, व्यवहारनिबन्धने, वाक्यस्फोटे वर्णपदादीनां तद्भावाभावयोश्च यः क्रमव्यवहारस्तद्धेतू च भवत इति ।

तदयं निष्कर्षः—तस्य शब्दतत्त्वस्य तदेव प्रागुपवर्णितमेकं निर्विभागं परमं तत्त्वमाश्रित्यायं सकलोऽपि लोकसंव्यवहारस्तत्तच्छक्तिभेदात् प्रतीयते, किं पुनरयं वाच्यवाचकप्रविभागमात्ररूपो व्यवहार इत्यतोऽखण्डवाक्यस्फोटपक्ष एव युक्त इति ।

अयं भावः—एकस्य बोधरूपतयात्मरूपस्यान्तर्मात्रानिवेशिनः =व्यापकत्वाद् हृदयान्तर्मात्रेऽनिविष्टस्य, यद्वा हृदयान्तः मात्रया =स्वरूपेण, उपलभ्यमानत्वान्निविष्टस्य शब्दार्थोभयात्मकतत्त्वस्य वाक्यस्फोटस्य स्वरूपभूते नित्ये, अत एवागमापायवर्जिते परस्पर-

इदानीं पदवादीमतमाशङ्क्य पुनरपि दूषयितुमाह—

**संप्रत्ययप्रमाणत्वात् पदार्थास्तित्वकल्पने ।**
**पदार्थाभ्युच्चये त्यागादानर्थक्यं प्रसज्यते ॥३४॥**

यदि पदार्थसंप्रत्ययः प्रमाणं पदपदार्थसत्तायामुच्यते, तदा देवदत्त गामभ्याज शुक्लां दण्डेनेत्यस्मिन् वाक्ये पूर्वपूर्वपदार्थानामुत्तरोत्तरपदार्थाभ्युच्चये स्वार्थत्यागात् तत्तत्पदोपादानस्यानर्थक्यं प्रसज्यते । ततश्चानर्थकस्योच्चारणवैफल्यादुच्चारिताद्वा तस्माच्छब्दमात्रात् पदार्थप्रत्ययस्यानुपपत्तेः किं निबन्धना वाक्यार्थप्रतीतिः स्यादिति यत्किञ्चिदेतत् ॥३४॥

तथा च पदानामव्यवस्थितेः पदवादोऽनुपपन्न एव लक्ष्यते इत्यभिधातुमाह—

**राजशब्देन राजार्थो भिन्नरूपेण गम्यते ।**

---

मेकत्वमनतिक्रान्ते = परस्परमभिन्ने भावाभावाख्ये द्वे सामर्थ्य, यद्बलात् समूहालम्बनात्मकाक्रमैकबुद्धिगतं पदार्थानां क्रमरूपमिव, तथैवाक्रमे = वर्णपदादीनां भावाभावक्रमशून्ये वाक्यस्फोटे क्रमेण वर्णपदादीनां भावाभावौ संवेद्येते इत्येकोऽक्रमे शब्दतत्त्वे वर्णपदादीनां क्रमप्रख्याप्रकारः । अपरस्तु क्रमप्रख्याप्रकारो मम तमश्छन्नदृष्टेर्न प्रतिभाति, अत्रत्यहरिव्याख्यालोकलोपादिति ॥३३॥

इदानीं पदस्फोटवादिमतमाशङ्क्य पुनरपि दूषयितुमाह—**सम्प्रत्ययप्रमाणत्वादिति** ।

अयमर्थः—**सम्प्रत्यस्य** पदपदार्थसम्प्रत्ययस्य, **प्रमाणत्वात्** पदपदार्थविषयकप्रमाणत्वमभ्युपेत्य, ल्यब्लोपे पञ्चमी । **पदार्थास्तित्वकल्पने** पदतदर्थसत्तानुमाने क्रियमाणे सति, उत्तरोत्तरपदैः पूर्वपूर्वपदार्थानां स्वार्थैः सह समुचित्य बोधनात् स्वार्थस्य केवलस्य त्यागात् तत्तत्पदोपादानस्यानर्थक्यमभिधेयराहित्यरूपं प्रसज्यत इति ।

अयं भावः—यदि पदपदार्थसम्प्रत्ययः प्रमाणं पदपदार्थसत्तायामुच्यते, तदा 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यस्मिन् वाक्ये पूर्वपूर्वपदार्थानामुत्तरोत्तरपदार्थैः सह समुच्चये वाक्यार्थरूपे उत्तरोत्तरपदैर्बोध्यमाने सति तेषां स्वार्थस्य केवलस्य त्यागात् तत्तत्पदोपादानस्यानर्थक्यं प्रसज्यते । ततश्चानर्थकस्योच्चारणवैफल्यादुच्चारिताद्वा तस्माच्छब्दमात्रात् पदार्थप्रत्ययस्यानुपपत्तेः पदार्थप्रत्ययनिबन्धना वाक्यार्थप्रतीतिर्न स्यादिति पदस्फोटवादिमतमापातरमणीयमिति ॥३४॥

एवं प्रागुक्तरीत्या पदानामव्यवस्थितेः पदवादोऽनुपपन्न एव लक्ष्यत इत्यभिधातुमाह—**राजशब्देनेति** ।

राजा राजानं राज्ञा राज्ञे राज्ञो राज्ञि राजनीत्येवमनियतस्वरूपेण राजपदेन राजार्थप्रतीतिर्दृश्यते। यदि पदस्य सत्यता स्यात्, तदा नियतं तत् परिदृश्येत। सर्वत्र न च दृश्यते, अतो मन्यामहे मिथ्यैव पदानीति।

इतोऽपि नास्ति पदमित्याह—

**वृत्तावाख्यातसदृशं पदमन्यत्र युज्यते ॥३५।**

राजपुरुष इत्यस्यां वृत्तौ राजशब्द आख्यातसदृशः। ततश्च हे राजपुरुषेत्यत्र राज भ्राजस्व पुरुषेत्यर्थप्रतीतिः स्यात्। न चैतदिष्टम्। तस्मात् पारमार्थिकानि पदानि न सन्त्येव ॥३५।

यदि च न केवलो राजशब्दोऽन्यत्र दृष्टप्रयोगः, स राजपुरुषादिषु भिद्यते; किं कृता पुरुषे राजपुरुषो ब्राह्मणपुरुष इति विशिष्टार्थस्यावगतिः [अत आह] —

**यथाश्वकर्ण इत्युक्ते विनैवाश्वेन गम्यते।**
**कश्चिदेव विशिष्टोऽर्थः सर्वेषु प्रत्ययस्तथा ॥३६।**

---

अयमर्थः—राजा, राजानम्, राज्ञा, राज्ञे इत्यादौ भिन्नरूपेण = अनियतरूपेण राजपदेन राजरूपोऽर्थोऽभिन्न एव गम्यते = ज्ञायत इति।

अयं भावः—राजा, राजानम्, राज्ञा, राज्ञे, राज्ञि, राजनि—इत्येवमनियतस्वरूपेण राजपदेन राजरूपार्थप्रतीतिर्दृश्यते। यदि पदस्य सत्यता स्यात्, तदा सर्वत्र नियतं तत् परिदृश्येत। न च सर्वत्र तथा दृश्यते अतो मन्याहे मिथ्याभूतान्येव पदानीति।

इतोऽपि नान्यत् पदमित्याह—**वृत्ताविति**।

अयमर्थः—यदि वाक्ये परमार्थतः पद स्यात्, तदा वृत्तौ = राजपुरुषेत्यादिसमासरूपायाम् आख्यातसदृशम् = आख्यातेन लोटि मध्यमपुरुषैकवचनान्तेन भ्राजस्वेत्यर्थकेन राजेत्यनेन सदृशम्, अन्यत् पदम् = लुप्तषष्ठीकं राजपदं प्रसज्यते। ततश्चार्थान्तरस्यापि प्रतीतिः प्रसज्यते, न चैतद् दृश्यत इति।

अयं भावः—राजपुरुष इत्यस्यां वृत्तौ राजशब्द आख्यातसदृशः। ततश्च हे राजपुरुष! इत्यत्र हे पुरुष! त्वं राज = भ्राजस्व इत्यर्थस्यापि प्रतीतिः स्यात्। न चैतदिष्टम्, न चाप्यनुभूयते। तस्माद् वाक्ये वाक्यवाक्यार्थग्रहणार्थं पदपदार्थापोद्धारकल्पनायामपि तत्र पारमार्थिकानि पदानि न सन्त्येवेति ॥३५।

न केवलं केवलानां राजपदादीनां राजा, राजानम्, राज्ञा, राज्ञे इत्यादौ नियतरूपाभावेन प्रागुक्तरीत्या पारमार्थिकत्वासम्भवः, किं तर्हि राजपुरुष इत्यादिवृत्तौ स्थितानां नियतरूपाणामपि तेषामनियतार्थप्रत्यायकत्वाभावेन = अर्थद्वयप्रत्यायकत्वाभावेन वृत्तौ केवलमश्वकर्णादिवद् विशिष्टार्थप्रत्ययस्यैव युक्तत्वेन च पदानां पारमार्थिकत्वाभाव इत्याह—**यथाऽश्वकर्ण इत्युक्त इति**।

तद्यथा—अजकर्णोऽश्वकर्ण इत्युक्ते नाश्वार्थस्य कर्णार्थस्य वा स्वल्पोऽपि समन्वयो विद्यते। भेदविषयेण त्वत्यन्तमतदर्थेन वाक्येनार्थप्रदर्शिका क्रियते, बहुव्रीहितत्पुरुषसंज्ञादिभिः समुदायान्तरेषु शब्दसंस्कारः।

अश्वादीनां पदार्थानामत्यन्तासमन्वयेऽपि गम्यते व्यावृत्तानुवृत्तस्वलक्षणः कश्चिदेव नियतोऽर्थः। तथैव सर्वासु वृत्तिष्वर्थान्तरासमन्वये गम्यत एव विशिष्टोऽर्थः ।।३६।

न केवलं केवलानां नियतरूपासंभवस्तेषां यावद्वृत्तावपि स्थितानामित्याह—यथाश्वकर्ण इति।

अश्वकर्ण इत्यत्राश्वपदार्थेन विनैव जात्यन्तरविशिष्टः कश्चिदर्थो गम्यते।

---

यद्वा—ननु यः केवलो राजशब्दो राजा राजानमित्यादावन्यत्र दृष्टप्रयोगः, स यदि वृत्तौ राजपुरुषादिषु न विद्यते, तर्हि किं कृता राजपुरुषो ब्राह्मणपुरुष इति वृत्तिद्वये पुरुषे विशिष्टार्थस्यावगतिरित्याशङ्क्याश्वकर्णादिवद् विशिष्टार्थावगतिरेव तत्र पुरुषभेदिकेति समाधातुमाह—**यथाऽश्वकर्ण इत्युक्त** इति।

अयमर्थः—यथाऽश्वकर्ण इत्युक्ते विनैवाश्वेन = वृत्तिघटकाश्वपदार्थेन विनैव, कश्चिदेव विशिष्टोऽर्थो जात्यन्तरविशिष्टः सालवृक्षरूपो गम्यते, तथा सर्वेषु वृत्तिप्रभेदेष्ववयवार्थं विनैव विशिष्टार्थप्रत्ययो भवतीति युक्तमिति।

अयमत्र निष्कर्षः—अश्वकर्ण इत्यत्राश्वपदार्थेन विनैव जात्यन्तरविशिष्टः कश्चिदर्थो गम्यत इत्यनुभवसिद्धम्। तस्मात् सर्वेष्वेव पदेष्वपोद्धारकल्पनया परामृष्टविभागेषु वाक्याभिव्यञ्जकेषु सत्स्वखण्डवाक्यावगतिपूर्वको वाक्यार्थप्रत्यय इत्येव युक्तमिति।

अयं भावः—यथाऽजकर्णोऽश्वकर्ण इत्युक्तेऽश्वार्थस्य कर्णार्थस्य वा स्वल्पोऽपि समन्वयः = संसर्गः वृत्तिप्रतिपाद्ये विशिष्टेऽर्थे वृक्षविशेषरूपे न विद्यते। यस्त्वजस्य कर्णाविव पर्णौ यस्येति पर्णे कर्णत्वमारोप्य विग्रहः क्रियते, सा तु वृत्तेर्भिद्यमानविषयेणात्यन्तमतदर्थेन विग्रहवाक्येन वृत्तेः साधुत्वार्थं यथाकथञ्चिदर्थप्रदर्शिका = अर्थप्रदर्शनं क्रियते।

तदुक्तमभियुक्तैः—"अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्" इति। यतोऽजकर्णादयः शब्दा अजकर्णादिपदाघटिता अखण्डानि समुदायान्तराण्येव, तत्रावयवार्थाप्रतीतेः। एवमजकर्णादिषु समुदायान्तरेषु व्यवस्थितेष्वलौकिकविग्रहवाक्यरूपया पदापोद्धारकल्पनया तु बहुव्रीहितत्पुरुषसंज्ञादिभिः शब्दसंस्कारो यथाकथञ्चित् क्रियते। तदुक्तम्—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥

(वा० प० २।२३८) इति।

तस्मात् सर्वेष्वपि पदेषु परामृष्टविभागेषु वाक्याभिव्यञ्जकेषु सत्स्वखण्डवाक्यावगतिपूर्वको वाक्यार्थप्रत्यय इत्येव युक्तम् ॥३६।

यदि तर्हि राजपुरुषादीनामश्वकर्णादिभिस्तुल्यः पूर्वपदोत्तरपदार्थ[र्था]-समन्वयः, तत्कुतो रूढ्यरूढिविभागः ( अत आह )—

**वाक्येष्वर्थान्तरगतेः सादृश्यं परिकल्प्यते ।**
**केषाञ्चिद् रूढिशब्दत्वं शास्त्र एवानुगम्यते ॥३७।**

---

न चैवमश्वादीनां पदार्थानामश्वकर्णादिवृत्तावत्यन्तासमन्वये 'एतेऽजकर्णाः', 'एते चाश्वकर्णाः' इति परस्परं व्यावृत्तस्वलक्षणाः = व्यावृत्तस्वरूपाः सजातीयेषु चानुवृत्तस्वरूपा नियता अर्थाः कथं प्रतीयन्त इति वाच्यम्, तत्र वृत्त्यर्थेऽवयवार्थप्रयुक्तायाः परस्परव्यावृत्तेः सजातीयेष्वनुवृत्तेश्चाभावेऽप्यर्थ एव खलु स विशिष्टो वृत्तौ नियतेभ्यः परस्परं व्यावृत्तस्वभावः, सजातीयेषु चानुवृत्तस्वभावः। एवमश्वकर्णादिवदेव सर्वासु राजपुरुषादिवृत्तिषु स्वघटकपदार्थासमन्वयेऽपि गंस्यत एव वृत्तिप्रतिपाद्यः कश्चिद् विशिष्टोऽर्थ इति वृत्तौ पदानामसत्यत्वमेवेति ॥३६।

नन्वेवं यदि राजपुरुषादीनामश्वकर्णादिभिः सह तुल्यः पूर्वपदोत्तरपदार्थासमन्वयः, तर्हि कुतः "अश्वकर्णादयो रूढिशब्दाः, राजपुरुषादयस्त्वरूढा यौगिकाः" इति रूढ्यरूढिप्रविभाग इत्याशङ्क्य समाधातुमाह—**वाक्येष्वर्थान्तरगतेः सादृश्यं परिकल्प्यत** इति।

अयमर्थः—वाक्येषु वृत्तेर्लौकिकविग्रहवाक्येषु वृत्त्यर्थापेक्षयाऽर्थान्तरस्य गतेरवगमस्य सर्वत्राविशिष्टत्वेऽपि केषाञ्चिद् वृत्तिशब्दानामाक्षिकादीनामर्थस्य लौकिकविग्रहवाक्यार्थेन समं सादृश्यं परिकल्प्यत इति ते वृत्तिशब्दा आक्षिकादयो यौगिकाः।

तथा हि—आक्षिक इत्यत्र 'अक्षैर्दीव्यति' इति विग्रहेऽक्षकरणिका देवनक्रिया प्रतीयते, आक्षिक इति तद्धितान्तवृत्तौ त्वक्षकरणकदेवनकर्तेति गुणप्रधानभावविपर्ययेणार्थान्तरत्वेऽपि वृत्त्यर्थवाक्यार्थयोः सादृश्यं परिकल्प्यते, घटकपदार्थसाम्यात्।

केषाञ्चित्तु वृत्तिशब्दानामर्थस्य लौकिकविग्रहवाक्यार्थेन समं सादृश्यं न परिकल्प्यते, सर्वथार्थभेदादिति तेषां रूढिशब्दत्वम्। यथा तैलपायिकादीनाम्। अत्र हि 'तैलं पिबति' इति विग्रहवाक्यतया किञ्चित्कर्तृका तैलकर्मिका पानक्रिया प्रतीयते, तैलपायिकेति वृत्तिशब्दात्तु विजातीयः कीटविशेषः, यः खलु भोजपुरीयभाषायाम् 'तेलचट' इति नाम्ना व्यवह्रियते। अत्र वृत्त्यर्थवाक्यार्थयोर्नास्ति सादृश्यगन्धोऽपि। तच्च तेषां वृत्तिशब्दानां केषाञ्चिद् रूढिशब्दत्वं शास्त्र एव, शास्त्रेऽप्यत्रैवकारोऽप्यर्थः। अनुगम्यते कार्यविशेषेषु समाश्रीयते। यथा—'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (६।३।६३) इत्यनेन कालिदासशब्दस्य संज्ञाशब्दत्वम् = रूढिशब्दत्वं प्रबोध्यत इति।

यद्वा—'**वाक्ये त्वर्थान्तरगतेः सादृश्यपरिकल्पने**' इति पाठः। स च पुण्यराजसंमतः। तत्रायमर्थः—केषाञ्चिद् राजपुरुषादीनां वृत्तिवाक्ययोरर्थस्य सादृश्याद्

इह स्वभावसिद्धे वृत्तिवाक्ययोरत्यन्तमर्थस्याभेदे वृत्त्या वाक्येन प्रक्रम्यमाणेऽस्य यत्र प्रधानस्याविशिष्टः क्रियादिसम्बन्धस्तत्र वाक्यस्य विच्छेदवृत्तिमात्रकृतभेदमिव सादृश्यं कल्प्यते, सत्स्वप्युपसर्जनविशेषणादिषु भेदेषु। अतश्च सादृश्यकल्पनया तेऽरूढिशब्दा इत्यवगम्यते।

येषां तु वाक्यप्रक्रमोऽन्य एवार्थः क्रियासम्बन्धी वृत्तिप्रक्रमोऽन्य एव, तेषां रूढिशब्दत्वम्। तेषु च 'शिल्पिनि चाकृञः' (६।२।७६), 'संज्ञायां च' (६।२।७७),

नन्वेवं सति योऽयं रूढ्यरूढिविभागः शब्दानामुच्यते स वृथेत्याशङ्क्याह—वाक्य इति।

---

यौगिकत्वं सत्यप्यौपाधिके भेदे। तथा हि राजपुरुष इत्यतो वृत्तावेकार्थीभावस्वीकाराद् उपक्रम एव विशिष्टार्थबोधः। राज्ञः पुरुष इति वाक्ये तु पदार्थयोः पृथगुपस्थितिपुरःसरः स इति भेदेऽप्यभेद एवेत्यत्र वृत्तिवाक्ययोः सादृश्याद् राजपुरुषादीना यौगिकत्वम्, पदद्वययोगप्रभवत्वात्।

केषाञ्चित्तु तैलपायिकादीनां शब्दानां विग्रहवाक्ये वृत्त्यर्थाद॑र्थान्तरप्रतीतेरर्थसादृश्यं नास्तीति वृत्तिवाक्ययोरर्थसादृश्यपरिकल्पने सति तैलपायिकादीनां रूढिशब्दत्वमुच्यते। 'तैलपायिका' इत्यत्र हि 'तैलं पिबति' इति वाक्यवेलायामर्थप्रादुर्भावः। वृत्त्यवस्थायां तु तैलपायिकेति जात्यन्तरयुक्तस्य कस्यचिदर्थस्य कीटविशेषस्य प्रतीतिः। न च तस्य कीटस्य तैलपानक्रियोपलभ्यत इति रूढिरूपता तैलपायिकाशब्दस्योच्यते।

'सादृश्यपरिकल्पने' इत्यनेन सर्वमेतदवयवविभागादिकं शास्त्रसिद्धान्त एव कल्पनामात्रम्, परमार्थतस्तु व्यवहारकालेऽवैयाकरणानां निर्विभागमेवोपलभ्यत इति सूच्यते। एतदेव 'शास्त्र एवानुगम्यते' इत्यनेन स्फुटीकृतमिति।

यद्वा '**वाक्ये त्वर्थान्तरगतेः सादृश्यं परिकल्प्यते**' इत्यस्मिन्नेव पाठे व्याख्यान्तरम्। राजपुरुषः, राज्ञः पुरुष इति, आक्षिकः, अक्षैर्दीव्यतीति वृत्तिवाक्ययोः सत्यप्यर्थाभेदे वृत्तौ राज्ञ उपसर्जनत्वम्, पुरुषपदार्थे संसृज्यमानत्वेनैव तस्यावगमात्, वाक्ये तु विच्छिद्योपस्थितत्वेन विशेषणत्वम्--इत्येवं वृत्त्यपेक्षया वाक्येऽर्थान्तरगतेरर्थान्तरावगमात्तु येषां सादृश्यं परिकल्प्यते सत्यपि वृत्तिवाक्ययोरुभयोरपि राज्ञः पुरुषसंबन्धाविशेषादर्थाभेदे। एवमाक्षिक इत्यत्रापि वृत्तिवाक्ययोरुभयोरपि कर्तुर्देवनक्रियासम्बन्धाविशेषादर्थाभेदेऽपि वृत्तौ कर्तुः प्राधान्येन देवनक्रियासंबन्धः, वाक्ये तु क्रियामुख्यविशेष्यकबोधाभ्युपगमेनाप्राधान्येन तस्य तत्क्रियासंबन्ध इति वाक्येऽर्थान्तरगतेर्वृत्तिवाक्यार्थयोः सादृश्यं परिकल्प्यते, तेऽरूढिशब्दा इत्याख्यायन्त आक्षिकराजपुरुषादयः।

येषां त्वजकर्णाश्वकर्णादीनां वृत्तिवाक्ययोरत्यन्तमर्थभेदः, तेषां तु केषाञ्चिदश्वकर्णादीनां रूढिशब्दत्वं शास्त्र एवानुगम्यते, यथा कालिदासपदस्य रूढिशब्दत्वं 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (६।५।६३) इति शास्त्रेणानुगम्यत इति।

'संज्ञायामनाचितादीनाम्' (६।१।१४६), ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (६।३।६३), 'बहुलं तणि'—इत्येवमादीनि कार्य्याणि शास्त्र एवोपव्याख्यायन्ते ॥३७।

वृत्तिवाक्ययोः सादृश्यपरिकल्पने केषाञ्चिच्छब्दानां वाक्ये विग्रहरूपेऽर्थान्तरप्रतीते रूढिशब्दत्वमुच्यते। यथा—तैलपायिकेति। अत्र तैलं पिबतीति वाक्यवेलायामर्थप्रादुर्भावः। वृत्यवस्थायां तैलपायिकेति जात्यन्तरयुक्तार्थस्य कस्यचित् प्रतीतिः। न च तस्य तैलपानक्रिया लक्ष्यत इति रूढिरूपतास्योच्यते। केषाञ्चित्तु वृत्तिवाक्ययोरर्थस्य सादृश्याद् यौगिकत्वम्। यथा—राजपुरुष इति। परिकल्पन इत्यनेन सर्वमेतदवयवविभागादिकं शास्त्रसमय एव कल्पनामात्रम्, परमार्थतस्तु व्यवहारकाले निर्विभागमेवोपलभ्यत इति प्रतिपाद्यते। एतदेव शास्त्र एवानुगम्यत इत्यनेन व्यक्तीकृतम् ॥ ३७।

---

अयं भावः—व्यवहारे खलु वृत्तिवाक्ययोरर्थस्यात्यन्तमभेदः स्वभावसिद्धः। स च वृत्त्या वाक्येन च प्रकमे बोध्यते। यत आक्षिकोऽक्षैर्दीव्यतीत्यादिस्थले राजपुरुषः, राज्ञः पुरुष इत्यादौ च यथायथं कर्तुर्देवनक्रियासंबन्धः, पुरुषस्य च राजसंबन्धः, राज्ञो वा पुरुषसंबन्धोऽविशिष्टः। एवं सत्यपि वाक्ये पदयोर्विच्छेदः, अन्यत्र त्वेकार्थीभावसत्त्वेनैकपदीभावरूपा वृत्तिरित्येतावन्मात्रं भेदं परिकल्प्य वृत्तिवाक्ययोः सादृश्यं परिकल्प्यते। यद्यपि सन्त्यन्येऽप्याक्षिकराजपुरुषादिषूपसर्जनत्वविशेषणत्वादिकृता बहवो भेदा ये प्रागत्रैवोपपादिताः। अतश्च सादृश्यकल्पनया तेऽरूढिशब्दा इत्यवगम्यते।

येषां तु तैलपायिकादीनां वाक्येन प्रक्रान्तोऽन्य एवार्थः क्रियासंबन्धी, वृत्त्या त्वन्य एवार्थः प्रक्रम्यते जात्यन्तरविशिष्टः कीटविशेषस्तेषां तैलपायिकादिशब्दानां रूढिशब्दत्वमिति। तेषु च रूढिशब्देषु रूढिशब्दत्वप्रयुक्तानि कार्याणि शास्त्र एव क्वचित् क्वचिदुपव्याख्यायन्ते। तद्यथा— शिल्पिनि चाकृञः' (६।२।७६) अत्र तन्तुवायपदार्थस्य शिल्पिनि रूढत्वमाश्रित्य पूर्वपदाद्युदात्तत्वं क्रियते, न तु काण्डलावशब्दस्य, शिल्पिन्यरूढत्वात्। 'संज्ञायाञ्च' (६।२।७७) अत्र लूताकीटे रूढं तन्तुवायशब्दमाश्रित्य पूर्वपदाद्युदात्तत्वं क्रियते। 'संज्ञायामनाचितादीनाम्' (६।२।१४६) अत्रोपहूतपरिजग्धादीनां पुरुषविशेषसंज्ञात्वमाश्रित्यान्तोदात्तत्वं क्रियते। 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' रेवतिपुत्रः। अजक्षीरम्। अत्र संज्ञात्वेन ङ्यापोर्ह्रस्वत्वम् (६।३।६३)। संज्ञा च रूढिरेव। बहुलं तणि, अन्नवधकगात्रविचक्षणाजिराद्यर्थमिति वार्त्तिकं 'चक्षिङः ख्याञ्' (२।३।५४) इति सूत्रे तणिति संज्ञाच्छन्दसोः संज्ञा। तत्र अन्नमिति भक्तस्य संज्ञायाम्। जग्धमिति भुजिक्रियाकर्ममात्रे। वधक इति व्याधजातीयस्य संज्ञा। घातक इति हिंसाकर्तृसामान्ये। गात्रशब्दे इणो गाङादेशोऽङ्गेषु चायं रूढः। विचक्षण इति विदुषि रूढस्तत्र चक्षिङः ख्याञादेशो न भवति। अजिरमित्यङ्गणस्य संज्ञा। तत्र अजेर्व्यघञपोरिति वीभावोऽजेर्न भवति बाहुलकादिति ॥३७।

**उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।**
**उपायानां च नियमो नावश्यमवतिष्ठते ।।३८।**

**इह शब्दसंस्कारे क्वचिदर्थस्यापि समधिगममात्रायां बुद्धौ पदानि वाक्यस्योपकारायोपादीयन्ते । चर्चादिपदानि संहितायाम्, वाक्यपदानि समासतद्धितसुब्धात्वेकशेषवृत्तिषु । तेषां च यदर्थमुपादानं तत्सन्निधाने नियत एषां त्यागः, उपायभावात् ।**

**शास्त्रे ह्यामन्त्रितस्य पदात् परस्य तिङ्ङतिङ इति निघातादयः शब्दसंस्काराः । तथा 'एकादेश उदात्तेनोदात्तः' (८।२।५), 'स्वरितो वा अनुदात्ते**

---

ननु शास्त्रेऽजकर्णोऽश्वकर्ण इत्यादिवृत्तिसिद्धये प्रकृतितदर्थतयोपादीयमानाना पदपदार्थानां वृत्तौ परित्यागो नोचितः, शास्त्रेण तत्र तत्सत्ताबोधनात् । अन्यथा शास्त्रस्याप्रामाण्यप्रसङ्गादित्याशङ्क्याह—**उपादायापि ये हेया** इति ।

अयमर्थः— ये प्रकृतिप्रत्ययादयस्तदर्थादयश्च पदतदर्थसिद्धये पदानि तदर्थाश्च वृत्तितदर्थसिद्धये उपादायापि । तत्सिद्ध्युत्तरं तेषां प्रयोजनसम्पत्तेरनुपयोगाद् हेया भवन्ति, तान् उपायान् प्रचक्षते । चो हेतौ । यतः प्रकृतिप्रत्ययतदर्थादीनां पदतदर्थप्रतिपत्त्युपायाना पदपदार्थानां च वृत्तितदर्थप्रतिपत्त्युपायानां नियमो नैयत्यं न सर्वत्रावश्यमवतिष्ठते, अतः पदप्रतिपत्त्युपायानां वृत्तिप्रतिपत्त्युपायानां च व्याकरणभेदेनानियतत्वात् पदे वृत्तौ वा तेन सन्तीति तत्र तेषां शास्त्रत उपात्तानामपि परित्यागः समुचित इति ।

तदयं निर्गलितोऽर्थः—शब्दानां परिज्ञाने शास्त्रमुपायः, ज्ञातेषु च शब्देषु प्रयोजनसंपत्तेः शास्त्रोपात्तोपायानामनुपयोगानैयत्याभ्या परित्यागः समुचित इति । अयं भावः—व्याकरणशास्त्रे शब्दसंस्कारे क्रियमाणे क्वचित् पदानि विग्रहवाक्यस्योपकारायोपादीयन्ते, पदैरुपकृतेन च वाक्येन संहितायाः समासादिवृत्तेर्वोपकारो भवति । क्वचित् त्वर्थस्यापि शब्दसंस्कारे स्ववाचकपदद्वारा निमित्तत्वमित्यर्थस्य समधिगममात्रस्वरूपायां बुद्धावपेक्षितायां पदानि विग्रहवाक्यस्योपकारायोपादीयन्ते ।

तत्राद्यकल्पे पदानि द्विधा भिद्यन्ते चर्चापदत्ववाक्यपदत्वभेदाभ्याम् । तत्राद्यानि यथा वाप्यश्व इत्यादौ संहिताया चर्चापदानि 'वापी अश्व' इत्यादीनि । चर्चापदानि तान्युच्यन्ते यान्यर्थशून्यानि केवलं चर्च्यन्त उच्चार्यन्ते पदसिद्धय इति । वाप्यश्व इत्यादि समासे संहिताया नित्यत्वेन 'वापी अश्व' इत्यादिविभक्तपदरूपाणि चर्चापदान्येवेति ध्येयम् । वाक्यत्वमासानि पदानि तु समासतद्धितसुब्धात्वेकशेषवृत्तिषु विग्रहवाक्यरूपाणीति । तेषाञ्च संहितासमासादिसिद्ध्यर्थमुपादीयमानानां संहितासमासादिसम्पत्तौ नियतस्त्यागः, उपायभावात् । उपायानां चोपेयसिद्धौ सत्यामनुपयोगात् ।

क्वचित् तु विग्रहवाक्येतराण्यपि वाक्यपदानि शब्दसंस्कारसिद्धये उपादीयन्ते । तद्यथा—आमन्त्रितस्य पदात्परस्य 'आमन्त्रितस्य च' इत्यनेन निघातः, 'तिङ्ङतिङः'

**पदादौ' (८।२।६), 'उदात्तस्वरितयोर्यण' (८।२।४) इति । तथा तत्पुरुषे तुल्यार्थ-तृतीया ( ६।२।२ ), 'सप्तमीहारिणौ' (६।२।६) इत्येवमादयोऽर्थप्रतिपत्तिमात्रा अपि दृश्यन्ते ।**

**यथा मे माता तथा मे पिता, सुस्नातं भोः, नमो भरन्त एमसि, सौभाग्य-मस्यै दत्त्वायाथास्तं विपरेतनेति ।**

कथमेतदुच्यत इत्याह—उपादायापीति । शास्त्रमुपायः शब्दपरिज्ञाने । इत्यतिङन्तात् परस्य पदस्य तिङन्तस्य निघात इत्येवं निघातादयः शब्दसंस्काराः कियन्त इति तदनुकूलान्येव पदानि पौर्वापर्येण वाक्यरूपाणि स्थाप्यन्ते । तथैव—एकादेश उदात्तेनोदात्तः स्वरितो वाऽनुदात्ते पदादौ, उदात्तस्वरितयोर्यणः स्वरितो वाऽनुदात्तस्येत्यादिशास्त्रविहिततत्तत्स्वररूपशब्दसंस्कारसिद्ध्यर्थं तदानुकूल्येनैव पूर्वापरीभावापन्नानि पदानि स्थाप्यन्ते।

तथा—तत्पुरुषे तुल्यार्थतृतीयेत्यादि, सप्तमीहारिणौ धर्म्येऽहरण इत्येवमादयोऽर्थप्रतिपत्तिमात्रस्वरूपा अपि बुद्धयः शब्दसंस्कारार्थं निमित्तत्वेनोपादीयमाना दृश्यन्ते । यत्र तुल्यार्थे तृतीया तत्रैवैष स्वर इति, यत्र हरणभिन्नं धर्म्यं तत्रैवानेन स्वरविशेष इति । अत्र स्वरसिद्धेः प्रागेव तुल्यधर्म्याद्यर्थबुद्धयो विग्रहवाक्यतो जायमानाः स्वरसिद्ध्यर्थं निमित्तत्वेनोपादीयन्ते न तु जाते स्वरे व्यवहारकाले तासां कश्चनोपयोग इति ।

एवं लोके वेदे चार्थप्रतिपत्तिमात्रस्वरूपा अपि बुद्धयो दृश्यन्ते, न तु तासां बुद्धीनां कश्चन व्यवहार उपयोगः । तद्यथा लोके—यथा मे माता तथा मे पितेति । अत्रैतद्वाक्यार्थज्ञानस्य न किञ्चिद् व्यवहारान्तरप्रवृत्तिहेतुत्वमिति । यथाऽयं घटो निश्छिद्र इति वाक्यार्थज्ञानस्य तत्करणकजलाहरणव्यवहारं प्रति हेतुत्वमिति न तथाऽस्येति । एवमेव 'सुस्नातं भोः' इत्यादावप्येतद्वाक्यार्थबुद्धेर्व्यवहारान्तरं प्रत्यहेतुत्वमवधेयमिति ।

तथा वेदवाक्ये –'नमो भरन्त एमसि' इति । अत्र वयं नमो वाक्यानि भरन्तो बिभ्रत उच्चारयन्त एमसि आगच्छाम इति वाक्यार्थबोधः । न त्वस्य वाक्यार्थबोधस्य कश्चिद् व्यवहारान्तरं प्रति हेतुत्वमिति ।

एवं वेदे

'सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥'

इति विवाहे वरस्य पितुर्बन्धुबान्धवादीन् प्रति निमन्त्रणवाक्यम् ।

अस्यार्थः— अयि आर्याः ! इयं संस्क्रियमाणा वधूः सुमङ्गलीः शोभनैर्मङ्गलैर्वस्त्रभूषासिन्दूरादिभिर्युक्ता, अतः समेत अस्याः संनिधौ सङ्गता भवत, इमां च निरतिशयमङ्गलद्रव्यसंवर्धितशोभां पश्यत, अस्या गुणदोषपरीक्षायै । किञ्च, स्वकीयैराशीर्वचोभिः, अस्यै वध्वै सौभाग्यं सौभाग्यलभ्यं पतिप्रसादपुत्रगृहाधिपत्यादिकं दत्त्वाय = दत्त्वा, अथ अनन्तरम्, अस्तं स्वस्वगृहं प्रति, अत्रास्तशब्दः—अस्यन्ते क्षिप्यन्ते बहिर्देशेभ्य आनीतानि वस्तूनि यत्रेति व्युत्पत्त्या बाहुलकादधिकरणक्तान्तो गृहवाची । विपरेतन परावर्तध्वमिति ।

**तः परो यस्मात् सोऽयं तपरः, तादपि परस्तपर इति (द्र० अष्टा० १।१।७०), वियातस्य भावो वैयात्यम् (द्र० ७।२।१६) इति। त एते पुरुषसम्बोधनोपायाः।**

**यदि त्वन्यथापि पुरुषाः प्रतिपादयितुं शक्यन्ते तदर्थान्युपायान्तराण्यपि प्रक्रम्यन्ते ॥३८।**

ज्ञातेषु तेषु प्रयोजनसम्पत्तेरनुपयोग इति तस्य परित्यागः। उपायाश्च न नियता इत्याह—उपायानां चेति ॥३८।

**अर्थं कथञ्चित् पुरुषः कश्चित् संप्रतिपद्यते।**
**संसृष्टा वा विभक्ता वा भेदा वाक्यनिबन्धनाः ॥३९।**

---

अत्रैतद्वाक्यमर्थप्रतिपत्तिमात्रनिष्ठमेव, न त्वनेन वाक्यार्थेन ज्ञातेन किञ्चिद् व्यवहारान्तरं प्रयोज्यते।

एवं व्याकरणशास्त्रेऽपि तपरस्तत्कालस्येति सूत्रघटकतपरपदार्थप्रतिपत्तय एव 'तः परो यस्मात् सोऽयं तपरः, तादपि परस्तपरः' इति विग्रहवाक्यान्युपादीयन्ते, शब्दसंस्कारोपयोगित्वं तु तपरपदार्थस्यैवैकार्थीभावापन्नस्येति। एवं वैयात्यपदार्थो धाष्टर्यम्, तस्यैव च प्रतिपत्तये वियातस्य भाव इति विग्रहः क्रियते, धृष्ट एव हि विविधं गच्छति विपरीतं वा गच्छत्यमार्गेण निषिद्धमार्गेण वेति, न त्वप्रगल्भः। किन्तु नास्य विग्रहस्यार्थगन्धोऽपि वैयात्यपदस्य व्यवहारकाले प्रयोग इति वैयात्यपदार्थधाष्टर्यप्रतिपत्तिमात्रफलक एवैष विग्रहः। इतीत्थमेते सर्वे प्रतिपाद्य शिष्यादीन् प्रति संहितासमासादिशब्दसंबोधनोपायाः।

यदि त्वेतेभ्योऽन्यथापि पुरुषाः प्रतिपादयितुं शक्यन्ते, तदर्थान्युपायान्तराण्यपि शास्त्रान्तरेषु प्रक्रम्यन्त इति शब्दप्रतिपत्त्युपाया अनियताः, अनियतत्वाच्च समासादौ पदकल्पना, पदे वा प्रकृतिप्रत्ययादिकल्पना। शास्त्रसमय एव कल्पनामात्रम् व्यवहारकाले तु वाक्यं पदं वा परमार्थतो निर्विभागमेवोपलभ्यत इति ॥ ३८ ।

कश्चिदाचार्यः पाणिनिप्रणीतेन लक्षणशास्त्रेण शब्दानभिगच्छति, कश्चिदन्येनेति रीत्या पदवाक्यप्रतिपत्त्युपायानामनियतत्वम्। तस्मात् संसृष्टस्य विभक्तस्य वाऽर्थविशेषस्य वाक्यमेकमनंशमेव प्रतीतिनिबन्धनमिति वाक्यवाक्यार्थयोः पदपदार्थप्रविभागकल्पनमसमञ्जसमेवेति प्रतिपादयितुमाह—**अर्थं कथञ्चिदि**ति।

अयमर्थः—यद्यपि पुरुषः प्रतिपत्ता वाक्यवाक्यार्थयोः पदं पदार्थञ्च प्रकल्प्य कथञ्चिद् वाक्यं वाक्यार्थञ्च संप्रतिपद्यते, तथापि ये राजपुरुषः प्लक्षन्यग्रोधावित्यादिवृत्तिषु संसृष्टाः, राज्ञः पुरुषः, प्लक्षश्च न्यग्रोधश्चेत्यादिविग्रहवाक्येषु च विभक्ताः पदपदार्थरूपा भेदास्ते वाक्यनिबन्धना वाक्यवाक्यार्थनिबन्धना इति। अत्र वाक्यशब्दश्छत्रिन्यायेन वाक्यार्थस्याप्युपलक्षकः। निबन्धनपदञ्चात्र प्रयोजकपरम्। तथा च पदपदार्थकल्पनाप्रयोजकत्वं स्वज्ञप्तये वाक्यवाक्यार्थयोर्ज्ञाप्यत्वेन फलभूतयोरित्यायातमिति।

**विचित्रा हि बहुधा प्रतिपत्तृणां प्रतिपत्तिः। श्रोत्रियंश्छन्दोऽधीत इति (५।२।६४) वाक्यार्थे पदवचनम्[१], छन्दसो वा श्रोत्रभावः घँश्च प्रत्ययः, श्रोत्राभ्यां कृतं कर्मेति वा (द्र० भाष्य० ५।२।८४)। तथा 'इको वक्तव्यः' आखनिकः, 'इक-वको वक्तव्य' (द्र०३।३।१२५ वा०) आखनिकवकः। पात्रेसमितादिषु (२।१।४८) वाऽऽखनिकवक इति पठ्यते।**

**तथा—उष्ट्रगोयुगाश्वषड्गवादिषु प्रत्ययत्वेनान्यथान्यथा चान्वाख्यानं क्रियते। ते यदि विभक्ताः कदाचिदप्यनिबद्धा वाक्ये विद्यन्ते, संसृष्टा राजपुरुषः प्लक्षन्यग्रोधौ। विभक्ता राज्ञः पुरुषः, प्लक्षश्च न्यग्रोधश्चेति।**

कश्चिदाचार्यः पाणिनिविरचितेन लक्षणशास्त्रेण शब्दानधिगच्छति, कश्चिदन्येनेति न नियमः। एतदेव स्पष्टीकृतम्—अर्थं कथञ्चिदित्यादिना। तस्मात्

अयं भावः—विचित्रा च परस्परविलक्षणा, बहुप्रकारा च प्रायेण प्रतिपत्तृणां पदेषु प्रतिपत्तिः। तथाहि—'श्रोत्रियँश्छन्दोऽधीते' (५।२।८४) इति सूत्रेण छन्दोऽधीत इति वाक्यार्थे छन्दसःश्रोत्रादेशम्, अधीत इत्यस्मिन्नर्थे घञ्प्रत्ययञ्च प्रकल्प्य श्रोत्रियपदनिर्वचनम्। कैश्चित्तु पाणिनेः प्राक्तनैर्वैयाकरणैः श्रोत्राभ्यां कृतं कर्मेत्यर्थे श्रोत्रियशब्दः श्रोत्रशब्दाद् घञ्प्रत्ययस्य समाश्रयणेन कथञ्चिद् व्युत्पाद्य छन्दोऽध्येतरि प्रयुज्यते। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तमिति। तथा—आखनिरस्यास्तीति मत्वर्थे 'आखनिक' इत्येतत्सिद्धय 'आखनेरिको वक्तव्य' इति वार्त्तिककृतोक्तम्। आखनिराकरः सोऽस्यास्ति व्यव-हाराऽधिकरणत्वेनेत्यर्थः। आ अतिशयिता खनिर्यस्येति बहुव्रीहावपि कन्प्रत्ययेन 'आखनिकः, कैश्चिदिष्यते। तथा—मत्वर्थे आखनेरिकबको वक्तव्यः' (३।३।१२५) इति वार्तिककृतोक्तम्। आखनिकः, बक इति पदद्वयं समाश्रित्य पात्रे समितादिष्वाखनिकबक इति पठ्यते। तत्रान्यार्थकपदद्वयेन व्युत्पाद्यान्यत्रार्थेऽयं प्रयुज्यते, व्युत्पत्तिवृत्तिनिमित्तयोर्भेदाभ्युपगमात्।

तथा—उष्ट्रगोयुगादिषु द्वावुष्ट्रावुष्ट्रगोयुगमिति द्वित्वे गोयुगच् प्रत्ययश्चोद्यते (५।२।२९वा.)। उष्ट्रावेव गोयुगमित्युष्ट्रयोर्भारवहनादिसादृश्येन गोयुगत्वमारोप्य समासेनापि कैश्चिदेतद् व्युत्पाद्यते। एवं षड् अश्वा अश्वषड्गवमिति षट्त्वेऽश्वशब्दात् षड्गवच्प्रत्यय उपसंख्यायते (काशिका० ५।२।२९ द्र०)।

कैश्चित्तु अश्वा एव षड्गवमित्यारोपेण विगृह्य समासः क्रियत इति तद्धितवृत्तिसमासवृत्त्योरन्यतरसमाश्रयणेनान्यथा चान्यथा चान्वाख्यानं क्रियते। त आखन्यादयः, इकादयः, कादयो वा, उष्ट्रादयो गोयुगादयश्च प्रत्ययरूपाः पदरूपा वाऽऽखनिकोष्ट्रगोयुगादिषु संसृष्टा विभक्ता वा भेदाः कदाचिदपि वाक्येऽनिबद्धा न विद्यन्ते। राजपुरुषः पश्यति, राज्ञः पुरुषः पश्यतीत्यादिरूपैः पश्यत्यादिक्रियापदाध्याहारेण संसृष्टानां विभक्तानाञ्च वाक्य एव

१. तुलनीयं व्यासभाष्येण—'दृष्टं च वाक्यार्थे पदरचनम्, श्रोत्रियश्छन्दोऽधीते, जीवति प्राणान् धारयति' (३।१७) इति।

अपर आह—संसृष्टाः देवदत्त गामभ्याज शुक्लामिति। विभक्ताः यत्र पदान्तरैः, सह पदस्याप्रयोगः। सर्वथा यान्यविच्छिन्नरूपग्रहणानि निदर्शनाय सामान्यरूपावस्थितानि पदान्युपादीयन्ते, तान्यप्यन्ततः सत्तायामुपनिबद्धानि न कस्याञ्चिदप्यवस्थायां निदर्शनायालम्।

तस्माद्यदि संसृष्टा यदि विभक्ताः, नानिबद्धा वाक्ये भेदा विद्यन्ते। भेद-संसर्गौ त्वध्यारोपनियमानुवादैः पुरुषप्रतिपत्त्युपायावेवेति ॥३६॥

संसृष्टस्य विभक्तस्य वार्थविशेषस्य वाक्यमेकमनंशमेव प्रतीतिनिबन्धनमिति पद-पदार्थप्रविभागकल्पनमसमञ्जसमेवेति प्रतिपादयितुमाह—संसृष्टा वा इति ॥३९॥

**सोऽयमित्यभिसम्बन्धो बुद्ध्या प्रक्रम्यते यदा।**
**वाक्यार्थस्य तदैकोऽपि वर्णः प्रत्यायकः क्वचित् ॥४०॥**

नावश्यं विच्छिन्नपदरूपविग्रह एव शब्दः पौर्वापर्ययुक्तमनुगतविभागमेवार्थं प्रत्याययति। यदा हि वाक्यार्थस्यैवेग्यणः स्थाने भवतीत्येवमादेर्बुद्धिविषयः

---

निबद्धत्वात्। सर्वक्रियाऽसंभवेऽन्ततोऽस्तिक्रियासंबन्धादिति। तत्र संसृष्टा राजपुरुषः प्लक्षन्य-ग्रोधाविति। विभक्ताः—राज्ञः पुरुषः, प्लक्षश्च न्यग्रोधश्चेति। एवमाखनिकोष्ट्रगोयुगादिषु पदानामनियतत्वात् अखण्डत्वमेवैषामिति युक्तम्।

अपरस्त्वस्याः कारिकाया अपरं भावमाह। तथाहि—संसृष्टा भेदा देवदत्त गामभ्याज शुक्लां दण्डेनेति। यत्रापेक्षितानि सर्वाणि पदानि सन्ति। विभक्ता भेदाः, यत्रापेक्षितानि सर्वाणि पदानि पदान्तरेण सह न प्रयुज्यन्ते। तद्यथा—'कपाटावाकुञ्च्य द्वारं पिधेहि' इति वक्तव्ये यत्र पिधेहीत्येकमेव पदं प्रयुज्यते, देवदत्त गामभ्याज शुक्लां दण्डेनेति प्रयोक्तव्ये-ऽभ्याज शुक्लामित्येतावन्मात्रं वा प्रयुज्यते। सर्वथा यानि द्वारं दण्ड इत्यादीनि पदान्त-रान्वयाभावाद् अव्यावृत्तरूपग्रहणानि सामान्यरूपेऽर्थेऽवस्थितानि पदान्युपादीयन्ते वाक्यात् पृथग्भूतकेवलपदनिदर्शनाय, तान्यप्यन्ततः सत्ताबोधकपदघटिते वाक्य उपनिबद्धानि, अस्ति-र्भवन्तीपरः सर्वत्र प्रयुज्यत इत्यभ्युपगमात्। अतस्तान्यपि वाक्यात् पृथग्भूतकेवलपदनिदर्शनाय न पर्याप्तानि।

तस्माद् यदि संसृष्टा यदि वा विभक्ताः पदभेदा उभयथापि वाक्येऽनिबद्धा न विद्यन्ते। पदतदर्थानां वाक्यतदर्थयोर्विभागसंसर्गौ त्वध्यारोपनियमानुवादैः पुरुषस्य वाक्य-वाक्यार्थप्रतिपत्त्युपायावेव।

तथा हि—वाक्यादविभक्तेष्वसंसृष्टेषु च पदेषु विभागसंसर्गयोरध्यारोपेण संसृज्य-मानानाञ्च पदानां पदान्तरार्थान्वययोग्यताबलात् प्रकरणबलाच्च नियमनेनेष्टस्य वाक्यस्वरूपस्य प्रतिपत्तिर्भवति। वाक्याद् विभज्यमानानां च पदानां पदान्तरैरर्थानुवादेनेष्टवाक्यार्थप्रतिपत्ति-र्भवतीति। तदेवं वाक्यवाक्यार्थप्रतिपत्त्युपायभूतायाः पदपदार्थविभागकल्पनायाः पुरुषबुद्धि-प्रभवत्वेनानियतत्वाद् वाक्यवाक्यार्थयोरखण्डत्वमेवेति सिद्धमिति ॥३६॥

**सम्प्रसारणमिति वा, 'भ भि' इति वा सोऽयमित्यभिसम्बन्धः क्रियते, अथो यथे-वेग्यण इत्यनेन पौर्वापर्यानुपातिनी प्रतिपत्तिर्भवति, एवमपौर्वापर्यया 'भ भि' इत्येकवर्णया तस्यार्थस्य संज्ञया प्रत्यस्तमितपौर्वापर्यः स एवार्थात्मा प्रतीयते। न चावश्यं शब्दव्यवहितैव तत्र प्रतिपत्तिर्भवति। कृताभ्यासानां हि शब्दान्तरेणार्थ-प्रतिपत्तिर्न व्यवधीयते।**

अतश्च निरंश एवायं पदार्थशून्यो वाक्यार्थोऽध्यासमात्रसम्बन्धगर्भ एकस्मादपि वर्णात् प्रतीयत एवेत्यभिधातुमाह—**सोऽयमिति**।

---

अतश्च निरंश एवायं पदार्थशून्यो वाक्यार्थः सोऽयमित्यध्यस्यमानवाक्यतादात्म्य-रूपसम्बन्धमात्रगर्भो वाक्यमपि वर्णपदशून्यम्, यतो वाक्यात् प्रतीयमानो वाक्यार्थः स्वस्मिन् संकेतिताद् 'भ' भि' इत्यादिरूपादेकस्मादपि वर्णात् प्रतीयत एवेत्यभिधातुमाह—**सोऽय-मित्यभिसम्बन्ध** इति।

अयमर्थः—यदा वक्त्रा वाक्येन सह वाक्यार्थस्य सोऽयमित्यभिसम्बन्धस्तादात्म्या-ध्यासरूपो बुद्ध्या करणीभूतया प्रक्रम्यते शब्दबोधोपक्रमे शाब्दबोधात् प्रथमं गोचरीक्रियते, तदा तत्र वाक्यार्थे संकेतिततद्वाक्यवत् तत्र वाक्यार्थे सकेतित एकोऽपि वर्णो 'भ' 'भा' 'भि' इत्यादिरूपः क्वचित् प्रत्यायकः। तथा च यथा निरंशस्य वर्णस्य निरंशवाक्यार्थप्रत्यायकत्वं तथा निरंशस्य वाक्यस्यापि तथाविधवाक्यार्थप्रत्यायकत्वमित्युक्तं भवतीति।

तत एष निर्गलितोऽर्थः—वाक्येन सह वाक्यार्थस्य सोऽयमित्यभिसंबन्धस्तादात्म्या-ध्यासरूपो यदा वक्त्रा बुद्ध्या प्रक्रम्यते तदैकोऽपि वर्णो वाक्यार्थस्य वाचको भवत्येव। तत्र संकेतेन सोऽयमिति तादाम्याध्यासगोचरतामापन्नः। किं पुनर्वक्तव्यम् अशेषविवक्षितपदार्थ-विशेषघटितवाक्यार्थविशेषाभिधानविवक्षयोदीरितमनेकं पदं वाक्यार्थस्य वाचकं भवतीति। एवं सोऽयमिति तादात्म्याध्यासवशाद् वाक्यवाक्यार्थयोरभिन्नस्वरूपत्वे गृहीते वाक्यार्था-भिव्यक्तौ वाक्यमपि स्फोटात्मकमभिव्यक्तमेवेत्युक्तमत्रोत्तरार्धेन वाक्यार्थस्य तथैक्येऽपीत्या-दिनेति।

अयं भावः—परस्परव्यावृत्तरूपनानापदघटितविग्रहो गामानय शुक्लां दण्डेनेत्यादि-वाक्यरूप एव शब्दः स्वघटकपदपौर्वापर्यानुसारेण पौर्वापर्ययुक्तं तत्तत्पदार्थविभागयुक्तमेव च वाक्यार्थं प्रत्याययतीत्येष नावश्यं नियमः। तथा हि—यदा इग् यणः स्थाने भवतीत्येवमादे-र्वाक्यार्थस्यैव 'भ' इति 'भि' इति वा वर्णबुद्धिविषयो यणः स्थान इक् सम्प्रसारणमिति 'भ' 'भि' इति वा सोऽयमित्यभिसम्बन्धः क्रियते; तदा यथैव इग् यणः स्थाने सम्प्रसारणमिति वाक्यात् पदार्थविशेषपौर्वापर्यानुपातिनी वाक्यार्थप्रतिपत्तिर्भवति, तथा पदादिपौर्वापर्यशून्य-याऽपि 'भ' 'भि' इत्येकवर्णरूपया तस्यैव वाक्यार्थस्य संज्ञया प्रत्यस्तमितपदार्थपौर्वापर्यं तदेव वाक्यार्थस्वरूपं प्रतीयते, पदाभावेन पदार्थप्रतीत्यसंभवात्। न च तत्र वाक्यार्थे सोऽयमित्यभिसंबन्धेन संकेतिताद् 'भ' 'भि' इत्येकवर्णादपि वाक्यप्रतिपत्तिपूर्विकैव

**यदि च लघूपायं सामान्यविशेषयुक्तं शास्त्रं सदृशसंव्यवहारमलस इतीव मिथ्याभ्या [ध्या] सविपर्ययस्तद्दर्शिनो लोके नानुपतेत् तदा प्रतिपत्तारस्तमेवाक्रमं प्रतिपद्यरेन् । भेदरूपेण चै [नै] कत्वं संकीर्णम् । तेन सापराधैव प्रकर्षविनिवेशिन्या: प्रक्रान्तक्रमरूपोपप्लवाया वाचो वृत्तिः । सा हि सापराधेषु पुरुषेष्वन्यथैवात्मानं दर्शयति । अतश्च तामेके पश्यन्तोऽपि न पश्यन्ति, श्रृण्वन्तोऽपि न श्रृण्वन्ति ।**

**तां तु वैयाकरणा वाग्योगविदः शब्दात्मानमभिसंभूता भेददर्शनमतीत्य स्वेन स्वरूपतत्त्वेनोपलभन्ते ।**

सोऽयमित्यभिसम्बन्धोऽध्यासरूपो वाक्यार्थस्य वाक्येन सह यदा वक्त्रा प्रक्रम्यते, तदैकोऽपि वर्णो वाक्यार्थस्य वाचको भवत्येव, किं पुनरनेकमशेषविशेषा-

---

वाक्यार्थप्रतिपत्तिर्भवतीत्येकवर्णादपि पदार्थपौर्वापर्यानुपातिन्येव वाक्यार्थप्रतिपत्तिरिति वाच्यम् । तत्तद्वाक्यार्थसंकेतिततद्वर्णविषये कृताभ्यासानां पुंसां तत्तद्वर्णेभ्यस्तत्तद्वाक्यार्थ-प्रतिपत्तिस्तत्तद्वाक्यप्रतिपत्तिव्यवहिता न भवतीत्यस्यार्थस्य सर्वानुभवसिद्धत्वात् ।

किञ्च, यदि प्रकृतिप्रत्ययविभागान्वाख्यानादिद्वारा महतो महतः शब्दौघस्य प्रति-पादकं लघूपायं व्याकरणशास्त्रं सामान्यविशेषभावापन्नोत्सर्गापवादसूत्रयुक्तं लोके यथा पदे प्रकृतिप्रत्ययविभागाज्ञानाद्वाक्ये च पदविभागाज्ञानाद् अक्रमाद् वाक्याद् अक्रमं वाक्यार्थं प्रतिपद्यन्ते लोकास्तथा शास्त्रे पदे प्रकृतिप्रत्ययविभागान्वाख्यानाद् वाक्ये च दविभाग-परिज्ञानात् सक्रमेणापि वाक्येन सक्रमस्यापि तस्यैवार्थस्य प्रतीतिरिति कृत्वा लोकसदृश-संव्यवहारसंपन्नं महतोऽपारस्य शब्दराशेः प्रतिपदपाठरूपबृहत्तरोपायमालम्ब्य प्रतिपादने गौरवाद् बिभ्यदलस इतीव ( अत्रेवशब्दो वाक्यालङ्कारेऽनर्थकः ) कारणाच्छास्त्रे प्रकृति-प्रत्ययविभागादिदर्शिनः पुंसः शास्त्रीयवासनावासितान्तःकरणस्य लोके व्यवहारकाले प्रकृति-प्रत्ययविभागपदविभागतत्तदर्थविभागादिविषयकमिथ्याऽध्यासरूपो बुद्धिविपर्ययो नानुपतेत्, तदा लोका अक्रमाद् वाक्यात् तमेवाक्रमं वाक्यार्थं प्रतिपद्येरन् ।

तस्माच्छास्त्रवासनावतामेव सक्रमा वाक्यवाक्यार्थप्रतिपत्तिः प्रकृतिप्रत्ययादिकल्पना-रूपमिथ्याऽध्यासमूलिका, वस्तुतस्त्वक्रममेव वाक्यं वाक्यार्थश्च ।

किञ्च, शास्त्रीयवासनाजन्यप्रकृतिप्रत्ययविभागपदविभागतत्तदर्थविभागविषयक-मिथ्याबुद्ध्यभात्रे पदपदार्थयोर्भेदरूपेण संकीर्णं वाक्यवाक्यार्थयोरेकत्वं न प्रतिपद्येरन् लोकाः। तेनाक्रमे सक्रमत्वदर्शनेनैकस्मिंश्चानेकत्वदर्शनेन = अभिन्ने भेददर्शनेन अक्रमत्वरूपप्रकर्षवत्या वाचो वाक्यरूपायाः शास्त्रवासनायाः प्रकान्तक्रमरूपोपसर्गायाः सक्रमवाक्यार्थप्रतिपादनरूपा वृत्तिः सापराधैव, अयथाभूतार्थबोधकत्वात् । सा चाक्रमवाक्यरूपा वाक् प्रागुक्तरीत्या शास्त्र-वासनया क्रमदर्शिषु मिथ्यादर्शिषु सापराधेषु पुरुषेष्वक्रममपि सन्तमात्मानमन्यथैव सक्रमं दर्शयति । अतश्च तामक्रमामेके सक्रमां पश्यन्तोऽपि न पश्यन्ति, वस्तुतस्त्वादर्शनात् ; श्रृण्वन्तोऽपि न श्रृण्वन्ति, यथावच्छ्रवणाभावात् ।

सा च तेभ्य एवात्मानं विवृणोति । उक्तमिदम्—'अर्थं कथञ्चित् पुरुषः कश्चित् संप्रतिपद्यते' इति। अतः पुरुषप्रतिपत्तिभेदानां परिमाणविकल्पानां निदर्शनमात्रं क्रियते।।४०।

भिधानविवक्षयोदीरितं पदमिति। एवमभ्यासवशाद् वाक्यवाक्यार्थयोरभिन्नस्वरूपत्वाद् वाक्यार्थाभिव्यक्तौ वाक्यमपि स्फोटात्मकमभिव्यक्तमेवेत्युक्तम्—वाक्यार्थस्य तदैकोऽपीत्यादि ।।४०।।

**केवलेन पदेनार्थो यावानेवाभिधीयते।**
**वाक्यस्थं तावतोऽर्थस्य तदाहुरभिधायकम् ।।४१।**

इह यावन्तं केवलो वृक्षशब्दो जातिमात्रं भिन्नमर्थं ब्रवीति तावन्तमेव वृक्षोऽस्ति वृक्षो नास्ति वृक्षश्छिन्न इत्येवमादिष्वपि वाक्येषु प्राप्तयोगं [गः]

इदानीमभिहितान्वयपक्षसमाश्रयणेन संघातपक्षस्य प्रदर्शनायाह—केवलेनेति। केवलं पदं यस्यैवार्थस्य वाचकम्, वाक्यस्थमपि तमेवाभिदधाति।

ये त्वक्रमाया वाचो वाक्यरूपायाः परिज्ञानोपायभूताः प्रकृतिप्रत्ययादयो रेखागवयन्यायेन कल्पिता न तु वस्तुभूताः प्रतिव्याकरणं प्रकृतिप्रत्ययादिकल्पनाया अन्यथात्वादिति विदन्ति वैयाकरणास्ते सम्यग्बुद्धियुक्तास्तयैव बुद्धया शब्दात्मानमभिसंभूताः = आभिमुख्येन संप्राप्ताः वाक्यवाक्यार्थयोः पदादिभेददर्शनमतीत्याक्रमां वाचं वाक्यरूपा स्वेन तदीयेन स्वरूपतत्त्वेनोपलभन्ते ।

सा च तेभ्य एवाक्रममात्मानं वस्तुभूतं प्रदर्शयत्यक्रमं च वाक्यार्थम्—इदञ्चोक्तम् 'अर्थं कथञ्चित् पुरुषः कश्चित्संप्रतिपद्यते' इति ।

अस्यार्थः—कश्चित् पुरुषो वाग्योगविद् वैयाकरणः, कथञ्चिच्छास्त्रकल्पितं प्रकृतिप्रत्ययविभागाद्यन्वाख्यानं पुरस्कृत्य मिथ्यात्वबुद्धया पश्चात्तद्धानेनाक्रमं वाक्यार्थं प्रतिपद्यत इति। अतः पदे वाक्ये च प्रतिपुरुषं ये प्रकृतिप्रत्ययपदापोद्धारकल्पनारूपाः प्रतिपत्तिभेदास्तेषां ये परिमाणविकल्पाः, तद्यथा—पचतीत्यत्र केचित् पच्, शप्, तिप् इति प्रकृतिप्रत्ययाद्ययविभागं कल्पयन्ति ।

केचित्तु पच् अति, इत्येकां प्रकृतिमेकञ्च प्रत्ययमिति ।

तेषां प्रकृतिप्रत्ययादिसंबन्धिसंख्यारूपपरिमाणविकल्पानां शास्त्रेण प्रदर्शनमात्रं क्रियतेऽक्रमं वाक्यं वाक्यार्थञ्च प्रतिपादयितुम्, न तु वाक्ये पदानि वस्तुभूतानि वाक्यार्थे वा पदार्था वस्तुभूताः सन्तीति ।।४०।।

इदानीमभिहितयोः पदार्थयोरन्वय आकाङ्क्षाभास्यो वाक्यलक्ष्यो वेत्यभिहितान्वयवादरूपमूलसमाश्रयणेन पदसंघातो वाक्यमिति पक्षं युग्मेन प्रसाधयितुमाह—केवलेन पदेनेति। सम्बन्धे सतीति च ।

**प्रत्याययति। भावाभावच्छेदादियोगो [न] भिन्नजातियुक्तात्मकतां प्रदर्शयति। नापि जातियोग्यो भावाभावच्छेदादिसम्बन्धः। नहि मात्रान्तरनिबन्धनस्य मात्रान्तरप्रत्यायने सामर्थ्यमस्ति ॥४१।**

**सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते।**
**वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥ ४२ ।**

**यत्तु पदान्तरेण सम्बन्धे वीरः पुरुष इति विशेषणविशेष्यत्वात् सामानाधिकरण्यं जातिगुणविशेषयोरेकार्थसमवायप्रतिपत्तिपूर्वकमर्थेष्वाधिक्यं दृश्यते वाक्यार्थ एवासौ। नहि तस्यान्तःपदं शब्दसंस्कारे निमित्तत्वेन व्यापार आश्रीयते।**

---

तत्राद्यस्यार्थः—केवलेन स्वान्वययोग्यपदान्तरासमभिव्याहृतेन पदेन यावानर्थोऽभिधीयते, अत्रैवकारो भिन्नक्रमस्तावत्पदोत्तरं द्रष्टव्यः। वाक्यस्थमपि तत्पदं तावत एवार्थस्याभिधायकमाहुरिति।

द्वितीयपद्यस्य तु सम्बन्धे सति, शक्त्याभिहितयोः पदार्थयोः परस्परं सम्बन्धे सति, यत्त्वन्यत् पदार्थद्वयातिरिक्तमाधिक्यमुपजायते पदार्थद्वयातिरिक्तः संसर्गः प्रतीयते, तमनेकपदसंश्रयम् अनेकपदाश्रितम् अनेकपदसमभिव्याहारे प्रतीयमानं वाक्यार्थमेव न तु पदार्थमाहुरभिहितान्वयवादिन इति पदयोजनम्। पदार्थातिरिक्तः पदार्थद्वयसंसर्गो वाक्यात् प्रतीयमानः पदद्वयसमभिव्याहारविशेषरूपाकाङ्क्षाभास्य एवेत्यर्थो लभ्यते।

तथा चायं निष्कर्षः—पदसमुदायरूपवाक्यघटकानां पदानां परस्परान्वये सति पदार्थयोः प्रतीतिवशाद् यदाधिक्यं संसर्गः प्रतीयते स वाक्यार्थः। वाक्यार्थेऽपि विशेष्यविशेषणभावांशे वाक्यशक्तेरर्थवत्सूत्रभाष्यादावुक्तवात्। अन्यत्राऽप्युक्तम्—"यदत्राधिक्यं वाक्यार्थः स" (महाभा० २।३।४६ वार्त्तिके) इति। कारिकायामनेकपदसंश्रयमित्यनेन पदसंघातो वाक्यमिति दर्शितमिति।

तत्र प्रथमकारिकाया अयं भावः—इह लोके केवलो वृक्षशब्दो यावन्तं जातिमात्रं भिन्नमर्थं ब्रवीति तावन्तमेव वृक्षोऽस्ति वृक्षो नास्ति वृक्षश्छिन्न इत्येवमादिष्वपि वाक्येषु पदान्तरेण सह प्राप्तयोगः सन् स प्रत्याययति। वाक्ये—वृक्षशब्दार्थस्य भावाभावच्छेदादियोगो न भिन्नजातियुक्तात्मकत्वं तस्य प्रदर्शयति। नापि चात्र वृक्षत्वजातियोग्यो भावाभावच्छेदादिसम्बन्धः, अत्र जातेर्व्यक्तौ विशेषणतया प्रतीयमानत्वाद् भावाभावादिसम्बन्धस्य प्रधानीभूतायां व्यक्तावेव प्रतीतेरौचित्यात्।

किञ्च, मात्रान्तरनिबन्धनस्य=जात्यन्तरप्रवृत्तिनिमित्तकस्य, अत्र मीयते इतरव्यावृत्ततया प्रमीयते पदार्थो यया सा मात्रा जातिः वृक्षशब्दस्य मात्रान्तरप्रत्यायने=भावाभावादिसम्बन्धयुक्तवृक्षत्वजातिप्रत्यायने सामर्थ्यं नास्ति, तत्रासंकेतितत्वादिति।

द्वितीयकारिकायास्त्वयं भावः—पुरुषपदस्य पदान्तरेण सम्बन्धे सति वीरः पुरुष

**यस्त्वेकपदविषयो व्यतिरेकः कर्मादिवद् बाह्यनिमित्तोपजनितो राज्ञः पुरुष इति सोऽन्तःपदं प्रातिपदिकान्येव विभक्तियोगविशेषयोगे नियमयति। स चायं वाक्यपदयोराधिक्ययोर्भेदो भाष्य एवोपव्याख्यातः।**

**अतश्च तत्रभवानाह—"यथैकपदगतः प्रातिपदिकेऽन्तःपदं संस्कारहेतुरर्थो वचनं प्रति " भवति तथैकपदगतः पदसंस्कारहेतुरेव विभक्तियोगं प्रत्यहेतुर्भवति।**

**ततः समुदाये पदानां परस्परान्वये पदार्थवशाद्यदाधिक्यं संसर्गः स**

---

इत्यत्र विशेषणविशेष्यभावरूपसम्बन्धप्रयुक्तं यत्पुरुषत्ववीरत्वयोर्जातिगुणविशेषयोः सामानाधिकरण्यरूपमेकार्थसमवायप्रतिपत्तिपूर्वकं पदार्थेष्वाधिक्यं दृश्यतेऽसौ विशेषणविशेष्यभावरूपो वा तत्प्रयुक्तसामानाधिकरण्यरूपो वा संसर्गो वाक्यार्थ एव न तु पदार्थः। यस्य ह्यर्थस्य ज्ञानरूपो व्यापारः पदस्य संस्कारे निमित्तत्वेनाश्रीयते व्याकरणशास्त्रे स पदार्थः। नहि संसर्गस्य ज्ञानरूपो व्यापारः शास्त्रेण पदान्तः शब्दसंस्कारे क्रियमाणे निमित्तत्वेनाश्रीयत इति नासौ पदार्थः।

न चैवं सति राज्ञः पुरुष इत्यत्र राज्ञ इति षष्ठ्यन्तपदात् प्रतीयमानो राजसम्बन्धोऽपि पदार्थो न स्यात्, तस्य स्वस्वामिभावरूपस्य स्ववाचकपदसमभिव्याहारसापेक्षत्वात्। किञ्च, तण्डुलं पचतीत्यत्र कर्मत्वमपि तण्डुलमित्येतस्य पदस्यार्थो न स्यात्, क्रियावाचकपदान्तरसापेक्षत्वादिति वाच्यम्, यतो राज्ञ इत्यादौ यस्त्वेकपदविषयः = एकपदवाच्यः संसर्गरूपो व्यतिरेकस्तण्डुलमित्यादौ कर्मादिवद्बाह्यपदान्तरसम्बन्धरूपनिमित्तोपजनितः स राज्ञ इति तण्डुलमित्यादिपदान्तर्विद्यमानानि प्रातिपदिकान्येव तत्तद्विभक्तियोगे तत्तत्सम्बन्धविशेषरूपार्थविशेषयोगे च नियमयति—एतस्मात् प्रातिपदिकादस्मिन् सम्बन्धरूपेऽर्थे इयमेव विभक्तिरिति। तथा चान्तःपदं शब्दसंस्कारार्थं तस्यार्थस्य संसर्गरूपस्य शास्त्रेण निमित्तत्वेनाश्रयणात् तत्र पदार्थ एव संसर्गो न तु वाक्यार्थः।

स चायं वीरः पुरुष इत्यादौ वाक्ये, राज्ञ इत्यादौ च पदे प्रातिपदिकार्थापेक्षयाधिक्यरूपयोः संसर्गयोर्यथाक्रममन्तःपदं शब्दसंस्कारानिमित्तत्वतन्निमित्तत्वप्रयुक्तो भेदो भाष्य एवोपव्याख्यातः।

अतश्च तत्रभवान् आह—"यथैकपदगतः प्रातिपदिकेऽन्तःपदं संस्कारहेतुरर्थो वचनं प्रति हेतुर्भवति, तथैकपदगतः पदसंस्कारहेतुरेव विभक्तियोगं प्रत्यहेतुर्भवति, ग्रामो ग्रामो रमणीय इति। अनेकपदसंश्रयस्तु वाक्यार्थः प्रतिनिवातादिव्यवस्थार्थहेतुराख्यायते" इति।

अस्यार्थः—यथा ग्रामौ ग्रामा इत्यादिष्वेकपदगतो द्वित्वबहुत्वादिसंबन्धरूपोऽर्थः; अन्तःपदम्, ग्रामौ ग्रामा इत्यादिपदेषु प्रातिपदिके द्विवचनादिविभक्तियोगप्रयुक्तो यः संस्कारस्तस्य हेतुः सन् वचनं प्रति द्विवचनाद्युत्पत्तिं प्रति हेतुर्भवति, तथा ग्रामो ग्रामो रमणीय इत्यत्रैकपदगत एव कात्स्न्र्यसंबन्धरूपोऽर्थो व्याप्त्याख्यः पदद्विरुक्तिनिमित्ततया

**ग्रामो ग्रामो रमणीय इति । अनेकपदसंश्रयस्तु वाक्यार्थः प्रतिनिघातादिव्यवस्थार्थ-हेतुराख्यायत इति ॥४२॥**

वाक्यार्थः । उक्तं च–'यदत्राधिक्यं वाक्यार्थः स' इति । अनेकपदसंश्रयमित्यनेन संघातो वाक्यमिति दर्शितम् ॥४१-४२।

अथाप्यनेकपदसंश्रयत्वेऽप्यपरो दर्शनभेदः—

**स त्वनेकपदस्थोपि प्रतिभेदं समाप्यते ।**
**जातिवत्समुदायेऽपि संख्यावत्कल्प्यते परैः ॥४३।**

**यद्यथा जातिवत् सत्तावाने[या अने]काधिकरणयोगेऽपि प्रत्यधिकरणमन्यून-**

---

पदसंस्कारहेतुरेव बहुवचनविभक्तियोगं प्रत्यहेतुर्भवतीत्येवमेकपदगतस्यापि संसर्गस्य स्वभाव-भेदप्रयुक्तसामर्थ्यभेदात् कार्यभेदः ।

अनेकपदसंश्रयस्तु वाक्यार्थश्चैत्रः पचतीत्यादौ प्रतिनियता या निघातादिव्यवस्था तद्रूपश्यार्थस्य प्रयोजनस्य हेतुराख्यायते शास्त्र इत्येवमनेकपदसश्रयस्यापि वाक्यार्थस्य संसर्गस्य स्वभावभेदसामर्थ्यभेदाभ्या कार्यभेद इति ।

तदेवं पदसंघातो वाक्यमिति पक्षेऽभिहितान्वयवादो वाक्यार्थस्य पदार्थातिरिक्तत्वोप-पादनेन प्रदर्शितः । स चायमभिहितान्वयवादो न भट्टस्य,

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः ॥"

( तु० वाक्याधिकरण, २२९ श्लो० )

इति श्लोकवार्त्तिकविरोधात् । अत्र हि वाक्यार्थेऽपीत्यपिना पदार्थेऽपि सामर्थ्यंशक्तिं न विमुञ्चन्ति नोऽस्माकं मते पदानीति स्पष्टमेवान्विताभिधानप्रतीतेः ।

न चैवं सत्यत्रैव वाक्यार्थस्य लक्ष्यमाणत्वोक्तिर्विरुध्यत इति वाच्यम्, अस्मिन् भट्टसंमतेऽन्विताभिधानेऽन्वयसामान्यस्य पदशक्यत्वम्, अन्वयविशेषस्य तु सर्वत्रैव लक्ष्यत्वमेव, अविरोधात् । वाक्यस्य सर्वथाऽनर्थकत्वे त्वन्वयविशेषलक्षकत्वं नोपपद्येत, क्वचिदर्थे शक्तस्यैव क्वचिल्लाक्षणिकत्वदर्शनात् । पदाभिहितयोः पदार्थयोरन्वयो वाक्यलक्ष्य इत्यभिहि-तान्वयवादस्य वाचस्पतिप्रभृतय आचार्या इत्यभिहितान्वयवादसमर्थनोपसंहारावसरे चित्सुखी-ग्रन्थतट्टीका-नयनप्रसादिनीदर्शनेन प्रतीतेश्च । अन्यथाऽभिहितान्वयवादस्य भट्टप्रभृतय आचार्या इति वदेत्, भट्टस्य वाचस्पत्यपेक्षया प्राचीनत्वादिति । वाक्यार्थ आकाङ्क्षा-भास्य इत्येवमभिहितान्वयवादिनस्तु गौतमीया इति साधु प्रतीमः ॥४१-४२॥

पदसंघातो वाक्यमिति पक्षेऽभिहितान्वयवादमाश्रित्य वाक्यार्थस्यानेकपदसंश्रयत्वेऽपि केषाञ्चिन्मते जातिवद् वाक्यार्थस्य प्रत्येकपरिसमाप्तिः, केषाञ्चिन्मते तस्य संख्यावत् समुदाय-परिसमाप्तिरिति पक्षद्वयं दर्शयितुमाह—**स त्वनेकपदस्थोऽपीति ।**

**कार्या [या],तथायमेकेषां वाक्यार्थ आवृ[कृ]तिन्यूनतासमतिक्रमेण प्रतिपदमेवाविकलः समाप्यते। अथापरः कल्पः—यथैकस्या विंशत्यादिकायाः संख्यायाः प्रत्यधिकरणं तन्निमित्तप्रत्ययहेतुत्वं तथा वाक्यार्थस्य प्रतिपदं प्रत्याय्यत्वेनावस्थानमिति ।।४३।**

वाक्यार्थस्य चास्य जातिवत् प्रत्येकपरिसमाप्तिः, केषाञ्चिन्मते संख्यावत् समुदायपरिसमाप्तिरिति पक्षद्वयं दर्शयितुमाह—स त्वनेकेति ।।४३।

**सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः।**
**तदर्थान्तरसंसर्गाद् भजते भेदरूपताम् ।।४४।**
**भेदानाकाङ्क्षतस्तस्य या परिप्लवमानता।**
**अवच्छिनत्ति संबन्धस्तां विशेषे निवेशयन् ।।४५।**

---

अयमर्थः—स तु वाक्यार्थः, वाक्यलक्ष्यतया वाक्यगतसमभिव्याहारविशेषरूपाकाङ्क्षाभास्यतया वाऽनेकपदस्थोऽपि प्रतिव्यक्ति जातिवत् प्रतिभेदं प्रतिपदं समाप्यत इत्येकः पक्षः। परैस्तु द्वित्वबहुत्वादिसंख्यावत् समुदायेऽपि वाक्यार्थः कल्प्यते। तद्यथा—द्वित्वबहुत्वादिसंख्याऽवयवेऽपि कल्प्यते समुदायेऽपि, नह्यवयवापर्याप्तस्य समुदाये पर्याप्तिरस्तीति दर्शनात्, तथा वाक्यार्थोऽनेकपदस्थोऽपि प्रतिपदमप्यस्ति। प्रत्येकपदस्यापीतरपदसहकारेण वाक्यार्थलक्षकत्वाद् वाक्यार्थभासकत्वाद् वेति। अत्रापि नह्यवयवेऽवर्तमानस्य समुदाये वृत्तिरस्तीति न्यायो योजयितव्य इति।

अयं भावः—यथा जातिरूपायाः सत्ताया अनेकाधिकरणयोगेऽपि प्रत्यधिकरणमन्यूनकाया सत्ता, तथैकेषामाचार्याणां मतेऽनेकपदनिष्ठोऽपि वाक्यार्थ आकृतिन्यूनतासमतिक्रमेण वाक्यापेक्षयाऽविकल एव प्रतिपदं समाप्यते।

अथापरः पक्षः—यथैकस्या एव विंशत्यादिकायाः संख्यायाः समुदायपर्याप्तायाः प्रत्यधिकरणमपि वर्तमानत्वेन संख्यानिमित्तकसंख्येयप्रत्ययहेतुत्वं तयाऽनेकपदनिष्ठस्यापि वाक्यार्थस्य प्रतिपदमपि प्रत्याय्यत्वेनाविकलमेवावस्थानमिति। तथा च केषाञ्चिद् जातिवत्प्रत्येकपरिसमाप्तिर्वाक्यार्थस्येति पक्षः। केषाञ्चित्तु संख्यावत्समुदायपरिसमाप्तिस्तस्येति निष्कर्ष इति ।। ४३।

अथात्र पदसंघातो वाक्यमिति पक्ष एव प्रकारान्तरेणान्विताभिधानप्रदर्शनात् पदार्थ एव वाक्यार्थ इति प्रक्रमेण बोधयितुमाह—**सर्वभेदानुगुण्यमिति**।

अयमर्थः—अपरे तु सर्वभेदानुगुण्यं सर्वेषां भेदानां पदान्तरार्थभूतानां पदार्थान्तररूपाणां विशेषाणाम् आनुगुण्यं प्रतियोगित्वान्यतररूपेण संबन्धानुकूल्यं यत्र तथाभूतं सामान्यं संसर्गरूपं पदार्थं विदुः। तत् संसर्गसामान्यम् अर्थान्तरसंसर्गात् पदार्थान्तरस्य प्रतियोगित्वानुयोगित्वान्यतररूपेण स्वस्मिन् सबन्धाद्भेदरूपतां संसर्गविशेषरूपता भजत इति।

अपरे तु मन्यन्ते—स्वार्थमात्रोपादायिनः सर्वभेदान् प्रति या योग्यता तदेवानुगुण्यमात्रं सामानाधिकरण्यमात्रम् । नहि तथान्यथा सर्वथा चेति सामान्यावस्थारूपं किञ्चिदस्ति । सर्व एते विशेषा एव । तस्यान्तु सामान्यावस्थायां भेदस्य कस्यचिदनिरूपणादानुगुण्याच्च या सर्वभेदोपग्रहयोग्यता परिप्लवमानकल्पनार्थस्य तां सम्बन्धो विषयान्तरादवच्छिद्य विशिष्टे विषये

अथात्र संघातपक्ष एव प्रकारान्तरेणान्विताभिधानप्रदर्शनात् पदार्थ एव वाक्यार्थ इति प्रक्रमितुमाह—सर्वभेदेति। सर्वेषां भेदानामानुगुण्यं यस्मिन् तत्तथाविधं सामान्यं संसर्गलक्षणमाकाङ्क्षायोग्यतासन्निधानवशेन पदान्तरसंसर्गान्नियतस्वरूपं वाक्यार्थः ॥ ४४ ।

तत्र चाकाङ्क्षावसरे येयमस्फुटरूपता वाक्यार्थस्य तामितरपदार्थसन्निधिर्निवारयतीत्याह—भेदानिति । पूर्वत्र पदानां वाक्ये तावानेवार्थो यावानेव

---

अयमत्र निष्कर्षः—योग्येतरान्विते स्वार्थे पदानां शक्तिरित्यन्वयसामान्यं पदार्थान्तरान्वययोग्यं पदार्थ एव, अन्वयविशेषस्त्वभेदरूपो भेदरूपो वा आधाराधेयभावप्रतियोग्यनुयोगिभावादिरूप आकाङ्क्षायोग्यतासंनिधिवशेन पदान्तरसंसर्गान्नियतस्वरूपः प्रतीयमानो वाक्यार्थः, स तु सर्वत्रैव वाक्यलक्ष्य इति भाट्टाः ।

वैयाकरणास्तु—अर्थवत्सूत्रभाष्याद्यनुरोधेन तत्र वाक्यशक्तिमभ्युपगच्छन्तो वाक्यशक्य इत्याहुरिति ।

तत्र पदार्थभूतस्यान्वयसामान्यस्य स्वप्रतियोगिपदार्थविशेषाकाङ्क्षावसरे येयमस्फुटरूपता तां पदार्थान्तरसंनिधिर्निरस्यतीत्याह—भेदानिति ।

अयमर्थः—स्वस्मिन् प्रतियोगित्वरूपेण संबन्धयोग्यान् भेदान् पदार्थविशेषान्, आकाङ्क्षतस्तस्याऽन्वयसामान्यस्य पदार्थभूतस्य या परिप्लवमानता स्वप्रतियोगिपदार्थविशेषानिश्चयेनास्फुटरूपता तामन्वयसामान्यमन्वयविशेषे निवेशयन्नन्वयविशेषरूपतां प्रापयन् सम्बन्धः पदार्थान्तरसनिधिरवच्छिनत्ति निवारयतीति । एकचत्वारिंश-द्वाचत्वारिंशकारिकाभ्यां "पदाना वाक्यघटकाना तावानेवार्थो यावानेव केवलानां पदानाम्, पदार्थद्वयसंसर्गस्तु पदसंघातरूपवाक्यवाच्यः" इत्युक्तम् इह तु चतुश्चत्वारिंशपञ्चचत्वारिंशकारिकाभ्यां योग्येतरान्वितस्वार्थे पदाना शक्तिमभ्युपेत्यान्वयसामान्यरूपः संसर्गः पदार्थभूतः स एव पदान्तरोपस्थापितपदार्थान्तरविशेषसंनिधौ तत्तद्रूपेऽन्वयविशेषे विश्राम्यतीत्युच्यत इति अन्वयविशेषोऽपि पदार्थ एव न वाक्यार्थ इति ।

प्रकृतकारिकयोर्निगूढोऽभिसन्धिस्तु—यस्य कस्यचित्पदस्य स्वार्थसामान्यं स्वानुयोगित्वेनोपाददानस्यान्वयसामान्यस्य या सर्वान् पदार्थविशेषान् प्रति स्वप्रतियोगित्वेनोपादानयोग्यता तदेवानुगुण्यमात्रम्, पदार्थान्तरैः सह पदार्थसामान्यस्य सामानाधिकरण्यमात्रम्, एकस्मिन्नन्वयसामान्ये प्रतियोगित्वानुयोगित्वाभ्या संसर्गित्वात् ।

**नियमयति । तस्मिंश्च योग्यतावच्छेदमात्रेऽर्थस्य क्रियमाणे नाध्यारोपनियमः, नानुपादानयोग्यता किञ्चिदर्थरूपं [ प्रति ] नाप्यर्थरूपादन्या ॥ ४४-४५ ।**

केवलानाम्, संसर्गस्तु संघातवाच्य. । इह तु तथाभूत एव सामान्यरूपः पदस्यार्थो यस्तत्तद्विशेषसन्निधौ तत्तद्विशेषविश्रान्त इति ॥ ४५ ।

**यस्तर्हि योग्यतावच्छेदहेतुः सम्बन्धः, स च नार्थेभ्यो वाक्यस्याभिधेय इति प्राप्तं सोऽपि सर्वाभिधेयधर्मानतिक्रान्तः सम्बन्धः । यदि सर्वाभिधेयधर्मानतिक्रान्तः कथं तर्हि सोऽस्तीत्यवसीयते—**

**कार्यानुमेयः संबन्धो रूपं तस्य न दृश्यते ।**
**असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते ॥ ४६ ।**

---

यतः सामान्यावस्थारूपं किञ्चिदपि वस्तु तथा, अन्यथा, सर्वथा चेति विकल्प्यमानं न भवति, तत्तद्रूपैर्विकल्प्यमानानां सर्वेषामपि विशेषरूपत्वात् । तस्यां त्वन्वयसामान्यवतोऽर्थस्य सामान्यावस्थाया कस्यचिदपि पदार्थान्तरविशेषस्यान्वयप्रतियोगित्वेनानिरूपणात्, तदानुगुण्याच्च याऽन्वयसामान्यवतोऽर्थस्य सर्वेषां स्वान्वययोग्यानां पदार्थविशेषाणां स्वान्वयप्रतियोगित्वेनोपग्रहयोग्यता परिप्लवमानकल्पना अव्यवस्थितरूपा ता पदान्तरोपस्थापितानां पदार्थानां संनिधिः पदान्तरानुपस्थापितपदार्थेभ्यो व्यवच्छिद्य तात्पर्यविषयीभूते पदान्तरोपस्थापितेऽन्वययोग्ये पदार्थविशेषे नियमयति ।

तस्मिँश्चान्वयसामान्यवतोऽर्थस्य पदार्थान्तरविशेषोपग्रहयोग्यताऽवधारणमात्रे क्रियमाणेऽन्वयसामान्यवत्यनुयोगिन्यर्थेऽर्थान्तरस्याकाङ्क्षितस्यान्वयविशेषप्रतियोगिनो योग्यस्य पदान्तराज्ञातया बुद्ध्या संनिधापितस्य सम्बन्धविशेषेणाध्यारोपनियमो न, अध्यारोपस्याहार्यत्वे तत्त्वेन तद्वत्त्वेन वा भेदग्रहाभावात्, अनाहार्यत्वे बाधाभावात् ।

नाप्यन्वयसामान्यवत्यर्थेऽर्थान्तरं प्रत्यनुपादानयोग्यता, अर्थान्तरान्वितस्वार्थप्रत्यायकत्वदर्शनात् ।

नापि च तस्मिन्नर्थेऽर्थान्तरोपादानयोग्यता, तस्मादर्थरूपादन्वयविशेषानुयोगिनोऽन्या, अन्यत्वेनाप्रतीतेरिति ।

एवं च पदान्तरसंनिधिरूपाकाङ्क्षावशात् पदार्थान्तरसंनिधिबलाच्चान्वयसामान्यमेव पदशक्त्योपस्थापितमन्वयविशेषे पर्यवस्यद्विशेष्यभूतस्यार्थस्य सर्वभेदोपग्रहयोग्यतां व्यवच्छिद्य प्रक्रान्ते सन्निहितपदान्तरोपस्थापिते चार्थे व्यवस्थापयतीति तादृशस्यैव वाक्यार्थस्य वाक्यात् प्रतीतिरित्येवं सम्बन्धविशेषोऽपि पदार्थ एव, न तु वाक्यलक्ष्य आकाङ्क्षाभास्यो वाऽशक्य इति ॥ ४४-४५ ।

पदसंघातो वाक्यमिति पक्षे संसर्गो वाक्यार्थ इत्युक्तम् । स चानेकपदार्थनिष्ठोऽपि जातिवत् संख्यावद्वा पदार्थसमुदायपर्याप्त इति कृत्वा पूर्वत्र पदार्थव्यतिरेकेण वाक्यार्थत्वेन

नहि तस्य सम्बन्धस्य स्वरूपमवधारयितुं शक्यम्। स एव योग्यतावच्छेदकार्यप्रसवानुमेय एव नित्यम्, प्राप्तसंविज्ञानपदविशेषनिबन्धनः साक्षात्सम्बन्धेऽसम्बन्धे वा सर्वप्रत्ययात्मसु [अ] विशिष्टस्वरूपः। अतश्चेदन्तदिति साक्षात्पर्यायशब्देन वा व्यपदेष्टुमशक्यत्वादत्यन्तासत्त्वभूतमनेकसम्बन्धिविषयं सम्बन्धमाचक्षते ॥४६।

संघातपक्षे संसर्गो वाक्यार्थ इत्युक्तम्। स च पूर्वत्र जातिवत् संख्यावद्वा पदार्थव्यतिरेकेण वाक्यार्थत्वेन कल्पितः। इदानीं पदार्थव्यतिरेकेणासन्नेवैकान्तानुमेयो न समुदायवाच्यः, किं तर्हि सर्वभेदानुगुणसामान्यरूपो विशेषान्तरसन्निधानाद्विशेषविश्रान्तः पदार्थ एव वाक्यार्थ इति दर्शयितुमाह—कार्यानुमेय इति। कार्येण पदार्थानां विशेषविश्रान्तिलक्षणेनानुमीयत इति कार्यानुमेयः। इदं तदिति तु रूपं तस्य न दृश्यते। अत एवासत्त्वभूतं पदार्थव्यतिरेकेण सत्त्वं नास्ति, यस्य तमेवंभूतमाचार्याः प्रतिजानते।

---

कल्पितः। चतुश्चत्वारिंशपञ्चचत्वारिंशकारिकाभ्यां तु सर्वभेदानुगुणसामान्यरूपो विशेषान्तरसंनिधानात् पदार्थविशेषसंनिधानात् संसर्गविशेषरूपतया विश्रान्तः पदार्थ एव वाक्यार्थ इत्युक्तम्।

तथा चैवं सति योऽन्वयसामान्यस्य सर्वभेदोपग्रहयोग्यतावच्छेदहेतुः पदार्थान्तरसंनिधानात् प्रतीयमानः सम्बन्धविशेषः स पदार्थेभ्यो व्यतिरिक्तो नापि वाक्यस्याभिधेय इति प्राप्तम्। सोऽपि सम्बन्धः सर्वान् अभिधेयधर्मान् पदपदार्थवाक्यवाच्यत्वरूपान् अतिक्रान्तः।

एवं चासावस्तीति कथमवसीयत इत्याशङ्काया अपनयनाय पदार्थव्यतिरेकेणासन्नपि असावेकान्तेन पदार्थानां सामान्यरूपाणां विशेषविश्रान्तिलक्षणकार्यानुमेय एव न समुदायवाच्य इति दर्शयितुमाह—कार्यानुमेय इति।

अस्यार्थः—सम्बन्धः पदार्थयोः संसर्गविशेषः कार्यानुमेयः कार्येण पदार्थानां सामान्यरूपाणां विशेषविश्रान्तिलक्षणेनानुमीयत इति कार्यानुमेयः। तस्य संसर्गविशेषस्य रूपं स्वरूपं तु न दृश्यते शाब्दबोधात् प्राग् इदं तदिति न प्रतीयते। अत एव तमत्यन्तमसत्त्वभूतं पदार्थव्यतिरेकेण सत्त्वं नास्ति यस्य तमेवंभूतमाचार्याः केचन प्रतिजानत इति।

अयं भावः—यतस्तस्य सम्बन्धविशेषस्य स्वरूपं शाब्दबोधात् प्राक् शब्दतः प्रत्यक्षतो वाऽवधारयितुं न शक्यम्, वाक्यार्थस्य संसर्गविशेषरूपस्यापूर्वत्वात्। यतः स तस्यामवस्थायां सर्वभेदोपग्रहयोग्यतावच्छेदरूपकार्यप्रसवरूपलिङ्गानुमेय एव नित्यम्। यतश्च पदविशेषे संसर्गविशेषस्य शक्तिरूपसाक्षात्सम्बन्धस्वीकारे शक्त्या, तदस्वीकारे वा आकाङ्क्षया प्राप्तं स्वसंविज्ञापकं पदविशेषरूपं निमित्तं येन तादृशः।

किञ्च, प्रत्यक्षानुमितिशाब्दबोधस्मृतिरूपेषु सर्वेषु प्रत्ययात्मस्वविशिष्टस्वरूपः तुल्यरूपः अतश्चेदं तदिति शाब्दबोधात् प्राक् साक्षात् पर्यायशब्देन वा व्यपदेष्टुमशक्यत्वाद्

**नियतं साधने साध्यं क्रिया नियतसाधना।**
**स सन्निधानमात्रेण नियमः सन् प्रकाशते ॥ ४७ ।**

**नियतसाधनः साध्योऽर्थः । नियतक्रियाणि च साधनान्यविभक्तरूपोपकाराण्यपि युतव्यवस्थानि प्रतिपदमभिधेयत्वेनावस्थितानि । नित्यनियतत्वाच्च नियमोऽप्यत्र विधेयः । संस्तु नियमः प्रयोगे सन्निधिमात्रेण पदान्तराणां पुरुषं प्रति प्रकाशते नानुगृह्यते ॥ ४७ ।**

एतदेव व्यक्तीकर्तुमाह—**नियतमिति** ।

साध्यं साधनं च **परस्परं** नियतमेव । **केवलमाकाङ्क्षावशादितरपदार्थसन्निधाने** सति **नियमः सन्नेव प्रकाशत इत्याक्षिप्तपदान्तराणि** पदान्येव वाक्यम्, पदार्थश्च वाक्यार्थ **इत्यव्यतिरिक्तः संघातपक्षोऽयम्** ॥ ४७ ।

---

अत्यन्तासत्त्वभूतं = अत्यन्तासदिव, अत्र भूतशब्दः पितृभूत इत्यादिष्वेवार्थे वर्तते पदार्थव्यतिरेकेणासत्त्वाच्चात्यन्तासत्त्वभूतम्, प्रतियोग्यनुयोगिरूपानेकसंबन्धिविषयं च संबन्धविशेषमाचक्षत आचार्या इति ॥ ४६ ।

पूर्वकारिकोक्तमेवार्थं व्यक्तीकर्तुमाह—**नियतं साधने साध्यमिति** ।

अयमर्थः—साधने साधनविशेषे साध्यं क्रियाविशेषः, नियतम् । क्रियाऽपि, क्रियाविशेषोऽपि, नियतसाधना नियतं व्यापकं साधनं कारकं यस्याः सा तथाभूतेति बहुव्रीहिः । अतः स साध्यसाधनयोर्व्याप्यव्यापकभावरूपो नियमः पदान्तरसंनिधानात् प्राक् सन्नपि तदानीं वाक्यार्थस्यापूर्वतया सर्वप्रमाणागोचरत्वेनेदं तदित्यवधारयितुमशक्यतयाऽसन्निव पदान्तरसंनिधाने जाते तन्मात्रेण प्रकाशत इति पदयोजना ।

तथा चायमर्थः संपन्नः—साध्यं साधनञ्च परस्परं नियतमेव । केवलमाकाङ्क्षावशादितरपदार्थसंनिधाने सति तयोर्व्याप्यव्यापकभावरूपो नियमः प्रागपि सन्नेव तदानीं प्रकाशत इत्याक्षिप्तपदान्तराणि पदान्येव वाक्यम्, पदार्थ एव चाक्षिप्तपदान्तरोपस्थापितपदार्थान्तरान्वितो वाक्यार्थ इति पदपदार्थयोरन्यतरस्मादव्यतिरिक्तो यथासंभवं पदसंघातो वाक्यमिति पदार्थसंघातश्च परस्परान्वितो वाक्यार्थ इति सङ्घातपक्षोऽयमुपन्यस्तोऽनया कारिकयेति ।

अयं भावः—साध्यत्वेन प्रतीयमानः सर्वोऽपि क्रियाविशेषरूपोऽर्थो नियतसाधनः । साधनान्यपि च सर्वाणि नियतक्रियाणीत्येवं तयोर्व्याप्यव्यापकभावरूपे नियमे स्वीक्रियमाणे पदान्तरसंनिधानेऽयुतरूपेण तयोर्व्यवस्थितौ सत्यां व्याप्यव्यापकभावनियमेन परस्परमुपकार्योपकारकभावसत्त्वात् परस्परान्वयं प्रत्यविभक्तरूपोपकाराण्यपि पदान्तरसन्निधानाभावे युतरूपेण व्यवस्थाने सति प्रतिपदमभिधेयत्वेनावस्थितानि क्रियारूपाणि कारकरूपाणि च । क्रियाकारकयोर्नित्यनियतत्वाद् नियमस्य च व्याप्यव्यापकभावरूपस्य पदान्तरसन्निधानात् प्रागज्ञातत्वाद्

यदि तर्हि नियतसंसर्ग एव नित्याविभक्तोऽयमर्थ एवं सति किं कृता गुण-प्रधानभावप्रत्यवस्था—

गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते ।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते ॥४८।

इह साध्येनानुपकारकेणाङ्गिना मुख्येनार्थेन प्रयुक्तानि सर्वतः सिद्धानि परार्थान्युपकारं प्रति शेषभावेनौत्सुक्यवन्तीवाङ्गान्युपादीयन्ते । साध्यत्वेनैव तु निमित्तानि क्रियापदमपेक्षते ।

एतदुक्तं भवति—अर्थेषु सतीमसतीं वा शब्दवृत्त्यनुकारेण पुरुषो व्यपेक्षां समीहते । तां शब्द एव प्रकाशयति । सा हि नित्यनिविष्टरूपेव शब्दात्मनि ॥४८।

अथात्र परस्परापेक्षायां समानायां विशेषमभिधातुमाह—**गुणभावेनेति** ।

नाम कारकपदं क्रियायां गुणभूतं सत् पदान्तरमाकाङ्क्षति । क्रियापदं तु प्रधानभावेनावस्थितं कारकपदान्यपेक्षत इति ॥४८।

---

नियमोऽप्यत्र शाब्दबोधे संसर्गे विशेषवद् अपूर्वत्वाद्विधेयः । तत्रैवं सति पदान्तरसन्निधानात् प्राक् सन्नपि क्रियाकारकयोर्व्याप्यव्यापकभावरूपो नियमोऽवधारयितुमशक्यत्वादसत्कल्पः पदान्तरप्रयोगे सति पदान्तराणां सन्निधानमात्रेणाकाङ्क्षारूपेण बोद्धृपुरुषं प्रति प्रकाशते, केनापि पदेन स्वशक्त्या बोध्यत्वेन नानुगृह्यत इत्याकाङ्क्षाभास्य एवासौ नियमो न तु पदशक्य इति ॥ ४७ ।

ननु यदि क्रियाकारकपदयोरविशिष्टेन व्याप्यव्यापकभावनियमेन समानैव तयोः परस्परापेक्षा, यदि चैकपदार्थसंसृष्टाऽपरपदार्थरूपोऽयं वाक्यार्थो नियतसंसर्गो नित्याविभक्त-रूपश्च, तर्हि एवं सति किं कृता तयोर्गुणप्रधानभावव्यवस्थेति शङ्काद्वयमपनेतुं तयोर्विशेषमाह—**गुणभावेनेति** ।

तत्र क्रियायां नियमेन साकाङ्क्षं नाम कारकपदं गुणभावेन स्वशक्यं बोधयितुं प्रवर्तते । क्रियायास्तु साध्यत्वेन सकलप्रमाणागोचरतयाऽपूर्वत्वेन विधेयत्वात् तत्प्रयुक्तं प्राधान्यमिति स्थिते क्रियापदं क्रियायाः साध्यत्वेन हेतुना तस्याः साधकानि निमित्तानि कारकाणीति तद्बोधकानि पदान्यपेक्षत इति योजना ।

ततोऽयमर्थः सम्पन्नः—नाम कारकपदं क्रियायां गुणभूतं सत् पदान्तरमाकाङ्क्षति । क्रियापदं तु प्रधानभावेनावस्थितं कारकपदान्यपेक्षत इति ।

अयं भावः—इह साध्येन क्रियारूपेण विधेयत्वान्मुख्येन मुख्यत्वादुपकार्येणाऽनुपकार-केण चाङ्गिनाऽर्थेनाकाङ्क्षया प्रयुक्तानि = आकाङ्क्षितानि सर्वाणि सिद्धानि कारकरूपाणि सिद्धत्वादेव परार्थानि परार्थत्वादेवोपकारं प्रति शेषभावेनौत्सुक्यवन्तीव क्रियां प्रत्यङ्गानि

अपर आह—

**सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः ।**
**ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम् ॥ ४९ ।**

**अर्थत्वमापद्यमानेषु यावन्तो विशेषाः सन्निहिता नियतप्रसिद्धिव्यवस्थास्ते शब्दान्तरविषयेण कालवृत्त्यनुग्रहेण प्रतिबन्धाभ्यनुज्ञाख्येन प्रतिपत्तृभिरनुगम्यन्ते, नापरं वाक्यं नाम किञ्चिच्छब्दरूपमभिधायकं विद्यते ॥४६।**

क्रमो वाक्यमित्युद्दिष्टं क्रमपक्षं व्याख्यातुमाह—**सन्त** इति । पदार्थेषु देवदत्तादिपदवाच्येषु गोकर्मिकायामभ्याजक्रियायां देवदत्तपदार्थस्य कर्तृत्वं गोपदार्थस्य देवदत्तकर्तृकायां कर्मत्वमित्यादयो विशेषाः सन्त एव पदेभ्यः क्रमेण प्रतीतेभ्योऽव-

---

वाक्य उपादीयन्ते । साध्यार्थबोधकत्वेनैव तु क्रियापदं स्वबोध्यार्थसाधकार्थबोधकानि निमित्तपदान्यपेक्षते ।

एतावतेदमुक्तं भवति—पदस्य पदार्थस्य वा पदान्तरपदार्थान्तरान्यतरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षेति पारिभाषिक आकाङ्क्षालक्षणे स्वीक्रियमाणे, अर्थेषु सतीम्, पदान्तरपदार्थान्तरान्यतरविषयकेच्छाविशेषरूपे पुरुषसमवायिनि आकाङ्क्षापदार्थे स्वीक्रियमाणे, अर्थेष्वसतीं वा व्यपेक्षां = आकाङ्क्षाम् बोद्धा पुरुषः शब्दवृत्त्यनुकारेण = शब्दवर्तिनीमिव समीहते = जानाति, शब्दस्यार्थोपस्थापकत्वात् । ताञ्चार्थवर्तिनीं पुरुषवर्तिनीं वा आकाङ्क्षां शब्दवर्तिनीमिव प्रतीयमानां शब्द एव प्रकाशयति । यतः सा शब्दस्वरूपे नित्यं निविष्टेवेति ॥ ४८ ।

पदानां नित्यत्वपक्षे आकाशरूपं देशमादाय परस्परं दैशिकपौर्वापर्यरूपः, अनित्यत्वपक्षे तु कालिकपौर्वापर्यरूपः क्रमो वाक्यम्, न त्वतोऽन्यदपूर्वं वाक्यं नाम किमप्यनुभूयत इति प्रागुद्दिष्टम् । तमेव क्रमपक्षं विशेषेण व्याख्यातुमुपपादयितुं चाह—**सन्त एवेति** ।

पदार्थेषु देवदत्तादिपदवाच्येषु पदान्तरोपस्थापितपदार्थान्तरसन्निधानेन वाक्यार्थभावमापद्यमानेषु ये कर्तृत्वादयो व्यवस्थिता विशेषाः प्रतीयन्ते ते वाक्यार्थीभावात् प्रागपि सन्त एवानभिव्यक्ताः, क्रमात् क्रमं प्राप्य प्रतिपत्तृभिरनुगम्यते = अनुभूयन्ते, अतो न क्रमव्यतिरिक्तं वाक्यं नाम वाक्यार्थस्याभिधायकमस्तीति योजना ।

ततश्चायमर्थः सम्पन्नः—पदार्थेषु देवदत्तादिपदवाच्येषु गोकर्मिकायामभ्याजिक्रियायां देवदत्तपदार्थस्य कर्तृत्वम्, देवदत्तकर्तृकायाञ्च तस्यां गोपदार्थस्य कर्मत्वमित्यादयो विशेषा वाक्यार्थीभावात् प्रागपि सन्त एवानभिव्यक्ताः पदेभ्यः क्रमेण प्रतीतेभ्योऽवगम्यन्त इति क्रम एव वाक्यम् । न वाक्यमभिधायकमित्यनेन क्रमव्यतिरेकेण शब्दात्मकं न वाक्यमभिधायकमस्तीत्युच्यत इति ।

गम्यन्त इति क्रम एव वाक्यम्। न वाक्यमभिधायकमित्यनेन क्रमव्यतिरेकेण शब्दात्मकं न वाक्यमभिधायकमस्तीत्युच्यते ॥ ४९ ।

**शब्दानां क्रममात्रे च नान्यः शब्दोऽस्ति वाचकः ।**
**क्रमो हि धर्मः कालस्य तेन वाक्यं न विद्यते ॥ ५० ।**

नहि पदेषु प्रतिबन्धाभ्यनुज्ञाभ्यां कालेनानुगृह्यमाणेष्वपरः शब्दः कश्चिदुपजायते येनार्थान्तरं प्रत्याय्येत। क्रमो हि शब्देषु कालशक्तिरूपविशेषस्य निवेश इव। स कालात्मनो न व्यतिरिच्यते। तेन वाक्यमित्यवस्तुकमेवेदमभिलापमात्रम्, पदमेवार्थवदिति ॥ ५० ।

एतदेव स्फुटीकुर्वन्नाह—शब्दानामिति। अनपेक्षितविशिष्टानुपूर्वीकः क्रमः क्रममात्रम्। तस्मिन् सत्यर्थप्रतीतेर्नान्यस्तद्व्यतिरिक्तः कश्चित् स्फोटादिः शब्दो वाचकोऽभ्युपगन्तुं युक्तः। अपि तु क्रम एवोपलभ्यमानो वाचकः। अथ क्रम इति किमुच्यत इत्याह—क्रमो हीति। क्रमवत् पदपदार्थोपाधिवशेनापि कालस्य स धर्म उच्यते ॥ ५० ।

---

अयं भावः—पदार्थेषु पदान्तरसन्निधानरूपेण क्रमेण वाक्यार्थत्वमापद्यमानेषु यावन्तः कर्तृकर्मत्वादयो विशेषा नियतया प्रसिद्धया व्यवस्थितास्ते वाक्यार्थीभावात् प्रागपि पदार्थेषु सन्निहिता एवानभिव्यक्ताः, अतस्तेऽयोग्यशब्दान्तरसन्निधानस्य प्रतिबन्धः, योग्यशब्दान्तरसन्निधानस्य चाभ्यनुज्ञा, एतदाख्येन कालवृत्तिरूपेणानुग्रहेण हेतुना योग्यपदानां पौर्वापर्यरूपे क्रमे सति प्रतिपत्तृभिरनुभूयन्ते, नहि क्रमादपरं वाक्यं नाम किञ्चिच्छब्दरूपमभिधायकं वाक्यार्थत्वेनाभिमतस्य विशेषस्यास्तीति ॥ ४९ ।

एतदेव स्फुटीकर्तुमाह—शब्दानामिति। शब्दानां पदानां धर्मत्वेनाध्यारोपिते वस्तुतस्तु कालधर्मे पौर्वापर्यरूपे क्रममात्रे वाचकत्वेन व्यवस्थिते चान्यः पदानां क्रमादतिरिक्तः पदक्रमविशिष्टः शब्दो वाक्यस्फोटरूपो वाचको नास्ति। हि=यतः, क्रमः=कालस्य वस्तुगत्या धर्मः; स च पदेषु पदार्थेषु चाध्यारोप्यते। वस्तुतस्तु कालोऽप्यक्रम इति न तस्यापि धर्मः क्रमः, किन्तु क्रमवत्पदपदार्थोपाधिवशेन स कालस्य धर्म उच्यत इति क्रमोऽप्यनृत एव।

अत्र च स्थितावन्योन्याश्रयोऽभिधेयप्रमेयत्वयोरन्योन्याश्रय इवागत्या सोढव्य एवेति। वस्तुतस्त्वग्रे क्रमः कालस्य शक्तिरूप इति वक्ष्यते। तेन कालधर्म एव क्रमः। स च पदेषु पदार्थेषु चाध्यारोप्यत इति। तेन क्रमादतिरिक्तं वाक्यं नाम किमपि न विद्यते, किन्तु वाक्यमित्यभिलापमात्रमिति पदयोजनयायमर्थः सम्पन्नः। पदानां क्रममात्रं वाचकम्, स त्वर्थावबोधे वाक्यरूपां विशिष्टानुपूर्वीं नापेक्षते। तस्मिन् क्रममात्रे सत्यर्थप्रतीतेस्तद्व्यतिरिक्तः कश्चिद् वाक्यस्फोटादिः शब्दो वाचकोऽभ्युपगन्तुं न युक्तः, अपि तु क्रम एवोपलभ्यमानो वाचक इति।

किमर्थं तर्हि क्रमवतां कालशक्तिरूपनिवेशानुग्रहाद्वर्णानामेवार्थवत्ता नाभ्युपगम्यत इत्याह—

**ये च संभविनो भेदाः पदार्थेष्वविभाविताः ।**
**ते सन्निधाने व्यज्यन्ते न तु वर्णेष्वयं क्रमः ॥ ५१ ।**

यथा ह्युच्चरिते पदे संभविनां भेदानां·······(अत्र ग्रन्थपातः) ·····

युक्तं चैतत्, यत्क्रम एव वाक्यमित्याह---ये चेति ।

पदार्थेषु ये भेदाः पूर्वोक्ताः सन्ति ते केवलेष्वविभाविताः सन्तः क्रमवत्पदार्थान्तरसंनिधानेऽभिव्यज्यन्त इति दर्शनात् क्रम एव वाक्यमिति पदक्रमो वाक्यमुक्तम् । वर्णक्रमस्तु न तथेत्युक्तम्, न तु वर्णेष्वयं क्रम इति ॥ ५१ ।

एतदेवोपसंहारेण स्फुटयितुमाह—

**वर्णानां च पदानां च क्रममात्रनिवेशिनी ।**
**पदाख्या वाक्यसंज्ञा च शब्दत्वं नेष्यते तयोः ॥ ५२ ।**

---

अयं भावः—पदेषु स्वान्वयायोग्यपदान्तरसन्निधानस्य प्रतिबन्धेन स्वान्वययोग्यपदान्तरसन्निधानस्याभ्यनुज्ञया च कालेनानुगृह्यमाणेषु सत्सु परस्परान्वितपदार्थद्वयबोधकक्रमवत्पदद्वयादतिरिक्तः कश्चिद् वाक्यरूपः शब्दो नोपजायते, न चोपजायमान उपलभ्यते, येन वाक्यार्थरूपमर्थान्तरं ततः प्रत्याय्येत । क्रमो हि कालधर्मः कालशक्तिरूपो विशेषः, तस्य च पदेष्वारोपान्निवेश इव न तु वस्तुतः पदधर्मः क्रमः, स च न कालात्मनो व्यतिरिच्यते । तेन वाक्यमित्यवस्तुकमेवेदमभिलापमात्रं पदमेव त्वर्थवदिति ॥ ५० ।

किमर्थं तर्हि कालशक्तिरूपस्य क्रमस्य वर्णेषु निवेशरूपात् = आरोपरूपात् कालकृतानुग्रहात् क्रमवता वर्णानामेवार्थवत्ता नाभ्युपगम्यते, किमिति पदानां क्रम एव वस्तुगत्या कालधर्मः पदेषु निवेशितो वाक्यमित्युच्यत इत्याशङ्कामपनेष्यन् युक्तं चैतद् यत् पदानां क्रम एव वाक्यमित्याह—**ये च सम्भविन इति ।**

अयमर्थः—पदार्थेषु ये च सम्भविनो भेदाः पूर्वोक्ताः कर्तृत्वकर्मत्वादयः सन्ति, ते पदार्थान्तरसन्निधानाभावे केवलेषु पदार्थेष्वविभाविता अज्ञाताः सन्तः क्रमवत्पदार्थान्तरसन्निधानेऽभिव्यज्यन्त इति दर्शनात् क्रम एव वाक्यमिति पदक्रमो वाक्यमित्युक्तम् । वर्णेष्वयं क्रमस्तु न तथा पदार्थगतकर्तृत्वादिधर्मविशेषप्रत्यायक इति न वर्णानां क्रमो वाक्यमिति ॥ ५१ ।

एतदेवोपसंहारेण स्फुटयितुमाह—**वर्णानां चेति ।**

अत्र प्रथमः 'च' शब्दो हेतौ, द्वितीयस्तुशब्दार्थकः । एवञ्च यतो वर्णाना क्रममात्रनिवेशिनो वर्णक्रम एव निविष्टा पदाख्या पदसंज्ञा । पदानान्तु क्रममात्र एव निविष्टा

वर्णक्रमः पदमुच्यतां नाम। वाक्यसंज्ञा पदक्रम एव युक्ता, तथार्थप्रतीतिदर्शनात्। क्रम एव शब्दो न वर्णपदे इत्युक्तमुपसंहर्तुमाह शब्दत्वमिति। तयोर्वर्णपदयोः शब्दत्वं श्रोत्रेन्द्रियग्राह्यत्वेऽपि वाचकत्वलक्षणं नेष्यते, अपि तु क्रमस्यैव ॥ ५२।

पदक्रमस्य शब्दत्वं वाक्यार्थेनार्थवत्तायाम्। वाक्यार्थभागैस्तु पदानामर्थवत्त्वम्। एवं वर्णक्रमस्यापि शब्दत्वं पदार्थेनार्थवतः, तदर्थवत्तां वर्णानां किं नाङ्गीक्रियत इत्याह—

**समानेऽपि तु शब्दत्वे दृष्टः संप्रत्ययः पदात्।**
**प्रतिवर्णं त्वसौ नास्ति पदस्यार्थमतो विदुः ॥ ५३।**

वर्णपदलक्षणस्योभयरूपस्यास्य शब्दत्वे समाने पदानां क्रमाद्वाक्यार्थस्यावगमो दृश्यते न वर्णादित्यतः पदान्येवार्थवन्ति। तत्क्रमश्चैव वाक्यम्। संसर्गो वाक्यार्थ इति ॥ ५३।

इदानीं संघातः क्रमस्तथैकोऽनवयवश्च शब्दः स्फोटात्मेति व्याख्यातानि त्रीणि वाक्यलक्षणानि श्लोकत्रयेणोपसंहरति। तत्र संघातपक्षमुपसंहर्तुं तावदाह—

**यथाऽस्यावयवा वर्णा विना वाच्येन केनचित्।**
**अर्थवन्तः समुदिता वाक्यमप्येवमिष्यते ॥ ५४।**

---

वाक्याख्या वाक्यसंज्ञा। पदक्रमादेव पदार्थगतधर्मविशेषकर्तृत्वादिप्रतीतिदर्शनात्। अतो वर्णानां क्रम एव पदरूपः शब्दः, पदानां क्रम एव च वाक्यरूपः शब्दः, न तु वर्णपदे इत्युक्तमुपसंहर्तुमाह— शब्दत्वं नेष्यते तयोरिति। तयोर्वर्णपदयोः शब्दत्वं श्रोत्रेन्द्रियग्राह्यत्वेपि वाचकत्वलक्षणं नेष्यते, अपि तु क्रमस्यैव तदिष्यत इत्यर्थः ॥५२।

पदक्रमस्य वाचकत्वलक्षणं शब्दत्वम्, वाक्यार्थेन संसर्गविशेषरूपेणार्थवत्त्वात्। वर्णक्रमरूपाणां पदाना तु वाक्यार्थभागैरर्थवत्त्वेन शब्दत्वम्। एवञ्च यथा पदार्थेनार्थवत्ता वर्णक्रमस्य, तथा तेनैवार्थवत्ता वर्णानां किमित नाङ्गीक्रियत इत्याशङ्क्याह—समानेऽपीति।

अयमर्थः—वर्णपदलक्षणस्योभयरूपस्याप्यस्य श्रोत्रेन्द्रियग्राह्यत्वलक्षणे शब्दत्वे समानेऽपि पदात्तु वर्णक्रमरूपाद् वाक्यार्थभागरूपस्य पदार्थस्य संप्रत्ययो दृष्टः, प्रतिवर्णं त्वसौ पदार्थसम्प्रत्यो नास्ति। अतः पदस्य वर्णक्रमरूपस्यार्थमभिधेयं वाक्यार्थभागरूपं पदार्थं विदुः, न तु प्रत्येकं वर्णानामिति। एवं पदानां क्रमादेव वाक्यार्थावगमो दृश्यते, न तु प्रत्येकं पदाद् वर्णाद्वेति पदक्रम एव वाक्यम्, तदर्थश्च संसर्गविशेषो वाक्यार्थ इत्यपि तुल्यवित्तिवेद्यम् ॥ ५३।

सङ्घातः—क्रमः, एकोऽनवयवश्च स्फोटात्मकः शब्द इति प्राग् व्याख्यातानि त्रीणि वाक्यलक्षणानि श्लोकत्रयेणोपसंहरिष्यन्निदानीं तत्र सङ्घातपक्षमुपसंहर्तुं तावदाह—**यथाऽस्यावयवा** इति।

वर्णानां समुदायार्थवत्त्वे केवलानामनर्थकत्वं यथा तथा पदानां केवलानामर्थासंभवात्तत्समुदाय एव वाक्यमिति ॥ ५४ ।

क्रमपक्षमप्युपसंहर्तुमाह—

**अनर्थकान्युपायत्वात् पदार्थेनार्थवन्ति वा ।**
**क्रमेणोच्चरितान्याहुर्वाक्यार्थं भिन्नलक्षणम् ॥ ५५ ।**

पदानि केवलान्यनर्थकानि, केषाञ्चिन्मते स्वार्थेनार्थवन्ति, क्रमेणोच्चारितानि वाक्यम् । तथाविधाद्वाक्याद्वाक्यार्थं भिन्नलक्षणं व्यतिरिक्तस्वरूपं संसर्गात्मकं विशिष्टमेव वा संसर्गवशान्निराकाङ्क्षविशेषावस्थितपदार्थस्वरूपमेव व्यतिरिक्तमवगम्यत इति ॥ ५५ ।

स्फोटपक्षमप्युपसंहर्तुमाह—

**नित्यत्वे समुदायानां जातेर्वा परिकल्पने ।**
**एकस्यैकार्थतामाहुर्वाक्यस्याव्यभिचारिणीम् ॥ ५६ ।**

---

सावयवा इत्यपपाठोऽर्थासङ्गतेः, पुण्यराजव्याख्यानविरोधाच्च ।

अयमर्थः—यथाऽस्य पदस्य वर्णसमुदायरूपस्यावयवा वर्णाः प्रत्येकं केनचिद् वाच्येन विनावस्थिताः । समुदितास्तु त एवार्थवन्तः पदार्थवाचकाः । एवं वाक्यमपीष्यत इति पदयोजनया वर्णाना समुदायस्यार्थवत्त्वे केवलानामनर्थकत्वं यथा तथा केवलानां पदानां संसर्गविशेषरूपवाक्यार्थवाचकत्वासम्भवात् पदसमुदाय एव वाक्यमित्यर्थः फलति ॥५४।

अथाधुना क्रमपक्षमप्युपसंहर्तुमाह—**अनर्थकानीति** । उपायत्वाद् वाक्यार्थप्रतिपत्त्युपायत्वात्, केवलानि पदान्यनर्थकानि, वा अथवा, केषाञ्चिन्मते पदार्थेन स्वार्थभूतेनार्थवन्ति वाक्याथप्रत्यायने तु तेषां केवलानां सामर्थ्यं नास्त्येव । क्रमेणोच्चारितानि तु पदानि भिन्नलक्षणं पदाथाद् व्यतिरिक्तस्वरूप ससर्गविशेपरूपम् एकपदार्थसंसृष्टापरपदार्थरूपं विशिष्टमेव वा वाक्यार्थमाहुरिति पदानां योजनयाऽयमर्थो लभ्यते ।

तथाहि—पदानि केवलान्यनर्थकानि केपाञ्चिन्मते स्वार्थेनार्थवन्ति क्रमेणोच्चारितानि तु वाक्यरूपाणि । तथाविधाद् वाक्याद् वाक्यार्थं पदार्थव्यतिरिक्तस्वरूपं संसर्गविशेषात्मकम् एकपदार्थविशिष्टापरपदार्थरूपमेव वा पदार्थाना परस्परसंसर्गवशाद् निराकांक्षविशेषावस्थित पदार्थस्वरूपमेव पदार्थव्यतिरिक्तमवगम्यत इति ॥ ५५ ।

अथेदानीम् 'एकोऽनवयवः शब्दः' इति वाक्यस्फोटपक्षमप्युसंहर्तुमाह—**नित्यत्व इति** । अत्रैकस्यैकार्थतामाहुरिति तृतीयपादपाठः साधुः ।

अयमर्थः—समुदायाना पदसमुदायत्वेनाभिमतानाम् । न तु वस्तुतो वाक्यस्फोटे नित्ये निरवयवे च पदानि सन्ति । वाक्यव्यक्तिस्फोटाना प्रतिवक्तृ, प्रत्युच्चारणं चैकत्वेन

इह देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिकानि भिन्नवक्त्रुदीरितानि पद-समुदायात्मकानि शब्दरूपाद्भिन्नान्येव।

अयमर्थः—तत्र तत्र वक्तरि भिन्ना अपि ध्वनय एकमेव स्फोटं व्यक्ति-स्फोटात्मकं नित्यमभिव्यञ्जन्ति। देवदत्त गामभ्याजेत्यादिषु भिन्नवक्त्रुदीरितेषु वा स्फोटजातिर्नित्या देवदत्तादिपदसमुदायाभिव्यङ्ग्या वाक्यार्थस्यैकस्य प्रतिभात्मकस्य प्रतिपादिकेति मतभेदाज्जातिव्यक्तिस्फोटोपसंहारः ॥ ५६।

तदेवं संघातादीनि त्रीणि वाक्यलक्षणानि व्याख्यातानि। आख्यातं वाक्य-मिति व्याख्यास्यति। एषां च मध्यादखण्डपक्ष एवोभयोरपीति सूत्रकाराभिप्राय-मनुसृत्याखण्डपक्ष एव वाक्यवाक्यार्थयोरभ्युपगम्यत इति प्रदर्शितम्। इदानीं भाष्यकाराभिप्रायेणापि स एवाभ्युपगन्तव्य इत्युपक्रम्यते।

---

प्रत्यभिज्ञायमानत्वान्नित्यत्वे अथवा प्रतिवक्तृ प्रत्युच्चारणञ्च पदसमुदायास्तत्तत्स्थानकरण-रूपनिमित्तजन्या अपकृष्टध्वन्युपादानकाश्च, तद्गतायाः स्फोटजातेः परिकल्पन आद्ये पक्ष एकस्य वाक्यरूपस्य व्यक्तिस्फोटस्य चरमे पक्ष एकस्य वाक्यस्य तत्तद्वाक्यगतजातिस्फोट-रूपस्य वा वाक्यमात्रेऽव्यभिचारिणीं नियमेन वर्तमानामेकार्थतां प्रतिभारूपैकवाक्यार्थ-प्रतिपादकतां मतभेदेनाहुराचार्या इति।

अयं भावः—इह देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिकानि भिन्नवक्त्रुदीरितानि प्रतिवक्तृ प्रत्युच्चारणं च भिन्नानि तत्तत्पदध्वन्यारब्धानि महाध्वनिरूपाणि पदसमुदायात्म-कानि वाक्यानि वाक्यव्यक्तिस्फोटात् प्रतिवक्तृ प्रत्युच्चारणं चैकत्वेन प्रत्यभिज्ञायमानत्वेनै-कस्माद् भिन्नान्येव तादृशवाक्यस्फोटव्यञ्जकानि।

तथाहि—तत्र तत्र वक्तरि भिन्ना अपि ध्वनय एकमेव स्फोटं वाक्यव्यक्तिस्फोटात्मकं नित्यमभिव्यञ्जयन्ति। तथा च तैरभिव्यक्तो वाक्यव्यक्तिस्फोटः प्रतिभारूपस्यैकस्य वाक्यार्थस्य प्रतिपादकः। अथवा देवदत्त गामभ्याजेत्यादिकेषु भिन्नवक्त्रुदीरितेषु भिन्नेषु पदसमुदायेषु महाध्वनिरूपेषु वाक्येष्वभिव्यञ्जकेष्वनित्येषु समवेता वाक्यस्फोटजातिर्नित्या, देवदत्तादिपद-समुदायाभिव्यङ्ग्या एकस्य वाक्यार्थस्य प्रतिभारूपस्य प्रतिपादिकेत्येवं मतभेदाज्जातिव्यक्ति-स्फोटोपसंहार इति ॥ ५६।

तदेवं संघातः क्रमः स्फोट इति त्रीणि वाक्यस्वरूपाणि व्याख्यातानि। आख्यातं वाक्यमिति व्याख्यास्यति। एषां च मध्यादखण्डपक्ष एव वाक्यवाक्यार्थयोरुभयोरपीति 'तिङ्ङतिङ' इति सूत्रेऽतिङ्ग्रहणं कुर्वतः सूत्रकारस्याभिप्रायमनुसृत्याभ्युपगम्यत इत्यस्यैव काण्डस्य षष्ठकारिकाव्याख्यावसरे स्वोपज्ञटीकायां प्राक् प्रदर्शितम्। इदानीं भाष्यकाराभि-प्रायेणापि स एवाभ्युपगन्तव्य इत्युपक्रम्यते।

तथा च भाष्यम्—'न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्'। तथा—'यथालक्षणमप्रयुक्ते' इति। अत्र यदि पदानां सत्यता स्यात् तदा तेषां स्वत एव सिद्धत्वात् पदानि कुर्वन्तीति पदकारा इत्येतदसंगतं स्यात्। लक्षणेन च तदननुवर्तनम्, वस्तुसत्त्वात्तेषाम्। पदकारैर्नाम लक्षणमनुवर्त्यमित्यप्यसंगतम्। तथाऽप्रयुक्तपदविषये पदानामसत्यत्वात् तत्प्रविभागोऽयं न सिद्ध इति यथालक्षणं लक्षणानुसारेण पदकरणमप्रयुक्त इत्येतदनुपपन्नमेव। आह चैवं भाष्यकारः। तस्मान्मन्यामहे पदान्यसत्यानि, एकमभिन्नस्वभावकं वाक्यम्। तदबुधबोधनाय पदविभागः कल्पित इति। तदेवाभिधातुमाह—

**अभेदपूर्वका भेदाः कल्पिता वाक्यवादिभिः।**
**भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः॥ ५७॥**

यत एवं सूत्रकारस्य भाष्यकारस्य चाखण्डपक्षोऽभिरुचितः। तस्माद्वाक्यवादिभिः स्फोटवादिभिरभेदकल्पनमाश्रितम्। काल्पनिकः पदवादोऽभ्युपगत इत्यर्थः।

पदवादिमतमपि प्रसङ्गादुपदर्शयति—भेदपूर्वानिति। भेदप्रतिभासपूर्वकान-

---

तथा च भाष्यम्—"न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" (महाभाष्य ३।१।१०९।२ वार्त्तिके) इति, तथा "यथालक्षणमप्रयुक्ते" (महाभाष्य १।१।२४।३ वार्त्तिके) इति च। अत्र यदि पदानां सत्यता स्यात् तदा तेषां स्वत एव सिद्धत्वात् पदानि कुर्वन्तीति पदकारा इत्येतदसंगतं स्यात्। लक्षणेन च पदकाराणामननुवर्तनं पदानां वस्तुसत्त्वादेव नोपपद्येत। "पदकारैर्नाम लक्षणमनुवर्त्यम्" इत्यप्यसंगतं स्यात्, पदानां सत्यत्वे लक्षणतः प्रागपि विद्यमानत्वादिति। तथाऽप्रयुक्तपदविषये पदानां सत्यत्वात् तत्प्रविभागोऽयं न सिद्ध इति यथालक्षणं लक्षणानुसारेण पदकरणमप्रयुक्ते इत्येतदप्यनुपपन्नमेव। आह चैवं भाष्यकारस्तस्मान्मन्यामहे पदान्यसत्यानीति। एकमभिन्नस्वभावकं वाक्यम्। तस्याबुधबोधनाय पदविभागः कल्पित इति। तदेवाभिधातुमाह—**अभेदपूर्वका इति।**

वाक्यवादिभिः पदप्रविभागरहितैकवाक्यस्फोटवादिभिः, अभेदपूर्वका वाक्याभेदस्य वस्तुसत्त्वेन तत्पूर्वका भेदा वाक्ये पदप्रविभागाः अखण्डवाक्यस्फोटप्रतिपत्तये इति कल्पिता पदयोजनयाऽयमर्थो लभ्यते।

यतः प्रागुक्तरीत्या सूत्रकारस्य भाष्यकारस्य च वाक्याखण्डत्वपक्षोऽभिरुचितः। तस्मादखण्डवाक्यस्फोटवादिभिर्वाक्यस्याखण्डत्वं वस्तुभूतम्, तत्र पदवादस्तु काल्पनिक इत्यभ्युपगतमिति।

अथ वाक्यस्य सखण्डत्वं वस्तुभूतमित्याश्रित्य तत्र पदानि सत्यान्येवेति पदवादिमतमपि प्रसङ्गादुपदर्शयति—**भेदपूर्वानिति।** पददर्शिनस्तु—सखण्डं वाक्यमभ्युपेत्य तत्र वस्तु-

भेदान् स्वाभिमतान् पददर्शिनः, पदमेव सत्यं ये न मन्यन्ते ते ह्यक्रमखण्डं वाक्यं नाम काल्पनिकमाहुः ॥५७॥

**पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते ।**
**पदानां संहिता योनिः संहिता वा पदाश्रया ॥५८॥**

**·· ति तत्पुरुषवृत्त्याशब्दसंस्कारमाचक्षाणा विवक्षितमर्थं प्रतिपादयन्ति । तेषां [येषां] तु चतुर्णामेव पदजातानां संसर्गमात्रेण पदेऽवेव प्रसिद्धः सम्बन्धः कश्चिदर्थात्मा प्रकाश्यते । ते बहुव्रीहिवृत्त्या शब्दसंस्कारमाचक्षाणास्तथैव विवक्षितमर्थं प्रतिपादयन्ति ।**

अथ यदि नैवं स्थितिः तत्कथं 'पदप्रकृतिः संहितेति' प्रातिशाख्यम् । अत्र हि पदानि प्रकृतिर्यस्याः संहिताया इत्यर्थो व्याख्यायते । पदानां चासत्यत्वात्

---

भूतपदप्रविभागदर्शिनस्तु, भेदपूर्वान् वस्तुभूतपदप्रविभागपूर्वकान् अभेदान् वाक्याभेदान् कल्पितान् मन्यन्त इति योजना ॥५७॥

ननु यदि न पदानि सत्यानि तदा 'पदप्रकृतिः संहिता' (ऋक् प्रा० २।१) इति प्रातिशाख्यं कथं संगच्छते । अत्र हि पदानि प्रकृतिर्यस्याः संहिताया इत्यर्थो व्याख्यायते । संहिता च वाक्यधर्मः, तस्याः प्रकृतित्वञ्च पदानामुच्यते । पदानाञ्चासत्यत्वात् तदुपादानिका संहिताऽप्यसत्या स्यादित्यालोच्य वाक्याखण्डत्वपक्षेऽपि संहितायाः पदप्रकृतित्वं पदानां प्रकृतिरिति षष्ठीसमासाभ्युपगमेनोपपादयितुमाह—**पदप्रकृतीति** ।

अयमर्थः—संहितायाः पदप्रकृतिभावश्च पदप्रकृतित्वञ्च वृत्तिभेदेन पदानि प्रकृतिर्यस्याः सा पदप्रकृतिरिति, पदाना प्रकृतिः पदप्रकृतिरिति वा बहुव्रीहिषष्ठीतत्पुरुषरूपवृत्तिभेदेन वर्ण्यते वर्णयितुं शक्यत इति धातोर्लक्षणया लभ्यते ।

वृत्तिभेदमेवोत्तरार्धेन प्रदर्शयति—**पदानां संहितेति** । षष्ठीतत्पुरुषाभ्युपगमे पदानां योनिः प्रकृतिः संहिता बहुव्रीहिसमासस्वीकारे तु संहिता वा पदाश्रया, वा अथवा, संहिता पदाश्रया पदान्याश्रयः प्रकृतित्वेनाधारो यस्याः सा तथाभूतेति । तथा च वाक्याखण्डत्वपक्षे पदप्रकृतिः संहितेति प्रतिशाख्यं षष्ठीसमासेन व्याख्यायत इति ।

अयं भावः—केचिदखण्डमेव वाक्यमपौरुषेयं च, तत्र पदानि पौरुषेयाणि कल्पितानीति मन्यमानाः पदाना प्रकृतिरिति षष्ठीतत्पुरुषवृत्त्या 'पदप्रकृतिः संहिता' इति प्रातिशाख्यवाक्यगतपदप्रकृतिशब्दस्य साधुत्वसंस्कारमाचक्षाणाः स्वविवक्षितं वाक्यस्याखण्डत्वरूपमर्थं प्रतिपादयन्ति ।

येषा त्वन्विताभिधानवादिनां मते चतुर्णामेव पदजाताना नामाख्यातोपसर्गनिपातरूपाणां सत्यानामपौरुषेयाणा संसर्गमात्रेण पौरुषेयेणासत्येन वाक्यरूपेण पदेष्वेव सामान्यरूपेण शक्त्या प्रसिद्धः पदार्थयोः सम्बन्धः कश्चिद् विशेषरूपोऽर्थद्वयसंक्रान्तरूप एकपदार्थविशिष्टापरपदार्थात्मा प्रकाश्यते; न तु वाक्यार्थः संसर्गः, स तु सामान्यरूपेण पदार्थ एव ।

**तत्र केषांचित्पौरुषेयाण्याम्नायपदानि शब्देषु स्मृतिपक्षस्य वा।**

**केषांचित्तु पदरूप एवाम्नायः संहिता पौरुषेयी स्मृतिपक्षस्य वा।**

**केषाञ्चित्तु नित्यावुभाव्येतौ समाम्नायौ। पदसमाम्नायस्तु प्रतिपादकत्वेन नित्यः, इतरस्तु प्रतिपाद्यत्वेन नित्यः।**

**केषाञ्चिन्नित्यस्यैकस्याम्नायस्य द्व एते विभागाविभागशक्ती प्रतिपादकप्रतिपत्तव्यरूपेण वर्तेते ॥५८॥**

तत्कारणिका संहिताऽप्ययुक्ता स्यादित्यालोच्याखण्डपक्षेणाप्येतत्संवादयितुमाह—**पदप्रकृतीति**। वृत्तिभेदमेव प्रदर्शयितुमाह—**पदानामिति**। अखण्डपक्षे पदप्रकृतिः संहितेति षष्ठीसमासेन व्याख्यायत इत्यर्थः ॥५८॥

**पदाम्नायश्च यद्यन्यः संहिताया निदर्शकः।**
**नित्यस्तत्र कथं कार्यं पदं लक्षणदर्शनात् ॥५९॥**

---

तं तु विशेषरूपेण पदान्तरसमभिव्याहृतानि पदान्येव प्रकाशयन्तीत्यभ्युपगमः; ते पदानि प्रकृतिर्यस्या इति बहुव्रीहिवृत्त्या प्रातिशाख्यवाक्यगतस्य पदप्रकृतिशब्दस्य संस्कारमाचक्षाणास्तथैव स्वविवक्षितमर्थं पदानां सत्यत्वं वाक्यस्य पुरुषकल्पितत्वं सखण्डत्वञ्च तत एव प्रातिशाख्यवाक्यात् प्रतिपादयन्ति।

तत्र केषाञ्चिन्मते वेदवाक्यरूपेषु शब्देषु सत्येष्वपौरुषेयेषु यानि पदान्याम्नायन्ते, तानि पौरुषेयाण्युच्चारयितृपुरुषमतिप्रभवाण्यथवा शिष्टैः स्मृतान्यस्माभिरनुगम्यन्त इति।

केषाञ्चित्तु मते पदस्यैव सत्यस्यापौरुषेयस्य गुरुपरम्पराऽभ्यासरूप आम्नायः, पदान । संहिता तु वाक्यरूपा कठादिभिः शाखाप्रवक्तृभिः कृता स्मृता वेत्यसत्या।

केषाञ्चित्तूभावप्येतौ समाम्नायौ पदाम्नायवाक्याम्नायरूपौ नित्यौ। तत्र पदसमाम्नायस्तु वाक्यप्रतिपत्त्युपायत्वेन नित्यः, वाक्यात् प्रागपि विद्यमानत्वात्, वाक्यसमाम्नायस्तु प्रतिपाद्यत्वेन नित्यः, प्रतिपाद्याभावे प्रतिपादकस्थितेरसंभवात्, प्रतिपादकत्वस्य सप्रतियोगिकत्वेन नित्यं प्रतिपाद्यसापेक्षत्वात्। तदेवं प्रतिपाद्यप्रतिपादकरूपे पदवाक्ये उभे अपि नित्ये।

केषाञ्चित्तु मते नित्यस्यैकस्यैव शब्दरूपस्याम्नायस्यापौरुषेयस्य द्वे शक्ती—एका वाक्यरूपाऽविभागशक्तिर्यत्र पदान्यविभागेन स्थितानि, अपरा तु पदरूपा विभागशक्तिः। तत्राद्या वाक्यरूपा प्रतिपत्तव्यरूपेण वर्तते, द्वितीया तु पदरूपा प्रतिपादकरूपेणेति विवेक इति ॥ ५८।

इदानीं "न लक्षणेन पदकारा अनुवर्त्याः" इत्यादि वदतो भाष्यकारस्य ( ३।१। १०६ भा०) वाक्यस्याखण्डत्वपक्ष एवाभिप्रेत इति दर्शयितुं तदनुगुणं तद्भाष्याभिप्रायमाह—**पदाम्नायश्चेति**।

अयमर्थः—यदि पदानां संनिधिरूपायाः संहिताया वाक्यरूपाया असत्याया निदर्शकः

**यद्यन्य एव पदाम्नायो नित्यः पुरुषप्रयत्नव्यतिरेकेण सिद्धस्तत्रायं भाष्यग्रन्थः समर्थयितव्यः। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्, यथालक्षणं पदं कर्तव्यम् इति।**

**लोकेऽप्यर्थेन प्रयुक्तेषु शब्देषु शास्त्रेण धर्मनियममात्रमेव क्रियते। अतः शास्त्रेण नित्यस्य लक्ष्यस्यानुविधानं कर्तव्यं न तु नित्येन लक्ष्येण शास्त्रमनुविधेयम्।**

इदानीं येनाभिप्रायेण भाष्ये न लक्षणेनेत्यादिकमुक्तं तमभिव्यङ्क्तुमाह—पदाम्नायश्चेति। यदि हि पदाम्नायः संहिताप्रदर्शको नित्यः सत्यभूतोऽभ्युपगतस्तदा कथं लक्षणदर्शनात् पदं कार्यमिति न लक्षणेन पदकारा इत्यादिना भाष्य-

---

पदाम्नायश्च, सत्यः पदरूपोऽपौरुषेयः शब्दस्तु नित्यः, तत्र तस्मिन्नभ्युपगमे सति लक्षणानां सूत्राणां दर्शनात् पदं कार्यं इति कथं भाष्यकृता पदकारा इति वदताऽभिप्रेयत इति।

तथा चायं फलितोऽर्थः—यदि हि पदाम्नायः संहिताप्रदर्शको नित्यः सत्यभूतोऽभ्युपगतस्तदा लक्षणदर्शनात् पदं कार्यमिति मत्वा 'न लक्षणेन पदकाराः' इत्यादिकं भाष्यकारः कथं वदेत्। यतश्च भाष्यकारस्य पदान्यसत्यानि प्रतिभासन्ते तत एव पदकारा इत्यभिहितमिति भाष्यकारस्य वाक्याखण्डत्वपक्ष एवाभिप्रेत इति।

अयं भावः—एषा कारिका पदानामसत्यत्वोपपत्तिपराऽपि संभवति, सत्यत्वोपपत्तिपराऽपि, तत्र 'कथं कार्यं पदं, लक्षणदर्शनात्' इति प्रश्नस्यासमाधेयत्वेनासत्यत्वोपपत्तिः प्राग् दर्शिता।

अथेदानीं यद्यन्य एव वाक्यादत्यन्तं पृथग्भूतः पदाम्नायो नित्यः पाणिन्यादिकृतलक्षणरूपप्रयत्नव्यतिरेकेण सिद्धस्तत्र "न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यमिति यथालक्षणं पदं कार्यम्" (महाभाष्य ३।१।१०९) इति, "लोकेऽप्यर्थेन प्रयुक्तेषु शब्देषु शास्त्रेण धर्मनियममात्रमेव क्रियते" (पस्पशायाम्) इतीमे भाष्यग्रन्थाः 'पदकारा' इति, पदं कार्यमिति, अर्थेन प्रयुक्तेष्वित्युक्तिभिः पदानामसत्यत्वमनित्यत्वं च वदन्तः कथं समाधेया इति प्रश्ने, इत्थम्—पदकारा इति व्यवहारे पदप्रयोक्तारः, कृभ्वस्तयः क्रियासामान्यवचना इति कृधातोः प्रयोगार्थकत्वात्। 'पदं कार्यम्' इति यथालक्षणं पदं ज्ञेयमिति।

अर्थेन प्रयुक्तेषु शब्देष्वित्यत्र शब्दस्य प्रयोग एवोच्चारणरूपेऽनित्येऽर्थो निमित्तं न तु नित्ये पदरूपे शब्द इत्यभिप्रेतम्। तथा च न लक्षणेन पदकारा इत्यस्यायमर्थः संपद्यते—न लक्षणेन पदप्रयोक्तारोऽनुवर्त्याः, नित्यानां पदपदार्थसम्बन्धानां सम्यग्ज्ञानस्याविद्याविप्लुतदृष्टीनां तेषामसंभवात्। पदप्रयोक्तृभिस्तु लक्षणमनुवर्त्यम्, लक्षणस्यार्षाविप्लुतदृष्टिप्रभवत्वादिति। अतः शास्त्रेण नित्यस्य लक्ष्यस्य शब्दरूपस्यानुविधानम् = अनुसरणम् कर्तव्यम्, न तु नित्येन लक्ष्येण शास्त्रमनुविधेयमिति।

अपि च बहुशक्तेः समाम्नायस्य कैश्चित् पदकारैः काचिद्विभागशक्तिरनुगम्यते । वक्षस्सुरुक्मेति वक्षस्सु रुक्म इति ।

तदेवं विभागशक्त्यन्तरदर्शनेन प्रवृत्तेर्विभागशक्त्यन्तरस्यापसारितत्वाद् न शक्त्यन्तरदर्शनप्रक्रमो[मे]यथालक्षणं पदानां करणं संभवति ।।५६।

कारो दर्शयेत् । यतश्च पदान्यसत्यानि तस्य प्रतिभासन्ते तत एवमभिहितमिति भाष्यकारस्याप्यखण्डपक्षोऽभिप्रेत इति दर्शितम् ।।५९।

अपरे तु मन्यन्ते—वाक्यार्थ एकः, तेन चात्यन्तमनर्थकान्येव पदानि यथैव च पदार्थेन वर्णाः—

**प्रतिवर्णमसंवेद्यः पदार्थप्रत्ययो यथा ।**
**पदेष्वेवमसंवेद्यं वाक्यार्थस्य निरूपणम् ।।६०।**

यथैव वर्णे वर्णे पदार्थप्रत्ययो नोत्पद्यत इत्यर्थो न विभज्यते, तथैव पदे पदे वाक्यार्थस्यासंनिधानात् प्रतिपदं तद्विषयोऽपि प्रत्ययो न निरूपयितुं शक्यते । अर्थनिर्भासा हि प्रकाशस्वरूपत्वादात्मनिरूपणा एव । अतश्च बाढमर्थानामपि संवेद्यत्वं न व्यतिक्रामन्ति ।।६०।

---

किञ्च, येषां मते वाक्यसमाम्नायो विभागाविभागशक्तिमानिति सखण्डोऽखण्डश्च, विभागशक्तिरपि विभागभेदेन बहुविधेत्येवं बहुशक्तिर्वाक्यसमाम्नायस्तत्र मते कैश्चित् पदकारैः काचिद् विभागशक्तिरनुगम्यते । तद्यथा—वक्षस्, सुरुक्मेति, वक्षस्सु, रुक्मेति ।

तदेवं विभागशक्त्यन्तरदर्शनेन पदविभागप्रवृत्तेरेकस्मिन् विभागे क्रियमाणे विभागशक्त्यन्तरस्यापसारितत्वान्न शक्त्यन्तरदर्शनप्रक्रमे यथालक्षणं पदानां करणं संभवति । शक्त्यन्तरापसारणेनैकदा पदविभागद्वयस्य करणासंभवात् । नित्यानां पदानां युगपद्भेदेन ज्ञापनं तु संभवति, ज्ञानस्य विरुद्धानेकार्थविषयकत्वदर्शनादिति ।। ५६ ।

अयं भावः—वाक्यसत्यत्ववादिन एवं मन्यन्ते—वाक्यार्थ एकोऽखण्डः, न तु पदार्थद्वयसंसृष्टः सखण्डः । तेन चात्यन्तमनर्थकान्येव पदानि यथैव च पदार्थेन वर्णा अनर्थकाः ।

तथाहि—यथैव वर्णे वर्णे पदार्थप्रत्ययो नोत्पद्यत इति कृत्वा पदार्थो न प्रतिवर्णं विभज्यते, तथैव पदे पदे वाक्यार्थस्य बुद्ध्याऽसंनिधानात् प्रतिपदं तद्विषयोऽपि प्रत्ययो न निरूपयितुं शक्यते । अर्थनिर्भासा हि=अर्थप्रत्यया हि प्रकाशस्वरूपत्वादात्मनिरूपणा एव=स्वप्रकाशा एव न त्वनुव्यवसायानुमानादिगम्याः, अनवस्थापातात् । अतश्च स्वसंवेद्या अपि बाढमर्थानामपि संवेद्यत्वं न व्यतिक्रामन्ति नोल्लङ्घयन्ते, किन्त्वर्थानामपि संवेद्यतां संपादयन्त्येव ।

इदानीं पदवादिनं प्रति दूषणमाह—प्रतिवर्णमिति।

देवदत्तादौ पदे यथा न दकारादि वर्णं वर्णं प्रति देवदत्तप्रत्ययो जायते, तथैव देवदत्त गामभ्याजेत्यादिवाक्यार्थस्य देवदत्तादि पदं पदं प्रति नास्ति प्रत्ययोऽत उच्यते—एतान्यनर्थकान्येव वाक्यादेवार्थप्रतीतिदर्शनाद् वाक्यमेवार्थवदिति ॥ ६० ।

**यस्य तु वाक्यार्थं पदानि प्रतिभेदमर्थवन्ति तस्य पदार्थेन वर्णाः प्रतिभेदमर्थवन्तः प्राप्नुवन्ति।**

**वाक्यार्थः संनिविशते पदेषु सहवृत्तिषु।**
**यथा तथैव वर्णेषु पदार्थः सहवृत्तिषु ॥६१॥**

---

इदानीं पदसत्यत्ववादिनं प्रति दूषणमाह—**प्रतिवर्णमिति।**

अयमर्थः—यथा पदार्थप्रत्ययः प्रतिवर्णमसंवेद्यो नानुव्यवसेय इति न प्रत्येकं वर्णा अर्थवन्तः, एवं प्रत्येकं पदेष्वपि वाक्यार्थस्य निरूपणम्, प्रत्ययोऽसंवेद्यमिति वाक्ये प्रत्येकं पदान्यपि न वाक्यार्थेनार्थवन्तीति प्रत्येकं पदान्यनर्थकानि वाक्यमेवार्थवदित्यर्थवत्त्वाद् वाक्यमेव सत्यम्, पदान्यनर्थकान्यसत्यानीति।

अयं तु निष्कर्षः—देवदत्तादौ पदे यथा न दकारादिवर्णं वर्णं प्रति देवदत्तप्रत्ययो जायते, तथैव देवदत्त गामभ्याजेत्यादिवाक्यार्थस्य देवदत्तादिपदं प्रति नास्ति प्रत्ययः। अत उच्यते—पदान्यनर्थकान्येव, वाक्यादेवार्थप्रतीतिदर्शनाद् वाक्यमेवार्थवदिति तदेव सत्यमिति।

अतो वाक्यार्थप्रत्ययस्य स्वप्रकाशत्वादर्थप्रकाशत्वाच्च वाक्यार्थप्रत्ययस्य प्रामाण्यं स्वेनैव गृह्यत इति वाक्यार्थप्रत्यय एव वाक्यार्थे प्रमाणमित्येकं वाक्यार्थमवगाहमानो वाक्यार्थप्रत्ययो न वाक्यार्थस्य सखण्डत्वे मानमिति वाक्यार्थस्य सखण्डत्वाभावे वाक्यमेवार्थवत्, पदानि त्वनर्थकान्यसत्यानि वाक्यप्रतिपत्तये कल्पितानीति ॥ ६० ॥

यस्य पदसत्यत्ववादिनो मते पदानि प्रत्येकं वाक्यार्थेऽर्थवन्ति, तस्य मते वर्णा अपि प्रत्येकं पदार्थेनार्थवन्तः प्राप्नुवन्तीतीमामखण्डं सत्यञ्च वाक्यं वदतामाशङ्कां प्रतिविधातुं पदसत्यत्ववाद्याह— **वाक्यार्थ इति।**

अयमर्थः—यथा सहवृत्तिषु पदेषु पदान्तरसमभिव्याहृतेष्वेव पदेषु वाक्यार्थः संनिविशते पदान्तरसंनिधिवशात् प्रतीयते, न तु केवलेषु पदेषु, वाक्यार्थप्रत्ययादर्शनात्; तथैव वर्णेष्वपि सहवृत्तिष्वेव पदार्थः संनिविशते, न केवलेष्विति।

तथा चायं फलितोऽर्थः—इह पदे सन्त्येव प्रत्येकं वर्णा अर्थवन्तः सन्त्येव च वाक्ये प्रत्येकं पदान्यप्यर्थवन्ति, किन्तु वर्णान्तरसमभिव्याहार एव = वर्णेषु पदान्तरसमभिव्याहार एव

यदि पदेषु सहवृत्तिष्वपि सन्निविष्टो वाक्यार्थः प्रतिपदं निविष्ट इति कल्प्यते तथैव सहवृत्तिषु वर्णेषु कामं संनिविष्टः पदार्थः कल्पयितव्यः ॥६१।

एतावत् प्रतिविधातुं पदवाद्याह—वाक्यार्थ इति ।

इह पदे वर्णा अर्थवन्तो वाक्ये पदान्यपीति द्रष्टव्यम् । केवलं यथा समुदितेषु पदेषु सत्सु वाक्यार्थः संनिविशते स्वरूपं प्रतिलभते, तथैव वर्णेष्वपि बुद्धौ सहवृत्तिष्वेव पदार्थ उपजायत इति नैतावता वर्णदृष्टान्तेन पदानामनर्थकत्वम् ॥ ६१ ।

यदि तर्हि पदार्थः प्रतिवर्णं निविष्टः कस्मात् पदस्येव प्रयोगे वर्णस्यापि प्रयोगे कश्चिदर्थो न प्रतीयते—

**सूक्ष्मं ग्राह्यं यथाऽन्येन संसृष्टं सह गृह्यते ।**
**वर्णोऽप्यन्येन वर्णेन संबद्धो वाचकस्तथा ॥ ६२ ।**

---

च पदेष्वर्थवत्त्वं प्रतीयते, न तु विद्यमानमपि केवलेष्विति । तथा च न वर्णदृष्टान्तेन पदानामनर्थकत्वं प्रत्येतव्यमिति ।

यत्त्वेतत्कारिकाव्याख्यावसरे पुण्यराजेनोक्तम्—'यथा समुदितेषु पदेषु सत्सु वाक्यार्थः संनिविशते स्वरूपं प्रतिलभते, तथैव वर्णेष्वपि बुद्धौ सहवृत्तिष्वेव पदार्थ उपजायते' इति । अत्र स्वरूपं प्रतिलभत इत्यस्य स्वरूपप्रतिपत्तिगोचरो भवतीत्यर्थः । एवम् 'उपजायते' इत्यस्यापि लक्षणयोपजात इव प्रतीयत इत्यर्थः । अतो न पूर्वापरविरोधस्तत्रेति ।

कारिकाया निगूढोऽभिप्रायस्तु स्वोपज्ञटीकादर्शनेनैव प्रतीयते—यदि पदेषु सहवृत्तिष्वपि निविष्टो वाक्यार्थः प्रतिपदं निविष्ट इति कल्प्यते, तथैव सहवृत्तिष्वपि वर्णेषु संनिविष्टः पदार्थः कामं वर्णेष्वपि कल्पयितव्यः । न च केवलेषु पदेषु वाक्यार्थः, न वा केवलेषु वर्णेषु पदार्थोऽनुभूयत इत्यनुभवविरुद्धा केवलेषु पदेषु वाक्यार्थेनार्थवत्त्वकल्पना, केवलेषु च वर्णेषु पदार्थेनार्थवत्त्वकल्पनेति पदान्यनर्थकान्येव, यथा वर्णा अनर्थका इति । एवं केवलेषु पदेष्वर्थवत्त्वाभावे पदान्तरैः सहवृत्तिष्वपि पदेष्वर्थवत्त्वं नास्ति, यथैकस्यां सिकतायां तैलाभावे तत्समुदायेऽपि तैलाभाव इति ॥६१।

ननु यदि पदार्थः प्रतिवर्णं निविष्टस्तर्हि कस्मात् पदस्य प्रयोग इव वर्णस्यापि प्रयोगे कश्चिदर्थो न प्रतीयत इतीमामाशङ्कां पदसत्यत्ववादी दृष्टान्तेनापनेतुमाह—सूक्ष्मं ग्राह्यमिति ।

सूक्ष्ममपि ग्राह्यं ग्रहणार्हं वस्तु केवलमगृह्यमाणमपि यथान्येन केनचित्पदार्थेन संसृष्टं तेनैव सह गृह्यते, केवलं तु न गृह्यते, तथा वर्णोऽप्यन्येन वर्णेन संबद्ध एव वाचको नासंबद्ध इति योजनयाऽयमर्थो लभ्यते । केवलमग्राह्यमपि सूक्ष्मं वस्तु रजः प्रभृति यथाऽन्येन केनचित् सजातीयेन विलक्षणेन वा संसृष्टं सद् गृह्यते, एवमर्थवानपि वर्ण एकैकं न प्रत्यायकोऽन्येन संसृष्टस्तु वाचक एव ।

यथा हि सूक्ष्मं ग्राह्यं दूरात् केशमक्षिकाद्यन्तिके च वातायनरजः केवलं नोपलभ्यते । संसृष्टं त्वसंयुक्तमप्युपलभ्यते । वर्णोऽप्येवमेवासत्यपि शब्दान्तरप्रादुर्भावेऽन्येन सम्बद्धः सत्यप्यर्थयोगे पूर्वमगृहीतस्यार्थस्य प्रत्यायको भविष्यति ॥६२।

एतदेव दृष्टान्तेन दर्शयितुमाह—सूक्ष्ममिति।

(अ) ग्राह्यमपि सूक्ष्मं वस्तु रजःप्रभृति यथाऽन्येन केनचित्सजातीयेन विलक्षणेन वा संसृष्टं सद् गृह्यते, एवमर्थवानपि वर्ण एकैकं न संप्रत्यायकोऽन्येन संसृष्टस्तु वाचक एव।

एतदुक्तं भवति—अर्थवन्त एव वर्णाः प्रतिपत्त्रा तु पाटवविरहादेकैकं न तथा गृह्यन्त इति नात्र तेषामपराधः ॥ ६८ ।

**पदस्योच्चारणादर्थो यथा कश्चिन्निरूप्यते ।**
**वर्णानामपि सान्निध्यात्तथा सोऽर्थः प्रतीयते ॥६३।**

---

एतदुक्तं भवति--अर्थवन्त एव वर्णाः प्रतिपत्त्रा तु पाटवविरहादेकैकं न तथा अर्थवन्तः गृह्यन्त इति नात्र वर्णानामपराध इति वर्णा अर्थवन्त एवेति न तद्दृष्टान्तेन पदानामार्थक्यं शक्यमास्थातुमिति।

अयं तु कारिकायाः परम आशयः—यथा हि सूक्ष्मं ग्राह्यं केशमक्षिकादि दूराद् अन्तिके च वातायनरजः केवलं सजातीयेन विजातीयेन वा वस्तुनाऽसंसृष्टं नोपलभ्यते, संसृष्टं तु दूरादप्युपलभ्यते, असंयुक्तमपि वस्त्वन्तरेणान्तिक उपलभ्यते ग्रहणार्हं केशमक्षिकादि, अन्तिकेऽपि च ग्रहणानर्हं नोपलभ्यते वातायनरजो वस्त्वन्तरासंसृष्टम्। वर्णोऽप्येवं कश्चिच्छब्दान्तरप्रादुर्भावेऽसत्यपि वर्णान्तराऽसहकृत एव स्वभावतः कस्यचिदर्थस्य प्रत्यायको यथा केवलोऽकारो विष्णोः, उकारः शम्भोः, मकारो ब्रह्मणः। अन्यदप्येकाक्षरकोशतोऽवसेयम्।

कश्चित्तु वर्णः सत्यप्यर्थयोगे वर्णान्तरसमभिव्याहारात् पूर्वमगृहीतस्य कस्यचिदर्थस्य वर्णान्तरेण समभिव्याहृतः सन् तादृशस्वभावादेव प्रत्यायको भविष्यतीति ॥६२।

न च वर्णदृष्टान्तेनानर्थकमेव पदमिति वक्तुं युक्तम्, वर्णानामानर्थक्याभ्युपगमे प्रत्यक्षविरोधादित्याह पदसत्यत्ववादी —पदस्योच्चारणादिति।

अयमर्थः—यथा पदस्य केवलस्योच्चारणात् कश्चिदर्थः पदार्थत्वेन मतो निरूप्यते, तथा वर्णानां वर्णान्तरसांनिध्यादपि स एवार्थः प्रतीयत इति पदयोजनयाऽयमर्थः फलति। नहि किञ्चित्पद केनचिदप्यर्थेनानिरूपितमिति युज्यते वक्तुम्, केवलपदजन्यपदार्थप्रत्ययाऽनुभवविरोधात्। अनुव्यवसीयते हि पदजन्यत्वेन पदार्थप्रत्ययः, घटपदाद् घटं प्रत्येमीति। यथा चैवं पदोच्चारणकालेऽस्ति काचिदर्थप्रतीतिरिति तेनार्थेन पदमर्थवदित्यभ्युपेयते। एवं तेनैवार्थेन परस्परं संहता वर्णा अप्यर्थवन्तो भविष्यन्ति, न तु केवलाः, वस्तुस्वाभाव्यात्।

**पदे किलोच्चारिते योऽर्थो निरूप्यते तेनार्थेन तदुच्चरितं पदं तदर्थवदिति वा प्रतिज्ञायते। वर्णेष्वप्युच्चरितेषु पदवत् स एवार्थस्तथैव प्रतीयते। तस्माद्ये-नैव हेतुना पदार्थवादी पदस्यार्थवत्तां प्रतिजानीते तेनैव हेतुना केवलवर्णार्थवाद्यपि वर्णस्यार्थवत्तां प्रतिजानीत इति ॥६३।**

न चानर्थकमेव पदमिति वक्तुं युक्तं प्रत्यक्षविरोधादित्याह—पदस्येति।

नहि किञ्चित् पदं केनचिदर्थेनानिरूपितमिति युज्यते वक्तुमनुभव-विरोधात्। यथा चैवं पदोच्चारणकालेऽस्ति काचिदर्थप्रतीतिरेवं तेनैवार्थेन संहता अप्यर्थवन्त इति प्रतिपादयितुमाह—**वर्णानामिति।**

केवलं सान्निध्यात् **सहोच्चारणादसावर्थस्तेषां प्रतीयते। तस्माद्यथा** समुदिताः परस्परशक्त्यावेशाद्वर्णा वाचकाः, एवं पदान्यपि तथैवेति वर्णपदव्यति-रेकेण वाक्यं नाम नास्तीति। तदुक्तम्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः" ॥ इति ॥ ६२।
(श्लो० वा० स्फोटवादे, ६६)

---

तस्माद् यथा समुदिता वर्णाः परस्परशक्त्यावेशात् पदार्थवाचकाः, एव पदान्यपि पदान्तरसमभिव्याहाराद् वाक्यार्थवाचकानीति न किञ्चिद् वर्णपदव्यतिरेकेण वाक्य नामा-स्तीति। तदुक्तम्—

यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥ इति।
(मी० श्लो० वा० स्फोटवादे ६६ श्लोकः)

अत्र 'ये' इति स्वरूपनिर्देशः। यावन्त इति संख्यानिर्देशः। यादृशा इत्यानुपूर्वी-निर्देशः। तेन विशिष्टसंख्याकानां विशिष्टानुपूर्व्या संनिविष्टानामेव वर्णविशेषाणामर्थविशेष-वाचकत्वं न तु केवलानामित्युक्तं भवतीति।

अयं भावः—यथा पद उच्चारिते किल योऽर्थो निरूप्यते तदुच्चरितं पदं तेनार्थेन तदर्थवदिति प्रतिज्ञायते, तथैव वर्णेष्वप्युच्चरितेषु पदवत्स एवार्थः प्रतीयते। तस्माद् येनैव हेतुना पदान्वयव्यतिरेकानुविधायित्वरूपेण पदार्थवादी पदस्यार्थवत्तां प्रतिजानीते तेनैव हेतुना वर्णान्वयव्यतिरेकानुविधायित्वेन केवलवर्णार्थवाद्यपि वर्णस्यार्थवत्तां प्रतिजानीत इति। यथा च यथा पदार्थवादी केवलानां वर्णानामानर्थक्यात् तत्समुदायस्याप्यानर्थक्यं प्रतिजानीते।

तद्यथा—एकासिकता तैलदानेऽसमर्थेति तत्समुदायः खारीशतमप्यसमर्थमिति न्यायात्। तथा केवलानां पदानामपि वाक्यार्थावबोधेऽसमर्थत्वेन समुदितानामपि तेषां तत्राऽसामर्थ्येनानर्थक्यमिति वाक्यवाक्यार्थयोरखण्डत्वपक्ष एव सूत्रकारभाष्यकारयोरभिमतः

येषामत्यन्त [म] संसृष्टस्याश्रयविशेषवद्भिः साधनैः क्रियाविशेषस्यार्थभेदे-ष्वलब्धपदविभागमेकमभिन्नस्यार्थस्य वाचकं वाक्यं तेषामङ्गभ्रेषे यत्र प्रतिनिधि-रुपादीयते तत्र क्रियायाः प्रतिनिधिः प्राप्नोति। अप्रतिनिधेया च क्रिया, तस्मात् प्रसक्तानुप्रसक्तं प्रतिनिधिसम्बन्धेनेदमुच्यते—

**प्राप्तस्य यस्य सामर्थ्यान्नियमार्था यतः श्रुतिः।**
**तेनात्यन्तं विशेषेण सामान्यं यदि बाध्यते॥ ६४।**

इह यजेतेत्याह, द्रव्यदेवतास्सामर्थ्यप्राप्ताः। नहि द्रव्यं देवतां साधनं चान्तरेण यजतिशब्दप्रयोगलक्षणार्थस्याभिधाव्यक्तिरस्ति तत्र द्रव्यं यजति-

यदि च पदार्थनिबन्धनो वाक्यार्थावभासो नाङ्गीक्रियते तदा प्रतिनिधि-कल्पनं पिकादिनियतपदप्रश्नः श्रुतिवाक्ययोर्विरोधे श्रुतिर्बलीयसीत्यवान्तरवाक्या-नामर्थवत्त्वं च न स्याल्लक्षणानुपपत्तिश्चेति पञ्च चोद्यान्यापतन्ति। तानि क्रमेण प्रदर्शयितुमाह—प्राप्तस्येति।

श्रेयानिति वाक्ये वर्णाः पदं वा कल्पितमेव, एवं वाक्यार्थेऽपि पदार्थाः कल्पित एव यथा-संभवं वाक्यवाक्यार्थप्रतिपत्तय इति ध्येयमिति॥ ६३।

यदि च पदनिबन्धनो वाक्यावभासः, पदार्थनिबन्धनश्च वाक्यार्थावभासो नाऽङ्गी-क्रियते, तदा कुशादीनां शरादिप्रतिनिधिकल्पनं पिकादिनियतपदप्रश्नः 'अस्मिन् वाक्ये पिकपदस्य कोऽर्थः?' इत्यादिरूपः, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पार-दौर्बल्यमर्थविप्रकर्षादिति पारमर्षसूत्रोक्तम्, श्रुतिवाक्यप्रमाणयोः परस्परं विरोधे श्रुतेर्बलीय-स्त्वम्, एकस्मिन् पद्ये महावाक्यात्मकेऽवान्तरवाक्यानामर्थवत्त्वञ्च न स्यात् क्रियाया अपि चाप्रतिनिधेयत्वेन संमतायाः प्रतिनिधिः कल्प्येत, प्रतिनिधिद्रव्यरूपसाधनविशिष्टायास्तस्या-स्तन्मते क्रियान्तरत्वात् तत्तदर्थे पदानां साधुत्वबोधनार्थो लक्षणप्रणयनानुपपत्तिश्चेति षट् चोद्यान्यापतन्ति वाक्यवाक्यार्थयोरखण्डत्ववादिनः। तत्र षट्सु चोद्येषु क्रमेण प्रदर्शयिष्य-माणेषु पदार्थप्रतिनिधिकल्पनाऽनुपपत्तिरूपं क्रियारूपवाक्यार्थप्रतिनिधिकल्पनापत्तिरूपं चाद्यं चोद्यद्वयमेवमापद्यते।

तथा हि—वाक्यार्थो यद्यखण्डस्तदा तत्र पदार्थभेदाऽभावात् तत्क्रियासंबद्धदर्भादि-पदार्थानां शरादिरूपप्रतिनिधिकल्पनं नोपपद्यते। किञ्च येषां वाक्यार्थाखण्डत्ववादिनां मते आश्रयविशेषवद्भिः कर्तृविशेषसंबद्धैः साधनैः कारकैः वाक्यार्थस्याखण्डत्वादत्यन्तमसंसृष्टस्य क्रियाविशेषरूपस्य वाक्यार्थस्याभिन्नस्य वाचकं तत्तत्पदार्थभेदेषु बोधनीयेषु तद्बोधायालब्ध-पदविभागमेकं वाक्यं तेषां मते दर्भादिसोमादिरूपाङ्गभ्रेषे भ्रंशे; यत्र शरादिरूपः प्रतिनिधिरुपादीयते तत्र क्रियायाः प्रतिनिधिः प्राप्नोति प्रतिनिधिसंसृष्टायाः क्रियायाः क्रियान्त-रत्वात्। अप्रतिनिधेया च क्रिया शास्त्रे उक्ता। चोदनामात्रलक्षणायाः क्रियायाश्चोदनया

**क्रियारूपैकदेशभावादङ्गत्वेन श्रुतिप्राप्तसन्निधानम्। व्रीहित्वादयस्तु सामान्यविशेषा विरुद्धैकार्थसमवाया अप्यविरुद्धैकार्थसमवायेन द्रव्यत्वेनादृष्टसाहचर्यव्यभिचाराः सामान्यमात्रा[त्र]प्राप्तसन्निधानाः। तेषां नियतेऽपि सन्निधाने शब्दरूपेणानुपादानाद् द्रव्यत्ववदङ्गभावो न प्रतीयते। यस्य तु सामर्थ्यमात्रेणापि प्राप्ता व्रीहित्वादयः पुनः श्रुत्या नियम्यमानानां यवत्वादीनां सामान्यविशेषा-**

इह यजेतेत्याख्यातपदप्रतिपाद्यो यजनविधिरुपदिश्यते। तत्र क्रियाप्रधानमाख्यातमित्यत्र यजतिक्रिया साधननिर्वर्त्येत्यसौ कारकमात्रस्याक्षेपिका, कदाचिद्विशिष्टस्यैवेति द्वयी गतिः। तत्र यस्य व्रीहित्वस्य यजतिक्रियासामर्थ्यात् प्राप्तस्य

---

प्रतिनिध्यनुक्तेः। तस्मात् प्रसक्तानुप्रसक्तं प्रतिनिधिसंबद्धमिद चोद्यद्वयं युग्मेन प्रदर्शयितुमाह पदसत्यत्ववादी—**प्राप्तस्य यस्येति।**

यद्यपीदं पद्ययुग्मं द्रव्यप्रतिनिधिकल्पनानुपपत्तिरूपमेव चोद्यं समर्थयते, न तु क्रियान्तरप्रतिनिधिकल्पनापत्तिरूपं चोद्यम्; तथापि तुल्यवित्तिवेद्यतया तदप्यर्थात् समर्थितं भवतीति वेदितव्यम्।

अथैतत्पद्यार्थः प्रदर्श्यते—इह 'यजेत' इत्यत्राख्यातपदप्रतिपाद्यो यजनविधिरुपदिश्यते। तत्र 'क्रियाप्रधानमाख्यातम्' इत्यभ्युपगमेनात्र प्रधानीभूता यजनक्रिया साधननिर्वर्त्येत्यसौ स्वसाधनस्य द्रव्यसामान्यरूपस्य कारकसामान्यस्याक्षेपिका, केषाञ्चित्तु मते यजेतेति श्रुत्या यागसाधनतया द्रव्यसामान्याक्षेपेऽपि 'निर्विशेषं न सामान्यम्' इति न्यायेन व्रीहित्वादिविशेषधर्मपुरस्कारेणैव द्रव्यसामान्यस्य भानमिति विशिष्टस्यैव द्रव्यविशेषस्याक्षेपिकेति द्वयी गतिः। तत्र यस्य प्रतिपत्तुर्यागसाधनतया यजतिक्रियासामर्थ्यात् प्राप्तस्य व्रीहित्वस्य यवत्वादिवद् ज्ञानं तस्य व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुतिरुच्चरन्ती नियममवगमयति व्रीहिभिरेव, न यवैरिति। ततश्च तेन द्रव्यविशेषेण व्रीहिरूपेणात्यन्तं द्रव्यसामान्यं यदि बाध्यत इत्येतावन्मात्रमेतत्पद्यार्थः, इदञ्चाग्रेतनपद्यार्थेन संबन्धमनुभूय परिपूर्णं भवति।

पदयोजना त्वेवम्—**यस्य** व्रीहित्वरूपस्य जातिविशेषस्य **यजेतेति यजतिक्रियासामर्थ्याद्** यागसाधनतया प्राप्तस्य व्रीहिभिर्यजेतेति **पुनः** श्रुतिः 'व्रीहिभिरेव यजेत, न तु यवैः' इति नियमार्था, तेन व्रीहिरूपद्रव्यविशेषेण द्रव्यसामान्यमत्यन्तं यदि बाध्यत इति।

अयं भावः—इह यजेतेति वेद आह, तेन द्रव्यदेवता यजतिक्रियासामर्थ्यप्राप्ताः। नहि द्रव्यं देवतां साधनञ्चान्तरेण यजतिशब्दप्रयोगरूपस्यार्थस्याभिधा=व्यक्तिरस्ति। तत्र द्रव्यं यजतिक्रियारूपैकदेशभावादङ्गत्वेन यजेतेति श्रुतिप्राप्तसन्निधानम्। व्रीहित्वादयस्तु सामान्यविशेषा यवत्वादिरूपसामान्यविशेषान्तरैः सह विरुद्धैकार्थसमवाया अप्यविरुद्धैकार्थसमवायेन द्रव्यत्वरूपसामान्येनादृष्टसाहचर्यव्यभिचारा इति कृत्वा निर्विशेषं न सामान्य-

न्तराणां निवर्तका इति दर्शनं तस्य व्रीहित्वेन यवत्वादिसहचारिणो द्रव्यस्यात्यन्तं[म] श्रुतिलक्षणमपसारण प्राप्नोति ॥६४।

व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुतिरुच्चरन्ती नियममवगमयति व्रीहिभिरेव न यवैरिति, ततश्च तेन द्रव्यविशेषेणात्यन्तं द्रव्यसामान्यमात्रं यदि बाध्यते ॥ ६४।

**यजेतेति यदा द्रव्यं प्राप्तं सामर्थ्यलक्षणम् ।**
**व्रीहिश्रुत्या निवर्त्तेत न स्यात्प्रतिनिधिस्तदा ॥६५।**

यदि सामान्यलक्षणप्राप्तं यवादिद्रव्यं व्रीहिश्रुत्या शास्त्रेण प्रतिषिध्यते तच्छास्त्रान्तराभावाद्यथैवान्यानि द्रव्याण्ययज्ञियानि तथा व्रीहीणामसन्निधाने

अतः किमित्याह – **यजेतेतीति** ।

यजेतेत्येतया क्रियया निःसाधना क्रिया न भवतीति सामर्थ्याद्यदाक्षिप्तं द्रव्यमात्रं तत् व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुत्या बाधितं सन्निवर्तेत तदभावे प्रति-

---

मित्यभ्युपगमानुसारेण द्रव्यत्वसामान्येनानुमीयमाना द्रव्यत्वसामान्यमात्रप्राप्तसंनिधाना न तु द्रव्यत्ववद् यजेतेति श्रुतिप्राप्तसंनिधानाः। तेषां व्रीहित्वादीनां द्रव्यत्ववद् नियतेऽपि सनिधाने शब्दरूपेणानुपादानाद् द्रव्यत्ववद् यागाङ्गभावो न प्रतीयत इति व्रीहिभिर्यजेतेति श्रुत्या व्रीहीणामङ्गत्वं विधीयते, न तु नियम्यत इति यवादीनां प्रतिनिधित्वसंभवः।

यस्य तु यजेतेति यजतिक्रियासामर्थ्यमात्रेणापि प्रागुक्तरीत्या प्राप्ता व्रीहित्वादयो व्रीहिभिर्यजेतेति पुनः श्रुत्या नियम्यमानानां यवत्वादीनां जातिविशेषान्तराणां निवर्तका इति दर्शनं तस्य मते व्रीहित्वेन यवत्वादिसहचारिणो द्रव्यस्यात्यन्तमङ्गत्वेनाश्रुतिलक्षणमपसारणं प्राप्नोतीति न यवादीनां प्रतिनिधित्वसम्भव इति।।६४।

व्रीहिरूपेण द्रव्यविशेषेणात्यन्तं द्रव्यसामान्यमात्रं यदि बाध्यते ततः किमित्याकाङ्क्षायामाह—**यजेतेति** ।

अयमर्थः—यस्य मते यजेतेति प्राप्तं यजेतेति श्रुत्या यागैकदेशत्वेन द्रव्यसामान्यप्राप्तावपि निर्विशेषं न सामान्यमिति न्यायेन व्रीहित्ववद् यवत्वादिकमपि यजेतेति श्रुतिसामर्थ्यादेव प्राप्तमतः सामर्थ्यलक्षणं सामर्थ्यं यजेतेति श्रुतिसामर्थ्यम्, लक्षणं ज्ञापकं यस्येति बहुव्रीहिः। द्रव्यं यवत्वादिजातिविशेषाश्रयीभूतं प्राप्तं ततो व्रीहित्वस्यापि प्राप्तत्वादेव व्रीहिभिर्यजेतेति पुनः श्रुत्या नियमरूपया निवर्तेत तथा सति व्रीह्यादेर्यवादिः प्रतिनिधिर्न स्यादिति पदयोजनयाऽयमर्थो लभ्यते। क्वचित्तु तदेति पाठः सोऽपि साधुः।

अयं तु फलितोऽर्थः—यजेतेत्येतया क्रियया निःसाधना क्रिया न भवतीति सामर्थ्याद् यदाक्षिप्तं द्रव्यमात्रं तत्तद्विशेषधर्मपुरस्कारेण भासमानं तद् व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुत्या बाधितं सन्निवर्तेत। ततश्च व्रीह्यभावे यवादिः प्रतिनिधिर्न स्यात्।

नैव प्रतिनिधेयं स्यात्। सत्यप्यर्थित्वे दृष्टेऽपि सामर्थ्ये शास्त्रेणापर्युदस्तस्याधिकारो युक्तः। तस्मान्मा भूत् प्रसिद्धस्यासहचरितस्य प्रतिनिधिरभावादिति ॥६५॥

निधिर्न स्यात्। क्रियया द्रव्यमात्राक्षेपे व्रीहिलक्षणस्य द्रव्यस्याभावे तत्सदृशं द्रव्यान्तरमेव नीवारादिकं समानीय तन्निर्वर्तन क्रियते। विशिष्टद्रव्याक्षेपे तु तया कृते तदुपादानं नियमाय पर्यवस्यतीति कथं व्रीहिकरणकं यजनमन्यो निर्वर्तयेदिति प्रतिनिध्यभावः। तस्माद् द्रव्यमात्राक्षेपे प्रतिनिध्युपपत्तिः॥ ६५॥

इदमन्यद्दर्शनमाश्रीयते। शब्देनानङ्गीकृतं व्रीहित्वमङ्गभावेनाधिकं व्रीहिशब्दः प्रकल्पयतीति निगमयति—

**तस्माद् व्रीहित्वमधिकं व्रीहिशब्दः प्रकल्पयन्।**
**द्रव्यत्वमविरुद्धत्वात् प्राप्त्यर्थः सन्न बाधते ॥६६॥**

---

तथाहि—यजेतेति क्रियया द्रव्यमात्राक्षेपे व्रीहिलक्षणस्य द्रव्यस्याभावे तत्सदृशमेव द्रव्यान्तर नीवारादिकं समानीय तन्निर्वर्तनं क्रियते। व्रीहिरूपविशिष्टद्रव्याक्षेपे तु यागक्रियया कृते व्रीहिभिर्यजेतेति पुनर्व्रीह्युपादानं नियमाय पर्यवस्यतीति कथं व्रीहिकरणकं यजनमन्यो निर्वर्तयेदिति प्रतिनिध्यभावः। तस्माद् द्रव्यमात्राक्षेपे प्रतिनिध्युपपत्तिः।

अयं भावः—यदि यजेतेति यजतिक्रियाक्षिप्तद्रव्यसामान्यरूपवस्तुसामर्थ्यात् प्राप्तं यवादिद्रव्यं प्रागुक्तरीत्या व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुत्या शास्त्रेणानेन नियमरूपेण प्रतिषिध्यते। ततो यथैव व्रीहिभ्योऽन्यानि द्रव्याणि गोधूमादीनि विधायकशास्त्रान्तराऽभावाद् अयज्ञियानि = यागेऽनुपयुक्तानि तथा व्रीहीणामसंनिधाने यवादिकमपि नैव प्रतिनिधेयं स्यात्। यतः सत्यपि कर्तर्यर्थित्वेऽपर्युदस्तस्य कर्तुरिव दृष्टेऽपि वस्तुनि यागोपकारसामर्थ्ये शास्त्रेणापर्युदस्तस्यैवाधिकारः = फलेन सम्बन्धः युक्तः, न तु शास्त्रनिषिद्धस्येति। तस्मान्न स्याद् व्रीहिभिर्यजेतेति नियमश्रुत्या यागोपकारकत्वेन स्वाश्रयद्वारा प्रसिद्धस्य व्रीहित्वस्य यवत्वासहचरितस्य = यवत्वासमानाधिकरणस्य प्रतिनिधिः स्वाश्रयद्वारा यवत्वादिकम्, नियमश्रुत्या निषिद्धत्वेन यवादेः फलोपकारकत्वाभावादिति ॥६५॥

प्रागुक्तरीत्या व्रीहिभिर्यजेतेत्यस्य नियमत्वे यवादीना प्रतिनिधित्वाप्रसक्तौ प्रागुक्तरीत्या व्रीहिभिर्यजेतेत्यस्य विधित्वं नियमत्वं वेति प्रागुक्ताद् दर्शनद्वयादिदमन्यद् दर्शनमाश्रीयते।

तथाहि—यजेतेति श्रुत्या यजनक्रियया द्रव्यसामान्याक्षेपे द्रव्यत्वस्य यागाङ्गत्वावगमेऽपि व्रीहित्वस्य यागाङ्गभावो नावगम्यते, व्रीहित्वस्य शब्दानुपात्तत्वात्। तदङ्गत्वबोधकश्रुतेरभावाच्च। अतो यजेतेति शब्देनाङ्गभावेनानङ्गीकृतम् = अबोधितं व्रीहित्वमिति तदङ्गभावमधिकं व्रीहिशब्दः प्रकल्पयतीति सिद्धान्तं निगमयति—**तस्माद् व्रीहित्वमिति।**

**व्रीहिशब्दो ह्यधिकार्थाध्यावापायोपादीयमानो द्रव्यत्वविरुद्धैकार्थसमवायं प्राप्त्यर्थः सन्न बाधते। नहि यवत्वादीनां निवृत्तौ तस्य व्यापारोऽस्ति, नाप्यनुज्ञायाम्** ॥६६॥

तदेतदेव दर्शयितुमाह—**तस्मादिति।**

तस्माद् द्रव्यमात्राक्षेपे व्रीहिशब्दोऽत्र प्राप्त्यर्थो व्रीहित्वमात्रप्रापणप्रयोजने व्रीहित्वमेवाधिकं कृत्वाऽभ्युपकल्पयन् प्रकटीकुर्वन् द्रव्यत्वं न बाधते, अविरुद्धत्वात् सामान्यस्य विशेषेण सहाविरोधात्॥ ६६ ॥

---

अयमर्थः—तस्माद् यजेतेति श्रुत्या द्रव्यमात्राक्षेपेऽपि व्रीहित्वे यागाङ्गत्वस्याबोधितत्वात्, व्रीहिशब्दो द्रव्यत्वादधिकं व्रीहित्वरूपमङ्गं प्रकल्पयन् प्राप्त्यर्थः सन्नविरुद्धत्वाद् द्रव्यत्वं न बाधत इति यवादीनां प्रतिनिधित्वे बाधाभाव इति।

तदयं फलितोऽर्थः—तस्माद् यजेतेत्यत्र द्रव्यमात्राक्षेपे व्रीहिशब्दो व्रीहिभिर्यजेतेत्यत्र प्राप्त्यर्थो व्रीहित्वमात्रप्रापणप्रयोजनो व्रीहित्वमेवाधिकं कृत्वा तस्याङ्गत्वमभ्युपकल्पयन् प्रकटीकुर्वन् द्रव्यत्व न बाधते, व्याप्यव्यापकयोर्बाध्यबाधकभावाभावात्। अविरुद्धत्वात्, सामान्यस्य विशेषेण सहाविरोधात्।

अयं भाव—यजेतेत्यत्र द्रव्यमात्राक्षेपे द्रव्यसामान्यान्तर्गततया व्रीहिरूपे द्रव्ये द्रव्यत्वेन रूपेण लब्धेऽपि व्रीहिभिर्यजेतेत्यत्र व्रीहिशब्दो व्रीहित्वेन रूपेण व्रीहिरूपस्य द्रव्यस्य यागाङ्गत्वरूपाधिकार्थाध्यावापाय=व्रीहिरूपे द्रव्ये व्रीहित्वरूपधर्मविशिष्टे यागाङ्गत्वरूपाधिकार्थप्रक्षेपाय = अधिकार्थबोधनायेति यावद्, व्रीहिभिर्यजेतेत्यत्रोपादीयमानः प्राप्त्यर्थः—विध्यर्थः सन्नविरुद्धैकार्थसमवायं द्रव्यत्वमविरोधादेव न बाधते। विध्यर्थत्वे हि व्रीहिभिर्यजेतेत्यस्य यवत्वादीनां निवृत्तौ व्यापारो नास्ति, तेषामनुज्ञायामपि व्यापारो नास्तीति।

एवञ्चात्र दर्शने यवादीनां व्रीह्यलाभे प्रतिनिधित्वमुपपद्यते। कल्पितं च शास्त्रे तच्च वाक्यस्य वाक्यार्थस्य चाखण्डत्वेनोपपद्यते। किञ्चैवमखण्डत्वपक्षे वाक्यार्थभूताया विशिष्टक्रियाया अपि यवादिविशिष्टक्रियारूपप्रतिनिधिकल्पनापत्तिः स्यात्। सा चानिष्टा, क्रियाया अप्रतिनिधेयत्वादित्युक्तं प्रागिति। अत्र दाक्षिणात्यपुस्तकेष्वस्याः कारिकाया इदं स्वरूपं दृश्यते। तस्माद् व्रीहित्वमधिकं व्रीहिशब्दः प्रकल्पयेत्। द्रव्यत्वमविरुद्धत्वात् प्राप्तं सन्न च बाधत इति।

अत्रेदं वक्तव्यम्—अस्मिन् पाठे वाक्यभेदरूपो दोषः प्रसक्त इति प्रकल्पयन्नित्येव पाठो युक्त एकवाक्यत्वलोभेन। किञ्च प्राप्तं सन्न च बाधत इत्यत्रापि सदित्यधिकम्। सदित्युपपदस्य स्वसमभिव्याहृतपदार्थगतहेतुत्वावद्योतकत्वनियमात्। अत्र च प्राप्तत्वस्य बाधाभावे हेतुत्वासंभवात्। तस्मात् प्राप्त्यर्थः सन्न बाधत इति पाठ एव युक्तः। प्राप्त्यर्थत्वस्य बाधाभावे हेतुत्वसंभवादिति ॥६६॥

इदं च द्रव्यत्वस्य बाधनं यत्सामान्यविशेषान्तरैश्च साहचार्यादवच्छेदः ।

तेन चापि व्यवच्छिन्ने द्रव्यत्वे सहचारिणि ।
असम्भवाद् विशेषाणां तत्रान्येषामदर्शनम् ॥ ६७ ।
न च सामान्यवत्सर्वे क्रियाशब्देन लक्षिताः ।
विशेषा नहि सर्वेषां सतां शब्दोऽभिधायकः ॥ ६८ ।

यदि तर्हि व्रीहिश्रुतिर्न नियमार्था तर्हि विकल्पितत्वं यवादीनां कस्मान्न विज्ञायते । तत्राहुः--असंभवो नामानियमशब्दव्यापारो नियमसदृशफलः ।

अतश्च किमित्याह—तेनेति ।

तेन च व्रीहिशब्देन व्यवच्छिन्ने कृताभ्युच्चये दत्तोपचये द्रव्यत्वे सति । कीदृशे सहचारिणि अविरुद्धैकार्थसमवेते । द्रव्यविशेषाणां तत्रान्येषां समस्तानामसंभवाददर्शनमनाक्षेप एव ॥ ७ ।

---

ननु यदि व्रीहिशब्दो 'द्रव्यत्वमविरुद्धत्वात्प्राप्त्यर्थः सन्न बाधते' तदा द्रव्यत्वसमानाधिकरणयवत्वादिमतां यवादीनां यागाङ्गत्वे विकल्पः कुतो न विज्ञायत इति चेन्न, व्रीहिशब्दस्य प्राप्त्यर्थस्य व्रीहित्वसमानाधिकरणद्रव्यत्वाबाधकत्वेऽपि यवत्वादिसमानाधिकरणद्रव्यत्वबाधकत्वात् ।

इदमेव च विध्यर्थस्य व्रीहिशब्दस्य तादृशद्रव्यत्वबाधकत्वं नाम यद् यवत्वादिरूपजातिविशेषान्तरैः सह वर्तमानात् साहचर्यादवच्छेद इतीममर्थं सोपपत्तिकं प्रदर्शयितुमाह युग्मेन—तेन चापीति न चेति चेति ।

अयमर्थः—तेन च विध्यर्थेन व्रीहिशब्देन च सहचारिणि = यवत्वादिसहचारिणि यजतिक्रियाक्षिप्ते द्रव्यत्वे व्यवच्छिन्ने यवत्वादिसाहचर्याद् व्यावर्तिते, अपि तु तत्र यागेऽन्येषां व्रीहित्वातिरिक्ताना यवत्वादीनां विकल्पितत्वेन यागाङ्गतयाऽदर्शनम् । तत्र हेतुरसंभवादिति। यजेतेत्यनेन द्रव्यदेवतोभयस्वरूपस्य यागस्याभिधानेन द्रव्यत्वसामान्याभिधानेऽपि यवत्वादीना सामान्यविशेषाणामनभिधानेन विकल्पासंभवात् । कोटिद्वयस्य शब्दोपात्तत्वे हि विकल्पो दृष्टः । अतिरात्रे षोडशिन गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीति यवत्वादीनां विकल्पासंभवमेव सोपपत्ति प्रपञ्चयितुं पद्यान्तरोपन्यासः—न चेति ।

अयमर्थः—सर्वे विशेषा यवत्वादयः सामान्यवद् = द्रव्यत्वसामान्यवत् क्रियाशब्देन यागक्रियाबोधकेन यजेतेति शब्देन न च लक्षिता = अभिहिताः । अनभिधाने हेतुमाह—नहीति । हि = यतः कश्चिदपि शब्दः स्वार्थे सताम् = विद्यमानाना सर्वेषामर्थानामभिधायको न भवति, किन्तु संकेतितस्य स्वप्रवृत्तिनिमित्तस्यैवाभिधायको भवति । तथा च यजेतेति पदं द्रव्यदेवतोभयाङ्गकयागे संकेतितमतो द्रव्यत्वसामान्याभिधायकमपि न यवत्वादिजातिविशेषा-

**क्वचिद्विषयेऽन्य एव धर्मोऽयमसंभवनियम इति नियमविभागे न्यायविदः केचिदाचक्षते—यत्र व्रीहित्वमधिकं शब्देनाङ्गभावं प्रतिपद्यते तत्र विरुद्धैकार्थसमवायत्वादप्रतिषिद्धान्यपि श्रुत्या यवत्वादीनि न संभवन्ति। यदि च संभवेयुः काममविरोधसामर्थ्यप्राप्तसन्निधानानि विना शब्दव्यापारेण समुच्चीयेरन्। न त्वेष विकल्पस्य विषयः। न च सामान्यवत् क्रियाशब्देन लक्षिता विशेषाः। नहि सर्वेषां सतां शब्दोऽभिधायकः ॥६७-६८॥**

एवदेवोन्मीलयितुमाह—न चेति।

यजतिना हि क्रियाशब्देनात्र द्रव्यत्वसामान्यवत्सर्वे विशेषास्तदन्तर्गता न लक्षिता आक्षिप्ता अपि तु द्रव्यत्वमेव। तदेव चाभ्युच्चयीकृतं व्रीहिशब्देन।

सामान्यमात्राक्षेपः किमिति नाङ्गीक्रियत इत्याशङ्क्याह—नहीत्यादि। नहि सकलसंनिहितविशेषाभिधायकः शब्दः परिदृष्टः, तथाऽप्रतीतेः ॥६८॥

---

भिधायकम्, तत्र तस्यासंकेतितत्वात्। अतो यवत्वादीनां शब्दानभिहितत्वान्न व्रीहित्वेन सह विकल्प इति।

अत्र प्रथमं सप्तषष्टितमं पद्यं पुण्यराजः व्याचख्यौ—"तेन चेत्यतः समस्तानामसंभवाददर्शनमनाक्षेप एव" इत्यन्तेन। अत्र व्यवच्छिन्न इत्यस्य व्यावर्तित इति शक्यार्थं विहाय लक्षणयैतादृशार्थकरणं व्रीहिशब्देन क्रियमाणा द्रव्यत्वसामान्यस्य यवादिद्रव्येभ्यो व्यावृत्तिमुपपादयितुमिति तर्कयामहे। यदपि तेनैवात्रैवाष्टषष्टितमपद्यव्याख्यानावसर उक्तम्—"यजतिना हि क्रियाशब्देनात्र द्रव्यत्वसामान्यवत् सर्वे विशेषास्तदन्तर्गता न लक्षिता = आक्षिप्ता अपि तु द्रव्यत्वमेव। तदेव चाभ्युच्चयीकृतं व्रीहिशब्देनेति" इति।

अत्र 'न लक्षिताः' इत्यस्य न ज्ञापिता नाभिहिता इत्यर्थः। तत्र हेतुः 'आक्षिप्ताः' इति। यतो द्रव्यत्वसामान्येन ते विशेषा आक्षिप्ता इति तदर्थः। नह्याक्षेपलभ्योऽर्थः शब्देनाभिधीयते, किन्तु संकेतित इति तद्भावः। 'तदेव चाभ्युच्चयीकृतम्' इति तु पूर्वपद्यव्याख्यानरीतिमनुरुध्योक्तमिति द्रष्टव्यम्।

प्रकृतकारिकाद्वयस्य त्वयं भावः—ननु यदि प्रागुक्तरीत्या यजेतेत्यनेन द्रव्यसामान्याभिधानेऽपि द्रव्यविशेषस्य व्रीह्यादेर्नाभिधानमिति व्रीहिश्रुतिर्न नियमार्था, किन्त्वप्राप्तत्वाद् विध्यर्थेति द्रव्यत्वसामान्यसहचारित्वेन प्राप्तानां यवत्वादीनां व्रीहिश्रुत्या बाधाभावाद्विकल्पितत्वं यवादीनां कस्मान्न विज्ञायत इति चेदत्राहुः—द्विविधा हि विधिशब्दाः, नियमशब्दाः, अनियमशब्दाश्चेति। तत्र नियमशब्दाना विधेयविषयेऽवधारणरूपो व्यापार इतरनिषेधफलकः, अनियमशब्दाना त्वसम्भवरूपो व्यापारः। सोऽपि नियमफलसदृशफलक एव।

**शुक्लादयो गुणाः सन्तो यथा तत्राविवक्षिताः ।**
**तथाऽविवक्षा भेदानां द्रव्यत्वसहचारिणाम् ॥६९॥**

**तत्रैतत् स्यात् । यथा द्रव्यत्व [ त्वं ] नियतसन्निधानं [न] क्रियासन्निधानं क्रियापदार्थैकदेशभूतमिव सन्निधानात् क्रियाशब्देन लक्ष्यते, तथा सर्वविशेषाणां**

---

केचित्तु न्यायविदोऽनियमशब्दानपि नियमविभाग एवाचक्षते । ते हि वदन्ति—"क्वचिद्विषये यत्र खलु विधीयमानस्यान्यतोऽप्राप्तिस्तत्रावधारणाख्यान्नियमव्यापारादन्य एवायं शब्दधर्मोऽसम्भवनियम इति" इति ।

तथाहि— यत्र यजेतेति श्रुत्याऽप्राप्तं विशेषरूपं व्रीहित्वं द्रव्यत्वसामान्याद् यजेतेति श्रुतिप्राप्तादधिकं व्रीहिशब्देन यागाङ्गत्वं प्रतीपद्यते, तत्र व्रीहिश्रुत्याऽप्रतिषिद्धान्यपि यवत्वादीनि विरुद्धैकार्थसमवायत्वाद् = व्रीहित्वाभाववदर्थवृत्तित्वाद् न सम्भवन्ति । यदि च सम्भवेयुस्तदाऽप्यविरोधसामर्थ्येन प्राप्तसन्निधानत्वाच्छब्दव्यापारेण प्राप्तत्वाभावात् कामं समुच्चीयेरन् न तु विकल्प्येरन्, शब्दव्यापारादप्राप्तेः । शब्दव्यापारात् प्राप्तो हि विकल्पस्य विषयो न यथाकथञ्चित् प्राप्तः । न च यजेतेति क्रियाशब्देन द्रव्यत्वसामान्यवद् व्रीहित्वयवत्वादयो विशेषा लक्षिताः = अभिहिताः ।

ननु विशेषाणामपि व्रीहित्वयवत्वादीनां 'निर्विशेषं न सामान्यमि'ति न्यायेन सामान्यान्तर्गतत्वात् कुतो न सामान्याभिधायिना यजेतेतिशब्देनाभिधानमिति चेन्न, शब्दस्य सङ्केतितार्थमात्राभिधायकत्वेन स्वार्थे विधीयमानानां सर्वेषामर्थानां सङ्केतितानामसङ्केतितानां चाभिधायकत्वात् । अन्यथा घटरूपादयोऽपि घटे सत्त्वाद् घटशब्देनाभिधीयेरन् । अतो यज्धातुना यागाङ्गत्वेन द्रव्यसामान्याभिधानेऽपि न द्रव्यविशेषा व्रीहियवादयोऽभिधीयन्त इति ॥६७-६८॥

ननु यथा द्रव्यत्व यजेतेतिपदेन नियतसन्निधानया यागक्रियया सन्निधापितं यागक्रियैकदेशभूतमिव क्रियासन्निधानाद् यजेतेतिक्रियाशब्देनाभिधीयते, तथा व्रीहित्वादिरूपसर्वविशेषाणां द्रव्यत्वसहचारिणां क्रियापदार्थैकदेशभूतद्रव्यत्वादीनामिव कस्माच्छब्देनोपादानं = अभिधानम् न विज्ञायत इति चेन्न, शब्दस्य सर्वेषां वस्तुसतामर्थानां स्वार्थत्वेनाभिधायकत्वाभावात् । यतो विवक्षारूपनिमित्तसहकृतेन शब्देन वस्तु ज्ञाप्यं भवति । अतो वस्तुसतामप्यर्थानां शब्दार्थत्वेनासत्त्वम् । विवक्षा च शब्दे शब्दस्वरूपस्यार्थं यत्सामर्थ्यं = शक्तिः तन्निबन्धनेत्येतदेव दृष्टान्तेन स्फुटीकर्तुमाह—शुक्लादय इति ।

अस्यार्थः—यथा तत्र व्रीहिभिरित्यत्र व्रीहित्वाविरोधिनः सन्तोऽपि शुक्लकृष्णादयो गुणा अविवक्षिता इति व्रीहिशब्दान्नोपादीयन्ते, तथा यजेतेत्यत्र द्रव्यत्वसामान्यसहचारिणां द्रव्यत्वाविरोधिना सतामपि व्रीहित्वयवत्वादीना भेदाना विशेषाणामविवक्षेति यजेतेतिपदेन

द्रव्यत्वसहचारिणां क्रियापदार्थैकदेशभूतानामिव कस्माच्छब्देनोपादानं न विज्ञायते। अत आह—नहि सर्वेषां वस्तुत्वेन सतामर्थत्वेन शब्दोऽभिधायको भवति।

विवक्षानिबन्धनं हि वस्तु। सतामप्यर्थानामर्थत्वेनासत्त्वम्। विवक्षा हि शब्दे रूपसामर्थ्यनिबन्धना। तत्र यथैव द्रव्यत्वसहचारिणो नियतसन्निधाना अपि शुक्लादयो गुणाः सत्यपि सन्निधानाद् द्रव्यत्ववदुपयोगे शब्दशक्त्यनुरोधादभिन्नत्वेन क्रियाशब्दरूपेणाङ्गत्वेन प्रत्याययितुमशक्यत्वादविवक्षिताः, तथैव शब्दसामर्थ्यप्रतिबन्धा व्रीहित्वादीनां द्रव्य [ त्व ] सहचारिणामुपयोगवतां भेदानामङ्गत्वेनाविवक्षा ॥६६।

एतदेव दृष्टान्तेन स्फुटीकर्तुमाह—शुक्लादय इति।

व्रीहिभिरित्यत्र यथा शुक्लकृष्णादिगुणयोगो न विवक्षितः, तथाऽत्र व्रीहिभिर्यजेतेति भेदानां द्रव्यविशेषाणां सामान्य [ न्या ] विरोधिनामविवक्षैवेति। ततश्च स्थितमेतद् यदत्र यजक्रियाक्षिप्तद्रव्यमात्राभ्युच्चयाभिधायको व्रीहिशब्दो न द्रव्यविशेषवचन इति। ततश्च न क्रिया प्रतिनिधीयते, द्रव्यं तु प्रतिनिधीयत इति मुख्याभावे तत्सदृशनीवारादिद्रव्यान्तरोपादानेन यागनिर्वृत्तिरिति प्रतिनिधिसमाश्रयणेन विध्यर्थानुष्ठानं सिद्धयतीति न तदवसादः ॥६६॥

---

तदयं फलितोऽर्थः—यथा व्रीहिभिरित्यत्र व्रीहिषु शुक्लकृष्णगुणयोगः सन्नपि न विवक्षितः, तथाऽत्र यजेतेत्यनेन सतामपि व्रीह्यादिद्रव्यविशेषाणा सामान्यविरोधिनामविवक्षैवेति।

ततश्चेदमायातम्—यद् व्रीहिभिरित्यत्र व्रीहिशब्दो यजेतेति यजतिक्रियाऽऽक्षिप्तद्रव्यसामान्यस्य योऽभ्युच्चय उपचयरूपः, द्रव्यत्वसामान्यरूपेण व्रीहिरूपस्यार्थविशेषस्य भानकृतस्तदभिधाय को न तु व्रीहित्वेन रूपेण व्रीहिरूपद्रव्यविशेषवचन इति न यवत्वादीना यागाङ्गत्वरूपप्रतिनिधित्वबाधकः। ततश्च न क्रिया प्रतिनिधीयते, द्रव्यं तु प्रतिनिधीयत इत्यभ्युपगमानुरोधेन यागाङ्गभूतमुख्यद्रव्यव्रीह्यभावे तत्सदृशाप्रतिषिद्धनीवारादिद्रव्यान्तरोपादानेन यागनिर्वृत्तिरिति प्रतिनिधिसमाश्रयणेन विध्यर्थानुष्ठान सिध्यतीति न मुख्याभावे विध्यर्थावसाद = विध्यर्थानुष्ठानाभाव इति।

अयं भावः—यजेतेत्यत्र यथैव द्रव्ये नियतसन्निधाना अपि शुक्लकृष्णादयो द्रव्यत्वसहचारिणो गुणा द्रव्ये नियमेन सन्निधानाद् द्रव्यत्ववत् स्वाश्रयद्वारा यागोपयोगे सत्यपि यागाङ्गद्रव्याभिन्नत्वेन द्रव्यत्ववद् यागाङ्गत्वसम्भवेऽपि यजेतेतिक्रियाशब्दस्वरूपेण शब्दशक्त्यनुरोधात् तेषा गुणानां द्रव्यत्ववद् यागाङ्गत्वेन प्रत्याययितुशक्यत्वादविवक्षिताः। तथैव द्रव्यत्वसहचारिणा यागोपयोगवतामपि व्रीहित्वादीनां विशेषाणा यागाङ्गत्वेन विवक्षा

तत्रैवं शास्त्रेणापर्युदस्ते विशेषान्तरसहचारिणि द्रव्यत्वे—

**असंन्निधौ प्रतिनिधिर्मा भून्नित्यस्य कर्मणः ।**
**काम्यस्य वा प्रवृत्तस्य लोप इत्यपदिश्यते ॥७०॥**

नित्यं यत्कर्म तस्याकरणे प्रत्यवायः । तस्य प्रधानस्याङ्गमात्रासन्निधाने मा भूदावृत्तिः [भूदनापत्तिः], काम्यस्य वा सन्निहितेष्वङ्गेषु प्रकान्तस्य मा भूदङ्गभ्रेषे विच्छेद इति शास्त्रेणापर्युदस्तः प्रतिनिधिः प्रथमकल्पासम्भवे उपादीयत इत्यविरुद्धं भवति ॥७०॥

तदेतदेव प्रतिनिधिप्रयोजनमाह--असन्निधाविति ।

मुख्यस्यासन्निधानेऽभावे मा भून्नित्यस्य कर्मणो लोप इति प्रतिनिधिरुपपद्यते । काम्यस्य वा प्रवृत्तस्य तथैव लोपो मा भूदिति । प्रवृत्तस्य काम्यस्येत्यनेनैतदाह यन्मुख्याभावे काम्येऽप्रवृत्तिरेव न ज्यायसी । प्रवृत्तौ वा केनचिद्वैगुण्येनासंपत्तौ समुदायस्य[स्या]प्रतीतेस्तत्रापि प्रतिनिध्युपादानेन तन्निर्वर्तनं विधेयम् । अन्यथा शिष्टविगर्हणलक्षणः प्रत्यवायः ॥ ७० ॥

---

व्रीहिभिरित्यनेन विधानमिति न व्रीहिश्रुतिवत्वादीनां बाधिकेति रीत्या यवादीनां प्रतिनिधित्वसम्भवो व्रीह्यलाभ इति ॥६९॥

तत्रैवं शास्त्रेणाप्रतिषिद्धे यवत्वादिसहचारिणि द्रव्यत्वे प्रतिनिधीकृते सति मुख्यद्रव्यालाभे नित्यकाम्यकर्मलोपाभावरूपं प्रतिनिधिप्रयोजनमाह—**असंन्निधाविति** ।

अत्रेयं पदयोजना—मुख्यद्रव्यस्य व्रीह्यादेरसन्निधौ नित्यस्य काम्यस्य वा प्रवृत्तस्य कर्मणो लोपो मा भूदिति प्रतिनिधिर्यवादिरुपादीयमान उपपद्यत इति । अत्र 'अपदिश्यते' इति हेलाराजः । व्रीह्यादेर्मुख्यद्रव्यस्य यवादिरूपः प्रतिनिधिरपदिश्यते, सादृश्यादतिदिश्यत इति तदर्थः । उपदिश्यत इत्येवमुपलभ्यमानः पाठस्तु न युक्तः । मुख्यद्रव्यस्यैव मुख्याङ्गत्वसम्भवेन प्रतिनिधेर्गौणाङ्गस्य शास्त्रतोऽतिदेशस्यैव सम्भवात् । क्वचित्त्वसम्भवे प्रतिनिधिरित्याकारकः पाठः, सोऽप्ययुक्तः; मुख्यद्रव्यस्य वन्ध्यापुत्रादिवदसम्भवाभावेन तस्याप्यसन्निधान एव पर्यवसानादिति ।

अयमर्थः—मुख्यद्रव्यस्यासन्निधावभावे नित्यस्य कर्मणो लोपो मा भूत् , तथैव काम्यस्य वा प्रवृत्तस्य लोपो मा भूदिति प्रतिनिधिरुपादीयमान उपपद्यते । प्रवृत्तस्य काम्यस्येत्यनेनैतदाह यन्मुख्याभावे काम्ये कर्मण्यप्रवृत्तिरेव स्यात् , सा च न ज्यायसी । तत्र प्रवृत्तौ वा मुख्यद्रव्यालाभेन तद्वैगुण्येन तदसंपत्तौ तत्तदङ्गसमुदायरूपस्य यागस्याप्रवृत्तेः = असिद्धेः, तत्रापि प्रतिनिध्युपादानेन तन्निवर्तनं विधेयम् । प्रवृत्तस्य कर्मणो लोपे हि शिष्टविगर्हणलक्षणः प्रत्यवायः प्रसज्येतेति ।

**विशिष्टैव क्रिया येन वाक्यार्थः परिकल्प्यते ।**
**द्रव्याभावे प्रतिनिधौ तस्य तत्स्यात् क्रियान्तरम् ॥७१॥**

**यस्य तु पूर्वोक्तेन धर्मेण क्रियाविशेषः शक्तिद्रव्यसंसर्गभिन्न एको वाक्यार्थस्तस्याविभक्तिशब्दार्थत्वाद्विशेषान्तरावगमे तस्मिन्नर्थात्मन्यविकल्पेन वृत्ते विशेषा-**

एवं द्रव्यमात्राक्षेपपक्षे प्रतिनिधिमुपपाद्येदानीं पदपदार्थानामनङ्गीकरणेऽखण्डवादिनो दूषणमाह—**विशिष्टैवेति** ।

येनाखण्डवाक्यवादिना व्रीहिकरणिका यजतिक्रिया निरस्तावयवार्था व्रीहिभिर्यजेतेत्यत्र वाक्यार्थ इत्युच्यते। तेन द्रव्यस्य व्रीहिलक्षणस्याभावे यदा प्रतिनिधिसमाश्रयणेन तन्निर्वर्तनं कार्यं तदा व्रीहिभिर्यजेतेति व्रीहिकरणकयागलक्षणस्य वाक्यार्थस्य त्यागात् प्रतिनिधिना तन्निवर्तने नीवारकरणिका यजति-

---

अयं भावः—नित्यं यत्कर्म सन्ध्यावन्दनादिकमग्निहोत्रादिकञ्च तस्याकरणे प्रत्यवायः तस्य नित्यस्य कर्मणोऽग्निहोत्रादेस्त्रिसन्ध्यं द्विसन्ध्यं वा क्रियमाणस्य प्रधानस्याङ्गभूतद्रव्यमात्राऽसन्निधाने = अङ्गद्रव्यस्वरूपासन्निधौ, मीयते = प्रमीयते इति मात्रा स्वरूपम् मा भूदनावृत्तिः, काम्यस्य वाऽङ्गेषु सन्निहितेषु सत्सु प्रक्रान्तस्याङ्गभ्रेषे = अङ्गभ्रंशे, अङ्गाभावे मा भूद् विच्छेद इति कृत्वा प्राथमिकलिङ्गाङ्गासम्भवे शास्त्रेणापर्युदस्तः प्रतिनिधिरुपादीयत इति मुख्यद्रव्यप्रतिनिधिद्रव्ययोरविरोधसम्भवे न बाध्यबाधकभाव इति ॥ **७०** ।

एवं यजेतेत्यनेन द्रव्यसामान्याक्षेपपक्षे व्रीहिभिरित्यस्य प्रागुक्तरीत्या प्राप्त्यर्थत्वेन यवादिद्रव्याबाधकत्वे प्रतिनिधिमुपपाद्येदानीं पदपदार्थानामनङ्गीकरणे वाक्यवाक्यार्थाखण्डत्ववादिनो मते दूषणमाह—**विशिष्टैवेति** ।

इयमत्र पदयोजना—येन = वाक्यवाक्यार्थाखण्डत्ववादिना, द्रव्याभावे मुखद्रव्याभावे, प्रतिनिधौ कृते सति, विशिष्टैव क्रिया = नीवारादिरूपसाधनद्रव्यविशिष्टैव यागक्रिया, वाक्यार्थः परिकल्प्यते, नीवारेषु यागसाधनत्वरूपसादृश्यमादाय तेषु व्रीहित्वमारोप्य व्रीहिभिर्यजेतेति वाक्यस्यार्थः परिकल्प्यते, तस्य = वाक्यवाक्यार्थाखण्डत्ववादिनो मते, तत् = प्रतिनिधिद्रव्यविशिष्टयागक्रियारूपं वस्तु, क्रियान्तरं मुख्यद्रव्यरूपसाधनविशिष्टक्रियातोऽन्यत्, वाक्यार्थः स्यात् । एवं च सैव मुख्यद्रव्यविशिष्टक्रियायाः प्रतिनिधिः स्यात्, तथा च न क्रिया प्रतिनिधीयत इत्यभ्युपगमभङ्गप्रसङ्ग इति ।

अयमर्थः—येन वाक्यवाक्यार्थाखण्डत्वत्ववादिना व्रीहिकरणिका यजतिक्रिया निरस्तावयवार्था व्रीहिभिर्यजेतेत्यत्र वाक्यार्थ इत्युच्यते, तेन वादिना द्रव्यस्य व्रीहिलक्षणस्याभावे यदा प्रतिनिधिसमाश्रयणेन यागनिर्वर्तनं कार्यम्, तदा व्रीहिभिर्यजेतेति व्रीहिकरणकयागलक्षणस्य वाक्यार्थस्य त्यागात् प्रतिनिधिना तन्निष्पादने नीवारकरणिका यागक्रिया

**न्तरोपादाने पुत्रीयति प्रक्रियान्तरं मुण्डयति वा प्रतिपाद्यमानोद्देश[श्य]विभागं तत्प्रतिनिहितं स्यात्, अनिष्टश्च क्रियायाः प्रतिनिधिरिति विभागपक्ष एव न्याय्यः।**

**अपर आह—क्रियायाः क्रिया निर्वर्तिका भवति, द्रव्यं द्रव्यस्य। तस्मात् क्रियान्तरोपादाने क्रियान्तरपरित्यागात् क्रियासु प्रतिनिधिर्भवति। क्रियात्यर्थगृहीतेषु योग्यताप्रापितेषु साधनेषु विशिष्टद्रव्यविषये नियमे कृते तस्य द्रव्यस्याभावे समर्थद्रव्यान्तरं पूर्वमेव क्रियायामङ्गीकृतमुपादीयते [दत्ते]। तत्र**

क्रियाऽन्यैवानुष्ठिता भवतीति न क्रिया प्रतिनिधीयते, द्रव्यं तु प्रतिनिधीयत इति न्यायस्योपेक्षणात् चोदितस्याकरणमेव स्यात्।

---

ऽन्यैवानुष्ठिता भवतीति 'न क्रिया प्रतिनिधीयते, द्रव्यं तु प्रतिनिधीयते' इति न्यायस्योपेक्षणाद् विहितस्य करणम्, अविहितस्य च क्रियान्तरस्य करणं प्रसज्येत।

अथ त्वयाऽखण्डत्ववादिना प्रतिनिधिर्नाश्रीयत इत्युच्यते, तन्न; असन्निधौ प्रतिनिधिर्मा भून्नित्यस्य कर्मण इत्यादिना प्रतिनिध्याश्रयणस्य सप्रयोजनत्वस्योक्तत्वादवश्याश्रयणीयः प्रतिनिधिरिति पदपदार्थानामभावे वाक्यवाक्यार्थयोरखण्डत्वाभ्युपगमे प्रतिनिध्यभावः स्यादिति पूर्वपक्षः पदपदार्थवादिनः।

अयं भावः—यस्य वाक्यवाक्यार्थाखण्डत्ववादिनो मते पूर्वोक्तेन धर्मेण व्रीहिनिष्ठकरणत्वरूपेण निरूपितः क्रियाविशेषो यजतिक्रियारूपः करणत्वशक्तितदाश्रयव्रीहिरूपद्रव्ययोः संसर्गाभ्यां भिन्न एकोऽखण्डो वाक्यार्थः, तस्य मतेऽविभक्तिशब्दार्थत्वाद्। अविभक्तेः = विभागरहितस्य, शब्दार्थत्वात् = वाक्यार्थत्वात् तस्मिन्नविभक्ते वाक्यार्थस्वरूपे स्वलक्षणकल्पे संसर्गाविषयकेणाविकल्पज्ञानेन वृत्ते = गृहीते, धातूनामनेकार्थत्वात् सति व्रीहिकरणकयागविशेषरूपस्यैकस्य विशेषान्तरस्यावगमे सति व्रीहिरूपद्रव्यालाभे यवादिकरणकयागरूपस्य विशेषान्तरस्योपादाने सत्येतत् प्रतिनिहितम् = प्रतिनिधीकृतं स्यात्। अनिष्टश्च क्रियायाः प्रतिनिधिरिति।

किञ्च, यदा पुत्रीयतीत्यत्र प्रक्रियान्तरम् = पुत्रमिच्छतीत्यर्थे क्यच्प्रत्ययः, पुत्रि + इयतीति पदच्छेदो वा एवं मुण्डयतीति पदं यदा प्रतिपाद्यमानोद्देश्यविभागम् = मुण्ड + यति सन्तीति रीत्या प्रतिपाद्यमान उद्देश्यभूतस्य मुण्डपदार्थस्य विभागो यत्र तत्तथाभूतम्, तदा पुत्रीयतीति क्यजन्तार्थस्य क्रियारूपस्य पुत्रि + इयति इति कल्प्यमानम्, पदार्थद्वयं प्रतिनिधिकृतं स्यात्। किञ्च, मुण्डयतिपदार्थस्य क्रियाविशेषरूपस्य मुण्ड + यति इति पदार्थद्वयं कल्प्यमानं प्रतिनिधीकृतं स्यात्। इदं च प्रतिनिधिकरणं बोधक्रियायां बोध्यम्। अनिष्टश्च क्रियायाः प्रतिनिधिरिति वाक्ये पदपदार्थविभागपक्ष एव न्याय्य इति।

अपरस्तु क्रियायाः क्रिया प्रतिनिधिर्भवतीति पक्षेऽपि वाक्ये पदपदार्थविभाग एव न्याय्य इत्यभिप्रेत्यास्याः कारिकाया अपरं भावमाह।

**नियममात्रं बाध्यत इत्येतस्मिन्नपि प्रतिनिधिदर्शने यस्तु जात्युद्देशे प्रतिनिधिं प्रत्यपरो दर्शनभेदः, तत्र वा[ऽ]विभागपक्षाभ्युपगमे क्रियैवाप्रतिनिधेया प्रतिनिधीयत इत्यनिष्टप्रसङ्गः ॥७१।**

अथ त्वया प्रतिनिधिर्नाश्रीयत इत्युच्यते, तन्न, मा भून्नित्यस्येत्यादिना तदाश्रयणस्य सप्रयोजनत्वादवश्याश्रयणीयः प्रतिनिधिरिति पदपदार्थानामभावे वाक्यस्याखण्डरूपस्याभ्युपगमे प्रतिनिध्यभाव इति चोद्यम् ॥ ७१ ।

**विज्ञातार्थं पदं यच्च तदर्थे प्रतिपादिते ।**
**पिकादि यदविज्ञातं तत्किमित्यनुयुज्यते ॥ ७२ ॥**

**इतश्च विभागदर्शनमेव युक्तम् । इह वनात् पिक आनीयतां व [वा]-राङ्गी जर्जरा वृषलाय दीयतामिति बहूनां पदानामर्थेष्वाहितप्रत्ययाः प्रतिपत्तारो यदेव**

पिकादिनियतपदप्रश्नो नोपपद्यत इत्यप्यभिधातुमाह—**विज्ञातार्थमिति ।**

वनात् पिक आनीयतामित्युक्ते वनादानीयतामिति पदद्वयं विज्ञातार्थम् । तदर्थे चावगते कः पिक इति कस्यचिन्नागरिकस्य प्रश्नो नोपपद्यते किल । वनादित्याद्यखण्डमेव निरस्तपदप्रविभागं वाक्यमनंशमेव वाचकं वैयाकरणस्य मतम् ।

---

तथा हि—क्रियायाः क्रिया निवर्तिका भवति, द्रव्यं द्रव्यस्य, न तु क्रियाया द्रव्यम्, द्रव्यस्य वा क्रियेति । तस्माद् व्रीह्यलाभे यवकरणकयागक्रियोपादाने व्रीहिकरणकयागक्रिया-परित्यागात् क्रियासु प्रतिनिधिर्भवति । यागक्रिया त्वर्थगृहीतेषु = यागक्रियासिद्धरूपप्रयोजन-बलाद् गृहीतेषु = उपात्तेषु यागाङ्गत्वयोग्यतया प्रापितेषु सर्वेषु व्रीहिनीवारयवादिषु साधनेष्वप्रतिषिद्धेषु व्रीहिश्रुत्या व्रीहिरूपविशिष्टद्रव्यविषयके नियमे कृते सति व्रीहिरूपस्य द्रव्यस्य कदाचिदभावे यागक्रियासमर्थं द्रव्यान्तरमपर्युदस्तं यवनीवारादिकं नियमात् पूर्वमेव यागक्रियायामङ्गीकृतमुपादत्ते । तत्र यजेतेति सामान्येन व्रीहिश्रुतिरूपं नियममात्रं बाध्यते, नियमस्य व्रीहिद्रव्यलाभे चरितार्थत्वात् । अनवकाशत्वं हि नियमस्य बलीयस्त्वबीजमित्येतस्मिन्नपि क्रियायाः प्रतिनिधिदर्शने यस्तु जात्युद्देशे प्रतिनिधिं प्रत्यपरो दर्शनभेदो वक्ष्यते, तत्रापि वा दर्शनेऽविभागपक्षाभ्युपगमे क्रियैवाप्रतिनिधेया प्रतिनिधीयत इत्यनिष्टप्रसङ्ग इति ॥ **७१** ।

वाक्यवाक्यार्थाखण्डत्ववादिनः 'वनात् पिक आनीयताम्, वाराङ्गी जर्जरा वृषलाय प्रदीयताम्' इति पिकादिरूपनियतपदप्रश्नो नोपपद्यते । को नाम पिकः, का नाम वाराङ्गीति दूषणमभिधातुमाह—विज्ञातार्थमिति ।

अयं पदसमन्वयः—यद् विज्ञातार्थं पदम्, वनादिति आनीयतामिति, तदर्थे प्रतिपादिते सति यदविज्ञातम् = अविज्ञातार्थक पिकादिपदम्, तत्, किमिति = किमर्थकमिति, अनुयुज्यते न = पृच्छ्यते न ।

**पिकाद्यविज्ञातार्थरूपं पदं तन्मात्रमेव जिज्ञासमाना विच्छेदेन पृच्छन्ति—कोऽयं पिको नाम, यो वनादानेयः ? का च व [वा] राङ्गी नाम, या वृषलाय दातव्येति । न च वृक्षवृषभकाण्डीरादिषु प्रसिद्धभेदेषु ऋक्षऋषभभाण्डीराद्यर्थे निर्ज्ञाते वर्ण-मात्रविषयो वकारार्थे ककारार्थे वा प्रश्नो दृश्यते । तस्मादविभागधर्मात् प्रच्युतेन विभागे वाक्यार्थेन व्यवस्थितेन भावितव्यम् ॥७२॥**

अतः किं पिकपदार्थः पृथगविज्ञातः कश्चिदस्ति । तदविज्ञातपिकपदार्था-नुयोगो नोपपद्येत । अस्ति च तदर्थे कस्यचित्संदेह इति पृथगेवार्थवन्ति पदानि विज्ञातानि वाक्यमित्येव वक्तुं युक्तमिति ॥७२॥

---

अयमर्थः—वनात् पिक आनीयतामित्युक्ते वनादानीयतामिति पदद्वयं विज्ञाता-र्थकम् । तदर्थे चावगते सति कः पिक इति कस्यचिन्नागरिकस्य प्रश्नो नोपपद्यते किल प्रकृतेऽखण्डत्ववादे । वनात् पिक आनीयतामित्यखण्डमेव निरस्तपदप्रविभागं वाक्य-मनंशमेव वाचकं वैयाकरणस्य मतम् । अतो न पिकपदार्थः पृथगविज्ञातः कश्चिदस्ति । ततश्च विज्ञातपिकपदार्थानुयोगः (अनुयोगः = प्रश्नः) नोपपद्येत । अस्ति च तदर्थे कस्यचित् संदेह इति पृथगेवार्थवन्ति पदानि विज्ञातार्थानि सन्ति तान्येव च वाक्यमित्येव वक्तुं युक्तमिति ।

अयं भावः—इतश्च वाक्ये पदपदार्थविभागदर्शनमेव युक्तम्, यतः 'इह वनात् पिक आनीयताम्, वाराङ्गी जर्जरा वृषलाय दीयताम्' । अत्र वराङ्गया रक्ता शाटी वाराङ्गी । वराङ्गी च हरिद्रा वरमङ्गमन्तरवयवो यस्याः सेति व्युत्पत्तेरिति शब्दकल्पद्रुमे । इत्यत्र बहूना पदानमर्थेषु विज्ञातेषु प्रतिपत्तारो यदेवाविज्ञातार्थकं पदं पिकादि तन्मात्रमेव जिज्ञासमानास्तत्पदं वाक्यात् पृथक्कृत्य पृच्छन्ति कोऽयं पिको नाम, यो वनादानेयः, का च वाराङ्गी नाम या वृषलाय दातव्येति । तस्मादखण्डत्वरूपादविभागधर्मात् प्रच्युतेन पदार्थ-विभागे व्यवस्थितेन पदार्थविभागवता वाक्यार्थेन भवितव्यमिति ।

न चैवंरीत्या तवापि पदस्याखण्डत्वमखण्डार्थत्वं च न स्यात्, यतो वृक्षशब्दाद् योऽर्थोऽवगम्यते स ऋक्षशब्दान्नावगम्यते; अतोऽवगम्यते वृक्षशब्दे वकारार्थः कश्चिदन्य इति । एवं वृषभ-ऋषभशब्दयोः, काण्डीराण्डीरशब्दयोश्चार्थभेदाद् वृषभकाण्डीरशब्द-घटकवकारककारयोरर्थभेदोऽवगम्यत इति वाच्यम् । यतो वृक्षवृषभकाण्डीरादिपदार्थेषु = अत्र काण्डीरोऽपामार्गः, कारवल्ली वा । अग्रे च आण्डीरो वीर्यवान् पुरुषः । अण्डे भवमाण्डं शुक्रं तदस्यास्तीति व्युत्पत्तेरिति शब्दकल्पद्रुमे । ऋक्ष-ऋषभाण्डीरादिपदार्थेभ्यः प्रसिद्धभेदेषु सत्स्वृक्षर्षभाण्डीराद्यर्थे च निर्ज्ञाते सति वकारककारादिवर्णमात्रविषयो वकारार्थे ककारार्थे वा प्रश्नः पिकादिपदार्थप्रश्नवन्न दृश्यते । अतो विज्ञायते न सन्ति वकारककारादीनां वृक्षादिपद-घटकानां पृथगर्था इति ॥७२॥

**सामर्थ्यप्रापितं यच्च व्यक्त्यर्थमनुषज्यते ।**
**श्रुतिरेवानुषङ्गे सा बाधिका लिङ्गवाक्ययोः ॥ ७३ ॥**
**अप्राप्तो यस्तु शुक्लादिः सन्निधानेन गम्यते ।**
**स यत्प्रापितो वाक्ये श्रुतिधर्मविलक्षणः ॥ ७४ ॥**

**इतश्चाविभागपक्षो न युक्तः, श्रुतिवाक्यसमवाये श्रुतित्वाविशेषेण पारदौर्बल्यासंभवात् । इह श्रुतिर्नामैकशब्दविषयैकपदनिबन्धनार्था । तत्र**

इदानीं श्रुतिवाक्ययोर्विरोधे श्रुतिरेव बलीयसीति न्यायो न स्यादिति प्रदर्शयितुमाह—सामर्थ्येति ।

---

अथेदानीं श्रुतिवाक्ययोर्विरोधे श्रुतिलिङ्गयोर्वा विरोधे श्रुतिरेव बलीयसीति न्यायो वाक्यवाक्यार्थाखण्डत्ववादिनो न स्यादिति दूषणं युग्मेन प्रदर्शयितुमाह—**सामर्थ्यप्रापितमिति**, **अप्राप्तो य** इति च ।

तत्राद्यपद्यस्यायं पदसमन्वयः—यच्च यत्तु अत्र तुशब्दार्थे 'च' शब्दः प्रयुक्तः । व्रीह्यादि सामर्थ्यप्रापितम् = अवहन्यताम्, पिष्यताम्, पच्यतामिति वाक्यान्तरघटकपदानां सामर्थ्येन यागाङ्गतया प्रापितम्, व्रीह्यादय एव ह्येतत्क्रियाकर्मत्वयोग्या इति भावः । एवं व्रीह्यादेरवघातादिक्रियाकर्मत्वयोग्यद्रव्यसामान्यरूपतया सामर्थ्यप्राप्तत्वेऽपि व्रीहिभिरिति पदं व्रीह्यादेर्व्यक्त्यर्थम्, विशेषरूपेण स्पष्टावबोधार्थम्, अनुषज्यते यजेतेति क्रियापदेन सम्बध्यते । सा एवं यजेतेति क्रियापदेन व्यक्त्यर्थमनुषज्यमाना, श्रुतिरेव व्रीह्यादिश्रुतिरेव, अनुषङ्गे सति = यजेतेति क्रियापदसम्बन्धे सति, लिङ्गवाक्ययोर्व्रीह्यादिप्रापकलिङ्गप्रापितस्य द्रव्यान्तरस्य, वाक्यान्तरप्रापितस्य च द्रव्यान्तररूपसाधनविशिष्टस्य क्रियान्तरस्य बाधिका, न तु लिङ्गवाक्ये श्रुतिबाधके श्रुतेरव्यवधानेन विनियोजकत्वादिति भावः । अत्र अनुसङ्ग इति सप्तम्यन्तपाठेऽप्यनुसङ्गेणेति पाठसमानार्थकत्वमेव, सत्सप्तम्या निमित्तरूपार्थस्य लाभादिति ।

अयमर्थः—इह श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यालक्षणाः प्रमाणपदार्थाः सन्दिग्धवाक्यार्थविचारे वाक्यविदां प्रसिद्धाः । तत्र स्वार्थबोधनेऽन्यानपेक्षः शब्दः श्रुतिः, शब्दसामर्थ्यं लिङ्गम्, पदसमभिव्याहारो वाक्यम्, उभयाकाङ्क्षा प्रकरणम्, स्थानं सन्निधिः, समाख्या यौगिकः शब्द इति । तथा च जैमिनीयं सूत्रम्—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (मी० ३।३।१४) इति । 'तेषां च परस्परविरोधे पूर्वः पूर्वो बलीयान्' इति व्यवस्थाप्यते । तत्र 'वायव्यं श्वेतं पशुमालभेत भूतिकामः' इत्यत्रालम्भनक्रियया यो द्रव्यस्य सम्बन्धः कर्मत्वलक्षणः क्रियाकारकभावः, स द्वितीयाश्रुत्या साक्षात् प्रतिपादितः । श्वेतगुणस्य तु द्रव्यसामानाधिकरण्येन प्रयोगादुक्तलक्षणकवाक्यरूपप्रमाणकृतो विशेषणविशेष्यभावरूपस्तादात्म्यसम्बन्धावच्छिन्नः सम्बन्धः आधाराधेयभाव-

सामर्थ्यप्रापितं यावदेकशब्दोपादानमर्थरूपं शब्दान्तरेण व्यक्त्यर्थमनूद्यमानमनुषज्यते, तदप्यनाधेयसम्बन्धत्वात् श्रुतिर्वाक्यमेव । तद्यथा पच्यतामवहन्यतां पिष्यतामित्येकत्र सम्बद्धानां चेष्टाविशेषाणां प्रक्रान्तत्वात् पाक्यपेष्यावघृते-[त्ये]षु शब्दरूपसामर्थ्यादङ्गीकृतेषु यद् व्रीह्यादिद्रव्यमात्रं व्रीहित्वादिप्रापणाय व्रीहित्वादिभिर्व्यक्तमात्मानं प्रदर्शयत् क्रियारूपादाक्षिप्तसम्बन्धं सम्बद्धमेव सन्निपतति, तद्व्स्तूपनिबन्धनाः सर्वे श्रुतिशब्दास्तद्वस्तूपनिबन्धनत्वेन प्रतिज्ञायन्ते, न त्वधिकार्थप्रापणेन । यथा वा 'दिवा सूर्य उदेति देवो वर्षति' इति व्यक्त्यर्थोऽनुषङ्गः साधनस्य साधनाश्रयस्य चेति । सर्वस्य चानुषङ्गमात्रे तथाभूता श्रुतिर्वाक्याख्यस्य श्रुत्यन्तरस्य बाधिका विज्ञायते ।

इह श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यालक्षणाः संदिग्धवाक्यार्थविचारे वाक्यविदां प्रसिद्धाः । तेषां च परस्परविरोधे पूर्वः पूर्वो बलीयानिति व्यवस्थाप्यते । तत्र श्वेतं छागमालभेतेत्यत्रालम्भनक्रियया यो द्रव्यस्य सम्बन्धः, स द्वितीयाश्रुत्या साक्षात् प्रतिपादितः । गुणस्य तु तत्सामानाधिकरण्याद्वाक्यीयः । निर्गुणस्य हि द्रव्यस्याभावाद् गुणस्य च निरधिकरणस्यासम्भवाद्वाक्यीय आश्रयाश्रयिणोः सम्बन्धः । तदुच्यते 'आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते' (वा० प० ३।७५) इति । यदा तु द्रव्यगुणयोर्द्वयोरप्यालम्भनक्रियया साक्षात् सम्बन्धः । यद्वक्ष्यति 'क्रियया योऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः' (वा० प० ३।१।७५) इति । ततश्च श्वेताभावेऽन्यगुणस्य छागस्यालम्भनमनुष्ठीयते । छागाभावे च श्वेतगुणयुक्तस्य मेषस्याप्यालम्भनमिति प्रतिनिधिसमाश्रयणेन न श्रुतिबाधः । वक्ष्यति च—

---

तथा हि—निर्गुणस्य द्रव्यस्याभावाद् गुणस्य च निरधिकरणस्यासम्भवाद् वाक्यीय आश्रयाश्रयिणोर्द्रव्यगुणयोः सम्बन्धः । तद्वक्ष्यतेऽत्रैव—'आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते' (वा० प० ३।१।७५। उत्तरार्धम्) इति ।

अस्यार्थः—आश्रयाश्रयिणोः = आश्रयस्य पशुरूपस्य द्रव्यस्य, आश्रयिणश्च श्वेतगुणस्य, नियमः = तादात्म्यसम्बन्धावच्छिन्नाधाराधेयभावरूपसम्बन्धस्य भाननियमस्तु श्वेतं पशुमिति पदद्वयसमभिव्याहाररूपाद् वाक्यादवतिष्ठते = व्यवस्थितो भवतीति । यदा तु द्वयोरपि द्रव्यगुणयोरालम्भनक्रियया साक्षात्सम्बन्धः, यद् वक्ष्यति—

"क्रियया योऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः" । इति

(वा० प० ३।१।७५ पूर्वार्धम) ।

अस्यार्थः—यस्तु तयोर्द्रव्यगुणयोरालम्भनक्रियया सह कर्मत्वलक्षणो युगपत् सम्बन्ध

यस्तु शब्दरूपसामर्थ्यात् सन्निहितोऽपि शब्दव्यापारेणाप्राप्तसन्निधानः शुक्लादिर्गुणः शुक्लादीनां शब्दानामुपादानमन्तरेण वस्तुतः सन्नपि शब्दार्थत्वेनाप्रतीतः शुक्लादिशब्दसन्निधानेन व्यापारवान् प्रतीयते। स यत्नप्रापितसम्बन्धः श्रुत्यर्थविलक्षणो वाक्यार्थ एव। तत्र पयसा भुक्ते देवदत्तः स्रुतेनेति

तत्र द्रव्यगुणाभावे प्रत्येकं स्याद्विकल्पनम्।
श्रुतिप्राप्तो हि सम्बन्धो बलवान् वाक्यलक्षणात्॥ इति॥
(वाक्य प० ३।१।७६)

यदि च वाक्यीयः सम्बन्धो बलवान् स्यात्तदाऽन्यतराभावे नालम्भनमनुष्ठीयेतेति। विध्यर्थः श्रुतिः। अतः श्रौतस्यैव सम्बन्धस्य वाक्याद् बलीयस्त्वादन्यतराभावेऽपि श्रुतिप्रापितमालम्भनमनुष्ठितमिति न कश्चिच्छ्रुतिबाधः। तदेतत्प्रतिपादयितुमुक्तम्—सामर्थ्यप्रापितमित्यादि। निर्गुणस्य द्रव्यस्याभावाच्छ्वेत-

---

सम्भवात् श्वेतच्छागालाभेऽन्यगुणस्य छागस्यालम्भनमनुष्ठीयते, छागालाभे च श्वेतगुणयुक्तस्य मेषस्याप्यालम्भनमिति प्रतिनिधिसमाश्रयणेन नैकया श्रुत्याऽपरस्या बाधः, किन्तु श्रुतिद्वये विकल्प एव। वक्ष्यति च—

तत्र द्रव्यगुणाभावे प्रत्येकं स्याद् विकल्पनम्।
श्रुतिप्राप्तो हि सम्बन्धो बलवान् वाक्यलक्षणात्॥ इति।

अस्यार्थः—तत्र श्वेतं पशुमालभेतेत्यत्र द्रव्यगुणयोर्युगपत् साक्षात्क्रियासम्बन्धे द्वितीयाश्रुतिप्रापिते सति प्रत्येकं द्रव्यगुणाभावे, द्रव्यस्य गुणस्य वैकैकस्याभावे, प्रागुक्तरीत्या विकल्पनं स्यात्, श्रुतिद्वयस्यापि प्रामाण्येन तयोः परस्परं बाधस्यायुक्तत्वादिति। वाक्यप्राप्तस्त्वत्र द्रव्यगुणयोः परस्परं सम्बन्धस्तु यद्यस्यसम्बन्धावच्छिन्नाधाराऽऽधेयभावलक्षणः श्रुतिप्रापितेन क्रियाकारकभावलक्षणेन सम्बन्धेन बाध्यते। हि = यतः, श्रुतिप्राप्तः सम्बन्ध उक्तलक्षणः वाक्यलक्षणाद् वाक्यप्रमाणज्ञाप्यात् सम्बन्धादुक्तलक्षणाद् बलवानिति। यदि च वाक्यीयः सम्बन्धो बलवान् स्यात्तदान्यतराभावे नालम्भनमनुष्ठीयेतेति। श्रौतसम्बन्धस्य बलीयस्त्वे तु विकल्पः।

तथा हि—यतो विध्यर्था श्रुतिः, अतः श्रौतस्यैव सम्बन्धस्य वाक्याद् बलीयस्त्वादन्यतराभावे श्रुतिप्रापितमालम्भनमनुष्ठितमिति न कश्चिच्छ्रुतिबाधः।

तदेतत्प्रतिपादयितुमुक्तम्—सामर्थ्यप्रापितमित्यादि।

निर्गुणस्य द्रव्यस्याभावाच्छ्वेतगुणयुक्तस्यालम्भनम् आलभेतेति क्रियाश्रुतिसामर्थ्यप्रापितं श्रौतमेव। व्यक्त्यर्थम् = स्फुटीकरणाय, यच्छ्वेतादि आलभेतेति क्रिययाऽनुषज्यते =

**वाक्यप्रापितस्य प्रयोगविषयस्य स्रवणस्यासम्भवे स्रुतिप्रापितमुपसेचनं निवर्तते । स्रवणानुग्रहाय वोपसेचनत्वेन यदपि प्रसिद्धं लोके तेन स्रुतेन स्रवणस्यानुग्रहः**

**गुणयुक्तस्यालम्भनं क्रियासामर्थ्यप्रापितं श्रौतमेव । व्यक्तार्थं स्फुटीकरणाय श्वेतमाल·**

सम्बध्यते । ततः किमित्याह—श्रुतिरित्यादि । ततश्च साक्षाद् द्रव्यगुणयोरालम्भनश्रुतावनुषङ्गोऽभिसम्बन्धः श्रुतिरेव, अत सैवात्र आलम्भनक्रियासामर्थ्यप्राप्तस्य श्वेतं पशुमिति पदद्वयसमभिव्याहाररूपवाक्यप्राप्तस्य च द्रव्यगुणयोः सम्बन्धस्य बाधिकेति न लिङ्गतो वाक्याद्वा द्रव्यगुणयोः परस्परं सम्बन्धः, किन्तु श्रौत–आलम्भनक्रियया सहैव द्रव्यगुणयोरुभयोरपि सम्बन्ध इति प्रागुक्तरीत्याऽत्र विकल्प एवेति ।

श्रौतवाक्यीययोः सम्बन्धयोर्भेदमुपदर्शयितुमाह—अप्राप्त इति ।

अस्य पद्यस्य पदसमन्वयस्त्वेवम्—यस्तु व्रीहित्वादिसमानाधिकरणः शुक्लादिर्गुणो व्रीह्यादिश्रुत्याऽप्राप्तः, श्रुतिप्रापितेषु व्रीह्यादिद्रव्येषु सन्निधानेन सन्निहितत्वेन हेतुना गम्यते=ज्ञायते, स=शुक्लादिः, वाक्ये=व्रीहिभिर्यजेतेति पदद्वयसमभिव्याहाररूपे वाक्ये निमित्तभूते सति, यत्नप्रापितः=निर्गुणस्य द्रव्यस्य यागोपकारकत्वानुपपत्तिरूपार्थापत्त्यात्मकप्रमाणरूपप्रयत्नप्रापितः, निर्गुणस्य द्रव्यस्याभावाद् द्रव्यदेवतोभयात्मकयागक्रियावाचकयजेतेतिपदरूपश्रुतिसामर्थ्यात्मकलिङ्गरूपप्रयत्नप्रापितो वा श्रुतिधर्मविलक्षणः, व्रीह्यादिश्रुतेर्वाच्यतया धर्मो यो व्रीह्यादिस्तद्विलक्षणः श्रुतिसामर्थ्यागोचर इति विधिवाक्यार्थानन्वयीति भावः ।

अस्यार्थः—व्रीहिभिर्यजेतेत्यत्र द्रव्यस्यैव साक्षात् क्रियया सम्बन्धः, शुक्लादिगुणस्य तु व्रीह्यादिद्रव्ये सन्निधानादुक्तरीत्या वाक्यीयो यत्नप्रतिपाद्यो द्रव्यकारकः क्रियासम्बन्धः, स वाक्य उक्तरीत्या यत्नादवगतः श्रुतिधर्मविलक्षणः साक्षात्क्रियासम्बन्धविलक्षण इति स्पष्टमिति ?

अत्र पद्यद्वयस्याप्ययं भावः—इतोऽपि वाक्याखण्डत्वपक्षो न युक्तः । श्रुतिवाक्यसमवाय उभयोरपि श्रुतित्वाविशेषेण पारदौर्बल्यस्य जैमिनीसूत्रोक्तस्यासम्भवात् । तथा हि—श्रुतिर्नाम एकशब्दविषया एकपदनिबन्धनार्था एकपदवाच्यार्था । तत्रैवं सति वाक्यार्थोऽप्येकपदवाच्य एव पदान्तरं त्वेकपदवाचस्यैव वाक्यार्थस्य व्यक्तयेऽनुषज्यत इति वाक्यमपि श्रुतिरेव ।

तथा हि—अवहन्यताम्, पिष्यताम्, पच्यतामिति वाक्यान्तरघटकशब्दसामर्थ्यप्रापितं द्रव्यदेवतोभयात्मकयागरूपार्थवाचक-स्ववाक्यघटक-यजेतेतिपद-सामर्थ्यप्रापितं च व्रीहिशब्दवाच्यम् यावदर्थरूपं व्रीहिशब्देनानूद्यमानं सद् व्यक्तयर्थमेव यवादिद्रव्यव्यावृत्तिपुरस्सरं स्वस्य स्पष्टतया बोधार्थमेव यजेतेति पदेनानुषज्यते, तदपि यागाङ्गतया व्रीहिपदार्थाभिधानरूपं वाक्यं श्रुतिरेव । व्रीह्यादेर्यागसम्बन्धस्य यजेतेतिपदानुषङ्गात् प्रागप्युक्तरीत्या सामर्थ्यप्रापितत्वेनाऽनाधेयत्वात् ।

**कथं स्यादिति न भुज्यते । श्रुतिवाक्यसविकल्पसम्भवेन [वाक्ययोर्विकल्पासम्भवेन] श्रुत्यर्थ एव क्रियते न वाक्यार्थः ।।७३–७४।**

**भेतेति श्वेतादि तत् [ यत् ] संबध्यते, ततः किमित्याह—श्रुतिरित्यादि । ततश्च साक्षात् द्रव्यगुणयोः श्रुतावनुषङ्गोऽभिसम्बन्धः श्रुतिरेव तत्र लिङ्गवाक्ययोर्बाधिकेति न वाक्यीयसम्बन्धस्तत्र भवति ।। ७३ ।**

---

तद्यथा—अवहन्यताम्, पिष्यताम्, पच्यतामित्येकस्मिन् व्रीहिरूपे द्रव्ये सम्बद्धानामवघातादिरूपाणां क्रियाविशेषाणां प्रक्रान्तत्वात् पाक्यपेष्यावघात्येषु व्रीहि-यव-नीवारादिषु क्रियाया द्रव्याविनाभावनियमादवहन्यतामित्यादिशब्दसामर्थ्याद् व्रीहियवादिगतावघातादिक्रियाकर्मत्वयोग्यतात्मकरूपसामर्थ्याच्च यागाङ्गतयाऽङ्गीकृतेषु व्रीहि-यव-नीवारादिषु सत्सु यजेतेति पदप्रतिपाद्यद्रव्यात्मकयागक्रियारूपादाक्षिप्तसम्बन्धं यद् व्रीह्यादिद्रव्यसामान्यं तत् स्वस्मिन् व्रीहित्वादिप्रापणाय व्रीहिशब्देनाभिधीयमानं व्रीहित्वादिभिर्व्यक्तमात्मानं प्रदर्शयद् यागक्रियया सम्बद्धमेव शाब्दबुद्धौ सन्निपतति गोचरीभवति ।

एवञ्च यागान्वितव्रीह्यादिपदार्थोपनिबन्धनाः सर्वे शब्दा व्रीह्यादिसाधनशब्दा यजेतेत्यादयः क्रियाशब्दाश्चेति सर्वेऽपि ते यागान्वितव्रीह्यादिद्रव्योपनिबन्धनत्वेन श्रुतिशब्दा एव प्रतिज्ञायन्ते, न तु व्रीह्यादिरूपाधिकार्थप्रापणेन वाक्यशब्दा इति ।

यथा वा दिवा सूर्य उदेति देवो वर्षतीत्यत्रैकपदस्यापरपदानुषङ्गो व्यक्त्यर्थ एव, साधनस्य साधनाश्रयीभूतक्रियायाश्चापि परस्परमनुषङ्गो व्यक्त्यर्थ एव । दिवा उदेति' इत्यनेनापि सूर्यरूपार्थावगमाद् 'दिवा उदेति' इति पदद्वयसम्बन्धमन्तरेण सूर्यपदेनापि दिवा उदयनक्रियाया लाभात् । एवं 'देवो वर्षति' इत्यत्रापि वर्षतिपदमन्तरेणापि 'अद्य कृषकाणां देवः प्रसन्नः' इत्यत्र देवकर्तृका वर्षणक्रिया प्रतीयते ।

एवं देवपदमन्तरेणापि 'अद्य वर्षति' इत्यादौ देवकर्तृकैव वर्षणक्रिया प्रतीयते । एवं सर्वेषां पदानां परस्परं व्यक्त्यर्थमेवानुषङ्गमात्रे स्थिते तथाभूता श्रुतिः = अभिव्यक्त्यर्थमनुष्यज्यमाना व्रीह्यादिश्रुतिः अनुषङ्गाधिकरणस्य वाक्याख्यस्य द्रव्यसामान्यप्रापकस्य यजेतेति श्रुत्यन्तरस्य बाधिका विज्ञायत इति ।

यद्वा—अवहन्यताम्, पिष्यताम्, पच्यतामित्यादिवाक्यान्तरप्राप्तस्य यवादिद्रव्यस्य व्रीहिलाभे बाधिका विज्ञायत इति ।

यस्तु व्रीहिशब्दसामर्थ्याद् व्रीहावभिधीयमाने सन्निहितो व्रीहिस्वरूपसामर्थ्याच्च सन्निहितोऽपि शब्दशक्त्याऽप्राप्तसन्निधानः शुक्लादिर्गुणो व्रीहौ वस्तुतः सन्नपि शुक्लादिशब्दानामुपादानमन्तरेण शब्दार्थत्वेनाप्रतीतः शुक्लादिशब्दसन्निधानेन व्यापारवान् प्रकृत्यादित्वादभेदे तृतीया । व्यापारवत्ता च बोध्यतासम्बन्धेन, शुक्लादिशब्दसन्निधानरूपव्यापारबोध्य इत्यर्थः । प्रतीयते स व्रीहिशब्दस्य शुक्लादिशब्दानुषङ्गरूपवाक्यात्मक-

श्रौतवाक्यीययोर्भेदमुपदर्शयितुमाह—अप्राप्त इति। छागमालभेतेत्यत्र द्रव्यस्यैव साक्षात् सम्बन्धः, शुक्लादिगुणस्य तु सन्निधानवशाद्वाक्यीयो यत्नप्रतिपाद्यः। स वाक्ये यत्नादवगतः श्रुतिधर्मविलक्षणः साक्षात् सम्बन्धविलक्षण इति व्यक्तम्॥ ७४॥

**अभिन्नमेव वाक्यं तु यद्यभिन्नार्थमिष्यते।**
**तत्सर्वं श्रुतिभूतत्वान्न श्रुत्यैव विरोत्स्यते॥ ७५॥**

**यस्याभिन्नमविभक्तोद्देशमेकार्थमेकं वाक्यं मुण्डिकुट्टिसूत्रिवदविकलं श्रुतिभूतं तस्य कथं श्रुत्यर्थव्यतिरेकेणात्मभूतैर्यत्नप्रापितसन्निधानाभिमतैरसति**

---

तत्र लौकिकं श्रुतिबाध्यस्य वाक्यस्योदाहरणं यथा—पयसा भुङ्क्ते देवदत्तः स्रुतेन ओदनोपरि प्रक्षरितेन इति वाक्यप्रापितस्य प्रयोगविषयस्य प्रयुज्यमानपदबोध्यस्य पयसः स्रवणस्याभावे स्रुतेनेति श्रुतिप्रापितमुपसेचनं निवर्तते। न तु पयसः स्रवणाभावे लोके ओदनोपसेचनत्वेन यदपि दधिमध्वादिप्रसिद्धं तेन श्रुतेन स्रवणस्यानुग्रहः कथं स्यादित्यपेक्ष्य स्रवणानुग्रहाय पयोऽतिरिक्तेन स्रुतेन दधिमध्वादिना भुज्यते। श्रुतिवाक्ययोरसमानबलयोर्विकल्पासम्भवेन श्रुत्यर्थः स्रुतपयःकरणकं भोजनमेव क्रियते, न तु वाक्यार्थः स्रुतदध्यादिकरणकं भोजनं पयसः स्रवणाभावे क्रियते।

अयं भावः—पयसा भुङ्क्त इति पयसः साक्षाद् भुजिक्रियासम्बन्धेन पयःकरणकं भोजनं श्रुत्यर्थः। स्रुतस्य तु भुजिक्रियासम्बन्धः पयोद्वारक इति वाक्यीय इति स्रुतद्रव्यकरणकं भोजनं वाक्यार्थ इति श्रुत्यर्थेन पयःकरणकभोजनेन बाध्यत इति पयसोऽभावेन दधिमध्वादिकरणकं भोजनं प्रसज्यत इति ॥७३-७४॥

इदानीं प्रकरणप्रसाधितमर्थं प्रकृते योजयितुमाह—**अभिन्नमेवेति।**

अत्रायं पदसमन्वयः— यदि तु वाक्यमभिन्नं पदप्रविभागशून्यम्, अभिन्नार्थम् अखण्डवाक्यार्थावबोधकम् एव चेष्यते तर्हि तत्सर्वम् अखण्डं वाक्यम्, वाक्येऽपोद्धारकल्पनया कल्पितं पदञ्च श्रुतिभूतत्वात्। तत्र पदस्य श्रुतिभूतत्वं प्रसिद्धमेव। अखण्डत्वपक्षे वाक्यस्यापि श्रुतिभूतत्वमस्त्येव, स्वार्थबोधने पदानपेक्षत्वात्। स्वेतरया श्रुत्यैव न विरोत्स्यते पदस्याभावात्, कल्पितपदसत्त्वेऽपि पदश्रुतेः कल्पितत्वेनैव दुर्बलत्वात्, श्रुतित्वेन सजातीययोर्विनिगमनाविरहेण बाध्यबाधकभावासम्भवाच्चेति।

अयं भावः—यस्य वादिनो मतेऽभिन्नमविभक्तोद्देशम् अत्रोद्देशः प्रदेशः, पदरूपावयवशून्यम् एकार्थकमेकञ्च वाक्यम्, मुण्डिकुट्टिसूत्रिवद्विकलं = संपूर्णम् श्रुतिभूतम्।

तद्यथा केचिदाहुः - मुण्डिः स्वतन्त्र एव धातुः, न तु मुण्डशब्दाद् द्वितीयान्ताद् णिजिति। एवं कुट्टिसूत्री अप्यखण्डौ द्रष्टव्यौ। तस्य वादिनो मते कथं वाक्यार्थरूपश्रुत्यर्थव्यतिरेकेण वाक्यार्थस्यात्मभूतैर्व्रीह्यादिश्रुतिसामर्थ्यरूपयत्नप्रापितसन्निधानाभिमतैर्व्रीह्यादिपदार्थैः प्रागुक्तरीत्या 'अवहन्यताम्' इत्यादिशब्दसामर्थ्यप्रापितस्य रूपसामर्थ्यप्रापितस्य च

**विरोधे बाधव्यवस्था प्रकल्पते। तत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादित्येतदसमर्थितं स्यात्। वाक्यनिबन्धने चैकस्मिन्नर्थे परतन्त्राणां शब्दानामभावमानर्थक्यं चाभ्युपगच्छतो वाक्यस्याप्यानर्थक्यं प्राप्नोति। तत्र—"एकस्यैवार्थता [स्यैकार्थता] माहुर्वाक्यस्याव्यभिचारिणीम्" इत्येतत् प्रतिज्ञातं हीयेत ॥७५॥**

इदानीं प्रकृते योजयितुमाह—**अभिन्नमेवेति**।

यदि पुनरभिन्नखण्डमेव निरस्तपदविभागं वाक्यमभिन्नार्थं श्वेतगुणविशिष्टच्छागालम्भनरूप एव नाना अर्थो यस्य तत्तथाभूतमभ्युपगम्यते, तदा कुत्रायं प्रविभागोऽयं श्रौतोऽयं वाक्यीय इति। ततश्च सर्वस्य श्रौतत्वात् केन कस्य बाध इति न श्वेतगुणाभावे छागालम्भन[नं] छागाभावे च श्वेतगुणयुक्तस्यान्यस्य स्यादिति श्वेतं छागमालभेतेत्यत्रान्यतराभावे आलम्भनानुपपत्तेर्विध्यर्थस्य संकोच इति ॥७५॥

**वाक्यानां समुदायश्च य एकार्थप्रसिद्धये।**
**साकाङ्क्षावयवस्तत्र वाक्यार्थोऽपि न विद्यते ॥ ७६ ॥**

---

यवादेस्तत्करणकयागस्य च 'अवहन्यताम्' इति, यजेतेतिपदद्वयसमभिव्याहाररूपवाक्यप्रापितस्यासति विरोधे बाधव्यवस्था प्रकल्पते।

तत्र 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रं श्रुतिवाक्ययोर्बलाबलप्रतिपादकमसमर्थितं स्यात्। वाक्यनिबन्धने चैकस्मिन्नर्थे स्वीकृते वाक्यार्थोपकारकत्वेन परतन्त्राणां पदानामभावमानर्थक्यं चाभ्युपगच्छतां वाक्यस्याप्यानर्थक्यं प्रसज्येत, वाक्यार्थप्रतिपत्तेः पदार्थप्रतिपत्तिपूर्वकत्वस्य लोके दृष्टत्वादिति। वाक्यानर्थक्ये च सत्येकस्यैकार्थतामाहुर्वाक्यस्याव्यभिचारिणीमित्येतत्प्रतिज्ञातं वाक्यस्यैकार्थ्यं हीयेतेति।

अस्यार्थः—यदि पुनरभिन्नमखण्डमेव निरस्तपदविभागं वाक्यमभिन्नार्थं श्वेतगुणविशिष्टच्छागालम्भनरूपैकार्थकमभ्युपगम्यते, तदा कुत्रायं प्रविभागः स्यात्—अयं श्रौतः सम्बन्धः, अयं वाक्यीय इति। ततश्च सर्वस्य श्रौतत्वात् केन कस्य बाध इति न श्वेतगुणाभावे छागालम्भनं, न छागाभावे च श्वेतगुणस्यान्यस्य मेषस्याऽऽलम्भनं स्यादिति श्वेतं पशुमालभेतेत्यत्रान्यतराभाव आलम्भनानुपपत्तेर्विध्यर्थस्याननुष्ठानरूपः संकोचः प्रसज्येतेति ॥७५॥

वाक्यवाक्यार्थयोरखण्डत्वपक्षेऽवान्तरवाक्यार्थानुपपत्तिरूपमपि दूषणमुपदर्शयितुमाह—**वाक्यानामिति**।

अत्रायं पदसमन्वयः—यश्च = यस्तु, एकार्थप्रसिद्धये = एकस्य मुख्यस्यार्थस्य प्रसिद्धये, वाक्यानामवान्तरवाक्यानां समुदायः प्रयुज्यते, तत्र वाक्यार्थोऽपि मुख्यवाक्यार्थोऽपि

इह गौर्दुह्यताम्, उपाध्यायः पयसा भुक्त्वा मामध्यापयिष्यतीति साधन-द्रव्यक्रियान्तरावधिविशिष्टायां क्रियायां यदेकं वाक्यान्तरावयवं वाक्यं वर्तते तदवयवानां साकाङ्क्षाणां पदवदेकार्थेनासम्बन्धे सति वाक्यान्यप्यनर्थकानि संपद्यन्ते। न च वाक्यरूपावधिपरिग्रहे नियमोऽस्ति। कदाचिद् गामभ्याजेति वाक्यं भवति, कदाचिद्देवदत्त गामभ्याजेति। कदाचिद्देवदत्त गामभ्याज शुक्लामिति। तत्र तदेवार्थवत्तदेवानर्थकमिति विरुद्धोऽभ्युपगमः सम्पद्यते। सर्व-

अवान्तरवाक्यार्थानुपपत्तिमप्यत्रोपदर्शयितुमाह—वाक्यानामिति। एकस्य मुख्यार्थस्य प्रसिद्धये प्रतीतये योऽयमवान्तरवाक्यानां समुदायः साकाङ्क्षावयवः, साकाङ्क्षा अवयवा यस्मिन् समुदाये स तथाभूतोऽभिजानासि देवदत्त कश्मीरेषु वत्स्याम इत्याद्यात्मकोऽत्रावयवार्थोऽवान्तरवाक्यार्थात्मको न विद्यते कश्चित्।

---

वाक्यवाक्यार्थाखण्डत्वपक्षे साकाङ्क्षावयवो न विद्यते, अवयवस्याभावादिति साकाङ्क्षावयवत्वप्रयुक्तं 'विभाषा साकाङ्क्षे' (३।२।११४) इति शास्त्रेण लकारविधानं नोपपद्येतेति।

अस्यार्थः—एकः मुख्यस्यार्थस्य प्रसिद्धये प्रतीतये योऽयमवान्तरवाक्यानां समुदायः साकाङ्क्षावयवः, साकाङ्क्षा अवयवा यस्मिन् समुदाये स तथाभूतोऽभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामस्तत्राध्येष्यामह इत्याद्यात्मकोऽत्रावयवार्थोऽवान्तरवाक्यार्थात्मको न विद्यते कश्चित्। किञ्चावान्तरवाक्यार्थाभावे युगपत्सकलशास्त्रस्य ग्रहणं प्रतिपादनं=प्रवचनं वाऽसम्भवीति सकलव्यवहारोच्छेदः। शास्त्रं हि प्रकरणात्मकम्, अनेकाङ्गोपाङ्गयुक्ताङ्गिप्रतिपादनपरमनेकावान्तरवाक्ययुक्तमिति तस्यावान्तरवाक्यार्थग्रहणमन्तरेण युगपद् ग्रहणं प्रतिपादनं वा न स्यादिति।

अयं भावः—छात्रेण केनचिदुक्तं गोपं प्रति छात्रान्तरं प्रति वा दोग्धारम्—गौर्दुह्यताम्, उपाध्यायः पयसा भुक्त्वा मामध्यापयिष्यतीति। न चेह न भुक्त्वा न नक्तं प्रब्रूयादिति निषेधविरोधः, अङ्गानामध्यापयितुरेवोपाध्यायत्वात्। आचार्यस्यैव च वेदाध्यापकत्वात्। 'उपनीय ददद् वेदमाचार्यः स उदाहृतः' इति तल्लक्षणात्।

तथा चात्र प्रकृते महाकाव्ये—गौर्दुह्यतामित्यवान्तरवाक्यम्। अत्र पयोरूपसाधनद्रव्यविशिष्टा दोहनक्रियाऽवान्तरवाक्यार्थः। स चावधिभूत उपाध्यायकर्तृकपयःकरणकभोजनोत्तरकालिकमत्कर्मकाध्यापनक्रियायाः, तादृशाध्यापनक्रियाया दोहनोत्तरकालिकत्वात्। तथा चात्र साधनद्रव्यविशिष्टदोहनक्रियारूपावधिविशिष्टायां तादृश्यामध्यापनक्रियायां तादृशावान्तरवाक्ययुक्तं तादृशं महावाक्यं यद् वर्तते, तस्य योऽवयवो गौर्दुह्यतामिति, स च किमर्थं गोदोहनत्वरा क्रियत इत्येवं साकाङ्क्षो वाक्यार्थान्तर इति पदस्य पदान्तरेणेव वाक्यस्य वाक्यान्तरेणान्वितार्थेनाकाङ्क्षितार्थेन च साकमसम्बन्धे सति तद्वाक्यद्वयमप्यनर्थकं संपद्यते। एवं बह्ववान्तरवाक्यमप्येकं महावाक्यमुदाहार्यम्। तद्यथा—गौर्दुह्यताम्, अध्यग्नि पयोऽधि-

न्यायलक्षणव्यवस्थाविरुद्धश्चायमविभागपक्षः। तत्र द्वादश षट् चतुर्विंशतिर्वा लक्षणानीति लक्षणसमुद्देशे सापदेशं सविरोधं विस्तरेण व्याख्यास्यते ॥७६॥

युगपत्सकलशास्त्रस्य ग्रहणं प्रतिपादनं वा न संभवतीति सकलव्यवहारोच्छेदः ॥७६।

इह तु प्रदर्शनार्थमुदाहरणमात्रं प्रसक्तानुप्रसक्तं च किञ्चिदुच्यते—

**प्रासङ्गिकमिदं कार्यमिदं तन्त्रेण लभ्यते।**
**इदमावृत्तिभेदाभ्यामत्र बाधसमुच्चयौ ॥७७॥**

किंचामी पदार्थोपनिबन्धना वाक्येषु न्यायाः सकलशास्त्रीयलौकिकव्यवहारनिबन्धनभूताः पदपदार्थानङ्गीकरणे न प्रकल्पन्त इत्याह—प्रासङ्गिकमिति।

एतैश्च निर्ज्ञातैर्वाक्यगोचरोऽर्थात्मा यथावल्लक्ष्यते निश्चीयत इत्येतानि मीमांसकैर्लक्षणानीत्युच्यन्ते। तत्र षड् द्वादश चतुर्विंशतिर्वैतानि लक्षणानि तावदिह प्रदर्श्यन्ते। एतेषां च वितत्य सोपपत्तिकं सनिदर्शनं स्वरूपं पदकाण्डे लक्षणसमुद्देशे

---

किञ्च, पदानां वाक्ये संयोजयितव्यानामिदमेव वाक्यमवधिर्नातः परं वाक्यमस्ति यत्र संयोजयितव्यानि पदानीति नियमो नास्ति।

तथा हि—कदाचिद् देवदत्त गामभ्याजेति, कदाचिद् देवदत्त गामभ्याज शुक्लामिति, कदाचिद् देवदत्त गामभ्याज शुक्लां दण्डेनेति। तत्र कदाचिद् देवदत्त गामभ्याजेत्यपेक्ष्य 'गामभ्याज' इत्यनर्थकम्, कदाचिच्च देवदत्त गामभ्याज' इत्यपि 'देवदत्त गामभ्याज शुक्लाम्' इत्यपेक्ष्यानर्थकमित्यादिरीत्या तदेवार्थवत्तदेवानर्थकमिति विरुद्धोऽभ्युपगमः सम्पद्यत इति ॥ ७६ ॥

किञ्च, सर्वाणि यानि न्यायलक्षणानि तेषां व्यवस्थाया विरुद्धोऽप्ययं वाक्यवाक्यार्थयोरविभागपक्षः। तत्र द्वादश षट् चतुर्विंशतिर्वा न्यायलक्षणानि पूर्वमीमांसायां द्वादशभिरध्यायैः षड्भिर्वा प्रतिपादितानीति तत्तत्संख्यामितानि चतुर्विंशतिसंख्याऽपि द्वादशाध्यायीप्रतिपाद्यं यद्विध्यादिषट्कमतिदेशषट्कं च तत्प्रतिपक्षभूतान्यद्वादशपदार्थीप्रतिपादनेन द्वादशाध्यायाना संपत्स्यत इत्यनुपदमेव प्रदर्शयिष्यते। ते चामी वाक्यगता न्यायाः पदार्थोपनिबन्धनाः सकलशास्त्रीयलौकिकव्यवहारनिबन्धनभूताः पदपदार्थानङ्गीकारे न प्रकल्पन्त इति तेषां न्यायानां प्रदर्शनार्थमुदाहरणमात्रं प्रसक्तानुप्रसक्तमपि किञ्चिदुच्यते कुलकेन सप्तभिः पद्यैः—प्रासङ्गिकमित्यादिभिरिति।

अत्रेदमर्थजातम्—एतैर्ह्युक्तसंख्याकैर्न्यायैर्विज्ञातैर्वाक्यार्थो यथावल्लक्ष्यते निश्चीयत इत्येतानि लक्षणानीत्युच्यन्ते मीमांसकैः। तत्र षड् द्वादश चतुर्विंशतिर्वा लक्षणानि भवन्तु

विनिर्दिष्टमिति ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम् । आगमभ्रंशाल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च पदकाण्डमध्ये न प्रसिद्धः। तत्र तावद् द्वादशलक्षणानि द्वादशस्वध्यायेषु सप्रपञ्चं प्रासङ्गिकविचारसहितानि निर्णीतानि ।

तथा च तत्र 'अथातो धर्मजिज्ञासा (पू० मी० १।१।१) इत्युपक्रम्य को धर्मः किं लक्षणश्चेत्याद्याशङ्कानिरासार्थं चोदनालक्षण इत्युक्त्वा प्रथमेनाध्यायेन ) चोदनालक्षणे निर्णीते चोदनैव प्रमाणमित्युक्तम् । मतभेदेनापि विधिनियोगेत्यादिका अप्यत्रास्याः संज्ञा उपवर्णिताः । तत्रैव च स्वतः प्रामाण्यं व्यवस्थापितम् । तदनुरोधेन च प्रत्याक्षादीनामपि स्वत एव प्रामाण्यमुपपादितम् । चोदना च शब्दादिवैचित्र्याद् भिन्नरूपेति भेदप्रतिपादनायास्या एव द्वितीयोऽध्यायः । भिन्नस्य च शेषशेषिभावेन विनियोगप्रतिपादनाय तृतीयोऽध्यायः । विनियुक्तस्य प्रयोजकाप्रयोजकभावप्रतिपादनाय चतुर्थः । श्रुत्युच्चारणादिभिः क्रमेण विनियोग

---

पदकाण्डे लक्षणसमुद्देशो विनिर्दिष्टमिति ग्रन्थकृतैव प्रतिपादितं समनन्तरपूर्वकारिकायां षट्सप्ततिसंख्याकायाम् । संप्रदायभ्रंशल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च भ्रष्ट इति साम्प्रतमपि पदकाण्डमध्ये मृग्यमाणोऽपि नोपलभ्यते । तत्र तावद् द्वादशलक्षणानि पूर्वमीमांसाशास्त्रस्य द्वादशस्वध्यायेषु सप्रपञ्चं प्रासङ्गिकविचारसहितानि निर्णीतानि । अत एव च पूर्वमीमांसा द्वादशलक्षणीति व्यवह्रियते शिष्टैः।

तथा च तत्र—'अथातो धर्मजिज्ञासा' ( १।१।१ ) इत्युपक्रम्य को धर्मः, किं लक्षणकश्च इत्याद्याशङ्कानिराशार्थं 'चोदनालक्षणोऽर्थो धर्मः' ( १।१।२ ) इति द्वितीयेन सूत्रेण प्रवृत्तेन चोदनालक्षणे धर्मे निर्णीते धर्मे चोदनैव प्रमाणमित्युक्तम्, चोदनैव लक्षणं यत्रेति व्युत्पत्तेः । अत्र लक्षणपदेन करणव्युत्पत्त्या प्रमाणमुच्यते । तत्र मतभेदेन चोदनाया विधिनियोगेत्यादिका विविधाः संज्ञाः प्रदर्शिताः । तद्यथा भट्टमते विधिरिति, प्रभाकरमते नियोग इति कार्यमित्यपूर्वमिति ।

अयञ्च सञ्ज्ञभेदो लिङाद्यर्थभेदादिति । चोदनायामेव च स्वतःप्रामाण्यं व्यवस्थापितम् । तदनुरोधेन चेतरेषामपि प्रमाणानां प्रत्यक्षादीनां स्वतः प्रामाण्यमुपपादितं प्रथमेऽध्याये प्रमाणसंज्ञके, अविशिष्टे प्रामाण्येऽर्धजरतीयस्यानौचित्यादिति । चोदना च शब्दप्रवृत्तिसंख्यादिभेदाद् भिन्नरूपेति, अस्या भेदप्रतिपादनाय द्वितीयोऽध्यायः । तत्र शब्दभेदेन चोदनाभेदः । यथा—यजति, ददाति, जुहोतीति ।

प्रवृत्तिभेदो यथा—सामिदादिषु पञ्चसु पञ्च यजतिशब्दप्रयोगाः ।

संख्याभेदेन चोदनाभेदो यथा—आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति । अत्र संख्याभेदेन कर्मभेदः । शब्दादिना भेदेन प्रतिपादितस्य च कर्मणः शेषशेषिभावेन विनियोगप्रतिपादनाय तृतीयोऽध्यायः । विनियुक्तस्य च प्रयोजकाप्रयोजकभावप्रतिपादनाय चतुर्थोऽध्यायः । कस्यचित् किञ्चित्प्रयोजकत्वं तत्रोपदर्शितम्, कस्यचित्त्व-

इति तदर्थं पञ्चमः। एतत्समग्रं यदर्थमसावर्थी समर्थ शास्त्रेणापर्युदस्तोऽधिकारीति तत्प्रतिपादनाय षष्ठ इति।

एवं विधिभेदशेषशेषिभावप्रयुक्तिक्रमाधिकारिणां प्रतिपादनायाध्यायाः षडिति षड्लक्षणानि। तत्र प्रकृतिषट्कमुपदेशषट्कमिति चोच्यते। तदनन्तरमनुक्तेतिकर्तव्यताकमपि कर्मान्यतो विध्यन्तमाप्नोति सामान्यातिदेशादिति प्रतिपादनाय सप्तमः। क्वचित्सामर्थ्याद्विशेषा एवातिदिश्यन्त इति निरूपणायाष्टमः। अतिदेशप्राप्ते मन्त्रे प्रकृतिदेवता विकृतियागदेवतात्वेन विपरिणमयितव्येत्यादिसमर्थनाय नवमः। सामान्यस्य विशेषेण बाधाभिधानाय दशमः। येन

---

प्रयोजकत्वं तत्प्रतिपक्षभूतम्। श्रुत्यर्थपाठादिभिः प्रमाणैरङ्गानां क्रमेण विनियोग इति तदर्थं पञ्चमोऽध्यायः। तद्यथा—सोमेनेष्ट्वा बृहस्पतिसवेन यजेतेति क्त्वाप्रत्ययरूपया श्रुत्या सोमयागस्य प्राथम्यम्। अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्र तु श्रौतक्रमादार्थक्रमस्य बलीयस्त्वादग्निहोत्रहोमापेक्षया यवागूपाकस्य प्राथम्यम्। अत्र श्रौतक्रमादरे हि यवागूपाकस्यादृष्टार्थत्वमेव स्यात्। आर्थक्रमाश्रयणे तु प्रागनुष्ठितस्य यवागूपाकस्याग्निहोत्रहोमार्थत्वेन दृष्टार्थत्वमिति।

एवञ्च 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना' इति न्यायस्यापि समादरो भवति। एतत्समग्रं साङ्गं कर्मचोदनया यदर्थं प्रतिपाद्यतेऽसौ फलार्थी शरीरेण वित्तेन च समर्थः शास्त्रेणानिषिद्धजात्यादिरपतितोऽधिकारीति तस्य प्रतिपादनाय षष्ठोऽध्यायः।

एवं विधिभेदशेषशेषिभावप्रयुक्तिक्रमाधिकारिणां प्रतिपादनायाध्यायाः षडिति षड् न्यायलक्षणानि याभिश्चोपपत्तिभिर्विध्यादयो निर्णीतास्ता अत्र न्यायपदेन विवक्षिताः। इदञ्चाध्यायषट्कं प्रकृतियागसम्बन्धित्वात् प्रकृतिषट्कमिति, विधिसम्बन्धित्वाच्चोपदेशषट्कमिति चोच्यते।

एते च षडध्यायीप्रतिपाद्या न्याया वाक्यवाक्यार्थयोरविभागाभ्युपगमे पदपदार्थानङ्गीकारे च नोपपद्यन्ते, विध्यादीनां पदप्रतिपाद्यत्वात् पदार्थरूपत्वात्, पदार्थसम्बन्धित्वाद् वेति। तदनन्तरं यत्र कर्मणातिकर्तव्यता = अङ्गसामान्यम् नोक्ता, तदपि कर्मसादृश्येन स्वप्रकृतिभूतादन्यस्मात् कर्मणो विध्यन्तम् = अत्र विध्यन्तपदेनेतिकर्तव्यतोच्यते। वक्ष्यते चैतदग्रे आम्नाति, कर्मान्तरसादृश्येन 'प्रकृतिवद्विकृतिः कर्तव्या' इति न्यायबलाद् विध्यङ्गसामान्यातिदेशादिति प्रतिपादनाय सप्तमोऽध्यायः। क्वचित्कर्मण्यतिदेशवचनसामर्थ्याद् विशेषा एव मन्त्रादयोऽतिदिश्यन्ते। न तु सामान्य पर्णतादि, तस्यानारभ्याधीतत्वेन कर्मसामान्यसमवायित्वादिति निरूपणायाष्टमः।

अतिदेशप्राप्ते मन्त्रे प्रकृतियागदेवता-विकृतियागदेवतात्वेन विपरिणमयितव्येत्यादिसमर्थनाय नवमः। तद्यथा—आग्नेयप्रकृतिके सौर्ययागे 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रेऽतिदेशप्राप्ते सति 'अग्नये' इति पदरूपा देवता 'सूर्याय' इत्येवं विकृतियागदेवतात्वेन

सकृदनुष्ठानादुभयसिद्धिस्तत्तन्त्रं तदर्थमेकादशः। यदन्यदर्थं [न्यार्थं] मारब्धमन्यदप्येकेनैव प्रयत्नेन संभवलाघवाभ्यां निष्पादयति तत्प्रासङ्गिकम्। तदुक्तये द्वादशोऽध्याय इत्यनेनातिदेशषट्केन सह द्वादशलक्षणानि। एतत्प्रतिपक्षभूतान्यन्यानि द्वादश यथायोगमेतेष्वेवाध्यायेषु दर्शितानि।

तत्र प्रमाणस्य प्रतिपक्षोऽसंभवः। नह्यप्रमाणं प्रमाणस्थाने नियुज्याभिमतसंपत्तिर्भवति। भेदस्य तु शास्त्रादि [शब्दादि] भेदभिन्नस्य तदभेदादभेदः प्रतिपक्षः।

तत्र भेदस्य स्वरूपं निर्दिष्टम्—"शक्तिव्यापारभेदोऽस्मिन् फलमत्र तु भिद्यते। संबन्धाज्जातभेदोऽयम्" (वा० प० २।८३) इति। भेदस्तत्राविवक्षित इति

---

विपरिणमयितव्या भवति। सामान्यशास्त्रस्य विशेषशास्त्रेणानवकाशेन तदितरपरतात्मकसंकोचरूपबाधाभिधानाय दशमोऽध्याय.। येन सकृदनुष्ठानादुभयसिद्धिस्तत्तन्त्र तत्प्रतिपादनार्थमेकादशः। उदाहरणं तत एव द्रष्टव्यम्।

यदन्यार्थमारब्धमन्यदप्येकेनैव प्रयत्नेन सम्भवलाघवाभ्यां निष्पादयति तत्प्रासङ्गिकम्। तद्यथा—'चमसेनापः प्रणयति गोदोहनेन पशुकामस्य' इत्यत्र गोदोहनकरणकमपां प्रणयनमेकेनैव प्रयत्नेन यागं निष्पादयत् पशूनपि निष्पादयतीति प्रासङ्गिकम्। तदुक्तये द्वादशोऽध्याय इत्यनेनातिदेशषट्केन सह पूर्वोक्त प्रकृतिषट्कमादाय द्वादशाध्यायोक्तानि द्वादशन्यायलक्षणानि संपद्यन्ते। एतेषां द्वादशानां न्यायलक्षणानां प्रतिपक्षभूतान्ययानि द्वादशलक्षणानि यथायोगमेतेष्वेवाध्यायेषु तत्र तत्र दर्शितानि।

तत्र प्रमाणस्य प्रतिपक्षोऽसम्भवः। तद्यथा—अप्रमाणस्थाने प्रमाणस्थाने विनियोगोऽसम्भवः। नह्यप्रमाणस्थाने विनियुज्याभिमतार्थसंपत्तिर्भवति। भेदस्य तु शब्दादिभेदभिन्नस्याभेदः प्रतिपक्षः, शब्दादिभेदस्य शब्दादिभेदप्रतिपक्षत्वात्। तत्र भेदस्य स्वरूपमत्रैवं कुलके निर्दिष्टम्—"शक्तिव्यापारभेदेऽस्मिन् फलमत्र तु भिद्यते। सम्बन्धाज्जातभेदोऽयम्" (२।८३) इति।

अस्य सोदाहरणोऽयमर्थः- अस्मिन् यागहोमदानात्मके कर्मत्रिके, शक्तिव्यापारभेदः, यजति, जुहोति, ददातीति शब्दानां भिन्नानां ये भिन्नाः शक्तिरूपा व्यापारास्तत्प्रयुक्तो भेदः। अत्र तु—कौण्डपायिनामयनगते 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इति विहिते मासाग्निहोत्रकर्मणि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिवाक्यविहितादग्निहोत्रकर्मणो भेदः। यतोऽत्र तु फलं भिद्यते अग्निहोत्रान्तरफलादिति। सम्बन्धजातभेदोऽयमिति। अयं कर्माङ्गभूत आचमनपदार्थः कर्मसम्बन्धाद्धेतोः प्रायत्यार्थं विहितात् स्वतन्त्रादाचमनकर्मणो जातभेद इति तदर्थः।

'भेदस्तत्राविवक्षितः' इति भेदविवक्षारूपो भेदप्रतिपक्षो निर्दिष्टः। 'भेदस्तत्र विवक्षितः' इति क्वाचित्कोऽपपाठ इति तु सुव्यक्तमेव, तेन भेदप्रतिपक्षनिर्देशासंभवात्।

तत्प्रतिपक्षः। तथा शेषशेषिभावस्य गुणप्रधानभावाविवक्षा प्रतिपक्षः। सा प्रतीयमानत्वादत्र नोक्ता। तत्र शेषशेषिभावस्य इदं प्रधानं शेषोऽयमिति' (२।८२) स्वरूपकथनम्, 'विनियोगक्रमस्त्वयम्' 'साक्षादस्योपकारीदमिदमाराद्विशेषकम्' (वा० प० २।८३) इत्यस्यैवेतिकर्तव्यतायाः प्रभेदस्य च निर्देशः। प्रयुक्तेरप्रयोजकः प्रतिपक्षः। तत्र 'इदं पराङ्गैः संबन्धमङ्गानामप्रयोजकम्' इत्यनेनैकफलतया प्रयोजकाप्रयोजकप्रदर्शनं कृतम्। 'प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम्' (वा० प० २।४२) इत्यनेन फलभेदेन प्रयोजकाप्रयोजकोपन्यासः।

तदेवं प्रयुक्तेर्द्विभेदायाः सापवादायाः स्वरूपं निर्दिष्टमनेन श्लोकेनेति विज्ञेयम्। क्रमस्याविवक्षा प्रतिपक्षः। अस्य 'इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः' (२।८१) इति स्वरूपम्। 'क्रमोऽयमत्र बलवान् अस्मिंस्तु न

---

तथा शेषशेषिभावस्य गुणप्रधानभावाविवक्षा प्रतिपक्षः, सा च भेदस्तत्राविवक्षितः' इत्युक्तनयेनैव स्पष्टं प्रतीयमानत्वादत्र नोक्ता। तत्र शेषशेषिभावस्य 'इद प्रधानं शेषोऽयम्' इति स्वरूपकथनम्। अत्र शेषपदमङ्गत्वेनाप्रधानपरम्। कथमनयोः शेषशेषिभाव इति शेषशेषिभावस्य कथंभावाकाङ्क्षायाम्—'विनियोगक्रमस्त्वयम्' इति शेषशेषिभावस्यैवेतिकर्तव्यतायाः प्रकारस्य निर्देशः। अयं तु शेषशेषिभावेन विनियोगस्य सम्बन्धस्य क्रमः, प्रकार इति तदर्थः।

'साक्षादस्योपकारीदमिदमाराद् विशेषकम्' इति तु शेषशेषिभावस्यैव प्रभेदनिर्देशः =अवान्तरभेदनिर्देशः। इदमस्य साक्षादुपकारि, इदमस्यारात्, दूरात्, परम्परया, विशेषकम् =व्यावर्तकत्वेनोपकारकमिति साक्षादुपकारकत्वपरम्परयोपकारकत्वाभ्यां शेषशेषिभावस्य प्रभेदद्वयम्। प्रयोजकत्वरूपायाः प्रयुक्तेरप्रयोजकत्वं प्रतिपक्षः। तत्र 'इदं पराङ्गैः संबद्धमङ्गानामप्रयोजकम्' इत्यनेनैकफलकतया प्रयोजकाप्रयोजकप्रदर्शनं कृतम्।

तथा हि—इदं वस्तु पराङ्गैः परैः कर्माङ्गैः सम्बद्धमिति तदन्येषां तत्कर्माङ्गानामभिन्नफलवतामेवाप्रयोजकमिति तदर्थः।

'प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम्' इत्यनेन तु फलभेदेन प्रयोजकाप्रयोजकोपन्यासः। तथा हि—इदं वस्तु तेषां कर्माङ्गानां प्रयोजकमिति तत्फलेन फलवत्, इदं त्वत्र तत्कर्माङ्गे नान्तरीयकम् =अवर्जनीयसन्निधिकम् इत्याकाशदण्डत्वादिवदन्यथासिद्धत्वेन तत्कर्माङ्गाप्रयोजकमितिभिन्नफलवदिति तदर्थेन भिन्नफलतया प्रयोजकाप्रयोजकोपन्यासोपपत्तिः। तदेवं फलैक्येन फलभेदेन च द्विभेदाया. प्रयुक्तेः=प्रयोजकत्वस्य अप्रयोजकत्वरूपापवादसहितायाः स्वरूपं निर्दिष्टमनेन इदं पराङ्गैः' इत्यादिना 'अत्रेदं नान्तरीयकम्' इत्यन्तेन श्लोकेनेति विज्ञेयम्। क्रमस्य प्रतिपक्षस्तदविवक्षा।

क्रमस्य स्वरूपं तु—'इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः' (२।८१) इत्यनेन पूर्वार्धेन निर्दिष्टम्। अत्रोच्चारणं पाठः। 'क्रमोऽयमत्र बलवानस्मिंस्तु न विवक्षितः'' (२।८१)

विवक्षितः' ( २।८१ ) इति प्रतिपक्षः। अधिकारिणः स्वरूपापवादौ 'शास्त्रात् प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे' ( वा० प० २।८० ) इति कृतौ।

सामान्यातिदेशविशेषातिदेशयोस्त्वपवादविरहितं स्वरूपं निर्दिष्टम्— 'सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते' इति। ऊहस्य संबन्धाबाधोऽपवादः। अस्य 'ऊहोऽस्मिन् विषये न्याय्यः' इति स्वरूपम्। 'संबन्धोऽस्य न बाध्यते' इत्यपवादः। तुल्यबलानामविरोधात् समुच्चयो बाधस्यापवादः।

तुल्यबलानामचरितार्थानां विरोधाद्विकल्पोऽपि बाधस्यापवादत्वेन दर्शितः। 'अत्र बाधसमुच्चयौ' इति बाधस्य स्वरूपमपवादश्चोक्तः।

तन्त्रस्याप्यावृत्तिप्रतिपक्षः। तस्य 'इदं तन्त्रेण लभ्यते' इति स्वरूपम्। 'इदमावृत्तिभेदाभ्याम्' (२।७७) इत्यनेन तन्त्रस्यावृत्तिः प्रतिपक्ष उक्तः। एकप्रयत्न निर्वर्त्यमपीच्छावशाद्भेनेच्छतीति प्रासङ्गिकस्यापवादो भेदः। तत्र 'प्रासङ्गिकमिदं कार्यम्' (२।७७) इति प्रासङ्गिकस्वरूपनिर्देशः। 'आवृत्तिभेदाभ्यामि'त्यस्माद्भेदः प्रासङ्गिकस्यापवादो योजनीयः।

---

इत्युत्तरार्धेन तु तदविवक्षारूपस्तत्प्रतिपक्षो निर्दिष्टः। अधिकारिणः स्वरूपापवादौ 'शास्त्रात् प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे' (२·८०) इत्यनेन निर्दिष्टौ। अयं ब्राह्मणः शास्त्रात्, ब्राह्मणो 'बृहस्पतिसवेन यजेत' इति शास्त्राद् बृहस्पतिसवे कर्मणि प्राप्ताधिकारः। अस्य ब्राह्मणस्य, क्रियान्तरे राजसूयादौ क्षत्राधिकर्तृकेऽधिकारस्य व्युदासो निवृत्तिरिति तदर्थः।

सामान्यातिदेशविशेषातिदेशयोस्त्वपवादविरहितं स्वरूपं निर्दिष्टम्; 'सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते' इति। प्रकृतियागसम्बद्धमन्त्रस्य मन्त्रभागस्य वा विकृतियागे सम्बन्धस्याबाधोऽपवादः। तद्यथा विकृतियागे—'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रघटकस्य 'अग्नये' इति पदस्य स्थाने 'सूर्याय' इति प्रकृत्यूहेऽपि शेषस्य मन्त्रभागस्य प्रकृतितोऽनुवृत्तिरपवाद इति।

तुल्यबलानामविरोधात् समुच्चयो बाधस्यापवादः। तद्यथा—'दधि मधु घृतं धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्'' इति। अत्र द्रव्याणां दध्यादीनामेकस्मिन् कर्मणि प्राजापत्ये समुच्चयोऽविरोधात्। तुल्यबलानामचरितार्थाना विरोधाद् विकल्पोऽपि बाधस्यापवादत्वेन प्रदर्शितः। तद्यथा—'व्रीहिभिर्यजेत' यवैर्वा इति भावयोर्विकल्पः। 'अतिरात्रे षोडशिनं गृह्णाति','नातिरात्रे षोडशिनं गृह्णाति' (द्र० तै० सं० ६।६।११।४) इति भावाभावयोर्विधिप्रतिषेधयोर्विकल्पः। प्रकृते कुलक एव 'बाधसमुच्चयौ' (वा० प० २।७७) इत्यनेन बाधस्य स्वरूपं तदपवादः समुच्चयश्चोक्तः।

तन्त्रस्य त्वावृत्तिः प्रतिपक्षः। 'इदं तन्त्रेण लभ्यते' (वा० प० २।७८) इति तन्त्रस्य स्वरूपं निर्दिष्टम्। 'इदमावृत्तिभेदाभ्याम्' (२।७७) इत्यनेन तन्त्रस्यावृत्तिरूपः प्रतिपक्ष उक्तः। एकप्रयत्ननिर्वर्त्यमपीच्छावशाद् भेदेनेच्छतीत्येवं लक्षणको यो भेद उक्तलक्षणकस्य प्रासङ्गिकस्यापवादः सोऽप्यत्रोक्तः। तत्र 'प्रासङ्गिकमिदं कार्यम्' इति प्रासङ्गिकस्य स्वरूप-

यद्यपि परेषां चोदनैव प्रमाणं प्रसिद्धम्, तथापीह टीकाकारो न्यायमात्रस्य प्रमाणत्वमङ्गीकरोति। अतः प्रकृतशास्त्रव्याख्योपयोगि तत्तत्स्थाने न्यायजातं 'प्रसज्य प्रतिषेधोऽयम्' इत्यादिना प्रदर्शयति।

अत एव चोदनायामेव प्रमाणत्वस्याभावात् प्रथममेव लक्षणनिदर्शनं न कृतम्। सामान्येन वाक्यधर्माणां प्रासङ्गिकादीनां सापवादानामत्र निर्देशः कृत इत्यभिप्रायः।

एतदुक्तं भवति—पदपदार्थव्यवस्थापनाप्रस्तावे यो यः कश्चित्तद्व्यवस्थापने न्यायः प्रभवति स स कीर्तनीयः। तदत्र चोदनायाः कीदृशं प्राथम्यं प्राधान्यं वा तन्त्रप्रसङ्गौ तु सूत्रे कृताविति तत्पुरःसरत्वेनैव पदपदार्थावधानमिति। समुच्चयो विकल्प आवृत्तिश्चेत्येवमादिभिः सह द्वाविंशतिर्लक्षणानि भवन्ति।

---

निर्देशः। 'आवृत्तिभेदाभ्याम्' इत्यस्माद् वाक्यात् प्रासङ्गिकस्यापवादो भेदो निर्दिष्टत्वेन योजनीय इति।

यद्यपि परेषां चोदनैव वाक्यप्रमाणत्वेन प्रसिद्धा, तथापीह टीकाकारो भर्तृहरिर्विषय-सम्बद्धस्य न्यायसामान्यस्य वाक्यप्रमाणत्वमङ्गीकरोति। अतः प्रकृतशास्त्रव्याख्योपयोगि तत्तत्स्थाने न्यायजातं 'प्रसज्यप्रतिषेधार्थम्' (वा० प० २।८५) इत्यादिना प्रदर्शयिष्यति।

अत एव चोदनायामेव वाक्यप्रमाणत्वस्याभावात् प्रथममेव चोदनामात्रवृत्तिवाक्य-प्रमाणलक्षणनिदर्शनं न कृतम्, किन्तु सामान्येन वाक्यधर्माणां प्रासङ्गिकादीनां सापवादा-नामत्र निर्देशः कृत इति टीकाकृतो हरेरभिप्रायः।

अतः पदपदार्थव्यवस्थापनाप्रस्तावे यो यः कश्चित्तद्व्यवस्थापने न्यायः प्रभवति स स कीर्तनीयः। तत्र सर्वेषां न्यायानां प्रमाणत्वेन कीर्तनीयत्वे सति चोदनायाः कीदृशं प्राथम्यं प्राधान्यं वा। तन्त्रप्रसङ्गौ तु सूत्रे कृताविति तौ प्रमाणत्वेन पुरस्कृत्यैव पदपदार्थावधारणं युक्तमिति न चोदनाया एव वाक्यप्रमाणत्वम्। तत्र सूत्रे तन्त्रं यथा—तपरस्तत्कालस्ये (पा० १।१।७) ति। अत्र तपरपदे तन्त्रेण समासद्वयनिर्देशः। सूत्रे प्रसङ्गो यथा—'सर्वादीनि सर्वनामानि' (पा० १।१।२७) इति। अत्र सञ्ज्ञासंज्ञिसम्बन्धविधानपरे सूत्रवाक्ये णत्वाभावस्य साधुत्वनिर्देशः प्रासङ्गिकः। तदेवं तन्त्रप्रसङ्गौ समुच्चयो विकल्प आवृत्तिश्चेत्येवमादिभिः सह द्वाविंशतिलक्षणानि भवन्ति।

तानि यथा—'शक्तिव्यापारभेदोऽस्मिन् फलमत्र तु भिद्यते। सम्बन्धजातभेदोऽयम्' इति भेदस्य स्वरूपनिर्देशः। 'भेदस्तत्राविवक्षितः' इति भेदस्य प्रतिपक्षभूताऽविवक्षा दर्शितेति भेदाविवक्षे द्वे लक्षणे। 'इदं प्रधानं शेषोऽयम्' इति शेषशेषिभावस्य स्वरूप-कथनम्। विनियोगक्रमस्त्वयम् 'साक्षादस्योपकारीदमिदमाराद्विशेषकम्' (२।८२) इति तु शेषशेषिभावस्यैवेतिकर्तव्यतायाः प्रभेदस्य च निर्देश इति शेषशेषिभावाख्यं तृतीयम्। 'इदं पराङ्गैः सम्बद्धमङ्गानामप्रयोजकम्' (वा० प० २।८१) इति पद्यार्धेनैकफलतया प्रयोजका-

द्वे लक्षणे लक्षणसमुद्देशादूह्ये। अथवा सामान्यातिदेशस्य तदभाव एवापवादः। विशेषातिदेशस्य सामान्यातिदेश एव विशेषान्तरातिदेशो वेत्यनयोः सप्रतिपक्षत्वमाश्रित्य चतुर्विंशतिः संपद्यन्त इत्येवमनेन क्रमेणैतानि लक्षणानि। एतदेव मनसिकृत्य षड् द्वादश चतुर्विंशतिर्वा लक्षणानीत्युक्तम्।

---

प्रयोजकयोः प्रदर्शनं कृतम्, 'प्रयोजकमिदं तेषामत्रेद नान्तरीयकमिति' (वा० प० २।८१) तु फलभेदेन प्रयोजकाप्रयोजकोपन्यास इति चतुर्थपञ्चमे लक्षणे प्रयोजकाप्रयोजकरूपे। 'इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः' (वा० प० २।८०) इति क्रमस्य स्वरूपं निर्दिष्टम्। 'क्रमोऽयमत्र बलवानस्मिंस्तु न विवक्षितः' (वा० प० २।८०) इति क्रमप्रतिपक्षभूता तदविवक्षेति षष्ठसप्तमे।

'शास्त्रात् प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे' (वा० प० २।७६) इति क्रियाविशेषेऽधिकारतन्निषेधनिर्देशाभ्यामधिकारिणः स्वरूप तन्निषेधश्च कृत इत्यष्टमनवमे। 'सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते' (वा० प० २।७८) इति सामान्यातिदेशविशेषातिदेशौ प्रतिपक्षरहितौ निर्दिष्टाविति दशमैकादशे। 'ऊहोऽस्मिन् विषये न्याय्यः' (वा० प० २।७८) इत्यूहस्य स्वरूपम्, 'सम्बन्धोऽस्य न बाध्यते' (वा० प० २।७८) इत्यूहापवादः प्राकृतसम्बन्धाबाधश्च निर्दिष्ट इति द्वादशत्रयोदशे।

अत्र बाधसमुच्चयावित्यतो विशेषशास्त्रेण सामान्यस्य बाधो निर्दिष्टो विशेषशास्त्राविषये चारितार्थ्यात् तुल्यबलानामविरोधे समुच्चयस्तु बाधप्रतिपक्षभूतो निर्दिष्टः। यद्यपि तुल्यबलानां विरोधे विकल्पोऽपि बाधप्रतिपक्षः, स चात्र शब्दतो नोपात्तस्तथापि तुल्यबलानामविरोधे समुच्चयोपन्यासेन तेषां विरोधे किं भवतीत्यवारितप्रसरया जिज्ञासया शास्त्रप्रामाण्याविशेषाद् विकल्प इति लभ्यते शास्त्रप्रामामाण्यान्यथाऽनुपपत्त्या यथा समुच्चयस्तथा तथैव विकल्पोऽपीति तुल्यवित्तिवेद्यत्वेन विकल्पोऽप्युक्तप्राय एवेति बाधसमुच्चयविकल्पा यथाक्रम चतुर्दशपञ्चदशषोडशलक्षणानि।

'इदं तन्त्रेण लभ्यते' (वा० प० २।७७) इति तन्त्रस्य स्वरूपं संकीर्तितम्। 'इदमावृत्तिभेदाभ्याम्' (२।७८) इति तत्प्रतिपक्षावावृत्तिभेदावुक्तौ। 'प्रासङ्गिकमिदं कार्यम्' (२।७७) इति प्रसङ्गस्य स्वरूपनिर्देशः, 'इदमावृत्तिभेदाभ्याम्' इत्यनेनैव प्रसङ्गस्यापि प्रतिपक्षभूतावावृत्तिभेदौ निर्दिष्टाविति सप्रतिपक्षयोस्तन्त्रप्रसङ्गयोः षट्त्वसंख्यया सह पूर्वसंख्यायाः संकलने द्वाविंशतिर्लक्षणानि संपद्यन्ते। यद्यप्येतानि प्राङ्निर्दिष्टान्येवेति पुनरुक्तिस्तथाप्यत्र द्वाविंशतित्वसंख्यासंभवप्रदर्शनायानुवाद इति क्षन्तव्यम्।

द्वे लक्षणे तु सामान्यातिदेशस्य तदभाव एवापवाद इति, विशेषातिदेशस्य सामान्यातिदेश एवापवाद इति, विशेषान्तरातिदेशो वाऽपवाद इति। एवं सामान्यातिदेशविशेषातिदेशयोः सप्रतिपक्षत्वमाश्रित्य न्यायलक्षणानि चतुर्विंशतिः संपद्यन्त इत्येवमनेन क्रमेणैतानि लक्षणानि। एतदेव मनसिकृत्य श्रीभर्तृहरिणा स्वोपज्ञटीकायां—'षड् द्वादश चतुर्विंशतिर्वा

अथैषां निदर्शनार्थं लेशतः स्वरूपसहितान्युदाहरणानि टीकाकारेण प्रदर्शितानि। तत्र द्वयोरर्थिनोः कार्येण संभविना प्रयोजकत्वेन निर्ज्ञातसामर्थ्ययोर्यत्रान्यतरप्रयुक्तेनार्थेनापरोऽभिसंबध्यमानः कृतार्थत्वात् पृथक्प्रयोजकत्वं नोपैति स प्रसङ्गः। तत्प्रयोजनकं प्रासङ्गिकम्। तद्यथा सघाताध्ययनम्। तत्र हि कञ्चिदेव शिष्यमुद्दिश्य प्रवृत्तेऽध्यापने भेदेनाध्यापनान्तरस्य प्रयोजने समर्थतरा अध्येतारः सत्यप्यर्थित्वे पृथगध्यापनं संभवाल्लाघवाच्च न प्रवर्तयन्ति; अपित्वेकेनैव यत्नेन तदनुतिष्ठन्ति।

वेदे यथा—अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपन्ति। अत्राग्नीषोमीयपश्वर्थः प्रयाजानुयाजविध्यन्तः प्रसङ्गादग्नीषोमीयं पशुपुरोडाशमप्युपकरोति।

शब्दानुशासनेऽपि यथा—सर्वादीनि सर्वनामानीत्यत्र णत्वाभावं प्रासङ्गिकमुदाहरन्ति। तत्र हि संज्ञासंज्ञिसंबन्धविधानपरे वाक्ये रूपविशेषमात्रादकृतणत्वादुभयसाधनत्वं विज्ञायते। शक्यो ह्यस्य स्वरूपनिर्देशात् पृथग् णत्वप्रतिषेधो वक्तुमित्येकेनैव प्रयत्नेनोभयमत्र वर्तत इति।

---

अथैषां चतुर्विंशतिसंख्याकानां न्यायलक्षणानां निदर्शनार्थं संक्षेपेण स्वरूपसहितान्युदाहरणानि यानि टीकाकारेण श्रीभर्तृहारणा प्रदर्शितानि, तानि श्रीपुण्यराजेन संगृहीतानि मयाऽप्यत्र प्रतिपत्तॄणां चेतश्चमत्काराय प्रदर्श्यन्ते।

तत्र द्वयोरर्थिनोः (प्रयोजनवतोः, फलवतोरिति यावत्) कार्ये संभविनि निर्ज्ञातसामर्थ्ययोर्यत्रान्तरप्रयुक्तेनार्थेनापरोऽभिसम्बध्यमानः कृतार्थत्वात् पृथक् प्रयोजकत्वं नोपैति स प्रसङ्गः, तत्प्रयोजनकं प्रासङ्गिकम्, प्रसङ्गः प्रयोजनः प्रयोजको यस्येति व्युत्पत्तेः। तद्यथा संघाताध्ययनम्। तत्र हि कञ्चिदेव शिष्यमुद्दिश्य प्रवृत्तेऽध्यापने भेदेनाध्यापनान्तरस्य प्रयोजनेऽध्ययने समर्थतरा अध्येतारः सत्यप्यर्थित्वे पृथगध्यापन न प्रवर्तयन्ति, एकेनाप्यध्यापनेनापराध्यापनफलस्याध्ययनस्य सम्भवाल्लाघवाच्च; अपि त्वेकेनैव यत्नेन तदनुतिष्ठन्ति।

वेदे यथा—अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपन्ति (श० ब्रा० ५।२।७।१)।

तत्रैवं श्रूयते—'अग्नीषोमीयं पशुमालभते, तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपन्ति' इति। अत्राग्नीषोमीयपश्वर्थः प्रयाजानुयाजविध्यन्तः प्रसङ्गादग्नीषोमीयं पशुपुरोडाशमप्युपकरोति।

शब्दानुशासनेऽपि यथा—'सर्वादीनि सर्वनामानि' (अष्टा० १।१।२७) इत्यत्र णत्वाभावं प्रासङ्गिकमुदाहरन्ति। तत्र हि संज्ञासंज्ञिसम्बन्धविधानपरे वाक्ये सर्वनामानीत्यकृतणत्वाच्छब्दस्वरूपविशेषनिर्देशमात्रादुभयसाधनत्वं विज्ञायते। शक्यो ह्यस्य तादृशशब्दस्वरूपनिर्देशात् पृथङ्णत्वप्रतिषेधो वक्तुमित्येकेनैव प्रयत्नेनोभयमत्र वर्तत इति।

अथ तन्त्रम्। यत्रार्थिनः सर्वे प्रयोजका[क]भेदेनावृत्त्या वा योऽर्थः प्रतिपत्तव्यस्तमर्थमेकमेव संभवाल्लाघवाच्च प्रयोजयन्ति तत्तन्त्रम्। तद्यथा—शालायामेकं प्रदीपं व्याकरणाध्यायिनः प्रयोजयन्ति।

वेदे यथा—प्रधानभूता ये षड्यागा आग्नेयादयस्तदर्थं ये प्रयाजादयस्ते पूर्वं पश्चाद्वा कृताः सर्वेषां तन्त्रेण साधारण्येनोपकारका भवन्तीत्युच्यते।

शास्त्रे यथा - भिन्नार्थयोस्तपरशब्दयोस्तपरस्तत्कालस्येति तन्त्रिणोः सूत्र उपादानं क्रियत इति। एवं च तत्र तत्र लक्षणेष्वपि तन्त्रलक्षणं प्रभवत्येवेति विज्ञेयम्। तद्यथा—संख्यासंज्ञायां रूपविशेषानुरोधात्तत्तत्प्रदेशेषु तन्त्रेणैव युगपदुभयप्रतिपत्तिरिति। अथावृत्तिभेदयोस्तन्त्रप्रसङ्गप्रतियोगिनोर्निदर्शनमुच्यते। आवृत्तौ तावत्तन्त्रप्रतिपक्षभूतायां निदर्शनम्। यथा एकं वस्त्रमाभरणं वा रणभूमिषु भटानामुपयोगाय कल्पत इति।

वेदे यथा—सप्तदश सामिधेन्यो भवन्तीति। अत्रैकशब्ददर्शने सामिधेनीषु सप्तदशत्वमावृत्तिसंख्यानात् प्रकल्प्यते। यदुच्यते—"त्रिःप्रथमामन्वाह, त्रिरुत्तमामन्वाह" इति।

---

भगवान् भर्तृहरिर्भाष्यटीकायाम्—'आम्राश्च सिक्ताः पितरश्च प्रीणिताः' इति भाष्यकारोक्तिं विवृण्वन्नाह—यदर्थाप्रयोजकमन्यद्वारेणार्थं प्रतिपद्यते स प्रसङ्ग इत्युच्यते। एवमाम्राः पृथक् सेकप्रयोजकाः पितरोऽप्रयोजकाः, तत्र प्रयुक्तमुदकदानं प्रसङ्गेनानुभवन्तीति।

अथ तन्त्रम्। यत्रार्थिनः सर्वे प्रयोजकभेदेनावृत्त्या वा योऽर्थः प्रतिपत्तव्यस्तमर्थमेकमेव संभवाल्लाघवाच्च प्रयोजयन्ति तत्तन्त्रम्। तद्यथा लोके—व्याकरणाध्यायिनः शालायामेकं प्रदीपं प्रयोजयन्ति।

वेदे यथा—प्रधानभूता ये षड्यागा आग्नेयादयस्तदर्थं ये प्रयाजादयस्ते पूर्वं पश्चाद्वा कृताः सर्वेषां तन्त्रेण साधारण्येनोपकारका भवन्तीत्युच्यते मीमांसकैः।

व्याकरणे यथा—बहुव्रीहिपञ्चमीतत्पुरुषरूपसमासभेदेन भिन्नार्थयोस्तपरशब्दयोस्तन्त्रिणोः 'तपरस्तत्कालस्य (अष्टा० १।१।७०)' इति सूत्रे तन्त्रेणोपादानं क्रियत इति। एवञ्च तत्र तत्र व्याकरणसूत्रेष्वपि तन्त्रलक्षणं प्रभवत्येवेति विज्ञेयम्। तद्यथा—संख्येति शब्दस्वरूपविशेषस्य संज्ञात्वानुरोधात् संख्याप्रदेशेषु तन्त्रेणैव संख्यापदेन युगपदुभयोः कृत्रिमाकृत्रिमसंख्ययोर्ग्रहणमिति। अथाऽऽवृत्तिभेदयोस्तन्त्रस्य प्रसङ्गस्य च प्रतिपक्षभूतयोर्निदर्शनमुच्यते। आवृत्तौ तावत्तन्त्रप्रतिपक्षभूतायां निदर्शनम्। तद्यथा लोके—नैकं वस्त्रमाभरणं शस्त्रं वा रणभूमिषु भटानामुपयोगाय कल्पत इति।

वेदे यथा—'सप्तदश सामिधेन्यो भवति' इति। उच्चारणभेदेऽपि शब्दो न भिद्यत इत्येकशब्ददर्शने सामिधेनीनाम्नीषु ऋक्षु स्वाभाविकं त्रयोदशत्वमेवेति प्रथमोत्तमयोस्त्रिरावृत्त्या त्रित्वेन प्रसंख्यानात् सप्तदशत्वं प्रकल्प्यते। तथा चोच्यते—'त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह' इति।

व्याकरणे यथा—संप्रसारणसंज्ञायां ज्ञापकपक्षानाश्रयणेन वर्णवाक्यविषयया आवृत्त्या कृत्स्नस्य भिन्नप्रतीयमानोपस्कारा प्रवृत्तिराख्यायते। यथा चैकशब्ददर्शने "एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्" इति परिहार उच्यते। भेदस्य तन्त्रप्रतियोगिनो निदर्शनम्। यथा भिन्नानि पात्राण्यसह-[णिसह] भुजां भुजिक्रियायां भेदेनाधिकरणभावं प्रतिपद्यन्ते।

वैदिकेऽपि विषये यथा— ग्रहं संमार्ष्टि" इत्यत्र यः संमार्गो ग्रहविषये चोदितः, स भेदेनैव व्यवतिष्ठत इति। शास्त्रे यथा—'न वेति विभाषा" इत्येतस्मिन् योगे प्रत्याख्यानमुभयत्र विभाषाणां क्वचिद्विधिमुखेन क्वचित् प्रतिषेधमुखेन विभक्तानां विभक्त[प्र]वृत्तिराश्रीयत इति।

---

व्याकरणे यथा संप्रसारणसंज्ञायामस्ति पक्षद्वयम् ( अष्टा० १।१।४५ )। वर्णस्य संप्रसारणसंज्ञेत्येकः पक्षः, वाक्यस्य संप्रसारणसंज्ञेत्यपरः पक्षः। अस्ति च संप्रसारणाच्चेत्यादावनुवादप्रदेशे वाक्यसंज्ञापक्षे संप्रसारणात् परत्वादेरजादावनुपपत्तिरित्यतस्तत्र तत्र संप्रसारणपदस्य संप्रसारणजाते लक्षणा ज्ञाप्यत इति ज्ञापकपक्षाश्रयणम्। तत्रैवं सति संप्रसारणाच्चेत्यादावनुवादप्रदेशे ज्ञापकपक्षानाश्रयणेन संप्रसारणसंज्ञाया वर्णवाक्यविषययाऽऽवृत्त्या कृत्स्नस्य विध्यनुवादभेदभिन्नस्य शास्त्रस्य भिन्नप्रतीयमानोपकारा=भिन्नौ प्रतीयमानावुपस्कारौ वर्णवाक्यभेदभिन्ने निमित्ते, उपस्क्रियते सम्यक् क्रियते कार्यमनेनेत्युपस्कारो निमित्तमिति व्युत्पत्तेः। यस्या शास्त्रप्रवृत्तौ सा तथाभूता प्रवृत्तिः। अत्र कृत्स्नस्य शास्त्रस्येति प्रवृत्त्यपेक्षया कर्तरि षष्ठी प्रवृत्तिराख्यायते। यथा च उच्चारणभेदेऽप्येक एव शब्द इति दर्शने एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्' (महा० भा० १।१।१ वा० १०) इति भाष्ये परिहार उच्यते। अत एवैकशब्ददर्शने घटशब्देऽकारस्योच्चारणावृत्त्या द्वित्वसंख्याप्रकल्पनेन द्व्यच्त्वोपपत्त्या 'घटेन तरति' इत्यर्थे 'नौद्व्यचष्ठन्' (अष्टा० ४।४।७) इति ठनि घटिक इति सिध्यति।

भेदस्य तन्त्रप्रतियोगिनो निदर्शनं यथा—सहभुजां भिन्नानि पात्राणि भेदेन भुजिक्रियायामधिकरणभावं प्रतिपद्यन्ते।

वैदिकेऽपि विषये यथा—'ग्रहं संमार्ष्टि' इत्यत्र यः संमार्गो ग्रहविषये चोदितः स भेदेनैव व्यवतिष्ठत इति। व्याकरणे यथा—'न वेति विभाषा' ( महा० भा० १।१।४४ ) इत्येतस्मिन् योगे प्रत्याख्याते भिन्नानामुभयत्र विभाषाणामेतत्सूत्रोदाहरणरूपाणां क्वचिद् विधिमुखेन प्रवृत्तिः, क्वचिन्निषेधमुखेनेति भिन्ना प्रवृत्तिराश्रीयते। तद्यथा—'हृक्रोरन्यतरस्याम्' ( अष्टा० १।४।५३ ) इत्युभयत्र विभाषायाः, 'कारयति कटं चैत्रं चैत्रेण वा' इत्यादावप्राप्ते प्रयोज्यकर्तुः कर्मत्वे विधिमुखेन प्रवृत्तिः। विकारयति सैन्धवान्, विकारयति सैन्धवैरि'त्यादावकर्मकत्वेन प्राप्ते तु तस्मिन् निषेधमुखेन प्रवृत्तिरिति। एवं

अथ बाधानिदर्शनं क्रियते। अर्थित्वात् सामान्योपदेशाद्वा सति प्रवृत्ति-संभवे दृष्टादृष्टार्थमप्राप्त्यनुमानमात्रं यत्र सा बाधा। यथार्थित्वात् प्रवृत्ते सामान्येन भक्षणे 'अभक्ष्यो ग्राम्यकुकुटः' इति ग्राम्यकुकुटभक्षणं क्षुत्प्रतिघातार्थमर्थित्वात् प्राप्तमनेन बाध्यत इति वैदिकमुदाहरणम्।

लौकिकं यथा—'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र दधिदानमौत्सर्गिकं तक्रदानेन विशिष्टे विषये बाध्यत इति। शास्त्रे यथा—'कर्मण्यण्' इत्यस्य 'आतोऽनुपसर्गे कः' इति कप्रत्ययेन बाधेति। एषा च टीका-कृता स्ववृत्तौ सा च तुल्यबलेष्वसंभवादित्यादिना बहुप्रकारा दर्शिता। न चेयत्ता

---

तद्यथा लोके—ग्रामं गच्छतो मध्येमार्गं चरन्त्या गोः सह नयनं प्रसङ्गः, तद्विरुद्धस्तु विस्मृतौ सत्यां ग्रामात् प्रतिनिवृत्य गोर्नयनं क्रियाभेदः।

व्याकरणे यथा—'पूर्वत्रासिद्धम्' ( पा० ८।२।१ ) इत्यत्र 'सुप्स्वरादिशेषे' इत्युक्तौ पूर्वशास्त्रे सुप्स्वरादिशेषत्वविधाने प्रसङ्गः स्यात्। तद्विरुद्धस्तु न लोप. सुप्स्वरसंज्ञेत्यादिना क्रियाभेदः कृतः, स्वतन्त्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वात्।

प्रसङ्गप्रतिपक्षभूताऽऽवृत्तिर्यथा लोके—वसिष्ठः पाद्यादिभिः सपूज्य भोज्यतामिति प्रधानीभूतायां भोजनायां पाद्यादिकरणस्य संपूजनस्य प्रसङ्गः। तत्प्रतिपक्षभूताऽऽवृत्तिश्च ब्राह्मणाः पाद्यादिभिः संपूज्यन्तां भोज्यन्तां चेति। अत्र प्रत्येकं पाद्यादिकरणस्य संपूजनस्य भोजनायाश्चावृत्तिरिति।

व्याकरणे यथा—प्रत्युच्चारणमनेकशब्ददर्शने तस्यापत्यमित्यस्याग्नेर्ढगित्यत्रानु-वृत्तस्य प्रत्यग्निशब्दं प्रतिप्रत्ययं चावृत्या प्रकृतेः षष्ठ्यन्तत्वबोधकत्वम् प्रत्ययस्य चापत्यार्थबोधकत्वम्।

यद्वा संज्ञासूत्राणामावृत्त्या प्रतियोगं वाक्यैकवाक्यताऽत्रोदाहरणम्।

अथ बाधानिदर्शनं क्रियते। अर्थित्वात् सामान्योपदेशाद्वा सति प्रवृत्तिसम्भवे दृष्टा-दृष्टार्थमप्राप्त्यनुमानमात्रं यत्र सा बाधा यथाऽर्थित्वात् प्रवृत्ते सामान्येन भक्षणे 'अभक्ष्यो ग्राम्यकुक्कुटः' इति ग्राम्यकुक्कुटभक्षणं क्षुत्प्रतिघातार्थमर्थित्वात् प्राप्तमनेन बाध्यत इति वैदिकमुदाहरणम्। अस्य स्मार्तस्याप्युदाहरणस्य वेदमूलकत्वेन वैदिकत्वम्।

लौकिकं यथा—'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौडिन्याय' इत्यत्र दधिदान-मौत्सर्गिकं कौण्डिन्ये तक्रदानेन बाध्यत इति।

व्याकरणशास्त्रे यथा—'कर्मण्यण्' (पा० ३।२।१) इत्यस्य आतोऽनुपसर्गे कः' (पा० ३।२।३) इति कप्रत्ययेन बाधेति। एषा च बाधा टीकाकृता श्रीभर्तृहरिणा स्ववृत्तौ 'सा च तुल्यबलेष्वसंभवात्' इत्यादिना बहुप्रकारा दर्शिता। न चेयत्ता बाधाप्रकाराणामभ्यासवताऽपि तेन तत्र दर्शिता। यस्मादुक्तम्—सेयमपरिमाणविकल्पा बाधा विस्तरेण बाधासमुद्देशे

प्रकाराणामस्यास्तेनापि तत्र दर्शिता । यस्मादुक्तम्—"सेयमपरिमाणविकल्पा बाधा विस्तरेण बाधासमुद्देशे समर्थयिष्यते" इति ।

अथ समुच्चयः । तुल्यबलानामविरोधिनां समुच्चयः । तद्यथा—'देवदत्तं भोजय लवणेन सर्पिषा शाकेन च' इति । वेदेऽपि—'ब्राह्मणेभ्यः पाद्यमाचमनं च दीयताम्' इति । शास्त्रेऽप्यविरोधात् फलभेदाच्च प्रत्ययकृत्कृत्यसंज्ञाः प्रत्ययतद्धिततद्राजसंज्ञाश्चैकत्र समुच्चीयन्त इति ।

विकल्पोऽपि बाधाप्रतियोगी । स च तुल्यप्रमाणविशिष्टानां विरुद्धानां भवति । वेदे यथा–'व्रीहिभिर्यजेत', 'यवैर्यजेत' इति । लोके दधितक्रे कौण्डिन्याय दीयेतामित्येकफलदधितक्रदानचोदने ।

शास्त्रेऽपि ण्वुल्तृचावित्यादि विधिप्रतिषेधयोरपि तुल्यबलत्वे विरोधाद्विकल्पो भवत्येव । यथा—वेदे "षोडशिनं गृह्णाति न गृह्णाति" इति । लोकेऽपि किंचिदस्य दीयतां न दीयतामिति । शास्त्रेऽपि—"वाग्रहणानर्थक्यं विधिनिषेधसामर्थ्यादुभयोः सिद्धत्वात्" इति । यथा प्रदर्शितं स्ववृत्तौ टीकाकारेण ।

---

समर्थयिष्यत इति । इदं च तृतीयकाण्डस्य बाधासमुद्देशनामकं प्रकरणं नाधुना समुपलभ्यत इत्यहो महत्कष्टम् ।

अथ समुच्चयः । तुल्यबलानामविरोधिनां समुच्चयः । तद्यथा—'देवदत्तं भोजय लवणेन सर्पिषा शाकेन च' इति । वेदेपि—'ब्राह्मणेभ्यः पाद्यमाचमनीयञ्च दीयताम्' इति । अस्य वेदमूलकत्वाद् वेदत्वम् । शास्त्रेऽप्यविरोधात् फलभेदाच्च प्रत्ययकृत्कृत्यसंज्ञाः प्रत्ययतद्धिततद्राजसंज्ञाश्चैकत्र समुच्चीयन्त इति ।

विकल्पोऽपि बाधाप्रतियोगी । स च तुल्यप्रमाणविशिष्टानां विरुद्धानां भवति । वेदे यथा—व्रीहिभिर्यजेत, यवैर्यजेत इति । लोके यथा—'दधितक्रे कौण्डिन्याय दीयेतामित्येकफलदधितक्रदानचोदने' इति पुण्यराजीये पाठः । वस्तुतस्तु दधि तक्रं वा कौण्डिन्याय दीयतामित्येकफले दधितक्रदानचोदने' इति पाठो युक्तः ।

अयं भावः—अत्र दधिदानस्य तक्रदानस्य वैकमेव फलमोदनादेरुपसेचनमिति, एकफलस्यैव च भावस्य विकल्पो भवतीति चेति ।

शास्त्रेऽपि यथा—ण्वुल्तृचावित्यादि (अष्टा० ३।१।१३३) । अत्र ण्वुल्तृचोरेकार्थबोधनरूपफलवतोः समानप्रमाणयोर्विरोधाद् विकल्पः । विधिप्रतिषेधयोरपि तुल्यबलत्वे विरोधाद् विकल्पो भवत्येव । यथा वेदे—"अतिरात्रे षोडशिनं गृह्णाति न गृह्णाति" (तै० सं० ६।६।११।४) इति । लोकेऽपि किञ्चिदस्य दीयताम्, न दीयतामिति दानादानयोर्विकल्पः । शास्त्रेऽपि यथा भाष्ये—"वाग्रहणानर्थक्यं विधिनिषेधसामर्थ्यादुभयोः सिद्धत्वात्" इति । अत्रोभयोरित्यस्य विधिनिषेधयोरित्यर्थः ।

**विधिप्रतिषेधयोः खल्वपि तुल्यबलत्वे विरोधाद्विप्रतिषेधमाह—नासिकादिभ्यो विभाषायाः 'सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन।' अयं विधिः स प्रतिषेधो विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः। अयमपि विधिर्न मृदूनामिव कार्पासानां कृतः प्रतिषेधविषय एवारभ्यते। स यथैव बह्वज्लक्षणं संयोगोपधलक्षणं च बाधते। एवं विद्यमानपूर्वलक्षणमपि। तत्र पुरस्तान्मध्येऽपवादा इति बाधकत्वे प्रतिषिद्धे विप्रतिषेधाद्बाधाव्यवस्थाप्यत इति॥ ७७॥**

क्वचित्तु विधिप्रतिषेधयोः खल्वपि तुल्यबलत्वे विरोधाद् विप्रतिषेधमाह—'नासिकादिभ्यो विभाषा 'सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधे विप्रतिषेधेन' (४।१।५५ वा०) [ अत्र 'नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन' इति पाठो न युक्तोऽग्रिमवाक्यशेषविरोधादिति तं पाठमपहाय प्रकृतपाठे बाधत इति शेषो द्रष्टव्यः ]। अयं विधिः स प्रतिषेधः। विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः। अयमपि विधिर्न मृदूनामिव कार्पासानां कृतः प्रतिषेधविषय एवारभ्यते। स यथैव बह्वज्लक्षण संयोगोपधलक्षणञ्च बाधते, एवं विद्यमानपूर्वलक्षणमपि। तत्र 'पुरस्ताद् मध्येऽपवादा' इति बाधकत्वे प्रतिषिद्धे विप्रतिषेधाद् बाधा व्यवस्थाप्यत इति।

अयं भावः—नासिकादिसूत्रेण विभाषया विहितो ङीष् सहनञ्विद्यमानपूर्वेभ्यो विहितं प्रतिषेधं पूर्वविप्रतिषेधेन बाधते। एवं व्यवस्थापित आक्षिपति—नन्वयं विधिर्नासिकादिभ्यो विभाषया विहितो ङीष्विधित्वसामान्याद् दुर्बलः, स प्रतिषेधः सहनञ्विद्यमानपूर्वेभ्यस्तु विहितः प्रतिषेधस्त विधिमप्रबाध्यात्मानमेव न लभत इत्यनवकाशत्वात् प्रबल इत्येवं विधिप्रतिषेधयोरतुल्यबलयोरयुक्तो विप्रतिषेधः। अत्र चशब्दस्तुशब्दार्थे इत्याक्षिप्य प्रतिविधत्ते—अयमपि विधिरिति।

अयं भावः—नासिकादिलक्षणो विभाषाविधिरपि न मृदूनां कार्पासानां कृत इव मृदुः, यतः प्रतिषेधविषय एवारभ्यत इति। तथा च समानविषयत्वाद्विधेरन्यत्र चारितार्थ्यासंभवेन विधिप्रतिषेधयोरुभयोरपि तुल्यबलवत्त्वमेवेति।

अत्रेदमवधेयम्—व्यापकविषयकत्वं हि सावकाशत्वेन विधेर्बाध्यत्वे हेतुः, व्याप्यविषयकत्वञ्च प्रतिषेधस्यानवकाशत्वेन बाधकत्वे। अत्र तु नासिकादिभ्यो विधेरेव व्याप्यविषयकत्वमिति प्रतिषेधापेक्षया प्रबलत्वमिति स यथैव बह्वज्लक्षणं संयोगोपधलक्षणञ्च प्रतिषेधं बाधत एवं विद्यमानपूर्वलक्षणमपीति। तत्रैवं नासिकादिविधेर्बाधकत्वे स्थिते "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति, मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" (परि० ६१) इति च न्यायद्वयेन विद्यमानपूर्वलक्षणप्रतिषेधबाधकत्वे प्रतिषिद्धे पूर्वविप्रतिषेधेन तद्बाधकत्वं व्यवस्थाप्यते वार्त्तिककृतेति।

ननु क्वचिद्विधिप्रतिषेधयोस्तुल्यबलयोस्तत्त्वप्रयुक्तो विकल्प इत्युच्यते, क्वचित्तु तादृशोरेव तयोर्विप्रतिषेधेन बाध्यबाधकभाव इति तत्र वैषम्ये को हेतुरिति चेच्छृणु, असति विप्रतिषेधे विनिगमाविरहाद् विकल्पः। सति तु तस्मिन् विप्रतिषेधे परं कार्यमित्यादिवचनबलाद् बाध्यबाधकभाव इति॥ ७७॥

ऊहोऽस्मिन् विषये न्याय्यः सम्बन्धोऽस्य न बाध्यते ।
सामान्यस्यातिदेशोऽयं विशेषोऽत्रातिदिश्यते ॥७८॥

ऊहः खल्वपि प्रकृतौ समर्थानां विकारे सामर्थ्याभावात् प्रकृतिरूपलिङ्ग-वचनान्तरोपादानेन क्रियते । तद्यथा–प्रकृतावग्नय इत्यग्निशब्दः समर्थोऽङ्गारार्थो दृष्टः । तत्र विकारे सूर्यायेत्यूह इत्येवमादिना निमित्तभेदेन बहुभेदो भवत्यूह इति वैदिकमुदाहरणम् ।

लोकेऽपि यथा–देवदत्तस्योच्चानि गृहाणि आढ्यो वैधवेय इत्यत्र षष्ठ्यन्त-मपोह्य निमित्तवशात् प्रथमान्त ऊह्यते । व्याकरणेऽप्यूहविषयत्वमापन्नाः सर्वे विभक्तिविपरिणामाः । तेषु हि योगान्तरे यथा विभक्त्या सम्बद्धो यः शब्द उप-लब्धस्तत्संबन्धत्यागेनैव विभक्त्यन्तरयोगं स प्रतिपद्यते । तद्यथा–'उपदेशेऽजनु-नासिक इत्, इतो लोपः, भूवादयो धातवः, धातोरनुदात्तेतो ङित आत्मनेपदमि'ति।

---

ऊहः खल्वपि प्रकृतियागे समर्थानां मन्त्राणां देवताभेदेन विकृतियागे समर्थ्याभावाद् अन्यस्य प्रकृतिरूपस्य, लिङ्गस्य, वचनस्य वा परिग्रहेण क्रियते । सोऽयमूह एवं सति त्रिधा संपद्यते । प्रकृत्यूहः, लिङ्गोहः, वचनोह इति । तत्र प्रकृत्यूहो यथा—प्रकृतियागे "अग्नये त्वा जुष्टं निर्वपामि" इत्यत्राग्निशब्दो देवताबोधनसमर्थोऽन्यार्थो इष्ट इत्यतो विकृतियागे तस्य स्थाने 'सूर्याय' इति सूर्यशब्दरूपायाः प्रकृतेरूहः, इत्येवमादिना निमित्तभेदेन बहुभेदो भवत्यूह इति वैदिकमुदाहरणम् ।

लोके विभक्त्यूहो यथा—देवदत्तस्योच्चानि गृहाणि, आढ्यो वैधवेय इति । अत्र विधवाया अपत्यं वैधवेय इत्याक्षेपः । अत्र आढ्यो वैधवेय इति वाक्ये प्रागुक्तं देवदत्तस्येति षष्ठ्यन्तं पदं विधेयबोधकप्रथमान्ताढ्यपदान्वयायोग्यतया उद्देश्यबोधकप्रथमान्तवैधवेयपदा-न्वयायोग्यतया चापोह्य तादृशप्रथमान्तपदद्वयसमभिव्याहाररूपनिमित्तवशात् प्रथमान्त-मूह्यत इति ।

व्याकरणे–विभक्त्यूहविषयत्वमापन्नाः सर्वे विभक्तिविपरिणामाः । तेषु योगान्तरे (सूत्रान्तरे) यथा विभक्त्या सम्बद्धो यः शब्दः उपलब्धस्तत्सम्बन्धत्यागेनैव विभक्त्यन्तरयोगं स प्रतिपद्यते, तद्यथा —'उपदेशेऽजनुनासिक इत्' (पा० १।३।२) 'तस्य लोपः' (पा० १।३।९) अत्र तस्येतिपदेन परामृष्टमित्पदं स्वीयं प्रथमान्तत्वमपोह्य षष्ठ्यन्तत्वं प्रतिपद्यते । 'भूवादयो धातवः' (पा० १।३।१) 'अनुदात्तङित आत्मनेपदम्' (पा० १।३।१२) । अत्र धातोरित्य-धिकाराद् (पा० ३।१।९१) भूवादयो धातवः (पा० १।३।१) इति संज्ञासूत्रमुपतिष्ठते । ततश्च वाक्यैकवाक्यतयाऽयमर्थो लभ्यते—भूवादयो धातुसंज्ञका भवन्ति, तेभ्यश्चानुदात्तङिद्भ्य आत्मनेपदं भवतीति । ततश्च धातव इति प्रथमान्तस्यानुदात्तङित इति पञ्चम्यन्तविशेष्यपद-समभिव्याहारात् पञ्चम्यन्ततया विपरिणामः । किञ्च, बहुवचनान्तस्य तस्य समभिव्याहाराद-नुदात्तङित इत्यस्यापि बहुवचनान्ततया विपरिणाम इति ।

अथोहप्रतिपक्षभूतं सम्बन्धाबाधनमपि निदर्श्यते। यथा देवदत्तस्योच्चानि गृहाणि युक्तं तान्यभिजातस्येति। अत्र यद्विभक्त्यन्तस्यैव श्रुतिः, तथा वाक्यान्तरेऽप्यभिसम्बन्ध इति। तथा बदरी सूक्ष्मकण्टका मधुरा वृक्षः, पञ्चाला जनपद इत्येवमादिषु सम्बन्धाबाधनं भवतीत्याहुः।

वेदेऽपि यथा—यजमानं दण्डेन दीक्षयति, अद्भिर्दीक्षयति, मेखलया दीक्षयतीत्यत्र यजमानमित्यबाधितमेव सम्बध्यते। शास्त्रेऽपि—बहुगणवतुडतिसंख्ये (पा० १।१।२३) ति योगे विधीयमानसम्बन्धस्य स्वरूपपदार्थकस्य संख्याशब्दस्य श्रुतस्य योगान्तरे संज्ञिविशेषणत्वं विज्ञायते। ष्णान्ता संख्या षट्संज्ञा भवतीति।

अथातिदेशनिर्देशः क्रियते। अन्यत्रान्यधर्मपरिप्रापणमतिदेशः। तस्य च द्वौ प्रकारौ सामान्यातिदेशो विशेषातिदेशश्चेति। सामान्यातिदेशो यथा—अन्यत्र रूढसम्बन्धा धर्मा निर्ज्ञातभेदेष्वर्थेषु प्रसिद्धेरनुमेयभेदसम्भवैः सम्बन्धिभिर्व्यपदिश्यन्ते। तद्यथा—ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र यावानर्थो ब्राह्मणशब्दं न व्यभिचरति तावत्यर्थे यानि सम्बद्धानि कार्याणि तान्यत्यन्तमलब्धब्राह्मणव्यपदेशे

---

अथोहप्रतिपक्षभूत सम्बन्धाबाधनमपि निर्दिश्यते। यथा देवदत्तस्योच्चानि गृहाणि, युक्तं तान्यभिजातस्येति। अत्राभिजातस्य महाकुलप्रसूतस्य तस्य तत्त्वादेव तानि उच्चानि गृहाणि सन्तीति युक्तमित्यर्थः। अत्र यद्विभक्त्यन्तस्यैव श्रुतिः प्राक् षष्ठ्यन्तस्य देवदत्तस्येति पदस्य, तस्यैव वाक्यान्तरेऽप्यभिसम्बन्धः, अभिजातस्येति षष्ठ्यन्तविशेषणवाचकपदान्वययोग्यत्वादिति। एवं लिङ्गभेदे वचनभेदेऽपि च क्वचित् सम्बन्धाबाधनं भवत्यूहप्रतिपक्षः। तद्यथा—बदरी सूक्ष्मकण्टका मधुरा मधुरफला वृक्षः। अत्र स्त्रीलिङ्गस्यापि बदरीपदस्य वृक्ष इत्यनेन सम्बन्धाबाधनं लिङ्गोहप्रतिपक्षभूतं भवति। बदरीवृक्षपदयोर्द्वयोरपि नियतलिङ्गत्वात्। एवं पञ्चाला जनपद इत्यत्र बहुवचनान्तस्यापि पञ्चाला इति पदस्य जनपद इत्यनेन सम्बन्धाबाधनं वचनोहप्रतिपक्षभूतं भवति, द्वयोरपि पदयोर्नियतवचनकत्वादित्येवमादिषु सम्बन्धाबाधनं भवतीत्याहुः।

वेदेऽपि सम्बन्धाबाधनं यथा—'यजमानं दण्डेन दीक्षयति' (तै० सं० ३।१।५।११)। अद्भिर्दीक्षयति, मेखलया दीक्षयति (तै० सं० ६।१।३।५०)। अत्र सर्वत्रापि यजमानमिति द्वितीयान्तमबाधितमेव सम्बध्यते। शास्त्रेऽपि यथा—'बहुगणवतुडतिसंख्या' (पा० १।१।२३) इति योगे विधीयमानसम्बन्धस्य स्वरूपपदार्थकस्य संख्याशब्दस्य श्रुतस्य योगान्तरेऽबाधितस्यैव संज्ञिविशेषणत्वं = तादात्म्येन विशेषणतया संज्ञिपदार्थकत्वम् विज्ञायते। ष्णान्ता संख्या षट्संज्ञा (अष्टा० १।१।२७) भवतीति।

अथातिदेशनिर्देशः क्रियते। अन्यत्रान्यधर्मपरिप्रापणमतिदेशः। तस्य च द्वौ प्रकारौ—सामान्यातिदेशो विशेषातिदेशश्चेति। तत्र सामान्यातिदेशो यथा—अन्यत्र रूढसम्बन्धा धर्मा निर्ज्ञातभेदेष्वर्थेषु प्रसिद्धेरनुमेयभेदसंभवैः सम्बन्धिभिर्व्यपदिश्यन्ते। तद्यथा

क्षत्रियेऽतिदिश्यन्ते। तथा गुरुवद् गुरुपुत्रे वर्तितव्यमिति। वेदे यथा—दर्शपूर्णमासवदन्येष्वपि यागेषु प्रचरितव्यमिति। शास्त्रेऽपि—'स्थानिवदादेशोऽनल्विधौ' इति।

अथ विशेषातिदेशः। निर्ज्ञातसामान्यकार्येषु ब्राह्मणादिषु पुनरतिदेशसामर्थ्याद्विशिष्टप्रकृतिगतकार्यातिदेशः। यथा ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यमिति। अत्र

---

क्षत्रियादन्यत्र ब्राह्मणे रूढसम्बन्धः प्रसिद्धसंबन्धः धर्मो ब्राह्मणत्वम्, ब्राह्मणान्निर्ज्ञातभेदे क्षत्रियरूपेऽर्थे व्यपदिश्यते। तत्र हेतुः—अनुमेयभेदसंभवैः सम्बन्धिभिरिति। अनुमेय आश्रयभेदो वैयधिकरण्यम्, सम्भवः सामानाधिकरण्यञ्च येषां धर्माणां तैस्तथाभूतैः सम्बन्धिभिः, अतिदेशविशेष्ये क्षत्रिये संबद्धैस्त्रिषवणस्नानजपदयादाक्षिण्यसत्यभाषणादिभिर्ब्राह्मणधर्मैः क्षत्रिये ब्राह्मणत्वव्यपदेशे निमित्तभूतैरिति हेतुपदद्वयस्य व्यपदिश्यत इत्यनेन सम्बन्धः। प्रसिद्धेरित्यस्यापि तत्रैव सम्बन्धः। ब्राह्मणत्वसमानाधिकरणानां ब्राह्मणसाधारणधर्माणां त्रिषवणस्नानादीनां प्रागुक्तानां क्षत्रिये प्रसिद्धेरिति तदर्थः।

किञ्च, ब्रह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र यावानर्थो ब्राह्मणशब्दं न व्यभिचरति यथा ब्राह्मणत्वम्; तावत्यर्थे ब्राह्मणत्वविशिष्टे यानि सम्बद्धानि कार्याणि, अग्रासनकुशलप्रश्नानुगमनादीनि तान्यत्यन्तमलब्धब्राह्मणव्यपदेशे क्षत्रियेऽतिदिश्यन्ते। यस्त्वर्थो ब्राह्मणशब्दं व्यभिचरति यथा उपाध्यायत्वादिः, आपदि ब्राह्मणेतरस्याप्युपाध्यायत्वसम्भवात्। स तु नातिदिश्यते। योऽपि च नमस्कार्यत्वादिर्धर्मः क्षत्रिये ब्राह्मणकर्तृकनमस्कारानर्हे पर्युदस्तः सोऽपि नातिदिश्यते, अतिदेशापेक्षया प्रतिषेधवचनस्य बलीयस्त्वात्। एवं योऽप्यतिदिश्यमानधर्मव्याप्यो धर्मः सोऽपि नातिदिश्यते, अतिदिश्यमानधर्माव्यभिचार्यपि। यथा प्रकृते ब्राह्मणत्वेऽतिदिश्यमाने कौण्डिन्यत्वादिर्नातिदिश्यत इत्यतिदेशस्वभावात्। तदेतदुच्यते—'सामान्यातिदेशे विशेषानतिदेशः' इति।

एवं गुरुवद् गुरुपुत्रे वर्तितव्यमिति। अत्र सामान्यधर्मा वचनानुसरणनमस्कारादयोऽतिदिश्यन्ते, उच्छिष्टभोजनपादसंवाहनादयस्तु गुरुपुत्रे प्रतिषिद्धा धर्मा नातिदिश्यन्ते। वेदे यथा—दर्शपूर्णमासवदन्येष्वपि यागेषु प्रचरितव्यमिति। शास्त्रेऽपि यथा—स्थानिवदादेशोऽनल्विधाविति (पा० १।१।५६)।

अथ विशेषातिदेशः। यत्र ब्राह्मणादिषु ब्राह्मणत्वादिजातियुक्तानि सामान्यकार्याण्यग्रासनानुगमनकुशलप्रश्ननमस्कारादीनि निर्ज्ञातानि तत्र पुनरस्मिन् ब्राह्मणे ब्राह्मणवद् वर्तितव्यमित्यतिदेशफलाभावेऽप्यतिदेशसामर्थ्याद् विशिष्टप्रकृतिगतं श्रोत्रियादिब्राह्मणसम्बद्धम् विशिष्टं कार्यं कार्यविशेषः अर्घोपनयनादिरतिदिश्यते। अत्र ये ब्राह्मणे ब्राह्मणवदेव वर्तन्ते तान् प्रत्ययमेवंभूतोऽतिदेशो विज्ञायते। येषां तूच्छास्त्रगामिनां बुद्ध्यसंभेदात् (शास्त्रीयबुद्धिभेदात्, शास्त्रीयबुद्धिविप्रणाशादिति यावत्) प्रसङ्गाद्वा विषयेषु प्रकृष्टात्सङ्गाद् वा राग-

ये ब्राह्मणे ब्राह्मणवदेव वर्तन्ते तान् प्रत्ययमेवंभूतोऽतिदेशो विज्ञायते। येषां तु संभेदात् प्रसङ्गाद्वा व्यतिकरस्तेषु नियम एव क्रियते। उक्तं च—

सामान्यमात्रं शब्दार्थौ विशेषा व्यभिचारिणः।
सामर्थ्यमन्तरेणातो विशेषो नातिदिश्यते॥ इति।

तत्र वेदे यथा—'आग्नेयवत् सौर्यं' इत्यत्रैकदेवताकस्यैकदेवताकसंबन्ध्येव विध्यन्त इति। विध्यन्त इतिकर्तव्यतोच्यते।

शास्त्रे रूपातिदेशादिभिः षड्भिः प्रकारैर्विशेषातिदेशः परिदृश्यते। तत्र रूपातिदेशो यथा—'द्विर्वचनेऽचि' इत्यत्र हि धातुरूपमेवादेशस्यातिदिश्यते। ततश्च 'या' 'क्न' इत्यादीनामेव द्विर्वचनं भवति। यथा—ययतुश्चक्नतुरिति।

---

ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यमिति वाक्येन 'अस्मिन् ब्राह्मणे ब्राह्मणवद् वर्तितव्यमेव' इत्येवंरूपो नियम एव क्रियते। यद्यपि पूर्वोदितेष्वधिकर्तृषु प्रागुक्तरीत्या ब्राह्मणोचित-सामान्यकार्याग्रासनादिकर्तृत्वस्याप्राप्त्येदं वाक्यं तद्विधानपरमेव, विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सतीति विधिनियमयोर्लक्षणभेदात्; तथापि तेष्वप्राप्तस्याग्रासनादिकर्तृत्वस्य विधानेन तत्कर्तृत्वाभावस्य स्वाभाविकस्य निषेधं फलितमादायायमत्र नियमत्वव्यवहार इति सन्तोष्टव्यम्। उक्तञ्च—

सामान्यमात्रं शब्दार्थौ विशेषा व्यभिचारिणः।
सामर्थ्यमन्तरेणातो विशेषो नातिदिश्यते' इति।

अस्यार्थः—अस्मिन् ब्राह्मणे ब्राह्मणवद् वर्तितव्यमित्यत्र सामान्यमात्रम्, ब्राह्मणत्वं तत्समानाधिकरणान्यग्रासनादीनि च कार्याणि। शब्दार्थौ ब्राह्मणवदित्यत्र यथाक्रमं प्रकृत्यर्थः प्रत्ययार्थश्च। विशेषास्तु श्रोत्रियादिगता अर्घोपनयनसंप्रदानत्वादयो व्यभिचारिणः. ब्राह्मण-त्वाभाववद्वृत्तयः, राजजामात्रादिष्वपि सत्त्वात्। अतो येषु पुरुषेषु ब्राह्मणे निर्ज्ञातसामान्य-कार्येष्वस्मिन् ब्राह्मणे ब्राह्मणवद् वर्तितव्यमित्यतिदेशस्य वैयर्थ्यं प्राप्तं तेष्वतिदेशसामर्थ्यमन्तरेण विशेषोऽर्घोपनयनसंप्रदानत्वादिरूपो धर्मो नातिदिश्यत इति निर्ज्ञातसामान्यकार्यान् पुरुषान् प्रत्येवायमतिदेशः। ये तु न तथा, तान् प्रति विधायकं सत् प्रागुक्तरीत्या नियमपरमेवेदं वाक्यम् तत्र पक्षेऽत्र वत्करणं त्वतिदेशसंच्छायं संपद्यते, द्रष्टव्य इत्यादिविधिसच्छायवाक्यवत्। अत्र पक्षे वत्करणस्याविवक्षितत्वेऽपि तन्त्रेण तथा निर्देशस्तु लाघवार्थं इति।

तत्र वेदे विशेषातिदेशो यथा—प्रकृतिवद् विकृतिः कर्तव्येति संग्राहकस्य सामान्यवाक्य-स्य प्रतिलक्ष्यं लक्षणोपप्लवाभ्युपगमेन 'आग्नेयवत् सौर्यम्' इत्युपप्लवे एकदेवताकत्वेनैकदेवता-काग्नेययागविकृतिभूतस्य सौर्ययागस्यैकदेवताकाग्नेययागसम्बन्ध्येव विध्यन्तोऽतिदिश्यत इति। अत्र विध्यन्तपदेनेति कर्तव्यतोच्यते।

व्याकरणशास्त्रे—रूपातिदेशादिभिः षड्भिः प्रकारैर्विशेषातिदेशः परिदृश्यते। तत्र रूपातिदेशो यथा—'द्विर्वचनेऽचि' (पा. १।१।५९) इत्यत्र स्थानिवदित्यस्यानुवृत्त्या या + अतुस्

निमित्तातिदेशो यथा—पूर्ववत्सन इति। अत्र पूर्वस्य यन्निमित्तमात्मनेपदे ङकारादि तदेव सन्नन्तस्यातिश्यत इति।

तादात्म्यातिदेशो यथा—'सुबामन्त्रिते पराङ्गवत् स्वरे' इति। सुबन्तमामन्त्रितस्य मृत्पासूदकवत् तादात्म्यमापद्य तत्स्वरं लभत इति।

शास्त्रातिदेशः कार्यातिदेशो वा यथा—कर्मवत्कर्मणा तुल्यक्रिय इति। अत्र हि शास्त्रातिदेशे यकः शपा बाधनं स्यादिति यग्विधौ कर्मकर्तर्युपसंख्यानमारभ्यते। विप्रतिषेधाद्धि शपो बलीयस्त्वमिति। कार्यातिदेशे तु कर्मवत्कर्मणेत्यनेनैव यग्विधीयत इति यक एव परत्वान्नास्त्यस्य शपा बाधेति नोपसंख्यानारम्भः।

व्यपदेशातिदेशस्तु–व्याकरणे नैव सम्भवति, संज्ञापक्षादविशेषाद् वत्करणवैफल्यप्रसङ्गाच्चेति ॥७८॥

---

इत्यत्रातो लोपे, कृ+अतुस् इत्यत्र यणादेशे च कृते स्थानिवद्रूपातिदेशेन 'या' 'कृ' इत्यादीनामेव द्विर्वचनं भवति। यथा—ययतुश्चक्रतुरिति।

निमित्तातिदेशो यथा—पूर्ववत्सनः (१।३।६२) इति। अत्र पूर्वस्य सन्प्रकृतिरूपस्यात्मनेपदे यन्निमित्तं ङकारादि तदेव सन्नन्तस्यातिदिश्यत इति 'एदिधिषते' इत्यादौ सन्नन्तादात्मनेपदं भवति।

तादात्म्यातिदेशो यथा—सुबामन्त्रिते पराङ्गवत्स्वरे ( पा० २।१।२ ) इति। यथा—"स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति। अत्र व्रीहीणामिति सुबन्तं मेधेत्यामन्त्रितस्य भृत्यां सूदकवत्तादात्म्यमापद्यामन्त्रितस्वरं लभत इति।

शास्त्रातिदेशः कार्यातिदेशो वा यथा—'कर्मवत्कर्मणा तुल्यक्रियः' (पा० ३।१।८७) इति। कर्मणा=कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवच्छास्त्रं कार्यं वा लभत इत्यर्थः। कर्मवदित्यत्र तुल्यार्थे वतिर्योग्यत्वात्। अत्र हि शास्त्रातिदेशे यकः शपा बाधनं स्यादिति यग्विधौ कर्मकर्तर्युपसंख्यानमारभ्यते (महाभा० १।१।६७)। परविप्रतिषेधाद्धि शपो बलीयस्त्वमिति। कार्यातिदेशे तु कर्मवत्कर्मणा इति सूत्रेणैव यग् विधीयत इति यक एव परत्वान्नास्त्यस्य शपा बाधेति नोपसंख्यानारम्भ इति।

व्यपदेशातिदेशस्तु—लोके सम्भवन्नपि व्याकरणे नैव सम्भवति। तद्यथा लोके—अयं क्षत्रियो ब्राह्मणवद् व्यपदेश्य इति। व्यपदेशोऽत्र व्यवहारः। स चात्र ब्राह्मणवाचकशब्दपूर्वकः। व्यपदेशातिदेशसामर्थ्याच्च ब्राह्मणे कर्तव्यानामग्रासनादिकार्याणां क्षत्रियेऽतिदेश इति। व्याकरणे तु व्यपदेशातिदेशो नैव सम्भवति। संज्ञापक्षाद् विशेषात् संज्ञासंज्ञिनोस्तादात्म्ये शास्त्रसम्मते 'यूस्त्र्याख्यौ नदी'वदिति वत्करणस्य वैफल्यप्रसङ्गाच्चेति ॥७८॥

**अर्थित्वमत्र सामर्थ्यमस्मिन्नर्थो न भिद्यते ।**
**शास्त्रात् प्राप्ताधिकारोऽयं व्युदासोऽस्य क्रियान्तरे ॥ ७९ ।**

अथाधिकारस्य निदर्शनम्। अर्थित्वं सामर्थ्यं शास्त्रापर्युदासयोगित्वमधिकारः स विद्यते यस्यासावधिकारी। अर्थित्वमधिकारकारणम्। परं हि पुरुषार्थमत्रापवर्गमाचक्षते। अस्मादप्यर्थी प्रमाद्यति कश्चिदिति सत्येवार्थित्वे सामर्थ्यमधिकारकारणम्। उत्पन्नायामपि ह्यभिनयदिदृक्षायामन्धो दर्शने नाधिक्रियते। अर्थिनः खल्वपि सामर्थ्याभावः केषुचित्कर्मसु शास्त्रेण पर्युदासात्। यथा शूद्रास्त्रय्यां नाधिक्रियन्ते। अदृष्टार्थविशेषे हि सामर्थ्यासामर्थ्ये शास्त्रादेव समधिगम्येते। तस्मात् प्रधानमधिकारकारणं शास्त्रोपदेशमाचक्षते। तत्र लोके यथा—अद्यप्रभृति त्वमत्र ग्रामे नगरे वाऽधिकृत इति राजा नियुङ्क्ते।

---

अथाधिकारस्य निदर्शनम्। अधिकारोऽत्र योग्यता। स च लोके वेदे च कर्तृत्वशक्तिरूपा। व्याकरणशास्त्रे च करणत्वशक्तिरूपा। शब्दसाधुत्वज्ञापने व्याकरणस्य करणत्वात्, आचार्यस्य तु कर्तृत्वात्। सा चार्थित्वादित्रयज्ञाप्यत्वेनार्थित्वादित्रयप्रयोज्येत्यर्थित्वादित्रयरूपतयाऽत्र व्यपदिश्यते। प्रयोज्यप्रयोजकयोरभेदोपचारात्।

तदुक्तं हेलाराजीयेऽत्रैव— 'अर्थित्वमधिकारकारणमिति। तथा चार्थित्वम्, सामर्थ्यम्, शास्त्रापर्युदासयोगित्वमिति त्रितयमधिकारः, स विद्यते यस्यासावधिकारीति। अधिकारः फलस्वाम्यमित्यपि वदन्ति। तस्यापि कर्मद्वारा प्रयोजकमर्थित्वादिकम्। फलञ्च कर्मणां लौकिकानां वैदिकानां वा यथासम्भवं चतुर्विधपुरुषार्थरूपम्। तत्र स्वाम्यधिकारः, तन्निष्पादनयोग्यता वा तत्तत्कारकशक्तिरूपा वा।'

अत्र यद्यपि व्याकरणशास्त्रे फलार्थित्वं न सम्भवति, तथापि प्रयोक्तृगतं तत्तत्रोपचर्यते। अत्र सामर्थ्यमपि त्रिविधम्—शरीरनिष्ठं करणनिष्ठं वित्तकृतञ्च। येनार्थेनार्थित्वमत्राधिकारकारणम्, तमत्र परं पुरुषार्थमपवर्गमाचक्षते। कश्चिदर्थी अस्मादपि प्रमाद्यति = सत्यप्यर्थित्वेऽपवर्गे न प्रयतते सामर्थ्याभावादिति हेतोः सत्येवार्थित्वे सामर्थ्यमप्यधिकारकारणम्। उत्पन्नायामपि ह्यभिनयदिदृक्षायामन्धस्तद्दर्शने नाधिक्रियते। अर्थिनः खल्वपि सामर्थ्याभावः केषुचित् कर्मसु, शास्त्रेण पर्युदासात्। तद्यथा—शूद्रास्त्रय्यां नाधिक्रियन्ते। पद्यु ह वा एतच् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति (१।३।३८ शारीरकभाष्यधृतश्रुतिः), 'न शूद्राय मतिं दद्याद्' (मै० उ० ४।८०) इत्यादिश्रुतिस्मृतिवचनेभ्यः। अदृष्टैकफले हि कर्मणि कर्तृनिष्ठे सामर्थ्यासामर्थ्ये शास्त्रादेव समधिगम्येते। तस्मात् कर्मसु प्रधानमधिकारकारणं शास्त्रोपदेशज्ञाप्यं सामर्थ्यमाचक्षते। तत्र लोके यथा—अद्यप्रभृति त्वमत्र ग्रामे नगरे वाऽधिकृत इति राजा नियुङ्क्ते।

वेदे यथा—'अग्निहोत्रं जुहुयात् स्वर्गकामो ब्राह्मणः' इत्यत्र ब्राह्मणस्यार्थित्वादिभिरधिकार इति। शास्त्रस्य तु शब्दार्थपुरुषधर्मेष्वधिकारः।

तत्र षोढा शब्दः—साधुरसाधुश्च। साधुरपि शास्त्रीयः प्रायोगिकश्च। शास्त्रीयोऽपि त्रेधा—प्रतिपाद्यः, प्रतिपादकः, उभयरूपश्च। तत्र प्रतिपाद्यो यथा—दाधर्त्यादिर्निपात्यमानः। प्रतिपादको यथा—प्रकृतिप्रत्ययादिः। तेन हि कुम्भकारादिः प्रयोगस्थः प्रतिपाद्यते। उभयरूपो यथा—इतव्यशब्दः। स हि तव्यशब्देन प्रतिपाद्यते। प्रयोगस्थं च स इतव्यशब्दं प्रतिपादयति।

प्रायोगिकश्च लौकिकवैदिकभेदेन द्विधा—इत्येवमसाधुना सह षोढा शब्दः। तेषु मध्ये प्रतिपाद्येषु व्याकरणशास्त्रस्याधिकारः, न प्रकृत्यादिषु। नहि ते व्याकरणेन व्युत्पाद्यन्त इति।

अर्थोऽष्टादशधा। तत्र वस्तुमात्रमभिधेयश्च। अभिधेयोऽपि द्विधा—शास्त्रीयो लौकिकश्च। पुनरपि विशिष्टावग्रहसंप्रत्ययहेतुस्तद्विपरीतश्च, मुख्यः परिकल्पितरूपविपर्यासश्च, व्यपदेश्योऽव्यपदेश्यश्च, सत्त्वभावमा-

---

वेदे यथा—अग्निहोत्रं जुहुयात् स्वर्गकामो द्विजातिः (मै० उ० ६।३६)' इत्यत्रार्थित्वादिरूपेण हेतुत्रयेण द्विजातेरेवाधिकार इति कल्प्यते।

तत्र द्विजातिपदाश्रवणेऽपि शूद्रस्योपनयनाभावे वेदानधिकारेण तत्साध्यकर्मस्वपि अनधिकारः। व्याकरणशास्त्रस्य तु स्वज्ञाप्ये साधुशब्दे, स्वज्ञाप्ये तदर्थे, साधुशब्दप्रयोगसाध्ये पुरुषगते धर्मे = वक्तृत्वप्रतिपत्तृत्वादिरूपे फलेऽधिकारः करणत्वशक्तिरूपयोग्यतारूपः प्रागुक्तः।

तत्र षोढा शब्दः—साधुरसाधुश्च। साधुरपि शास्त्रीयः प्रायोगिकश्च। शास्त्रीयोऽपि त्रेधा। प्रतिपाद्यः, प्रतिपादकः, उभयरूपश्च। तत्र प्रतिपाद्यो यथा—दाधर्त्यादिर्निपात्यमानः। प्रतिपादको यथा—प्रकृतिप्रत्ययादिः। तेन हि कुम्भकारादिः प्रयोगस्थः प्रतिपाद्यते। उभयरूपो यथा—इतव्यशब्दः। स हि विधिसूत्रे उपात्तेनाऽऽगमविधायकसूत्रसहकृतेन तव्यशब्देन प्रतिपाद्यत इति प्रतिपाद्यरूपः। स चोक्तरीत्या तव्यशब्देन प्रतिपाद्यमान इतव्यशब्दो भवितव्यमित्यादिप्रयोगगतमितव्यशब्दं प्रतिपादयतीति प्रतिपादकोऽपीत्येवमुभयरूपः।

प्रायोगिकश्च शब्दो लौकिकवैदिकभेदेन द्विधा। तत्र लौकिको देवैरिति। वैदिको देवास इति। इत्येवं पञ्चसु साधुशब्दभेदेषु सत्स्वसाधुशब्दमादाय षोढा शब्दः। तेषु मध्ये निपातनेन प्रकृतिप्रत्ययादिभिश्च प्रतिपाद्येषु शब्देषु व्याकरणशास्त्रस्याधिकारः, तेषां तत्फलत्वात्, न तु प्रकृत्यादिषु यतो न प्रकृतिप्रत्ययादयो व्याकरणेन साधुत्वेन व्युत्पाद्यन्ते, किन्तु परिनिष्ठिता एवेति।

अर्थोऽष्टादशधा। तथाहि—वस्तुमात्रमभिधेयश्च। तत्र वस्तुमात्रं बाह्योऽर्थः। अभिधेयस्तु बौद्धः। अभिधेयोऽपि द्विधा। शास्त्रीयो लौकिकश्च। अन्यैरपि प्रकारैरभिधेयस्य द्विधात्वं संपद्यते। तद्यथा—विशिष्टावग्रहसंप्रत्ययहेतुः, तद्विपरीतश्च। मुख्यः परिकल्पितरूप-

पन्नोऽसत्त्वभूतश्च, स्थिरलक्षणो विवक्षाप्रापितसंनिधानश्च, अभिधीयमानः प्रतिपाद्यमानश्च, अभिसंहितो नान्तरीयकश्चेति। तत्र वस्तुमात्रं बाह्यार्थो यो वक्तुं प्रतिपादयितुं न समीहितः। यस्तु समीहितोऽसावभिधेयः। तत्रैव च शब्दस्याधिकारः।

स च द्विधा शास्त्रीयलौकिकभेदेन। तत्र शास्त्रीय आवापोद्धारिकः। लौकिकस्त्वखण्डः। लौकिके चार्थे शब्दस्याधिकारो न शास्त्रीये। शास्त्रीयो हि पौरुषेयः परिकल्पितः।

एवमतथाभूतोऽपि शब्दसाधुत्वस्य निमित्तभावेन प्रतिपादको विज्ञायते। अतश्च तस्य व्यभिचारेऽप्यव्यभिचार एव स्मर्तॄणाम्। स चानियतावधिर्बहुधा प्रविभज्यते व्याख्यातृभिः।

विशिष्टावग्रहसंप्रत्ययहेतुर्यथा—कंसं घातयति, बलिं बन्धयतीति। अत्र ह्यर्थो न तथाभूतोऽपि तु विशिष्टाकारेणैव सम्प्रत्ययेन गोचरीकृतो व्यवहारविषयतामनुपतति। तद्विपरीतो यो बहिरेव तथा व्यवस्थितः। यथा गौः शुक्ल इत्यादि।

---

विपर्यासश्च। व्यपदेश्योऽव्यपदेश्यश्च। सत्त्वभावमापन्नोऽसत्त्वभूतश्च। स्थिरलक्षणो विवक्षाप्रापितसन्निधानश्च। अभिधीयमानः प्रतिपद्यमानश्च। अभिसंहितो नान्तरीयकश्चेत्येवमभिधेयभेदाः षोडश। तत्र वस्तुमात्रं बाह्योऽर्थो यो वक्तुं प्रतिपादयितुञ्च न समीहितः। देशविप्रकृष्टेन कालविप्रकृष्टेन च बाह्यार्थेन सह शब्दस्य सम्बन्धासम्भवेन तस्य तेन वक्तुं प्रतिपादयितुं चाशक्यत्वात्। यस्तु वक्तुं प्रतिपादयितुञ्च समीहितः = इष्टः बौद्धोऽर्थोऽसावभिधेयः। तत्रैव चार्थे स्वज्ञाप्ये फलभूते साधुशब्दस्याधिकारः।

स चाभिधेयोऽर्थो द्विधा—शास्त्रीयो लौकिकश्चेति। तत्र शास्त्रीय आवापोद्धारिकः प्रकृत्यर्थप्रत्ययार्थादिः। लौकिकस्त्वखण्डः। लौकिके चार्थे ज्ञाप्यत्वेन फलभूते शब्दस्याधिकारो न शास्त्रीये। शास्त्रीयो हि पौरुषेयः परिकल्पित इति पुरुषमतिप्रभवत्वादनियतः।

एवं शब्दाधिकारागोचरोऽपि शास्त्रीयोऽर्थः शब्दसाधुत्वस्य निमित्तभावेन लौकिकार्थस्य प्रतिपादको विज्ञायते। अतश्च तत्तद्व्याकरणस्मृत्यनुसारेण शास्त्रीयार्थस्य व्यभिचारेऽपि लौकिकार्थस्याव्यभिचार एव स्मर्तॄणां पाणिन्यादीनां तदनुगन्तॄणाञ्चास्मदादीनाम्। स च शास्त्रीयोऽर्थः स्मर्तृपुरुषमतिभेदेनानियतावधिर्बहुधा प्रविभज्यते व्याख्यातृभिः।

तत्र विशिष्टावग्रहसंप्रत्ययहेतुः = विशिष्टस्य विशिष्टाकारस्यावग्रहः परिग्रहो यस्मिन् संप्रत्यये तादृशस्य संप्रत्ययस्य विषयविधया हेतुरर्थः। यथा—नटः कथावाचको वा—कंसं घातयति, बलिं बन्धयति वेत्यत्र हि कंसवधमाचष्टे, बलिबन्धमाचष्ट इत्यर्थे यथाक्रमं शास्त्रेण व्युत्पाद्यमानमपीदं वाक्यद्वयं लोके प्रयुज्यमानं नेमं व्युत्पत्तिनिमित्तं स्वार्थमभिधत्ते, (कृष्णकर्तृको यः कंसवधस्तदनुकूलव्यापारस्यैव, वामनकर्तृको यो बलिबन्धस्तदनुकूलव्यापारस्यैव च यथास्वं वाक्यद्वयात्प्रतीतेः। अत एव आहुः—"अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्। शयानायामपि गवि 'गौः शेते' इति प्रयोगदर्शनात्" इति।

मुख्यो यथा सास्नादिमान् गौरिति। परिकल्पितो निमित्तवशेन रूपविपर्यासो यस्यासौ परिकल्पितनिमित्तरूपविपर्यासो गौणोऽर्थ उच्यते। यथा गौर्वाहीक इति। व्यपदेश्य आवापोद्धारिक (अपोद्धारिकः) एव जातिर्वा द्रव्यं वेत्येवमुक्त इति। अव्यपदेश्यस्त्वखण्ड एव वाक्यार्थलक्षण इति।

सत्त्वभावमापन्नो व्यपदेश्य एवावापोद्धारिकसंज्ञकः। असत्त्वभूतो वाक्यार्थलक्षण एव। उक्तिभेदादेवात्र प्रायशो भेदकथनम्। स्थिरलक्षणो यथा—राजपुरुष इत्यत्र राजसंबन्धित्वं पुरुषस्य, तद्धि न व्यभिचरति।

विवक्षाप्रापितसन्निधानो यथा—राज्ञः पुरुषस्येति। अत्र हि संबन्धित्वं व्यभिचरति, विशेषणाविशेष्ययोर्यथेष्टत्वात्। अभिधीयमानो यथा—राजसख इत्यत्र राज्ञः सखाऽयमित्यर्थोऽभिधीयते। तस्मिंस्त्वभिधीयमाने राजा सखाऽस्येत्ययमर्थः प्रतीयमान एव।

---

तथा चात्र शास्त्रेण व्युत्पाद्यमानोऽर्थो न तथाभूतः = शास्त्रेण यथा प्रतिपाद्यते लोके तथाभूतो न, लोकेऽप्रतीयमानत्वात् सत्यो नेति यावत् अपि तु विशिष्टाकारेणैव संप्रत्ययेन कृष्णकर्तृककंसवधानुकूलव्यापारविषयकः, वामनकर्तृकबलिबन्धानुकूलव्यापारविषयकश्च यः संप्रत्ययो ज्ञानं तेन गोचरीकृतो योऽर्थः, स एव लोके व्यवहारविषयतामनुपतति। अत एव लोकेऽव्याहतं व्यवहरन्ति, अद्य कथायामभिनये वा कंसो घातितः, घात्यते, घातयिष्यते वा, बलिर्बद्धः, बध्यते, बन्धिष्यते वेति। स चैवं प्रतीयमानस्तथाविधोऽर्थो बौद्धो न तु बाह्यस्तस्यातीतत्वादित्यभिधेय इति।

द्वितीयस्त्वभिधेयविपरीतोऽर्थो यो बहिरेव तथा व्यवस्थितः यथा प्रतीतिव्यवस्थितः। यथा गौः शुक्ल इत्यादिः। मुख्यो यथा—सास्नादिमान् गौरिति। परिकल्पितो निमित्तवशेन = सादृश्यरूपं यद् गोत्वादिरूपपररूपाध्यारोपनिमित्तं तद्वशेन रूपविपर्यासः = स्वरूपविपर्ययः यस्य बाहीकादिरूपस्यार्थस्य = आरोपविशेष्यस्यासौ परिकल्पितरूपविपर्यासो गौणोऽर्थ उच्यते। यथा गौर्बाहीक इति। व्यपदेश्यस्त्वपोद्धारिक एव = अपोद्धारोऽस्यास्तीत्यपोद्धारिकः, मत्वर्थे ठन् प्रत्ययः जातिर्वा द्रव्यं वेत्येवमुक्तः = जातिद्रव्यादिपदाभिलप्यः। अव्यपदेश्यस्त्वखण्ड एव वाक्यार्थलक्षण इति।

लिङ्गसंख्याद्यन्वयित्वरूपं सत्वभावमापन्नो = द्रव्यभूतः व्यपदेश्य एवापोद्धारिको यः। असत्त्वभूतो वाक्यार्थलक्षण एव। शब्दभेदादेवात्र प्रायशो भेदकथनम्, न तु वस्तुगत्याऽर्थव्यक्तिभेदः। स्थिरलक्षणः = स्थिरम् = अव्यभिचारि, लक्षणम् = स्वरुपं यस्य स तथाभूतः यथा—राजपुरुष इत्यत्र राजसबन्धित्वं पुरुषस्य स्थिरलक्षणोऽर्थः। तद्धि पुरुषं न व्यभिचरति; किन्तु पुरुष एव नियमेन वर्तत इति।

विवक्षाप्रापितसंनिधानो यथा—राज्ञः पुरुषस्येति। अत्र हि सम्बन्धित्वरूपोऽर्थो विवक्षाप्रापितसंनिधानो व्यभिचारी। तथा हि—अत्र विवक्षया कदाचिद् राजसम्बन्धित्वं

अभिसंहितो यथा—गोशब्दे जातिर्द्रव्यं वेति। नान्तरीयको यथा तत्रैव वर्णसंस्थानादिः—इत्येवमभिधेयभेदा उपदर्शनीयाः।

पुरुषधर्मा वक्तृत्वप्रतिपत्तृत्वप्रभृतयः। तत्र वक्तृधर्मा आबाधः, असूयाऽसम्मतिकोपकुत्सनभर्त्सनादयश्चेति। प्रतिपत्तृधर्मास्तु कुत्स्यमानत्वप्रभृतय एव। तत्र शास्त्रस्य प्लुतद्विर्वचनादिविधायकत्वेनाधिकार इति।

अत्र च य एव धर्माः शब्दानां शास्त्रस्य वाऽनधिकारविषयत्वेनोक्तास्तानेवापेक्ष्योच्यते—व्युदासोऽस्य क्रियान्तर इति ॥७९।

**इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः।**
**क्रमोऽयमत्र बलवानस्मिंस्तु न विवक्षितः॥ ८०॥**

अथ क्रमस्य निदर्शनम्। 'इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः' इति श्रुत्यादिभेदेनायं क्रमो नैकप्रकारः। तथा च श्रुतिक्रमः, अर्थक्रमः, पाठक्रमः, काण्डक्रमः प्रवृत्तिक्रमः, प्रतिपत्तिक्रमः, प्रयोगक्रमः, बुद्धिक्रमश्चेति। तत्र श्रुतिक्रमो यथा—स्नात्वा व्रजतीति। अत्र क्त्वाप्रत्ययेनैव श्रुत्या क्रम उक्तः। वेदे यथा—"हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः" इत्यत्र श्रुत्यैवाग्रेऽथशब्दाभ्यां क्रमः

---

भावे टजू न स्यात्। तस्मिंस्त्वर्थेऽभिधीयमाने राजा सखाऽस्येत्ययमर्थस्तुल्यवित्तिवेद्यत्वन्यायेन प्रतीयमान एव।

अभिसंहितः=शब्दशक्त्या प्रतिपादयितुमभिप्रेतः। यथा—गोशब्दे गोत्वरूपा जातिः, व्यक्तिरूपं द्रव्यं वा विशिष्टं वेति। नान्तरीयको यथा तत्रैव (गोशब्द एव) वर्णसंस्थानादिरूपोऽर्थः। अत्र वर्णः शुक्लत्वादिः। संस्थानं सास्नालाङ्गूलककुदखुरविषाणादिरूपम्। इत्येवमभिधेयभेदा अष्टादशधा उपदर्शनीयाः। यत्प्रागुक्तम् "शास्त्रस्य तु शब्दार्थपुरुषधर्मेष्वधिकारः" इति।

तत्र शब्दार्थौ सभेदौ प्रदर्श्येदानीं पुरुषधर्मा वक्तृत्वप्रतिपत्तृत्वप्रभृतयः प्रदर्श्यन्ते। तत्र वक्तृधर्मा आबाधासूयासम्मतिकोपकुत्सनभर्त्सनादयः। आबाधे च, वाक्यदेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु (८।१।८) इत्यादिपाणिनीयसूत्रोक्ताः। प्रतिपत्तृधर्मास्त्वसूयाविषयत्वादय एव। तत्र शास्त्रस्य प्लुतद्विर्वचनादिकार्यविधायकत्वेनाधिकार इति।

अत्र च य एव धर्माः शब्दानां शास्त्रस्य वाऽनधिकारविषयत्वेनोक्ताः। यथा—वक्तृधर्मेष्वाबाधासूयादिषु सत्सु प्लुतद्विर्वचनादिकार्यविधायकत्वेन शास्त्रस्याधिकारः, यथा वा तत्रैव शब्दानां प्लुतद्विर्वचनादिकार्यभाक्त्वेनाधिकारो नान्यधर्मासूयादिषु सत्सु। तानेवापेक्ष्योच्यते—व्युदासोऽस्य क्रियान्तर इति ॥७९।

अथ क्रमस्य निदर्शनम्। इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिरिति। श्रुत्यादिभेदेनायं क्रमोऽनेकप्रकारः। तथा च श्रुतिक्रमोऽर्थक्रमः, पाठक्रमः, काण्डक्रमः, प्रवृत्तिक्रमः, प्रतिपत्तिक्रमः, प्रयोगक्रमो बुद्धिक्रमश्चेति। तत्र श्रुतिक्रमो यथा लोके—स्नात्वा व्रजतीति।

उक्तः। शास्त्रेऽपि च 'परस्मैपदानां णलतुस्' इत्यादौ यथासंख्यमनुदेशः समानामिति श्रुत्यैव क्रमः। अर्थः सामर्थ्यं तन्निमित्तः क्रमोऽर्थक्रमो यथा—भुक्त्वा स्नात्वा व्रजतीत्यत्र स्नानादीनामन्यथाशब्दोपात्तानामप्यर्थस्वरूपपर्यालोचनया स्नानादिक्रमो लक्ष्यते। वेदे यथा—अग्निहोत्रं जुहोति यवागूं श्रपयतीत्यत्र श्रपणं पश्चाद्विनिर्दिष्टमपि पूर्वमनुष्ठीयते, ततोऽग्निहोत्रमित्यर्थक्रमः।

शास्त्रेऽपि 'गुणकर्मणि लादिविधिः' इत्युक्तम्। तथा हि—गां दोग्धि पय इत्यत्र गवा कर्मणा पूर्वं दुहेर्योगस्ततः पयसः। नह्यनुपादाय गां कश्चित् पय आदातुमर्हति। तस्मादत्र गोपयसोर्दुहिना यः क्रमेण सम्बन्धः, सोऽर्थसामर्थ्यादुपजायते। तस्मात् सत्यपि प्रधाने पयसि दुहेर्गवैव पूर्वं सम्बन्ध इति तत्रैव लादयोऽन्तरङ्गत्वादुत्पद्यन्ते गौर्दुग्धा सुदोहा गौरिति। उच्चारणक्रम एव पाठक्रमो यथा—

इन्दुस्वर्णमातङ्गपुंस्कोकिलकलापिनः।
वक्त्रकान्तीक्षणगतिस्वरकेशैस्त्वया जिताः॥

अत्र क्त्वाप्रत्ययेनैव श्रुत्या क्रम उक्तः। वेदे यथा—'हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः' (तै०सं० ६।३।१०-४) इत्यत्र श्रुत्यैव अग्रेऽथशब्दाभ्यामवदानक्रम उक्तः। शास्त्रेऽपि च 'परस्मैपदानां णलतुस्' इत्यादौ 'यथासंख्यमनुदेशः समानाम्' (१।३।१०) इति श्रुत्यैव क्रमोऽभिहितः। अर्थः=सामर्थ्यं तन्निमित्तः क्रमोऽर्थक्रमः। यथा लोके—भुक्त्वा स्नात्वा व्रजति' इत्यत्र स्नानादीनामन्यथाशब्दोपात्तानामप्यर्थस्वरूपपर्यालोचनया स्नानं भोजनं गमनमिति क्रमो लक्ष्यते। यथा—'अग्निहोत्रं जुहोति, यवागूं श्रपयति' इत्यत्र यवागूश्रपणं पश्चाद् विनिर्दिष्टमपि अग्निहोत्रहोमरूपदृष्टफलार्थत्वेन पूर्वमनुष्ठीयते। ततोऽग्निहोत्रमित्यर्थक्रमः। पाठक्रमेणाग्निहोत्रहोमस्य पूर्वमनुष्ठाने हि यवागूपाकोऽदृष्टार्थः स्यात् तच्चानिष्टम्। लभ्यमाने फले दृष्टेनादृष्टपरिकल्पनेति न्यायादिति।

शास्त्रेऽपि गौणे कर्मणि दुह्यादेरिति गुणकर्मणि लादिविधिरित्युक्तम्। तथा हि—गां दोग्धि पय इत्यत्र गवा कर्मणा पूर्वं दुहेर्योगस्ततः पयसः। नह्यनुपादाय गां कश्चित्पय आदातुमर्हति। तस्मादत्र गोपयसोर्दुहिना यः क्रमेण सम्बन्धः सोऽर्थसामर्थ्यादुपजायते। तस्मादत्र पयोरूपस्य कर्मणः प्राधान्ये सत्यपि गवैव गुणेनापि कर्मणा पूर्वं दुहेः सम्बन्ध इति तत्रैव लादयः सम्बन्धस्य प्रथमोत्पत्तिकत्वरूपान्तरङ्गत्वमादाय तादृशसम्बन्धमूलकत्वेनान्तरङ्गाः समुत्पद्यन्ते, गौर्दुह्यते, गौर्दुग्धा, सुदोहा गौरिति।

उच्चारणक्रम एव पाठक्रमो यथा—

इन्दुस्वर्णमातङ्गपुंस्कोकिलकलापिनः।
वक्त्रकान्तीक्षणगतिस्वरकेशैस्त्वया जिताः॥

(भामहकाव्यालङ्कारे २।६०)

इत्यत्र यथापठितानां यथापठितैरेव सम्बन्ध इति । वेदे यथा—समिधो यजति, तनूनपातं यजति, इडो यजति बर्हिर्यजति, स्वाहाकारं यजतीत्येवमात्मकेषु प्रयाजेषु यथापाठमेव क्रमेणानुष्ठानम्। शास्त्रे यथा–विप्रतिषेधे परं कार्यम्, पूर्वत्रासिद्धम इति च। अत्र हि शास्त्रपाठमेवापेक्ष्येदं पूर्वमिदं परमिति व्यवस्थाप्यते। काण्डक्रमो यथा येनैव क्रमेण ब्राह्मणक्षत्रियविशां वर्णसमाचारप्रतिपादकानि प्रकरणान्युद्दिष्टानि तेनैवाभिधीयन्त इति।

वेदे तु कुत्रचिद् याज्ञे कर्मणि येनैव कण्डिकाक्रमेण कर्माणि चोद्यन्ते, तेनैव क्रमेण प्रवर्तन्ते। यथा याज्यानुवाक्यानामाग्नेयादीनां च। अत्र येनैव क्रमेण याज्यानुवाक्यानां सन्निवेशः, तेनैव क्रमेणाग्नेयादीनां सन्निवेशात् काण्डक्रमेण सम्बन्धः। शास्त्रे यथा–द्विर्वचनकाण्डात् सम्प्रसारणकाण्डमिति। तदेव विप्रतिषेधे सति पूर्वं भवतीति।

प्रवृत्तिक्रमो यथा—येनैव क्रमेण ब्राह्मणाः समानाः प्रविशन्ति तेनैव क्रमेण यथास्वं चोदितं कार्यं प्रतिलभन्त इति। वेदे यथा—"सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्र सप्तदशानामजानां प्रोक्षणविशसनपर्यग्निकरणानि

---

इत्यत्र यथापठितानां यथापठितैरेव सम्बन्ध इति। वेदे यथा—"समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति स्वाहाकारं यजति" (तै० सं० २।६।१)। इत्येवमात्मकेषु प्रयाजेषु यथापाठमेव क्रमेणानुष्ठानम्। शास्त्रे यथा—विप्रतिषेधे परं कार्यम् (१।४।२) पूर्वत्रासिद्धमिति (८।२।१) च। अत्र हि शास्त्रपाठमेवापेक्ष्येदं पूर्वमिदं परमिति व्यवस्थाप्यते। काण्डक्रमो यथा—येनैव क्रमेण ब्राह्मणक्षत्रियविशां वर्णसम्बन्धिसमाचारप्रतिपादकानि प्रकरणानि धर्मशास्त्रेषु पुराणेषु चोद्दिष्टानि प्राक् सङ्ग्रहेण कीर्तितानि पश्चात्तेनैव क्रमेण सप्रपञ्चमभिधीयन्त इति।

वेदे तु कुत्रचिद् याज्ञे कर्मणि येनैव कण्डिकाक्रमेण कर्माणि चोद्यन्ते, तेनैव क्रमेण प्रवर्तन्ते। यथा याज्याऽनुवाक्यानामाग्नेयादीनाञ्च क्रमः। अत्र इज्यन्ते याभिरिति याज्याः, गुरूच्चारणमनूच्यन्त इत्यनुवाक्या ऋच इत्येवं पदद्वयं व्युत्पाद्य तयोः कर्मधारये याज्यानुवाक्यापदमृग्विशेषसंज्ञाभूतं योगरूढं निष्पद्यते। अत्र येनैव क्रमेण याज्यानुवाक्यानां संनिवेशस्तेनैव क्रमेणाग्नेयादीनां संनिवेशात् काण्डक्रमेण सम्बन्धः। शास्त्रे यथा—द्विर्वचनकाण्डात् संप्रसारणकाण्डमिति। षष्ठाध्यायस्यादितो द्वादशसूत्रपर्यन्तं द्विर्वचनकाण्डम्। तत ऊर्ध्वश्चतुश्चत्वारिंशसूत्रपर्यन्तं संप्रसारणकाण्डमिति विप्रतिषेधे सति विप्रतिषेधे परं कार्यमिति शास्त्रबलात् संप्रसारणकाण्डमेव द्विर्वचनकाण्डात् परत्वात् प्राक् प्रवर्तत इति।

प्रवृत्तिक्रमो यथा— समानाः=तत्तत्कर्मानुष्ठाने समानज्ञानवन्तः ब्राह्मणा येन क्रमेण यज्ञसदः प्रविशन्ति, तेनैव क्रमेणाचार्येण यथास्वं=यथायथम् चोदितं तत्तत्कार्यं प्रतिलभन्ते न तु व्युत्क्रमेणेति। वेदे यथा—'सप्तदश प्राजापत्यान् पशूनालभते' (तै० ब्रा० १।३।४।३)

क्रमेण चोदितानि। अनुष्ठातुः पुनरिच्छावशात्तेषु प्रवर्तमानस्य यत एवारभ्य पशोस्तेनानुष्ठात्रा तेषामाद्यस्यानुष्ठानमारब्धं तेनैव प्रवृत्तिक्रमेण पुनरपरयोरप्यनुष्ठानं विधत्त इति सोऽयं प्रतिपत्तरिच्छावशात् प्रवृत्तः क्रमः प्रवृत्तिक्रम इत्युच्यते।

शास्त्रे यथा—भाष्य उक्तं यथैवानुपूर्व्याऽर्थानां प्रादुर्भावः, तथैव शब्दानामपि। यथापट्व्या मृद्व्येत्यत्र प्रथमं लिङ्गसंबन्धात् स्त्रीप्रत्यय उत्पद्यते, तदनु कर्मसंख्यादिसंबन्धादेकवचनमुत्पद्यते। तथैव च यणादेशादिकार्यं तेनैव क्रमेण प्रवर्तत इति।

प्रतिपत्तिक्रमो यथा—लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यत्र यद्यपि प्रयोगे पूर्वमडागम उच्चार्यते, तथापि वयं विधिवाक्यार्थं प्रतिपद्यमाना लुङादीन् प्रतिपद्यामहे, पश्चादडागममिति शास्त्रीयमुदाहरणम्।

लोके यथा पुरुषो राज्ञ इत्युक्तेऽप्युच्चारणक्रममतिक्रम्य राजार्थव्यवच्छेदेनैव पुरुषस्य प्रतिपत्तिः। वेदे यथा—प्रधानयागाः पूर्वमुक्ता अप्यवान्तरयागनिवर्तनानुसारेणैव प्रतिपत्तिमुपारोहन्ति। यथा—दीक्षणीयादीनां सोमस्य च। अत्र हि सोमयागस्य प्रधानस्य पूर्वं बुद्ध्युपारोहेऽपि दीक्षणीयादियागनिर्वर्तनपूर्वकमेव सोमप्रतिपत्तिः।

---

इत्यत्र सप्तदशानामजानां प्रोक्षणविशसनपर्यग्निकरणानि क्रमेण चोदितानि। तेषु सप्तदशसु प्राजापत्येषु पशुषु प्रवर्तमानस्य = अनुष्ठातुः पुनरिच्छावशाद् यत एव पशोरारभ्य तेनानुष्ठात्रा तेषामाद्यस्य पशोः प्रोक्षणानुष्ठानमारब्धं तेनैव प्रवृत्तिक्रमेण पुनरपरयोरपि विशसनपर्यग्निकरणयोरनुष्ठानं विधत्त इति सोऽयं प्रतिपत्तुरिच्छावशात् प्रवृत्तः क्रमः प्रवृत्तिक्रम इत्युच्यते।

शास्त्रे यथा—भाष्ये उक्तम् 'आरभ्यमाणे नित्योऽसौ' इति श्लोकवार्त्तिकव्याख्यावसरे (१।१।५७) "यथैवानुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि" इति। यथा—पट्व्या, मृद्व्या इत्यत्र प्रथमं लिङ्गसम्बन्धात् स्त्रीप्रत्यय उत्पद्यते, तदनु कर्मसंख्यादिसंबन्धादेकवचनमुत्पद्यते तथैव च यणादेशादिकार्यं तेनैव क्रमेण प्रवर्तते इति।

प्रतिपत्तिक्रमो यथा 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) इत्यत्र यद्यपि प्रयोगे 'अभूत्' इत्यादौ पूर्वमडागम उच्चार्यते ततो धातुस्ततो लुङाद्यादेशा इति, तथापि वयं वैयाकरणा विधिवाक्यस्यानन्यशेषत्वप्रयुक्तेन प्राधान्येन पूर्वं विधिवाक्यार्थं प्रतिपद्यमाना लुङादीन् प्राक् प्रतिपद्यामहे पश्चादडागममिति शास्त्रीयमुदाहरणम्।

लोके यथा—पुरुषो राज्ञ इत्युक्तावप्युच्चारणक्रममतिक्रम्य राजार्थव्यवच्छेदेनैव राजपदार्थसंबन्धित्वप्रयुक्तव्यवच्छेदवैशिष्ट्येनैव पुरुषस्य प्रतिपत्तिः। वेदे यथा—प्रधानयागाः पूर्वमुक्ता अप्यवान्तरयागनिर्वर्तनानुसारेणैव प्रतिपत्तिमुपारोहन्ति बुद्धिविषया भवन्ति, यथा दीक्षणीयादीनां सोमस्य च प्रतिपत्तिक्रमः। अत्र हि सोमयागस्य प्रधानस्य पूर्वं

प्रयोगक्रमस्तु यथा—डुकृञित्यादौ ययाऽऽनुपूर्व्या अनुबन्धाः प्रयुक्तास्तयैवेत्संज्ञां लभन्त इति शास्त्रीयमुदाहरणम् ।

वेदे यथा—दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेते इत्यत्र दर्शपूर्णमासयागपूर्वकमन्यानुष्ठानं विज्ञेयम् । बुद्धिक्रमो यथा—शास्त्रे वर्णानामिको यणचीत्यादौ बुद्ध्या पौर्वापर्यं कल्प्यते । तथा च पौर्वापर्यमकालव्यपेतं संहिता चेत् पूर्वपराभावादसंहितम् । एकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानामित्याशङ्क्योक्तं भाष्यकारेण ।

---

प्रयोगक्रमस्तु यथा—डुकृञ् इत्यादौ ययाऽऽनुपूर्व्या = क्रमेण अनुबन्धाः प्रयुक्तास्तेनैव क्रमेणेत्संज्ञां लभन्त इति शास्त्रीयमुदाहरणम् । न चात्र लक्ष्यभेदेन लक्षणभेदेन च खले कपोतन्यायेन युगपदित्संज्ञासंभवे किमिति क्रमेण सोच्यत इति वाच्यम्, वर्णानां क्षणिकत्वेन यौगपद्यासंभवात् । किञ्चोपदेश एवेत्संज्ञा विधीयते, उपदेशश्चाद्योच्चारणमित्युक्तमिति उच्चारणक्रमेणैवेत्संज्ञाविधिक्रमः । प्रयोग उच्चारणमिति चानर्थान्तरम् । न चैवं सत्युच्चारणक्रमरूपात् पाठक्रमात् प्रयोगक्रमस्य को भेद इति वाच्यम्, पाठक्रमः शास्त्रसम्बन्धी प्रयोगक्रमस्तु लक्ष्यसम्बन्धीति नियम्यभेदात् ।

वेदे यथा—'दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेते' (का०श्रौ० ७।१) इति । यद्यपि तत्र 'एताभ्याम्' इति पाठस्तथापि स दर्शपूर्णमासाभ्यामित्यर्थकः । यद्यप्यत्र क्त्वाप्रत्ययश्रवणेन श्रुतिक्रमस्यापि सङ्करस्तथाप्यस्यात्र प्रयोगक्रमाङ्गत्वमेवेति प्राधान्येन प्रयोगक्रमव्यपदेशः । प्रतिपत्तिक्रमस्तु नात्र, तस्य विधिवाक्यार्थप्रतिपत्तिक्रमप्रयुक्तविधेयप्रतिपत्तिक्रमरूपत्वादस्य च विधिवाक्यत्वाभावात् । इदं वाक्यं हि दर्शपूर्णमासयोरन्ययागस्य च पौर्वापर्यरूपं क्रममेव विधत्ते न त्वयं यागविधिः, यागानामन्यतः प्राप्तत्वात् ।

किञ्च, प्रतिपत्तिक्रमः समभिव्याहाररूपवाक्यमूलक इति श्रुतिक्रमाद् दुर्बलत्वेन बाधितोऽकिञ्चित्करः । एवं वक्ष्यमाणो बुद्धिक्रमोऽपि नात्र, यत्र वस्तुगत्याऽविद्यमानं पौर्वापर्यं बुद्ध्या परिकल्प्यते तत्रैव तत्संभवात् । अत्र तु = डुकृञ् इत्यादौ नेत्संज्ञायां वर्णयोः पौर्वापर्यापेक्षा, यथा—इको यणचि (पा०६।१।७७) इत्यादाविति । बुद्धिक्रमो यथा—शास्त्रे वर्णानाम् 'इको यणचि'( ६।१।७७ ) बुद्ध्या पौर्वापर्यं कल्प्यते । तथा च 'पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापराभावादसंहितम् । एकवर्णवर्तित्वाद् वाच उच्चारितप्रध्वंसित्वाच्च वर्णानाम्" ( पा० महाभा० १।४।१०९ वा० ९-१० ) इति ।

अस्यार्थः—अकालव्यपेतं कालव्यवधानशून्यम् । इदं वर्णव्यवधानशून्यत्वस्याप्युपलक्षणम् । देशस्तूच्चारणकाल एव वर्णानामिति देशव्यवधानशून्यत्वमनेनैव गतार्थमिति पृथक् तदुपादानं नापेक्ष्यत इति । पौर्वापर्यं संहिता चेत्, वाचः = पदरूपायाः, वाक्यरूपाया वा, एकवर्णवर्तित्वाद् = एकेन वर्णेनोच्चारितेन वर्तमानत्वात्, यद्वा वाक्पदेन वागिन्द्रियम्, एकं वर्णं वर्तयति = उच्चारयतीत्यभ्युपगमेन वागिन्द्रियस्यैकैकवर्णोच्चारयितृत्वादित्यर्थः ।

"बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम् ॥"

इति शास्त्रे बुद्धिक्रमः। लोकेऽपि विद्युतः क्रमेण प्रवृत्ता बुद्धौ संकलयति। वेदे प्रयाजादीनामुत्पन्नप्रध्वंसिनां बुद्ध्यैव संकलनमिति बौद्धः क्रमः। सर्व एव वा बौद्धः क्रमो न वस्तुसमुत्थ इति। यदाहुः—"प्रतिपत्तिक्रमो न वस्तुसमुत्थः" इति।

---

संहितम्, अर्थाभावेऽव्ययीभावः। एकवर्णवर्तित्वे च हेतुरुच्चरितप्रध्वंसित्वाच्च वर्णानामिति। अत्र चो हेतौ। वर्णानां यत उच्चरितप्रध्वंसित्वमत एकवर्णवर्तित्वं वाच इति। एकवर्णवर्तित्वादित्यस्यार्थान्तरे चकारः समुच्चये।

तथा चायं हेतुपरम्पराक्रमः वर्णानामुच्चरितप्रध्वंसित्वादेकवर्णवर्तित्वं वाचः, एकवर्णवर्तित्वात् पौर्वापर्याभावः, तस्मात् संहिताया अभाव इति। इत्येवमाशङ्क्योक्तं भाष्यकारेण—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम् ॥
(महाभा० १।४।१०९)

अस्यार्थः— धीरः=धियमीरयति प्रेरयति शब्दप्रयोगविषये इत्यर्थे ईरयतेः पचाद्यच्। धीशब्देन सह षष्ठीतत्पुरुषः। बुद्धिमान् शब्दप्रयोगस्य कर्ता; क्वचित्तु 'वक्ता' इत्येव पाठः। तन्वन्नीतिः=तन्वती वर्णपदवाक्यानि पदवाक्यमहावाक्यरूपतया विस्तारयन्ती, नीतिः=नीयते=उन्नीयते=उत्प्रेक्ष्यते वस्तु यया सा नीतिरुत्प्रेक्षा कल्पनारूपा यस्य स तन्वन्नीतिः। क्वचित्तु तद्वन्नीतिरिति पाठः। तत्रापि तननं तत्, संपदादित्वाद् भावे क्विप्। अनुदात्तोपदेशेत्यनुनासिकलोपः। तद्वती=विस्तारवती नीतिर्यस्येति विग्रहे स एवार्थः। सर्वाश्चेष्टाः सर्वान् वर्णाद्युच्चारणरूपान् वर्णाद्युच्चारणानुकूलप्रयत्नरूपान् वा व्यापारान्, बुद्धौ समूहालम्बनात्मिकायां कृत्वा=एकबुद्धिगोचरान् कृत्वा।

किञ्च, शब्देन वर्णपदवाक्यमहावाक्यान्यतमरूपेण वाच्यान् अर्थान्, बुद्धौ समूहालम्बनात्मिकायामेकस्यां बुद्धौ, दृष्ट्वा=विषयीकृत्य, पदादौ वर्णाद्यभावेऽपि पदार्थादौ वर्णार्थादेरभावेऽपि=यथा ओमिति पदार्थेऽखण्डे ब्रह्मणि वस्तुगत्या न सन्त्यकारोकारमकारार्थाः, विष्णुशिवापरब्रह्मरूपास्तथापि कल्प्यन्ते बुद्धौ पौर्वापर्यं कुर्यात्। पदादिषु वर्णादीनाम्, पदार्थादिषु च वर्णार्थादीनां पौर्वापर्यं प्रकल्पयेत्। कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमेनात्र कल्पनार्थः करोति—इत्येवमुदाहृतो भाष्ये शास्त्रीयो बुद्धिक्रमः।

लोकेऽपि—क्रमेण प्रवृत्ताः=क्रमेणोत्पादविनाशवत्यः विद्युतः समूहालम्बनात्मिकायामेकस्यां बुद्धौ सङ्कलयति=सङ्कलय्य, पौर्वापर्येण समूहीकृत्य पश्यति लोकः। वेदेऽपि—

**अथ एषां क्रमाणां बलाबलचिन्तां करोति—क्रमोऽयमत्र बलवानिति । यथा वेदे—प्रथमं भोजयितव्यस्ततोऽभ्यञ्जनमिति ।**

**अथ क्रमप्रतियोगिनं दर्शयितुमाह—अस्मिंस्तु न विवक्षित इति । क्रम इति प्रकृतम् । अविवक्षा क्रमस्य प्रतिपक्षः । तद्यथा वेदेऽनुष्ठातॄणां क्रमविवक्षा निमित्तवशाद् दृश्यते । लोके प्रतिपत्तॄणामपि दृश्यते । शास्त्रे यथोक्तं वार्त्तिककृता—अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति इत्यादि ॥८०।**

---

प्रागुक्तः क्रमो बौद्ध एव, न वस्तुसमुत्थः; वस्तुस्वरूपस्थसिद्धत्वेनाखण्डत्वेन च क्रमासंभवात् । नहि अवयवारब्धोऽवयवातिरिक्तोऽवयवीत्यारम्भवादेऽन्येषु वा परिणामविवर्तादिवादेष्ववयविन कस्य सखण्डत्वसम्भवः । यदाहुः—प्रतिपत्तिक्रमो न वस्तुसमुत्थ इति ।

अस्यार्थः—प्रतिपत्त्या बुद्ध्यैव, सर्वोऽपि क्रमः, न वस्तुसमुत्थो न वस्तुतः समुद्भूत इति, वस्तुनः सिद्धत्वाखण्डत्वाभ्या क्रमासंभवादिति भावः ।

अथैषां क्रमाणां बलाबलचिन्ता करोति—क्रमोऽयमत्र बलवानिति यथा वेदे—'प्रथमं भोजयितव्यस्ततोऽभ्यञ्जनम्' ( अत्राभ्यञ्जनम् = शरीरस्य सर्षपादिपिष्टेनोद्वर्तनम्, अभितः = सर्वतः, अञ्जनम् = श्लक्ष्णीकरणमिति व्युत्पत्तेः ) इत्यर्थके वाक्ये भोजनाभ्यञ्जनयोः क्रमो विवक्षित इति बलवान् ।

अथ क्रमविरोधिनीमविवक्षां दर्शयितुमाह—अस्मिंस्तु न विवक्षित इति । अत्र क्रम इति प्रकृतोऽविवक्षाया उद्देश्यभूतः । अविवक्षा क्रमस्य प्रतिपक्षः । तद्यथा वेदेऽनुष्ठातॄणामनुष्ठानक्रमाविवक्षा निमित्तवशाद् दृश्यते । तथा हि—यागे यागाङ्गेषु क्रमेणानुष्ठीयमानेषु क्षुतरूपे निमित्ते उपस्थिते आचमनरूपं प्रायश्चित्तम्, कण्डूरूपे निमित्ते उपस्थिते कृष्णविषाणाकरणकं कण्डूयनं वा 'क्षुत आचामेत' 'कृष्णविषाणया कण्डूयति' इत्यादिवाक्यविहितं मध्ये क्रियत इति यागाङ्गाना निमित्तवशात् क्रमाविवक्षा दृश्यते । तथा लोकेऽपि प्रतिपत्तॄणां क्रमाविवक्षा दृश्यते । तद्यथा कश्चित् प्रतिपत्ता 'दण्डेन गामभ्याज शुक्लाम्' इति वाक्योपात्तेन पदक्रमेण पदार्थं प्रतिपद्यते । कश्चित्तु—'शुक्लां गामभ्याज दण्डेन' इति वाक्यतस्तद्विपरीतक्रमेण वाक्यार्थं प्रतिपद्यत इति पदाना पदार्थाना च क्रमस्याविवक्षा ।

एवं प्रत्यक्षस्थलेऽपि कश्चिद् द्रष्टाऽन्येनावयवक्रमेण वृक्षं पश्यति, कश्चित् त्वन्येनेति क्रमस्याविवक्षा प्रतिपत्तॄणाम् ।

शास्त्रे क्रमस्याविवक्षा, यथोक्तं वार्त्तिककृता—'अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति' (महाभा० १।३।१० वा० ८) इत्यादि ।

अस्यार्थः—क्रमस्य विवक्षायां क्ङिति चेत्यत्र गुणवृद्धिप्रतिषेधेऽतिप्रसङ्गः प्राप्नोति । तथा हि—गुणवृद्धी द्वे, क्ङितौ द्वाविति तत्र संख्यातानुदेशः (क्रमेण सम्बन्धः प्राप्नोतीति) । अतः क्रमोऽत्र गकारप्रश्लेषेण संख्यावैषम्यादविवक्षित इति भावः ॥८०।

अथ प्रयोजकाप्रयोजके निदर्श्येते—

**इदं पराङ्गैः संबद्धमङ्गानामप्रयोजकम् ।**
**प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम् ॥ ८१ ।**

तत्र राजा छत्रच्छायायाः प्रयोजकः, हस्त्यादयस्तदाधारा अप्रयोजका अपि छत्रच्छायया संबध्यमानाः प्रयोजका उच्यन्त इत्येकफलतया प्रयोजकभावः । फलभेदेऽप्यूह्यमुदाहरणमिति लोके । वेदशास्त्रयोरप्यूह्यम् ॥ ८१ ।

---

अथ प्रयोजकाप्रयोजके निर्दिश्येते—इदं पराङ्गैरिति ।

अस्यार्थः इदं पराङ्गैः परकर्माङ्गैः संबद्धमित्यत एतत्कर्माङ्गानामप्रयोजकम् । इदं तेषां तत्कर्माङ्गानां प्रयोजकम्, अत्र एतत्कर्माङ्गेषु, इदं नान्तरीयकम् अनिवार्यस्थितिकम्, न त्वनन्यथासिद्धान्वयव्यतिरेकवत्तया हेतुभूतमित्यप्रयोजकमिति । तत्र लौकिकमुदाहरणं यथा—राजा छत्रच्छायायाः प्रयोजकः, तया संबध्यमानत्वात्, राज्ञ आधारभूता हस्त्यादयस्तु छत्रच्छायाया अप्रयोजकाः, तया सह अव्यभिचरितसंबन्धाभावात्; साक्षात् संबन्धाभावाद्वा ।

हस्त्यादीनां हि छत्रच्छायादिसंबन्धो राजसंबन्धमूलक इति स्थितिः । अत्र राज्ञो हस्त्यादीनां च छत्रच्छायादिसंबन्धस्यैकमेवातपसंतापाभावो वर्षावारणं वा फलमिति राज्ञ इव हस्त्यादीनामपि तदाधारभूतानां परम्परया छत्रच्छायासंबद्धानामेकफलतया तत्प्रयोजकभावः । लोके फलभेदेऽपि प्रयोजकभावो यथा—एकस्या एवालोकक्रियायाः प्रयोजिका गृहान्तरवस्थितस्य पुस्तकस्य प्राप्तिः, अध्ययनञ्च । तत्राप्यालोकक्रियया सह प्रयोज्यप्रयोजकभावेन साक्षात्संबद्धा पुस्तकप्राप्तिरेव, अध्ययनं तु पुस्तकप्राप्तिद्वारेति विशेषः ।

किञ्चात्रास्ति द्वयोरपि प्रयोजकयोः फलभेदः । पुस्तकप्राप्तेर्ह्यध्ययनं फलम् । अध्ययनस्य त्वक्षरग्रहणमर्थावबोधो वा फलमिति । वेदे फलभेदप्रयोजकभावो यथा—पराङ्गसंबद्धम् = प्रकृत्यङ्गसंबद्धं द्रव्यादिकम् अपराङ्गस्य = वैकृताङ्गस्य अप्रयोजकमिति प्राप्तं यद्यपि, तथापि 'प्रकृतिवद् विकृतिः कर्तव्या' इत्यतिदेशेन प्रयोजकं भवति । अत्र प्राकृतवैकृताङ्गसंबन्धभेदेन द्रव्यादीनां फलभेदः स्पष्ट एव । फलैक्ये यथा—व्रीहीणां यागाङ्गप्रोक्षणादिसंबद्धत्वेन तत्प्रयोजकत्वे स्थिते यवानामप्रयोजकत्वे प्राप्ते यवैर्वा यजेतेति वाक्येन यवानां प्रयोजकत्वं विकल्प्यते । उभयोरपि प्रयोजकयोर्यागनिष्पत्तिरूपं फलैक्यमत्र । शास्त्रे फलैक्ये प्रयोजकभावो यथा — तस्यापत्यम्' (४।१।९२), 'अत इञ्' (४।१।९५) इत्यनयोर्द्वयोरपि शास्त्रयोरपत्यार्थे दाक्षिरित्येतत्सिद्धिरूपमेकमेव फलम् ।

किञ्च, तस्यापत्यमित्यस्य यञादिविधिप्रयोजकस्य अत इञोऽप्रयोजकत्वे प्राप्तेऽधिका-

**इदं प्रधानं शेषोऽयं विनियोगक्रमस्त्वयम् ।**
**साक्षादस्योपकारीदमिदमाराद् विशेषकम् ॥ ८२ ।**

अथ शेषिशेषौ दर्शयितुमाह—**इदं प्रधानं शेषोऽयमिति** ।

वेदे यथा—व्रीहीनवहन्तीति व्रीहयः शेषिणः, अवघातः शेषस्तदर्थत्वात् । लोकशास्त्रयोरुक्तमुदाहरणम् ।

**अस्यैव शेषिशेषभावस्येतिकर्तव्यतां** प्रदर्शयितुमाह—**विनियोगक्रमस्त्वयमिति** । तदेवं गुणप्रधानभावस्य परिकरबन्धसहितस्योपदर्शनं कृत्वा तत्रैवावान्तरभेदमाह—**साक्षादस्योपकारीदमिदमाराद्विशेषकमिति** ।

तत्र लोके साक्षादुपकारकं यथा स्वात्मन्यलङ्कारादि । आरात् तदेव पुत्रदारादिषु । शास्त्रेऽपि साक्षादुपकारकं प्रत्ययस्य प्रकृत्यादि ।

यत्तु प्रकृत्यादेर्विशेषणं तदारादुपकारकम् । यथा एरजित्यादाविवर्णान्त-

---

शास्त्रे फलभेदे प्रयोजकभावो यथा—व्यक्तिपक्षे यदि प्रतिलक्ष्यं लक्षणोपप्लव इति न स्वीक्रियते तदा 'आद्गुणः' (६।१।८७) इति सामान्यशास्त्रस्यैकमेवोदाहरणं प्रयोजकं स्यात्, अन्येषामुदाहरणानां त्वप्रयोजकत्वं प्राप्तम्, तच्चानिष्टम्; "न ह्येकमुदाहरणं योगारम्भं प्रयोजयति" इति भाष्यविरोधात् । तथा च प्रतिलक्ष्यं लक्षणोपप्लवाभ्युपगमेन सर्वेषामप्युदाहरणानां सामान्यशास्त्रारम्भप्रयोजकत्वम् । अत्र च प्रयोजकानां स्वस्वरूपनिष्पत्तिरूपं फलं भिन्नमेव । प्रयोजकमिदं तेषामत्रेदं नान्तरीयकमित्यस्योदाहरणन्तु शास्त्रे यथा—आदेशस्तत्तल्लक्ष्यसिद्धिप्रयोजकः, स्थानिनिवृत्तिस्तु तत्र नान्तरीयकेति ॥ ८१ ।

अथ शेषशेषिभावं दर्शयितुमाह—**इदं प्रधानं शेषोऽयमिति** ।

वेदे यथा—'व्रीहीनवहन्ति' इत्यत्र व्रीहयः शेषिणः, अवघातः शेषस्तदर्थत्वात् । लोके यथा—राजा शेषी, तदर्थं क्रियमाणानि भृत्यादिकर्तृकाणि कर्माणि तु शेषाः । शास्त्रे यथा—विधिशास्त्रं शेषि, संज्ञापरिभाषादिशास्त्रं शेषभूतम् । अस्यैव शेषशेषिभावस्येतिकर्तव्यताम् = विनियोगक्रमं प्रदर्शयितुमाह—**विनियोगक्रमस्त्वयमिति** ।

अत्रेदमा शेषशेषिणोर्विनियोगक्रमस्य बहुधा भिन्नस्य सामान्येन निर्देशः । **तदेवं गुणप्रधानभावस्य** = शेषशेषिभावस्य **परिकरबन्धसहितस्य** = सेतिकर्तव्यताकस्य सामान्येनोपदर्शनं कृत्वा तत्रैवावान्तरविशेषमाह—साक्षादस्योपकारीदमिदमाराद् विशेषकमिति ।

तत्र लोके साक्षादुपकारकं यथा—स्वात्यन्यलङ्कारादिकम् । पुत्रदारादिषु क्रियमाणमलङ्कारादिकन्तु स्वात्मन्याराद् = दूरतः उपकारकम् । शास्त्रेऽपि साक्षादुपकारकं यथा—प्रत्ययस्य प्रधानीभूतार्थबोधकत्वेन प्रधानीभूतस्योपकार्यस्य गुणभूतार्थबोधकत्वेन गुणभूतं प्रातिपदिकादि ।

त्वादि धातोर्विशेषणम्। कर्तृविशेषणं च पश्वादीति। वेदेऽप्यवघातादि दर्शपूर्णमासयोः साक्षादङ्गम्, प्रयाजादिकं त्वारादुपकारकम् ॥८२।

**शक्तिव्यापारभेदोऽस्मिन् फलमत्र तु भिद्यते।**
**संबन्धाज्जातभेदोऽयं भेदस्तत्राविवक्षितः ॥ ८३।**

इत्येवं सप्रभेदं सपरिकरबन्धं शेषशेषिभावमुपदर्श्येदानीं भेदं प्रदर्शयितुमाह—शक्तिव्यापारभेदोऽस्मिन्निति।

शक्तिव्यापारभेदाश्रयणेन बहुविधो भेदो लक्ष्यते। तत्र लोके बलाहकाद् विद्योतते, बलाहके विद्योतते, बलाहको विद्योतत इत्यत्र बलाहकस्यापादानाधिकरणकर्तृशक्तीनां भेदः शास्त्रे चात्रैव विवक्षावशाद् व्यापारभेदश्चेत्येवं शक्तिव्यापारभेदः।

[ क्वचित्तु ] शक्तिभेदमात्रम्, न तु व्यापारभेदः। यथा—धनुषा विध्यतीति। अत्र हि गर्भीकृतापादानशक्तिः करणशक्तिर्विध्यत्यर्थाभेदेन व्याप्रियते। न ह्यन्यथानाश्रितापादानशक्तिधनुषः करणत्वं संभवति। अत एवात्र संज्ञयो-

---

इत्यादाविवर्णान्तत्वादि धातोर्विशेषणम्। यथा वा—'हरतेर्दृतिनाथयोः पशौ' ( ३।२।२५ ) इत्यादौ कर्तृविशेषणं पश्वादि प्रत्ययस्यारादुपकारकम्। वेदेऽप्यवघातादि साक्षाद् दर्शपूर्णमासाङ्गपुरोडाशप्रकृतिव्रीह्यादिधर्मत्वेन दर्शपूर्णमासयोः साक्षादङ्गम्, प्रयाजादिकन्तु तयोरारादुपकारकमिति ॥ ८२।

इत्येवं पदपदार्थव्यवस्थापकानां चतुर्विंशतिसंख्याकानां न्यायानां वर्णनप्रसङ्गेऽवसरप्राप्ते सप्रभेदं सपरिकरबन्धं शेषशेषिभावाख्यं न्यायमुपदर्श्येदानीं क्रमप्राप्तं तेषां न्यायानामन्यतमं भेदाभिधं न्यायं प्रदर्शयितुमाह—**शक्तिव्यापारभेदोऽस्मिन्निति।**

अस्यार्थः—अस्मिन् पदार्थे, शक्तिव्यापारभेदः शक्त्योः शक्तीनां वा भेदः, शक्तिव्यापारयोर्भेद इति च विग्रहं समाश्रित्य शक्तिभेदः शक्तिव्यापारभेदश्चेति तन्त्रेणार्थद्वयं विवक्षितमत्र। शक्तिविनाकृतः केवलो व्यापारभेदस्तूदाहरणेऽसम्भवाद् नात्र विवक्षितः। एवं शक्तिव्यापारभेदाश्रयणेन बहुविधो भेदो लक्ष्यते। तत्र लोके यथा—'बलाहकाद् विद्योतते, बलाहके विद्योतते, बलाहको विद्योतते' इत्यत्र बलाहकस्यापादानाधिकरणकर्तृशक्तीनां भेदः। शास्त्रे यथा—अत्रैव शक्तिभेदः, विवक्षावशाच्च शक्तिभेदप्रयुक्तोऽपादानादिषु व्यापारभेदोऽपीत्येवं शक्तिव्यापारभेदः।

क्वचित्तु शक्तिभेदमात्रम्, न तु व्यापारभेदः यथा—धनुषा विध्यतीति। अत्र हि धनुषः करणशक्तिरपादानशक्तिं गर्भीकृत्य स्थितेति विध्यत्यर्थाभेदेन व्याप्रियते। न ह्यन्यथाऽनाश्रितापादशक्तेर्धनुषः करणत्वं संभवति। धनुर्बाणयोर्विभागे हि धनुषो व्यधनकरणत्व-

विप्रतिषेधो वर्ण्यते। व्यापारभेदस्तु शुद्धो न संभवति, शक्तिभेदमन्तरेण व्यापारभेदस्यासंभवात्।

अथ फलभेदेन भेदमाह—फलमत्र तु भिद्यत इति। यथैकस्य दानस्यायुरारोग्यैश्वर्याणि भिन्नानि फलानि। अन्ये त्वायुष्यप्रभृतिषु सत्सु प्रीतिविशेषमेवैकं फलमाहुः। तथा बह्वीनां क्रियाणामेकं फलम्, यथा व्यवहारदर्शने प्रजानामेको निर्णयः। यथा वक्ष्यति—

भिन्नव्यापाररूपाणां व्यवहारादिदर्शने।
कर्तृणां दर्शनं भिन्नं संभूयार्थस्य साधकम्॥ इति (२।३७९)।

प्रकारान्तरेणापि भेदं दर्शयितुमाह—संबन्धाज्जातभेदोऽयमिति। यथाऽऽख्यातेषु धातूपात्तायाः क्रियायाः प्रत्ययवाच्यकर्तृभेदे सति संबन्धात् क्रियाया अपि

---

संभवो नान्यथा। अत एवात्र करणसंज्ञाऽपादानसंज्ञयोर्विप्रतिषेधो वर्ण्यते। करणशक्तिसत्त्वेऽपादानशक्तेरभावे तु कुतस्त्यो विप्रतिषेधः। केवलशक्तिभेदवच्छुद्धो व्यापारभेदस्तु न संभवति, अपादानादिशक्तिभेदमन्तरेण व्यापारभेदस्यासंभवात्। व्यापारभेदस्य शक्तिभेदप्रयुक्तत्वात्। विपरीतन्तु न, योग्यतालक्षणायाः शक्तेर्व्यापारात् प्रागपि स्थितत्वादिति।

अथ फलभेदरूपं भेदन्यायमाह—'फलमत्र तु भिद्यते' इति। अत्र फलभेदो द्विविधो विवक्षितः। कर्मभेदसमानाधिकरणस्तद्विपरीतश्चेति। तत्राद्योऽश्वमेधराजसूयवाजपेयादीनां फलभेदः। द्वितीयो यथा—एकस्यैव गोदानस्य तत्तत्कामनया क्रियमाणस्यायुरारोग्यैश्वर्याणि भिन्नानि फलानि। अन्ये त्वायुष्प्रभृतिषु भिन्नेषु फलेषु सत्स्वपि प्रीतिविशेषमेवैकं फलमाहुरिति नास्ति मुख्यस्य दानफलस्य भेद इति।

क्वचित्तु कर्मभेदेऽपि फलभेदो न दृश्यते। तत्र बह्वीनां क्रियाणामेकं फलम् यथा—बह्वीनां प्रजानां सजातीये व्यवहारदर्शनेऽनेकस्मिन्नेको निर्णयः फलम्। यथा वक्ष्यति—

भिन्नव्यापाररूपाणां व्यवहारादिदर्शने।
कर्तृणां दर्शनं भिन्नं संभूयार्थस्य साधकम्॥ (वा० प० २।३७९)

अस्यार्थः—यथा कस्मिंश्चिद् विवादपदस्य व्यवहारदर्शने पञ्चभिर्मिलित्वा क्रियमाणे भिन्नव्यापाररूपाणां पञ्चानां द्रष्टॄणां भिन्नं दर्शनं संभूय संघीभूय, अर्थस्य प्रयोजनस्यैकस्य निर्णयरूपस्य साधकमिति क्रियाभेदेऽपि फलैक्यमिति।

यद्यपीदं पद्यं हेलाराजेनान्यथा व्याख्यातमग्रे, तथाप्यत्र 'यथा व्यवहारदर्शने प्रजानामेको निर्णयः' इति प्रकृतवाक्यार्थानुगुणोऽयमेवार्थो मदुक्तोऽत्र युक्तः। सोऽप्यर्थस्तत्र युक्त इति तु न विस्मर्तव्यम्, विवक्षाभेदेन वाचामनेकार्थत्वसंभवादिति।

प्रकारान्तरेणापि भेदं दर्शयितुमाह—सम्बन्धाज्जातभेदोऽयमिति। यथाऽऽख्यातेषु धातूपात्तायाः क्रियायाः प्रत्ययवाच्यकर्तृभेदे सति तत्संबन्धात् क्रियाया अपि भेदः प्रतीयते—

भेदः प्रतीयते, पचतः पचन्तीति । यथोक्तम्—"साधनभेदात् तिङ्क्षु फलाभावात् फलं भवत्येवावबोधश्चेन् साधनेभ्यः प्रसिद्धोऽसौ" इति ।

इदानीमस्यैव प्रतिपक्षभूतभेदं दर्शयितुमाह—भेदस्त्वत्राविवक्षितः इति । अत्र शक्त्यभेदो यथा—समानकर्तृकयोरित्यत्र पक्त्वौदनं भुङ्क्त इति कर्तृकर्मणोः क्रियाभेदेन प्राप्तः शक्तिभेदो वक्त्रा न विवक्षितः । तथा च सत्यत्र समानकर्तृकत्वमुपपन्नं भवति । व्यापाराभेदः प्रागेव दर्शितो धनुषा विध्यतीत्यत्र फलाभेदोऽपि पूर्वमुक्त एव । यथा दानस्यैका प्रीतिः फलमिति केचिदिति ।

संबन्धाज्जातभेदत्वस्य प्रतिपक्षो यत्र न सम्बन्धभेदाज्जातभेदत्वम् । यथाऽऽस्यते देवदत्तेनेत्यत्र भावे लकार उत्पन्नः साधनभेदानुपादानात् क्रियाभेदमपि गमयितुं न शक्नोति ।

देवदत्तेनेत्यस्मात्तत्प्रतीतिरिति चेदेकपदापेक्षयैतदुक्तमस्माभिरित्यदोषः ।

---

पचतः, पचन्तीति । तथा चात्र—कर्तृसम्बन्धाज्जातभेदोऽयं क्रियापदार्थ इति विशेषेऽर्थे सामान्यस्य वाक्यस्य व्यवस्थितिः । यथोक्तम्—"साधनभेदात्तिङ्क्षु फलाभावात् फलं भवत्येवावबोधश्चेत् साधनेभ्यः प्रसिद्धोऽसौ" इति ।

इदं वचनं कस्य कस्मिन् ग्रन्थे कस्मिन् प्रसङ्ग इति यद्यपि नावधारयितुं पार्यते, तथापि प्रकृतार्थोपयुक्त किमप्युपव्याख्यानं यथामति प्रदर्श्यते—तिङ्क्षु फलाभावात् तिङां फलावाचकत्वात् तेषा कर्तृकर्मभावान्यतमस्यैव वाचकत्वात्, साधनभेदात् तिङ्वाच्यकर्तृकर्मान्यतरसाधनगतभेदात्, फलं भवत्येव धातुवाच्यं भिन्नं फलं प्रतीयत एव, भवतेः क्रियासामान्यार्थकत्वात्, चेद् यदि, असौ साधनेभ्योऽवबोधः, असौ प्रागुक्तः, साधनेभ्यः भिन्नसाधनप्रयोज्यः. अवबोधः फलभेदावबोधः, प्रसिद्धः पचतः पचन्तीत्यत्र । यत्र तु न साधनभेदप्रयुक्तः फलभेदावबोधः प्रसिद्धो, यथा—अविवक्षितकर्मभ्योऽकर्मकेभ्यो भावे । तत्र न फलभेदावबोधः । यथा 'चैत्रमैत्राभ्यां पच्यते' इति, 'चैत्रमैत्रविष्णुमित्रैः पच्यते' इति ।

इदानीमस्यैव प्रतिपक्षभूतमभेदं दर्शयितुमाह—भेदस्त्वत्राविवक्षित इति । अत्र शक्तिभेदप्रतिपक्षः शक्त्यभेदो यथा—'समानकर्तृकयोः पूर्वकाले क्त्वा' (३।४।२१) इत्यत्र 'पक्त्वोदनं भुङ्क्ते' इति क्रियाभेदेन प्राप्तः कर्तृकर्मणोः शक्तिभेदो वक्त्रा न विवक्षितः । तथा च सत्यत्र समानकर्तृकत्वमुपपन्नं भवति । व्यापाराभेदः प्रागेव दर्शितो धनुषा विध्यतीत्यत्र । फलाभेदोऽपि पूर्वमुक्त एव । यथा दानस्यैका प्रीतिः फलमिति केचिदिति ।

सम्बधाज्जातभेदत्वस्य प्रतिपक्षो यत्र न सम्बन्धभेदाज्जातभेदत्वम् । यथाऽऽस्यते देवदत्तेन इत्यत्र भावे लकार उत्पन्नः साधनभेदानुपादानात् क्रियाभेदमपि गमयितुं न शक्नोति ।

ननु 'देवदत्तेन' इत्येकवचनोपादानात् साधनैक्येन 'आस्यते' इत्यत्र क्रियैकत्वं प्रतीयते । तेन 'देवदत्तयज्ञदत्ताभ्यामास्यते' इत्यत्र भावे लकारे सत्यपि साधनभेदेन क्रियाभेदः

तदेवं शक्त्यादिभेदेन बहुविधोऽयं भेद इति लक्ष्यैः स्वयमेवोत्प्रेक्ष्यः। तथा तत्प्रतिपक्षभूतस्तद्वदभेदोऽपि बहुविधि एव विज्ञेयः। अनयोश्च भेदाभेदयोः क्वचिद्वास्तवत्वम् क्वचिद्विवक्षामात्रशरणत्वम्। विवक्षापि क्वचिल्लौकिकी, क्वचित् प्रायोक्त्रीत्येतदप्यत्रानुसर्तव्यमिति।

वेदेऽपि भेदव्यवहारो दृश्यते। यजते, ददाति, जुहोतीत्यादौ यागदानहोमरूपादनुबन्धभेदादपूर्वस्य भेदः। अभेदोऽपि यथा—षण्णामप्य ग्नेयादियागानामेकस्मिन्नेवापूर्वे साध्ये ऐक्यमिष्यत इति। एवं षड् द्वादश चतुर्विंशतिश्च लक्षणानि प्राकृतानि वैकृतानि च सप्रतिपक्षाणि दर्शितानि ॥८३।

इदानीं षड्द्वादशचतुर्विंशतिव्यतिरिक्ता अप्यमी बहुप्रकारा न्यायाः पदार्थनिश्चयहेतवः सन्तीति प्रौढवादितया टीकाकारः प्रदर्शयितुमाह--

**प्रसज्यप्रतिषेधोऽयं पर्युदासोऽयमत्र तु ।**
**इदं गौणमिदं मुख्यं व्यापीदं गुरु लघ्विदम् ॥ ८४ ।**

तत्र प्रसज्यप्रतिषेधोऽयमिति। यत्र क्रियापदेन नञः संबन्धो वाक्यभेदश्च।

---

प्रतीयेतेति चेन्न, = एकपदापेक्षयैतत् क्रियैकत्वम् उक्तमस्माभिः। तथा हि—पचतः, पचन्तीत्यत्रैकस्मिन्नेव पदे तिङुपात्तकर्तृभेदाद् यथा क्रियाभेदः, न तथा भावे लकारे 'आस्यते' इत्यादावेकस्मिन् पदे क्रियाभेदः प्रतीयते, किन्तु क्रियैकत्वमेवेत्यदोष इति।

तदेवं शक्त्यादिभेदेन बहुविधोऽयं भेद इति लक्ष्यदर्शनैःस्वयमेवोत्प्रेक्ष्यः। तथा तत्प्रतिपक्षभूतस्तद्वदभेदोऽपि = शक्त्यादिमदभेदोऽपि बहुविध एव विज्ञेयः। अनयोश्च भेदाभेदयोः क्वचिद्वास्तवत्वम्, क्वचिद् विवक्षामात्रशरणत्वम्। विवक्षापि क्वचिल्लौकिकी, क्वचित् प्रायोक्त्री = प्रयोक्तृसम्बन्धिनी प्रयोक्तृगता वा इत्येतदप्यत्रानुसर्तव्यमिति।

वेदेऽपि भेदव्यवहारो दृश्यते। यजति, ददाति, जुहोतीत्यादौ यागदानहोमरूपानुबन्धभेदाद् = अनुबध्यते फलेन सह संबध्यत इत्यनुबन्धो निमित्तं तद्भेदाद् अपूर्वस्य भेदः। अभेदोऽपि यथा—पाकादिवत् षण्णामप्याग्नेयादियागानामेकस्मिन्नेवापूर्वे साध्ये ऐक्यम् = संघीभूयैककर्मरूपत्वम् इष्यत इति। एवं षड् द्वादश चतुर्विंशतिश्च लक्षणानि प्राकृतानि = वेदे प्रकृतियागसंबद्धानि, वैकृतानि = वेदे विकृतियागसंबद्धानि च सप्रतिपक्षाणि दर्शितानि ॥ ८३ ।

इदानीं षड्द्वादशचतुर्विंशतिव्यतिरिक्ता अप्यमी बहुप्रकारा न्यायाः पदार्थनिश्चयहेतवः सन्ति, ये वाक्यवाक्यार्थयोरखण्डत्वस्य प्रतिपक्षभूता इति प्रौढिवादितया प्रदर्शयितुं महाभाष्यस्य टीकाकारः = श्रीभर्तृहरिः कलापेनाह—प्रसज्यप्रतिषेधोऽयमिति।

तत्र प्रसज्यप्रतिषेधो यत्र क्रियापदेन नञः सम्बन्धो वाक्यभेदश्च। तदुक्तमभियुक्तैः—"प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" इति।

शास्त्रे यथा—"अकर्तरि च कारके" इति।

वेदे यथा—"ब्राह्मणो न हन्तव्यः। नानृतं वदेत्" इत्यादि।

लोके यथा – 'असूर्यंपश्या राजदारा" इति। 'पर्युदासोऽयमत्र तु" इति। पर्युदासः खलु प्रसज्यप्रतिषेधविपरीतस्तत्र ह्याख्यातेनैव नञः संबन्ध एकवाक्यता च।

उक्तं च—"नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः" इति।

---

अत्र केचिदाहुः—क्रियापदं समभिव्याहृतपदार्थतावच्छेदकस्याप्युपलक्षणम्। अत एव—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः" इत्यत्रायं दृप्तनिशाचरत्वाभाववानिति बोध इति।

वस्तुतस्तु 'अस्तिर्भवन्तीपरः सर्वत्रैव प्रयुज्यते' इत्यभ्युपगमेनास्तिक्रिययैवात्र नञः संबन्ध इति युज्यते। अयं दृप्तनिशाचरो नास्ति, न भवतीति। एकवाक्यत्वे तु पर्युदासो यथा—अघटमानयेत्यत्र। तत्र प्रसज्यप्रतिषेधः।

शास्त्रे यथा—"अकर्तरि च कारके संज्ञायाम्" (३।३।१९) इति। अत्र हि संज्ञाया कारके च घञ् स्यात्, कर्तरि तु न स्यादिति वाक्यभेदेन क्रियासम्बन्धेऽप्यकर्तरीत्यसमर्थसमासः, असूर्यललाटयोरित्यसमर्थसमासज्ञापकस्य सामान्यापेक्षत्वादिति।

वेदे यथा—"ब्राह्मणो न हन्तव्यः, नानृतं वदेत्" (तै० सं० २।५।५) इत्यादि।

लोके यथा—असूर्यंपश्या राजदारा इति। अत्र सूर्यं न पश्यन्तीति क्रियासंबन्धेन प्रसज्यप्रतिषेधोऽसमर्थसमासश्च।

पर्युदासोऽयमत्र त्विति। पर्युदासः खलु प्रसज्यप्रतिषेधविपरीतः, तत्र ह्याख्यातेन = आख्यातसमभिव्याहृतधातुवाच्यक्रियया नैव नञः संबन्धः, एकवाक्यता च।

उक्तञ्च—"नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः" (मी० श्लो० वा० २३ अपोहवादे त्रयस्त्रिंशस्य श्लोकस्य पूर्वार्धः) इति।

अस्यार्थः—यद्यप्याख्यातेन = तद्वाच्यक्रियया संबध्यमानो नञ् प्रसज्यप्रतिषेधार्थको भवति, तथापि नामधात्वर्थयोगी तु = नामैव धातुर्नामधातुस्तदर्थयोगी तु, नञ्, अमुण्डं करोति अमुण्डयति, अघटं करोति अघटयति—इत्यादौ प्रतिषेधकः, प्रसज्यप्रतिषेधार्थको न भवतीति।

यद्वा 'नामधात्वर्थयोगी' इत्यस्य नामधात्वोरर्थो नामधात्वर्थस्तद्योगी, यो नामार्थः सन् धात्वर्थोऽपि तद्योगी। यथा घञन्तस्थले—असंयोग इत्यादौ। अत्र हि संयोगरूपो नामार्थश्च धात्वर्थश्चेति। किन्तु घञन्तस्थलेऽपि यत्र प्रकृत्यर्थक्रियामात्रयोगो नञस्तत्र संयोगस्याभावोऽसंयोगमित्यादौ प्रसज्यप्रतिषेधो भवत्येव। एवञ्च यत्र मक्षिकाया अभावोऽमाक्षिकमित्यादौ प्रसज्यप्रतिषेधस्तत्र मक्षिकादिपदस्य तत्स्थित्यादौ लक्षणेत्यनवद्यम्।

केचित्त्वाहुः—"पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इति। असूर्यंपश्या इत्यत्र तु नञो नोत्तरपदेन सम्बन्धः, किन्तु तद्व्यवहितेन पश्येत्यनेनेति। प्रसज्यप्रतिषेधस्य

पर्युदासस्य च विवेको भाष्यटीकायां भर्तृहरिणा स्वयं प्रादर्शि। तद्यथा—यद्यपि प्रसज्य-प्रतिषेधे पर्युदासे चाभयत्राप्राप्त्यनुमानम्।

अयं तु विशेषः—"प्रसज्यप्रतिषेधे विच्छेदोपक्रमा प्रवृत्तिः, पर्युदासे तु विशिष्टमेव विप्रतिपद्यमानो विच्छेदोपक्रमं प्रतिपद्यते" इति।

अस्यार्थः—प्रसज्यप्रतिषेधे 'ब्राह्मणो न हन्तव्यः' इत्यादौ, पर्युदासे—'अब्राह्मणः सोमविक्रयी' इत्यादौ चोभयत्रापि प्रतिषेधेन पर्युदासेन चाप्राप्तेरनुमानम्। तथा हि—'ब्राह्मणो न हन्तव्यः' इत्यत्र ब्राह्मणो हननकर्मत्वाभाववान् इति बोधः। अत्र यद्यपि नञो न क्रियया सम्बन्ध इति कथं तस्य प्रसज्यप्रतिषेधार्थकत्वमत्रेति शङ्कोदेति, तथापि विशेषणीभूते हनने क्रियात्वात् तदुपरक्ते कर्मत्वेऽपि क्रियात्वमित्येकः समाधिः। यद्वा क्रियापदस्य स्वसमभिव्याहृतपदार्थतावच्छेदके लक्षणेति द्वितीयः समाधिः। एवं स्थितेऽत्र ब्राह्मणे प्रापकप्रमाणरागप्राप्तं हननकर्मत्वं नानेन वाक्येन प्रतिषिध्यते, प्रमाण-प्राप्तस्य प्रतिषेधायोगात्। किन्तु निषेधशास्त्रेण प्रबलेन रागरूपे प्रमाणे पुरुषदोषसंभावनया दुर्बलीकृते ब्राह्मणकर्मकहननेतरविषयकत्वेन संकोचे ब्राह्मणे हननकर्मत्वाप्राप्तिरित्येवं ब्राह्मणे हननकर्मत्वाप्राप्त्यनुमानम्।

तथा चायमनुमानप्रयोगः—ब्राह्मणः प्रमाणतो हननकर्मत्वप्राप्तिरहितः, शास्त्रप्रति-पाद्यप्रतिषेधविषयत्वात्, यन्नैव तन्नैवम्, यथा महासाहसिकादिरिति।

एवं पर्युदासेऽपि 'अब्राह्मण सोमविक्रयी' इत्यादौ सोमविक्रयिणि ब्राह्मणभेदप्रकारको बोधः। एवं च रागतः प्राप्तस्य सोमविक्रयिणि ब्राह्मणाभेदस्य नात्र बाधः, प्रमाणप्राप्तस्य बाधितुमशक्यत्वात्। किन्तु शास्त्रप्रतिपाद्येन सोमविक्रयिणि ब्राह्मणभेदेन प्रापकप्रमाणे रागे सोमविक्रयिनिष्ठब्राह्मणभेदेतरविषयकत्वरूपः सकोचः क्रियते। एवं चात्र सोमविक्रयिणि ब्राह्मणभेदेन शास्त्रबोधितेन तत्र ब्राह्मणभेदस्याप्राप्त्यनुमानम्।

अयमत्रानुमानप्रयोगः—सोमविक्रयी प्रमाणतो ब्राह्मणाभेदप्राप्तिरहितः, शास्त्रतो ब्राह्मणभेदप्राप्तिमत्वात्, यन्नैव तन्नैव, यथा सोमक्रेता यजमानो ब्राह्मणः। एवमुभयत्रा-प्राप्त्यनुमाने सत्यप्यय तु विशेषः।

प्रसज्यप्रतिषेधे विच्छेदोपक्रमा प्रवृत्तिः।

अयमर्थः—प्रसज्यप्रतिषेधस्थले प्राप्तिरूपस्य संयोगस्य प्रतिपक्षभूतोऽप्राप्तिरूपो विच्छेदस्तदुपक्रमा, उपक्रमेऽप्राप्त्यनुमापिका प्रतिषेधशास्त्रस्य प्रतिषेधबोधनरूपा प्रवृत्तिरिति।

पर्युदासे तु विशिष्टमेव विप्रतिपद्यमानो विच्छेदोपक्रमं प्रतिपद्यत इति।

अस्यार्थः—पर्युदासे तु = भेदप्रतिपादनस्थले तु, विशिष्टमेव विप्रतिपद्यमानः। अत्रैवकारो भिन्नक्रमः। विशिष्टं विप्रतिपद्यमान एवेति।

अयमर्थः—विशिष्टम् = ब्राह्मणव्यावृत्तिरूपभेदविशिष्टं सोमविक्रयिपदार्थं विशेषेण प्रतिपद्यमान एव जानान एवेति। विच्छेदोपक्रमम् अप्राप्त्युपक्रमम्, अप्राप्तिरुपक्रमे यस्येति व्युत्पत्तेः। उपक्रमेऽप्राप्त्यनुमापकमिति यावत्। विशिष्टं प्रतिपद्यत इति योजना।

तत्र शास्त्रे यथा—"आतोऽनुपसर्गे कः" इति। वेदे यथा—"अब्राह्मणः सोमविक्रयी" इत्यत्र जातिमात्रानुगमेन ब्राह्मणसदृशस्य कस्यचिदेव प्रतिपत्तिः। यथा च "नोद्यन्तमादित्यमीक्षेत" इत्येवमादि स्मार्तमुदाहरणदूरविप्रकर्षादत्र वैदिकमेव।

लोके यथा—"अब्राह्मणमानय" इति। "इदं गौणम्" इति। शास्त्रे यथा—"तत्पुरुषःसमानाधिकरणः" इति। अत्रावयवानां समानाधिकरणत्वात् तत्पुरुषस्यापि समानाधिकरणत्वम्।

वेदे यथा—"आदित्यो यूपः, यजमानः प्रस्तरः" इति। अत्र गुणान्वाकचैक्यादेर्यूपादिरप्यादित्यादिरित्युच्यते।

---

अयं भावः—प्रसज्यप्रतिषेधस्थले प्रतिषेधमात्रस्य प्राधान्येन बोधः, न तु धर्मिपारतन्त्र्येण। तादृशेन च प्रतिषेधेन उपक्रमेऽप्राप्त्यनुमानम्। पर्युदासे तु व्यावृत्तिरूपस्य भेदस्य धर्मिपारतन्त्र्येणैव बोधः। तादृशेन च भेदेनोपक्रमेऽप्राप्त्यनुमानमिति।

तत्र शास्त्रे पर्युदासो यथा—'आतोऽनुपसर्गे कः' (३।२।३) इति। अत्र अनुपसर्गे इत्यस्य 'उपसर्गभिन्न उपपदे' इत्यर्थ इति पर्युदासः। उपसर्गे कप्रत्ययो न स्यादित्येवं क्रियान्वयेन प्रसज्यप्रतिषेधस्तु नात्र, उपसर्गस्य कप्रत्ययोत्पत्त्यधिकरणत्वासंभवेन तन्निषेधासंभवात्। सत्सप्तमीस्वीकारे तूपपदविभक्तित्वेन क्रियान्वयाभावः। कारकविभक्तित्वं हि क्रियान्वय्यर्थकविभक्तित्वम् क्रियाजनकार्थकविभक्तित्वं वा। न चात्रानयोरपि सत्सप्तमीस्वीकारे संभव इति।

वेदे पर्युदासो यथा—'अब्राह्मणः सोमविक्रयी' इत्यत्र ब्राह्मणत्वजातिव्यतिरिक्तस्य जातिमात्रस्य=सर्वस्या जातेः अनुगमेन संबन्धेन कस्यचिदेव=कस्यचिदपि ब्राह्मणसदृशस्य ब्राह्मणभिन्नस्य प्रतिपत्तिः, पर्युदासस्यैव सादृश्यस्यापि नञर्थत्वात्। न त्वब्राह्मण इत्यत्र ब्राह्मणत्वाभावस्य प्रतीतिः, ब्राह्मणत्वस्याप्रधानत्वेन तेन समं नञोऽसंबन्धादिति। यथा च—"नोद्यन्तमादित्यं पश्येत्" (मनु० ४।३७, व०ध० सू० १२।१०) इत्येवमादिस्मार्तमुदाहरणं वेदस्यादूरविप्रकर्षादत्र वैदिकमेव। अत्राप्युद्यदादित्यकर्मकेक्षणविरोधिनं संकल्पं भावयेदिति बोधः। न त्वत्र प्रसज्यप्रतिषेधको नञ्, अथ तस्य वटोर्व्रतमित्युपक्रमेण व्रतस्यात्र विधानात्। व्रतं चावश्यकर्तव्यमुच्यते। नहीक्षणाभावस्य व्रतत्वमुपपद्यते। पर्युदासश्च भेदवद् विरोधोऽप्यवगन्तव्य इति।

लोके पर्युदासो यथा—अब्राह्मणमानयेति; इदं गौणमिति। शास्त्रे यथा तत्पुरुषः समानाधिकरणः कर्मधारय इति। अत्र पूर्वोत्तरपदरूपयोरवयवयोः समानाधिकरणत्वात् तत्पुरुषस्यापि समानाधिकरणत्वम्। तथा चात्र समानाधिकरणपदघटितत्वेन लक्षणया समानाधिकरणत्वव्यवहारस्तत्पुरुष इति, लाक्षणिकत्वरूपं गौणत्वमत्र समानाधिकरणपदेन तु सादृश्यमूलकं गौणत्वमिति।

वेदे यथा—'आदित्यो यूपः' (तै० ब्रा० २।१।५।२), 'यजमानः प्रस्तरः' (तै० सं०

लोके च—"सिंहो माणवकः, गङ्गायां घोषः" इत्यादि ।

इदं मुख्यमिति । अत्र शास्त्रे यथा—"धातोः", "प्रातिपदिकात्" इत्यादावभिधेयस्य मुख्यत्वम् ।

वेदे यथा—"यजमानोऽध्वर्युमन्वालभते" इत्यत्राध्वर्युयजमानौ मुख्यावेव ।

लोके यथा—"शूरो माणवकः" इति ।

"व्यापीदम्" इति । शास्त्रे यथा—"एकश्रुति दूरात्संबुद्धौ" इति । तत्र हि लौकिक्याः संबुद्धेर्ग्रहणं व्यापित्वात् । तद्ग्रहणे हि शास्त्रीयापि संबुद्धिः परिगृहीता भवति । वक्ष्यति च—

---

१।७।४।४; तै० ब्रा० ३।३।६।२) अत्रादित्यवच्चाकचैक्याद् = उज्ज्वलत्वाद् यूप आदित्यः, यजमानवदुपकारकत्वाच्च प्रस्तरो यजमानः ।

लोके च गौणत्वं यथा—सिंहो माणवक इति सदृशलाक्षणिकत्वरूपं गौणत्वम् । गङ्गायां घोष इत्यादौ शुद्धलाक्षणिकत्वरूपं गौणत्वम् ।

इदं मुख्यमिति । तत्र शास्त्रे यथा—धातोः, प्रातिपदिकादित्यादावभिधेयस्य मुख्यत्वम् । हन् इत्यत्र मुख्यं धातुत्वमिति ततस्तिङः कृतश्च प्रत्ययाः । यत्र त्वतिदिष्टं धातुत्वम्, यथा अहन् इत्यत्र लङि तिपि सिपि वाऽडागमे यदागमपरिभाषयाऽतिदिष्टं गौणं धातुत्वम् तत्र सामान्यतः कर्तृरूपार्थमादाय, अहन्नित्यस्य साधुत्वे पश्चाद् देवदत्तादिपदयोगे तदर्थे कर्तृरूपार्थस्याभेदेन विशेषणत्वविवक्षायां तृजादयो नेति । प्रातिपदिकत्वं तु मुख्यं रामशब्दादाविति ततः सुप्प्रत्ययः । काण्डे, कुड्ये इत्यादौ त्वतिदिष्टं प्रातिपदिकत्वं गौणमिति न तत्र 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१।२।४७) इति ह्रस्वत्वम् । सुप्प्रत्ययोत्पत्तिस्त्वत्र नाशङ्कितुं शक्यते, विरुद्धविभक्त्यवरुद्धत्वात् । अनुवादकविभक्तेरुक्तार्थानामप्रयोग इत्यभ्युपगमेन बाधादिति ।

वेदे यथा—"तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते, प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानः" (शतपथ० ३।८।२।६) इति । अत्र यजमानोऽध्वर्युमन्वारभत इति वृत्ते वाक्येऽध्वर्युयजमानौ मुख्यावेव । लोके यथा—शूरो माणवक इति । अत्र शौर्यं शत्रुहिंसानुकूलं समुत्साहचेष्टितं शरीरधर्मः । शृणाति इति शूर इत्युणादितो व्युत्पत्तेः । अतोऽत्र शूरमाणवकौ मुख्यावेव ।

व्यापीदमिति । शास्त्रे व्यापकत्वं पदार्थनिर्णायकं यथा—'एकश्रुति दूरात्संबुद्धौ' (१।२।३३) । अत्र हि लौकिक्याः संबुद्धेर्ग्रहणं व्यापकत्वात् । लौकिकी च संबुद्धिः अभिमुखीभावरूपा । तस्या ग्रहणे चैकवचनं संबुद्धिरिति शास्त्रीयाऽपि संबुद्धिः परिगृहीता भवति । सम्बुद्ध्यन्तेन पदेन प्रयुक्तेन हि प्रतिपत्ताऽभिमुखीक्रियत इति । अयमेव व्याप्तिन्यायपदेन 'प्राग्रीश्वरान्निपाताः' (१।४।५६) इत्यादौ व्यवह्रियत आधुनिकैरपि । तत्र हि रेफविशिष्टग्रहणं व्याप्तिन्यायेन 'ईश्वरे तोसुन्कसुनौ' (३।४।१३) इत्यस्यावधित्वं मा भूदित्येतदर्थं क्रियत इति । अस्य तु न्यायस्य प्रतिपक्षः प्रत्यासत्तिन्यायः । तेन न्यायेन 'अधिरीश्वरे'

विषयं कृत्रिमस्यापि लौकिकः क्वचिदुच्चरन् ।
व्याप्नोति दूरात् संबुद्धौ तथा च ग्रहणं द्वयोः ।। इति ।

यावत्सु चोभयानुग्रहस्तत्र सर्वमनुगन्तव्यं व्यापित्वेनेति ।

वेदेऽपि—"सर्वे प्रधानयागविषया ज्योतिष्टोमेन" इत्याद्यधिकारविधयः ।

लोकेऽपि यथा—कयाचिदितिकर्तव्यतया सन्निहत्यामपरसिन्धुस्नानम् ।

यदुच्यते—

उपोष्य रजनीमेकां सन्निहत्यां नरोत्तमः ।
सौर्ये तमसि गङ्गायां चान्द्रे चापि विमुच्यते ।। इति ।

---

(१।४।६७) इत्यस्य ग्रहणे तु 'प्राग्रीश्वरान्निपाताः' (१।४।५६) इति रेफरहितमेव पठनीयमिति च वदन्ति । वक्ष्यति च व्याप्तिन्यायस्य फलमुदाहरणं चात्रोदितमग्रे—

विषयं कृत्रिमस्यापि लौकिकः क्वचिदुच्चरन् ।
व्याप्नोति दूरात्संबुद्धौ तथा च ग्रहणं द्वयोरिति ।। (वा० प० २।३७७)

अस्यार्थः—लौकिकोऽकृत्रिमः संज्ञाशब्दः शास्त्रे क्वचिदुच्चरन् कृत्रिमस्यापि शास्त्रीयस्य संज्ञाशब्दस्य विषयं व्याप्नोति । तथा हि— एकश्रुति दूरात्संबुद्धौ (१।२।३३) इत्यत्र सूत्रे संबोधनं सम्बुद्धिरिति लौकिकेन शास्त्रीयमप्येकवचनं संबुद्धिरिति गृह्यत एव, तत्रापि सम्बोधनस्य विद्यमानत्वादिति । यावत्सु च स्थलेषूभयानुग्रहः = उभयोः कृत्रिमाकृत्रिमयोः, प्रत्यासन्नविप्रकृष्टयोर्वा अनुग्रहस्तत्सर्वमनुगन्तव्यं व्यापित्वेन = व्याप्तिन्यायेनानुगतं ज्ञातव्यमिति ।

वेदेऽपि सर्वे ये प्रधानयागसंबन्धिफलविषयाः "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्याद्यधिकारविधयः सन्ति, ते ज्योतिष्टोमादिपदस्य प्रधानयागलक्षकत्वेन यत्र विश्वजिदादौ फलं न श्रूयते, तत्रापि स्वर्गरूपं फलं विदधति, लक्षणया सर्वकर्मव्यापकत्वात् । तदुक्तं 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' (पू० मी० ४।३।१५) इति । यत्र तु रात्रिसत्रादौ स्वर्गव्यतिरिक्तं प्रतिष्ठादिकं फलमर्थवादे श्रूयते, तत्र तु वचनबलादार्थवादिकमेव फलं रात्रिसत्रादीनां कल्प्यत इति ।

लोकेऽपि यथा—कयाचिदितिकर्तव्यतया = एकरजनीकालाधिकरणकोपवासरूपया संनिहत्यां स्नानम्, सौर्ये राहूपरागे चान्द्रे वा राहूपरागेऽमरसिन्धुस्नानं संपद्यते, द्वयोः स्नानयोरेकफलकत्वात् । यदुच्यते—

उपोष्य रजनीमेकां संनिहत्या नरोत्तमः ।
सौर्ये तमसि गङ्गायां चान्द्रे चापि विमुच्यते ।। इति ।

अत्र क्वाचित्के स्मार्ते श्लोके योग्यतया स्नात्वेति पदमध्याहृत्यायमर्थो भवति—नरोत्तमः ।

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च तीर्थञ्च स तीर्थफलमश्नुते ।।

अत्र सकृदेव स्नानात् त्रैलोक्याभ्यन्तरगतसर्वतीर्थस्नानमिति व्याप्युदाहरणं प्रसङ्गादुक्तम् ।

गुरु लघ्विदमिति । तत्र शास्त्रे यथा—'पृषोदरादीनि यथोपदिष्टमि'ति शिष्टप्रसिद्धसाधुशब्दौघप्रतिपादने लघुरुपायः । स एव तु प्रातिपदिकादनभिहित-कर्मादिगतैकत्वादौ स्वादय इत्यादिना गुरुरुपायः ।

लोकेऽपि—लोहितशालिमानयं ग्राम इत्यादिवचनव्यक्तिषु कर्मधारयमत्वर्थीययोरेकत्र क्रियमाणयोः गुरुप्रक्रम उपजायते, लघुत्वं तु प्रक्रमस्य बहुव्रीहेस्तत्रेति ।

वेदे तु गुरुलाघवव्यवहारतन्त्रप्रसङ्गावृत्तिषु । तत्रावृत्तौ गुरुः प्रक्रमो यथा—त्रिः प्रथमामन्वाह त्रिरुत्तमामिति । तन्त्रप्रसङ्गयोस्तु लाघवव्यवहारो यथा निदर्शितं प्रागिति ॥८४॥

---

इति लक्षणलक्षितः । (हस्तपादादिरूपकर्मेन्द्रियमनआदिज्ञानेन्द्रियचापलरहितः । विद्यातपस्तीर्थसंयमसंपन्नश्च । तत्र विद्यासंयमः अश्लीलाधर्म्यविद्यापरिहारेणाध्यात्मधर्म्यविद्यापरिग्रहः । तपःसंयमो हितमितमेध्याशनादिरूपः शास्त्रविहितः, न त्वासुरो गीतादिशास्त्रेषु निन्दितः स्वोपज्ञः । तीर्थसंयमो यथाशास्त्रं सदाचारसम्पन्ने विद्याविनयसंपन्ने च गुरौ वास इति ) एकां रजनीम् इत्यत्र कालात्यन्तसंयोगे द्वितीया । उपोष्य । संनिहत्याम् = संनिहती नाम कुरुक्षेत्रमिति नीलकण्ठी तत्रैव । स्नात्वा विमुच्यते ।

किञ्च, तमसि तमोग्रहे राहौ सौर्ये सूर्यसंबद्धे चान्द्रे = चन्द्रसंबद्धे चापि गङ्गाया स्नात्वा विमुच्यत इति । अत्र 'संनिहती' इति 'संनिहत्या' इति च तीर्थविशेषस्य संज्ञा । तदुक्तं महाभारते—

मासि मासि नरव्याघ्र संनिहत्यां न संशयः ।
तीर्थसंनिहनादेव संनिहत्येति विश्रुता ॥ इति । (वनपर्व, ८३।१९५)

अत्र सकृदेव संनिहत्या स्नानात् त्रैलोक्याभ्यन्तरगतसर्वतीर्थस्नानमिति व्याप्युदाहरणं प्रसङ्गादुक्तम् ।

गुरुलघ्विदमिति । तत्र शास्त्रे यथा—'पृषोदरादीनि यथोपदिष्टम्' (पा० ६।३।१०९) इति शिष्टप्रसिद्धसाधुशब्दौघप्रतिपादने लघुरुपायः । स एव तु प्रातिपदिकादनभिहित-कर्मादिगतैकत्वादौ स्वादय इत्यादिरूपेण साधुशब्दौघप्रतिपादने गुरुः ।

लोकेऽपि लोहितशालिमानयं ग्राम इत्यादिवचनव्यक्तिषु कर्मधारयमत्वर्थीययोरेकत्र क्रियमाणयोः प्रक्रमः = प्रारम्भो गुरुरुपजायते, वृत्तिद्वयकल्पनात् । लघुत्वं त्वत्र बहुव्रीहेः प्रक्रमस्येति ।

वेदे तु गुरुलाघवव्यवहारस्तन्त्रप्रसङ्गावृत्तिषु । तत्रावृत्तौ गुरुः प्रक्रमो यथा—'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' (तै० सं० २।५।७) इति । अत्र त्रयोदशसंख्याकानां सामिधेनीनामृचाम्, सप्तदश सामिधेन्यो भवन्तीति श्रुतसाप्तदश्यसंपत्तये क्रियमाणा प्रथमोत्तमयोर् ऋचोस्त्रिरावृत्तिस्त्रयोदशत्वापेक्षया गुरुप्रक्रमोऽपि वचनबलादाश्रीयते । तन्त्रप्रसङ्गयोस्तु लाघवव्यवहारो यथा निदर्शितः प्राक् तथाऽवगन्तव्य इति ॥ ८४ ॥

**भेदेनाङ्गाङ्गिभावोऽस्य बहुधेदं विकल्प्यते ।**
**इदं नियम्यतेऽस्यात्र योग्यत्वमुपजायते ॥ ८५ ॥**

भेदेनाङ्गाङ्गिभावोऽस्येति । यथा शास्त्रे—संयुक्तविधानेषु तस्यापत्यं कर्तरि कृदित्यादि ।

वेदे यथा—एकस्यैवावयवः संबध्यमानो व्यवहितैरपि वाक्यान्तरैः संबन्धमुपयाति । यथा—अच्छिद्रेणेत्यादिश्चित्पत्यादिभिरिति । पूर्वमेकैकस्यैवाङ्गाङ्गिभावः इदानीं बहूनामङ्गिनां यथा प्रदर्शितमेकमङ्गमिति पुनरस्योपादानम् ।

लोकेऽपि—

मणिः शाणोल्लीढः शरदि सरितः श्यानपुलिनाः
कलाशेषश्चन्द्रः सुरतमृदिता बाललननाः ।
मदक्षीणो नागः समरविजयी हेतिनिहत-
स्तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ॥ (नीतिशतकम् ३०)

इत्यादिदीपकालङ्कारेष्वेकस्या एव क्रियाया बहुभिर्वाक्यैः सम्बन्ध इति ।

बहुभेदं विकल्प्यत इति । तत्र शास्त्रे यथा—क्वचित्प्राप्तविकल्पः, क्वचिदप्राप्तविकल्पः, क्वचिदुभयविकल्पः ।

---

भेदेनाङ्गाङ्गिभावोऽस्येति—अस्य भेदो विभागः, संबन्धाभावो न, किन्त्वङ्गाङ्गिभावरूपः संबन्ध इत्यर्थः । भेदेनेति तृतीयान्तपाठस्त्वसङ्गतः । शास्त्रे यथा—विशेषविधिना सह संयुक्तविधानेषु 'तस्यापत्यम्' (पा० ४।१।९२), 'कर्तरि कृत्' (पा० ३।४।६७) इत्यादिषु सामान्यविधिषु । अत्र ह्येकवाक्यतया सामान्यविधीनां विशेषविधिष्वङ्गत्वेनान्वयः ।

वेदे यथा—एकस्यैवावयवः संबध्यमानो व्यवहितैरपि वाक्यान्तरैः सबन्धमुपयाति । यथा—"चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण" (तै० सं० १।२।१।१) इत्यादि । अत्र 'अच्छिद्रेण पवित्रेण' इति चित्पत्यादिभिः सर्वैः संबध्यत इति । पूर्वमेकैकस्याङ्गाङ्गिभाव उक्तः, इदानीं तु बहूनामङ्गिना यथा प्रदर्शितमेकमङ्गमिति पुनरङ्गाङ्गिभावस्योदाहरणायोपादानं न विरुध्यते ।

लोकेऽपि यथा—मणिः शाणोल्लीढः ········ इत्यादिदीपकालङ्कारेष्वेकस्या एव क्रियाया बहुभिर्वाक्यैः संबन्ध इति ।

बहुधेदं विकल्प्यत इति। क्वचित्तु 'बहुभेदं विकल्प्यते' इति पाठः, स तु न युक्तः । एतत्पाठपरिग्रहे हि बहुभेदमित्यस्य क्रियाविशेषणतया विकल्पविषयालाभेन नैराकाङ्क्ष्यं न भवति, किं तद् यद् विकल्प्यत इत्याकाङ्क्षाया अनिवृत्तेः । तत्र शास्त्रे बहुधा विकल्पो यथा—क्वचित् प्राप्तविकल्पः । 'अनुस्वारस्य ययि परसवर्णः' (पा० ८।४।५८), 'वा पदान्तस्य' (८।४।५९) इति । क्वचिदप्राप्तविकल्पः—विभाषा घेट्श्व्योरिति (पा० ३।१।४९), च्लेश्चङ् वा स्यादिति । क्वचिदुभयत्र विकल्पो यथा—'हृक्रोरन्यतरस्यामि'ति (पा० १।४।५३) । इयं हि विकारयति सैन्धवान्, विकारयति सैन्धवैरित्यत्राकर्मकत्वात्

वेदे यथा—"यत्किञ्चित् प्रागग्नीषोमीयात्तत्सर्वमुपांशु कर्तव्यम्" इत्यत्रोपांशुस्वरे प्राप्ते दीक्षणीयायां यथेष्टमुच्चैः स्वरविधानमित्यादि।

लोके यथा–'किं तारुण्यतरोरियमि'त्यादौ महाकविभिरुत्प्रेक्षिता विकल्पाः।

इदं नियम्यत इति। शास्त्रे यथा— "पतिः समास एव", "ते प्राग्धातोः" इत्यादि।

वेदे यथा—"नक्षत्रदृष्ट्वा वाचं विसृजेत्" इति। अत्र नियत एव काले वाग्विसर्गो नियमितः।

लोकेऽपि यथा—पार्थ एव धनुर्धर इत्यत्र धानुष्कत्वं पार्थे नियम्यते।

---

प्राप्ते विभाषा। हारयति कारयति वा कटं भृत्यं भृत्येन वा इत्यत्राप्राप्ते विभाषेत्युभयत्र विभाषेति।

वेदे यथा—'यत् किञ्च प्राचीनं तदुपांशु चरन्ति" (मैत्रायणीसं० ३।८।२) इति।

अस्यार्थः—यत्किञ्चित् प्राग् अग्नीषोमीयात् तत्सर्वमुपांशु कर्तव्यमिति। चरन्तीति लोडर्थे लेट्। अत्र दीक्षणीयायामुपांशुस्वरे प्राप्ते यथेष्टमुच्चैः स्वरविधानमितीच्छातो विकल्पः।

लोके विविधोत्प्रेक्षारूपा विकल्पा यथा—

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः।

(अलङ्कारसर्वस्वे पृ० ४३; काव्यानुशासने पृ० ३९)

इत्यादयो महाकविभिरुत्प्रेक्षिता विकल्पा इति।

इदं नियम्यत इति। शास्त्रे यथा—पतिः समास एव (पा० १।४।८), ते प्राग्धातोः (पा० १।४।८०) इति। उपसर्गा धातोः प्रागेव प्रयोक्तव्या इति।

वेदे यथा—'नक्षत्रं दृष्ट्वा वाचं विसृजते' (काठकसं० २३।५७) इति। अत्र विसृजते इति लिङर्थे लेट्। तेन विसृजेदित्यर्थः। अत्र नियत एव काले वाग्विसर्गो नियमितः। तथा हि—नक्षत्रं दृष्ट्वैव वाचं विसृजेदिति वाक्यस्य नक्षत्रदर्शनयोग्ये काले लक्षणा। तेन दिवा सत्यपि कदाचित् कथञ्चिद् नक्षत्रदर्शने वाङ् न विसृज्यते, रात्रौ चाभ्राच्छन्ने नभसि, असत्यपि नक्षत्रदर्शने, तद्योग्ये काले वाग् विसृज्यत इति। इति वाग्विसर्गनियमः। तथा चाहुर्वृद्धाः—यत्रैवकारस्ततोऽन्यत्र नियम इति। नक्षत्रं दृष्ट्वा वाचं विसृजेदेवेत्येवमेवकारयोजनया तु कालो नियम्यत इति।

लोकेऽपि यथा—

विवादोऽपार्थ एवायं पार्थ एव धनुर्धरः।
यो न केवलमात्मीयैः परैरप्यभिनन्द्यते॥ इति।

(सरस्वतीकण्ठाभरणे २।५१ उदाहरणश्लोकः)

अस्यात्र योग्यत्वमुपजायत इति। यथा शास्त्रे—"उः स्थानेऽणः प्रसज्यमानस्यैव रपरत्वं प्रति योग्यत्वमुपजायते" इति। यथा वा—"पद एकस्मिन्नुदात्ते स्वरिते वा क्रियमाणे वर्ज्यमानशेषस्य निघाते योग्यत्वमुपजायते" इति।

वेदे यथा –"ज्योतिष्टोमेन यजेत" इत्यत्र त्रैवर्णिकस्यैव योग्यत्वम्।

लोके यथोच्यते—"धुरि धुर्यो नियुज्यते" इति। यो यः कश्चिदर्थी समर्थः शास्त्रेणापर्युदस्तः स योग्य इत्युच्यते ॥८५॥

**अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद्भेदोऽनुमीयते।**
**अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यते ॥ ८६ ॥**

अस्य वाक्यान्तरे दृष्टाल्लिङ्गात् भेदः प्रतीयत इति। शास्त्रे यथा—'ओः पुयण्ज्यपरे' इति वचनाण् णौ कृतं स्थानिवद्भवतीति।

---

अस्यार्थः—अयं विवादः—पार्थ एव धनुर्धरः, अन्योऽपि वा धनुर्धर इति विकल्पः, अपार्थ एव = अपगतार्थोऽर्थशून्य एव। यतो यः पार्थो न केवलमात्मीयैरेव, अपि तु परैरपि धनुर्धरत्वप्रयुक्ते कर्मणि अभिनन्द्यते = स्तूयत इति। अत्र धनुर्धरत्वं पार्थे नियम्यते, विशेष्यसंगतस्यैवकारस्यान्ययोगव्यवच्छेदार्थकतया पार्थान्ययोगव्यवच्छेदवद् यद् धनुर्धरत्वं तद्वान् पार्थ इति बोधात्।

अस्यात्र योग्यत्वमुपजायत इति। यथा शास्त्रे—उः स्थानेऽणः प्रसज्यमानस्यैव रपरत्वं प्रति योग्यत्वमुपजायत इति। यथा वा—पद एकस्मिन्नुदात्ते स्वरिते वा क्रियमाणे वर्ज्यमानस्य शेषस्य निघाते योग्यत्वमुपजायत इति।

वेदे यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत' (तै० ब्रा० १।५।११।२) इत्यत्र त्रैवर्णिकस्यैवोपनयनसंबन्धेन विद्यावत्तया योग्यत्वम्।

लोके यथा—

गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते।
असञ्जातकिरणस्कन्धः सुखं स्वपिति गौर्गलिः।

(का० प्र० १० उ०, १०९)

अत्र किणो व्रणचिह्नम्। गडिस्तु कर्माक्षमो वृषभः। परुआ इति भोजपुरीभाषायाम्। धुर्यो धूर्वहनक्षमः। अत्र धुर्यस्यैव वृषभस्य धुरि नियोगं प्रति योग्यता, न तु गडेः। यो यः कश्चिदर्थी समर्थः शास्त्रेणापर्युदस्तः स योग्य इत्युच्यते शास्त्रे ॥ ८५।

**अस्य वाक्यान्तरे दृष्टिल्लिङ्गाद् भेदः प्रतीयत** इति—शास्त्रे यथा—'ओः पुयण्ज्यपरे' (७।४।८४) इति वाक्यान्तरे दृष्टाद् अभ्यासोकारस्येकारविधानरूपाल्लिङ्गात् स्थानिवदादेशोऽनल्विधाविति (१।१।५६) योगस्य णौ कृतं स्थानिवद्भवतीति णौ कृतस्य पुनः स्थानिरूपताप्रत्यापत्तिरूपो भेदः (विशेषः) प्रतीयते, न तु 'द्विर्वचनेऽचि' (१।१।५९) इति स्थानिवत्त्वप्रतिषेधः।

वेदे यथा—"अक्ताः शर्करा उपदधाति" इत्यत्र केनाक्ता इत्याकाङ्क्षायाम् "तेजो वै घृतम्" इति घृतस्तुतेर्वाक्यान्तराल्लिङ्गाद् घृतेनाक्ता इति विशेषः प्रतीयते ।

लोके यथा—रामोऽसौ भुवनेष्वित्यादौ दाशरथिः परशुरामो वेति संशये वाक्यान्तरगतात् "एकबाणहतश्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः" इति लिङ्गाद् दाशरथिप्रतिपत्तिरेवेति । अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यत इति ।

शास्त्रे यथा—धृषिशसी वैयात्ये इत्यस्माद्वैयात्यशब्दादपोद्धृत्य वियातभावो वैयात्यमिति विभज्यते ।

वेदे यथा—वायव्यं श्वेतमालभेतेत्यस्माद्वाक्याद्वायव्यपदार्थादपोद्धृत्य "वायुर्वै क्षेपिष्ठा देवता" इति प्रविभज्यते । लोकेऽपि राजपुरुष इत्युक्ते कस्य राज्ञः, शूद्रकस्येति प्रश्नोत्तरयो राजपदार्थप्रविभागः ॥ ८६ ।

---

वेदे यथा—"शर्करा अक्ता उपदध्यात्, तेजो वै घृतम्" इति श्रूयते (तै० ब्रा० ३।१२।५।१२) । अत्र केनाक्ता इत्याकाङ्क्षायाम् 'तेजो वै घृतम्' इति घृतस्तुतिरूपाद् वाक्यान्तराल्लिङ्गाद् घृतेनाक्ता इति विशेषः प्रतीयते । लोके यथा—

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः समृद्धिं पराम्
अस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहत-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

(वक्रोक्तिजीविते पृ० २८, सरस्वतीकण्ठाभरणे पृ० ५८६, काव्यप्रकाशे ५।१०६ । काव्यानुशासने पृ० ३९ सदुक्तिकर्णामृते च)

इयं राघवानन्दनाटके विभीषणस्य रावणं प्रत्युक्तिरिति चन्द्रिकाख्यायां काव्यप्रकाशव्याख्यायां स्पष्टम् । अत्र रामो दाशरथिः परशुरामो वेति संशये वाक्यान्तरगताद् एकबाणाहतश्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिरिति लिङ्गाद् दाशरथिप्रतिपत्तिरेवेति ।

अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यत इति । शास्त्रे यथा—'धृषिशसी वैयात्ये' (पा० ७।२।१९) इत्यत्र वैयात्यशब्दाद् वियात ष्यञ् इति प्रकृतिप्रत्ययावपोद्धृत्य वियातस्य भावो वैयात्यमिति प्रकृत्यर्थप्रत्ययार्थौ विभज्येते इति ।

वेदे यथा—'वायव्यं श्वेतमालभेत' (तै० सं० २।१।१) एतद्वाक्यार्थमताद् वायव्यपदार्थाद् वायुपदार्थमपोद्धृत्य 'वायुर्वै क्षेपिष्ठा देवता' (तै० सं० २।१।१) इत्यनेनार्थवादेन वायुदेवता पशुप्रविभागेण स्तूयते । लोकेऽपि राजपुरुष इत्युक्ते कस्य राज्ञ इति प्रश्ने शूद्रकस्येत्युत्तरे च राजपदार्थप्रविभाग इति ॥ ८६ ॥

इदानीं प्रकृते चोद्यमुपसंहर्तुमाह—

**इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः ।**
**सर्वे ते न प्रकल्पेरन् पदं चेत् स्यादवाचकम् ॥८७॥**

अनंशे वाक्येऽभ्युपगम्यमाने वाक्येषु पदसमुदायरूपेषु सत्यपदार्थोपनिबन्धनेषु ये धर्मा वाक्यार्थानुग्राहिणः पदार्थविशेषसंप्रत्ययप्रतिबद्धास्ते सर्वेऽत्राऽविद्यमानोद्देशप्रविभागे न प्रतिष्ठां लभेरन्, यदि सत्यं पदं वाचकं न स्यादिति पदवादी प्रत्यवतिष्ठते ॥ ८७ ॥

एवं पदवादिनाऽखण्डवाक्यवादिनो दूषणव्राते समापिते इदानीमेतत् समाधातुमखण्डवाक्यवाद्याह—

**अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते ।**
**वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥ ८८ ॥**

---

इदानीं वाक्यावाक्यार्थयोरखण्डत्वे चोद्यं = पूर्वपक्षम् उपसंहर्तुमाह—इति **वाक्येष्विति ।** इति = एवं रूपा ये पदार्थोपनिबन्धनाः = पदार्थविशेषावधारणप्रयुक्ताः, वाक्येषु धर्मा वाक्यार्थविशेषावधारका न्यायास्ते सर्वेऽपि न प्रकल्पेरन् वाक्यार्थविशेषावधारणे न शक्ताः स्युः, चेद् = यदि, पदं वाक्यघटकं सुप्तिङन्तलक्षणम्, अवाचकम् = स्वार्थाभिधायकं न स्यादिति योजना ।

अयं भावः—अखण्डे वाक्येऽभ्युपगम्यमाने वाक्येषु पदसमुदायरूपेषु स्वार्थावबोधनं प्रति सत्यैः स्वघटकपदानामर्थैः प्रयुक्तेषु ये प्रागुक्ता न्यायरूपा धर्मा वाक्यार्थविशेषव्यवस्थापनेन वाक्यार्थानुग्राहिणः पदार्थविशेषाणां संप्रत्ययैर्जनकतया सम्बद्धास्ते वाक्येषु सर्वेष्वविद्यमानपदरूपावयवप्रविभागेषु सत्सु प्रतिष्ठाम् = स्थितिं न लभेरन्, यदि सत्यं पदं वाचकं न स्यादिति पदवादी प्रत्यवतिष्ठत इति ॥ ८७ ॥

एवं पदवादिनाऽखण्डवाक्यतदर्थवादिनं प्रति दूषणव्राते समापिते = समाप्तिं नीते इदानीमेतत्समाधातुमखण्डवाक्यवाद्याह—**अविभक्तेऽपीति ।**

अस्यार्थः—अविभक्ते पदार्थावान्तरवाक्यार्थप्रतीतावपि वस्तुगत्याऽविभक्ते पदार्थावान्तरवाक्यार्थशून्ये वाक्यार्थे सत्यपि, शक्तिभेदाद् वाक्यनिष्ठात् पदार्थावान्तरवाक्यार्थप्रतीत्यनुकूलात् शक्तिभेदाद्, वाक्यावान्तरविभागेन = अवान्तरवाक्यविभागेन पदविभागेन च महावाक्येऽपोद्धृते बुद्ध्या पृथक्कृते सति यथोक्तं पदार्थविशेषावधारकं न्यायकदम्बकमन्यद्वा पदार्थसाधनं वाक्यवाक्यार्थाखण्डत्ववादिनो मते न विरुध्यते विरुद्धं न भवतीति ।

एतत्सव यथोक्तमस्मत्पक्षे न विरुध्यते। तथा चास्मत्पक्षेऽविभक्ते निर्विभागे वाक्यार्थे एकस्मिन्नपि तस्मिन् पानकरसादिवत्समाश्रीयमाणे शक्तिभेदसमाश्रयणेन चापोद्धृते कृतापोद्धारे सत्यवान्तरवाक्यार्थोपजननात् सर्वमेतत्सिध्यतीति तात्पर्यम्। यथा शाक्यदर्शने निर्विभागमेकमेव सकलत्रैलोक्यविलक्षणं सत्त्वं स्वलक्षणमभ्युपगम्यते, तत्तदितरपदार्थव्यावृत्तिसमाश्रयणेन च जात्यादिव्यवहारः कश्चिन्निर्वाह्यते, तथैवाखण्डवाक्यवादिना शक्तिभेदाद्वाक्यार्थप्रविभागे कृते सर्वं युज्यत इति न कश्चिद् दोषः। 'वाक्यान्तरविभागेन'।

'अविभक्तेऽपि वाक्यार्थे' इति च वाक्यवाक्यार्थयोरेकयोगक्षेमत्वादुक्तम्। पदार्थासंभवपूर्वके चोद्ये 'वाक्यान्तरविभागेन' इत्युत्तरमसमीचीनमिव लक्ष्यत इति चेत्, बाध्यबाधकभावादिन्यायो वाक्येष्वपि दृश्यते। ततो महावाक्यापेक्षयाऽवान्तरवाक्योपप्लावनेन तदपि न विरुध्यत इत्युपदर्शितम्, तदुपदर्शनेन परिमितपरिमाणेऽपि वाक्ये पदार्थापोद्धारनिबन्धना अप्येते न्यायाः सम्भवन्तीत्युपदर्शितमेव भवति॥ ८८॥

---

अयं भावः प्रागुक्तं सर्वं न्यायविरोधादिकं वाक्यवाक्यार्थाखण्डत्ववादिनो मते न विरुध्यते। तथा हि—एतस्य द्वयी मतस्थितिः। सत्यपि वाक्यार्थे पदार्थप्रविभागेऽवान्तरवाक्यार्थप्रविभागे च पानकरसादिवदेकोऽखण्डो वाक्यार्थः प्रतीयत इति प्रातीतिक्यखण्डता वाक्यार्थस्य वाक्यस्य च न वास्तवीत्येकं मतम्। अस्मिन्मते चैकस्मिन्नपि प्रातीतिके वाक्यार्थे समाश्रीयमाणे वाक्ये पदार्थावान्तरवाक्यार्थप्रतीत्यनुकूलशक्तिविशेषसमाश्रयणेन च पदार्थावान्तरवाक्यार्थयोर्बुद्ध्याऽपोद्धारे कृते सति पदार्थावान्तरवाक्यार्थप्रतीत्युपजननात् सर्वं प्रागुक्तं नानुपपन्नं भविष्यतीति।

अपरन्तु मतम्—यथा बौद्धदर्शने निर्विभागमेकमेव सकलत्रैलोक्यविलक्षणम् = स्वतो व्यावृत्तस्वभावं द्रव्यं स्वलक्षणम् = व्यक्तिरूपम् अभ्युपगम्यते तत्तदितरपदार्थव्यावृत्तिरूपापोहसमाश्रयणेन च जात्यादिव्यवहारः कश्चिन्निर्वाह्यते, न तु वस्तुगत्या स्वलक्षणे जात्यादिरस्तीति, तथैवाखण्डवाक्यवाक्यार्थवादिना शक्तिभेदाद् वाक्यार्थेऽवान्तरवाक्यार्थप्रविभागे पदार्थप्रविभागे च प्रातीतिके कृते सति सर्वं युज्यत इति न कश्चिद् दोषः प्रागुक्त इति।

अविभक्तेऽपि वाक्यार्थे वाक्यान्तरार्थविभागेनेति वक्तव्ये 'वाक्यान्तरविभागेनाविभक्तेऽपि वाक्यार्थे' इति वचनन्तु वाक्यवाक्यार्थयोरेकयोगक्षेमत्वादुक्तम्। पदार्थसम्भवपूर्वके वाक्यार्थाखण्डत्वासम्भवप्रश्ने 'वाक्यान्तरविभागेन' इत्युत्तरमसमीचीनमिव लक्ष्यत इति चेत्, बाध्यबाधकभावादिन्यायो वाक्यार्थवद् वाक्येष्वपि दृश्यते, ततो महावाक्यापेक्षयाऽवान्तरवाक्योपप्लावनेन = अवान्तरवाक्यापोद्धाररूपेण तदपि न विरुध्यत इत्युपदर्शितम्। तदुपदर्शनेन परिमितपरिमाणे वाक्ये पदासंभवेऽपि पदार्थापोद्धारनिबन्धना अप्येते न्यायाः संभवन्तीत्युपदर्शितमेव भवतीति॥ ८८॥

एतदेव प्रसिद्धदृष्टान्तोपदर्शनेन द्रढयितुमाह--

**यथैवैकस्य गन्धस्य भेदेन परिकल्पना ।**
**पुष्पादिषु तथा वाक्येऽप्यर्थभेदो विधीयते ॥ ८९ ॥**

स्रक्चन्दनादावेक उपसन्निविष्ट एव गन्धस्तस्य त्वपोद्धारसमाश्रयणेन भेदः कल्प्यतेऽयं पुष्पगन्धोऽयं चन्दनगन्ध इत्यादि । तथा वाक्य एवार्थापोद्धारसमाश्रयणेन पदार्थभेद उपपद्यते--अयं देवदत्तपदार्थः, अयं गोपदार्थ इत्यादि ॥ ८९ ॥

दृष्टान्तान्तरमाह--

**गवये नरसिंहे वाप्येकज्ञानावृते यथा ।**
**भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ॥ ९० ॥**

एकज्ञानेनाभिन्नेनैवावृते विषयीकृते परिच्छिन्ने गवयादौ सति तदेकदेशं

---

एतदेव प्रसिद्धदृष्टान्तोपदर्शनेन द्रढयितुमाह— **यथैवैकस्येति ।**

अस्यार्थः—पुष्पादिषु पुष्पचन्दनादिषु यथैवैकस्य एकत्वेनैकजातीयत्वेन वा, अभिन्नस्याभिन्नजातीयस्य वा गन्धस्य = अत्राद्यं रूपैकत्वविभुत्ववादवद् गन्धैकत्वविभुत्ववादे, **भेदेन** परिकल्पना भिन्नत्वेन भिन्नजातीयत्वेन वा परिकल्पना, अयं पुष्पगन्धोऽयं चन्दनगन्ध इति । तथा वस्तुतः पदार्थभेदरहितेऽपि वाक्येऽर्थभेदः = पदार्थभेदः विधीयते = अपोद्धारकल्पनया क्रियते, न तु वस्तुतोऽखण्डे वाक्ये पदार्थभेदोऽस्तीति ।

अयं भावः—स्रक्चन्दनादावेक एवैकजातीय एव वा गन्ध उपसन्निविष्टः । तस्य त्वपोद्धारसमाश्रयणेन = बुद्धिपरिकल्पितस्य स्वरूपभेदस्य जातिभेदस्य वा समाश्रयणेन कल्पितो भेदो व्यवह्रियते, अयं पुष्पगन्धोऽयं चन्दनगन्ध इति । तथा पदार्थभेदरहित एवाखण्डेऽभिन्ने च वाक्ये पदार्थापोद्धारसमाश्रयणेन पदार्थभेद उपपाद्यते, अयं देवदत्तपदार्थोऽयं गोपदार्थ इत्यादीति ॥ ८९ ॥

अत्रैव दृष्टान्तान्तरमाह—**गवये नरसिंहे वाऽपीति ।**

अस्यार्थः—यथा गवये गवाश्वरूपभागद्वयरहिते तद्गतगोत्वाश्वत्वजातिरहिते च, नरसिंहे च नरसिंहरूपभागद्वयरहिते प्राण्यन्तरे नरत्वसिंहत्वरूपजातिद्वयरहिते चैकज्ञानावृते, एकेनाभिन्नेनैव ज्ञानेनावृते, अतिशयेनैकज्ञानगोचरतया स्वीकृते जात्यन्तरस्यैव प्रतिकल्पं नरसिंहशरीरभेदेन तद्गतस्य नरसिंहत्वनाम्नो नरत्वसिंहत्वरूपजातिद्वयात्मकभागरहितस्य जात्यन्तरस्यैवापोद्धारसमाश्रयणेन कल्पितं नरत्वजातिरूपं सिंहत्वजातिरूपञ्च भागं नरे सिंहे च प्रसिद्धस्य नरत्वस्य सिंहत्वस्य च सदृशं प्रतिपद्यते लोकः, तथा वाक्यार्थेऽप्यखण्डेऽपोद्धारसमाश्रयणेन पदार्थभेदं प्रतिपद्यत इति ।

अयं भावः—एकज्ञानेनाभिन्नेनैव ज्ञानेन, एकजातिविषयकेण = एकजातिविशिष्ट-

प्रसिद्धजात्यन्तरस्यैव प्रतिपद्यते। एवमपोद्धारसमाश्रयणेन सर्वन्यायसमर्थने कृते तत्समानयोगक्षेमतया प्रतिनिधिः स्तुतिवाक्यविरोधश्च समर्थित एव। अग्रे त्ववान्तरवाक्यानामर्थवत्त्वं समर्थयिष्यते ॥ ९० ॥

अधुना तमेवापोद्धारमाश्रित्य पिकादिसंदेहे चोद्यमुद्धर्तुं प्रस्तावनां करोति—

**अप्रसिद्धं तु यं भागमदृष्टमनुपश्यति।**
**तावत्यसंविदं मूढः सर्वत्र प्रतिपद्यते ॥९१॥**

तत्र च गवयादौ भागमप्रसिद्धमदृष्टमनिश्चितमनुपश्यति मूढः। परमार्थतस्तु संवित्तस्य सर्वत्र निर्विभागे तस्मिन् कुतश्चित्कारणान्नोत्पन्ना। सर्वत्रायमसंविदं तावत्पुनः [मसंविदानोऽप्यसंविदं तावत्येव पुनः] प्रतिपद्यत इति ॥९१॥

---

विषयकेण च ज्ञानेन, आवृते = विषयीकृते, परिच्छिन्ने, गवये नरसिंहादौ च सति तदेकदेशं गवादेर्नरादेश्च सदृशं प्रसिद्धजात्यन्तरस्यैव गोत्वाश्वत्वादेः संबन्धितया प्रतिपद्यते लोकः। एवमखण्डेऽपि वाक्यार्थे पदार्थापोद्धारसमाश्रयणेन प्रागुक्तसर्वन्यायसमर्थने कृते सति तत्समानयोगक्षेमतया व्रीह्यादीनां यवादिरूपः प्रतिनिधिः, श्रुतिलिङ्गवाक्यादीनां परस्परं विरोधश्च समर्थित एव। अग्रे तु महावाक्येऽखण्डेऽवान्तरवाक्यानामर्थवत्त्वं समर्थयिष्यत इति ॥ ९० ॥

अधुना तमेवापोद्धारमाश्रित्य पिकादिपदार्थसन्देहे चोद्यं परिहर्तुं प्रस्तावनां करोति— अप्रसिद्धमिति।

अस्यार्थः—यं तु लोके प्रागप्रसिद्धं गवयस्याश्वसदृशं भागं गवये दृश्यमानमप्यदृष्टमनुपश्यति—अश्वस्य भागेन सदृशोऽयं गवयस्य भाग इत्येवंरूपेणादृष्टमनुपश्यति = अनुभवति, स सर्वत्र मूढः, गवयपिण्डस्य निर्विभागत्वात् संपूर्णे गवयपिण्डे मूढो मोहयुक्तोऽपि, तावत्यसंविदम् अश्वभागसदृशे गवयस्य भागे एवासंविदं संविदभावं प्रतिपद्यते जानाति, यथैवम्—'इह सहकारतरौ मधुरं पिको रौति' इत्यादावखण्डे वाक्यार्थे मूढोऽप्यपोद्धारकल्पनया पिकपदार्थे संविदभावं प्रतिपद्यत इति।

अयं भावः—तत्र गवयादावप्रसिद्धं भागमदृष्टमनिश्चितमनुपश्यति = अनुव्यवस्यति मूढः। परमार्थतस्तु तस्य निर्विभागे तस्मिन् गवयपिण्डे संपूर्ण एव संवित् कुतश्चित्कारणान्नोत्पन्ना। एवञ्च संपूर्णे गवयपिण्डेऽसंविदानोऽप्ययं मौढ्यात् तावत्येव = अप्रसिद्धे भाग एव भागे संविदभावं प्रतिपद्यत इति। खलु बहुषु पाठेष्वस्य पद्यस्य तृतीयपादे तावत्यसंविदमित्येव पाठः साधुः। इयञ्च कारिका यथेतिपदमध्याहृत्य व्याख्येया, उत्तरकारिकां तथेति पाठादित्यवधेयम् ॥९१॥

प्रकृते योजयितुमाह—

**तथा पिकादियोगेन वाक्येऽत्यन्तविलक्षणे ।**
**सदृशस्येव संज्ञानमसतोऽर्थस्य मन्यते ॥९२॥**

**वनात्** पिक आनीयतामित्येतद्वनाद् ऋक्ष आनीयतामित्येतस्माद्वाक्यान्तरादत्यन्तविलक्षणमेव । वनादानीयतामिति चात्रासन्नेवार्थो वनाद् ऋक्ष आनीयतामित्यस्य क्रमवशात् सदृश इति मन्यते । परमार्थतस्तु पिकादियोगात् सकलमेवात्यन्तविलक्षणम् । एकपदार्थसंदेहे सकलमेवाज्ञातं वाक्यमित्युच्यते ॥९२॥

दृष्टान्तमाह—

**एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते ।**
**निर्भागस्य प्रकाशस्य निर्भागेणैव चेतसा ॥९३॥**

---

पूर्वकारिकोक्तं दृष्टान्तं प्रकृते योजयितुमाह—**पिकादियोगेनेति** ।

अस्यार्थः– तथा गवयादिपिण्डवत्, वनाद् ऋक्ष आनीयतामित्येतस्माद् वाक्यान्तरात्, कल्पितेन पिकादिपदयोगेनात्यन्तविलक्षणे वनात् पिक आनीयतामिति वाक्ये वस्तुतोऽसतो वनानयनादिपदार्थस्य वाक्यान्तरार्थघटकवनादिपदार्थसदृशस्येव संज्ञानं प्रत्यभिज्ञां मन्यते = अनुव्यवस्यति मूढः, न तु वनानयनादिपदार्थास्तत्र वस्तुतः सन्ति, वाक्यवाक्यार्थयोरखण्डत्वादिति ।

अयं भावः—यद्यपि वनात् पिक आनीयतामित्येतद् वाक्यं वनाद् ऋक्ष आनीयतामित्येतस्माद् वाक्यादत्यन्तविलक्षणमेव, द्वयोर्यथायथं पिकर्क्षपदयोगात्; तथापि वनात् पिक आनीयतामित्यत्रासन्नेव वनानयनादिपदार्थो वनाद् ऋक्ष आनीयतामिति वाक्यघटकपदार्थस्य वनानयनादेः सदृश आनुपूर्वीसाम्यादिति मन्यते मूढः । परमार्थतस्तु सकलमेव वाक्यमत्यन्तविलक्षणं पिकादिपदयोगात्, अत एकस्यापि पिकादिपदार्थस्य सन्देहे सकलमेव वाक्यमज्ञातमित्युच्यतेऽनेन श्लोकेन । पिकादिपदार्थप्रश्नस्तु पदार्थयोरपोद्धारकल्पनयेति ॥९२॥

वाक्यवाक्यार्थयोर्वस्तुतोऽखण्डत्वेऽपि पदार्थापोद्धारकल्पनया भागे सादृश्यभानं भागे च भेदभानमित्यस्यार्थस्य वैशद्येन बुद्ध्यारोहायात्रैवार्थे दृष्टान्तान्तरमाह—**एकस्य भाग इति** ।

अस्यार्थः—यथा नीलपीतादिविषयके समूहालम्बनात्मके ज्ञाने चित्रदर्शने वा जायमाने सत्येकस्य निर्भागस्य प्रकाशस्य समूहालम्बनात्मकस्य चित्रदर्शनरूपस्य वैकस्मिन् कल्पिते भाग एकविषयावगाहिनो ज्ञानस्य सादृश्यम्, अपरस्मिंश्च कल्पिते भागे तस्यैव भेदश्च निर्भागेणैव चेतसा साधनेन लक्ष्यते, तथेति पौरस्त्यकारिकयाऽन्वय इति ।

यथैकमेव नीलपीतादिज्ञानं प्रकाशस्वभावाद् निरंशमेवोपजातं तस्यज्ञानत्वेन सादृश्यं मन्यते। नीलपीतादिना च भेदः। वस्तुतः पुनर्भिन्नमेव नीलज्ञानं पीतज्ञानादिति न तत्रानुगमः कश्चित्।

अथवा चित्रज्ञानयोरेव भागे सादृश्यं भागे भेदं प्रतिपद्यते। किञ्चिद्धि चित्रज्ञानं नीलहरितोल्लेखि। किञ्चिद्धि नीलपीतोल्लेखीति नीलादिना तत्र सादृश्यं हरितादिना भेदं प्रतिपद्यत इति ॥९३॥

दार्ष्टान्तिके योजयितुमाह—

**तथैव भागे सादृश्यं भागे भेदोऽवसीयते।**
**भागाभावेऽपि वाक्यानामत्यन्तं भिन्नधर्मणाम् ॥९४॥**

प्रतीतार्थः श्लोकः ॥९४॥

---

अयं भावः—यथैकमेव नीलपीतादिविषयकं समूहालम्बनात्मकं ज्ञानं प्रकाशस्वभावम् = स्वपरप्रकाशनस्वभावकं निर्भागमेवोपजातम्। तस्य च समूहालम्बनात्मकस्य ज्ञानस्यैक विषयावगाहिनो ज्ञानस्य च परस्परं ज्ञानत्वेन सादृश्यं मन्यते लोकैः, नीलपीतादिना च विषयभेदेन तयोर्ज्ञानयोर्भेदोऽपि मन्यते। एकस्य ज्ञानस्यैकविषयकत्वम्, अपरस्य तु द्व्यादिविषयकत्वमिति।

वस्तुतस्तु अत्यन्तभिन्नमेव नीलज्ञानं पीतविषयकात् समूहालम्बनज्ञानादिति न तत्रानुगमः केनापि प्रकारेण कश्चिदिति सादृश्यप्रत्ययो विभ्रम एव।

यद्वा यथैकमेव निरंशं नीलज्ञानम् एवमेकमेव निरंशं पीतज्ञानम्, न तु तत्र विषयरूपं ज्ञानरूपं चांशद्वयम्। प्रकाशस्वभावं चोभयमपि ज्ञानम्। तयोर्ज्ञानयोर्ज्ञानांशे ज्ञानत्वेन सादृश्यम्। विषयांशे च भेदो नीलपीतरूपविषयभेदात्।

वस्तुतस्तु अत्यन्तभिन्नमेव नीलज्ञानं पीतज्ञानान्निरंशं चेति न तत्रानुगमः कश्चिदिति। अथवा यथा द्वे चित्रज्ञाने, एकं चित्रज्ञानं चित्रस्यालेख्यस्य दर्शनं नीलहरितोल्लेखि, द्वितीयञ्च नीलपीतोल्लेखि, तयोश्च नीलभागयोर्नीलादिना सादृश्यम्, हरितपीतभागयोश्च हरितादिना भेदं प्रतिपद्यते लोकः। न च तत्र निरंशे ज्ञाने कोऽप्यंशोऽस्तीति ॥९३॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयितुमाह—**तथैवेति**।

अस्यार्थः—तथैवात्यन्तं भिन्नधर्मणाम् अखण्डत्वेनाखण्डार्थत्वेन च पदपदार्थयोः सादृश्यं विनैवात्यन्तं भिन्नधर्मत्वेनैवात्यन्तविलक्षणानां वाक्यानां वनात् पिक आनीयताम्, वनाद् ऋक्ष आनीयतामित्यादीनां भागाभावेऽपि पदपदार्थापोद्धारकल्पनया वनादानीयतामिति भागद्वये सादृश्यम्, पिक इति ऋक्ष इति च भागे भेदोऽवसीयते निश्चीयत इति ॥ ९४ ॥

इदानीमखण्डवादी पदवादिनं दूषयितुमाह—

**रूपनाशे पदानां स्यात् कथं चावधिकल्पना।**
**अगृहीतावधौ शब्दे कथं चार्थो विविच्यते ॥९५॥**

यदि पदान्येव सत्यानि, तदा दध्यानयेत्यादिसंहितायां रूपविनाशात् पदस्य स्थितस्याभावे कमवधिं गृहीत्वा तदर्थो विविच्यताम्, अतः प्रविभागशून्यं वाक्यमेवैकं सत्यमभ्युपगन्तव्यम् ॥९५॥

अथाखण्डपक्षे श्वेतो धावतीत्येतत्प्रश्नद्वयाऽपाकरणाय कथमेकं वाक्यम्, अत्र हि श्वा इत्येतद्रूपं संहितावशाद्विनष्टमित्येतत्पदार्थासंभवात् कथं तदवगतिः ? तत्राह—

**संसर्ग इव रूपाणां शब्देऽन्यत्र व्यवस्थितः।**
**नानारूपेषु तद्रूपं तन्त्रेणापरमिष्यते ॥९६॥**

---

एवं वाक्यवाक्यार्थयोरखण्डत्ववादी स्वपक्षसमर्थनस्य परपक्षप्रत्याख्यानापेक्षयाऽभ्यर्हितत्वेनादौ स्वपक्षे पदवादिना समापादितं न्यायविरोधादिरूपं दूषणव्रातं परिहृत्य तयोरखण्डत्वेऽपि भागेषु कल्पितेषु भेदसादृश्ये प्रतीयमाने दृष्टान्तैः समर्थ्य च "कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः" इति न्यायमनुरुध्य च स्वपक्षमनिशं परितः प्रदहन्तं पदवादिपक्षं कुकूलाग्निं तर्कासारैर्निर्वापयितुं प्रक्रमते—रूपनाश इति।

अस्यार्थः—यदि पदान्येव सत्यानि, तदा 'दध्यानय, दधीह तिष्ठति' इत्यादिसंहितायाम् 'दध्ना, दध्ने' इत्यादौ पदावयववर्णस्थानिकानङाद्यादेशे च पदानां रूपनाशे सति नियतस्य पदस्याभावे, कथञ्च = कथन्तु, अवधिकल्पना = अस्यार्थस्येदमेव पदं वाचकत्वेऽवधिभूतमिति कल्पना स्यादिति। शब्दे च पदे च, अगृहीतावधौ = न गृहीतोऽवधिः—अवधित्वम्, अर्थवाचकत्वेऽवधित्वं यस्य तस्मिंस्तथाभूते सति। अवधिशब्दस्यात्र भावप्रधानस्य निर्देशः। तदर्थः—कथं किंपदमवधिं कृत्वा विविच्यते—अस्यैव पदस्यायमर्थ इति अस्य पदस्यायमेवार्थ इति च नियम्य निर्णीयत इति, अतः पदावान्तरवाक्यप्रविभागशून्यं वाक्यमेवैकं सत्यमभ्युपगन्तव्यमिति ॥ ९५ ॥

ननु वाक्यतदर्थयोरखण्डत्वपक्षे यदा 'इतः श्वा धावति किम्' इति कस्यचित् प्रश्नः कस्यचिच्च तदैवं श्वेतोऽश्वो धावति किमिति प्रश्नः, तदा प्रश्नद्वयस्यापि तस्यापाकरणाय तन्त्रेण प्रयुज्यमानम् 'श्वा इतो धावति' श्वेतगुणवानश्वो धावति इत्यर्थद्वयबोधकमेकं वाक्यं कथमुपपद्यते, 'श्वा' इति पदस्य संहितावशेन विनष्टत्वादिति तत्पदार्थासंभवे पदपदार्थापोद्धारकल्पनयाऽपि कथं तद्घटिततादृशवाक्यार्थावगतिरिति।

इदञ्च दूषणं यद्यपि पदवादिनोऽपि समानं संहितया पदस्वरूपनाशेऽवधिकल्पनासम्भवस्य प्रागुक्तत्वात्, तथापि तदुपेक्ष्य स्वपक्षे परिहारमाह—संसर्ग इवेति।

श्वेत इत्यादौ शब्दे अन्यत्राखण्डपक्षे रूपाणां संसर्ग इव व्यवस्थितः,अतश्च तद्रूपमपरं तन्त्रेणावस्थितं तेषु नानारूपेषु प्रत्यायकमिष्यत इत्यदोषः ॥९६॥

तदेव व्याचिख्यासुराह—

**तस्मिन्नभेदे भेदानां संसर्ग इव वर्तते ।**
**रूपं रूपान्तरात्तस्मादनन्यत् प्रविभज्यते ॥९७॥**

तस्मिन्नभेदे एकस्मिन्नेव श्वेत इत्येवं रूपे भेदानां श्वा इतः श्वेतश्च इत्येतेषां संसर्ग इव स्थितः । तस्मात्तद्रूपं रूपान्तरादनन्यदपि तन्त्रन्यायसमाश्रयणेनोभयार्थ-प्रत्यायकतया प्रविभज्यत इत्यस्मिन् पक्षे श्वेत इत्येतदखण्डमेव प्रत्यायकम् ॥९७॥

अथात्रैव प्रसङ्गात् प्रत्याय्यप्रत्यायकयोर्विषयभेदेन भेदाभेदौ स्मृतावित्याह—

**शास्त्रे प्रत्यायकस्यापि क्वचिदेकत्वमाश्रितम् ।**
**प्रत्याय्येन क्वचिद्भेदो ग्रहणग्राह्ययोः स्थितः ॥९८॥**

---

अस्यार्थः—अन्यत्र वाक्यतदर्थयोरखण्डत्वपक्षे, शब्दे श्वेत इत्यादौ, रूपाणां श्वा इत इति श्वेत इति चैवंविधानां रूपाणां तन्त्रोच्चारणेन संसर्ग इव व्यवस्थितः । अत्रेवशब्दो-पादानं तु वस्तुतो नाखण्डत्वपक्षे नानारूपाणां संसर्गस्तत्र व्यवस्थित इति बोधयितुम् । अतश्च तन्त्रेणावस्थितमपरमखण्डं तद्रूप नानारूपेषु प्रत्यायकं श्वा इत इति श्वेत इति च नाना-रूपविषयकप्रतीतिजनकमिष्यते, ताभ्याञ्चार्थद्वयबोध इत्यखण्डत्वपक्षे न दोष इति ॥ ९६ ॥

तदेव प्रकारान्तरेण व्याचिख्यासुराह—**तस्मिन्नभेद** इति ।

अस्यार्थः—तस्मिन् श्वेत इत्येवं रूपे, अभेदे=एकस्मिन्नेवाखण्डे, भेदानाम्= परस्परं भिद्यमानानां श्वा इत इति श्वेत इत्येवं विधानाम् संसर्ग इव वर्तते स्थितः । तस्मात्त-द्रूपम्—श्वेत इत्यखण्डं रूपम्, रूपान्तरात् श्वा इत इति, श्वेत इति च रूपद्वयात् तन्त्रन्या-याश्रयणेनानन्यदपि=अनन्यदेव, आवृत्त्योभयार्थप्रत्यायकतया प्रविभज्यते । वक्तुस्तन्त्रेणो-च्चारणम्, बोद्धुस्त्वावृत्त्या बोध इति स्थितेः । अस्मिन् पक्षे च श्वेत इत्यखण्डमेवोभयार्थ-प्रत्यायकमिति पूर्वकारिकोक्तात् पक्षाद् विशेष इति । पूर्वस्मिन् पक्षे तु श्वेत इत्यखण्डं रूपद्वयस्य श्वा इति श्वेत इति चैवंविधस्य प्रत्यायकम्, प्रतीतन्तु तद्द्वयं स्वस्वार्थस्य प्रत्यायकमिति ॥ ९७ ॥

पूर्वकारिकाभ्यां पक्षद्वयमुक्तम्, श्वेत इत्यखण्डं श्वा इत इति श्वेत इति रूपद्वयस्य प्रतिपादकम्, प्रतीताच्च रूपद्वयादर्थद्वयस्य बोध इत्येकः पक्षः । श्वेत इत्यखण्डं रूपमेवावृत्त्या प्रविभागकल्पनयोभयार्थप्रतिपादकमिति द्वितीयः । तत्र प्रत्याय्यप्रत्यायकयोः शब्दस्वरूपयोर्भेदे प्रथमः पक्षः, तयोरभेदे तु द्वितीयः पक्षः । इमौ च प्रत्याय्यप्रत्यायकयोर्भेदाभेदपक्षौ शास्त्रे लक्ष्यसिद्धये द्वावपि तत्र तत्र समाश्रिताविति नात्रैतयोरेकः साधुत्वेन निर्धारयितुं शक्यत इति

तत्राभेदं प्रत्याय्यप्रत्यायकयोः दर्शयति—

**ऊ इत्यभेदमाश्रित्य यथासंख्यं प्रकल्पितम् ।**

ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यत्रोक्तम् । ह्रस्वादिषु समसंख्याऽप्रसिद्धिरुद्देशनिर्देशवैषम्यात् । सिद्धं तु समसंख्यत्वात् त्रयाणां हि विकारनिर्देश इति ततश्च ऊकाल इत्यत्र मात्रिकद्विमात्रत्रिमात्राणां संसृज्य निर्देशात् प्रत्याय्यप्रत्यायकयोरभेदे समसंख्यत्वान्निर्देशसाम्ये संख्यातानुदेशे सिद्धे ह्रस्वदीर्घप्लुतसंज्ञाः पृथगवतिष्ठन्त इति न कश्चिद्दोषः ।

प्रत्याय्यप्रत्यायकयोर्भेदं निदर्शयितुमाह—

**लृङ्लृटोर्ग्रहणे भेदो ग्राह्याभ्यां सह कल्पितः ॥९९॥**

---

विवक्षन् प्रत्याय्यप्रत्यायकयोः शास्त्रविषयभेदेन भेदाभेदौ शास्त्रे दृष्टौ प्रसङ्गात् प्रदर्शयितुमाह—**शास्त्र इति ।**

शास्त्रे क्वचित्प्रत्यायकस्य प्रत्याय्येन सहैकत्वमभेदोऽप्याश्रितम् । क्वचिद् ग्रहणग्राह्ययोः प्रत्याय्यप्रत्यायकयोर्भेदः स्थित इति योजनया निगदव्याख्यातार्थ एष श्लोकः ॥९८॥

तत्र प्रत्याय्यप्रत्यायकयोरभेद तावदाह—ऊ **इत्यभेदमाश्रित्येति ।**

अस्यार्थः—ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यत्रैक उच्चारित ऊकारः प्रत्यायकः, त्रयस्तु ह्रस्वदीर्घप्लुता उकारा अनुच्चारिताः प्रत्याय्या इति प्रत्याय्याना त्रित्वेऽप्यनुच्चारितत्वात्, ऊकालोऽजित्युद्देश्यघटकस्य ऊकारस्योच्चारितस्यैकत्वाद् विधेयानाञ्च ह्रस्वदीर्घप्लुतसञ्ज्ञाना त्रित्वात् संख्यावैषम्येन यथासख्यं संबन्धो न प्राप्नोतीत्याशङ्क्य प्रत्याय्यप्रत्यायकयोरभेदमाश्रित्यात्र शास्त्रे यथासंख्यं प्रकल्पितम् । तथाहि—ऊकालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रे भाष्य उक्तम्—"ह्रस्वादिषु समसंख्याऽप्रसिद्धिरुद्देशनिर्देशवैषम्यात् । सिद्धन्तु समसंख्यत्वात्, त्रयाणां हि विकारनिर्देशः" ( म० भा० १।२।२७ ) इति ।

अस्यार्थः—ह्रस्वादिषु प्रागुक्तरीत्या समसंख्याया अप्रसिद्धिः, उद्देशनिर्देशवैषम्यादिति समसंख्याऽप्रसिद्धौ हेतुः । उद्देश्यविधेययोः संख्यावैषम्यादिति तदर्थः । अत्र उद्देश-निर्देशपदयोः कर्मणि घञ् । निर्दिश्येश्च विधानमर्थ । प्रत्याय्यप्रत्याकयोरभेदेन समाधत्ते—सिद्धन्तु समसंख्यत्वादिति । समसंख्यत्वे हेतुः, त्रयाणां हि विकारनिर्देश इति । हि यतः, त्रयाणा ह्रस्वदीर्घप्लुतानां सन्धिना विकृतो निर्देश ऊकाल इतीति तदर्थः । ततश्च ऊकाल इत्यत्र मात्रिकद्विमात्रत्रिमात्राणां सन्धिना संसृज्य निर्देशात् प्रत्याय्यप्रत्यायकयोरभेदे समसंख्यत्वादुद्देश्यविधेययोर्निर्देशसाम्ये संख्यातानुदेशे = समसंख्यया निर्दिष्टानामुद्देश्याना विधेयानाञ्च क्रमेण सम्बन्धे ह्रस्वदीर्घप्लुतसंज्ञाः पृथक् पृथक् त्रिषु उकारेष्ववतिष्ठन्त इति न कश्चिद् दोषः ।

प्रत्याय्यप्रत्यायकयोर्भेदं शास्त्रे निदर्शयितुमाह—**लृङ्लृटोर्ग्रहण इति ।**

अस्यार्थः—स्यतासी लृलुटोरित्यत्र ( ३।१।३२ ) लृलुटोर्ग्रहणे लृशब्देन लृङ्लृट्-

स्यतासी लृलुटोरित्यत्र लृशब्देन लृङ्लृटौ प्रत्याय्येत इति निमित्तनिमित्तिनोर्वैषम्यात् संख्यातानुदेशाभावः प्राप्नोति। यथासंख्यमनुदेशः समानामित्यत्रोक्तम्—"संख्यासाम्यं शब्दतश्चेद् णलादयः परस्मैपदानाम्। डारौरसः प्रथमस्य। एचोऽयवायाव इत्यनिर्देशः। अर्थतश्चेत् लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषः" इति चोद्यमेवं पक्षद्वय उपस्थितम्।

तत्रोच्यते-लृलुटोरित्यत्र लृरूपमुत्सृष्टानुबन्धसामान्यमात्रं प्रत्यायकमभिन्न-

---

समुदायस्य लुट्शब्देन लुटश्च ग्रहणे ज्ञाने जायमाने, ग्राह्याभ्या सह लृङ्लृट्समुदायेन लुटा च प्रत्याय्येन सह, प्रत्याकयोर्लृलुटोः सूत्रघटकयोर्भेदः कल्पितः। अभेदे हि प्रत्याय्यगतायास्त्रित्वसंख्याया गौण्यप्युत्तरा संख्या पूर्वां संख्यां बाधत इत्यभ्युपगमेन प्रत्यायकगतद्वित्वसंख्याबाधकत्वेन उद्देश्यविधेययोः संख्यावैषम्येण यथासंख्यं सम्बन्धो न स्यादिति।

अयं भावः—स्यतासी लृलुटोः (३।१।३३) इत्यत्र लृशब्देन लृङ्लृटौ प्रत्याय्येते, लुट्शब्देन च स्वरूपमिति निमित्तानां लृङ्लृट्लुटां त्रित्वसंख्यानिमित्तिनोश्च = कार्ययोः–स्यतास्योर्द्वित्वसंख्येति संख्यावैषम्यात् तयोः संख्यासाम्यनिमित्तकस्य संख्यातानुदेशस्य यथासंख्य सम्बन्धस्य अभावः प्राप्नोति। अत एव 'यथासंख्यमनुदेशः समानाम्' (पा० १।३।१०) इत्यत्रोक्तम्—संख्यासाम्य शब्दतश्चेत् णलादयः परस्मैपदानाम्, डारौरसः प्रथमस्य, एचोऽयवायाव इत्यनिर्देशः अर्थतश्चेत् लृलुटोर्नन्द्यरीहणतक्षशिलादिषु दोष इति।

अस्यार्थः- शब्दत इत्यत्र शब्दे इति शब्दतः, आद्यादित्वात् सार्वविभक्तिकस्तसिः। एवमग्रेऽर्थत इत्यत्रापि। यद्वा—उभयत्रापि पञ्चम्यन्तादेव तसिः। ल्यब्लोपे च पञ्चमी द्रष्टव्या। तथा च निमित्तनिमित्तिनोः प्रत्यायकशब्दगतं संख्यासाम्य चेद् गृह्यते, तदा णलादयः परस्मैपदानाम् डारौरसः प्रथमस्य, एचोऽयवायाव इत्यनिर्देशः। अयुक्तो निर्देशोऽनिर्देश इति। एषु हि स्थानिप्रत्यायकेषु शब्देष्वेकत्वसंख्या, आदेशप्रत्यायकेषु च बहुत्वसंख्येति स्थान्यादेशयोः संख्यावैषम्यात् संख्यातानुदेशो न प्राप्नोतितीमे निर्देशा अयुक्ता इति। संख्यासाम्यमर्थतश्चेत्, स्यतासी लृलुटोरित्यत्र प्रत्याय्यानां निमित्तानां त्रित्वसंख्या, कार्ययोस्तु स्यतास्योर्द्वित्वसंख्येति संख्यावैषम्यम्। एवं नन्द्यादिभ्यो ल्युः (३।१।३४), अरीहणादिभ्यो वुञ् (४।२।८०) सिन्धुतक्षशिलादिभ्योऽणञौ (४।३।९३) एषु प्रत्याय्यानां प्रकृतीनां बहुत्वम्, प्रत्ययानां त्वेकत्वं द्वित्वं वेति संख्याभेदः। तथा च शब्दतोऽर्थतो वा संख्यासाम्यं परिगृह्यताम् पक्षद्वयेऽपि चोद्यमापततीति।

अत्रोच्यते—लृलुटोरित्यत्र लृरूपमुत्सृष्टानुबन्धं सामान्यमात्रं प्रत्यायकमभिन्नम् एकमेव अभ्युपगम्यते, प्रत्याय्यप्रत्यायकयोर्भेदाभ्युपगमात्, न तु प्रत्याय्यप्रत्यायकयोरभेदपक्षमालम्ब्य प्रत्याय्यभेदाद्भिन्नमिति। ततश्च निमित्तनिमित्तिनोः संख्यासाम्यात् संख्यातानुदेशः

मेव, न पुनः प्रत्याय्यभेदाद्भिन्नमत्राभ्युपगम्यते। ततश्च निमित्तनिमित्तिनोः साम्यात् संख्यातानुदेशः सङ्गच्छत इति न किञ्चिदनिष्टम् ॥९९॥

अथ प्रत्याय्यप्रत्यायकयोरन्यत्राप्यभेदं दर्शयितुमाह—

**यस्येत्येतदणो रूपं संज्ञिनामभिधायकम्।**
**नहि प्रतीयमानेन ग्रहणस्यास्ति सम्भवः ॥१००॥**

---

सङ्गच्छत इति। एवञ्च स्यतासी लृलुटोः (३।१।३३), नन्द्यग्रहणतक्षशिलादिषु च शब्दतः संख्यासाम्यम्, प्रत्याय्यप्रत्यायकयोर्भेदपक्षश्च, णलादयः परस्मैपदानां (३।४।८२) डारौरसः प्रथमस्य, (२।४।८५) एचोऽयवायावः (६।१।७८) इत्यादिषु त्वर्थतः संख्यासाम्यम्, प्रत्याय्यप्रत्यायकयोरभेदपक्षश्चेति लक्ष्यसिद्धये तत्र तत्र व्यवस्थितपक्षपरिग्रहेण न किञ्चिदनिष्टमिति ॥ ९९ ॥

अथ 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इत्यादिष्विवान्यत्रापि प्रत्याय्यप्रत्यायकयोरभेदं व्युत्पत्तये दर्शयितुमाह— यस्येत्येतदिति।

अस्यार्थः—कारकायामणो रूपमिति सकारस्थानिकरेफलोपेन द्विवचननिर्देशः। एकवचननिर्देशस्तु नोपपद्यते, नह्येकस्याण इकारस्याकारस्य वैतद्रूपसंभवः। अण इति समुदायाभिप्रायेणैकवचनेऽपि एतद्रूपासंभव एव। अण्पदस्येकाराकारसमुदायबोधकत्वेनैकवचनोपपादनं तु न संभवति, तत्र तस्य शक्तिग्राहकाभावात्।। लक्षणायामपि तात्पर्यग्राहकभावः। प्रत्याहारपदस्य च 'आदिरन्त्येने' ति (१।१।७१) शास्त्रबलात् समुदाय सङ्केतितस्यापि लक्ष्यानुरोधेन व्याकरणशास्त्रेऽवयवेष्वेव विश्रान्तिः, उद्भूतावयवभेदविवक्षयाऽवयवेष्वेव च प्रयोगः।

अत एवोक्तं मनोरमायाम्—"तस्य च युगपल्लक्ष्ये प्रयोगादर्शनादवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यतीति"। प्रयुज्यते चावयवे प्रत्याहारपदम्। भेत्ता इत्यत्रेको गुण इति। पुना रमते इत्यत्राणो दीर्घ इति। अत्रेकारस्याकारस्येति क्रमेणार्थः। एवञ्चात्रेकाररूपाण्द्वयाभिप्रायेणाणोरिति द्विवचननिर्देशः। प्रत्याहाराह्निके भाष्येऽपि प्रत्येकाभिप्रायेणैव तुल्यजातीयास्तुल्यजातीयेषूपदिशति—अचोऽक्षु हलो हल्स्विवति बहुवचननिर्देशः (द्र० हयवरट्सूत्रीय भाष्यम्) इत्यलमतिप्रसङ्गेन।

प्रकृतमनुसरामः। अणोः, इकाराकारयोः, रूपं यस्येति चेति सूत्रे (६।४।१४८) यस्येत्येतत्। तथा हि—इश्च अश्चेति विग्रहे समाहारद्वन्द्वे यमिति रूपम्, तस्य यस्येत्येतद्रूपम् संज्ञिनाम् इकारसंज्ञिनां सर्वेषामिकाराणाम्=अष्टादशानाम्, अकारसंज्ञिनाञ्च=सर्वेषामकाराणामष्टादशानामभिधायकम्, प्रत्याय्यप्रत्यायकयोरभेदाभ्युपगमादिति भावः। हि=यतः, प्रत्याय्यप्रत्यायकयोर्भेदाभ्युपगमे यस्येतिपदात् प्रतीयमानेकारेण स्वसंज्ञिनामष्टादशानां ग्रहणस्य संभवो नास्ति, उच्चारित एव शब्दः प्रत्यायको नानुच्चारित इति न्यायेन ग्रहणकशास्त्रस्योच्चारित एव प्रवृत्तेः।

इश्च अश्च तद्यं तस्य यस्य यदेतत्संसृष्टेकाराकारयो रूपमणोः प्रत्यायकं तत्संज्ञिनामिवर्णावर्णानामभेदात्प्रत्यायकं भवति, तेन ईकाराकारयोरपि सौपर्णेयो वैनतेय इत्यत्र लोपः प्रवर्तते। यदि चात्र प्रत्याय्यप्रत्यायकयोरभेदो नाश्रीयते तदा प्रतीयमानेन प्रत्याय्यमानेनान्येषां ग्रहणस्य प्रत्यायनस्यासम्भव इति नात्रेष्टं सिध्येत्। तस्मात्तन्त्रेणोच्चारितमेकमेवोभयोः प्रत्यायकं संसृष्टरूपत्वादित्यस्त्येव श्वेतो धावतीत्येतस्मादुभयार्थप्रतीतिः ॥१००॥

अवान्तरवाक्योपप्लावनेनैतद्वोभयार्थप्रत्यायकं भविष्यतीति दृष्टान्तेन प्रदर्शयितुमाह—

**ऊ इत्येतदभिन्नं च भिन्नवाक्यनिबन्धनम्।**
**भेदेन ग्रहणं चास्य पररूपमिव द्वयोः ॥१०१॥**

---

प्रकृते उच्चारितस्तु यकारस्तत्र खलेकपोतन्यायेन युगपत् त्रीणि सूत्राणि प्राप्तानि, स्वं रूपं शब्दस्याशब्दसंज्ञेति, (पा० १।१।६८) अणुदित्सवर्णस्य चाप्रत्यय इति, (पा० १।१।६९) स्थानिवदादेशोऽनल्विधाविति (१।१।५६) ति, तत्रव्याख्यातृपरम्परावगतप्रवक्त्राचार्यतात्पर्यबलेन बलवता स्थानिवत्सूत्रेणेतरयोः प्रबाधे, आदेशः स्थानिवद्भवतीत्यस्यादेशे स्थानिबुद्धिः कर्तव्येति फलितमर्थमादाय यकारादिकारस्य प्रतीयमानत्वम् इतीकारे प्रतीयमाने न ग्रहणकशास्त्रप्रवृत्तिरिति प्रत्याय्यप्रत्यायकयोरभेदपक्षोऽत्राश्रीयते। सुपर्ण्या अपत्यमिति विग्रहे सौपर्णेय इत्यस्य सिद्धये दीर्घेकारादीनां ग्रहणाय। एवमकाराशेऽपि स्वरूपमिति शास्त्रप्रवृत्त्योच्चारितादकारात् प्रतीयमानेऽकारे ग्रहणकशास्त्राप्रवृत्त्या वैनतेय इत्यादीनां सिद्धये प्रत्याय्यप्रत्यायकयोरभेदापक्षाश्रयण समुचितमिति।

अयं भावः—यस्येति च (पा० ६।४।१४८) इत्यत्र इश्च अश्च यं तस्य यस्येति संसृष्टेकाराकारयोरूपमिकाराकाररूपयोरणोः प्रागुक्तरीत्या प्रत्यायकम्। न च प्रतीयमानाभ्यां ताभ्यां स्वसंज्ञिप्रत्यायनसम्भव इति प्रत्याय्यप्रत्यायकयोरभेदपक्षमाश्रित्य प्रतीयमानयोरपि ग्रहणशास्त्रप्रवृत्त्या यस्येतिपदाद् दीर्घकाराकारयोरपि ग्रहणेन सौपर्णेयो वैनतेय इत्यत्रापि यस्येति लोपः प्रवर्तते। यदि चात्र प्रत्याय्यप्रत्यायकयोरभेदो नाश्रीयते तदा प्रतीयमानेन स्वसंज्ञिना ग्रहणस्यासंभवेन नात्रेष्टं सिद्ध्येत्। तस्माद् यथाऽत्र यस्येति पदं संसृष्टरूपत्वादिकाराकारयोः प्रत्यायनद्वारा तत्तदष्टादशकस्य प्रत्यायकम्, प्रत्याय्यप्रत्यायकयोरभेदपक्षसमाश्रयणात्तथा श्वेतो धावति इत्यत्र तन्त्रेणोच्चारितमेकमेव श्वेत इति पदं श्वा इत इति श्वेत इति पदद्वयस्य प्रत्यायकं संसृष्टरूपत्वादित्यत्रापि प्रत्याय्यप्रत्यायकयोरभेदोपचारादस्त्येव श्वेतो धावतीत्यस्मादुभयार्थप्रतीतिरिति ॥ १०० ॥

किञ्च, यथा शास्त्रे—'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' (पा० १।२।२७) इति वाक्यमभिन्नमेव, यथा च पदाखण्डत्ववादिनस्तद्घटकम्, ऊपदमभिन्नमेव, तथापि पदावान्तरवाक्य-

ऊकाल इत्येतदुपात्तम्। तद्ध्रस्वदीर्घप्लुतानां त्रयाणां सामान्येनाभिन्नं रूपं बोधव्यम्। ततश्चैतदेकं ग्रहणकवाक्यस्थानीयम्, अवान्तरवाक्यनिबन्धनं भवतीत्याह—भिन्नवाक्यनिबन्धनमिति। उकालोऽज्झ्रस्वसंज्ञः। ऊकालो दीर्घसंज्ञः। ऊ३कालः प्लुतसंज्ञो बोद्धव्य इति। अतश्च यदा संसृष्टत्वादस्याभेदेनैव ग्रहणं प्रत्यायके स्थितं तदा ऊ इत्येतद्रूपं भिन्नवाक्यनिबन्धनमेव भवति। यथा पररूपं संसृष्टत्वादेकमपि द्वयोः प्रत्यायकं दृश्यते। तथैतद् बोद्धव्यम्। ततश्च श्वेतो धावतीत्यादावत्रवान्तरवाक्योपप्लावनेनोभयार्थता भविष्यतीति योजनीयम्॥१०१॥

शब्दानां भेदपक्ष एव वार्त्तिककारस्याभिरुचित इति दर्शयितुमाह—

**प्लुतस्याङ्गविवृद्धिं च समाहारमचोस्तथा।**
**व्युदस्यता पुनर्भेदः शब्देष्वत्यन्तमाश्रितः॥१०२॥**

---

त्रयापोद्धारकल्पनया पदार्थवाक्यार्थत्रयप्रत्यायकम्, तथा श्वेतो धावतीत्यखण्डमेव वाक्यम्, श्वेत इति पदञ्चाखण्डमेव पदद्वयावान्तरवाक्यद्वयकल्पनारूपेणावान्तरवाक्योपप्लावनेन पदार्थद्वयस्यावान्तरवाक्यार्थद्वयस्य च प्रत्यायकं भविष्यतीति दृष्टान्तेन प्रदर्शयितुमाह ऊ इत्येतदिति।

अस्यार्थः—यद्यपि—'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' (पा० १।२।२७) इत्येतत्घटकम् ऊ इत्येतदभिन्नञ्चाखण्डमेव, तथाप्यस्य 'ऊ' इत्येतस्य भेदेन ग्रहणञ्च परस्परभिद्यमानोकारत्रयापोद्धारकल्पनया भिद्यमानोकारत्रयवत्त्वेन, ज्ञानं तु भिन्नवाक्यनिबन्धनम्—उकालोऽज्झ्रस्वसंज्ञः, ऊकालो दीर्घसंज्ञः, ऊ३ कालः प्लुतसंज्ञो बोद्धव्य इति भिन्नानां वाक्याना निबन्धनम्, ज्ञापकनिमित्तम्। तत्र दृष्टान्तः—पररूपमिव द्वयोरिति। यथा पररूपं द्वयोरचोः स्वस्थानिनोर्निबन्धनं = प्रत्यायकम् दृश्यते, तथा शास्त्र ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यत्र, लोके च श्वेतो धावतीत्यत्रावान्तरवाक्योपप्लावनेनानेकार्थता भविष्यतीति योजनेति।

अय भावः—ऊकाल इत्यत्र यद् 'ऊ' इत्येतदुपात्तम् तद्ध्रस्वदीर्घप्लुतानां त्रयाणामुकाराणां सामान्येन उत्वजातिमत्तयाऽभिन्नं रूपं बोद्धव्यम्। ततश्च 'ऊकालः' इत्येतदेकमपि पदं ग्रहणकवाक्यस्थानीयम् = संग्राहकवाक्यसदृशम्, अवान्तरवाक्यानां त्रयाणां निबन्धनं = ज्ञापकनिमित्तम् भवतीत्याह—**भिन्नवाक्यनिबन्धनमिति**। भिन्नवाक्यानां निबन्धनमिति षष्ठीतत्पुरुषः। अतश्च यदा उकारत्रयस्य संसृष्टत्वादभेदेनैव ग्रहणं प्रत्यायके 'ऊ' इत्येतस्मिन् स्थितं तदा 'ऊ' इत्येतद्रूपं भिन्नवाक्यानां निबन्धनमेव भवति। यथा पररूपं संसृष्टत्वादेकमपि द्वयोः प्रत्यायकं दृश्यते तथैतद् बोद्धव्यम्। ततश्च श्वेतो धावतीत्यादाववान्तरवाक्योपप्लावनेनोभयार्थता भविष्यतीति॥१०१॥

यद्यपि वाक्यतदर्थयोरखण्डत्वे सुस्थितेऽपि तन्त्रेणावान्तरवाक्योपप्लावनेन वाऽर्थत्रयबोधाय 'ऊकालः' इति निर्देशं कुर्वतः सूत्रकृतः प्रत्याय्यप्रत्यायकयोरभेद एवेष्टस्तथापि

प्लुतावैच इदुताविरयत्रोक्तम् "अङ्गविवृद्धिर्नोपपद्यते । न ह्यैचोऽवयवोऽकार इकार उकारो वा" इत्येवमङ्गविवृद्धिं व्युदस्यता तावेव शब्दावेकत्र संमिलिताविति य उपदर्शितः प्रागभेदः स पराकृतः। तथाऽचोः समाहारं व्युदस्यता भेद एवेष्यत इति। यदाह "समाहारोऽचोश्चेन्नाभावाद्" इति। तस्मात् श्वेतो धावतीत्यादौ सदृशयोर्मेलनमनुपदमवान्तरवाक्योपप्लावनेन तन्त्रन्यायसमाश्रयणेन वा समर्थनं [यत् समर्थितं न] तज्ज्याय इति ॥१०२॥

अथ तन्त्रमुपसंहर्तुमुपक्रमते—

**अर्द्धर्चादिषु शब्देषु रूपभेदः क्रमाद्यथा।**
**तन्त्रात्तथैकशब्दत्वे भिन्नानां श्रुतिरन्यथा ॥१०३॥**

---

'प्लुतावैच इदुतौ (पा० ८।२।१०६) इति सूत्रस्थवार्त्तिकतद्भाष्यदर्शनेन तेषां शब्दानां परस्परं भेदपक्ष एव वार्त्तिककारस्याभिरुचित इति गम्यत इति दर्शयितुमाह—प्लुतस्येति ।

अस्यार्थः—ऐकारस्य, औकारस्य च प्लुतस्य प्रसङ्गे या तदङ्गस्य तदवयवस्येकारस्योकारस्य च प्लुतकरणेन विवृद्धिस्तत्प्रयुक्ता चैचोरभिवृद्धिश्चतुर्मात्रत्वसंपत्तिरूपा तां व्युदस्यता प्रतिषेधता पररूपे चाचोः पूर्वपरयोः समाहारं प्रतिषेधता वार्त्तिककृता पुनः=तु, शब्देषु= प्रत्याय्येषु प्रत्यायकेषु चात्यन्तं भेद आश्रितः । तथा हि—प्लुतावैच इदुतौ (८।२।१०६) इति सूत्रस्यैचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते (प्लुतौ भवतः) इत्यर्थः। ऐ३तिकायन, औ३पगव इति चोदाहरणम्। चतुर्मात्रावत्रैचौ संपद्यते। अत्र सूत्रे भाष्ये उक्तम्—"अङ्गविवृद्धिर्नोपपद्यते, नह्यैचोऽवयवोऽकार इकार उकारो वा" इत्येवमङ्गविवृद्धिं प्रतिषेधता वार्त्तिककृता 'तावेव शब्दावेकत्र सम्मिलिताविति' यः प्राग् उपदर्शितः प्रत्याय्यप्रत्यायकयोरभेदः स पराकृतः।

यद्यप्येतत्कारिकाव्याख्यावसरे पुण्यराजोपन्यस्ताऽङ्गविवृद्धिर्नोपपद्यत इत्याद्यानुपूर्वी वार्त्तिके तद्भाष्ये च नोपलभ्यते; तथापि तत्रत्यवार्त्तिकभाष्ययोर्भावार्थानुवादरूपेण हरिपरम्पराप्राप्ता द्रष्टव्या। तथा पररूपेऽचोः पूर्वपरयोः समाहारं व्युदस्यता वार्त्तिककृता प्रत्याय्यप्रत्यायकयोर्भेद एवेष्यते। यदाह सः—'समाहारोऽचोश्चेन्नाभावाद्' (महाभा० १।२।३१।१ वा०) इति।

अस्यार्थः—अचोः पूर्वपरयोः समाहारः पररूपमिति चेन्न, प्रत्याय्यप्रत्यायकयोरभेदेन पररूपे तयोरभावादिति। तस्मादनुपदमवान्तरवाक्योपप्लावनेन तन्त्रन्यायसमाश्रयणेन वा वा यच्छ्वेतो धावतीत्यादौ सदृशयोर्मेलनस्य समर्थनं न तज्ज्याय इति ॥१०२॥

यद्यपि प्रत्याय्यप्रत्यायकशब्दानां परस्परं भेदपक्ष एव वार्त्तिककृतोऽभीष्ट इत्यभेदपक्षस्तन्मूलभूतं तन्त्रञ्च सूत्रकृदभिप्रेतं तस्य नाभिप्रेतमिति पूर्वकारिकायां प्रतिपादितं तथापि सूत्रकृदभिप्रेतमभेदपक्षं तस्य मूलं तन्त्रं च शास्त्रसिद्धान्तत्वेनोपसंहर्तुमुपक्रमते—**अर्द्धर्चादिष्विति ।**

यथा क्रमवशेन ऋचोऽर्द्धम् अर्द्धर्चं इत्येकस्यैव शब्दस्य रूपभेदस्तथा तन्त्रन्यायाश्रयणेनैकशब्दत्वे भिन्नानां रूपाणामन्यथा श्रुतिरभिन्ना श्रुतिर्बोद्धव्येति तन्त्रमुपसंहृतम् ॥१०३॥

एतदेव स्फुटीकर्तुमाह—

**संहिताविषये वर्णाः स्वरूपेणाविकारिणः ।**
**शब्दान्तरत्वं यान्तीव शक्त्यन्तरपरिग्रहात् ॥१०४॥**

स एव शब्दोऽनेकशक्तिवर्णतया संहिताविषये प्रतिभासत इत्येकस्यैव श्वेतशब्दस्य संहितयोच्चारणाच्छक्त्यन्तरपरिग्रहेणोभयार्थप्रत्यायकत्वं मन्यते ॥१०४॥

एकस्यापि निमित्तभेदाद्भेद उपजायत इति दृष्टान्तप्रदर्शनेनाह—

**इन्द्रियादिविकारेण दृष्टं ग्राह्येषु वस्तुषु ।**
**आत्मत्यागादृते भिन्नं ग्रहणं स क्रमः श्रुतौ ॥१०५॥**

---

अस्यार्थः—यथा अर्धर्चादिषु (पा० २।४।३१) अभिन्नेष्वेव शब्देष क्रमाद् ऋचोऽर्धम्, अर्धर्चमिति शब्दाना भिद्यमानं क्रममाश्रित्य रूपभेदः प्रतीयते व्यवह्रियते च ऋचोऽर्धमिति विग्रहः अर्धर्चमिति समास इति, तथैकशब्दत्वे प्रत्याय्यप्रत्यायकशब्दयोरेकशब्दत्ववादे, भिन्नानाम् = भिन्नरूपाणां शब्दानाम्, अन्यथा श्रुतिः = अभिन्ना श्रुतिः, तन्त्रात् = तन्त्रं समाश्रित्य बोद्धव्येति शेष इति ।

अयं भावः—यथैकस्यैव शब्दस्य ऋचोऽर्धम्, अर्धर्चमिति क्रमभेदवशेन रूपभेदस्तथैकशब्दवादे भिन्नाना रूपाणामन्यथा श्रुतिः अभिन्ना श्रुतिः तन्त्ररूपन्यायाश्रयणेन बोद्धव्येति तन्त्रं सिद्धान्तत्वेनोपसंहृतमिति ॥१०३॥

शब्दैकत्ववादमेव स्फुटीकर्तुमाह—**संहिताविषय** इति ।

अस्यार्थः - संहिताविषये 'श्वा इत' इत्यादिषु, वर्णाः = आकारेकारादयः, नित्यत्वात् स्वरूपेणाविकारिणोऽपि शक्त्यन्तरस्य परिग्रहात्, श्वेत इत्यादि संहितपदरूपेणोभयार्थप्रत्यायकत्वरूपस्य शक्त्यन्तरस्य परिग्रहात् शब्दान्तरत्वम् = संहितया श्वेत इत्यादिशब्दान्तररूपेण परिणतिं यान्तीव शब्दान्तररूपेण परिणयन्त इव प्रतीयन्तम इति ।

अयं भावः—एक एव श्वेतशब्दोऽनेकार्थप्रत्यायनशक्तिमत्तयाऽसंहितानेकवर्णवत्तया च संहिताविषये प्रतिभासत इत्येकस्यैव श्वेतशब्दस्य कल्पितया संहितयोच्चारणात् शक्त्यन्तरस्यापि परिग्रहेणोभयार्थप्रत्याकत्वं मन्यते लोकः, न तु वास्तवी तत्र संहितेति ॥१०४॥

एकस्यापि श्वेत इति शब्दस्य संहितारूपनिमित्तविशेषात् कल्पिताद् भेद उपजायते = उपजात इव लक्ष्यते इति दृष्टान्तप्रदर्शनेनाह—**इन्द्रियादिविकारेणेति** ।

यथा काचाद्युपहतचक्षुषामेकाकारमपि वस्तु नानारूपतयाऽवभासते, तथा संहितावशादेकोऽपि शब्दो रूपान्तरेणावभासते ॥१०५॥

एतदेवोपसंहर्तुमाह—

**अभिधानक्रियायोगाच्छब्देष्वविकृतेष्वपि ।**
**रूपमत्यन्तभेदेन तदेवैकं प्रकाशते ॥१०६॥**

अभिधानक्रिया संहितयोच्चारणमेव तया योगात्तत्सम्बन्धादविकृतेष्वपि शब्देष्वेकमेव शक्त्यन्तरपरिग्रहादत्यन्तभेदेन प्रकाशते ॥१०६॥

अथैतदेवागमविषये दृश्यते तेन संवादयितुमाह—

**ऋचो वा गीतिमात्रे वा साम द्रव्यान्तरं न तु ।**
**गीतिभेदाद्विगृह्यन्ते ता एव विकृता ऋचः ॥ १०७ ॥**

ऋच एव तथोदीरिताः सामाख्यां यथा प्रतिलभन्ते । विशेषेणोदीरणमात्रं वा साम । यथोच्यते "गीतिषु सामाख्या" इति । ऋचो वा सामेत्येतद् ज्ञापयितुमाह—गीतिभेदादित्यादि ।

---

अस्यार्थः—यथेन्द्रियादिविकारेण काचकामलादिरोगरूपदोषोपजनितचक्षुरादीन्द्रियविकारेण हेतुना चक्षुरादिग्राह्येष्वभिन्नेष्वपि वस्तुषु भिन्नग्रहणम् = भिन्नाकारतया ज्ञानम्, आत्मत्यागादृते = स्वरूपप्रच्युतिं विनैव, दृष्टम्, स क्रमः = सैव रीतिः, श्रुतौ = एकस्मिन् श्वेन इत्यादिशब्दे भिन्नाकाराणां ग्रहणरूप इति ।

अयं भावः—यथा काचकामलादिरोगदोषोपहतचक्षुषामेकाकारमपि वस्तु शुक्तिः—रजतमिति, काच इति, रङ्गमिति; रज्जुरपि सर्पः, धारा, दण्डः, माला इति नानारूपतयाऽवभासते स्वरूपादप्रच्युतमेव, तथैकोऽपि श्वेत इति शब्दः शास्त्रकल्पितसंहितावशात् श्वा इत इति रूपान्तरेणावभासते स्वरूपमपरित्यजन्नेवेति ॥१०५॥

प्रागुक्तदृष्टान्त स ? शब्दैकत्वमेवोपसंहर्तुमाह—**अभिधानक्रियायोगादिति ।**

अस्यार्थः—अविकृतेष्वपि शब्देषु भिन्नाकारतया प्रतीतावपि वस्तुतो भिन्नाकारतयाऽविकृतेष्वपि श्वेत इत्यादिशब्देषु तदेवैकं रूपं श्वेत इति अभिधानक्रियायोगात्—अभिधानमत्र संहितयोच्चारणमेव, न त्वर्थाभिधानम् । तस्या योगात् संबन्धात्, भिन्नपदपदार्थप्रतीत्यनुकूलशक्त्यन्तरपरिग्रहादत्यन्तभेदेन श्वा इति इत्येवं प्रकाशते प्रतीयत इति ॥१०६॥

श्वेतो धावतीत्यादावविकृतेष्वपि सत्सु 'श्वेतः' इत्यादिशब्देषु संहितयाऽभिधानक्रियायोगादेकस्यैव श्वा इत इत्यादिरूपेण भेदप्रकाश इत्येवं प्रागुक्तमर्थमागमविषये (वेदविषये) दृश्यमानेन दृष्टान्तेन संवादयितुमाह—ऋचो वेति ।

तदेवं भेदाभेदविवक्षाभिन्नेन प्रत्याय्यप्रत्यायकभावेनात्यन्तभेदरूपेण वा "संहिताविषये वर्णाः" इत्यत्रोक्तप्रकारेण तन्त्रेण तत्प्रतिपक्षेण वाऽवान्तर-वाक्योपप्लावनरूपेण श्वेतो धावतीत्यत्रैकत्वेऽपि वाक्यस्यार्थभेदो भविष्यतीति नास्मत्पक्षे पदानामनभ्युपगमेऽपि काचित् क्षतिः ॥ १०७ ॥

अथ पुनरपि तन्त्रन्यायेनैतत् समर्थयितुमाह –

**उपायाच्छ्रुतिसंहारे [रो] भिन्नानामेकशेषिणाम् ।**
**तन्त्रेणोच्चारणे तेषां शास्त्रे साधुत्वमिष्यते ॥ १०८ ॥**

---

अस्यार्थः—यद्यपि गीतिविशेषेणोदीरिता ऋचो वा साम, अथवा ऋच्यध्यारूढं गीतिमात्रं साम, उभयथापि न तु ऋगपेक्षया द्रव्यान्तरं साम, तथापि ता एव ऋचो गीति-भेदाद् विकृता विशेषरूपेणोदीरिता विगृह्यन्ते = विभिन्नरूपैर्गृह्यन्त इति ।

अयं भावः—यथा गीतिभेदेनोदीरिता ऋच एव सामाख्यां प्रतिलभन्ते, गीतभेदेनो-दीरणक्रियामात्रं वा साम यथोच्यते, तदुक्तम्-गीतिषु सामाख्येति (पूर्वमीमांसा २।१।३६)। एवं श्वेत इत्यादावविकृतेषु शब्देषु संहितयाऽभिधानक्रियायोगात् श्वा इत इत्यादिरूपभेद-प्रकाशोऽर्थभेदप्रकाशश्चेति ।

तदेवं प्रत्याय्यप्रत्याकयोर्भेदाभेदविवक्षया भिन्नेन प्रत्याय्यप्रत्यायकभावेनात्यन्तभेद-रूपेण वा तेन, 'संहिताविषये वर्णाः' इति कारिकायामुक्तप्रकारेण तन्त्रेण, तत्प्रतिपक्षेण वाऽवान्तरवाक्योपप्लावनरूपेण श्वेतो धावतीत्यत्र वाक्यस्यैकत्वेऽप्यर्थभेदो भविष्यतीति न वाक्याखण्डत्ववादिपक्षे पदानामनभ्युपगमेऽपि काचित् क्षतिरिति ॥१०७॥

अथ वाक्याखण्डत्ववादे पदभेदमर्थभेदं च प्रतीयमानं संहिताविषये वर्णा इति कारि-कायां प्राक् तन्त्रेणाव्यक्तं समर्थितमपि स्पष्टं पुनः समर्थयितुमाह—उपायादिति ।

अस्यार्थः—श्वेतो धावतीत्यादिवाक्येषु भिन्नानाम् = श्वेत इति, श्वा इत इत्यादि-पदानाम्, एकशेषिणाम् = एकशेषवताम्, एकशेषेणोच्चारितानाम्—तन्त्रेणोच्चारितानामिति यावत्। अत्रैकशेषशब्दस्य तन्त्रे प्रयोगः सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वरूपैकशेषसाधर्म्याद् गौणः। एकशेषशब्दस्य तन्त्रे साधर्म्यात् प्रयोगस्तु वार्त्तिककृताऽपि कृतः। तद्यथा— "हलन्त्यमेकशेषनिर्देशाद् वा" ( महाभा० १।३।३। वा० ५।। ) इति। अत्र हलन्त्यमित्ये-कवचननिर्देशात्तन्त्रमेव, न तु एकशेष इति। उपायात् तन्त्रेणोच्चारणरूपादुपायात्, श्रुति-संहारः–श्रुतौ = श्वेतो धावतीत्येकस्मिन्नखण्डे वाक्ये संहारः संश्लेषः, निगीर्णत्वमिति यावत्। तमेवोपायं प्रदर्शयितुमाह- तन्त्रेणोच्चारण इति। श्वेतो धावतीत्यादौ तेषाम् = भिन्नानां श्वेत इति श्वा इत इत्यादिरूपाणां पदानाम्, तन्त्रेणोच्चारणे साधुत्वं शास्त्रे = आद्गुण इत्यादौ श्वा इति इत्येतदर्थमुपप्लुते, उच्यते = तात्पर्येणाख्यायते। अत्र शास्त्र इति वस्तुतः करणस्य शास्त्रस्याधिकरणत्वविवक्षया सप्तमीति ॥१०८॥

उपायात्तन्त्रलक्षणाद्भिन्नानामपि शब्दानामेकस्यां श्रुतौ संहारः संश्लेषो गौणत्वम्। कीदृशानां भिन्नानामित्याह—एकशेषिणामिति। एकशेषसाधर्म्यात्तन्त्रेणोच्चारिता अप्येकशेषिण उच्यन्ते।

यथोक्तं वार्त्तिककृता "हलन्त्यमेकशेषनिर्देशाद्वा" (१।३।३ भा०) इति। तेनैकशेषिणां तन्त्रन्यायवतामिति यावत्। उपायादित्यादेः पूर्वस्य श्लोकस्य स्फुटीकरणायोक्तं तन्त्रेणोच्चारण इत्यादि ॥१०९॥

तस्मादेवंविधे विषये भिन्नानामपि शब्दानां किंचित्सादृश्यमुपादाय तन्त्रेणैव प्रतिपादनं कार्यमित्याह—

**परिगृह्य श्रुतिं चैकां रूपभेदवतामपि**
**तन्त्रेणोच्चारणं कार्यमन्यथा ते न साधवः ॥१०९॥**

यद्यपि च सरूपाणां वाक्यानां शास्त्रेण साक्षात्तन्त्रेण प्रतिपादनं न कृतम्, नाप्येकशेषस्य प्रतिपादनम्, तथापि समानन्यायत्वात्सर्वमपि शब्दानुशासनोपयोगीति प्रतिपादितमुक्तमेवेत्यूह्यत इति प्रतिपादयितुमाह—

---

तस्मात् श्वेतो धावतीत्यादिवाक्यविषये श्वेत इत्यखण्डस्य वर्णवाचकस्य, श्वा इत इत्यत्र सन्धिनिष्पन्नस्य सखण्डस्य च पदार्थद्वयवाचकस्य, पदद्वयस्य परस्पर भेदेऽपि वर्णानुपूर्वीरूपं द्वयोः सादृश्यमादायैकस्मिन् शब्दे तयोस्तन्त्रेण संहृत्योच्चारणेनैवार्थद्वयप्रतिपादनं कार्यम् नान्यथा, 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'ति न्यायविरोधादित्येतत्सर्वं मनसि निधायाह—परिगृह्येति।

अस्यार्थः—श्वेतो धावतीत्यादावेकाम्=श्वेत इति सखण्डाखण्डपदयोः समानाम्, वर्णानुपूर्व्या सदृशीम्;

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते॥ (औणादिकपदार्णवे ३।१०३)

श्रुतिम्=श्वेत इति शब्दम्, परिगृह्य च=शब्दद्वयसंहाराधिकरणत्वेन स्वीकृत्य तु शब्दद्वयसंश्लेषाधारत्वेनाभ्युपगम्य तु, सखण्डाखण्डत्वाभ्यां रूपभेदवतामपि=भिन्नानामपि शब्दानाम्, तन्त्रेणोच्चारणमर्थद्वयबोधाय कार्यम्=स्वीकार्यम्; कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमात्। अन्यथा—तन्त्रेणोच्चारणानङ्गीकारे, ते=अर्थद्वयबोधनाय प्रयुक्ताः श्वेत इत्यादयः शब्दाः साधवो न भविष्यन्ति, अर्थद्वयबोधाक्षमत्वात्। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति न्यायात्। व्याकरणेन ह्यर्थविशेषे शब्दविशेषः साधुत्वेन बोध्यते, तमर्थमनबोधयंश्चासाधुरित्यर्थादवगम्यत इति ॥१०९॥

यद्यपि च सरूपाणां वाक्यानां शास्त्रेण साक्षात्तन्त्रेण प्रतिपादनं न कृतम्। सरूपाणि वाक्यानि तन्त्रेण प्रयोक्तव्यानि तानि च साधूनीति। सरूपाणां पदानामेकशेषस्य शास्त्रेण

**सरूपाणां च वाक्यानां शास्त्रेण प्रतिपादितम् ।**
**तन्त्रेणोच्चारणादेकं रूपं साधूपलभ्यते ॥ ११० ॥**

एतदेव दृष्टान्तप्रदर्शनपूर्वकमुपसंहर्तुमाह—

**एकस्यानेकरूपत्वं नालिकादिपरिग्रहात् ।**
**यथा तथैव तन्त्रात् स्यात् बहूनामेकरूपता ॥ १११ ॥**

---

प्रतिपादनेऽपि सरूपाणां वाक्यानामेकशेषस्य शास्त्रेण नापि प्रतिपादनम् । तथापि पदैकशेषस्य साधुत्वं नोन्नयता शास्त्रेण समानन्यायत्वात् पदतन्त्रम् वाक्यतन्त्रम्, वाक्यैकशेष इति सर्वमपि शब्दानुशासनोपयोगीति प्रतिपादितमेवेत्यूह्यते । तत्र पदतन्त्रम्— श्वेत इति ।

वाक्यतन्त्रम्—

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनता समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ इति ।
(काव्यप्र० नवमोल्लासे ३७१)

अत्र तन्वा नेत्रयोश्च विशेषणपदेषु कुरुतामिति क्रियापदे च द्विवचनैकवचनान्तयोस्तन्त्रम्, न त्वेकशेषः; तथा सति बहुवचनप्रसङ्गात् ।

इदं त्ववधेयम्—शब्दश्लेषस्तन्त्रमिति वैयाकरणैर्व्यवह्रियते । अर्थश्लेषस्तु व्यक्तिपक्षे एकशेष इति विशेषः । वाक्यैकशेषो यथा—

चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला ।
सुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम् ॥ इति ।

अत्र हि चतुर्थपादे वाक्यैकशेषः । प्रथमैकवचनान्तान्वयिनामनेकवाक्यानां तत्र प्रतीतेरित्येतत्सर्वं मनसि निहितं प्रतिपादयितुमाह—सरूपाणा चेति ।

अस्यार्थः—सरूपाणां च = तु वाक्याना तन्त्रेणोच्चारणादेकं रूपं शास्त्रेण प्रतिपादितम् = समानन्यायत्वाच्छास्त्रेण प्रतिपादितप्रायम्, प्रयोगे साधूपलभ्यते । शास्त्रेणाप्रतिपादितमिति पाठे तु शास्त्रेणाप्रतिपादितमपि साधूपलभ्यत इति, अपिशब्दाध्याहारेण योजना । तत्र यद्यप्यत्र शास्त्रेणाप्रतिपादितमिति पाठ एव युक्तः, प्रतिपादितप्राये लक्षणाऽनभ्युपगमात्, तथापि पुण्यराजोपलब्धः शास्त्रेण प्रतिपादितमिति पाठस्तद्रीत्याऽत्र व्याख्यात इत्यवधेयम् ॥११०॥

इदानीं दृष्टान्तप्रदर्शनपूर्वकं तन्त्रेणोच्चारितस्य साधुत्वमुपसंहर्तुमाह—**एकस्येति** ।

यथैकोऽपि ध्वनिर्नालिकादिपरिग्रहोपधानवशान्नानाविधषड्जऋषभादिरूपभेदवानुपजायते, तथा तन्त्रसमाश्रयणेन श्वा इतः श्वेत इत्येवमात्मकानां भिन्नानामपि शब्दानामेकरूपता श्वेत इत्येवंरूपतेति न कश्चित्तत्र दोषः ॥१११॥

इदानीं यदुक्तमवान्तरवाक्यानामर्थवत्त्वं न स्यादिति तत्प्रतिविधातुमाह—

**यथा पदसरूपाणां वाक्यानां सम्भवः पृथक्।**
**तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता। ११२ ॥**

यथाऽखण्डपक्षे वाक्यानां पदसरूपाणामवान्तरवाक्यानामपोद्धारबुद्धया सम्भवमुपकल्प्यार्थस्तेषां महावाक्योपयोगी व्यवस्थाप्यते। यदि तथा न प्रकल्पेत न तदा महावाक्यार्थसम्प्रत्ययः स्यात्। तथा वाक्यान्तराभाव एषां पृथगर्थता स्यात्।

---

अस्यार्थः—यथैकोऽपि ध्वनिर्वंशीलम्बरादिवाद्याना नालिकादिपरिग्रहरूपोपधानवशाद् (नालिकाऽत्र छिद्रम्) नानाविधषड्जर्षभादिभेदवानुपजायते, तथा तन्त्रात् तन्त्रसमाश्रयणेन श्वा इतः, श्वेत इत्येवमात्मकाना भिन्नानामपि बहूनां शब्दानामेकरूपता श्वेत इत्येवंरूपता स्यादिति न कश्चित्तत्र दोष इति। यथैकस्यानेकरूपताऽसम्भविन्यप्युपाधिपरिग्रहात् संभवति, तथा बहूनामेकरूपताऽपि तन्त्ररूपोपाधिपरिग्रहेण संभविष्यतीति। एतत्कारिकार्थानुरूपमेव भाष्यटीकाया हरिराह—यथा वा नालिकयोच्चार्यमाण एक एव देशविशेषादनेकः प्रतिश्रुतत्वाच्छब्द उपलभ्यते, न चास्यानेकत्वं लोक इति।

अस्यार्थः—यथा वैक एव गीतिशब्दो वंशीवाद्यादिनालिकया देशविशेषादुच्चार्यमाणोऽनेक उपलभ्यते, तत्तत्स्थानेषु प्रतिश्रुतत्वात् प्रतिध्वनितत्वाच्चानेक उपलभ्यते, न चास्य लोकेऽनेकत्वमस्तीति ॥ १११ ॥

पूर्वं यदुक्तं वाक्यस्याखण्डत्वेऽवान्तरवाक्यानामर्थवत्त्वं न स्यादितीदानीं तत्प्रतिविधातुमाह—यथा पदसरूपाणामिति।

अस्यार्थः—यथा पदसरूपाणाम्, = महावाक्यघटकत्वेन प्रतीयमानत्वरूपपदसादृश्यवताम्, वाक्यानाम् = अवान्तरवाक्यानाम्, अपोद्धारसमाश्रयणेन पृथक्सम्भवः, तथा वाक्यान्तराभावेऽवान्तरवाक्यानां वस्तुगत्याऽभावेऽप्येषामवान्तरवाक्यानामर्थापोद्धारसमाश्रयणेन पृथगर्थता महावाक्यार्थापेक्षया भिन्नार्थत्वम्, महावाक्यादपोद्धृतानां तेषां परस्परं भिन्नार्थत्वं वा स्यादिति।

अयं भावः—यथा वाक्याखण्डत्वपक्षेऽवान्तरवाक्यानां महावाक्यघटकत्वेन प्रतीयमानतया पदसरूपाणामपोद्धारबुद्धया संभवमुपकल्प्य महावाक्योपयोगी तेषामर्थो व्यवस्थाप्यते। यद्यपोद्धारपुरस्सरं तेषामर्थो न प्रकल्प्येत, तदा न महावाक्यार्थसंप्रत्ययः स्यादिति, तथा महावाक्ये वस्तुतोऽवान्तरवाक्यानामभावेऽप्येषां पृथगर्थता स्यात्। यतोऽपोद्धारसमाश्र-

**यावता**ऽपोद्धारसमाश्रयणेन वाक्यान्तराण्युपकल्प्य पृथगर्थत्वमसत्यमप्येषामभ्युपगम्यत इति नास्त्यवान्तरवाक्यानुपपत्तिचोद्यम् ॥११२॥

इदानीं प्रयोजनं वाक्यार्थ इति पक्षं दूषयितुमाह—

**अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम् ।**
**यस्य तस्य न संबन्धो वाक्यानामुपपद्यते ॥ ११३ ॥**

**वाक्यस्यार्थो** वाक्यप्रयोजनमुच्यते । **न त्वभिधेयः** । **कस्यायमर्थः** स्यादित्याह—अभिधेयः पदस्यार्थ इति । पदानामर्थोऽभिधेय उच्यते । **एतन्निराकरोति—यस्य तस्येत्यादि** । एवं वादिनः परस्परं वाक्यानां सम्बन्धो न स्यात् । कीलायः—**शलाकाकल्पानां** वाक्यानां किं कृतः संबन्धो भवति ? अभिधेयद्वारकः **परस्परं संबन्धः** स्यात् । **अभिधेयं** च वाक्यानां नास्तीत्यसम्बन्धानि **वाक्यानि** प्राप्नुवन्तीति यत्किञ्चिदेतत् ॥११३॥

---

येणावान्तरवाक्यान्युपकल्प्य पृथगर्थत्वमसत्यमप्येषामभ्युपगम्यत इति नास्ति वाक्याखण्डत्वपक्षेऽवान्तरवाक्यानुपपत्तिप्रश्नः ॥११२॥

इदानीं सर्ववाक्यलक्षणसाधारणं प्रयोजनं वाक्यार्थः' इति केषाञ्चित् पक्षं दूषयितुमाह—अभिधेयः पदस्येति ।

अस्यार्थः—यस्य मते पदस्यार्थः पदस्याभिधेयमुच्यते वाक्यार्थश्च न वाक्यस्याभिधेयम् किन्तु वाक्यप्रयोजनमिति । वाक्यस्य प्रयोजनञ्च—तत्तत्पदार्थसंसर्गबोधानुकूलपदद्वयसमभिव्याहाररूपवाक्यस्य तादृशसंसर्गबोधरूपं कार्यम्, न तु तादृशः संसर्गः पदस्याभिधेय इति । तस्य मते वाक्यानां परस्परं संबन्धो नोपपद्यते । वाक्यानां परस्परं संबन्धश्च सर्वसम्मतः । तदुक्तं भट्टपादैः—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ इति ।

(तन्त्रवा० पृ० ३२९ चौखम्बा)

अयं भावः—वाक्यस्यार्थः संसर्गो ज्ञायमानत्वेन रूपेण वाक्यस्य प्रयोजनं कार्यम्, न तु वाक्यस्य संसर्गरूपे स्वार्थे शक्तिरित्येवं वादिनो मते वाक्यानां परस्परं संबन्धो न स्यात् । एवं ह्यत्यन्तविविक्तत्वेन कीलायःशलाकाकल्पानां वाक्यानां किंकृतः संबन्धो भवेत् । अभिधेयद्वारको हि पदानां वाक्यानां च परस्परं संबन्धो भवति । अभिधेयं च वाक्यानां तन्मते नास्तीति परस्परमसंबद्धानि वाक्यानि तन्मते प्राप्नुवन्तीत्येतन्मतमविचारितरमणीयमेवेति ॥११३॥

अथान्विताभिधानसमाश्रयणेनैतत्समर्थयितुमाह—

**तत्र क्रियापदान्येव व्यपेक्षन्ते परस्परम् ।**
**क्रियापदानुषक्तस्तु सम्बन्धोऽतः प्रतीयते ॥ ११४ ॥**

क्रियापदमाक्षिप्तसमस्तसाधनव्रातं निराकाङ्क्षं संपद्यते, क्रियापदानुषक्तः परस्परसम्बन्धो निराकाङ्क्षस्तस्मादुपपन्न इति न काचित् क्षतिः ॥ ११४ ॥

---

अथान्विताभिधानपक्षसमाश्रयणेन 'प्रयोजनं वाक्यार्थः' इति पक्षं समर्थयितुम् अस्मिन् पक्षेऽभिधेयं वाक्यानां नास्तीत्यसंबद्धानि परस्परं वाक्यानि प्राप्नुवन्तीति दूषणमुद्धर्तुं चाह—**तत्र क्रियापदानीति ।**

अस्यार्थः—तत्राऽऽख्यातं वाक्यमिति पक्षे, अन्विताभिधानपक्षे च । तत्पदस्यात्र बुद्धिस्थपरामर्शकत्वात् । क्रियापदान्येव साधनव्रातं व्यपेक्षन्ते व्यपेक्षयाऽऽक्षिपन्ति । व्यपेक्षायां शक्तस्य व्यपपूर्वस्येक्षतेर्व्यपेक्षाकरणक आक्षेपे लक्षणा; न तु साधनपदानि क्रियां व्यपेक्षयाऽऽक्षिपन्ति, साधनपदविरहितानां क्रियापदानामेवार्थप्राधान्येन लोके बहुल प्रयोगोपलब्धेः । साधनपदानां क्रियापदैरेवाक्षेपे साधनपदप्रयोगो व्यर्थ इति चेन्न अनभिप्रेतसाधनव्यावृत्त्यर्थत्वात् तत्प्रयोगस्येति ।

यद्यपि साधनपदान्यपि क्रियापदविरहितानि क्वचित् क्रियामाक्षिपन्ति दृष्टानि । तद्यथा—द्वारमित्युक्ते पिधेहीति क्रियापदमाक्षिप्यत इति । तथापि साधनानां क्रियायामप्राधान्यान्न तद्वाचकपदानां केवलानां बहुलः प्रयोगः । यथा हि प्रधानेनाप्रधानमाक्षिप्यते झटिति न तथाऽप्रधानेन प्रधानम् । यथा हि लोके राजाऽसौ गच्छतीत्युक्ते राज्ञा प्रधानेन तत्परिवारोऽमात्यादिराक्षिप्यते, न तथाऽमात्योऽसौ गच्छतीत्युक्ते राजाऽऽक्षिप्यत इति साधनपदैः केवलैः प्रयुज्यमानैः क्रियापदाक्षेपोऽनुदाहरणमिति। क्रियापदानुषक्तस्तु क्रियापदे = आख्यातपदरूपे वाक्ये, अनुषक्तस्तु = वाच्यवाचकभावसम्बन्धेनावस्थितस्तु, साध्यसाधनयोः परस्परं सम्बन्धोऽर्थः प्रतीयते = वाक्यार्थत्वेन प्रतीयते । तथा चान्विताभिधानपक्षे आख्यातपदरूपवाक्याभिधेयत्वमेव परस्परं सम्बन्धस्येति न वाक्यान्यभिधेयरहितत्वादसम्बद्धानि भविष्यन्ति, साध्यसाधनवाचकपदसमुदायरूपस्य तु वाक्यस्यार्थः प्रयोजनं भविष्यतीति न किञ्चिद्धीयत इति ।

यद्यप्यन्विताभिधानपक्षे क्रियापदं क्रियानुयोगिकमन्वयसामान्यं बोधयदपि साधनरूपप्रतियोग्यंशे साकाङ्क्षत्वान्न वाक्यं भवितुमर्हति, तदुक्तं न्यायभाष्यकृता—"पदसमूहो वाक्यमर्थसमाप्ताविति ।"

अस्यार्थः—अर्थसमाप्तौ, निराकाङ्क्षाऽर्थप्रमितौ समर्थः पदसमूहो वाक्यमिति । न वा तदर्थो वाक्यार्थो भवितुमर्हतीति शङ्कितुं शक्यते, तथापि क्रियापदमाक्षिप्तसाधनव्रातं निराकाङ्क्षं संपद्यते । एवं चैतत्पक्षे—क्रियापदानुषक्तः सामान्यरूपः साध्यसाधनयोः परस्पर-

ननु चान्विताभिधानं न युक्तमिव प्रतिभाति। तथा हि—यदि प्रथममेव सकलविशेषयुक्तो वाक्यार्थोऽवगतः स्यात् तदुत्तरकालभाविनां गवादीनामभिधाने न किंचित्प्रयोजनमुत्पश्यामः। अवगतार्थानां हि पदानां पुनर्वचने वैयर्थ्यमापद्यत इत्याशङ्क्य समर्थयितुमाह—

**आवृत्तिरनुवादो वा पदार्थव्यक्तिकल्पने।**
**प्रत्येकं तु समाप्तोऽर्थः सहभूतेषु वर्तते॥ ११५॥**

अवगतार्थानामप्यावृत्तिर्नियमाय भविष्यति। उक्तस्य वार्थस्य स्फुटीकरणायानुवादस्तेषामसाविति नास्त्यानर्थक्यम्। एवमपि पूर्वस्य पूर्वस्य तिरोहितत्वात् सहत्वासम्भवादन्वयस्यासम्भवादर्थानवगम एव। एकस्मादेव च पदात्समस्तविशेषान्वितस्य वाक्यार्थस्याप्रतीतेरुत्तरेषां चानवगतार्थानां नियमानुवादपरि-

---

सम्बन्धः साधनपदाक्षेपे स्वविशेषसम्बन्धविषयाकाङ्क्षाविरहितः सपन्न इत्यन्विताभिधानपक्षे, आख्यातं वाक्यमिति पक्षे वाक्यस्यार्थः प्रयोजनमिति पक्ष उपपन्न इति न काचित् क्षतिरिति॥ ११४॥

ननु चान्विताभिधानं न युक्तमिव प्रतिभाति, तथाहि—यदि प्रथममेवैकस्मात् पदात् सकलपदार्थविशेषयुक्तो वाक्यार्थोऽवगतः स्यात्। तदा तदुत्तरकालमवबुध्यमानानां गवादीनामभिधाने न किञ्चित् प्रयोजनमुत्प्रेक्षितुं शक्यते। आक्षेपतोऽवगतार्थानां हि पदानां पुनर्वचने वैयर्थ्यमापद्यत इत्याशङ्का त्रिभिः प्रकारैः समाधातुमाह— आवृत्तिरिति।

अस्यार्थः—अन्विताभिधानपक्षे एकस्मादेव पदाद् अवगतानामप्यर्थानामावृत्तिरितरसाधननिषेधरूपनियमाय भविष्यतीत्येकं समाधानम्। वा = अथवा पदार्थव्यक्तिकल्पने पदार्थस्य = इतरसाधनव्यावृत्तस्याभिप्रेतस्य साधनस्य या व्यक्तिः = असन्दिग्धा स्फुटा प्रतीतिस्तस्याः कल्पनरूपे फले सोऽयमवगतार्थस्यानुवाद इति द्वितीयं समाधानम्। सहभूतेषु तु = सहभूतेष्वेव। 'तु स्याद् भेदेऽवधारणे' (३का० नानार्थ०) इत्यमरः। बुद्धौ युगपदवस्थितेष्वेव साध्यसाधनपदेषु, प्रत्येकं समाप्तोऽर्थः = प्रत्येकं पदेषु निराकाङ्क्षो वाक्यार्थो वर्तते, असहभूतेषु पदेषु तु इतरपदार्थसाकाङ्क्ष एव पदार्थो वर्तते। बहिस्तु न पदानां सहभूतत्वं संभवति। वर्णानां पदानाञ्च क्षणिकत्वादिति तृतीयं समाधानमिति।

अयं भावः—अवगतार्थानामप्यावृत्तिर्नियमाय भविष्यति। अथवा— उक्तस्यार्थस्य स्फुटीकरणायासौ तस्यानुवाद इति नास्ति पदान्तरोपादानानर्थक्यम्। नन्वेवमप्यन्विताभिधानपक्षोऽनुपपन्न एव। तथा हि—वर्णानां पदानाञ्च क्षणिकत्वेन पूर्वस्य पूर्वस्य तिरोहितत्वात् सहवृत्तित्वासम्भवः; तस्माच्च तदर्थानां परस्परमन्वयासंभवाद्वाक्यार्थानवगम एव, एकस्मादेव च पदात् समस्तविशेषान्वितस्य वाक्यार्थस्याप्रतीतेरुत्तरेषामनवगतार्थाना

कल्पनायोगादसमञ्जस एवान्विताभिधानपक्षः। यदा पुनः सहभूतेष्वेवासौ प्रत्येकं समाप्तोऽर्थ इत्युच्यते।

यथोक्तम्—"व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु" इति। तदा नास्त्येव सहभूतानामुपादाने वैफल्यमिति न कश्चिद्दोषः ॥११५॥

तदेवं सङ्घातादीन्युद्दिष्टानि वाक्यलक्षणानि प्रासङ्गिकविचारसहितानि व्याख्यातानि। आख्यातं वाक्यमिति दर्शयिष्यते। वाक्यव्याख्याप्रसङ्गेन च वाक्यार्था अपि संसर्गसंसृष्टिनिराकाङ्क्षपदार्थप्रयोजनलक्षणाश्चत्वार उपदर्शिताः। प्रतिभां क्रियां च दर्शयिष्यति। नन्वेकस्यैव वाक्यार्थस्य कथं विकल्पप्रपञ्च इत्याशङ्क्य निरूपयितुमाह—

**अविकल्पेऽपि वाक्यार्थे विकल्पा भावनाश्रयाः।**
**अत्राधिकरणे वादाः पूर्वेषां बहुधा गताः ॥ ११६ ॥**

वाक्यार्थोऽविकल्प एव निर्विभाग एवाभ्युपगन्तुं युक्तः, तस्मिंश्च तथाभूतेऽपि येऽमी विकल्पास्ते पुरुषाणामनेकशास्त्रभावनासमाश्रया बोद्धव्याः। न वस्त्वनुपातिन इति तद्वाक्यार्थ एक एव युक्तः।

---

पदानां नियमानुवादपरिकल्पनाया अयुक्तत्वाच्चासमञ्जस एवान्विताभिधानपक्ष इति चेन्न; पदानां बौद्धं सहभावमादाय यदा पुनः सहभूतेष्वेवासौ प्रत्येक समाप्तो वाक्यार्थ इत्युच्यते।

यथोक्तम्—"व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु" इति (वा० प० २।१८)। व्याख्यातं च हरिणा स्वयमेव—"एवं व्यक्तेषु ह्युपव्यञ्जनेष्वर्थः प्रसिद्धिं लभते" इति व्यक्तं प्रयुज्यमानेषु हि तत्तदर्थोपव्यञ्जकेषु पदेषु वाक्यार्थः प्रतिपत्तृषु प्रसिद्धिं लभत इति तदर्थ इति। तदा नास्त्येव सहभूतानामुपादाने वैफल्यम्, तेषामुपादानस्य नियमफलावृत्तिरूपत्वात्, उक्तार्थस्फुटीकरणफलानुवादरूपत्वाद्वेति नास्ति कश्चिद्दोषोऽन्विताभिधानपक्ष इति॥ ११५ ॥

तदेवं सङ्घातादीनि वाक्यस्वरूपाणि प्रारम्भे समुद्दिष्टानि प्रासङ्गिकविचारसहितानि व्याख्यातानि। आख्यातं वाक्यमित्यपि समुद्दिष्टं दर्शयिष्यते। वाक्यव्याख्याप्रसङ्गेन च वाक्यार्था अपि चत्वार उपदर्शिताः, संसर्गसंसृष्टि (संसृष्टार्थवत्) निराकाङ्क्षपदार्थप्रयोजनलक्षणाः। प्रतिभा क्रियां च वाक्यार्थं दर्शयिष्यति। तत्र प्रागुक्तरीत्या वाक्यार्थस्यैकत्वेऽखण्डत्वे च स्थिते कथमेकस्यैव वाक्यार्थस्य नानाविधो विकल्पप्रपञ्च इत्याशङ्क्य तं निरूपयितुमाह—अविकल्पेऽपीति।

अस्यार्थः—प्रागुक्तरीत्याऽविकल्पेऽपि विभागकल्पनारहितेऽपि, अविभागेऽपीति यावत्। वाक्यार्थे येऽमी विकल्पाः संसर्गसंसृष्ट्यादयस्ते पुरुषाणां भावनाश्रयाः = अनेकशास्त्रभावनासमाश्रया बोद्धव्याः, न तु वस्तुतत्त्वानुगताः। तस्माद् वाक्यार्थ एक एव युक्त इति।

एतदेव प्रतिपादयितुमाह—अत्राधिकरण इति। अस्मिन्नधिकरणे विचारस्थाने पूर्वेषामाचार्याणां प्रवादा बहुधा गताः शास्त्रसंस्कारवासितचेतसां तेषामिति कस्य पर्यनुयोगः क्रियते ॥ ११६ ॥

परमार्थतस्तु वाक्यार्थ एक एव, सर्वोऽपि शब्दः प्रतिभाया एव हेतुरिति तत्स्वरूपमिदानीं प्रस्तावयितुमाह—

**अभ्यासात् प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः।**
**बालानां च तिरश्चां च यथार्थप्रतिपादने ॥ ११७ ॥**

अपरैराचार्यैः। सर्वः यः कश्चिच्छब्दः स प्रतिभाहेतुः। जडानामपि प्रतिभाहेतुरित्याह—बालानामित्यादि। आस्तां विदितसमयस्य किं न भविष्यत्यसौ प्रतिभाहेतुः। येऽप्यविदितसंकेता अमी बाला जडप्राया वा तिर्यञ्चः, तेषामप्यनादिवासनावशात्तदर्थः प्रतीयमानो दृश्यते शब्दः। तथा च जडानामपि प्राणिनां नियतपदः शब्दः सम्बोधनायोदीर्यते। तेन प्रतिनियतजात्यनुसारेणैव नियतैव काचित् प्रतिभा प्रबोध्यत इति तन्मूल एव सर्वः कश्चित्तेषां व्यवहारः। अनेनैतदुच्यते—

---

एतदेव प्रतिपादयितुमाह—**अत्राधिकरण इति**।

अस्यार्थः अत्र = अस्मिन्, अधिकरणे = विचारस्थाने, वादाः = पूर्वेषामाचार्याणां प्रवादाः बहुधा गताः, नानाविधशास्त्रसंस्कारवासितचेतस्त्वात् तेषामिति स्थिते, अनेनायं वाक्यार्थपक्षः कुत उक्त इति कस्य पर्यनुयोगः क्रियते, सर्वस्यापि तत्तच्छास्त्रानुसारिस्वस्ववासनामनुसृत्य तथा तथा तत्तत्पक्षप्रवचनादिति ॥ ११६ ॥

वस्तुतस्तु वाक्यार्थः प्रतिभारूपतयैक एव, सर्वोऽपि शब्दः समनन्तरकार्यावबोधरूपायाः प्रतिभाया एव हेतुः। अत एव सर्वेषां शब्दानां कार्यपरत्वमेवेति मीमांसका आस्थिषत। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति (पू० मी० १।२।१), "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि"ति (पू० मी० १।२।७) च सूत्रद्वयं शब्दानां कार्यपरत्वे मूलम्। अतः प्रतिभायाः स्वरूपमिदानीं प्रदर्शयितुं प्रक्रमते—**अभ्यासादिति**।

अस्यार्थः—अपरैराचार्यैः सर्वः शब्दः—पदरूपो वाक्यरूपो वा, ध्वन्यात्मको वर्णात्मको वा। बालानाञ्च तिरश्चां च बालानामपि तिरश्चामपि। अविदितसंकेतानाम्, किमुत बुद्धिमता विदितसंकेतानां यथार्थप्रतिपादनेऽभीष्टेऽभ्यासाद् व्यवहारे प्रयुज्यमानतत्तच्छब्दतदर्थग्रहाभ्यासजनितसंस्कारवशात् प्रतिभाहेतुः स्मृत इति। ध्वन्यात्मकोऽपि शब्दः प्रतिभाहेतुर्यथा—करतालिकाशब्दात् काकाः पलायन्ते, घण्टाशब्दाच्च छात्रा अध्यापकाश्चाध्ययनेऽध्यापने च प्रवर्तन्त इत्यादिकमुदाहार्यम्। तथा च जडानामपि प्राणिनां साण्डमहिषादीनामभिमुखीकरणाय नियतपदः शब्द उदीर्यते, तेन प्रतिनियतजात्यनुसारेणैव नियतैव काचित् प्रतिभा प्रबोध्यते = शब्दप्रबोधपूर्वकं क्रियते इति प्रतिभामूलक एव सर्वो यः

यदियं प्रतिभा सर्वप्राणि िवेद्या शब्दनिमित्ता सकलव्यवहारमूलभूताऽनपह्नवनीया तदपह्नवे स्वात्मैव विप्रलभ्यते । तत्प्रतिभाऽभ्युपगमोऽवश्याश्रयणीयः ॥ ११७ ॥

अभ्यासात् प्रतिभाहेतुरित्युक्तं, तत्राभ्यासः किमिदानीन्तन उत जन्मान्तरभावी, तस्य च किं स्वरूपमित्याशङ्क्याह—

**अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते ।**

**स चाभ्यासोऽनागम इदानीन्तनो न भवति । नहि बालस्य तदैवोपदिष्टं**

---

कश्चित्तेषां=साण्डमहिषादीनां प्रवृत्त्यादिरूपो व्यवहारः । मया दर्शितं चैतद् ब्रह्मकाण्डे साण्डमहिषादीनां संबोधनाय प्रतिनियता एव शब्दाः प्रयुज्यन्ते, तैरेव च शब्दैस्तेषां तेषामेव प्रतिभापुरस्सरः प्रवृत्त्यादिरूपो व्यवहार इति ।

अयं भावः—यत इयं शब्दनिमित्ता प्रतिभा सर्वप्राणिभवेद्या सर्वेषां प्राणिनां सकलव्यवहारमूलभूता चातोऽनपह्नवनीया । तदपह्नवे स्वात्मैव विप्रलभ्यते । तस्मात् प्रतिभाऽभ्युपगम आवश्यक इति । इदं पद्यं तत्त्वसंग्रहे तावदेवं व्याचष्टे कमलशीलः—"शब्दस्य क्वचिद्विषये पुनः पुनः प्रवृत्तिदर्शनमभ्यासः । नियतसाधनावच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा । सा प्रयोगदर्शनावृत्तिसहितेन शब्देन जन्यते । प्रतिवाक्यं प्रतिपुरुषं च सा भिद्यते । स तु तस्या अपरिमाणो भेदः शब्दव्यवहारस्यानन्त्यान्न शक्यते विधातुम्=अभिधातुम् इत्यत आह—**बालानाञ्च तिरश्चां चेत्यादि** । यथैव ह्यङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणायां प्रतिभाहेतवो भवन्ति, तथा सर्वेऽथैवत्सम्मता वृक्षादयः शब्दा यथाऽभ्यासं प्रतिभामात्रोपसंहारहेतवो भवन्ति, न त्वर्थं साक्षात् प्रतिपादयन्ति । अन्यथा हि कथं परस्परपराहताः प्रवचनभेदा उत्पाद्यकथाप्रबन्धाश्च स्वविकल्पोपरचितपदार्थभेदद्योतकाः स्युः" इति ।

इदमेव पद्यं विधिविवेके न्यायकणिकायां वाचस्पतिमिश्रास्त्वेवं व्याकुर्वन्ति—"अभ्यासजनितां भावनामभ्यासशब्देनाह, कार्ये कारणोपचारात् । नाभिधानाधीनोऽर्थबोधः शब्दादपि त्वभ्यासाधीनः । यथा हि खलु कशाङ्कुशाभिघातादयोऽनभिधायका अपि वाजिगजादीनामभ्यासात् स्वतः प्रवृत्तिनिवृत्तिहेतुमर्थप्रतिभासां प्रतिभां भावयन्तः प्रवर्तका निवर्तकाश्च, तथा संक्षेपतः सर्वः शब्दो व्युत्पन्नानामव्युत्पन्नानां चेह जन्मनीत्यर्थः । अयञ्च प्राग्भवीयोऽभ्यासोऽवश्याभ्युपेय इत्यत्र दृष्टान्तमाह—"बालानाञ्च तिरश्चां च यथार्थप्रतिपादने । अर्थाभासप्रतिभोत्पादनेन चार्थप्रतिपादनमुक्तम्" इति ॥ ११७ ॥

अभ्यासात् प्रतिभाहेतुरित्युक्तं प्राक् । तत्राभ्यासः किमिदानीन्तन उत जन्मान्तरभावी । तस्य चाभ्यासस्य किं स्वरूपमिति जिज्ञासायामाह—**अनागमश्चेति** ।

अस्यार्थः—स चाभ्यासोऽनागमः । अस्मिन् जन्मनि शास्त्राभ्यासजन्य इदानीन्तनो न भवति । नहि बालस्य प्रतिभाहेतोः शब्दस्य सङ्केतस्तदैवोपदिष्टः केनचिदिति वक्तुं

केनचिदिति जन्मान्तरभाव्येव स च समय इष्यते। संकेतस्वरूपोऽसाविष्यत इति स्वरूपमेवास्य स्फुटयितुमाह —

**अनन्तरमिदं कार्यमस्मादित्युपदर्शनम् ॥ ११८ ॥**

स चानन्तरमिदं कार्यमित्युपदर्शनस्वभावः। यथा कशाभिघातमात्रसमनन्तरमेव वाजिनोऽतियान्ति, अङ्कुशाभिघातेन च गजाः, एवमन्येऽपि यथास्वं प्राणिनोऽनादिवासनाभ्यासवशेन प्रतिभातः समुचितव्यवहारं कुर्वन्तो लोकयात्रां निर्वाहयन्तीति स्थितम्। एवमखण्डमेव वाक्यं प्रतिभा च वाक्यार्थ इति समाश्रयणीयम्। पदपदार्थापोद्धारमाश्रित्य प्रतिनिध्यादिकल्पनं प्रासङ्गिकादिन्यायनिर्वाहश्च भविष्यतीति व्यवस्थापितम् ॥११८॥

अथ पदार्थप्रविभागश्चेत् समाश्रितस्तदुच्यतां पदस्यार्थ इति प्रविभागप्रसङ्गात् पदार्थविवेचनं मतभेदेन कर्तुमाह—

**अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्।**
**अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥११९॥**

---

शक्यते, अदर्शनात्। अतो जन्मान्तरभाव्येव बालस्य प्रतिभाहेतुरभ्यास इति। स च कैश्चित् समय इष्यते। संकेतस्वरूपोऽसाविष्यते कैश्चिदिति। अभ्यासस्य स्वरूपमेव स्फुटयितुमाह— **अनन्तरमिति।**

अस्यार्थः—स चाभ्यासः अस्मादनन्तरमिदं कार्यमित्युपदर्शनरूपा = प्रबोधरूपा या प्रतिभा तद्धेतुस्वभावः। यथा कशाभिघातमात्रसमनन्तरमेव वाजिनोऽतियान्ति, अतिशयेन वेगेन यान्ति, अङ्कुशाभिघातेन च गजाः, एवमन्येऽपि प्राणिनो यथास्वमनादिवासनाभ्यासवशेन प्रतिभातः स्वजात्यादिसमुचितं व्यवहारं कुर्वन्तो लोकयात्रां निर्वाहयन्तीति स्थितम्। एवञ्चाखण्डमेव वाक्यं प्रागुक्तरूपा प्रतिभैव चाखण्डा वाक्यार्थ इति मतमेव समाश्रयणीयम्। पदपदार्थापोद्धारकल्पनामाश्रित्य च प्रतिनिध्यादिकल्पनं प्रासङ्गिकादिन्यायनिर्वाहश्च भविष्यतीति व्यवस्थापितम्।

श्रीवाचस्पतिमिश्रा विधिविवेके न्यायकणिकायामिमं श्लोकार्धमेवं व्याचख्युः— अनागमश्च सोऽभ्यास इति। आगम्यते प्राप्यते (कार्यम्) अस्मादिति कारणमागमः। अविद्यमान आगमो यस्मिन्नसावनागमोऽनादिरित्यर्थः। समयः कैश्चिदिष्यत इत्यादिमत्तामाह। नैयायिकादयो हीश्वरनिर्माणं शब्दार्थसम्बन्धं समय इत्याचक्षते। स चाभ्यासस्य भावनाया विषय इत्यभ्यास उक्त इति ॥११८॥

अथ वाक्यतदर्थाखण्डत्वे व्यवस्थापिते पदपदार्थापोद्धारकल्पनया पदार्थप्रविभागश्चेत् समाश्रितस्तदुच्यतां पदस्यार्थ इत्याकाङ्क्षायां प्रविभागप्रसङ्गात् पदार्थविवेचनं मतभेदेन कर्तुमाह—**अस्त्यर्थ** इति।

सर्वशब्दानामपरामृष्टाकारविशेषमर्थमात्रं वाच्यमिति केचिदाहुः। एतत्सर्वशब्दानां प्रत्याय्यलक्षणं प्रत्याय्यस्य वाच्यस्य लक्षणं बोद्धव्यम्। केन तुल्यमेतत् स्यादित्याह—अपूर्वदेवतेत्यादि। अपूर्वदेवतादिपदेषु हि नाकारप्रथनम्। यत्तु गवादिपदेष्वाकारप्रथनं तन्नान्तरीयकतया बोद्धव्यम्। अन्यथाऽपूर्वशब्दाद्देवताशब्दात् स्वर्गशब्दादश्वगवादिशब्दवदाकारादिप्रथनं स्यात्। यतश्च तेभ्यो नास्त्याकारादिप्रथनम्, अतोऽर्थमात्रमेव तैः प्रत्याय्य इति युक्तम् ॥११६॥

---

अस्यार्थः—सर्वशब्दानामर्थः = आकारविशेषपरामर्शशून्यमर्थसामान्यम्, वाच्यमस्तीति केचिदाहुः। इति = एतत्, सर्वशब्दानां प्रत्याय्यलक्षणम्—प्रत्याय्यस्य = वाच्यस्य, लक्षणम् = स्वरूपं बोद्धव्यम्। एतच्च प्रत्याय्यलक्षणमपरामृष्टाकारविशेषमर्थसामान्यं गवादिषु = गवादिपदेषु, अपूर्वदेवतास्वर्गैः = अपूर्वदेवतास्वर्गपदार्थैः, समम् = अपरामृष्टाकारविशेषत्वेन सदृशमिति।

अयं भावः—अपरामृष्टाकारविशेषमर्थसामान्यं सर्वशब्दानां वाच्यमिति केचिदाहुः। एतच्चार्थसामान्यं गवादिपदेष्वप्यपूर्वदेवतास्वर्गपदार्थैः सममेवापरामृष्टाकारविशेषामाहुः। अपूर्वदेवतादिपदेषु हि नाकारविशेषस्य प्रथनम्।

यत्तु गवादिपदेष्वाकारविशेषप्रथनम्, तत् स्मृत्युपस्थापितस्याकारविशेषस्य 'निर्विशेषं न सामान्यम् इति' न्यायेन नान्तरीयकतयेति बोद्धव्यम्। यद्याकारविशेषः पदार्थः स्यात् तदाऽपूर्वशब्दाद् देवताशब्दात् स्वर्गशब्दादश्वगवादिशब्दवदाकारविशेषप्रथनं स्यात्। यतश्च तेभ्यो नास्त्याकारादिप्रथनमतोऽर्थसामान्यमेव सर्वैः शब्दैः प्रत्याय्यत इति युक्तम्। एवञ्च गवादिपदेष्वप्यर्थसामान्यमेव वाच्यम्; आकारविशेषस्तु—'अयं गौः' इत्याप्तोपदेशेन सङ्केतग्रहेऽनुभूतस्य स्मृत्या नान्तरीयकतया प्रथते, विशेषाविनाभावित्वात् सामान्यस्य, अपूर्वादिपदार्थानां तु चोदनामात्रगम्यत्वेनाऽऽकारादिविशेषवत्तया प्रागननुभूतत्वेन न तथाऽपूर्वादिपदेभ्यः प्रथममिति विशेषः।

अत्रास्य तत्त्वसंग्रहपञ्जिकागता व्याख्या संक्षिप्य लिख्यते—"इतिशब्दो भिन्नक्रमः। अस्त्यर्थ इत्यस्यानन्तरं संबध्यते। अस्त्यर्थ इति यदेतत्प्रतीयते, तत्सर्वशब्दानां प्रत्याय्यस्याभिधेयस्य लक्षणम्। तेन गवादिष्वर्थेषु विषयभूतेषु यद्गवादिशब्दप्रत्याय्यं तदपूर्वदेवतास्वर्गैस्तुल्यमित्याहुः। यथैव ह्यपूर्वादिशब्दा नाकारविशेषं बुद्धिषु संनिवेशयन्ति, तथा दृष्टार्थेष्वपि गवादिशब्देषु तुल्यम्। यस्तु गवादिशब्देष्वाकारविशेषपरिग्रहः केषाञ्चिदुपजायते, स तेषां सिद्धान्तबलादिति। अत्र गवादिशब्देषु केषाञ्चिदाकारविशेषपरिग्रहः तेषां सिद्धान्तबलादित्युक्तिर्न युज्यते, पामराणामपि गवादिपदार्थविशेषप्रत्ययदर्शनात्। तस्मान्मदुक्तरीत्यैवाकारविशेषपरिग्रहस्तत्रेति बोध्यमिति ॥११६॥

अथ गवादिशब्देभ्य आकारादिप्रथनं दृष्टं ततश्च तद्वक्तुं शक्यं यद्विशिष्ट-पदार्थप्रत्ययो युक्त इतीत्याशङ्क्याह—

**प्रयोगदर्शनाभ्यासादाकारावग्रहस्तु यः ।**
**न स शब्दस्य विषयः स हि यत्नान्तराश्रयः ॥१२०॥**

सास्नादिमत्स्वेव यदा गोशब्दप्रयोगं पश्यति तद्दर्शनाभ्यासाच्च तत्राकार-परिग्रहो यः स शब्दस्य प्रत्ययो न भवति । कस्मादित्याह—स हीत्यादि । तस्मात् प्रयोगाभ्यासेन [ प्रयोगदर्शनाभ्यासेन ] यत्नान्तरेण शब्दावगम्यातिरिक्तेन स प्रथते ततश्च शब्दव्यापारोऽसौ न भवतीति शब्दस्यार्थमात्रमेवापरामृष्टाकारविशेषं वाच्यं युक्तमित्येकः पक्षः ॥१२०॥

इदानीं कश्चिच्छब्दवाच्यः कश्चित्तत्राकारोऽनुनिष्पादीति पक्षान्तरमाह—

**केचिद् भेदाः प्रकाश्यन्ते शब्दैस्तदभिधायिभिः ।**
**अनुनिष्पादिनः कांश्चिच्छब्दार्थं इति मन्वते ॥१२१॥**

---

ननु गवादिशब्देभ्य आकारादिप्रथनं दृष्टम्, ततश्चैतद्वक्तुं शक्यं यत् शब्देभ्यो विशिष्टपदार्थप्रत्ययो युक्त इति इत्याशङ्क्याह— प्रयोगदर्शनेति ।

अस्यार्थः—यस्तु प्रयोगदर्शनाभ्यासात् तत्तदाकारवत्स्वेवार्थविशेषेषु तत्तच्छब्दाना यः प्रयोगस्तस्य योऽभ्यासः पौनःपुन्यम्, तस्मात् । आकारावग्रहः = सास्नाद्याकारपरिग्रहः, गवादिशब्दात् सास्नादिमतोऽर्थस्य प्रतीतिः, स गवादिशब्दस्य विषयो वाच्यो न भवति । हि यतः, स आकारवग्रहो यत्नान्तराश्रयः = शब्दादन्यो यत्नो यत्नान्तरम्, प्रयोगदर्शनाभ्यास-रूपम्, तदाश्रयः = तन्निमित्तक इति ।

अयं भावः —यदा गोशब्दप्रयोग सास्नादिमत्स्वेव भूयो भूयः पश्यति तद्दर्शना-भ्यासाच्च यस्तत्राकारपरिग्रहः स शब्दस्य प्रत्ययो न भवति, किन्तु तत्र स आकारविशेषः प्रयोगदर्शनाभ्यासरूपेण यत्नान्तरेण निमित्तभूतेन शब्दावगम्यातिरिक्तेन रूपेण प्रथते । ततश्च प्रयोगदर्शनाभ्यासरूपोऽसावाकारविशेषावग्रहहेतुर्यतः शब्दव्यापारो न भवत्यतः शब्दस्यार्थ-सामान्यमेव जात्यादिरूपमपरामृष्टाकारविशेष वाच्यं युक्तमित्येकः पक्ष इति ॥१२०॥

अथेदानी कश्चिच्छब्दवाच्योऽर्थो जात्यादिरूप, कश्चित्तत्राकारोऽनुनिष्पादी, जात्यादिरूपस्यार्थसामान्यस्य प्रत्ययानन्तरं प्रतीयमानः जात्यादिरूपस्यार्थस्याभिव्यक्तौ साहचर्येण प्रयोजकः, सोऽपि शब्दान्वयव्यतिरेकानुविधानेन प्रतीयमानः शब्दवाच्य एवेति पक्षान्तरमाह—**केचिद् भेदा इति ।**

केचिद्भेदा जात्यादयः शब्दवाच्याः, केचित्तत्रार्थप्रयोजका अनुनिष्पादिन एव। तथा तांश्च शब्दार्थ इत्यपरे मन्यन्ते ॥१२१॥

एतदेव प्रत्याख्यातुमाह—

**जातेः प्रत्यायके शब्दे या व्यक्तिरनुषङ्गिणी।**
**न तद् व्यक्तिगतान् भेदान् जातिशब्दोऽवलम्बते ॥१२२॥**

जातिशब्दा जातिमात्रं प्रत्याययन्ति। व्यक्तिस्तु तत्रानुषङ्गिणी। निरधिकरणाया जातेरसम्भवादिति कृत्वा। तद्व्यक्तिगतानाकारविशेषान् जातिपदार्थपक्षे जातिशब्दो नावलम्बते ॥१२२॥

अस्यार्थः—केचिद् भेदा जात्यादयः सामान्यरूपाः, तदभिधायिभिः—आकृत्यधिकरणन्यायेन जात्याद्यभिधायिभिः शब्दैः प्रकाश्यन्ते, शब्दवाच्याः। कांश्चित्त्वनुनिष्पादिनो जात्यादिरूपार्थसामान्यप्रत्ययानन्तरं प्रतीयमानान् जात्यादिरूपस्यार्थसामान्यस्याभिव्यक्तौ साहचर्येण प्रयोजकान् आकारविशेषान् अप्यपरे तत्प्रत्ययस्य शब्दान्वयव्यतिरेकानुविधानं मत्वा शब्दार्थ इति मन्वते = मन्यन्त इति। अत्र 'शब्दार्थ इति मन्यत' इति चतुर्थपादे मन्यत इति पाठो न युक्तः, 'इत्यपरे मन्यन्ते' इति पुण्यराजकृतैतद्व्याख्यानविरोधात्। तस्मादत्र 'मन्वते' इति पाठ एव युक्त इति। अत्रापरे मन्वते, वयं तु न मन्यामहे इत्येवमत्रारुचिः सूच्यते।

तथा हि—अत्र शब्दैर्जात्यादिरूपस्यार्थसामान्यस्यैव भानम्, लाघवात्, प्रथमोपस्थितत्वाद्, अव्यभिचारित्वाच्च तत्रैव शब्दानां सङ्केतस्वीकारात्। शब्दाद् जात्यादिप्रत्यये जातेऽनुनिष्पादिन्याकारविशेषप्रतीतिस्तु जात्यादिरूपेणार्थसामान्येन सहाकारविशेषस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धमूलिका स्मृतिरेव। शब्दान्वयव्यतिरेकानुविधानं त्वनन्यथासिद्धं जात्यादिप्रत्यय एवाव्यवहिते प्रागभाविनि, आकारविशेषप्रत्यये तु व्यवहिते पश्चाद्भाविनि तदन्यथासिद्धम् जात्यादिप्रत्ययेन स्मृतस्य व्यङ्ग्यव्यञ्जकभावसंबन्धस्यैव तज्जनकत्वसम्भवादिति ॥१२१॥

एतदेव पक्षान्तरं प्रत्याख्यातुमाह—जातेः प्रत्यायक इति।

अत्र जातेरित्यस्य प्रत्यायक इत्यनुषङ्गिणीति चोभयत्रापि तन्त्रेण आवृत्त्या वा संबन्धः। अस्यार्थः—जातेः प्रत्यायके शब्दे उच्चारिते सति तत्र या जातेरनुषङ्गिणी जातेरनुगतसंबन्धवती, जात्या नियमेन सबद्धेति यावत्। या व्यक्तिः प्रतीयत इति शेषः। तद्व्यक्तिगतान् भेदान् आकारविशेषान् जातिशब्दः = जातिवाचकः शब्दः जातिवाचकत्वादेव नावलम्बते वाच्यतया नाश्रयतीत्यर्थ इति।

अयं भावः—जातिशब्दा जातिमात्रं प्रत्याययन्ति। तत्र व्यक्तिस्तु जातेः शब्दात्प्रतीयमानाया अनुषङ्गिणी = नियमेन सबद्धा इति निरधिकरणाया जातेरसंभवादिति कृत्वा नान्तरीयकतया प्रतीयते। अतस्तद्व्यक्तिगतान् आकारविशेषान् जातिः पदार्थ इति पक्षे जातिवाचकः शब्दो वाच्यतया नाश्रयतीति ॥१२२॥

एतदेव व्यक्तीकर्तुमाह—

**घटादीनां न चाकारान् प्रत्याययति वाचकः ।**
**वस्तुमात्रनिवेशित्वात् तद्गतिर्नान्तरीयकी ॥१२३॥**

घटादीनां प्रसिद्धानामाकारान् वाचकः शब्दो घटादिर्न प्रत्याययति, पृथुबुध्नोदराकारमात्रनिवेशित्वात् । नहि सकलविशेषसहितमर्थं शब्दः प्रत्याययितुमलमिति तत्राकारविशेषावगतिर्नान्तरीयक्येवानुनिष्पादिन्येव बोद्धव्या ॥१२३॥

नान्तरीयकत्वमेव प्रदर्शयितुमाह—

**क्रिया विना प्रयोगेण न दृष्टा शब्दचोदिता ।**
**प्रयोगस्त्वनुनिष्पादी शब्दार्थ इति गम्यते ॥१२४॥**

यजेतेति शब्दचोदिता क्रिया कर्तृकर्मसाधनसामग्रीं विना न दृश्यते । ततश्चासौ साधनयोगो यथा तत्रानुनिष्पादी तथा शब्दार्थोऽवगन्तव्य इत्युपसंहृतम् ॥१२४॥

अथ सर्व एवाकारा गुणप्रधानभावेन पदस्यार्थ इति तृतीयं पक्षं दर्शयितुमाह—

---

एतदेव व्यक्तीकर्तुमाह—**घटादीनामिति** ।

अस्यार्थः—घटादीनां पृथुबुध्नोदराकारादिरूपसामान्यवत्तया प्रसिद्धानाम्, आकारान् = आकारविशेषान्, घटादीनां वाचकः शब्दः, न च प्रत्याययति बोधयति । घटादिवाचकशब्दस्य वस्तुमात्रनिवेशित्वात् पृथुबुध्नोदराकाररूपसामान्यमात्रे सङ्केतितत्वात्, नहि सकलविशेषसहितमर्थं शब्दः प्रत्याययितुमलम्, तत्रासङ्केतितत्वात् । अतो घटादिवाचकशब्देषु प्रयुक्तेष्वाकारविशेषावगतिर्नान्तरीयका प्रागुक्तरीत्याऽनुनिष्पादिन्येवेति बोध्यमिति ॥ १२३ ॥

नान्तरीयकत्वमेवोपपादयितुमाह—**क्रिया विनेति** ।

अस्यार्थः—यथा यजेतेतिशब्दचोदिता यजेतेतिशब्दविहिता यागक्रिया, प्रयोगेण विना कर्तृकर्मादिसाधनसामग्रीवाचकशब्दप्रयोगेण विना, यद्वा कर्तृकर्मादिसाधनसामग्र्याः क्रियया सह प्रकृष्टो योगः सम्बन्धस्तेन विना, तत्प्रतीतिं विना, न दृष्टा, इत्यतस्तत्र प्रयोगस्तु—क्रियायाः साधनयोगस्त्वनुनिष्पादी क्रियाप्रतीतिपरिसमाप्तिफलकः क्रियाप्रतीतिपश्चाद्भाविप्रतीतिगोचरः तथाऽऽकारविशेषरूपोऽर्थोऽपि शब्दात् प्रतीयमानोऽनुनिष्पाद्येव शब्दार्थ इति गम्यते = ज्ञायत इति । आकारविशेषोऽनुनिष्पादी शब्दार्थ इति द्वितीयपक्षस्योपसंहारः । अत्र 'मन्यते' इति पाठस्तु न युक्तः, 'तथा शब्दार्थोऽवगन्तव्यः' इति पुण्यराजटीकाविरोधादिति ॥ १२४ ॥

अथ सर्वे एवाकाराः सामान्यरूपा विशेषरूपाश्च, यद्वा साध्यरूपाः साधनरूपाश्च । गुणप्रधानभावेनावस्थिताः पदस्यार्थः, तत्रार्थसामान्यं गुणत्वेनावस्थितम्, अर्थविशेषस्तु

**नियतास्तु प्रयोगा ये नियतं यच्च साधनम् ।**
**तेषां शब्दाभिधेयत्वमपरैरनुगम्यते ॥१२५॥**

येन केनचिद्विना शब्दस्याभिधेयं न निर्वहति तत्सर्वं साध्यसाधनात्मकं शब्दाभिधेयं वक्तुं युक्तम् । किञ्चित् प्रत्याय्यते, अन्यत्तत्र नान्तरीयकतयाऽवगम्यत इत्यपि न शोभनम्, किन्तु सर्वाकारमेवाभिधेयं गुणप्रधानभावेन तस्मात प्रतीतमित्ययं पक्षः शोभनः ॥ १२५ ॥

समुदाय एव तुल्यकक्षतया शब्दस्यार्थ इति चतुर्थपक्षं दर्शयितुमाह—

**समुदायोऽभिधेयो वाऽप्यविकल्पसमुच्चयः ।**

ननु यद्याकारसमुदायं समुच्चितमेव प्रत्याययति, तर्हि बहुवचनमेव तत्र स्यात् । अथ विकल्पितं प्रत्याययति, तदा वचनविकल्पः स्यादित्याशङ्क्याह—अविकल्पसमुच्चय इति । अविद्यमानौ विकल्पसमुच्चयौ यस्यासौ तथाभूतस्तस्मात्

---

प्राधान्येनेति साध्यरूपोऽर्थः प्राधान्येनावस्थितः, साधनरूपस्तु गुणत्वेनेति । इमं तृतीयं पक्षं दर्शयितुमाह—**नियतास्त्विति** ।

अस्यार्थः—ये तु नियताः प्रयोगाः—यजेत, पिधेहीत्यादयः साध्यवाचकशब्दप्रयोगाः, एषां नियतत्वन्तु साधनवाचकशब्दमात्रप्रयोगेऽपि नियमेन प्रतीयमानत्वात् । तथा हि—सोमेनेत्येतावन्मात्रप्रयोगेऽपि यजेतेति नियमेन प्रतीयते । द्वारमित्यस्य केवलस्य प्रयोगेऽपि पिधेहीति नियमेन गम्यत इति । यच्च नियतं साधनम्—केवलक्रियापदप्रयोगेऽपि नियमेन प्रतीयमानं सोमद्वारादिकं साधनम् तेषामुभयेषामपि शब्दाभिधेयत्वम् = केवलक्रियापदाभिधेयत्वम्, केवलसाधनपदाभिधेयत्वं चापरैरनुगम्यते = आश्रीयत इति ।

अयं भावः—येन केनचिद् विना शब्दस्याभिधेयं न निर्वहति, तत्सर्वं साध्यसाधनात्मकं सामान्यविशेषात्मकं च शब्दाभिधेयमेव वक्तुं युक्तम् । किञ्चित्प्रत्याय्यते, अन्यत्तत्र नान्तरीयकत्वादवगम्यत इति द्वितीयं मतं तु न शोभनम् । किन्तु सर्वाकारमेवाभिधेयम्, यतः सर्वाकारमेव गुणप्रधानभावेन शब्दात् प्रतीयत इत्यतोऽयं तृतीयः पक्ष एव शोभन इति ॥ १२५ ॥

साध्यसाधनात्मकः सामान्यविशेषात्मकश्च समुदाय एव यस्तुल्यकक्ष्यतयाऽवस्थितो न तु गुणप्रधानभावेन स शब्दस्यार्थः, समुदायघटकपदार्थानां गुणप्रधानभावस्तु शब्दबोध एव, न तूपस्थिताविति चतुर्थं पक्षं दर्शयितुमाह—**समुदायोऽभिधेयो वेति** ।

अस्यार्थः—प्रागुक्तः समुदायो वाऽपि शब्दस्याभिधेयस्तुल्यकक्ष्यतया = समप्राधान्येन अवस्थितः । ननु यद्याकारसमुदायं समुच्चितमेव प्रत्याययति, तर्हि बहुवचनमेव तत्र स्यात्, दृश्यते चैकवचनमपि । अथ विकल्पितमेव प्रत्याययति, तदा बहूनामेकवचनानां वाशब्दोत्तराणां प्रयोगरूपो वचनविकल्पः स्यादित्याशङ्क्याह—अविकल्पसमुच्चय इति । अविद्यमानौ

प्रतीयत इति सम्भाव्यते। एतच्चोपमासमुद्देशेऽप्यर्थविचारणावसरे सविस्तरं प्रदर्शयिष्यति।

अथ जातिगुणक्रियात्मकस्यार्थस्यासत्यभूतः संसर्ग एव शब्दार्थ इति पञ्चमं पक्षं दर्शयितुमाह—

**असत्यो वाऽपि संसर्गः शब्दार्थः कैश्चिदिष्यते ॥१२६॥**

घटादिभिः शब्दैर्घटादीनां जात्यादिसंसर्ग उच्यते। स चात्र तद्व्यतिरेकेणानुपलम्भादसत्यभूत एवोच्यते। तस्मात् संसृष्टः पदार्थ एव सत्यभूत इति ॥१२६॥

---

विकल्पसमुच्चयौ यस्यासौ तथाभूतः समुदायस्तस्माच्छब्दात् प्रतीयत इति सम्भाव्यत इति नोक्तदोषः। एतच्चोपमासमुद्देशेऽप्यर्थविचारणावसरे प्रदर्शयिष्यतीति[1]।

अयं श्लोकार्धस्तत्त्वसंग्रहे २८४ तमे पृष्ठे उदाहृतस्तत्र पञ्जिकायां व्याख्यातश्च। सा च व्याख्या विषयवैशद्यकरीति सगृह्यते। तथा हि—'केचिद् ब्राह्मणादिशब्दैस्तपोजातिश्रुतादिसमुदायो विना विकल्पसमुच्चयाभ्यामभिधीयत इत्याहुर्यथा वनादिशब्दैर्धवादय इति। तथा हि—वनमित्युक्ते धवो वा खदिरो वा पलाशो वेति न विकल्पेन प्रतीतिर्भवति। नापि धवश्च खदिरश्च पलाशश्चेति समुच्चयेन। अपि तु सामान्येन प्रतीयन्ते धवादयः। तथा ब्राह्मण इत्युक्ते तपो वा जातिर्वा श्रुतं वा तपश्च जातिश्च श्रुतञ्चेति न प्रतिपत्तिर्भवति। अपि तु साकल्येन सम्बध्यमानाव्यवच्छिन्नास्तपःप्रभृतयः संहताः प्रतीयन्त इति। तत्र बहुष्वनियतैकसमुदायिभेदावधारणं विकल्पः। एकत्र युगपदभिसंबध्यमानस्य नियतानेकस्य स्वरूपभेदावधारणं समुच्चयः। अविद्यमानौ विकल्पसमुच्चयौ यस्य स तथोक्त" इति।

अथ जातिगुणक्रियात्मकस्यार्थस्य व्यक्तौ असत्यभूतः संसर्ग एव शब्दार्थ इति पञ्चमपक्षं दर्शयितुमाह—**असत्यो वाऽपीति**।

अस्यार्थः—वा = अथवा, संसर्गः = घटादीनां व्यक्तीनां घटत्वजात्यादिसंसर्गः, असत्योऽपि = घटादिपदार्थव्यतिरेकेण घटत्वजात्यादिसंसर्गस्यानुपलम्भादसत्यभूत एव, शब्दार्थः = घटादिशब्दार्थः, कैश्चिदिष्यत इति।

अयं भावः—घटादीनां घटत्वजात्यादिसंसर्गो घटादिशब्दैरुच्यत इति केचिदिच्छन्ति। घटादिपदार्थव्यतिरेकेण च घटत्वजात्यादिसंसर्गस्य प्रमाणेनानुपलम्भात्, स चासत्यभूत एवोच्यते। जातिर्हि अपोहातिरिक्ता वास्तवी बौद्धैर्न मन्यते, अद्वैतिभिरपि जातिर्नाभ्युपेयते। जातिगुणक्रियासमूह एव च द्रव्यमिति साङ्ख्याः। एवञ्च घटादिव्यक्तौ जात्यादिसंसर्गोऽ-

---

1. समुद्देशोऽयं नोपलभ्यते। वृत्तिसमुद्देशे उपमाविचारे इति वार्थः।

अथ सत्यमेवासत्योपाधिविचित्रितं शब्दवाच्यमिति षष्ठं पक्षमाह—

**असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम् ।**

शब्दस्य वा स्वरूपमेवाभिधेयमिति सप्तमं पक्षं दर्शयितुमाह—

**शब्दो वाप्यभिजल्पत्वमागतो याति वाच्यताम् ॥१२७॥**

अभिजल्पत्वमध्यासरूपत्वमागतः शब्द एव स्वरूपलक्षणः शब्दस्य वाच्यः ॥१२७॥

---

सत्यभूत एवोच्यते घटादिशब्दैः। तस्मात्तस्य संसर्गस्याश्रयीभूतो घटादिपदार्थः स्वलक्षण एव सत्यभूत इति तेषां हृदयमिति।

क्वचित्तु 'असत्योपाधिसंसर्गः' इति पाठः समुपलभ्यते। तस्यार्थः—घटादिपदार्थव्यतिरेकेण जातिगुणक्रियारूपस्यार्थस्य प्रमाणतोऽनुपलम्भाद् असत्यास्तेषामुपाधीनां संसर्गस्तथाभूत एव कैश्चिच्छब्दार्थ इष्यत इति। किन्तु चिरन्तने तत्त्वसंग्रहनाम्नि ग्रन्थे 'असत्यो वाऽपि संसर्गः' इत्येव पाठः समुपलभ्यते; उपपन्नार्थश्चेति स एवाभ्यर्हित इति बोध्यम्।

इदञ्च तत्त्वसंग्रहे २८४ पृष्ठे उदाहृतं व्याख्यातञ्च यथा—"अन्ये तु द्रव्यत्वादिभिरनिर्धारितरूपैर्यः सम्बन्धो द्रव्यादीनां स शब्दार्थः, स च संबन्धिनां शब्दार्थत्वेनासत्यत्वादसत्य इत्युच्यते। यद्वा तपःश्रुतादीनां मेचकवर्णवदैक्येन भावनादेषामेव परस्परमसत्यः संसर्गः। तथा ह्येते प्रत्येकं समुदिता वा न स्वेन रूपेणोपलभ्यन्ते, किन्त्वलातचक्रवदेषां समूहः स्वरूपमुत्क्रम्यावभासत" इति ॥१२६॥

अथ सत्यो यो व्यक्तिरूपः पदार्थः स एवासत्यैर्जात्यादिभिरुपाधिभिः=व्यावर्तकधर्मैः विचित्रैः स्वसंसर्गेण विचित्रीकृतः=असत्योपाधिविशिष्टं द्रव्यम् शब्दवाच्य इति षष्ठं पक्षमाह—असत्योपाधीति।

अस्यार्थः—वा=अथवा, यत्सत्यं द्रव्यम्, असत्योपाधि=असत्यं जात्यादिकमुपाधिर्यस्य तत्तथा, तत्=शब्दनिबन्धनम्=शब्दो निबन्धनं निमित्तम्=ज्ञापकम्=वाचकं यस्येति शब्दनिबन्धनम्, शब्दवाच्यमित्यर्थः।

अथवा शब्दस्य स्वरूपमेवाभिधेयमिति सप्तमं पक्षं दर्शयितुमाह—**शब्दो वाऽपीति।**

अस्यार्थः—वा=अथवा, शब्दोऽपि—शब्दस्वरूपमेव, अभिजल्पत्वम्, अभिजल्प्यत इत्यभिजल्पः, कर्मणि घञ्। अभिजल्पविषयत्वमागतः। अभिजल्पश्च शब्दार्थयोरितरेतराध्यासरूप इति समनन्तरमेव वक्ष्यते। वाच्यताम्=शब्दाभिधेयता यातीति। शब्दार्थयोः परस्पराध्यासरूपाभिजल्पविषयीभूतं शब्दस्वरूपमेवाकृत्यधिकरणन्यायेन प्रवृत्तिनिमित्ततया शब्दस्य वाच्यमिति भावः।

अभिजल्पस्वरूपमाह—

**सोऽयमित्यभिसम्बन्धाद् रूपमेकीकृतं यदा ।**
**शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥१२८॥**

सोऽयमित्यभिसम्बन्धोऽध्यासाख्य उच्यते । तेन पदार्थस्वरूपमाच्छादित-मेकीकृतमिव प्रत्याय्यते । तदाऽभिजल्पः शब्द उच्यते । अध्यासवशाच्छब्दार्थ-योरेकात्मत्वेऽप्यर्थांशस्यैव प्राधान्यमुपयोगवशात् ॥१२८॥

क्वचित्तु विषयभेदेन द्वयोरपि दृश्यत इति प्रसङ्गादभिधामाह—

**तयोरपृथगर्थत्वे रूढेरव्यभिचारिणि ।**
**किञ्चिदेव क्वचिद् रूपं प्राधान्येनावतिष्ठते ॥१२९॥**

तयोः शब्दार्थयोरध्यासवशाद् रूढेर्नियमादेवाऽव्यभिचारिण्यपृथगर्थत्वे एक-

---

अयं सपूर्णः श्लोकस्तत्त्वसंग्रहे २८४ तमे पृष्ठे उदाहृतो व्याख्यातश्च यथा—"अन्ये त्वाहुः—यदसत्योपाधिसत्यं स शब्दार्थ इति । तत्र शब्दार्थत्वेनासत्या उपाधयो विशेषा वलयाङ्गुलीयकादयो यस्य सत्यस्य सर्वभेदानुयायिनः सुवर्णादेः सामान्यात्मनस्तत्सत्य-समत्योपाधि । शब्दनिबन्धनमिति । शब्दप्रवृत्तिनिमित्तम् = शब्दाभिधेयमित्यर्थः । अन्ये ब्रुवते—शब्द एवाभिजल्पत्वमागतः शब्दार्थ" इति ॥१२७॥

अभिजल्पस्वरूपमाह—**सोऽयमितीति ।**

अस्यार्थः—यस्य शब्दस्य रूपमर्थेन सह सोऽयमित्यभिसंबन्धात् परस्परं शब्दार्थ-योस्तादात्म्याध्यासमूलकात्, यदा एकीकृतम् = तादात्म्येन ज्ञातम्, तं शब्दं, सोऽयमित्य-भिजल्पविषयत्वादभिजल्पं प्रचक्षत इति ।

अयं भावः—सोऽयमित्यभिसंबन्धोऽध्यासाख्योऽभिजल्प उच्यते । यदा च पदार्थ-स्वरूपं शब्दस्वरूपेणाच्छादितमिव तेनाध्यासेन तादात्म्येन प्रत्याय्यते, तदाऽभिजल्प-विषयत्वाच्छब्दोऽप्यभिजल्प उच्यते ।

इयाँस्तु विशेषः—अध्यासेऽभिजल्पशब्दस्य प्रयोगो भावघञन्तस्य, तद्विषये शब्दे तु प्रयोगः कर्मघञन्तस्येति । किन्त्वध्यासवशाच्छब्दार्थयोरेकात्मत्वेऽपि व्यवहारेऽर्थांशस्यैव प्राधान्यमुपयोगवशादित्यवधेयमिति ॥१२८॥

क्वचित्तु विषयभेदेन = लोकशास्त्ररूपविषयभेदेन द्वयोरपि शब्दस्यार्थस्य च शब्द-वाच्यत्वं दृश्यत इति प्रसङ्गादभिधातुमाह—**तयोरिति ।**

अस्यार्थः—तयोः = शब्दार्थयोः, रूढेः = सोऽयमित्यध्यासरूपप्रसिद्धिबलात्, अव्यभिचारिणि = नियते, अपृथगर्थत्वे = एकरूपत्वे, क्वचित् = लोके शास्त्रे वा, किञ्चिदेव

रूपत्वे सति किञ्चिदेवरूपं योगवशात् कचिदेव लोके शास्त्रे वा प्राधान्येनोद्रिक्तयाऽवतिष्ठते ॥१२९॥

तत्र लोकेऽर्थांशस्यैव प्राधान्यमित्यपि दर्शयितुमाह--

**लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्तते ।**

अर्थरूपतां प्रतिपन्नोऽर्थेन सहैकत्वमिव प्राप्तः शब्दः प्रवर्तते । अयं गौरित्यादि । तत्रार्थ एव बाह्यतया प्रधानमवसीयते ।

शास्त्रे तु शब्दस्योभयरूपतापि विभागेन परिदृश्यत इत्याह—

**शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥१३०॥**

शास्त्रे हि स्वरूपप्रधानो निर्देशः क्वचित् क्वचिच्चार्थप्रधानोऽपीत्युभयरूपता शब्दस्य दृश्यते ॥१३०॥

रूपम् = अर्थात्मकं शब्दात्मकं वा, योग्यतावशात् प्राधान्येनावतिष्ठते = व्यवस्थितं भवति । अत्र क्वचित् 'अपृथगात्मता' इति पाठस्तस्याप्ययमेवार्थः । 'क्वचिद्रूपम्' इत्यस्य स्थाने 'क्वचित् द्रव्यम्' इति पाठस्तु न युक्तः शब्दांशस्य सर्वस्य द्रव्यत्वासंभवात् । 'रूढिरव्यभिचारिणी' इति प्रथमान्तपाठे तु पूर्वार्धे यद्यपीति उत्तरार्धे तु तथापीति पदमध्याहृत्य व्याख्येयम् । तथा हि—यद्यपि तयोः शब्दार्थयोरपृथगर्थत्वे = एकरूपत्वे, अव्यभिचारिणी = नियता, रूढिः = सोऽयमित्यभ्यासरूपा प्रसिद्धिः, ततश्च शब्दार्थयोरुभयोरपि सर्वत्र प्राधान्ये प्रतीतिः समुचिता । तथापि योग्यतावशात् क्वचित् किञ्चिदेव रूपं प्राधान्येनावतिष्ठत इति पुण्यराजेन त्वयं श्लोकः व्याख्यातः—तत्र 'रूढिरित्यस्य नियमाद्' इति व्याख्यानं न युक्तम् । रूढिशब्दस्य प्रसिद्ध्यर्थे भूरिप्रयोगदर्शनात्, नियमेऽदर्शनाच्च । किञ्च, योगवशादित्यस्यापि स्थाने योग्यतावशादिति वाच्यम्, तथैव वा पाठः स्यादिति मन्ये ॥१२९॥

तत्र लोकेऽर्थांशस्यैव प्राधान्यमित्यपि दर्शयितुमाह-- **लोकेऽर्थरूपतामिति** ।

अस्यार्थः—लोके शब्दोऽर्थरूपतां प्रतिपन्नस्तादात्म्याभ्यासवशादर्थेन सहैकरूपत्वमिव प्राप्तो व्यवहारेऽयं गौरित्यादिरूपेण प्रवर्तते = प्रतीयमानो वर्तत इति । तत्रार्थ एव बाह्यतया व्यवहारे प्रधानं निश्चीयत इति भावः ।

व्याकरणशास्त्रे तु शब्दस्यार्थनिरूपितं प्राधान्यमप्राधान्यं चेत्युभयरूपताऽपि विषयभेदेन परिदृश्यत इत्याह—शास्त्र इति ।

अस्यार्थः - शास्त्रे तु = व्याकरणशास्त्रे तु, शब्दस्योभयरूपत्वम् = अर्थनिरूपितं प्राधान्यमप्राधान्यं चेत्युभयरूपत्वम्, विवक्षया = तात्पर्येण योग्यतासहकृतेन प्रविभक्तम् = प्रविभागेन भेदेन स्थितम् । तत्राद्यं यथा अग्नेर्ढक् (४।२।३३) इत्यादौ । द्वितीयम्—तस्यापत्यम् (४।१।९२) इत्यादाविति ।

अयं भावः --शास्त्रे हि स्वरूपप्रधानो निर्देशः प्रायेण, क्वचित्तु अर्थप्रधानोऽपीत्युभयरूपता शब्दस्य दृश्यत इति ॥१३०॥

इदानीमर्थेषु न शक्तिः पृथगस्ति किन्तु शब्दाधीनेति। यथा ते शब्दैर्विधीयन्ते तथैवावगम्यन्त इति स्वमाहात्म्योपस्थापित एव शब्दार्थ इत्यष्टम पक्षं दर्शयितुमाह—

**अशक्तः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता।**
**एकस्यार्थस्य नियता क्रियादिपरिकल्पना॥ १३१॥**

अथवा सर्वशक्तिरर्थो व्यवस्थितः। तस्य प्रतिनियतशक्त्यभिधानं शब्देनेति नवमं पक्षं दर्शयितुमत्रैवोक्तम्—सर्वशक्तेर्वेति। शक्त्याश्रयः कदाचित् क्रियारूपतयाभिधीयते, कदाचिन् सिद्धरूपतयेति नियता क्रियादिरूपता शब्दार्थतया प्रतिपाद्यते॥१३१।

अथवा बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्य इति दशमं पक्षमुपदर्शयितुमाह—

**यो वार्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।**
**स बाह्यवस्त्विति ज्ञातः शब्दार्थः कैश्चिदिष्यते॥१३२।**

---

इदानीमर्थेषु न स्वज्ञानानुकूला शक्तिः पृथगस्ति, किन्तु शब्दाधीनेति स्थिते, यथा ते शब्दैर्विधीयन्ते, क्रियारूपतया वा सिद्धरूपतया वा तथैवावगम्यन्त इति स्वमाहात्म्योपस्थापित एव शब्दशक्त्युपस्थापित एव शब्दार्थ इत्यष्टम पक्षं दर्शयितुमाह - **अशक्तेरिति।**

अथवा सर्वशक्तिरर्थो व्यवस्थितः। यथा घटपदार्थे घटनक्रियाज्ञानानुकूलशक्तिर्घटत्वजातिज्ञानानुकूलशक्तिश्चेति, तथा कलसपदार्थे केन जलेन लसतीति व्युत्पत्त्या जलकरणकशोभाश्रयत्वज्ञानानुकूला शक्तिश्चेति। यद्वा घटपदार्थे स्वगतजातिगुणक्रियाज्ञानानुकूलाः शक्तयः सन्ति, इत्येवं सर्वशक्तित्वमर्थस्य तस्य प्रतिनियतशक्त्यभिधानं तेन तेन शब्देनेति घटशब्देन, जलशब्देन, नीलशब्देनेति नवम पक्षं दर्शयितुमत्रैवोक्तम्—सर्वशक्तेर्वेति।

अस्य श्लोकस्यार्थः—प्रागुक्तरीत्याऽशक्तेः सर्वशक्तेर्वैकस्यार्थस्य नियता क्रियादिपरिकल्पना नियमेन जातिगुणक्रियारूपतया कल्पना, शब्दैरेव जातिवाचकैर्घटनादिक्रियावाचकैश्च घटादिशब्दैरेव, यद्वा घटनीलचलादिशब्दैरेव प्रकल्पिता = कृता। अत्र फलस्य क्रियादिपरिकल्पना इत्यनेन प्रागुपात्तत्वाद् व्यापारमात्रं धात्वर्थ इति।

अयं भावः—विवक्षासहकृतया घटादिशब्दशक्त्याऽर्थः कदाचिद् घटनादिक्रियारूपतयाऽभिधीयते। कदाचिद् घटत्वादिजातिरूपसिद्धरूपतयेति नियता क्रियादिरूपता शब्दार्थतया प्रतिपाद्यत इति॥१३१।

अथवा बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्य इति दशमं पक्षमुपदर्शयितुमाह—**यो वाऽर्थ इति।**

शब्दस्य बुद्ध्युपारूढस्य वैकल्पिकस्य यो बुद्ध्युपारूढो बाह्यवस्तुनिबन्धनः, बाह्यं वस्तु विकल्पजननद्वारेण निबन्धनं यस्य स तथाभूतः। स च वैकल्पिकोऽर्थो भ्रमवशाद् दृश्यविकल्प्यैकाकारेणाबहीरूपोऽपि बहीरूपतयाऽध्यस्तोऽध्यस्तमेव वस्त्ववगच्छामि शब्दादिति शब्दनिमित्तमिति [निमित्त इति] शब्दार्थ इष्यते ॥१३२॥

---

अस्यार्थ —वा = अथवा, योऽर्थः शब्दशक्यतया बुद्धिविषय आभ्यन्तरः सन्नपि, बाह्य वस्तुनिबन्धः = बाह्यं वस्तु घटादिकं निबन्धनं ज्ञानाकारताप्राप्तौ निमित्तं यस्येति तथाभूतः, स बाह्यं व स्त्वाते ज्ञातः, बाह्यवस्तुसमानाकारतया बाह्यवस्तुत्वेद त्म्येनाध्यस्त. शब्दार्थ इति गम्यते = प्रतीयत इति। अत्र 'बाह्यवास्त्विति ज्ञातः' इति क्वचित् पाठः। तत्र नार्थभेदः। 'शब्दार्थ इति गम्यते' इत्यस्य स्थाने तत्त्वसंग्रहे शब्दार्थः कैश्चिदिष्यते इति पाठः। लघुमञ्जूषायां तु ३३७ तमे पृष्ठ 'शब्दार्थ. सम्यगिष्यते' इति पाठः। बाहुल्येन तु शब्दार्थ इति गम्यते' इति पाठः।

अयं भावः—शब्दो हि ज्ञानरूपतया बुद्ध्युपारूढ आभ्यन्तरः, अविकल्पोऽपि वर्णपदाद्यानुपूर्वीमत्त्वेन पदत्वेन वाक्यत्वेन च विकल्प्यमानतया वैकल्पिकः, अतस्तस्यार्थोऽप्येवंभूत एव वाच्यः। सामानाधिकरण्ये हि वाच्यवाचकभावादिसंबन्धसम्भवो न तु वैयधिकरण्य इति। तथा च शब्दस्यार्थोऽपि संस्काररूपेण बुद्ध्युपारूढ इत्याभ्यन्तरो न तु बाह्यः। किन्तु अबाह्यत्वेऽपि बाह्यवस्तुनिबन्धनः, बाह्यं वस्तु घटादिकं संस्काररूपेऽत एवाविकल्पे आभ्यन्तरे घटे घटाद्याकारविकल्पजननद्वारेण निबन्धनं घटाद्याकारवत्ताज्ञापकं निमित्तं यस्येति स तथाभूतः। इत्येवमर्थोऽपि वैकल्पिको वैकल्पज्ञानगोचरत्वात्। विकल्पश्चात्र कल्पनात्मक ज्ञानम्। स चार्थो भ्रमवशाद् घटादिबाह्यदृश्यविकल्पैकाकारेणावहीरूपोऽपि बहीरूपतयाऽध्यस्तः, अध्यस्तमेव वस्त्ववगच्छामि शब्दादित्यनुभवबलाच्छब्दनिमित्तकः = शब्दज्ञाप्य इति शब्दार्थ इष्यत इति।

अत्रास्य श्लोकस्य तत्त्वसंग्रहपञ्जिका गता व्याख्या संक्षिप्य लिख्यते—'बुद्धिविषय इति। बुद्धौ विपरिवर्तमानः, बुद्धिस्थ इति यावत्। बाह्यवस्तुनिबन्धन इति। सदसद्बाह्यं वस्तु निबन्धनमक्षगचिह्नस्थानीयं स्वरूपमुपदर्शयितुं प्रक्रम्यते यस्य स बाह्यवस्तुनिबन्धनः। बाह्यं वस्त्विति ज्ञात इति। बुद्धिरूपत्वेनाविर्भावितो बाह्यतया व्यवसित इत्यर्थः। तथा हि—यावद् बुद्धिरूपमर्थमप्रत्यस्तं बुद्धिरूपमेवेति तत्त्वभावनया गृह्यते, तावत्तस्य शब्दार्थत्वं नावसीयते, तत्र क्रियाविशेषसंबन्धाभावात्। नहि गामानय, दधि खादेत्यादिकाः क्रियास्तादृशि बुद्धिरूपे संभवन्ति। क्रियायोगसभवी चार्थः शब्दैरभिधीयते। अतो बुद्धिरूपतया गृहीतोऽसौ न शब्दार्थः। यदा तु बाह्यवस्तुनि प्रत्यस्तो भवति, तदा तस्मिन् प्रतिपत्ता बाह्यतया विपर्यस्तः क्रियासाधनसामर्थ्यं तस्य मन्यत इति भवति शब्दार्थः" इति ॥१३२॥

इदानीं गवादीनां शब्दानामाकारविशेषवानर्थोऽपूर्वप्रभृतीनां संविन्मात्रमपरामृष्टाकारविशेषमर्थ इत्येकादशं पक्षमाह—

**आकारवन्तः संवेद्या व्यक्तस्मृतिनिबन्धनाः ।**
**ये ते प्रत्यवभासन्त संविन्मात्रं त्वतोऽन्यथा ॥१३३॥**

कैश्चिच्छब्दैः संवेद्याः प्रत्याय्या आकारविशेषवन्तो व्यक्तस्मृतिनिबन्धनाः प्रत्यवभासन्ते । कैश्चिन्निराकाराः संविद्रूपा प्रत्याय्यन्ते । तेषां तथैवार्थो व्यवस्थाप्यते ॥१३३॥

इदानीं प्रतिनियतवासनावशेनैव प्रतिनियताकारोऽर्थस्तत्त्वतस्तु कश्चिदपि नियतो नाभिधीयत इति द्वादशं पक्षमाह—

---

इदानो केषाञ्चित् शब्दानामाकारविशेषवानर्थः, केषाञ्चित्तु तद्रहितः । तद्यथा शब्दानामाकारविशेषवानर्थः, अपूर्वप्रभृतिशब्दाना त्वपरामृष्टाकारविशेषं सविन्मात्रमर्थः ।

तत्रायं विवेकः—बौद्ध एवार्थः शब्दार्थः । तत्र येषां शब्दार्थानां बाह्य आकारोऽस्ति, तेषु बौद्धेषु बुद्धिमात्रस्वरूपेष्वर्थेषु बाह्याकारसमारोपः । येषां तु शब्दार्थानां बाह्य आकारो नास्ति तेषां त्वाकाररहितं संविन्मात्रं स्वरूपमिति । इममेकादशं पक्षमाह—**आकारवन्त इति ।**

अस्यार्थः—ये तु शब्दैः संवेद्या अर्था व्यक्तिस्मृतिनिबन्धनाः—बाह्या याऽऽकारवती व्यक्तिः प्राग् दृष्टा श्रुताऽनुमिता वा तस्या या शब्दे श्रुते शब्दसङ्केतस्मृत्या स्मृतिः सा निबन्धनं शब्दजन्याया बुद्धौ प्रत्यवभासे कारणम्, येषामर्थानां ते व्यक्तिस्मृतिनिबन्धनास्ते आकारवन्तः शब्दात् प्रत्यवभासन्ते = प्रतीयन्ते । ये तु ततोऽन्यथा = ये तु तेभ्योऽर्थेभ्यप्रागुक्तेभ्योऽन्यथा व्यक्तिस्मृतिनिबन्धना न, यथाऽपूर्वादिशब्दानामर्थाः, तेषामाकाराभावेनाकारवत्तया लोकेऽदृष्टचरत्वेन तद्वत्तया स्मृत्यभावेन तेषामाकारविशेषरहितं संविन्मात्रं रूपं शब्दादुपस्थितं शाब्देऽनुभवे प्रत्यवभासते । अतः केषाञ्चिच्छब्दानामाकारविशेषवानर्थः, केषाञ्चित्तु निराकारोऽर्थो व्यवस्थाप्यत इति । अत्र 'व्यक्तस्मृतिनिबन्धनाः' इति पाठः क्वचित् समुपलभ्यते । स तु व्यक्तस्याऽऽकारविशेषवत्तया प्रतीतस्यार्थस्य या स्मृतिस्तन्निबन्धनेत्येवं व्याख्येयः । क्वचित्तु तृतीयपादे 'ये ते' इत्यस्य स्थाने 'ए ते' इति पाठः । चतुर्थपादे ततोऽन्यथा' इत्यस्य स्थाने 'त्वतोऽन्यथा' इति पाठः । अत्रोभयत्रापि नार्थभेदः॥१३३॥

इदानीं येषां पुरुषाणा यस्मिन्नर्थे यादृशी वासना प्रतिनियता यथा कम्बुग्रीवादिमान् घटपदार्थ इति, घटत्वजातिमान् घटपदार्थ इति, पृथुबुध्नोदरादिमान् घटपदार्थ इति, तेषां पुरुषाणां तादृशवासनावशेनैव तादृशः प्रतिनियताकारोऽर्थः शब्दादभिधीयत प्रतीयते च । यथा उपनिषत्सु श्रूयते—द द द इति ब्रह्मणा प्रतिबोधिता देवासुरमानवाः स्वस्ववासनानुसारमेवैकस्मादेव दशब्दाद् यथाक्रमं दमध्वम् दयध्वम्, दद्ध्वमिति प्रतिपन्नाः । देवा

**यथेन्द्रियं सन्निपतद्वैचित्र्येणोपदर्शकम् ।**
**तथैव शब्दादर्थस्य प्रतिपत्तिरनेकधा ॥१३४॥**

अविपरीतमप्यर्थमिन्द्रियं दोषवशान्नानारूपमवभासयति यथा, नियतवासनावासितां शब्दार्थप्रतीतिरिति नास्ति कश्चिन्नियत एकः शब्दस्यार्थः ॥१३४॥

एतदेव व्याख्यातुमाह--

**वक्त्रान्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु ।**
**स्वप्रत्ययानुसारेण शब्दार्थः प्रविभज्यते ॥१३५॥**

तथाहि—सांख्यजैनसौगतप्रभृतयः प्रतिपत्त्रनुसारेणान्यथैव शब्दार्थं प्रतिपद्यन्ते, वक्त्रा तु वैशेषिकादिना स्वप्रत्ययानुसारेण वक्तुं प्रक्रान्तः। तथा च वैशेषि-

---

हि इन्द्रियार्थलोलुपाः, असुराश्च हिंसाप्रियास्तत्पराश्च । मानवास्त्वर्थलुब्धास्तत्संग्रहपरा इति ।

तत्त्वतस्तु--कश्चिदपि नियतोऽर्थो न शब्दादभिधीयत इति द्वादशं पक्षमाह—**यथेन्द्रियमिति** ।

अस्यार्थः---यथा इन्द्रियं विषयं प्रति सन्निपतत् = सङ्गच्छमानम्, विषयस्य वैचित्र्येण विविधाकारवत्तयोपदर्शकम् । तथा हि माघे—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥ (१।३) इति ।

तथैव प्रतिनियतवासनासहकृताच्छब्दादर्थस्यानेकधा प्रतिपत्तिरिति । अय भावः—अविपरीतमप्यर्थमिन्द्रियं दोषवशान्नानारूपमवभासयति । यथा—रज्जुस्वरूपं सर्पधारादण्डमालारूपैर्दोषवशादवभासयति तथैव नियतवासनावासितचेतसां स्वस्ववासनानुसारेणैव शब्दादर्थप्रतीतिरिति नास्ति कश्चिन्नियत एकः शब्दस्यार्थ इति ॥१३४॥

एतदेव व्याख्यातुमाह—**वक्त्राऽन्यथैवेति** ।

अस्यार्थः—वक्त्रा = वैशेषिकेण, अन्यथैव सांख्यसौगतादिमतेभ्योऽन्यप्रकारेणैव, घटशब्दः प्रक्रान्तः = अवयविनं बोधयितुं प्रक्रमे प्रयुक्तः, किन्तु भिन्नेषु प्रतिपत्तृषु सांख्यसौगतादिषु स्वस्वप्रत्ययानुसारेण तदीयज्ञानानुसारेण, शब्दार्थः प्रविभज्यते प्रविभागेण भेदेन प्रतीयते व्यवह्रियते चेति। अत्र क्वचित् 'स्वप्रत्ययानुकारेण' इति पाठो न युक्तोऽर्थासङ्गतेः ।

अयं भावः—वक्त्रा वैशेषिकादिना स्वप्रत्ययानुसारेणावयविनं वक्तुं घटशब्दः

केणावयविन प्रतिपादयितुं घटशब्दः प्रयुक्तः, सांख्यैर्गुणसमाहारमात्रमभिमन्यते, जैनसौगतैः परमाणुसंचयमात्रमिति तथैव तस्मात्तेषामर्थप्रतिपत्तिः ॥१३५॥

एतदेव व्यक्तयितुमाह—

**एकस्मिन्नपि दृश्येऽर्थे दर्शनं भिद्यते पृथक् ।**
**कालान्तरेण चैकोऽपि तं पश्यत्यन्यथा पुनः ॥१३६॥**

वस्तुत एकस्मिन्नेकरूपे दृश्येऽर्थे शास्त्रवासनाभेदाद्दर्शनं ज्ञानमस्मिन् भिद्यते। एकोऽपि च पुरुषः सुगतदर्शनसंस्कृतमतिरन्यथाध्यवस्यत्यर्थं कालान्तरेण वैशेषिकशास्त्रश्रवणादन्यथेति ॥१३६॥

अतः किमित्याह—

**एकस्यापि च शब्दस्य निमित्तैरव्यवस्थितैः ।**
**एकेन बहुभिश्चार्थो बहुधा परिकल्प्यते ॥१३७॥**

एकस्य घटशब्दस्य निमित्तैः शास्त्रसंस्कारैरव्यवस्थितैरेकेन पुरुषेणानियत-

---

प्रक्रान्तः। साख्यजैनसौगतप्रभृतयस्तु स्वस्वप्रत्ययानुसारेणान्यथैव शब्दार्थं प्रतिपद्यन्ते। तथा हि—घटः साख्यैर्गुणसमाहारमात्रमभिमन्यते, जैनसौगतैस्तु परमाणुसञ्चयमात्रमिति तथैव घटशब्दात्तेषामर्थप्रतिपत्तिरिति ॥१३५॥

एतदेव व्यक्तीकर्तुमाह—**एकस्मिन्निति** ।

अस्यार्थः—एकस्मिन्नपि एकरूपेऽपि, दृश्येऽर्थे, शास्त्रीयवासनाभेदाद् दर्शन क्वचिद्भिद्यते। चो हेतौ। यत एकोऽपि पुरुषस्तम् = पूर्वदृष्टमर्थम्, पुनः कालान्तरेण, अन्यथा पूर्वदृष्टरूपादन्यप्रकारेण अन्यशास्त्रवासनावासितः पश्यतीति। अत्र द्वितीयपादे "दर्शन भिद्यते पृथक्" इति पाठो न युक्तः, पृथगित्यस्य दर्शनपदेन भिद्यतेपदेन वा सहान्वयायोग्यत्वात्। तृतीयपादे 'चैकोऽपि' इति पाठ एव युक्तः। 'वैकोऽपि' इति क्वचिदुपलभ्यमानः पाठस्तु न युक्तः, अत्र विकल्पार्थस्यान्वयासम्भवात्।

अथ भावः—वस्तुत एकरूपेऽपि दृश्येऽर्थे शास्त्रवासनाभेदाद् ज्ञान भिद्यते। यत एकोऽपि पुरुषः सुगतदर्शनसंस्कृतमतिरर्थमन्यथाऽध्यवस्यति, स एव कालान्तरेण वैशेषिकशास्त्रश्रवणे तु तमेवार्थमन्यथाऽध्यवस्यतीति ॥१३६॥

अतः किमित्याह—**एकस्यापीति** ।

अस्यार्थः—चो हेतौ। यत एकस्यापि घटशब्दस्य शास्त्रसंस्काररूपैरव्यवस्थितैर्निमित्तैरेकेन पुरुषेण बहुभिश्चापि पुरुषैर्बहुधाऽर्थः परिकल्प्यत इति।

अयं भावः—एकस्य घटशब्दस्यार्थप्रत्यायने निमित्तभूतैः शास्त्रभेदेनाव्यवस्थितैः

शास्त्रवासनावशात् क्रमेण बहुधार्थः प्रकल्प्यते, बहुभिश्च नानाशास्त्रसंस्कृतबुद्धिभिर्युगपत् स्वप्रत्ययानुसारेण बहुधापि परिकल्प्यत इति किमत्र कुर्मः ।।१३७।।

अतः किमित्याह—

**तस्माददृष्टतत्त्वानां सापराधं बहुच्छलम् ।**
**दर्शनं वचनं चापि नित्यमेवानवस्थितम् ।।१३८।।**

यत एवं तस्माददृष्टतत्त्वानां पुरुषाणां दर्शनमनवस्थितम् । अदृष्टतत्त्वतया च सापराधमत एव बहुच्छलं बहुविधबाधकाघ्रातं तथा सति वचनमपि तेषां तथैवेति तत्त्वकथनं सुदूरमवस्थितम् ।।१३८।।

ननु सन्त्येव परावरज्ञा मुनयस्तदनुसारेण सर्वं व्यवस्थापयिष्याम इति तदर्थमाह—

**ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम् ।**
**न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम् ।।१३९।।**

---

शास्त्रसंस्कारैरेकेन पुरुषेणानियतशास्त्रवासनावशात् क्रमेण बहुधाऽर्थः प्रकल्प्यते । बहुभिश्च नानाशास्त्रसंस्कृतबुद्धिभिर्युगपत् स्वप्रत्ययानुसारेण बहुधाऽप्यर्थः परिकल्प्यत इति किमत्र कुर्म इति ।।१३७।।

अतः किमित्याह—**तस्मादिति ।**

अस्यार्थः—तस्मात् = एकस्यापि शब्दस्यानियतशास्त्रवासनावशाद् एकेनापि पुरुषेण क्रमेण बहुभिश्चापि पुरुषैर्युगपद् बहुधाऽर्थपरिकल्पनात्, अदृष्टतत्त्वाना पुंसा दर्शनं नित्यमेवानवस्थितम्, अदृष्टतत्त्वतया च सापराधम्, मिथ्यावस्तुविषयकत्वमेवापराधस्तेन सहितम्, सापराधत्वादेव च बहुच्छलम् = बहुविधबाधकालीढम्, छलशब्दोऽत्र लक्षणया बाधकपरः । तथा वचनं चापि तेषा नित्यमेवानवस्थितं सापराध बहुच्छलं चेति तत्र तत्त्वकथनं सुदूरमवस्थितम् । 'वचन चापि' इत्यत्र चापिशब्दौ द्वावपि समुच्चयद्योतकौ । वाऽपि' इति पाठेऽपि वाशब्दः समुच्चयार्थक एव । 'वा स्याद् विकल्पोपमयोरेवार्थेऽपि समुच्चये" इति विश्वः । समेदे नान्यतरवैयर्थ्यमिति न्यायेनोभयोरपि सार्थक्यमेवेति ।।१३८।।

ननु सन्त्येव परावरज्ञा मुनयस्तदनुसारेण सर्वमपि शब्दार्थं व्यवस्थापयिष्याम इति कथं शब्दार्थस्यानियतत्वमुच्यत इत्याशङ्क्याह—**ऋषीणामिति ।**

अस्यार्थ—यच्च = यत्तु, ऋषीणा किञ्चिद्दर्शन चित्तसमाधानकालिक दर्शनं तत्त्वेऽवस्थितम् = तत्त्वविषयकम् । अत्र किञ्चित्पदेन ऋषीणामपि सर्वं दर्शनं न तत्त्वविषयकमिति सूचितम् । तथा चोक्त महाकविभिः—

सोऽपश्यत् प्रणिधानेन संततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ।। इति । (रघुवंशे १।७४)

परमर्षीणां भगवतां दर्शनं तात्त्विकं भवति, किन्तु परमार्थेन व्यवहारासम्भवः, व्यवहारसाधनानां शब्दानां निबन्धनं न भवतीति न तेन व्यवस्था। व्यवहारवेलायां वा तेऽप्यदृष्टतत्त्वसदृशा इति पुनरव्यवस्थैव। यदुच्यते—"रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ। ज्ञाने प्रत्यभिलापे च सदृशौ बालपण्डतौ॥" ॥१३९॥

ननु पुरुषबुद्धयो विचित्रा भवन्तु, प्रत्यक्षेण खलु वयं यथार्थो दृष्टस्तथैव व्यवहरिष्याम इत्याशङ्क्य प्रत्यक्षस्याव्यवस्थितिमाह—

**तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव।**
**नैव चास्ति तलं व्योम्नि न खद्योतो हुताशनः॥१४०॥**

---

तेन ऋषीणां तत्त्वविषयकेण दर्शनेन न व्यवहारोऽस्ति, परमार्थेन व्यवहारासंभवात्।

तदुक्तं श्रीशङ्कराचार्यभगवत्पादैरध्यासभाष्ये—'सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति। तत् तत्त्वविषयकम् ऋषीणां दर्शनं न शब्दनिबन्धनं शब्दानां निबन्धन प्रवृत्तिनिमित्तं न भवतीति न तेन व्यवस्था। व्यवहारवेलाया वा तेऽप्यदृष्टतत्त्वसदृशा एव व्यवहरन्ति। तदुक्तं ब्रह्मसूत्रभाष्यकृद्भिरध्यासभाष्ये—पश्वादिभिश्चाविशेषादिति। वक्ष्यते च—

रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ।
ज्ञाने प्रत्यभिलापे च सदृशौ बालपण्डितौ॥ इति।
(वा० प० ३ का० सबन्ध० ५३)

अत्र रूपणं = वस्तुनिरूपणम्, पदार्थदर्शनमिति यावत्। व्यपदेशः = व्यवहारः। अत्र रूपणव्यपदेशौ पण्डितस्यापि लौकिकमार्गास्थतौ लिङ्गे। अत्र प्रत्यभिलापशब्देन व्यवहार इति। अत्र तृतीयपादे 'तेन न व्यवहारोऽस्ति' इति विपर्यासपाठेऽपि स एवार्थः॥१३९॥

ननु पुरुषबुद्धयो विचित्रा अनियता भवन्तु तर्कागमप्रभवाः, प्रत्यक्षेण खलु वयं यथा यमर्थं पश्यामस्तथा तं व्यवहरिष्याम इति शब्दार्थौ व्यवस्थास्यत इत्याशङ्क्य प्रत्यक्षस्याप्यव्यवस्थितिमाह—**तलवदिति**।

अत्र तलवदिति मतुप्प्रत्ययो न तु वतिः, अर्थासङ्गतेः। अत्र तलत्वं महेन्द्रनीलमणिमयकटाहकल्पत्वमिति केचित्[१]। वयं तु मन्यामहे तलं भाग इति। तथा च व्यवह्रियते—वृक्षाधस्तल इति। अधोभाग इत्यर्थः।

---

१. तलमिन्द्रनीलकटाहकल्पम् (अध्यासभाष्यस्थरत्नप्रभा); महेन्द्रनीलमणिमयमहाकटाहकल्पम् (भामती)।

अतिनिर्मलं गगनतलमित्यविप्लुतदृशामप्युक्तिर्दृश्यते, तदत्र किं कुर्मः ॥१४०॥

यत्पुनरुपपत्त्या निश्चीयते तद् दृष्टमित्येव तथैवोपगम्यतेत्युपसंहरन्नाह—

**तस्मात् प्रत्यक्षमप्यर्थं विद्वानीक्षेत युक्तितः ।**
**न दर्शनस्य प्रामाण्यात् दृश्यमर्थं प्रकल्पयेत् ॥१४१॥**

यस्य यथैव स्वदर्शनानुसारेण प्रतिभाति तथैव तस्य स शब्दार्थ इत्येवाश्रयणीयमित्यलं निर्वस्तुबहुविकल्पप्रदर्शनेनेत्याह—

**असमाख्येयतत्त्वानामर्थानां लौकिकैर्यथा ।**
**व्यवहारे समाख्यानं तत्प्राज्ञो न विकल्पयेत् ॥१४२॥**

---

अधोभागसमीप इति यावत् । औपश्लेषिकेऽधिकरणे सप्तमी । न चात्राभागस्य गगनस्य भागः संभवतीत्यतिनिर्मलं गगनतलमित्युक्तिर्मृषैव, तथापि दृश्यतेऽविप्लुतदृशामप्येषोक्तिः ।

अत्र द्वितीयपादे 'हव्यवाडिव' इति 'हव्यवाडिति' पाठभेदः । तत्र द्वितीयो युक्तः, खद्योते वह्निबुद्धेर्भ्रमत्वोपपादकत्वात् । तृतीयपादे—नैव चास्ति 'न चैवास्ति' इति पाठभेदः, तयोः साधुत्वेऽविशेषः ।

इदं तु पद्यं निगदव्याख्यातमिति न व्याख्यातम् । अतिनिर्मलं गगनतलमिति, खद्योते अयं हुताशन इति प्रत्यक्षविभ्रमदर्शनेन प्रत्यक्षस्य वस्तुव्यवस्थापकत्वाभावेन प्रत्यक्षेण शब्दार्थव्यवस्थाऽसम्भविनीति भावः । अयं श्लोको महाभारते शान्तिपर्वणि १११ अध्याये षट्षष्ठितमः ॥१४०॥

अतो यत्पुनरुपपत्त्या निश्चीयते तद् दृष्टमित्येवास्ति, तथैव चोपगम्येत, न तूपपत्त्यभावेऽपि यद् यथैव दृष्टं तत्तथैवास्तीत्यभ्युपगन्तव्यम्, विभ्रमस्यापि संभवादित्युपसंहरन्नाह—**तस्मादिति** ।

अस्यार्थः—तस्माद् अतत्त्वविषयकस्यापि प्रत्यक्षस्य संभवाद्, विद्वान् प्रत्यक्षस्य प्रत्यक्षमप्यर्थं युक्तितोऽनुमानत ईक्षेत परीक्षेत । दर्शनस्य प्रत्यक्षस्य, प्रामाण्याद् उपपत्तिं विनापि प्रामाण्यमभ्युपेत्य, दृश्यमर्थम् = दर्शनगोचरीभूतमर्थं यथादृष्टं तथैव न प्रकल्पयेदिति ॥१४१॥

तस्माद् यस्य यथैव स्वदर्शनानुसारेण प्रतिभाति तथैव तस्य स शब्दार्थ इत्येवाश्रयणीयमित्यलं निर्वस्तुबहुविकल्पप्रदर्शनेत्याह—**असमाख्येयतत्त्वानामिति** ।

अस्यार्थः—असमाख्येयतत्त्वानाम् —मायामयत्वेनानिर्वाच्यस्वरूपाणामर्थानाम्, यथा लौकिकैर्व्यवहारे समाख्यानं तत् प्राज्ञो न विकल्पयेत्, न विरुद्धं कल्पयेत्, किन्तु यथा व्यवहारे यद् वस्तु लौकिकैः समाख्यातं तत्तथैव मन्येतेति ।

तस्माद्व्यवहारवेलायामसमाख्येयतत्त्वानामर्थानां यथा लौकिकैरन्वाख्यानं क्रियते तथैव तदनुसारेण शब्दार्थमाश्रित्य व्यवहारं निर्वाहयेन्न पिष्टपेषणमाचरणीयमिति।

एवं मतभेदेन प्रदर्शितस्य द्वादशधा पदार्थस्य पदकाण्डे जात्यादिप्रपञ्चैः प्रविभज्य स्वरूपं निर्णेष्यति। एतदत्र [एषोऽत्र] वैयाकरणस्याखण्ड एव स्फोटलक्षणो वाक्यार्थोऽध्यासः सम्बन्धः पदार्थस्त्वसत्य एवेति निर्णयः ॥१४२॥

अथ प्रतिभास्वरूपमेव पूर्वोपक्रान्तमनुबध्नन्नाह—

**विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।**
**वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥१४३॥**

देवदत्तादिपदेभ्यो विच्छिन्नेभ्यस्तदर्थानां विच्छेदेनैव ग्रहणे प्रत्ययवेलायामेका प्रतिभा पदार्थमतिव्यतिरिक्तैव जायते तां च वाक्यार्थं वैयाकरणा

---

अयं भावः—असमाख्येयतत्त्वानामर्थानां व्यवहारवेलायां यथा लौकिकैरन्वाख्यानं क्रियते, तथैव तदनुसारेण शब्दार्थमाश्रित्य व्यवहारं निर्वाहयेन्न तु अतत्त्वभूतत्वेन वस्तुतो निरस्तस्य युक्त्या पुनर्निरसनरूप पिष्टपेषणमाचरणीयमिति। अत्र चतुर्थपादे क्वचित्पुस्तके 'तद्वत्प्राज्ञो न कल्पयेत्' इति पाठः। अस्मिन् पाठे—अर्थानां यथा व्यवहारे समाख्यानं तद्वत् तथा प्राज्ञो न कल्पयेद् न मन्येत वस्तुतत्त्वमिति। स्वस्ववासनानुसारेण कृतस्य व्यवहारस्यानियतत्त्वेन शब्दार्थस्यानियतत्वादिति।

वस्तुतस्तु तत्तज्जात्याद्युपहितं ब्रह्मतत्त्वमेव तत्तच्छब्दार्थः। तत्र विशेष्यभूतं ब्रह्मतत्त्वं नियतं वस्तुभूतञ्च, न च तेन व्यवहारः। यत्तु विशेषणीभूतं जात्यादिकं येन च व्यवहारस्तत्तु न नियतं नापि वस्तुभूतम्, ब्रह्मण्यारोपितत्वात्। एवमेव च ब्रह्मणः सर्वशब्दवेद्यत्वं सर्ववेदवेद्यत्वञ्च सिध्यति।

तदुक्तं भगवद्गीतासु—'वेदैश्च सर्वैरहमेव वेद्यः' (गीता १५।१५) इति। 'सर्वे वेदा यत्पदमामनन्ती'ति चेति। एवं मतभेदेन प्रदर्शितस्य द्वादशधापदार्थस्य पदकाण्डे जात्यादिप्रपञ्चैः प्रविभज्य स्वरूपं निर्णेष्यति।

अत्र त्वेष निर्णयः—वैयाकरणस्याखण्ड एव स्फोटलक्षणो वाक्यार्थः, अध्यासः सम्बन्धः पदार्थस्त्वसत्य एवेति ॥१४२॥

एवं प्रासङ्गिकं शब्दार्थस्वरूपवर्णनं परिसमाप्य पूर्वोपक्रान्तं प्रतिभास्वरूपमेव वैयाकरणाभिमतं वाक्यार्थमनुबध्नन्नाह—**विच्छेदग्रहण इति।**

अस्यार्थः—इह 'देवदत्त गामभ्याज शुक्लां दण्डेन' इति वाक्ये श्रुतेऽपोद्धृतेभ्यो देवदत्तादिपदेभ्योऽर्थानाम् = देवदत्तादिपदार्थानाम्, विच्छेदग्रहणे = विच्छेदेनैव ग्रहण-

आहुः। कस्तस्या उपाय इत्याह—"पदार्थैरुपपादिताम्" इति। पदार्थैरसत्यैरेवोपाधिभूतैरुपपादितामभिव्यक्तामिति ॥१४३॥

कीदृशीं तामित्याह—

**इदं तदिति सान्येषामनाख्येया कथञ्चन।**
**प्रत्यात्मवृत्तिसिद्धा सा कर्त्रापि न निरूप्यते ॥ १४४ ॥**

सा चोपजायमाना आख्यातुमन्यस्य न शक्यते, केवलं स्वसंवेदनसिद्धैवासौ, प्रतिपत्त्रापि स्वसंवेदनसमये नियतेन रूपेण निरूपयितुमशक्यैव सा ॥ १४४ ॥

किं स्वभावाऽसावित्याह—

**उपश्लेषमिवार्थानां सा करोत्यविचारिता।**
**सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते ॥ १४५ ॥**

---

वेलायाम्, अन्यैव = पदार्थबुद्धिव्यतिरिक्तैव, प्रतिभा = एतन्नाम्नी बुद्धिर्जायते। तां च विच्छिन्नोपस्थितैर्देवदत्तादिपदार्थैरसत्यैरेव प्रतिभाया अभिव्यञ्जकैरुपाधिभिरुपपादितामभिव्यञ्जितां वाक्यार्थं इति वैयाकरणा आहुरिति। अत्र द्वितीयपादे 'अन्यैव' इत्यस्य स्थाने 'अत्रैव' इति पाठोऽयुक्तोऽर्थासङ्गतेः ॥१४३॥

कीदृशी सा प्रतिभेति जिज्ञासायामाह—**इदं तदितीति।**

अस्यार्थः—सा च पदेभ्यो विच्छिन्नेभ्यो विच्छिन्नपदार्थबुध्यनन्तरं पदार्थैरभिव्यञ्जिता वाक्यार्थत्वेन वैयाकरणैरुक्ता प्रतिभोपजायमानाऽप्यन्येषाम् अन्यान् प्रति, कथञ्चन = कथञ्चिदपि, इदं तदित्येवमनाख्येया, आख्यातुमशक्या।

ननु तस्या अन्यान् प्रत्यनाख्येयत्वेऽसत्त्वमेव कुतो नाभ्युपेयत इत्याशङ्क्याह—**प्रत्यात्मवृत्तीति।** सा प्रतिभाऽन्यान् प्रत्यनाख्येयत्वेऽपि प्रत्यात्मवृत्तिः स्वानुभवसिद्धेति नापह्नोतुं शक्यते। किञ्च सा प्रतिभा स्वसंवेदनसमये स्वकर्त्रापि = प्रतिपत्त्राऽपि नियतेन रूपेण न निरूप्यते = निरूपयितुं शक्यते, किमुतान्यैरिति सर्वस्य स्वसंवेदनसिद्धाऽपि साऽन्यान् प्रत्यनाख्येयैवेति दृश्यते। युज्यते चैतत्। तथा हि—द्राक्षामधूकसितशर्करादीनां प्रत्यात्मसिद्धा अपि माधुर्यविशेषा अन्यान् प्रति निरूपयितुं न शक्यन्त इति ॥ १४४ ॥

इदं तदिति विशेषधर्मपुरस्कारेण प्रतिभायाः स्वरूपतोऽनिर्देश्यत्वेऽपि सा फलमुखेनाश्रयमुखेनाऽभिव्यञ्जकमुखेन च निरूपयितुं शक्यत एव। तद्यथा—वह्निनिष्ठा शक्तिरतीन्द्रियाऽनिर्देश्याऽपि फलमुखेनाश्रयमुखेन च निर्दिश्यते। वह्नौ दाहानुकूला शक्तिरिति। अभिव्यञ्जकेन च निरूप्यते। तद्यथा—प्रतिबन्धक-मण्यादिसमवधानेऽपि य उत्तेजकेन मण्यादिनाऽभिव्यज्यते स वह्नेर्धर्मविशेषः शक्तिरिति निदर्शयन्नाह—**उपश्लेषमिवेति।**

अस्यार्थः—सा पूर्वपद्योक्तस्वरूपा प्रतिभा, अविचारिता = इदं तदित्यनिर्धारित-

**असंसृष्टानां पदार्थानामसावुपश्लेषं मेलनं करोति, सर्वरूपेव वाक्ये पदार्थानां वासौ विषयत्वेन वर्तते, तन्निष्ठास्ते साफल्यं भजन्त इति ॥ १४५ ॥**

---

स्वरूपाऽपि वह्निशक्तिर्दाहमिवार्थानामुपश्लेषं संसर्गं करोति = बोधयति, कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमादिति फलमुखेन प्रतिभायाः स्वरूपनिर्देशः ।

किञ्च, सा प्रतिभा सर्वस्मिन् वाक्ये सार्वरूप्यं सर्ववाक्यार्थरूपत्वमापन्नव प्राप्तव स्थिता सती विषयत्वेन पदार्थानामभिव्यङ्ग्यत्वेन पदार्थजन्याभिव्यक्तिविषयत्वेन वर्तते । तदेतदुक्तम् —**पदार्थैरुपपादितामिति** । अनेन चोत्तरार्धेन प्रतिभायाः स्वरूपनिर्देशमाश्रयमुखेन, अभिव्यञ्जकमुखेन च । अत्र वाक्यं प्रतिभाया जनकत्वेनाश्रयः । पदार्थाश्च पदोपस्थापितास्तस्या अभिव्यञ्जका इत्यवधेयम् ।

अयं भावः—असंसृष्टानां पदार्थानां प्रतिभा मेलनं करोतीति कार्यनिर्देशमुखेन प्रतिभाया निर्देशोऽनिरूप्याया अपि । सर्ववाक्यार्थरूपेव चासौ सर्वस्मिन् वाक्य इत्याधारनिर्देशमुखेन तस्या निर्देशः । पदार्थानाञ्चासावभिव्यङ्ग्यत्वेन विषय इत्यभिव्यञ्जकनिर्देशमुखेन तस्या निर्देशः । अभिव्यञ्जकत्वेन प्रतिभानिष्ठा एव पदार्थाः साफल्यं भजन्ते, पदार्थानां प्रतिभानभिव्यञ्जकत्वे हि वाक्यवाक्यार्थावगमयोर्मध्ये पदतदर्थावगमौ वृथैव स्यातामिति । इदञ्च पद्यं संगृहीतं विधिविवेके व्याख्यातञ्च न्यायकणिकायाम् ।

एतत्पद्यार्थं चैवं मनसि कृत्याचार्यमण्डन एवमाह "विच्छिन्नप्रतीतीनामपि च पदार्थानां किं कथमनुसन्धीयेतेति विचारविकल्पाऽप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रतिभासेवोदीयमाना प्रतिभा उपश्लेषं विदधाति, तादर्थ्यादनुपश्लेषे तदभावात् । अत्र वाचस्पतिमिश्रा एवं विवृण्वते—विच्छिन्नप्रतिपत्तीनां तापह्रदतोयादीनां सहसोपश्लेषं विदधाति ।

अयमर्थः—सन्तापतप्ततनवो हि शीतह्रददर्शनमात्रादप्सु मिमङ्क्षवः प्रवर्तन्ते, नान्तरा विचारयन्ति । दृश्यमानह्रदगता आपस्तापमपनेतुं समर्थाः, सति शिशिरभावे तोयत्वाद्, यत्तोयं शिशिरं तत्सर्वं तापापनोदनसमर्थम्, यथा गङ्गातोयम्, वयञ्च तप्तास्तदिह तत्प्रशमनाय निमज्जाम इति । न चैतेषां परस्परोपश्लेषमन्तरेण कर्तव्यता । न चास्यामसत्यां स्वतन्त्रचेतनप्रवृत्तिः । न चोपश्लेषे समुदाचरद्वृत्ति किञ्चित्प्रमाणमस्ति । तस्मादसंविदितरूपा शब्दभावनैव 'इदमित्थमनेन कर्तव्यम्'' इति प्रतिभाहेतुरास्थेयः । न चासौ व्यतिरिक्तविषयेत्याह —सार्वरूप्यमिवापन्नेति । तेषां सार्वरूप्यमापन्नेव, न त्वापन्ना । तेषां तदारोहिणां वस्तुसत्ताया विचारासहत्वात् । तस्मात् प्रतिभैव ताद्रूप्यमापन्ना विषयत्वेन वर्तत इति ॥ १४५ ॥

तां च न किञ्चित्प्राणिमात्रमतिवर्तते, अतिक्रम्य तिष्ठतीत्याह—

**साक्षाच्छब्देन जनितां भावनानुगमेन वा।**
**इतिकर्तव्यतायां तां न कश्चिदतिवर्तते ॥ १४६ ॥**

**सा साक्षाच्छब्देन कदाचिद्व्यवहारकाले जन्यते जन्मान्तरभावनावशेन वा गजवाजिप्रभृतीनामिति तन्मूल एवेतिकर्तव्यतारूपः सर्वस्य व्यवहारः ॥ १४६ ॥**

---

ताञ्च प्रतिभां न किञ्चित् प्राणिमात्रं व्यवहारेऽतिवर्तते। यतः सर्वोऽपि प्राणिमात्रस्येतिकर्तव्यतारूपो व्यवहारः प्रतिभामूलक एव। सा च प्रतिभेदानीन्तनी, प्राक्तनी च। तत्रेदानीन्तनी मनुष्याणां सङ्केतग्रहसहकृतेन शब्देन कदाचिद् व्यवहारकाले जन्यते। बहुशास्त्रश्रवणाभ्यासेन वा साक्षाज्जनिता। प्राक्तनी बालानां तिरश्चाञ्च गजवाजिप्रभृतीनाम्, प्राक्तनभावनासमुपजातप्रतिभावशेनैव ह्यशिक्षिता अपि बालाः स्ववयोऽनुरूपं वयस्यैः सह व्यवहरन्ति, गजवाजिप्रभृतयश्च स्वजात्युचितं चेष्टन्त इति। द्विविधाऽपि सा कवित्वहेतुः कवीनाम्। तदुक्तं काव्यप्रकाशे—

शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ १। ३ ॥ इति।

अत्र शक्तिर्द्विविधा प्रतिभैवेति व्याख्यातं प्रदीपे, एतत्सर्वं मनसि निधायाह—**साक्षादिति।**

अत्र 'साक्षाच्छब्देन जनिता भावनाऽनुगमेन वा। इतिकर्तव्यता या तां न कश्चिदतिवर्तते ॥' इति विधिविवेके पाठः, तट्टीकान्यायकणिकासम्मतश्च। अत्र प्रतिभाया इतिकर्तव्यतारूपस्य व्यवहारस्य हेतुत्वेनेतिकर्तव्यतात्वेन व्यपदेशः, कार्यकारणयोरभेदोपचारात्। न त्वितिकर्तव्यतैव प्रतिभा; तदुक्तं श्रीपुण्यराजेन—तन्मूल एवेतिकर्तव्यतारूपः सर्वस्य व्यवहार इति।

यद्यपि विधिविवेके 'कः पुनरयमर्थः कर्तव्यमिति? न कश्चित्। प्रतिभा' इति मण्डनोक्तेः प्रतिभाया इतिकर्तव्यतायाश्चाभेदोऽवगम्यते; तथापि तत्रैव प्रतिभानेत्रो हि लोक इतिकर्तव्यतासु समीहते, किं पुनरस्या निमित्तम्? शब्दः। तत्र व्युत्पन्नानां साक्षाद् भावनामुखेन चाप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनामिति प्रतिभाया इतिकर्तव्यताहेतुत्वं स्पष्टमेवोक्तमिति सन्तोष्टव्यमिति। अन्यत्र तु—'साक्षाच्छब्देन जनिता भावनाऽनुगमेन वा। इतिकर्तव्यतायां तां न कश्चिदतिवर्तते ॥' इत्येवं पाठः। अत्र—'इतिकर्तव्यतायाम्' इत्यस्य 'व्यवहारे' इत्यर्थः ॥ १४६ ॥

एतदेव स्फुटयति—

**प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति ।**
**समारम्भाः प्रतायन्ते तिरश्चामपि तद्वशात् ॥ १४७ ॥**

सर्वः कश्चित्तामेव भगवतीं स्वप्रतिभां प्रमाणत्वेन पश्यति । तथा चोच्यते—'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति । तिरश्चां च जातमात्राणां तन्मूल एव व्यवहार इति न तदपह्नवेन आत्मा वञ्चनीयः ॥ १४७ ॥

सिद्धैव चेयं सर्वस्य प्रतिभेत्युपपादयितुमाह—

**यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः ।**
**मदादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा ॥ १४८ ॥**

यथा द्रव्यविशेषाणां परिपाकव्यतिरिक्तयत्नान्तरनिरपेक्षा मदादिशक्तयो दृश्यन्ते, तथैवेयं प्रतिनियतसंस्कारजन्या प्रतिभावतां स्फुटमुपलभ्यत एव ॥ १४८ ॥

---

एतदेव स्फुटयति—प्रमाणत्वेनेति ।

अस्यार्थः—सर्वो लोकस्ता प्रतिभा प्रमाणत्वेन समनुगच्छति स्वीकरोति । तथा चोच्यते—'सता हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' (अभिज्ञानशाकुन्तले १।१९) इति । तिरश्चामपि=पशुपक्षिणा जातमात्राणाम्, तद्वशात्=प्रतिभाबलात् सर्वे समारम्भाः=व्यवहाराः, प्रतायन्ते=प्रतता जायन्त इति न नरतिर्यक्प्रसिद्धप्रतिभाऽपलापेनात्मा वञ्चनीय इति ।

अत्र—समनुगच्छतीत्यस्य स्थाने 'समनुपश्यति' इति पाठः, स च पुण्यराजसम्मतः, 'प्रमाणत्वेन पश्यति' इति टीकाया दर्शनात् । 'समारम्भा' इत्यस्य स्थाने 'व्यवहारा' इति क्वचित् पाठः, तत्रार्थेऽविशेषः । 'प्रतायन्ते' इत्यस्य स्थाने 'प्रतीयन्ते' इति पाठेऽर्थभेदेऽपि फलतोऽभेदः ॥ १४७ ॥

सर्वस्य सिद्धैव चेयं प्रतिभा इत्युपपादयितुमाह—यथा द्रव्यविशेषाणामिति ।

यथा द्रव्यविशेषाणा मधूकयवगुडादीनां परिपाकैरयत्नजा.=परिपाकव्यतिरिक्तयत्नान्तरनिरपेक्षा मदादिशक्तयो दृष्टास्तथा तद्वता प्रतिभावता प्रतिप्राणि प्रतिजाति प्रतिनियतप्राक्तनसंस्कारजन्याः प्रतिभा अप्ययत्नजा. स्फुटमुपलभ्यन्त एवेति पदाना योजनयाऽर्थः संपद्यते ॥ १४८ ॥

जन्मान्तराभ्यासहेतुकेयमिति सनिदर्शनमुपपादयितुमाह—

**स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः ।**
**जन्त्वादयः कुलायादिकरणे केन शिक्षिताः ॥१४९॥**

पञ्चमस्वरविरावी मधुमासे पुंस्कोकिल इत्ययत्नजमेतत्सिद्धम् , लूताजन्तूनां कुलायरचना च प्रतिभामाहात्म्यादेव दृश्यते ॥१४९॥

एतदेव स्फुटयितुमाह —

**आहारप्रीत्यपद्वेषप्लवनादिक्रियासु कः ।**
**जात्यान्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥१५०॥**

प्रतिप्राण्याहारादिक्रिया नियताऽनादिप्रतिभावशादेवेति प्रसिद्धम् ॥१५०॥

---

जन्मान्तराभ्याससमुपजातभावनाहेतुकेयं प्रतिभेति सनिदर्शनमुपपादयितुमाह—**स्वर-वृत्तिमिति ।**

अस्यार्थः—मधौ = वसन्ते, पुंस्कोकिलस्य स्वरवृत्तिम् = साधारणस्य स्वरस्य पञ्चमस्वररूपेण परिवृत्तिम् , यद्वा पञ्चमस्वरानुकूलं व्यापारं को विकुरुते = पुंस्कोकिले विकारं समुत्पाद्य कुरुते, न कोऽपीत्ययत्नजमेतत् सिद्धम् । जन्त्वादयः = लूताजन्त्वादयः, कुलायादिकरणे = नीडादिरचनायां केन शिक्षिताः ।

अय भावः—मधुमासे पुँस्कोकिलः स्वभावेनैव पञ्चमस्वरविरावी, न तु तत्र शिक्षा-रूपो यत्नोऽपेक्ष्यते, लूताजन्तूनां कुलायरचना च प्रतिभामाहात्म्यादेव दृश्यत इति । अत्र द्वितीयचरणे 'मधौ पुँस्कोकिलः कथम्' इति पाठो विविधविवके समुपलभ्यते । चतुर्थचरणे च 'केन शिक्षिताः' इत्यस्य स्थाने 'शिक्षिताः कथमिति' पाठस्तत्रैव दृश्यते ॥१४९॥

एतदेव स्फुटयितुमाह—आहारेति ।

मूषको मार्जारस्याहार इति मार्जारः केन शिक्षितः । शुनः स्वामिनि प्रीतिः केन शिक्षिता । मूषकमार्जारयोः, गोव्याघ्रयोः, अहिनकुलयोः, अश्वमहिषयोश्च परस्परमपद्वेषः केन प्रयुक्तः । गोमहिष्यादयो जले प्लवनक्रियायां केन शिक्षिताः । एते चाहारादयस्तिरश्चां जातिप्रसिद्धाः केचन, केचित्त्वन्वयप्रसिद्धा इति । अन्वयोऽत्र कुलम् । पशुत्वतिर्यक्त्वादि-व्याप्याश्वत्वादिरूपा जातिर्वा । यद्वा जातिरत्र सामान्यधर्मः पशुत्वादिरूपः, अन्वयो विशेषधर्मः । तत्राहारप्रीत्यपद्वेषा मृगपक्षिणामन्वयप्रसिद्धाः प्लवनादिक्रियास्तु जातिप्रसिद्धाः । जात्यन्वयप्रसिद्धास्वाहारप्रीत्यपद्वेषप्लवनादिक्रियासु मृगपक्षिणां कः प्रयोक्तेति योजना । अत्र प्रयोक्ता = प्रवर्तकः । प्रतिप्राण्याहारादिक्रिया नियतानादिप्रतिभावशादेव लोके प्रसिद्धेति भावः ॥१५०॥

प्रतिभायाश्च शब्द एव मूलमित्याह—

**भावनानुगतादेतदागमादेव जायते ।**
**आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते ॥१५१॥**

स चागमः कदाचिदासन्नोऽस्मिन्नेव जन्मन्यवगतः कदाचिज्जन्मान्तर इत्यासत्तिविप्रकर्षाभ्यां शब्द एव प्रतिभाहेतुः ॥१५१॥

तस्याश्च निमित्तभेदेन षाड्विध्यं दर्शयितुमाह—

**स्वभावचरणाभ्यासयोगादृष्टोपपादिताम् ।**
**विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः ॥१५२॥**

**केचिदाचार्य्या मन्यन्ते—काचित् स्वाभाविकी प्रतिभा। तद्यथा—परस्याः [प्रकृतेः प्र]थमं सत्तालक्षणमात्मानं महान्तं प्रत्यानुगण्यं सुषुप्तावस्थस्येव प्रबोधानुगुण्यं फलसत्तामात्रं निद्रायाः। चरणनिमित्ता काचित् प्रतिभा। तद्यथा—का[च]रणेनैवावधूतप्रकाशविशेषाणां (वसिष्ठादीनाम्); अभ्यास-**

---

प्रतिभायाश्चासत्तिविप्रकर्षाभ्यां शब्द एव मूलमित्याह—**भावनानुगतादिति।**

अस्यार्थः—इह जन्मनि जन्मान्तरे वा समुपजाता या भावना तत्तत्प्राणिजात्युचित-व्यवहारानुकूला तां कारणत्वेनानुगतात् = अनुसंहतात्, आगमादेव, एतत् = प्रतिभाख्यं ज्ञानम्, जायते। तु = किन्तु, आगमः = शब्दः, आसत्तिविप्रकर्षाभ्याम् = आसत्तिः संनिधिः, अस्मिन् जन्मनि, विप्रकर्षो दूरत्वम्, जन्मान्तरे, ताभ्याम्, विशिष्यते = भिद्यत इति।

अयं भावः—भावनासहकारेण प्रतिभाया हेतुभूत आगमो द्विविधः—आसन्नो विप्रकृष्टश्च। तत्रासन्न इह जन्मनि, विप्रकृष्टो जन्मान्तरे इत्येवमासत्तिविप्रकर्षाभ्यां शब्द एव प्रतिभाहेतुरिति ॥१५१॥

निमित्तभेदेन प्रतिभायाः षाड्विध्यं दर्शयितुमाह—**स्वभावेति।**

अस्यार्थः—स्वभावचरणाभ्यासयोगाद् दृष्टैः पञ्चभिर्हेतुभिरुपपादिताम् = जनिताम्, विशिष्टोपहिताञ्च = विशिष्टैर्व्यासादिभिः सञ्जयादिषूपहितां सन्निधापितां चेत्येव प्रतिभां षड्विधां केचिदाचार्या विदुरिति।

अयं भावः—काचित् स्वभावहेतुका प्रतिभा, यथा कपेः शाखाप्लवनादिषु। यथा वा परस्याः प्रकृतेरव्यक्तरूपायाः प्रथमं सत्तामात्रस्वरूपमात्मानं बुद्धिम् महान्तं = महत्तत्त्वं प्रति, आनुगुण्यम् = स्वाभाविकम्। स्वभावत एव हि परस्याः प्रकृतेर्महदाकारेण परिणामानुगुण्यं सैव प्रतिभा, सुषुप्तावस्थस्येव पुरुषस्य प्रबोधानुगुण्यं प्रतिभारूपम्, निद्राया अपि तमः परिणामरूपायाः परमानन्दरूपफलसत्तामात्रं प्रत्यानुगुण्यं प्रतिभैव। चरणनिमित्ता काचित्

निमित्ता काचित् । तद्यथा—कूपतटाकादीनाम् [ कादिखनकानाम् ] । योगनिमित्ता काचित् । तद्यथा—योगिनामव्यभिचारेण पराभिप्रायज्ञानादिषु । तथा काचिददृष्टनिमित्ता । तद्यथा रक्षःपिशाचादीनां परावेशान्तर्धानादिषु । काचिद्विशिष्टैरुपहिता । तद्यथा—सञ्जयादीनां कृष्णद्वैपायनादिभिः ।

एवं प्रतिभा बहुविधाऽपि सर्वैवागमिकवाक्यनिबन्धना वाक्यप्रतिपाद्या व्याकरणात्ययेऽपि सर्वशक्तिप्रत्यस्तमये प्रत्यस्तमितनिविष्टशब्दशक्तिबीजकारणाऽन्तर्भूता निबद्धबीजा वृत्तिकाले प्रथमं सूक्ष्मेणापि वर्त्मना विवर्तमात्रामनुभूय क्रमेण वर्णवाक्यनियताभिरव्यवस्थाभिः संमूर्च्छन्ती प्राप्तबीजपरिपाकाकारा पुनः पुनर्व्यक्तेन रूपेण प्रत्यवभासते ।।१५२।।

स्वभावेति । स्वभावेन यथा कपिः । चरणादिपूदाहरणान्यूह्यानि । एवमखण्डेऽपि वाक्येऽभ्युपगते पदपदार्थप्रविभागमन्तेरण व्यवहारो न निर्वहतीति पदार्थः सामान्येन मतभेदप्रदर्शनपूर्वकं निर्णीतः ।।१५२।।

---

प्रतिभा। चरणमत्र सदाचारः। शास्त्रविहितं तपःस्वाध्यायादिकं वा। तद्यथा—चरणेनैवावधृतभूतभविष्यद्वर्तमानविषयकप्रकाशविशेषाणां वसिष्ठादीनां प्रतिभा। अभ्यासनिमित्ता काचित् प्रतिभा। तद्यथा—कूपतटाकादिखनकानां कूपतटाकादिखननाभ्यासनिमित्तका प्रतिभा। अभ्यासेनैव हि ते क्षितौ तिरोहिता जलनाडीः परिचिन्वन्ति, अत्र कूपादिखाते जलं भविष्यति, अत्र नेति। काचित् प्रतिभा योगनिमित्ता। तद्यथा—योगिनामव्यभिचचारेण पराभिप्रायज्ञानादिषु। तथा काचिददृष्टनिमित्ता। तद्यथा—रक्षःपिशाचादीनां परकायप्रवेशान्तर्धानादिषु प्रतिभा। काचिद्विशिष्टैः=तपोयोगादिसिद्धिसंपन्नैः उपहिता=तत्कालं सन्निधापिता, तद्यथा—भारतयुद्धावसरे बहुदेशव्यापियुद्धवृत्तसम्यग्दर्शनाय सञ्जयादीनां कृष्णद्वैपायनादिभिरुपहिता प्रतिभा।

एवं प्रतिभा बहुविधाऽपि सर्वैव आगमिकवाक्यनिबन्धना=शास्त्रोक्तसांप्रदायिकवाक्याभिव्यङ्ग्या, व्यवहारे शास्त्रीयसांप्रदायिकवाक्यमूलकलौकिकवाक्यप्रतिपाद्या च प्रलये सर्वव्याकरणात्ययेऽपि सर्वासां भूतभौतिकशक्तीनां महाशक्तौ मायाप्रकृत्यादिपदव्यपदेश्यायां प्रत्यस्तमये प्रत्यस्तमितनिविष्टशब्दशक्तिबीजकारणान्तर्भूता=प्रत्यस्तमितं निलीनं, न तु ध्वस्तम्, अत एव निविष्टं महाशक्तौ स्थितं यच्छब्दशक्तिरूपं बीजकारणमुपादाकारणं तदन्तर्भूता निबद्धबीजा=निबद्धं संबद्धं शब्दशक्तिरूपं बीजं ययेति व्युत्पत्त्या तुल्यवित्तिवेद्यतान्यायेन शब्दरूपबीजेन संबद्धा तत्र निलीय तेन रूपेण स्थितेति यावत्; वृत्तिकाले=शब्दशक्तेः स्वकार्यपदवाक्याद्यनुकूलप्रवृत्तिकाले प्रथमं सूक्ष्मेणापि वर्त्मना=पश्यन्तीमध्यमानादादिरूपेण विवर्तमात्रामनुभूय=विवर्तस्वरूपतामनुभूय क्रमेण वर्णपदवाक्यरूपैर्नियताभिरवस्थाभिः संमूर्च्छन्ती=विस्तारमाप्नुवती प्राप्तबीजपरिपाकाकारा पुनः पुनर्व्यक्तरूपेण प्रत्यवभासते व्यवहारे ।।१५२।।

यथा संयोगिभिर्द्रव्यैर्लक्षितेऽर्थे प्रयुज्यते ।
गोशब्दो न त्वसौ तेषां विशेषाणां प्रकाशकः ॥१५३॥
आकारवर्णावयवैः संसृष्टेषु गवादिषु ।
शब्दः प्रवर्तमानोऽपि न तानङ्गीकरोत्यसौ ॥१५४॥

द्रव्यपदार्थिकस्य जातिपदार्थिकस्य वा शब्दप्रवृत्तिकाले शब्दार्थविलक्षणभूतोऽर्थः प्रथममपि प्रतीयमानेन शब्देनोपगृह्यत इत्येष पक्षः। तद्यथा—गवादीनां नियतस्वामिविशेषाणां पयोदानादिसंयोग्युपलक्षणानि परिच्छेदार्थमप्युपादीय-

इदानीं मुख्यनान्तरीयकविभागेन पदार्थविचारोपक्रममाह—यथेति। इह शब्दस्य सामान्यं वाजप्यायनमतेनार्थः, व्यक्तिर्वा व्याडिमतेनार्थः। तत्रेह सामान्यमात्रं वा व्यक्तिमात्रं वा तस्य प्रयोजकत्वेनावबुध्यते, विशेषास्तु नान्तरीयकतया ततोऽवगम्यन्ते ततः शब्दस्यादृष्टव्यभिचारं सामान्यमात्रमेवार्थः। यथा संयोगिनो

---

एवमखण्डेऽपि वाक्येऽभ्युपगते पदपदार्थप्रविभागमन्तरेण व्यवहारो न निर्वहतीति पदार्थः सामान्येन मतभेदप्रदर्शनपूर्वकं निर्णीतः। इदानीं मुख्यनान्तरीयकविभागेन पदार्थविचारोपक्रममाह—यथेति द्वाभ्याम्।

अनयोरर्थः—यथा गोशब्दः स्वार्थसंयोगिभिर्द्रव्यैर्मणिघण्टिकापादुकादिभिर्गले बद्धैर्लक्षिते = उपलक्षणत्वेन विज्ञापितेऽर्थे गवि गोत्वे वा प्रयुज्यते। तु = किन्तु, असौ = गोशब्दस्तेषा मण्यादीनां विशेषाणा न प्रकाशकः, किन्तु गोव्यक्तेस्तद्गतजातेरेव वा प्रकाशकः।

एतदेव स्फुटीकर्तुमाह—आकारेति। आकारेण = सस्थानेन, वर्णेन शुक्लत्वादिना, अवयवैः = सास्नालाङ्गलककुदखुरविषाणैः, संसृष्टेषु = संबद्धेषु गवादिष्वर्थेषु प्रवर्तमानोऽपि गोशब्दः, तान् = आकारवर्णावयवान्, अन्तरङ्गानपि वाच्यत्वेन नाङ्गीकरोति, किमुत बाह्यान् मण्यादीन् विशेषान्। आकारवर्णावयवाव्यभिचारित्वाच्छब्दवाच्या न भवन्तीत्यर्थः।

पूर्वपद्यस्य त्वयं समुदितोऽर्थः—इह शब्दस्य सामान्यमर्थो वाजप्यायनमतेन, व्याडिमतेन तु व्यक्तिरर्थः। तदुक्तं वार्त्तिककृता—आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः। द्रव्याभिधानं व्याडिः (१।२।६४। वा० ३५, ४५)। प्रातिपदिकार्थमात्रे विभक्तौ सत्यां प्रातिपदकेनाकृत्यभिधानाद् एकं वा = एकमेव आकृतिरूपं प्रातिपदिकार्थ इति वाजप्यायन आचार्यो मन्यते, व्याडिस्तु व्यवहारे सर्वत्रापि प्रातिपदिकेन द्रव्याभिधानमिति द्रव्यं प्रातिपदिकार्थ इति तदर्थः। तत्रेह सामान्यमात्रं = जातिमात्रं व्यक्तिमात्रं वा शब्दस्य प्रयोजकं = प्रवृत्तिनिमित्तम् अर्थत्वेनावबुद्ध्यते व्यवहारे। विशेषास्तु मणिघण्टिकादयो बहिरङ्गा आकार-

**मानानि नाभिधेयत्वेन श्रुतिभिः प्रकाश्यन्ते। तथैकादिप्रकाशादिभि[तथा-कारादिभिः] (?)रुपलक्षणैर्नित्य [सं]सृष्टेष्वाकाराद्यः प्रतिपत्तिहेतुत्वेन आ... म .. पि** [आद्यया मध्यया वापि] **बुद्धया परिगृह्यमाणाः शब्दाभिधेयत्वं न प्रतिपद्यन्ते ॥१५३-१५४॥**

**द्रव्यविशेषाः सूक्ष्मा मण्यादय उपलक्षणमात्रभावेन गवादीनामर्थानां स्थिता न गवादिशब्दवाच्या भवन्ति तथान्तरङ्गा अप्याकारवर्णसंस्थानादय इति न तेषामसौ प्रकाशक उच्यते ॥१५३॥**

**एतदेव स्फुटीकर्तुमाह—आकारेति। आकारादयो व्यभिचारित्वाच्छब्द-वाच्या न भवन्तीत्यर्थः ॥ १५४ ॥**

---

वर्णादयो वाऽन्तरङ्गा नान्तरीयकतया शब्दादवगम्यन्ते। ततश्चादृष्टव्यभिचारं सामान्यमात्र-मेव शब्दस्यार्थः। यथा प्रयोगिनो द्रव्यविशेषाः सूक्ष्मा मण्यादय उपलक्षणमात्रभावेन गवादीनामर्थानां स्थिता इत्यतो न गवादिशब्दवाच्या भवन्ति, उपलक्षणानां व्यभिचारि-त्वात्। विशेषणं हि विद्यमानत्वेनाव्यभिचारि भवतीति तदेव वाच्यम्। तथा गोपदार्थ-स्यान्तरङ्गा अप्याकारवर्णादयः, सादृश्ये सत्यपि अनित्यत्वेन व्यभिचारिण इति न तेषां गो-शब्दः प्रकाशक उच्यते। पूर्वार्द्धेन बहिरङ्गाणां विशेषाणां मण्यादीनां शब्दवाच्यत्वस्य प्रतिषेधः, उत्तरपद्येन तु—आकारवर्णादीनामन्तरङ्गाणामिति विवेकः।

अथ प्रकृतस्य पद्यद्वयस्य पिण्डीकृतोऽभिप्रायः प्रदर्श्यते। तथाहि—द्रव्यपदार्थिकस्य जातिपदार्थिकस्य वा एष पक्षो, यच्छब्दस्य प्रयोगकालेऽर्थात् प्रथममपि प्रतीयमानेन शब्देन शब्दार्थाभ्यां विलक्षणोऽर्थ आकारवर्णादिरुपगृह्यते = स्वार्थसंबन्धितया प्रतीयत इति, किन्तु तथा प्रतीयमानोऽप्याकारादिरूपोऽर्थविशेषः शब्दाभिधेयतां न भजत इति। तद्यथा—यदा गवादिपदार्थाः स्वामिविशेषसम्बन्धित्वेन प्राङ् नियताः = निर्धारिताः सन्ति। तेषाञ्च गवादिपदार्थानां संयोगीनि = संबद्धानि पयोदानादीन्युपलक्षणानि परिच्छेदार्थम् = इतरगो-व्यावृत्त्यर्थम् उपादीयमानान्यपि = प्रमाणान्तरेण तेनैव शब्देन वा स्वार्थोपस्थापनद्वारा स्वार्थसंबन्धितया परिगृह्यमाणान्यपि सन्ति; तथापि तान्युपलक्षणानि व्यभिचारीणीति कृत्वा श्रुतिभिः = गवादिशब्दैः नाभिधेयत्वेन प्रकाश्यन्ते। इयं पयोदानादिरूपाणां शब्दा-वाच्यत्वे उदाहरणम्?

आकारादिप्रकाशादिरूपाणामिष्वादिपदार्थसंयोगिनामन्तरङ्गविशेषाणां शब्दवाच्यत्व उदाहरणं तु यथा—आकारवर्णावयवैरेकादिसंख्याभिः प्रकाशादिभिश्चोपलक्षणैर्नित्यं संसृष्टा ये इषवस्तेषां ये आकारादयस्ते इषुशब्दार्थं प्रति हेतुत्वेन इषुशब्दार्थग्रहात् प्राग् आद्यया मध्यया वाऽपि बुद्ध्या परिगृह्यमाणा अपि इषुशब्दाभिधेयत्वं न प्रतिपद्यन्ते। अत्राग्नेयबाणानां प्रकाशसंसृष्टत्वं गुलिकादीनामिव द्रष्टव्यम्। अत्राकारादिबुद्धेराद्यत्वं शब्दार्थबुद्ध्यपेक्षया। मध्यत्वन्तु शब्दतदर्थबुद्ध्योरन्तरालभवत्वेनेत्यवधेयम् ॥ १५३-१५४ ॥

**संस्थानवर्णावयवैर्विशिष्टे यः प्रयुज्यते ।**
**शब्दो न तस्यावयवे प्रवृत्तिरुपलभ्यते ॥१५५॥**

**संस्थानविशिष्टोपक्रमः परिमण्डलो दीर्घश्चतुरस्त्र इति तदवयवो नाभिधीयते। तथा मुष्टिग्रन्थिसन्धि⋯ ⋯ [सक्तकुण्डलकादयः शब्दास्तदवयवेषु न प्रयुज्यन्ते। वर्णशब्दानां चित्रः कल्माषः सारङ्ग इति तदवयवेष्वप्रवृत्तिः। अवयवशब्देन शतं सहस्रं प्रस्थो द्रोणो मासः संवत्सर इत्यादयो**

**नन्वाकारवाचकानां स्थूलह्रस्वकर्बुरशबलादीनां शब्दानां किमाकारादिवाचकत्वं नाङ्गीकार्यमेवेत्याशङ्क्याह—संस्थानेति। स्वशब्दैराकारादय उच्यन्त एवेति न सर्वत्र वयं तदप्रतीतिं ब्रूमः, यद्धि प्रयोजकं शब्दस्य तदेव तस्य वाच्यम्,**

---

नन्वाकारादयो यदि न शब्दाभिधेयास्तर्ह्याकारादिवाचकानां स्थूलह्रस्वकर्बुरशबलादीनां शब्दानां कथमाकारादिवाचकत्वं स्वीक्रियत इत्याशङ्क्याह—**संस्थानवर्णावयवैरिति**।

अस्यार्थः—संस्थानेन वर्णेनावयवैर्वा विशिष्टे यः शब्दः प्रयुज्यते स तत्तद्विशिष्टस्यैव वाचकस्तत्र प्रयुज्यमानत्वात्, संस्थानादीनामवयवेषु तु न तस्य शब्दस्य प्रवृत्तिरुपलभ्यते, यतोऽतस्तदवयवो नाभिधीयते। तद्यथा—संस्थानविशिष्टोपक्रमः = संस्थानविशिष्टो वाच्यत्वेनोपक्रम्यते येनेति फलितार्थः। विग्रहस्तु संस्थानविशिष्ट उपक्रम उपक्रम्यमाणोऽर्थो यस्येति। परिमण्डलादिशब्देभ्यो हि प्रथमं पारिमाण्डल्याकारविशिष्ट एव प्रतीयते, पश्चात्तु प्रकरणादिना घटादिरिति परिमण्डलो दीर्घश्चतुरस्त्र इति तदवयवो नाभिधीयत इति।

तदयं फलितार्थः—संस्थानवर्णावयवविशिष्टानां वाचकैस्तत्तच्छब्दैराकारवर्णावयवा यथायथमुच्यन्त एव। यथा परिमण्डलः, चित्रः, शतमिति न सर्वत्र वयं संस्थानवर्णावयवानामप्रतीतिं ब्रूमः, किन्तु यच्छब्दस्य यत्प्रयोजकं = प्रयोगनिमित्तम्, प्रवृत्तिनिमित्तमिति यावत् तदेव तस्य शब्दस्य वाच्यम्, अन्यत्तु नान्तरीयकतया प्रतीयत इति ब्रूमः। एवं चाकारादिवाचकशब्दानां नावयमात्रे प्रवृत्तिरङ्गीकार्या, नान्तरीयकतया प्रतीयमानत्वेऽप्यवाच्यत्वात्। अतः परिमण्डलादिशब्दैरर्थस्य विशेषा उच्यन्ते। गोघटादिशब्दैस्तु विशेषा नान्तरीयकतया प्रतीयमाना अपि नोच्यन्ते, किन्तु गोत्वघटत्वादिरूपं सामान्यमात्रमिति व्यवस्थित एव पन्थाः, न त्वाकारादयो विशेषाः सर्वथाऽवाच्या इति।

अयं भावः—संस्थानविशिष्टोपक्रमः शब्दः परिमण्डलो दीर्घश्चतुरस्त्रः = चतुष्कोणः इत्येतैः शब्दैस्तत्तदाकारविशिष्टा एवाभिधीयन्ते, न तु तत्तदाकारावयवाः। तथा मुष्टिग्रन्थिसन्धिसक्तकुण्डलकादयस्तत्तदाकारविशिष्टवाचकास्तदवयवेषु न प्रयुज्यन्ते। वर्णशब्दानां चित्रः, कल्माषः, सारङ्ग इत्येवमादीना तदवयवेषु शुक्लनीलादिष्वप्रवृत्तिः। अवयवविशिष्ट-

गृह्यन्ते। अवयवे गृह्यमाणे जातिरभिषक्ताऽतस्तावति विषये जातिप्रयुक्तः शब्दः प्रवर्तत इति। क्वचिदेव हि दृष्टे कदाचिद्दन्तशृङ्गे खुरादावप्ययं गौरिति प्रयुज्यत एव। तथा वृको वा ग्राम्यशूकर इति। यतः कश्चिदवयवोऽनेन लक्ष्यत इति तदेतन्न्यायापेतं दर्शनमित्यपरे मन्यन्ते। कथम्? यदि जातिमात्रवाची शब्दः स जातिभावमेव प्रत्याययति, किं तत्रोपव्यञ्जनैः ॥१५५॥

अन्यन्नान्तरीयकमिति ब्रूमः। अत आकारादिवाचकानां नावयवमात्रे एकदेशमात्रे प्रवृत्तिरङ्गीकार्या, अतः शब्दैरर्थस्य कचिद्विशेष उच्यते, कचित्सामान्यमात्रम् ॥ १५५ ॥

संख्याप्रमाणसंस्थाननिरपेक्षः प्रवर्तते।
बिन्दौ च समुदाये च वाचकः सलिलादिषु ॥१५६॥

यत्राकृतिनिरपेक्षं सामान्यस्य रूपावधारणं तत्र यावदेव भवति तावदेवाभिधीयते शब्देन। तथा चोक्तम्—केवलं घृतमिति बिन्दावपि भवति खार्यामपीति ॥१५६॥

ततश्च शब्दोऽपरामृष्टविशेषे वस्तुमात्र एव प्रवर्तत इत्याह—संख्येति। एकापि जलकणिकाऽऽपो बहुलमपि सरित्स्रोतस्तथैवोच्यते, एकापि शिला शुक्ला

---

वाचकशब्देन – शतम्, सहस्रम्, प्रस्थः, द्रोणः, मासः, संवत्सर इत्येवमादिना यथायथं पञ्चाशदादयस्तत्तदवयवा नाभिधीयन्ते।

केचिदाहुः—गृह्यमाणेऽवयवे दन्तशृङ्गखुरादिरूपे कदाचित् पूर्वदृष्टे खुरादावपि केवलेऽयं गौरिति प्रयुज्यत एव। तथा—वृकावयवमात्रदर्शनेऽपि वृक इति, अथवा ग्राम्यसूकरावयवमात्रदर्शनेऽपि ग्राम्यसूकर इत्यवयवेऽपि विशेषे प्रयुज्यत एव गोशब्दः। यतः कश्चिदवयवोऽनेन प्रयोक्त्रा लक्ष्यते प्रयोगकाले तदानीम्, न तु सकलावयवविशिष्टोऽवयवीति। तदेतन्न्यायापेतं दर्शनमित्यपरे मन्यन्ते। तथाहि—यदि जातिमात्रवाची स गोशब्दस्तदा स जातिमेव प्रत्याययति, किं तत्र जातेरुपव्यञ्जनैरवयवैर्वाच्यत्वेन प्रतीयमानैः प्रयोजनम्। अतस्तत्र दृष्टावयवव्यङ्ग्ये गोत्वरूपे सामान्य एव गोशब्दप्रयोगः, न त्ववयवरूपे विशेषे इति ॥ १५५ ॥

प्रागुक्तरीत्या शब्दोऽपरामृष्टाकारादिविशेषे वस्तुमात्र एव प्रवर्तत इत्याह—संख्येति।

अस्यार्थः—सलिलादिषु = सलिलशुक्लादिषु, वाचकः = अप्शुक्लादिशब्दः, संख्याप्रमाणसंस्थाननिरपेक्षः। संख्या = एकत्वादिका, प्रमाणं = जानुजङ्घापुरुषादि, संस्थानम् = अवयवसंयोगविशेषस्तन्निरपेक्षो बिन्दौ च समुदाये च प्रवर्तते। एकाऽपि जलकणिका आप

हिमवानपि शुक्ल इति शब्दाः प्रयोजकमात्रमेव जात्यादिकं स्वार्थीकृत्य प्रवर्तन्ते, आकारादिविशेषावभासस्तु नान्तरीयक इति स्थितम् ॥१५६॥

कथं तर्हीदं भाष्यं समर्थ्यते—समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते, तैलं भुक्तं घृतं भुक्तमित्येवमादि । तदर्थमिदमुच्यते—

संस्कारादिपरिच्छिन्ने तैलादौ यो व्यवस्थितः ।
आहैकदेशं तत्त्वेन तस्यावयववर्तिता ॥१५७॥

इह संस्कारपक्ष उपघातपक्षो वा यदा कस्मिंश्चिन्निर्ज्ञातेऽर्थे शब्दप्रवृत्तौ व्यवस्थितः, तदावयवोपयोगापेक्षायामिदमुपन्यस्तम् । यत्तत्काकेनोपहतं तदनेन

ननु समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते; यथा तैलं भुक्तं; घृतं भुक्तं, शुक्लो नीलः कपिश इत्युक्तं तदेतत्कथम् । उक्तं च—

न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः ।
ते जातिगुणसंबन्धभेदमात्रनिबन्धनाः ॥

तथा—

"नेक्षिता जातिशब्दानां समुदायानुपातिता ।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसंगताः ॥" इति । इह च—

---

इति शब्दाः प्रयोजकमात्रमेव = प्रवृत्तिनिमित्तं सामान्यमेव जात्यादिकं स्वार्थीकृत्य प्रवर्तन्ते, न संख्याप्रमाणसंस्थानादिविशेषान् । आकारादिविशेषावभासस्तु नान्तरीयक इति स्थितम् ।

अयं भावः—यत्राकृत्यादिविशेषानपेक्षं सामान्यस्य रूपावधारणं भवति, तत्र यावदेव स्वल्पं भूरि वा द्रव्यं भवति तावदेवाभिधीयते शब्देन । तथा चोक्तं भाष्ये—केवलं घृतमिति बिन्दावपि भवति खार्यामपीति (द्र० १।१।७२; १।४।२३) ॥१५६॥

ननु समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते, यथा तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नीलः कपिश इत्युक्तम् (द्र० महा० भा० १।१।१।१४ वा०) । तदेतत्कथम् ? उक्तञ्च—

न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः ।
ते जातिगुणसंबन्धभेदमात्रनिबन्धनाः ॥ (वा० प० ३।१ १७२) ।

अस्यार्थः—जातिवाचकशब्दास्तैलघृतादयः, गुणवाचकशब्दाः शुक्लनीलादयः, तेषु प्रयोक्तव्येषु मूर्तिभेदः = आकारभेदः, न विवक्षितः, प्रवृत्तिनिमित्तत्वेनेति शेषः । स्वल्पे महति वाऽवयवे समुदाये वा तेऽविशेषेण प्रयुज्यन्ते, प्रयोक्तव्याश्चेति तदाशयः । तथा—

नेक्षिता जातिशब्दानां समुदायानुपातिता ।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसङ्गताः ॥
(स्फोटसिद्धौ नवमः श्लोकः) ।

भुक्तम्। यद्वा यदातुरार्थं संस्कृतं तद्देवदत्तेन पीतमिति सामानाधिकरण्यमुद्देश-प्रतिनिर्देशयोरिति ॥१५७॥

"संख्याप्रमाणसंस्थाननिरपेक्षः प्रवर्तते।
बिन्दौ च समुदाये च वाचकः सलिलादिषु॥" इति।

तदेतदाशङ्क्याह—संस्कारादीति। संस्कारोपघातादिपरिच्छिन्ने तैलादौ तैलघृतादिः शब्दो व्यवथितोऽसावेकदेशं समुदायाध्यारोपेणाह।

एतदुक्तं भवति—न ते जातिशब्दाः, अपि तु तत्सदृशा एव ते नियत-परिमाणाभिधायिनस्तदध्यारोपेण तदेकदेशवाचिन उच्यन्त इति।

अतस्तेषामवयववर्तिता भाष्य उक्तेति न कश्चिद् दोषः। उक्तं च—

"संस्कारादुपघाताद्वा वृत्तोऽक्तपरिमाणके।
तैलादौ जातिशब्दोऽत्र समत्वादवगम्यते॥" इति ॥१५७॥

(वा० ४।३ वृत्ति० ४८८)

---

अस्यार्थः—जातिशब्दानाम् = जातिप्रवृत्तिनिमित्तशब्दाना सलिलादीनाम्, समुदायानुपातिता = समुदायमात्रस्य वाचकत्वेनानुसरणम्, नेक्षिता न दृष्टा। हि यतः, ते जातिशब्दाः, जातिमाचक्षत इत्येकः पक्षः। जातिसङ्गताः = जातिविशिष्टा व्यक्तीर्वा आचक्षत इति द्वितीयः पक्षः। इहापि च—

संख्याप्रमाणसंस्थाननिरपेक्षः प्रवर्तते।
बिन्दौ च समुदाये च वाचकः सलिलादिषु॥ (वा० प० २।१५६)

तदेतदाशङ्क्याह - **संस्कारादीति**।

अस्यार्थः—संस्कारादिपरिच्छिन्ने संस्कारोपघातादिव्यावृत्ते तैलादौ संस्कृते उपहते वा तैलाद्येकदेशे यो व्यवस्थितस्तैलादिशब्दः, तत्त्वेन = समुदायाध्यारोपेणैकदेशमाह। अतस्तस्यावयववर्तिता = अवयवविषयकवृत्तिमत्ता भाष्ये उक्तेति न कश्चिद्दोषः।

एतदुक्तं भवति - संस्कृते उपहते वा प्रयुज्यमानाः, यत्तत्काकेनोपहतं घृतं तद्देवदत्तेन भुक्तमिति, यदातुरार्थं संस्कृतं घृतं तैलं वा तद्देवदत्तेन पीतमिति, न ते जातिशब्दाः, किन्तु तत्सदृशा एव ते। यतो नियतपरिमाणाभिधायिनः, अतो जात्यध्यारोपमूलक-समुदायाध्यारोपेण तैलादिशब्दास्तदेकदेशवाचिन उच्यन्त इति। संस्कृते उपहते वा तैले जात्यध्यारोपस्तु द्रव्यान्तरसंपर्कात् स्वीक्रियते।

वस्तुतस्तु तत्र तैलादिपदस्यैकदेशे लक्षणा, न तु शक्तिरिति। उक्तञ्च—

संस्कारादुपघाताद्वा वृत्तोऽक्तपरिमाणके।
तैलादौ जातिशब्दोऽत्र समत्वादवगम्यते॥ इति।

(वा० प० का० ३ वृत्ति० ४८८)

**येनार्थेनाभिसंबद्धमभिधानं प्रयुज्यते ।**
**तदर्थापगमे तस्य प्रयोगो विनिवर्तते ॥ १५८ ॥**

**प्रयुज्यते शब्द इत्यन्ये, तत् प्रयोजनस्याभिधेयस्य नियतं लक्षण-माचक्षते ॥ १५८ ॥**

एतदर्थं परमार्थत इदं बोद्धव्यमित्याह—येनार्थेनेति । येनार्थेन जात्यादिना प्रयोजकेन ॥ १५८ ॥

---

अस्यार्थः—अत्र यत्तत्काकेनोपहतं घृतं तदनेन भुक्तम्, यदातुरार्थं संस्कृतं तद्देव-दत्तेन पीतमित्यत्र, संकरादुपघाताद्वा अल्पपरिमाणके=परिच्छिन्नपरिमाणके तैलादौ वृत्तः =प्रवृत्तो जातिशब्दो घृततैलादिशब्दः, समत्वात्=सादृश्याद् वृत्तो न त्वभिधानादि-त्यवगम्यत इति । अत्र तन्त्रेणावृत्त्या वा वृत्तशब्दस्य द्विः सम्बन्ध इति ध्येयम् ।

अयं भावः—यदा कस्मिंश्चित् संस्कारवत्तया उपघातवत्तया वा निर्ज्ञाते=निश्चिते अर्थे संस्कारपक्ष उपघातपक्षो वा (पक्षोऽत्र व्यावर्तकः पदार्थः) शब्दस्य प्रवृत्तौ निमित्तत्वेन व्यवस्थितस्तदाऽवयवकर्मकस्य भक्षणरूपस्य पानरूपस्य वोपयोगस्यापेक्षायां सत्यामिदमु-पन्यस्तम्, यत्तत्काकेनोहतं तदनेन भुक्तम् । यद्वा— यदातुरार्थं संस्कृतं तद् देवदत्तेन पीत-मित्युद्देश्यस्योपहतस्य संस्कृतस्य वा भुक्तेन पीतेन वा प्रतिनिर्देश्येन = विधेयेन सामाना-धिकरण्यमिति । अत्रोपहत संस्कृतं वा तैलादिकमधिकपरिमाणम्, भुक्तं पीतं वाऽल्प-परिमाणमिति समुदाये वृत्तः शब्दोऽवयवे साम्येन लक्षणया प्रवर्तत इति प्रकृतभाष्यस्योप-पत्तिर्न त्ववयवे तस्य शब्दस्य शक्त्या प्रवृत्तिरिति । अत्र तस्यावयववर्तिनामिति पष्ठ्यन्त-पाठस्त्वपार्थकः । 'आहैकदेशतत्त्वेन तस्यावयववर्तिताम्' इत्यवाचां पाठः ।

अस्यार्थः—तस्य शब्दस्य, एकदेशतत्त्वेन=एकदेशेऽध्यारोपितेन तत्त्वेन समुदाय-रूपत्त्वेन, अवयववर्तितामाह—भाष्यकार इति शेष इति । आहैकदेशं तत्त्वेन तस्यावय-वर्तिता' इति पाठ उदीचाम् । अयं तु व्याख्यात एव । यद्यप्यत्र पाठे प्रागुक्तव्याख्याने च वाक्यभेदस्तथापि तस्यावयववर्तिता तत्त्वेनैकदेशमाहेति योजनयाऽवयववर्तिताया वचन-कर्तृत्वेऽत्रापि पाठे एकवाक्यतानुसन्धेया । अवाचां पाठे त्वेकदेशतत्त्वेनेति मध्यमपदलोपि-समासे लक्षणासमाश्रयणम्, कर्तृपदाध्याहारक्लेशः, तदर्थघटिते वाक्यार्थे वाक्यलक्षणा वा स्वीकार्येति क्लेश इति दिक् ॥ १५७ ॥

एवं केषाञ्चिद् गोघटादिशब्दानां सामान्यमात्रमभिधेयम्, न विशेषाः, मुष्टि-ग्रन्थ्यादिशब्दानां विशेषा एवाभिधेया न सामान्यम् । तैलादिशब्दानाञ्च सामान्ये विशेषे च प्रयोगे परिदृश्यमाने शब्दार्थस्याव्यवस्थानात् परमार्थतः शब्दार्थं व्यवस्थया बोधयि-तुमाह—येनार्थेनेति ।

**यांस्तु संभविनो धर्मानन्तर्नीय प्रयुज्यते ।**
**शब्दस्तेषां न सान्निध्यं नियमेन व्यपेक्षते ॥ १५९ ॥**

**ये शब्दस्याप्रयोजकाः प्रयोजकसहकारिणः सम्बन्धिनः शब्दप्रवृत्तिकाले पदार्थैकदेशभूता इवोपलभ्यन्ते, तेषां सान्निध्यमसान्निध्यं वा शब्दप्रवृत्तावकारणम् ॥ १५६ ॥**

वक्तुरिच्छया धर्मान्तर्भावनेन तु प्रयुज्यमानोऽपि शब्दो न तेषां सर्वेषां नियमेन प्रत्यायनं करोतीत्याह – यांस्त्विति ॥ १५९ ॥

---

अस्यार्थः—येनार्थेन येन प्रयोजनेन, येनाभिधेयेनेति यावत् । अभिधेयस्य शब्दप्रयोजनत्वं चावबुध्यमानत्वेन रूपेण, न तु स्वरूपेण । यद्वा येन जात्यादिरूपेण प्रयोजनेन प्रयोजकेण, शब्दप्रवृत्तिनिमित्तेनेति । अभिसंबद्धं बोधानुगुणतादात्म्यसंबन्धवत्, अभिधानम् = तदर्थाभिधानकरणमभिधावृत्तिमान् शब्दः प्रयुज्यते । अन्ये त्वभिधानं प्रयुज्यत इत्यस्य शब्दः प्रयुज्यत इत्यर्थमाहुस्तन्न युक्तम्, तीरस्यापि गङ्गापदार्थत्वापत्तेः; प्रवाहस्यापि तदनापत्तेश्चेति । तदर्थापगमे तस्यार्थस्याभिधेयस्यापगमेऽभिधयाऽवबुध्यमानत्वाभावे, तस्य शब्दस्य प्रयोगो विनिवर्तते, तत्प्रयोजनस्याभिधेयस्य नियतं लक्षणमाचक्षत इति योग्यताबलादध्याहृत्य योजनीयम् ॥ १५८ ॥

'वाक्यं वक्त्रधीनं हि' इति न्यायेन वक्तुरिच्छया रोमशफादिधर्मान्तर्भावनेन गोशब्दार्थगोत्वजातिबुबोधयिषया तु प्रयुज्यमानोऽपि गोशब्दो न तेषां रोमशफादीनां सर्वेषां धर्माणां सर्वत्र नियमेन प्रत्यायनं करोति । रोमशफादीनां व्यभिचारेऽपि गोशब्दप्रयोगो दृश्यते, गोत्वजातिव्यभिचारे तु गोशब्दप्रयोगो न दृश्यतेऽतो गोत्वजातिरेव नियता गोशब्दवाच्या, न तु गोत्वसमानाधिकरणा रोमशफादयोऽनियता इत्याह—**यांस्त्विति** ।

अस्यार्थः—यास्तु सम्भविनः = शब्दार्थसामान्यसमानाधिकरणान् धर्मान् रोमशफादीन् शब्दप्रवृत्तिकाले विवक्षयाऽन्तर्नीय (अत्र णत्वं न युक्तम्, समासे रामनामेत्यादाविव समानपदत्वाभावात् । वस्तुतस्तु 'अन्तःशब्दस्याङ्किविधिणत्वेषु उपसर्गत्वं वाच्यम्' त्यन्तःशब्दस्य उपसर्गत्वात्, तत्प्रयुक्तं णत्वं युक्तमेव) शब्दार्थसामान्येऽन्तर्भाव्यगवादिशब्दः प्रयुज्यते, स शब्दः स्वप्रयोगकाले तेषां धर्माणां नियमेन सान्निध्यं न व्यपेक्षते, शब्दार्थस्य सामान्यस्य तु नियमेन सान्निध्यं व्यपेक्षत इति सामान्यमेव शब्दार्थः, न तु तत्समानाधिकरणा धर्मा इति । तदिदं व्याख्यातं स्वयमेव—"ये शब्दस्याप्रयोजकाः" इत्यादि । अत्र प्रयोजकशब्देन प्रवृत्तिनिमित्तं धर्मो गृह्यते । प्रयोजकसहकारिणश्च धर्मा रोमशफादय इति ॥१५६॥

श्रुतिपक्षस्य मन्यन्ते, केचिद्देशान्तर्भूतेभ्यस्तेभ्योऽवयवेभ्योऽनुमानात् स्वविषये शब्दाः प्रवर्तन्त इत्याचक्षते ॥ १६१ ॥

तथा जात्युत्पलादीनां गन्धेन सहचारिणाम् ।
नित्यसंबन्धिनां दृष्टं गुणानामवधारणम् ॥ १६२ ॥

गन्धोत्पलबुद्धयनुमितो [ जातिगन्धोत्पलगन्धबुद्धयनुमितितो ] हि जात्युत्पलादिषु यः शब्दः प्रयुज्यते, न स गन्धमात्रमाश्रित्य गन्धसमवायं वा द्रव्यमात्रं प्रत्याययति, सहचारीणि गुणान्तराण्यपि तत्रानुमीयन्ते। न च तद्वाचिनः शब्दा दृष्टे सहचारिण्यनुमानेन हेतौ प्रवर्तन्त इत्यभ्युपगम्यन्ते। केषाञ्चित् समुदायवाचि

तथैव शब्दादेकदेशावसायेन नित्यसहचारिधर्मान्तरावगमो जायत इत्याह—तथेति। जातिगन्ध उत्पलगन्ध इति शब्दाद्विशिष्टस्य गन्धमात्रस्यावगतिः, तत्सहचारिरूपस्पर्शाद्यवधारणं तत्र नान्तरीयकं न मुख्यमिति बोद्धव्यम ॥ १६२ ॥

---

किमुत तदुपजीवकः शब्द इति। क्वचित्तु अर्थः कृत्स्नोऽनुमीयत इत्यस्य स्थाने 'अर्थः कुत्र न नीयते' इति पाठः स तु प्रकृतासंबद्ध इति स्फुटमेव। कथञ्चित् प्रकृते संयोजनेऽप्यक्षरास्वारस्यमिति ॥ १६१ ॥

यथा कतिपयावयवदर्शनेन सकलार्थपरिच्छेदस्तत्रानुमानिक एव न शाब्द इति सामान्यमेव शब्दार्थो न व्यक्तिस्तथैव जातिगन्ध उत्पलगन्ध इति शब्दाद् जात्युत्पलयोरेकदेशस्य गन्धमात्रस्यावसायेन = निश्चयेन गन्धस्य नित्यसहचारिणां धर्मान्तराणां रूपरसस्पर्शादीनामवगमोऽप्यानुमानिक एव, न शाब्द इति जातिगन्ध उत्पलगन्ध इत्यादौ गन्धसहचारिणो रूपस्पर्शादयो न जातिगन्धादिपदार्था इत्याह— तथेति।

अत्र यथेति पाठोऽयुक्तः। नह्यत्र शास्त्रकारः पूर्वोक्तमेवार्थं निदर्शयति, किन्तर्हि कञ्चिद् विशेषमाह। स च तथेत्यनेन साधु समुच्चीयत इति।

अस्यार्थः—तथा = कतिपयावयवदर्शनेनानुमानिकं सकलार्थावधारणमिव, जात्युत्पलादीनां = अत्र जातिर्मालती स्वगतरूपरसस्पर्शादिसहचारिणा गन्धेन प्रत्यक्षेण नित्यसम्बन्धिनाम् = स्वसमानाधिकरणानां रूपरसस्पर्शादिगुणानामवधारणमनुमानं दृष्टमिति व्यक्तिरिव न ते जात्युत्पलादिशब्दवाच्या इति।

अयं भावः—यदाऽनुकूलवाते वाति सति गन्धविशेषमाधाय अयं जातिगन्ध इति, अयमुत्पलगन्ध इति प्रत्यक्षात्मिका बुद्धिर्जायते। तया च बुद्धया—इयं जातिर्गन्धविशेषवत्त्वात्, इदमुत्पलं विलक्षणगन्धवत्त्वादिति जात्युत्पलादिकमनुमीयते। एवमनुमितेषु च जात्युत्पलादिषु यो जात्युत्पलादिशब्दः प्रयुज्यते, स सामान्यमभिदधानो न गन्धमात्रं गन्धसमवायं वा प्रत्यक्षतो गृहीतं सहकारितयाऽऽश्रित्य जात्युत्पलादिरूपं द्रव्यमात्रं

[दि] नामुत्पलादिशब्दवाच्यत्वमिति संख्याप्रमाणसंस्थानजनकत्वेन विना गवादिषु गोशब्दस्य विषाणादिसन्निधिप्रयुक्ताभिमुख्या प्रवृत्तिर्दृश्यते ॥ १६२ ॥

**तस्मात् संभविनोऽर्थस्य शब्दात् संप्रत्यये सति ।**
**अदृष्टविप्रयोगोऽर्थः सम्बन्धित्वेन गम्यते ॥ १६३ ॥**

तस्मात् संप्रतीयमानोऽपि सहचारिणः [चारी] संभविनः [वी न] शब्दार्थ इति विज्ञायते । नहि तथाभूतेनार्थात्मना शब्दस्य सम्बन्धोऽपि युज्यत ॥ १६३ ॥

उपसंहर्तुमिदानीमाह—तस्मादिति नैयत्येनादृष्टविप्रयोगो जात्यादिरेव शब्दस्य सम्बन्धित्वेन वाच्यत्वेन गम्यत इति बोद्धव्यम् ॥ १६३ ॥

---

प्रत्याययति = अनुमापयति; अपि तु गन्धसहचारीणि गुणान्तराण्यपि रूपरसस्पर्शादीनि तत्रानुमीयन्ते । न च तद्वाचिनो जात्युत्पलादिशब्दाः । ते हि गन्धविशेषसमानाधिकरणा रूपादयो दृष्टे सहचारिणि = समानाधिकरणे हेतौ गन्धविशेषेऽनुमानेन प्रवर्तन्ते = प्रकर्षेण वर्तमानाः प्रतीयन्त इत्यभ्युपगम्यते । केषाञ्चित् समुदायवादिना = गुणक्रियादिसमुदायो द्रव्यमिति वादिनां साख्यानां योगानां च मते गन्धसमानाधिकरणानां रसादीनामुत्पलादिशब्दवाच्यत्वमस्त्येव । संख्यया, प्रमाणेन, संस्थानविशेषजनकत्वेन विनापि विषाणादिमात्रसंनिधिप्रयुक्ताभिमुख्या गोशब्दस्य गवादिषु प्रवृत्तिर्दृश्यते । नहि तत्र प्रयोगे संख्याविशेषः, प्रमाणविशेषः = ह्रस्वत्वदीर्घत्वादिः संस्थानविशेषो वाऽपेक्ष्यत इति । विषाणरोमशफादिस्तु नावयवः, तदवच्छेदेन वेदनाऽनुपलब्धेरिति तत्संयोगो न संस्थानम् । एवमपि विषाणादिर्न गोशब्दार्थः तत्संनिधिप्रयुक्ताया गोशब्दप्रवृत्तेरनियतत्वादिति ॥**१६२**॥

इदानीमुपसंहर्तुमाह—**तस्मादिति** ।

अस्यार्थः—तस्मात् सामान्यसमानाधिकरणानां गुणादीनां व्यभिचारदर्शनात्, संभविनोऽर्थस्य गुणादेः शब्दात् संप्रत्यये सत्यपि, अदृष्टविप्रयोगः = अदृष्टव्यभिचारः, अर्थः सामान्यम्, शब्दस्य सम्बन्धित्वेन = वाच्यत्वेन, गम्यते = प्रतीयत इति ।

एतदुक्तं भवति—**नैयत्येन हेतुनाऽदृष्टविप्रयोगो** जात्यादिरेव शब्दस्य वाच्यत्वेन गम्यत इति ।

अयं भावः—शब्दात् संप्रतीयमानोऽपि **समानाधिकरणः संभव्यर्थो न शब्दार्थ इति** विज्ञायते । नह्येतादृशेनार्थेन शब्दस्य संबन्धोऽपि युज्यते । शब्दार्थयोः संबन्धस्य स्वाभाविकत्वात्, संभविनोऽर्थस्य चानियतत्वादिति । अत्र चतुर्थपादे 'संबन्धित्वेन गम्यते' इति पाठो युक्तः । संबन्धित्वे वाच्यत्वरूपे साध्येऽदृष्टविप्रयोगोऽर्थ इत्यस्य हेतुत्वोपपत्तेः । संबन्धित्वेन वर्तत इति पाठस्तु न युक्तः, अदृष्टविप्रयोगत्वस्य नियतस्थितिकत्वरूपस्य वाचत्वेन स्थितावप्रयोजकत्वात् । गवि नियतस्थितिकस्यापि सास्नादिमत्त्वस्य गोशब्दावाच्यत्वादिति । किञ्चायं पाठष्टीकाकृतः सम्मतोऽपि ॥**१६३**॥

**वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः ।**
**स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः ॥१६४॥**
**विना संख्याभिधानाद्वा संख्याभेदसमन्वितान् ।**
**अर्थान् स्वरूपभेदेन कांश्चिदाहुर्गवादयः ॥१६५॥**

यथैव वाक्यात् पदार्थप्रविभागेण व्यवहारः क्रियते, तथा पदादपि प्रकृतिप्रत्ययापोद्धारेण शास्त्रे भूयान् व्यवहारो दृश्यते ।

एवं नामपदस्यार्थविचारं कृत्वेदानीं तस्यैव भागार्थविचारं प्रस्तौति । तत्र प्रत्ययभागस्यार्थविचारं तावदाह--वाचिकेति । तेन प्रत्ययभागस्य संख्याकर्मादयो वाच्यत्वेन द्योत्यत्वेन वार्था इति ज्ञेयम् । इदानीं प्रकृतिभागस्यार्थमभिधातुं (प्रकृतिभागस्य प्रत्ययभागस्य चानर्थक्यमभिधातुं) प्रकृतिप्रत्ययसमुदाय एव संख्यादिविशिष्टस्यार्थस्याभिधायक इत्याह—स्याद्वेति । अथवा संख्याद्युपलक्षितमेवार्थं प्रकृतिप्रत्ययसमुदायोऽभिधत्त इत्यभिधातुमाह—विनेति । स्वरूपभेदेन द्वित्वादिभेदेनेत्यर्थः ॥१६४-१६५॥

---

एवं नामपदस्यार्थविचारं परिसमाप्येदानीं तस्यैव भागार्थविचारं प्रक्रमते । तत्र प्रत्ययभागस्यार्थं तावद् विचारयति—**वाचिकेति द्वाभ्याम्** ।

अस्य पद्यद्वयस्यार्थः— स्वादितिङादिविभक्तयो द्वित्वादीनां वाचिकाः' इत्येकः पक्षः । संख्याया अपि प्रकृत्यर्थत्वपक्षे 'विभक्तयो द्वित्वादीनां द्योतिकाः' इति द्वितीयः पक्षः । अनेन पूर्वार्धेन प्रत्ययभागस्य संख्याकर्मादयो वाचत्वेन द्योत्यत्वेन वाऽर्था इत्युक्तं भवति ।

इदानीं प्रकृतिभागस्य प्रत्ययभागस्य चानर्थक्यमभिधातुं प्रकृतिप्रत्ययसमुदाय एव संख्यादिविशिष्टस्यार्थस्याभिधायक इत्युत्तरार्धेनाह—स्याद्वेति । वा = अथवा, संख्यावतोऽर्थस्य संख्याविशिष्टस्यार्थस्य, समुदायः = प्रकृतिप्रत्ययसमुदायोऽभिधायकः स्यादित्यर्थः ।

अथवा संख्याद्युपलक्षितमेवार्थं प्रकृतिप्रत्ययसमुदायोऽभिधत्त इति द्वितीयपद्येनाह—**विनेति** ।

वा = अथवा, संख्याऽभिधानाद् विनापि, स्वरूपभेदेन = द्वित्वादिसंख्यास्वरूपभेदेन, संख्याभेदसमन्वितान् संख्याविशेषोपलक्षितान्, स्वरूपभेदेनेति प्रकृत्यादित्वादभेदे तृतीया । कांश्चिदर्थान् गवादयो विभक्त्यन्ताः शब्दा आहुरित्यर्थः । अत्र विभक्त्यन्ता इति योग्यताकाङ्क्षाभ्यामध्याहृतमन्वेति, अन्यथा विकल्पानुपपत्तिः । समानविषये हि विकल्प इति ।

अयं भावः—यथैव लोके वाक्यात् पदतदर्थप्रविभागेण व्यवहारः क्रियते तथा पदादपि प्रकृतिप्रत्ययापोद्धारेण शास्त्रे भूयान् व्यवहारो दृश्यते ।

तत्र केचित्तावन्मन्यन्ते—सत्येवान्वयव्यतिरेके यावानेवान्वयव्यतिरेकाभ्यामर्थः समधिगम्यते तावानेवास्ति, न तु कश्चिदन्यः समुदायार्थः। स तु समुदायार्थः पदस्य वाक्यवदशब्द इति।

न्यायविदस्तु मन्यन्ते—स्वबुद्धिपरिकल्पितसमर्थापिता एव शिष्टैर्बहुधा प्रकृतिप्रत्ययादयः। तेषां चार्थाः शास्त्र एवमाचार्यार्थे निमित्तभूता अन्वयव्यतिरेकाभ्यां व्यावहारिकाभ्यां कृतप्रविभागा एवाश्रीयन्ते। कथं बुद्ध्योरर्थप्रतिपादनोपायमात्रमेतत्। सर्वथा च प्रतिपत्तौ लौकिकस्यार्थस्य भेदो नास्ति।

तथा हि केषाञ्चित् स्वार्थद्रव्यलिङ्गसंख्याकर्मादयः प्रातिपदिकेनाभिधीयन्ते, द्योतिकास्तु कर्मादीनां विभक्तयः।

केषाञ्चित् स्वार्थद्रव्यलिङ्गमात्राभिधायिनी प्रकृतिः, वाचिकाः संख्याकर्मादीनां विभक्तयः। प्रातिपदिकार्थे विकल्पेन संख्याकर्मादीनां यथासंभवमभिधानं विज्ञायते।

लिङ्गमपि केषाञ्चिद् द्योत्यं केषाञ्चिदभिधेयम्। द्योतनमपि द्विविधम्—

---

तत्र केचित्तावन्मन्यन्ते—सत्येवान्वयव्यतिरेके यावानेवान्वयव्यतिरेकाभ्यामर्थः समधिगम्यते तावानेवास्ति। तथा च पदे प्रकृत्यर्थः प्रत्ययार्थश्चास्ति, न तु ताभ्यामन्यः कश्चित् प्रकृतिप्रत्ययसमुदायरूपस्य पदस्यार्थः। सातु पदस्य समुदायार्थो विशिष्टरूपो वाक्यवत्=वाक्य इव अशब्दः=शब्दवृत्त्यलभ्यः, आकाङ्क्षाभास्य इति यावत्।

शब्दन्यायविदस्तु मन्यन्ते—पदे प्रकृतिप्रत्ययादयः शिष्टैः पाणिन्यादिभिर्बहुधा स्वबुद्धिपरिकल्पितसमर्थापिताः=स्वबुद्धिपरिकल्पनेन समर्थिताः एव, न तु वास्तवाः। तेषां चार्थाः शास्त्रे तथा आचार्यस्य अर्थे शास्त्रक्रियाप्रवृत्तौ निमित्तभूताः शास्त्रीयव्यवहारनिर्वाहार्थं शास्त्रकृत्कल्पिताभ्यां व्यवहारिकाभ्यामन्वयव्यतिरेकाभ्यां कृतप्रविभागा एव शास्त्र आश्रीयन्ते। कथमिति चेत्, यतः प्रकृत्यर्थप्रत्ययार्थबुद्ध्योः समुदायार्थप्रतिपादनोपायमात्रत्वमेतत्समुदायार्थं प्रति तयोरन्वयव्यतिरेकप्रदर्शनम्। सर्वथाऽपि लौकिकस्य समुदायार्थस्य प्रतिपत्ताावियान् प्रकृत्यर्थः, इयांस्तु प्रत्ययार्थ इति भेदो नास्ति, लोकेऽप्रत्ययात्।

तथाहि—केषाञ्चिन्मते स्वार्थद्रव्यलिङ्गमात्राभिधायिनी प्रकृतिः, संख्याकर्मादीनां वाचिका विभक्तयः। प्रातिपदिकार्थे संख्याकर्मादीनां विशेष्यतया विशेषणतया वा यथासंभवं प्रातिपदिकेनाभिधानं विकल्पेन विज्ञायते। सङ्ख्याकर्मादीनां मतभेदेन प्रातिपदिकाथत्वानियमात्।

लिङ्गमपि केषाञ्चिद् मते टाबादीनां द्योत्यम्, केषाञ्चिदभिधेयम्। द्योतनमपि

**अनाविर्भूताविर्भावनम्, अव्युदासप्रसङ्गे वा प्रकारान्तरव्युदासेन कस्यचिदवधारणम्। तद्यथा—प्रतिष्ठते उत्पुच्छयतेऽभिमनायत इति। तदपि प्रसिद्धाप्रसिद्धाऽवियुतप्रयोगाणाम्। उपास्ते, प्रपचति, अधीते, अध्येतीति यथा। सहाभिधानं वा। यावको गोपायिता ब्राह्मणाधीनं जुगुप्सत इति ॥ १६४ ॥**

**अथवा संख्यावतोऽर्थस्याविभक्तोद्देशः समुदायः संसृष्टानेकशक्तिरभिधायकः। विना संख्याभिधानेन शब्दप्रवृत्तिकाले तैस्तैरभिधीयमानैः संख्याविशेषैः**

---

द्विविधम्—अनाविर्भूताविर्भावनम्, अथवा—द्वयोरव्युदासप्रसङ्गे प्रकारान्तरव्युदासेन=अनभिप्रेतप्रकारप्रतिषेधेन कस्यचिदेकस्यावधारणम्।

तयोराद्यस्योदाहरणम्—तटस्तटी तटमिति। अत्र हि विसर्गेण ङीपाऽमादेशेन च प्रातिपदिकमात्रेणानाविर्भूतस्य लिङ्गस्याविर्भावनम्।

द्वितीयस्य तूदाहरणम्—प्रतिष्ठते, उत्पुच्छयते, अभिमनायत इति। अत्र हि प्रथमे प्रयोगे प्रकर्षेण तिष्ठतीति, प्रस्थानं करोतीत्यर्थद्वयस्याप्यप्रतिषेधप्रसङ्गे आद्यार्थव्युदासेन द्वितीयार्थस्यैवावधारणम्। द्वितीयस्मिन् प्रयोगे—पुच्छमूर्ध्वं करोतीति, गर्भं ग्राहयतीति चार्थद्वये प्राप्ते फलाभावादाद्यार्थत्यागे द्वितीयार्थस्यावधारणम्।

तृतीयस्मिंस्तु प्रयोगे अभिमुखमना इवाचरतीति, अनुकूल इवाचरतीति, उत्कण्ठित इवाचरतीत्यर्थेषु प्राप्तेषु प्रकरणवशेन द्वितीयस्य तृतीयस्य वार्थस्यावधारणम्। तदप्यवधारणं प्रसिद्धप्रयोगाणामप्रसिद्धप्रयोगाणामवियुतप्रयोगाणां चेति।

तत्राद्यस्योदाहरणम्—उपास्त इति। अत्र हि सेवारूपेऽर्थे द्योत्येऽयं प्रयोगः प्रसिद्ध एव। प्रपचतीति द्वितीयस्योदाहरणम्। अत्र हि 'प्रपचति' इत्यस्य प्रभूतं पचतीत्यर्थोऽप्रसिद्धः। प्रकर्षेण पचतीत्यर्थ एव प्रसिद्धः। न वियुतो वियुक्तः प्रयोगो येषा तेऽवियुतप्रयोगा यथा—अधीते, अध्येतीति। अत्रेङिकोर्धात्वोरध्युपसर्गस्य न व्यभिचारः। तदुक्तमभियुक्तैः—इङिकावध्युपसर्गं न व्यभिचरत इति।

अथवा एकस्यैवार्थस्य प्रकृतिप्रत्ययाभ्या सहाभिधानमेव, न तु केनचिदभिधानम्, केनचिद् द्योतनमिति। तद्यथा—यावकः, गोपायिता, ब्राह्मणाधीनम्, जुगुप्सत इति। अत्र यावशब्दो यमर्थमाह तमेवार्थं कन्प्रत्ययोऽप्याह, स्वार्थे कनो विधानात्। 'गोपायिता' इत्यत्र गुप्धातुः, आयप्रत्ययश्चैकमेवार्थमभिधत्तः, स्वार्थे आयप्रत्ययविधानात्। ब्राह्मणाधीनमित्यत्राधिशब्दः खप्रत्ययश्चैकार्थाभिधायिनौ, स्वार्थे खप्रत्ययविधानात्। 'जुगुप्सते' इत्यत्रापि प्रकृतिप्रत्ययावेकार्थाभिधायकावेव, स्वार्थेऽत्र सनो विधानादिति।

अथवा—संख्याविशिष्टस्यार्थस्याविभक्तोद्देशः=अविभक्तावयवः प्रकृतिप्रत्ययसमुदायः संसृष्टानेकशक्तियुक्तोऽभिधायक इति तृतीयः पक्षो विभक्तीनां वाचकत्वद्योतकत्वपक्षौ प्रागुक्तावपेक्ष्य। अथवा संख्यायाः प्रातिपदिकार्थे उपलक्षणत्वात् संख्याभिधानेन विनैव

काककण्ठे गुणकम्बलादिवनीयैः [ वदनित्यै. ] परिच्छिन्नास्तद्वन्तोऽर्थाः स्वरूपभेद-युक्तैः समुदायैरभिधीयन्ते ॥१६५॥

ये शब्दा नित्यसम्बन्धा विवेके ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां तेषामर्थो विभज्यते ॥ १६६ ॥

भिन्नेषु कूपयूपादिवत्समुदायेषु यथायथ शब्देषु नित्यसम्बन्धेषु परि-कल्पितानामवयवानां सम्बन्धिभिरव्यभिचरितसम्बन्धानां बुद्ध्या कृतापोद्धार-प्रविवेकाणां रूपभेदप्रत्ययपरिकल्पप्रत्ययविषयाणामौपचारिकाभ्यां प्रतिपाद-नार्थमन्वयव्यतिरेकाभ्यामभिधायकत्वेन द्योतकत्वेन वा व्यभिचार[री] प्रविभागः क्रियते ॥१६६॥

ननु यदा शब्दा नित्यसम्बन्धा विवेकेन ज्ञातशक्तयः स्वार्थस्य प्रतीतौ तदा कथमेतदवगतमयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इत्याशङ्क्यापोद्धारस्यान्वयव्यतिरेकौ निमित्तमिति प्रतिपादयितुमाह— य इति ।

विवेके सति शब्दार्थविभागे कृते सति च प्रातिपदिके प्रत्यये चासत्येक-त्वादिविरहितं वृक्षत्वमात्रमवगम्यत इत्येवमन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थ-प्रविभागो व्यवस्थाप्यते ॥१६६॥

---

शब्दप्रवृत्तिकाले तैस्तैरभिधीयमानैः संख्याविशेषैः काककण्ठे गुणकम्बलादिवदनित्यैः = गुण-प्रधानः कम्बलो गुणकम्बलो वर्णकम्बल इति यावत् । काककण्ठे बद्धो गुणकम्बलो यथा-ऽनित्यस्तथाऽनित्यैः उपलक्षणीभूतैः परिच्छिन्नाः = उपलक्षिताः संख्यावन्तोऽर्थाः स्वरूपभेद-युक्तैः प्रकृतिप्रत्ययसमुदायैरभिधीयन्त इति चतुर्थः पक्ष इति ॥ १६४–१६५ ॥

ननु यदा घट इत्यादयो विभक्त्यन्ताः शब्दा नित्यसम्बन्धाः पटादिशब्देभ्यो विभक्तयन्तेभ्यो विवेकेन ज्ञातशक्तयः स्वार्थस्य प्रतीतौ फलभूतायां सत्याम्, तदा कथमेतदव-गतमयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इत्याशङ्क्य प्रकृतिप्रत्यययोस्तदर्थयोश्चापोद्धारस्यान्वयव्यतिरेकौ निमित्तमिति प्रतिपादयितुमाह—ये शब्दा इति ।

अस्यार्थः—ये विभक्त्यन्ताः शब्दाः स्वार्थे नित्यसम्बन्धा विवेके सति, प्रकृतिप्रत्ययो-स्तदर्थयोश्च विभागे सत्येव स्वार्थे ज्ञातशक्तयः, तेषामर्थोऽन्वयव्यतिरेकाभ्यां विभज्यते = सति च प्रातिपदिके प्रत्यये चैकत्वविशिष्टं वृक्षत्वमवगम्यते, असति च तस्मिन्नेकत्वादिविरहितं वृक्षत्वमात्रमवगम्यत इत्येवमन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थविभागो व्यवस्थाप्यत इति ।

अयं भावः—प्रकृतिप्रत्ययसमुदायरूपेषु कूपयूपादिवत् परस्परं भिन्नेषु स्वस्वार्थैः सह नित्यसम्बन्धवत्सु शब्देषु यथायथं परिकल्पितानामवयवानां स्वसम्बन्धिभिः स्वार्थैः,

**यत्र चाव्यभिचारेण तयोः शक्यं प्रकल्पनम् ।**
**नियमस्तत्र न त्वेवं नियमो नुट्शबादिषु ॥१६७॥**

अन्वयव्यतिरेकावर्थरूपविषयावनुगम्यमानावव्यभिचारेण यावदनुगन्तुं शक्येते तावदनुगम्येते। कूपयूपसूपेषु तु यूपसमन्वयेऽप्यर्थासमन्वयान्नानुगम्येते। 'त-थास्'शब्दादीनाम[न्य]थसंज्ञाप्रतिपादितेऽपि प्रत्ययत्वे लिङादिष्वदर्शनाद-न्वयव्यतिरेकाभ्यामर्थो न प्रकल्प्यते। तत्रापि कैश्चिदेकत्वादिनिबन्धनत्वमेव

तत्रापि शक्यत्वाशक्यत्वाभ्यामन्वयव्यतिरेकावाश्रित्य तत्प्रतिपादनं कर्तव्यमित्याह—यत्र चेति।

यत्रान्वयव्यतिरेकावुपलभ्येते तत्रैव नियमः, न त्वशक्ये विषय इत्याह—नियम इति। भवतामत्तीत्यादावसति शब्नुडादावर्थदर्शनाद् वृक्षाणां पचती-

---

प्रकृतिप्रत्ययसमुदायैर्वा सहाव्यभिचरितसंबन्धानाम्, बुद्ध्या कृत्नापोद्धाररूपप्रविभागाणाम्, प्रकृतिप्रत्यययोर्यः स्वरूपभेदस्तत्प्रत्ययरूपो यः परिकल्पप्रत्ययः = विकल्पात्मकं ज्ञानम्, विकल्पलक्षणं तु—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' (योगसूत्रम् १।६) इति। तद-विषयाणामौपचारिकाभ्याम् = व्यावहारिकाभ्याम् स्वार्थैः सहान्वयव्यतिरेकाभ्या प्रकृति-प्रत्ययसमुदायार्थप्रतिपादनार्थमभिधायकत्वेन द्योतकत्वेन वा प्रविभागः क्रियते, स च तत्समुदायव्यभिचारी, अन्यत्रापि दर्शनादिति ॥१६६॥

प्रकृतिप्रत्ययसमुदायरूपे पदे वस्तुगत्याऽखण्डेऽपि, अन्वयव्यतिरेकाभ्या प्रकृति-प्रत्ययार्थविभागो व्यवस्थाप्यत इति स्वीकारेऽपि स्वगताभ्यामव्यभिचारप्रयुक्ताभ्या शक्यत्वा-शक्यत्वाभ्यामेवान्वयव्यतिरेकावाश्रित्य प्रकृतिप्रत्ययार्थविभागप्रतिपादनं कर्तव्यमित्याह—**यत्र चाव्यभिचारेणेति।**

अस्यार्थः—यत्र चाव्यभिचारेण तयोः = अन्वयव्यतिरेकयोः प्रकल्पनं शक्यम्, तत्र नियमः = तत्रैव प्रकृतिप्रत्ययार्थविभागव्यवस्थारूपो नियमः। तेन भवतीत्यत्र भूधातुरूप-प्रकृत्यर्थः सत्ता, कर्तृसंख्याकालास्तु प्रत्ययार्थः। शप् तु तदर्थबोधे सहायभूत इत्यायातम्। वृक्षाणां भवतीत्यादौ नुट्शबादिषु तु नैवं नियमः = नैवं प्रकृतिप्रत्ययार्थविभागव्यवस्थेति।

एतदुक्तं भवति—यत्राव्यभिचारेणान्वयव्यतिरेकावुपलभ्येते तत्रैव प्रकृतिप्रत्ययार्थ-विभागव्यवस्थारूपो नियमः, न तु यत्राव्यभिचारेणान्वयव्यतिरेककल्पनाऽशक्या तस्मिन् विषये। तथा च भवतामित्यादावसति नुटि षष्ठ्यर्थदर्शनात्, अत्ति इत्यादावसत्यपि शपि कर्तृसंख्यादिरूपार्थदर्शनाद् वृक्षाणां पचतीत्यादौ यथायथं नुटः शपश्च सहायकत्वमात्रं स्थापितम्, न तु पृथगर्थतेति।

**तिङामभ्युपगम्यते। तथा कैश्चित् स्यति स्यतः स्यन्ति इत्येकमेव प्रत्ययरूपमन्वाख्यानेन प्रतिपादितम्। भाष्येऽपि भूशब्दः प्रकृतिः, अतिशब्दस्तु प्रत्यय इत्युक्तम्। अधुनादीनां चापे. [चापक्षीणरूपाणां] न रूपाणां व कश्चिदर्थः प्रकल्पितः। केवल त्वर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यत इत्युक्तम् ॥१६७॥**

**त्यादौ तस्य साहाय्यमात्रं स्थापितं न पृथगर्थतेति। उक्तं च—"भावकर्मकर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिस्तदर्थत्वात्। न विकरणार्था इति चेत्, कृताभिहितेषु विकरणाभावः,, (३।१।६७ भाष्यं द्र०) इति ॥१६७॥**

---

तदुक्तं भाष्ये—"भा ... कर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात्। विकरणार्था इति चेत् कृताऽभिहितेषु विकरणाभावः" (महा० भा० १।३।६७। वा० १--२) इति।

अस्य वार्त्तिकद्वयस्यार्थः- भावकर्मकर्तारः सार्वधातुकस्यार्थाः, संख्या तु प्रकृत्यर्थ इति चेत् एकद्विबहुषु नियमानुपपत्तिः तिङां नियमो नोपपद्यतः एकद्व्यादिसंख्यायास्तिङर्थत्वाभावादिति। विकरणार्था भावकर्मकर्तार इति चेत्, यत्र कृता भावकर्मकर्तारोऽभिहितास्तत्र विकरणाभाव इति व्यतिरेकव्यभिचारान् भावकर्मकर्तॄणां विकरणार्थत्वाभाव इति।

कारिकाशयस्तु—प्रकृतिप्रत्ययार्थतत्स्वरूपविषयावन्वयव्यतिरेकौ पदतदर्थावधारणायानुस्रियमाणौ यावदव्यभिचारेणानुसर्तुं शक्येते तावदनुस्रियेते। कूपसूपयूपेषु तु 'ऊप' इति शब्दस्वरूपे समन्वयेऽप्यर्थासमन्वयाद् व्यभिचारिणावन्वयव्यतिरेकावित्यर्थावधारणाय नानुमन्येते। त-थास-शब्दादीनामन्वर्थसंज्ञाप्रतिपादितेऽपि प्रत्ययत्वे लिङादीनां प्रयोगाभावाच्चेष्वन्वयव्यतिरेकयोरदर्शनादन्वयव्यतिरेकाभ्यां तदर्थो न प्रकल्प्यते। तत्रापि कैश्चिदेकत्वादिसंख्यामात्रवाचित्वं तिङामभ्युपगम्यते। कर्तृकालादिस्तु प्रकृतेरर्थ इति।

तथा कैश्चित्—भविष्यति, भविष्यतः, भविष्यन्ति इत्यादौ स्यति, स्यतः, स्यन्ति इत्येकमेव प्रत्ययरूपमन्वाख्यानेन व्याकरणेन प्रतिपादितम्। भाष्येऽपि भूशब्दः प्रकृतिः, अतिशब्दस्तु प्रत्यय इत्येकमेव प्रत्ययरूपमुक्तम्। अतस्तयैवान्वयव्यतिरेकाभ्यामर्थकल्पनेति। 'अधुना' इत्यादीनां चापक्षीणप्रकृतिरूपाणां प्रत्ययमात्रस्वरूपावशेषणान्वाख्यायमानानामपि वस्तुतः प्रकृतिप्रत्यययोः संमोहादन्वयव्यतिरेकयोरशक्यत्वान्न कश्चिदर्थः प्रकल्पितः। नुडादिष्वागमेषु त्वर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यत इत्युक्तम्। तेन—आगमविशिष्टस्यागमिग्रहणेन ग्रहणादागमिन एवार्थवत्त्वमागमस्य तु तस्यार्थबोधेन साहाय्यमात्रमित्युक्तप्रायमेव भवतीति ॥ १६७ ॥

**सम्भवे वाभिधानस्य लक्षणं तु न कल्प्यते ।**
**आपेक्षिक्यो हि संसर्गे नियताः शब्दशक्तयः ॥१६८॥**

अभिधानसंभवे सति यः कश्चिदपि शब्दाभिधेयमर्थमभ्युपगच्छति, न तस्य लक्षणभावाभ्युपगमो युक्तः। शब्दसामर्थ्यमेवं सति बाधितं स्यात्। इच्छातश्च सर्वस्य लक्षणत्वमभ्युपगम्येत। तस्मादागमे यस्य सम्प्रत्ययः स तस्याभिधेयत्वेन व्यवस्थाप्यते।

यद्यपि केवलानां प्रयोगेष्वदृष्टः [प्रयोग इ]त्य [व्यभिचार]संसर्गादिप्रविभागा इवावस्थिताः शक्तयः, तथापि त्वासामितरेतरानपेक्षैवाभिव्यक्तिरभ्यु-

यत्र तु पृथगेव तयोः प्रकृतिप्रत्यययोरर्थवत्त्वं दृश्यते, तत्र पृथगर्थाभिधानमेवाङ्गीकार्यम्, न तूपलक्षणार्थत्वं कल्पनीयमित्याह—**संभवा इति।**

प्रकृतिप्रत्यययोः पृथगर्थाभिधानसम्भवे प्रकृत्यर्थ एव पदवाच्यः प्रत्ययार्थस्तूपलक्ष्यमाणः, प्रत्ययार्थ एव पदवाच्यः प्रकृत्यर्थस्तूपलक्ष्यमाण इति न युक्ता कल्पना।

ननु यदि प्रकृतिप्रत्यययोः पृथक् पृथगर्थमभिधातुं शक्तिरस्ति तत्किमिति परस्परापेक्षितया स्वार्थाभिधानमित्याह—आपेक्षिक्य इत्यादि। यस्मात् संसर्गे

---

यत्र तु पृथगेव तयोः प्रकृतिप्रत्यययोरर्थवत्त्वं दृश्यते। तद्यथा—प्रत्ययरहितस्य किं शब्स्य प्रयोगो नपुंसके किमिति। प्रकृतिरहितस्य वतुपः प्रयोग इयान् —इयत् - इयतीति। एवं केवलस्य प्रत्ययस्य प्रयोगः—'व्यतिसे' इति। केवलायाः प्रकृतेः प्रयोगः—'अलेट्' इति तत्र पृथगर्थाभिधानमेवाङ्गीकार्यम्, न त्वन्यतरस्योपलक्षणार्थत्वं द्योतनार्थत्वम्—द्योतकत्वमिति यावत् कल्पनीयमित्याह—**संभव इति।**

अस्यार्थः—प्रकृतिप्रत्यययोरुभयोरप्यर्थाभिधानस्य संभवे वा—तु, तयोरन्यन्तरस्य, लक्षणत्वम्, द्योतकत्वम्, न कल्प्यते।

एतदुक्तं भवति—प्रकृतिप्रत्यययोः पृथगर्थाभिधानसंभवे प्रकृत्यर्थ एव पदवाच्यः, प्रत्ययार्थस्तूपलक्ष्यमाण इति कल्पना न युक्तेति।

ननु यदि प्रकृतिप्रत्यययोः पृथक्पृथगर्थमभिधातुं शक्तिरस्ति तत्किमिति परस्परापेक्षितया स्वार्थाभिधानमित्याशङ्क्याह—**आपेक्षिक्य इति।** हि = यस्मात्, संसर्गे = प्रकृतिप्रत्ययार्थयोः संसर्गबोधे, शब्दशक्तयः = प्रकृतिप्रत्ययशक्तयः, आपेक्षिक्यः = परस्परापेक्षावत्योऽपि, स्वग्रहेऽन्वयव्यतिरेकापेक्षिकाः, नियता एव = प्रातिस्विक्य एव, प्रतीयन्त इति शेषः। कारिकायाः परमोऽभिसन्धिस्तु-प्रकृतिप्रत्यययोः प्रागुक्तरीत्या पृथक्पृथगर्थवत्त्वदर्शनेन पृथपृथगर्थाभिधानसम्भवे सति यः कश्चिदपि पुमान् प्रकृतिप्रत्ययशब्दाभिधेयं तत्तदर्थमभ्युपगच्छति, तस्य मते पदे प्रकृतिप्रत्यययोरन्यतरस्य लक्षणभावाभ्युपगमः = द्योतकत्वाभ्युपगमः

पगम्यते। प्रतिनियमेन कृतविभागा व्यवस्थिताः शब्दानां शक्तयः प्रतिज्ञायन्ते ॥१६८॥

प्रकृतिप्रत्ययार्थयोः शब्दशक्तयोऽन्वयव्यतिरेकापेक्षिता नियता एव प्रातिस्विक्य एव प्रतीयन्त इति ॥१६८॥

**न कूपसूपयूपानामन्वयोऽर्थस्य दृश्यते।**
**अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥१६९॥**

**यदि तर्हि यावत्किञ्चित्तुल्यरूपं तस्यैकत्वमभ्युपगम्यते, यावांश्च भिन्नोऽर्थः सर्वोऽसौ भिन्नरूपनिबन्धनः प्रतिज्ञायते सत्यपि सम्बन्ध्यन्तराभेदे,**

**यत्र त्वपेक्षायामपि न पृथगर्थनोपलभ्यते तत्रापोद्धारो नाश्रयणीय इत्याह— न कूपेति। नह्येकापगमे क्वचिद् या काचिदर्थानां वेदनोपजायते ॥१६९॥**

---

न युक्तः। एवं सति हि शब्दसामर्थ्यं बाधितं स्यात्। किञ्चोभयोरपि पृथगर्थवत्त्वसंभवे इच्छति एकस्य लक्षणत्वस्वीकारे विनिगमनाविरहात् सर्वस्य लक्षणत्वम् = द्योतकत्वम् अभ्युपगम्यते। तस्मादागमे सति = यस्य शब्दस्य प्रयोगे सति यस्यार्थस्य संप्रत्ययः सोऽर्थस्तस्य शब्दस्याभिधेयत्वेन व्यवस्थाप्यते। यद्यपि प्रायेण केवलानां प्रकृतीनां प्रत्ययानां वा पदप्रयोगेष्वदृष्टः प्रयोग इत्यव्यभिचारिसंसर्गात्तत्राप्रविभागा इवास्थिताः प्रकृतिप्रत्ययशक्तयः, तथापि तत्रापि तु प्रकृतिशक्तीनां प्रत्ययशक्तीनां च इतरेतरानपेक्षैवाभिव्यक्तिरभ्युपगम्यते। यतो हि शब्दानुशासने कल्पितेनान्वयव्यतिरेकरूपप्रतिनियमेन कृतप्रविभागाः = कल्पितप्रविभागाः व्यवस्थिताः = नियताः एव प्रकृतिप्रत्ययशब्दाना शक्तयः प्रतिज्ञायन्त इति ॥१६८॥

यत्र त्वन्वयव्यतिरेकापेक्षायामपि क्रियमाणायां तद्व्यभिचारात् पृथगर्थता नोपलभ्यते। यथा कूपसूपयूपेषु ककारादिवर्णानां पृथगर्थता नोपलभ्यते, ककारसत्त्वे कूपार्थसत्त्वमित्यन्वयस्य कलशादौ व्यभिचारात्। तत्र वर्णानां पृथगर्थवत्त्वायापोद्धारो नाश्रयणीय इत्याह—**न कूपेति।**

अस्यार्थः—कूपसूपयूपानामर्थस्यान्वयो वर्णेषु ककारादिषु न दृश्यते। कलशादौ व्यभिचारात्। अतः = अन्वयव्यभिचारात्, अर्थान्तरवाचित्वं संघातस्यैव कूपशब्दादेर्न तु ककारादेर्वर्णस्येति गम्यते = अनुमीयते।

अनुमानप्रकारश्च—कूपशब्दः कूपार्थवाचकः, तदर्थान्वयव्यतिरेकानुविधायित्वात्, सामान्यव्याप्तौ घटादिपदार्थान्वयव्यतिरेकानुविधायिघटादिशब्दवदिति।

एतदुक्तं भवति—कूपादिशब्देष्वेकस्य ककारस्य 'ऊप'शब्दस्य वाऽपगमे केवलेन ककारेण 'ऊप'शब्देन वा काचिदर्थवेदना नोपजायते। अतस्तयोः पृथगर्थाभावात् कूपशब्दस्यैव वर्णसंघातरूपस्यार्थाभिधायकत्वं युक्तमिति।

**तथा सति कूपसूपयूपेषु योऽयमर्थभेदः स वर्णमात्रनिबन्धनः प्रयुज्यते। स्यादेतदेवं यदि भेदाभेदावत्र विषये स्याताम्। न त्वभिन्नमस्ति यदूपशब्दोऽनूपतद्विभागव्यवस्थां कुर्यात्। तस्यान्वयाभावाद् विषयाप्रविभागेणाव्यतिरेकेण व्यवतिष्ठत इत्यर्थान्तरनिबन्धनत्वमविभक्तावयवार्थानां समुदायानामाश्रीयते ॥१६९॥**

**अन्वाख्यानानि भिद्यन्ते शब्दव्युत्पत्तिकर्मसु।**
**बहूनां सम्भवेऽर्थानां निमित्तं किञ्चिदिष्यते ॥१७०॥**

**लौकिकस्याभिधेयस्याभेदेन सव्यापारमुपलक्षणभूतं वा निमित्तमुपादायोपादाय विशिष्टैः साधुविषयाणि निपातनेन लक्षणेन वा क्रियमाणशब्दव्युत्पत्ति-**

तदेवं शक्याशक्यावन्वयव्यतिरेकावाश्रित्यापोद्धारेणान्वाख्यानं पदभागयोः कार्यमित्युक्तम्। ततश्च किं सनिमित्तमथ निर्निमित्तमेवेत्याशङ्क्य सनिमित्तमेव पदभागयोः पदस्य चान्वाख्यानं कार्यमितीदानीमुपपादयितुमाह—**अन्वाख्यानानीति।**

---

अयं भावः—यदि तर्हि यावत् किञ्चित्तुल्यरूपं द्रव्यत्वसत्त्वादिरूपं सामान्यं तस्यैकत्वं कूपसूपयूपादिपदार्थेष्वभ्युपगम्यते ऊप'शब्दवाच्यत्वञ्च तस्येति। यावाँश्च भिन्नोऽर्थः कूपः सूपो यूपो वा, सर्वोऽसौ भिन्नरूपनिबन्धनः = भिन्नककारादिवर्णस्वरूपप्रयुक्तः प्रतिज्ञायते सत्यपि कूपसूपयूपादिशब्देषु संबन्ध्यन्तरस्य ऊपशब्दस्याभेदे, तथा सति कूपसूपयूपादिशब्देषु योऽयमर्थभेदः स वर्णमात्रनिबन्धनः प्रयुज्यते = कूपादिशब्दप्रयोगेण बोध्यते इत्युक्तं भवति। स्यादेतदेवम्, यद्यर्थयोर्भेदाभेदौ कूपसूपयूपादिशब्देषु स्याताम्, न तु—अभिन्नं सामान्यमर्थो द्रव्यत्वसत्त्वादिरूपः कूपसूपयूपादिशब्देष्वस्ति, शब्दादप्रतीतेः। येन कूपादिशब्देषु ऊप' शब्दोऽनूपतद्विभागव्यवस्थां = अनूपशब्दे या तस्य 'ऊप' शब्दस्यार्थविभागव्यवस्था, ताम् कूपसूपयूपादिशब्देष्वपि कुर्यात्। ऊपशब्दसत्त्वे द्रव्यत्वादिरूपसामान्यार्थप्रतीतिसत्त्वमित्यन्वयस्य 'अनूप' शब्देऽदर्शनेनान्वयव्यभिचारात्। अतः कूपादिशब्देषु विषयाप्रविभागेण = अर्थविभागाभावेन अव्यतिरेकेण = अवयवानपोद्धारेण वर्णसंघात एवार्थान्तरे व्यवतिष्ठत इत्येवमर्थान्तरनिबन्धनत्वम् = अर्थान्तरप्रयुक्तत्वम् अविभक्तावयवार्थानां वर्णसमुदायानामाश्रीयत इति ॥१६९॥

तदेवं शक्याशक्यावन्वयव्यतिरेकावाश्रित्य प्रकृतिप्रत्ययापोद्धारेणान्वाख्यानं पदभागयोः कार्यमित्युक्तम्। तद्यथा—शक्यावन्वयव्यतिरेकौ—भवति भविष्यतीत्यादौ। अशक्यौ कूपादिषु, सर्वं नाम धातुजमित्युक्तेः। अशक्यत्वञ्चात्र प्रकृतिप्रत्यययोः संमोहकृतं द्रष्टव्यम्। ततश्च तदन्वाख्यानं सनिमित्तमथ निर्निमित्तमेवेत्याशङ्क्य सनिमित्तमेव पदभागयोः पदस्य चान्वाख्यानं कार्यमितीदानीमुपपादयितुमाह—**अन्वाख्यानानीति।**

**कर्मसु बहुधा भिन्नान्यन्वाख्यानानि दृश्यन्ते। अनेकशक्तियुक्तेऽर्थे या काचिन्निमित्तभावेनाश्रीयमाणा शक्तिः साधुत्वान्वाख्यानेऽङ्गत्वं प्रतिपद्यते। तद्यथा वृञ्लुटितनिताडिभ्य उलच् तण्डश्च। शक्यो ह्यन्येभ्योऽपि धातुभ्यः शब्दव्युत्पत्तिकर्मण्युलच्प्रत्ययो विधातुं तण्डादेशश्च कर्तुमिति ॥१७०॥**

यत्र खलु बहूनि निमित्तानि सम्भवन्ति तत्र किञ्चिदेवानैयत्येनाश्रित्यान्वाख्यानं क्रियत इत्युच्यते ॥१७०॥

---

अस्यार्थः—शब्दाना व्युत्पत्तिकर्मसु व्युत्पत्तिक्रियासु जायमानासु, अन्वाख्यानानि = प्रकृतिप्रत्ययकल्पनरूपाणि तत्तदर्थकल्पनरूपाणि चानुशासनानि कर्तृबुद्धिप्रयुक्तेन व्याकरणभेदेन भिद्यन्ते। तद्यथा—'वृञ्लुटितनिताडिभ्य उलच् तण्डश्चे'ति (उणादि ५।८) तण्डुलशब्दो व्युत्पाद्यते। शक्यो ह्यन्येभ्योऽपि धातुभ्यस्तण्डुलशब्दव्युत्पत्तिकर्मणि उलच्प्रत्ययो विधातुं तण्डादेशश्च कर्तुमिति। वक्ष्यति चाग्रे मूल एव—

> कैश्चिन्निर्वचनं भिन्नं गिरतेर्गजतेर्गमेः।
> गवतेर्गदतेर्वाऽपि गौरित्यत्रानुदर्शितम् ॥ (वा० प० २।१७४) इति।

एवञ्च शब्दव्युत्पत्तिनिमित्तानां बहूनामर्थानां संभवे किञ्चिदेव निमित्तं व्याकरणे शब्दव्युत्पत्ताविष्यते। 'उच्यते' इति वा पाठः। यथा गोशब्दव्युत्पत्तौ गमनम्।

एतदुक्तं भवति—यत्र खलु शब्दव्युत्पत्तौ बहूनि निमित्तानि संभवन्ति, तत्रानैयत्येनावस्थितं किञ्चिदेव निमित्तमाश्रित्यान्वाख्यानं क्रियत इति व्युत्पत्तिनिमित्तेऽर्थेऽनास्था दर्शिता, प्रवृत्तिनिमित्तस्यैवार्थस्य नियतत्वात्। गोशब्दस्य हि शयानायामपि गवि प्रयोगो दृश्यत इति गोशब्दस्य गमनरूपं व्युत्पत्तिनिमित्तमनियतम्। गोत्वरूपं प्रवृत्तिनिमित्तं तु नियतम्। तदुक्तमभियुक्तैः = 'अन्यद्धि शब्दाना व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तमिति' (साहित्यदर्पण २ परि०)।

अयं भावः—गोपदस्याभिधेयं द्विविधम्। लौकिकमलौकिकञ्च। एवं सर्वस्य पदस्य। तत्र गोपदस्य लौकिकोऽभिधेयः सास्नादिमान् भावः। अलौकिकस्तु गमनक्रियाविशिष्टस्तदुपलक्षितो वा। तत्र लौकिकस्याभिधेयस्याभेदेन सव्यापारं = व्यावृत्तिक्रियासहितम् विशेषणमिति यावत् उपलक्षणभूतं वाऽलौकिकमर्थं व्युत्पत्तिनिमित्तमुपादायोपादाय निपातनेन लक्षणेन = प्रत्ययागमादेशादिविधायकसूत्रेण वा विशिष्टैः पुरुषैः = पाणिन्यादिभिः क्रियमाणशब्दव्युत्पत्तिकर्मसु बहुधा भिन्नानि साधुविषयाण्यन्वाख्यानानि दृश्यन्ते। एवञ्च बहुधा भिन्नैरन्वाख्यानैरनेकशक्तियुक्तेऽर्थे प्रतीते या काचिन्निमित्तभावेनाश्रीयमाणा शक्तिः साधुत्वान्वाख्यानेऽङ्गत्वं प्रतिपद्यते। तद्यथा—'वृञ्लुटितनिताडिभ्य उलच् तण्डश्च' शक्यो ह्यन्येभ्योऽपि धातुभ्यस्तण्डुलशब्दव्युत्पत्तिकर्मण्युलच्प्रत्ययो विधातुं तण्डादेशश्च कर्तुमिति ॥१७०॥

वैरवासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित्कथञ्चिदाख्याता निमित्तावधिसङ्करैः ॥१७१॥

वीरकर्म वैरम्, वीरेषु भवं वैरम्, वसिष्ठेन दृष्टं प्रोक्तं वा वासिष्ठम्, वसिष्ठशब्दोऽस्मिन् वर्तत इति वासिष्ठम् गिरौ डश्छन्दसि गिरिशः, गिरौ शेत इति वा, गिरौ शिरा [शिरो यस्य] इति वा, ऐकागारिकट् चौरे, ऐकास्सोढाहिंसोरैकागारिकत्विति [एकागारं सोढा, एकमसहायमगारं प्रयोजनमस्य जिघांसोरैकागारिक इति, मुमुषिषोः] ऐकागारिक इति वा। तथा तप्पर्वमरुद्भ्याम्, ददाति, वृत्तं चेति निमित्तभूतानामर्थानां प्रकृतिप्रत्ययावधीनां वाऽनियमेनान्वाख्यातारः प्रवृत्ताः ॥१७१॥

एतदेव दर्शयितुमाह—वैरेति। वीरस्येदं वैरं वीराया वा, तथा वसिष्ठस्येदं वसिष्ठेन कृतं प्रोक्तं वा वासिष्ठम्, गिरौ शेते इति 'गिरौ डश्छन्दसि' (३।२।१५-वा०) इति डप्रत्ययेऽथवा गिरिं श्यतीति 'आतोऽनुपसर्गे कः' (३।२।३) इति के गिरिशः; इत्येवं निमित्तावधिसाङ्कर्येणान्वाख्यानं कृतम् ॥१७१॥

---

अनियतनिमित्तकं शब्दानां साधुत्वान्वाख्यानमित्येतदेव दर्शयितुमाह- वैरेति।

अस्यार्थः—वैर-वासिष्ठगिरिशास्तथैकागारिकादयः शब्दाः कैश्चिदन्वाख्यातृभिः निमित्तानामर्थानां प्रकृतिप्रत्ययरूपाणाञ्चान्वाख्यानावधीनां सङ्करैः = भिन्नानामेकत्र समावेशरूपैः, कथञ्चित् साधुत्वेनाख्याताः। अत्र कथञ्चिदित्युक्तिरेषां निमित्तावधीनां लौकिकार्थव्यभिचारित्वादिति।

एतदुक्तं भवति—वीरस्येदं वैरं वीराया वा। तथा वसिष्ठस्येदम्, वसिष्ठेन कृतम्, प्रोक्तं वा वासिष्ठम्। गिरौ शेत इति 'गिरौ डश्छन्दसि' इति डप्रत्ययेऽथवा गिरिं श्यतीति 'आतोऽनुपसर्गे कः' (३।२।३) इति के गिरीश इत्येवं निमित्तावधिसाङ्कर्येणान्वाख्यानं शास्त्रेषु कृतं वर्तत इति।

अयं भावः—वीरकर्म वैरम्, वीरेषु भवं वैरम्, वसिष्ठेन दृष्टं प्रोक्तं वा वासिष्ठम्, वसिष्ठशब्दोऽस्मिन् वर्तत इति वासिष्ठम्, गिरौ डश्छन्दसि, गिरिशः, गिरौ शेते इति वा गिरौ शिरो यस्य इति वा, ऐकागारिकट् चौरे, एकागारं सोढा, एकमसहायमगारं प्रयोजनमस्य जिघांसोरैकागारिक इति, मुमुषिषोरैकागारिक इति वा। अत्र द्वितीयार्थे जिघांसुरपि चौर एव ग्राह्यः। सूत्रे चौरार्थे एवैकागारिकस्य निपातनात्। तथा—तप्पर्वमरुद्भ्यामिति प्रकृतिप्रत्ययवधीनाम्, ददाति, वृत्तञ्चेति निमित्तभूतानामर्थानां वाऽनियमेनान्वाख्यातारः प्रवृत्ता इति अन्वाख्यानस्यानियतनिमित्तकत्वमत्र द्रष्टव्यमिति ॥१७१॥

यथा पथः समाख्यानं वृक्षवल्मीकपर्वतैः ।
अविरुद्धं गवादीनां भिन्नैश्च सहचारिभिः ॥१७२॥

एकस्य हि मार्गादेः प्रतिपत्तव्यस्यार्थस्य कश्चिदन्वाख्याता वृक्षेणान्वाख्यानमपरो वल्मीकेनान्यः पर्वतादिभिः करोति । सर्वेषां हि तेषां सन्निधानात् प्रतिपादकत्वमप्रतिषिद्धम् । गवादीनां चार्थानां सम्बन्धिभिर्जातिगुणस्वाङ्गसंयोजनादिभिः सर्वथा प्रतिपादनं क्रियते ॥१७२॥

ननु नियतमेव निमित्तमत्र किञ्चिदुच्यतामित्याशङ्क्योपायानामनियतत्वादनियतमिति प्रतिपादयितुमाह—यथेति । यथा वृक्षादिभिर्भिन्नैरुपायभूतैरेव कस्यचित्पथः समाख्यानमविरुद्धं तथा गवादीनां शब्दानां भिन्नैरेव सहचारिभिरन्वाख्यानमिति बोद्धव्यम् ॥१७२॥

अन्यथा च समाख्यानमवस्थाभेददर्शिभिः ।
क्रियते किंशुकादीनामेकदेशावधारणात् ॥१७३॥

अर्थस्य चावस्थाभेदा बहवः सन्ति येन च योऽवस्थाभेदः परिदृष्टिस्तेनैवासौ तत्समाख्यानं करोतीत्याह—अन्यथा चेति ।

किंशुको नेति किंशुकशब्दं प्रयुञ्जत इति भिन्नमेव निमित्तम् ॥१७३॥

---

ननु नियतमेव व्युत्पत्तिनिमित्तमत्र किञ्चिदुच्यतामित्याशङ्क्योपायानां प्रकृतिप्रत्ययापोद्धारादिकल्पनारूपाणामनियतत्वादनियतं व्युत्पत्तिनिमित्तमिति प्रतिपादयितुमाह—**यथेति**

अस्यार्थः—**यथा** उपायभूतैर्वृक्षवल्मीकपर्वतैर्भिन्नैरेव कस्यचित्पथः समाख्यानमविरुद्धम्, तथा गवादीनाम्—गवादिशब्दानाम्, भिन्नैश्च—भिन्नैरेव, सहचारिभिः—स्वार्थगोत्वादिसामानाधिकरण्यैर्गमनादिभिरनियतैरन्वाख्यानमविरुद्धमिति द्रष्टव्यम् ।

अयं भावः—यथा एकस्यैव हि मार्गादेः प्रतिपत्तव्यस्य ज्ञातव्यस्य अर्थस्य कश्चिदन्वाख्याता वृक्षेणान्वाख्यानमपरो वल्मीकेनान्यः पर्वतादिभिः करोति । सर्वेषां हि तेषां प्रतिपादकत्वमप्रतिषिद्धम्, सन्निधानात्; तथा गवादीनामर्थानामपि स्वसम्बन्धिभिर्जातिगुणस्वाङ्गसंयोजनादिभिर्गवादिशब्दव्युत्पत्तिनिमित्तैः सर्वथा प्रतिपादनं क्रियते । स्वाङ्गसंयोजनं सस्थानमिति ॥१७२॥

किञ्चार्थस्य बहवोऽवस्थाभेदाः सन्ति, नये चान्वाख्यात्रा योऽवस्थाभेदः परिदृष्टस्तेनैवासौ तदन्वाख्यानं करोतीत्याह—**अन्यथा चेति** ।

अस्यार्थः—अर्थस्य अवस्थाभेददर्शिभिरन्वाख्यातृभिरन्यथा च = अवस्थाभेददर्शनेन

**कश्चिद्धि काञ्चिच्छक्तिं पश्यति। स यथादर्शनं तद्व्याचष्टे। पदार्थे वाक्यार्थे वा तुल्यरूपमपि पदं क्वचिदेव कयाचिच्छक्त्यानुग्रहं करोति। ततश्च वाक्यात् पदस्यापोद्धारे क्रियमाणे सा शक्तिर्निमित्तत्वेनाश्रीयते। नियतकालावधयो वा शक्तिविशेषाः प्रतिकालं केचिच्छब्दविशेषेणोपादीयमानाः साधुत्वे निमित्तत्वेनावतिष्ठन्ते। ते च प्रतिकालं तथैवान्वाख्यातृभिः शिष्टैः परिगृह्यन्ते। पर्य्यायेण समुच्चिता विरोधिन्य एकस्यापरिमाणाः शक्तयो रूपभेदं दर्शयन्ति, तत्र च विरुद्धैर्निमित्तैरुपलक्षणं किंशुकानामिव कालभेदे शक्तौ कस्याश्चिच्छब्दस्य व्यवस्थायां न विरुध्यते। ॥१७३॥**

---

अन्यथा अन्यथा च, तद्वाचकशब्दस्य समाख्यानम् = सम्यक्त्वस्य साधुत्वस्यान्वाख्यानं क्रियते। तद्यथा—किंशुकादीनाम्—पलाशादिवाचककिंशुकादिशब्दानाम्, किंशुको न पलाशे, किंशुकेन पलाशे इति वा वाक्यैकदेशस्य किंशुकशब्दस्यावधारणात्—तद्वाक्यात्पृथक्करणात्। अत्र ल्यब्लोपे पञ्चमी। समाख्यानं क्रियते।

एतदुक्तं भवति—कश्चिदन्वाख्याता फलशून्यस्य पलाशवृक्षस्य शुकाभाववत्त्वावस्था दृष्ट्वा तद्बाधकात्—किंशुकेन पलाशे इति, किंशुको न पलाशे इति वा वाक्यात् तदेकदेशं किंशुकशब्दं पृथक्कृत्य पलाशेऽन्वाचष्ट इति सर्वेषां पर्यायशब्दानां भिन्नमेव व्युत्पत्तिनिमित्तम्। अत एव वियोगिना पलाशनरूपं निमित्तमाश्रित्य पलाशशब्दो नैषधे व्युत्पादितः। नैषधीयचरिते प्रथमसर्गे—

स्मरार्धचन्द्रेषुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषां पलाशनात्।
स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम् ॥इति॥

प्रवृत्तिनिमित्तं त्वेकमेव सर्वपर्यायानुगतमिति।

अयं भावः—कश्चिद्धि अन्वाख्याता अर्थेऽनेकशक्तिसत्त्वेऽपि काञ्चिदेव शक्तिं पश्यति। स आत्मनो यथादर्शनं तद्वस्तु दृष्ट्वा शक्तिं निमित्तीकृत्य शब्दविशेषेण व्याचष्टे। पदार्थे वाक्यार्थे वा=च तुल्यरूपमपि पदं क्वचिदेवार्थे कयाचिच्छक्त्याऽनुग्रहं करोति। पदस्यार्थेऽनुग्रहश्च तद्बोधकत्वरूपः। यथा—श्वेतः अलंबुसानाम् इत्यादिकं पदं पदार्थे वाक्यार्थे च तुल्यरूपम्। ततश्च वाक्यात्पदस्यापोद्धारे क्रियमाणे सा शक्तिर्निमित्तत्वेनाश्रीयते। अथवा नियतकालावधयः—अर्थस्य शक्तिविशेषा इति कालभेदेन केचित् शब्दविशेषेणोपादीयमानाः शब्दस्य साधुत्वे निमित्तत्वेनावतिष्ठन्ते। ते च शक्तिविशेषाः कालभेदेन तथैव तदर्थे तच्छब्दस्य साधुत्वे निमित्तत्वेनैव अन्वाख्यातृभिः शिष्टैः परिगृह्यन्ते। तन्निमित्ताभावेऽपि—एकस्यार्थस्यापरिमाणाः कालभेदेन समुच्चिताः समुदिताः परस्परं विरोधिन्यः शक्तयस्तत्तदर्थबोधाय व्यवहारे शब्दस्वरूपभेदं पर्यायेण दर्शयन्ति। तत्र च कस्याञ्चिच्छक्तौ शब्दस्य व्यवस्थायां सत्यां कालभेदे विरुद्धैर्निमित्तैस्तदर्थस्योपलक्षणं किंशुकानामुपलक्षणमिव न विरुध्यते। तद्यथा—किंशुके शुकः शेते इत्यत्र किंशुकशब्दस्य व्युत्पत्तिनिमित्तं शुकाभाववत्त्वं बाधितमिति पलाशत्वजातिरूपेऽर्थे शक्तावत्र व्यवस्थितताया पलाशे उपलक्षणम्। तथा गौः शेते इत्यत्र गोशब्दव्युत्पत्तिनिमित्तं गमनमपि गोपदार्थे उपलक्षणमेवेति॥ १७३॥

**कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः ।**
**गवतेर्गदतेर्वापि गौरित्यत्रानुदर्शितम् ॥१७४॥**

**यथैव हि[गवि] गमिक्रिया जात्यन्तरैकार्थसमवायिनीभ्यो गमिक्रियाभ्योऽत्यन्तभिन्ना तुल्यरूपत्वविधौ त्वन्तरेणैव गमिमभिधीयमाना गौरिति शब्दव्युत्पत्तिकर्मणि निमित्तत्वेनाश्रीयते, तथैव गिरति गर्जति गवतीत्येवमादयः साधारणाः सामान्यशब्दनिबन्धाः क्रियाविशेषास्तैस्तैराचार्यैर्गोशब्दव्युत्पादनक्रियायां परिगृहीता.। व्युत्पत्तिवाक्यस्थेभ्यो व्या[ख्या]ख्यातपदेभ्यः सरूपान् वर्णानुपादाय तत्सङ्घात इव [प]थि पदमन्वाख्यायते यावद्धात्वर्थमात्रा सनादिमात्रा वा यास्वृक्षु वा [याज्यानुवाक्यास्वृक्षु वा] वाक्यार्थानुग्राहिणी**

एतदेव व्यक्तीकर्तुमाह—कैश्चिदिति ।

गोलक्षणस्यार्थस्य नानाविधा अवस्था दृष्टाः, तदनुगमेनैवार्थमाहुराचार्याः ॥१७४॥

---

पूर्वकारिकोक्तमेवार्थं व्यक्तीकर्तुमाह—कैश्चिदिति ।

अस्यार्थ—कैश्चिदाचार्यैर्गौरित्यत्र गिरतेर्गर्जतेर्गमेर्गवतेर्गदतेर्वाऽपि धातुरूपप्रकृतिभेदेन भिन्नं निर्वचनमर्थविशेषे साधुत्वव्युत्पादनमनुदर्शितमिति । एतदुक्तं भवति—गोरूपस्यार्थस्य नानाविधा अवस्था दृष्टाः तदनुगमेनैव गोशब्दस्य नानाविधानर्थानाहुराचार्या इति ।

अयं भावः—यथैव हि गवि गमिक्रिया जात्यन्तरैकार्थसमवायिनीभ्यः = महिष्यादिसमवेताभ्य. गमिक्रियाभ्योऽत्यन्तभिन्न', या महिष्यादिसमवेतगमिक्रियातुल्यरूपत्वविधौ त्वन्तरेणैव गमिम् = गमधातुमन्तरेणैव विनैव क्रियासामान्यबोधकेन चेष्टधात्वादिनाऽभिधीयमाना सैव गौरिति शब्दव्युत्पत्तिकर्मणि निमित्तत्वेनाश्रीयते । तथैव गिरति गर्जति, गदति इत्येवमादयः क्रियाविशेषा ये जात्यन्तरसाधारणाः सामान्यशब्दनिबन्धनाः = स्वनादिधातुवाच्याः ते तैस्तैराचार्यैर्गोशब्दव्युत्पादनक्रियाया परिगृहीताः । व्युत्पत्तिवाक्यस्थेभ्यो व्याख्यातपदेभ्यः सरूपान् = सदृशान् वर्णान् उपादाय तत्संघात इव पदं पथि = व्युत्पत्तिमार्गे अन्वाख्यायते । यावत् प्रकृतिधात्वर्थमात्रा मात्रा = स्वरूपम् सनादिमात्रा प्रत्ययमात्रा वा वाक्यासु = पुरोवाक्यायाज्यानुवाक्यादिषु ऋक्षु वा वाक्यार्थानुग्राहिणी लभ्यते । यया तु धात्वथमात्रया प्रत्ययेन वा येन वाक्यार्थो नानुगृह्यते, तया धात्वर्थमात्रया प्रत्ययेन वा तेन व्युत्पत्तिमार्गे पद नान्वाख्यायते ।

लभ्यते । यथा ह्यादित्य इत्येकस्मिन्नेवाम्नायवाक्ये तद्धितार्थेनापत्येन सम्बन्धो दृश्यते । वाक्यान्तरसम्बन्धिनि तु तस्मिन्नादित्यशब्दे निर्वचनान्तराणि क्रियन्ते । यदि निर्वचनेषु विषयानपेक्षं व्युत्पत्तिमात्रं क्रियते, सर्वो रूढिशब्दः सर्वेभ्यो धातुभ्यो रूढानुगममात्रायां तण्डुलादिवच्च प्रकृत्यादेशान् कृत्वा व्युत्पाद्येत । सर्वत्र हि रूढ्यर्थे सर्वनिमित्तं सम्भवति ।।१७४।।

**गौरित्येव स्वरूपाद्वा गोशब्दो गोषु वर्तते ।**
**व्युत्पाद्यते न वा सर्वं कैश्चिच्चोभयथेष्यते ॥१७५॥**

एवं शब्दस्य प्रकृतिवाच्यमेव निमित्तं ततश्च बहुविधनिमित्तप्रदर्शनम् । इदानीं स्वरूपमेव शब्दानां प्रवृत्तिनिमित्तमन्वाख्यानायोपादीयत इति पक्ष प्रदर्शयितुमाह—गौरित्येवेति । अथ कस्माद् गौरित्युच्यते गौरित्येव हि गौर्गवि

यथा हि एकस्मिन् आम्नायवाक्य एवादित्य इत्यत्र तद्धितार्थेनापत्येनादिति-रूपस्य प्रकृत्यर्थस्य सम्बन्धो दृश्यते । वाक्यान्तरसम्बन्धिनि तु तस्मिन्नेवादित्यशब्दे आदित्यो देवताऽस्य, आदित्यस्यायम्, आदित्ये भवमित्यादीनि निर्वचनान्तराणि क्रियन्ते ।

यदि निर्वचनेषु प्रकृतवाक्यार्थरूपविषयानपेक्षं – प्रकृतवाक्यार्थाननुग्राहकम् व्युत्पत्ति-मात्रं क्रियते, तदा रूढानुगममात्रायां सत्याम् = रूढस्यार्थस्य सम्बन्धलेशे सति, मात्रा-शब्दोऽत्र लेशे सर्वो रूढिशब्दः सर्वेभ्यो धातुभ्यस्तण्डुलादिशब्देषु तृन्तनादिरूपायाः प्रकृते-स्तण्डाद्यादेशानिव प्रकृत्यादेशान् कृत्वा प्रत्ययो व्युत्पाद्येत । सर्वत्र हि रूढ्यर्थे सर्वस्य शब्दस्य व्युत्पादननिमित्तमर्थः सम्भवतीति ॥१७४॥

एवं शब्दस्य प्रकृतिवाच्यमेव निमित्तम् । ततश्च प्राग्गोशब्दस्य बहुविधनिमित्त-प्रदर्शनम् । इदानीं स्वरूपमेव शब्दानां प्रवृत्तिनिमित्तमन्वाख्यानायोपादीयत इति पक्षं प्रदर्शयितुमाह—**गौरित्येवेति** ।

अस्यार्थः--वा=अथवा, गौरित्येव प्रतीयमानं गोशब्दस्वरूपं प्रवृत्तिनिमित्ती-कृत्य = स्वरूपादिति ल्यब्लोपे पञ्चमी गोशब्दो गोषु वर्तते = प्रवर्तते । एवञ्च सर्वः शब्दो-न वा = नैव, व्युत्पाद्यते । 'अव्युत्पन्नानि सर्वाणि प्रातिपदिकानि' इति पक्ष इति भावः ! कैश्चिच्चाचार्यैर्गोशब्दः उभयथा = उभयप्रकारेण स्वरूपं वाच्यञ्च निमित्तमादाय गोषु प्रवर्तमान इष्यत इति सर्वाणि प्रातिपदिकानि व्युत्पन्नानि तेषां मत इति भावः ।

एतदुक्तं भवति—औक्थिक्यानां मते सर्वाणि प्रातिपदिकान्यव्युत्पन्नानि । तदुक्तम्- अथ कस्माद् गौरित्युच्यते । गौरित्येव हि गौर्गवि वर्तत इति ।

अपरे वाचार्य्या औक्थिक्यादयो गौः कस्माद् गौरित्येव गौरिति निर्व-चनमाहुः। गोशब्दवाच्यो गोशब्देन नित्यसम्बद्धः। तस्माद् गौरिति वाक्यार्थे पदार्थमात्राशक्तिविशेषसन्निवेशनार्थं विशिष्टं वक्ष्यामीति व्युत्पत्तिरारभ्यते। अजाश्वो वा पृथू[द]कं वा पादीयं भृत्यभरणीय इत्येवमादिषु। भाष्ये तु द्वावपि पक्षावेकैकस्मिन्नेव कार्यार्थमाश्रितौ। कश्चिद्धि परमार्थमेव निश्चित्य शास्त्रव्यवहारो व्यवतिष्ठते। कश्चित् साधुप्रतिपादनोपायं शास्त्रसमयमेवा-पेक्षते। शास्त्रगतो व्यवहारस्तत्रापरमार्थो धातुप्रत्ययादिभेददर्शनं च। एक-त्वादिवृत्तिभेदस्तु तदा यो यथैव धातुरूपाणि तथायुम्पगम्यते [भ्युपगच्छति]। व्यवहारपक्षे तु धातवोऽपि कैश्चिद्वर्णाश्च धात्वन्तरेभ्यो वर्णान्तरेभ्यश्च प्रकृति-प्रत्ययाद्यनुगमेन व्युत्पाद्यन्ते ॥१७५॥

वर्तत इत्यौक्थिक्याः। अतश्च स्वरूपमात्रप्रयुक्ताः सर्वे शब्दा इत्यव्युत्पत्तिपक्ष एवेत्याह—व्युत्पाद्यते न वा सर्वमिति। कैश्चित् स्वरूपं वाच्यं च निमित्तमुच्यत इत्याह—कैश्चिच्चेति। एवं सनिमित्तमन्वाख्यानं निमित्तं च वाच्यं बहुधा कैश्चित् कथञ्चित् किञ्चिदुक्तं स्वरूपं निमित्तमुभयमेव वेति दर्शितम् ॥१७५॥

---

अस्यार्थः—गौः = गोशब्दः, गौरित्येव हि = गोशब्दस्वरूपं प्रवृत्तिनिमित्तमादायैव हि, गवि वर्तते = प्रवर्तत इति। अतश्च स्वरूपमात्रप्रयुक्ताः सर्वे शब्दा इत्यव्युत्पत्तिपक्ष एवेति। एतदभिप्रेत्योक्तम्—व्युत्पाद्यते न वा सर्व इति। कैश्चित्तु शब्दस्वरूपं वाच्यञ्च व्युत्पत्तिनिमित्तमित्युच्यते। तदभिप्रेत्योक्तम् कैश्चिच्चेति। एत्र पक्षद्वयेऽपि सनिमित्त-मन्वाख्यानम्। वाच्यरूपं निमित्तञ्च बहुधा कैश्चिद् कथञ्चित् किञ्चिदुक्तम्। एवं स्वरूपं निमित्तम्, उभयमेव वा निमित्तमिति पक्षद्वयं दर्शितमिति।

अयं भावः—अपरे त्वाचार्या औक्थिक्यादयः—गौः कस्माद्, गौरित्येव गौरिति निर्वचनमाहुः। यतो गोशब्दस्य वाच्यार्थो गोशब्देन नित्यसंबद्धस्तस्माद् गच्छतीति क्रियारूपवाक्यार्थे पदार्थमात्रा पदार्थस्वरूपविषयकशक्तिविशेषस्य संनिवेशार्थं गौरति शब्दस्वरूपविशिष्टमर्थं गोशब्देन वक्ष्यामि बोधयिष्यामि इति बुद्ध्या गोशब्दस्य गच्छति-त्यर्थे व्युत्पत्तिरारभ्यते। तद्यथा—गोशब्दादन्यत्रापि न जायत इति वाक्यार्थे अजापदस्य शक्तिः, अजापदस्वरूपञ्च प्रवृत्तिनिमित्तम्। अश्नुत इति वाक्यार्थेऽश्व इति वा। पृथूदकेति समासरूपपदस्यापि पृथु उदकं यस्मिन् वर्तत इति वाक्यार्थे शक्तिः। पादीयमिति तद्धित-पदस्यापि पादस्यायमिति, पादे भवमित्यादिरूपे च वाक्यार्थे शक्तिः। कृदन्तस्य भृत्यपदस्य भरणीयपदस्य च भ्रियत इति वाक्यार्थे शक्तिर्व्युत्पादिता शास्त्रे एवमादिषु।

भाष्ये तु—द्वावपि पक्षौ = व्युत्पत्त्यव्युत्पत्तिपक्षौ एकस्मिन् एकस्मिन् शब्दे एव कार्यार्थमाश्रितौ। तद्यथा—शङ्खपदेऽव्युत्पत्तिपक्ष आश्रितः खस्येनादेशाभावाय। नप्त्रादिषु

इदानीं किं भिन्नमेव रूपं शब्दस्य, आहोस्विदभिन्नमिति विचार्यते। यदि भिन्नमेव तदा गमनं गरलं गज इत्यादिषु गादीनां भिन्नत्वाद्भेदेनैवोपादानं प्राप्नोति, ततश्चानन्त्यादशक्यत्वमन्वाख्यानस्येत्याह—

**सामान्येनोपदेशश्च शास्त्रे लघ्वर्थमाश्रितः।**
**जात्यन्तरवदस्यापि विशेषाः प्रतिपादकाः ॥१७६॥**

---

च व्युत्पत्तिपक्ष आश्रितो नप्त्रादिग्रहणस्य नियमार्थत्वोपपत्तय इति। कश्चिद्धि शास्त्रव्यवहारः परमार्थमेवाखण्डस्य पदस्यार्थं निश्चित्य व्यवतिष्ठते = व्यवस्थितो भवति; ततोऽव्युत्पत्ति-पक्षोऽवतरति। कश्चित्तु शास्त्रव्यवहारः शब्दसाधुत्वबोधनार्थोपायम्, तं शास्त्रसमयमेव प्रकृतिप्रत्ययविभागान्वाख्यानरूपमपेक्षत इत्यतो व्युत्पत्तिपक्षावतारः। तत्र शास्त्रगतः प्रागुक्तो व्यवहारोऽपरमार्थः, लोकेऽप्रत्ययाद् धातुप्रत्ययादिभेददर्शनञ्चापरमार्थम्।

ननु यद्यव्युत्पत्तिपक्षस्तदैकत्वशब्दे तद्धितरूपावृत्तिः, राजपुरुषपदे तु समासरूपेत्येव-मादिक एकत्वादौ वृत्तिभेदो नोपपद्यते, अवयवभेदप्रयुक्तो हि वृत्तिभेद इति चेन्न; यत एक-त्वादिवृत्तिभेदस्तु तदा भवति यदा योऽव्युत्पत्तिपक्षाभ्युपगन्ता यथैव धातुरूपाणि तथैवाभ्यु पगच्छति, न धातुरूपाणि पच्यादिप्रकृतिरूपाणि प्रत्ययान्तरूपाणि पचत्यादीनि वा प्रकृति-प्रत्ययविभागान्वाख्यानेन व्युत्पादयति। ततश्चाव्युत्पत्तिपक्षे स्वरूपभेदकृत एव वृत्तिभेदो न त्ववयवभेदकृत इति न पूर्वोक्तशङ्कावतार इति।

व्यवहारपक्षे तु = व्युत्पत्तिपक्षे तु कैश्चिद्धातवोऽपि वर्णाश्च धात्वन्तरेभ्यो वर्णान्त-रेभ्यश्च प्रकृतिप्रत्ययाद्यनुगमेन व्युत्पाद्यन्ते। तद्यथा—संग्राम युद्धे इति धातोः समिति ग्रामेति च विभागं कृत्वा तयोरपि प्रत्ययविभागेनान्वाख्यानं क्रियते। एवं पचादिधातोरपि नामपदवद् व्युत्पादनं संभवत्येव। कादिवर्णानामपि अकारादिस्वरसमभिव्याहृतानां काञ्चित् प्रकृतिं वर्णान्तरञ्च प्रत्ययं कल्पयित्वा व्युत्पादनं संभवतीति ।।१७५।।

इदानीमिदं विचार्यते— किं प्रत्युच्चारणं भिन्नमेव रूपं शब्दस्य, आहोस्विदभिन्न-मिति। यदि भिन्नमेव, तदा गमनं गरलं गज इत्यादिषु भिन्नेषु पदेषु गादीनां वर्णानां भिन्नत्वाद् प्रत्युच्चारणमेकत्वेनाभिमतस्यापि गवादिशब्दस्य वर्णभेदाद् भेदेनैवोपादानं = ग्रहणम्, ज्ञानम् प्राप्नोति। ततश्च गोशब्दस्य प्रत्युच्चारणं सारूप्येऽप्यानन्त्यादज्ञानेना-नन्वाख्यानस्याशक्यत्वमित्याशङ्कयाह— **सामान्येनेति**।

अस्यार्थः—चशब्दस्त्वर्थे शास्त्रपदोत्तरं द्रष्टव्यः। शास्त्रे तु लघ्वर्थम्— प्रत्युच्चारणं भिन्नानां शब्दानामनन्तानां लाघवेनान्वाख्यानार्थम्, सामान्येनोपदेशः शब्दगतमग्निशब्द-त्वादिरूपं सामान्यं पुरस्कृत्याग्न्यादिशब्दोपदेश आश्रितः। तद्यथा—अग्निशब्दत्वरूपस्य सामान्यस्य 'अग्नेर्ढक्' इत्यत्र भावप्रधानो निर्देशो न तु अग्निशब्दरूपस्य विशेषस्येति। तथा

इह रूपानुगमेनार्थानुगमेन वा यावत्सामान्येनोपदेष्टुं शक्यते तावदुपदिश्यते। विशेषस्त्वर्थविषयो रूपविषयो वा जात्यन्तरयुक्तमिवान्यं शब्दमयमिव चार्थं प्रतिपादयति। तत्र यो रूढिविषयो गम्यर्थः, नासौ प्राकृते गमनमात्रे वर्तते। यथैव स्रवति स्प [ स्य ]न्दते प्लवते पतति गतिसामान्येऽपि पठिता गतिविशेषं सामान्यमात्रयाऽनुगम्यमानं स्वभावादवलम्बन्ते, तथा गौरित्यत्र प्रतिपत्तव्यम्। न चावश्यमत्र गमिः पादविहरणे क्रियते। एवं यावति [ती]

शब्दभेददर्शने भिन्नानां सामान्यसमाश्रयेण लाघवादुपदेशः शास्त्रे क्रियते, विशेषा ये तेऽस्यैव जात्यन्तरवत् प्रतिपादका उच्यन्ते ॥१७६॥

---

च सामान्यलक्षणया प्रत्यासत्त्या सर्वेषामग्निशब्दानां ज्ञानसम्भवाद् अग्निशब्दस्वरूपे सामान्ये ढगरूपकार्यासम्भवाच्च आवृत्त्या प्रतिलक्ष्यं लक्षणोपप्लवेन सर्वेभ्योऽग्निशब्देभ्यो ढक्प्रत्ययसंभवो मुख्येभ्यः।

ननु कुतस्तर्हि सामान्यं साक्षादनिर्दिश्य अग्नेरिति विशेषनिर्देश इत्याशङ्क्याह—जात्यन्तरवदिति। जात्यन्तरस्येवेति षष्ठ्यर्थे वतिः। जात्यन्तरवद्—जात्यन्तरस्य घटत्वादेरिव, अस्यापि—शब्दगतस्य अग्निशब्दत्वादिरूपस्य सामान्यस्य, विशेषा अग्निशब्दादयो व्यक्तिविशेषाः प्रतिपादका व्यञ्जका इति। तथा चाग्निशब्दादिरूपो व्यक्तिनिर्देशोऽग्निशब्दत्वादिरूपसामान्यव्यञ्जनायेति हृदयम्।

एतदुक्तं भवति—शब्दभेददर्शने भिन्नानां शब्दानां शब्दगतसामान्यसमाश्रयणेन लाघवादुपदेशः शास्त्रे क्रियते। ये तु विशेषा निर्दिश्यन्ते ते शब्दगतस्य सामान्यस्यैव अर्थगतघटकत्वादिसामान्यस्येव व्यञ्जका उच्यन्त इति।

अयं भावः—इह = शास्त्रे शब्दगतेनार्थगतेन वा सामान्येन शब्दस्वरूपानुगममर्थानुगमं वा कृत्वा यावदुपदेष्टुं शक्यते तावदुपदिश्यते। किन्तु तस्यापत्यापत्यमित्यादौ अर्थविषयः, 'अग्नेर्ढक्' इत्यादौ शब्दरूपविषयो वा विशेषः = विशेषवाचकः शब्दः जात्यन्तरयुक्तमिवान्यं सामान्ययुक्तं शब्दमन्यमिव च सामान्ययुक्तमर्थं प्रतिपादयति। तस्मिन् व्यवस्थिते सति गोशब्दे यो रूढिविषयो गमेरर्थः, तद्वाचको गम्धातुर्न प्राकृतेऽर्थविशेषे वर्तते = प्राकृतशब्दे प्रकृतशब्दात् प्रज्ञादित्वात् स्वार्थेऽण्।, किन्तु गमनमात्रे = गतिसामान्ये।

न चैवं गवि महिष्यादिव्यावृत्तो गतिविशेष एवास्ति, न तु गतिसामान्यमिति कथं तत्र गोशब्दः प्रयुज्यत इति वाच्यम्। यथैव स्रवति, स्यन्दते, प्लवते, पततीत्यादयो गतिसामान्येऽपि पठिताः सामान्यमात्रयाऽनुगम्यमानं गतिविशेषं स्वभावादवलम्बन्ते तथा स्रवति स्यन्दत इति जलस्यैव गतिविशेषौ तथा गतिविशेषस्य गौरित्यत्रापि प्रतिपत्तव्यत्वात्।

किञ्च, न गोशब्देऽवश्यं गमिः पादविहरणे एवार्थे क्रियते = प्रयुज्यते किं तर्हि संभविनि क्रियान्तररूपेऽप्यर्थे। एवञ्च यावती रूढिशब्दार्थनिष्ठा क्रिया संभवति तावतीषु

रूढिशब्दार्थविशिष्टा क्रिया संभवति सर्वत्रानेकार्थत्वाद्धातूनां प्रवृत्तिरप्रतिषिद्धा गमेः। दृष्टं चेदं गुरुतल्पगादिषु व्यापारान्तरविषयत्वं गमेः। यथैव रूढिषु क्रियाणां फलरूपभेदस्तथा कारकभेदोऽपि। तस्माद्रूढिषु जात्यन्तरवत् सामान्याभिधानेऽप्यर्थान्तरप्रतिपत्तिरिति ॥१७६॥

एतदेवाह—

**अर्थान्तरे च यद् वृत्तं तत्प्रकृत्यन्तरं विदुः।**
**तुल्यरूपं न तद् रूढावन्यस्मिन्ननुषज्यते ॥१७७॥**

ये रूढिविषया गम्यादयः प्रकृत्यन्तराण्येवैतानि। कर्मकर्तृविषयवत् सत्यपि तुल्यविषयरूपत्वेऽत्यन्तभेदान्न रूढिविषयाणामरूढिष्वरूढिविषयाणां वा रूढिषु कश्चिदनुषङ्गो विद्यते ॥१७७॥

रूढौ च तुल्यरूपं स्वरूपेणान्यस्मिन्ना नुषज्यते। तत्त्वतस्तद्भिन्नमेव सादृश्यात्तत्रैकत्वं मन्यते। परमार्थतस्तु भिन्नाः शब्दा गवादयः ॥१७७॥

---

सर्वत्र धातूनामनेकार्थत्वाद् गमेः प्रवृत्तिरप्रतिषिद्धा। दृष्टं चेदं गमेर्व्यापारान्तरवाचकत्वं गुरुतल्पगादिशब्देषु। तत्र हि गमनं संभोगरूपं निषिध्यते। किञ्च, यथैव रूढिमत्सु गवादिशब्देषु गमनादिक्रियाणां फलभेदो रूपभेदश्च, महिष्यादिगतितो गोगतौ वैजात्यात्। तथा कारकभेदोऽपि। तस्माद् रूढेषु गवादिशब्देषु यद्यपि गमनसामान्यं गमनविशेषापेक्षया जात्यन्तरमिव = चलनत्वादिसामान्यमिव भिन्नं वर्तते, तथापि तादृशसामान्याभिधानेऽप्यर्थान्तरस्य विशेषरूपस्य प्रतिपत्तिः भवति स्पन्दत इत्यादिष्विव संभवत्येवेति ॥१७६॥

वस्तुतस्तु प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगममाश्रित्य गोशब्देऽर्थान्तरे गतिविशेषे प्रयुज्यमानो गमिः प्रकृत्यन्तरम्, गमनसामान्ये गच्छतीत्यादौ प्रयुज्यमानात् गमेः। यथा कर्मकर्तरि पच्यते तण्डुलः स्वयमेवेत्यत्र प्रयुज्यमानः पचिः, तण्डुलं पचतीत्यत्र प्रयुक्तात् पचेरर्थभेदाद् भिद्यते तुल्यरूपत्वेऽपीत्येतत्प्रतिपादयितुमाह—**अर्थान्तरे चेति**।

अस्यार्थः—चशब्दस्त्वर्थे। अर्थान्तरे तु यद् वृत्तम् = वृत्तिमत्, तत्तुल्यरूपत्वेऽपि प्रकृत्यन्तरं विदुः। यदन्यस्मिन् = गच्छतीत्यादावनुषज्यते = संबध्यते गमे रूपं तद् रूढौ गवादिशब्दे न, किन्तु तत्तुल्यरूपं तत्, अर्थभेदेन शब्दभेदाभ्युपगमात्। सादृश्यात्तत्रैकत्व मन्यते। परमार्थतस्तु भिन्नाः शब्दा गवादय इति।

अयं भावः—ये रूढिविषया गवादिघटका गम्यादयस्तानि प्रकृत्यन्तराण्येव। कर्मकर्तृविषयवत्। सत्यप्यर्थैकदेशेन तुल्यविषयत्वे तुल्यरूपत्वे चार्थान्तरकृतात्यन्तभेदान्नरूढिविषयाणामरूढिषु, अरूढिविषयाणा वा रूढिषु कश्चित् संबन्धो विद्यत इति ॥१७७॥

स्वतश्च यजिर्भिन्न एवेत्याह—भिन्नाविति।

**भिन्नाविजियजी धातू नियतौ विषयान्तरे।**
**कैश्चित् कथञ्चिदुद्दिष्टौ चित्रं हि प्रतिपादनम् ॥१७८॥**

**यथैव हि रूपसामान्ये सत्यपि स्वभावसिद्धो रूढिष्वर्थभेदस्तथार्थानुगमसामान्ये सत्यपि शास्त्रे च स्वरूपसामान्यपरिग्रहणोपदेशे कृतेऽपि यजेरन्य एवेजिः क्विद्विषयः। अस्तेश्चान्यदेव समात्रं स्तः सन्तीत्यन्यदेव विशिष्ट विषयम्। एतदपि च सर्वं परमार्थप्रतिरूपकं व्यावहारिकमेव दर्शनम्। नहि**

अन्यो यजिरन्य इजिरिति नियतौ बोद्धव्यौ। इजिः कित्येव यजिस्तु तदितरस्मिन्निति। आचार्यैः पुनः क्वचिद् भेदाश्रयेण निर्दिष्टौ क्वचिदभेदेनेति प्रतिपादयितुमाह—कैश्चिदित्यादि। कश्चिद्यजेः किति सम्प्रसारणं शास्ति—**इष्टः, इष्ट्वेति**। तृजादौ तस्य तन्नेच्छति—यष्टा यष्टुं यष्टव्यमिति। कश्चिदिजिमेवोपदिशति, तस्य तृजादौ यादेशं विदधातीति प्रतिपादनवैचित्र्यम्॥१७८॥

---

न केवलमर्थान्तरे यद् वृत्तं तत्प्रकृत्यन्तरं वेदितव्यम्, किन्त्वर्थैकत्वेऽपि प्रकृत्यन्तरत्वं भवत्येव। तद्यथा—इजिरन्य एव धातुः कित्सु नियतप्रयोगो न तु यजेः संप्रसारणे इजिरिति। एवमकित्सु नियतप्रयोगः स्वतश्च यजिर्भिन्न एव, न तु इजेरादेर्यकारादेशे यजिरिति प्रतिपादयितुमाह—**भिन्नाविति**।

अस्यार्थः—इजियजी धातू विषयान्तरे भिन्ने विषये नियतौ नियतप्रयोगौ भिन्नावेव। एतदुक्तं भवति—अन्यो यजिरन्य इजिरिति नियतौ बोद्धव्यौ। इजिः कित्येव, यजिस्तु तदितरस्मिन्निति। आचार्यैः पुनः क्वचित् परस्परं भेदमाश्रित्य निर्दिष्टौ क्वचिदभेदेनेति प्रतिपादयितुमाह—कैश्चिदित्यादि। द्वावपि तौ कैश्चिदाचार्यैः, कथञ्चित्—प्रकारभेदेन निर्दिष्टौ। तथाहि—कश्चिद् यजेः किति सम्प्रसारणं शास्ति, इष्टम्, इष्ट्वेति। तृजादौ तस्य तन्नेच्छति। यष्टा, यष्टुम्, यष्टव्यमिति। कश्चिदिजिमेवोपदिशति तस्य तृजादावकिति आदेर्यादेशं विदधाति। हि=यतः। चित्रं प्रतिपादनं भवति, दर्शनभेदेनेति।

अयं भावः—यथैव हि शब्दस्वरूपसामान्ये सत्यपि रूढिषु गवादिशब्देषु, गच्छति गन्तेत्यादिषु च यौगिकशब्देषु गमेरर्थभेदः स्वभावसिद्धः, तथा इजियज्योरर्थानुगमसामान्ये सत्यपि=अर्थैक्ये सत्यपि शास्त्रे च तयोरर्थस्वरूपसामान्यपरिग्रहस्योपदेशे कृतेऽपि यजेरन्य एवेजिः क्विद्विषयः। स्तः, सन्ति, इत्यादौ चास्तेरन्यदेव समात्र धातुरूपं विशिष्टविषयम्=ङिद्विषयम् एतदपि च पदे धात्वादिकल्पनारूपं दर्शनं सर्वं परमार्थप्रतिरूपकं परमार्थसदृशम्, सादृश्यञ्च चिरस्थायित्वेन व्यावहारिकमेव यावद्व्यवहारमनुवर्तते, न तु वस्तुसत्। पदस्य सुबन्तस्य तिङन्तस्य वा नाम्नो धातोर्वा वस्तुतोऽखण्डत्वात्। नहि धातुरूपं परमार्थेन किञ्चिद् विद्यते, कल्पितत्वात्।

**धातुरूपं परमार्थेन किञ्चिद्विद्यते व्यवहारस्तु कैश्चित् क्रियते। केचिदस्ति सकारमात्रमातिष्ठन्ते, तस्य त्वकारागमो विषयविशेषे तैर्विधीयते। तद्यथा निग···न्तीति प्रकृत्यन्तरं गत्यर्थेषु निरुक्ते पठ्यते। तथाऽऽहिधातुं पञ्चपदविषयमन्ये वचनार्थं पठन्ति। त[द्य]था—**

गौ[ग्लौ]रिवासितपक्षस्य सा[ऽ]मुदे चारुहासिनि।
अ[आ]हेः पञ्चपदानीव त्वमेव शरणं मम॥ इति।

**इजेरकृत[रकित्स्वादे]स्वादेर्यशब्दमेके कुर्वन्ति। चित्रा हि प्रतिपादनोपायाः॥१७८॥**

अवस्थाभेदाश्रयेणापि प्रतिपादनं दृश्यत इत्याह—एवं चेति।

**एवं च बालवायादिजित्वरीवदुपाचरेत्।**
**भेदाभेदाभ्युपगमे न विरोधोऽस्ति कश्चन॥१७९॥**

---

प्रकृतिप्रत्ययादिकल्पनरूपो व्यवहारस्तु कैश्चिदाचार्यैः कथञ्चित् क्रियत इत्यनियतत्वादपरमार्थः। तथा हि—केचिदस्ति सकारमात्रमातिष्ठन्ते, तस्य त्वकारागमो विषयविशेषे (पिति) तैर्विधीयते। तद्यथा—निगच्छन्तीत्यत्र निगम् इति धात्वन्तरं गत्यर्थेषु निरुक्ते पठ्यते। यथा संग्रामेति सोपसर्गो धातुः। तथा—वचनार्थमाहिधातुमाह इत्यादिपञ्चपदविषयमन्ये पठन्ति। तद्यथा—

ग्लौरिवासितपक्षस्य साऽमुदे चारुहासिनि।
आहेः पञ्चपदानीव त्वमेव शरणं मम॥

इयञ्च खण्डितां नायिकामनुनयतः कस्यचिदुक्तिः।

अस्यार्थः—हे चारुहासिनि! तव हासचारुरतो हसितव्यं त्वया इति प्रार्थये इत्यनेन ध्वन्यते। सा=यस्याः समागमसंभावनया मयि त्वया कोपः कृतः, सा असितपक्षस्य=कृष्णपक्षस्य, ग्लौरिव=चन्द्र इव, अमुदे=मम मोदाय न भवति, दर्शनस्यापि दुर्लभत्वात्। अतो मम आहेर्धातोराह आहतुरित्यादिपञ्चपदानीव त्वमेव शरण सुप्रापत्वादिति मत्वा मानस्त्यज्यतामिति। एके इजेरादेरकित्सु यादेशं कुर्वन्ति, अपरे तु यजेः कित्सु संप्रसारणमिति। विचित्रा हि पदप्रतिपादनोपाया इति॥१७८॥

अवस्थाभेदाश्रयेणापि शब्दप्रतिपादनं दृश्यते। तद्यथा—वैदूर्यस्य मणेः प्रभावावस्थामाश्रित्य विदूरात् प्रभवति इत्यर्थं वैदूर्यशब्दो व्युत्पाद्यते। अत एव बालवायशब्दस्य पर्वतवाचकस्य ञ्यप्रत्ययसन्नियोगेन विदूरादेशः क्रियते। अथवा बालवायस्यैव विदूरमित्यप्रसिद्धं नाम। यथा वाराणस्या वणिङ्मात्रप्रसिद्धं नाम जित्वरीति। उभयथापि विदूरात् प्रभवतीत्यर्थोपपत्तिः। यतो नासौ मणिर्विदूरान्नगरात् प्रभवति। असौ बालवा-

वैयाकरणा हि व्यवस्थितेषु समुदायेषु परिकल्पितमवयवं व्यवस्थापयन्तः प्रकृत्यन्तरं वा विदूरशब्दं शास्त्रस्य व्यवहारविषयमलौकिकं जित्वरी-

इह विदूरात् प्रभवति वैदूर्य इति वैदूर्यशब्दं व्युत्पादयन्ति। न च विदूरादसौ प्रभवति। बालवायादुत्पन्नो विदूरे केवलं संस्क्रियते, तत्रोक्तम्—

बालवायो विदूरं च प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्॥ इति।

बालवायो वृत्तिविषये विदूरमापद्यते, ततश्च बालवायात् प्रभवति वैदूर्यो मणिरिति सिद्धम्। अतो बालवायविदूरयोरभेदोऽभ्युपगतः। अथवाऽन्यो वृत्तिविषये विदूरशब्द उच्यते। यथा वणिग्भिर्वाराणसी जित्वरीति। आदिशब्दाद्विश्रवणरवणशब्दाविति भेदोऽवगन्तव्यः। अतोऽभेदाभ्युपगमे भेदाश्रयणे वा न

---

यात् प्रभवति, विदूरे केवल शाणादिना संस्क्रियत इत्येतत्सर्वं मनसि निधायाह—**एवञ्चेति**।

अस्यार्थः, एवञ्च=अर्थैक्येऽपि प्रकृत्यन्तरत्वस्वीकारे च, बालवायादि, आदिना विश्रवणरवणादि, जित्वरीवदुपाचरेत्, जित्वरीवत्=जित्वरीपदेन तुल्यम्, उपाचरेत्=व्यवहरेत्। यथा वणिजो वाराणसीं जित्वरीपदेन व्यवहरन्ति, तथैव बालवायपर्वतं विदूरपदेन व्यवहरेदिति वैदूर्यशब्दे विदूरशब्दस्य प्रकृतिरूपस्य बालवायाद् भेदाभ्युपगमपक्षः। आदिशब्दाद् विश्रवणरवणशब्दौ ग्राह्यौ। यदि तु बालवायशब्दस्य ञ्यप्रत्ययसन्नियोगेन विदूरादेशः क्रियते, तदा बालवायाद् विदूरशब्दस्याभेदाभ्युपगमपक्षः, किन्तु भेदाभ्युपगमेऽभेदाभ्युपगमे वा कश्चन विरोधो नास्तीति। भेदपक्षाश्रयणे च बालवायविदूरशब्दयोर्बालवायपर्वतवाचकत्वरूप सामान्यधर्ममाश्रित्य लाघवाद् विदूराञ्ञ्य इत्युपदेशः क्रियते। स्थान्यादेशभावेन तयोः शब्दयोरभेदपक्षे तु तयोरभिन्नरूपतमाश्रयणेनैवेति न किञ्चिदवद्यम्।

एतदुक्तं भवति—इह विदूरात् प्रभवति वैदूर्यो मणिरिति वैदूर्यशब्दं व्युत्पादयन्ति। न च विदूरादसौ मणिः प्रभवति। बालवायादुत्पन्नो विदूरे केवलं संस्क्रियते। तत्रोक्तम्—

बालवायो विदूरञ्च प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेद् ब्रूयाजित्वरीवदुपाचरेत्॥ इति।
(महा० ४।३।४ श्लो० वा०)

अस्यार्थः—चशब्दस्त्वर्थे बालवायशब्दस्तु ञ्यप्रत्ययरूपतद्धितवृत्तिविषये विदूरमादेशमापद्यते। ततश्च बालवायात् प्रभवति वैदूर्यो मणिरिति सिद्धम्। अतो बालवायविदूरयोरभेदोऽभ्युपगतः। अथवाऽन्यः प्रागुक्तवृत्तिविषये विदूरशब्दः प्रकृत्यन्तरमुच्यते। यथा वणिग्भिर्वाराणसी जित्वरीति। न वै=नैव, तत्र बालवाये विदूरशब्दः प्रसिद्ध इति

**वदुपाचरन्तो व्याचक्षीरन्। बालवायशब्दस्य वा तुल्यार्थं विदूरशब्दमादेशं कुर्युः। नहि [अ]भेदेनादेशाभ्युपगमे प्रकृत्यन्तरस्य वा नियतविषयस्य प्रतिज्ञाने लौकिकस्यार्थस्य समुदायशब्दस्य वा कश्चिदपि भेदो विद्यते ।।१७८।।**

**कश्चिद्दोषः। भेदपक्षाश्रयणे च सामान्यमाश्रित्य लाघवेनोपदेशः क्रियते। अभेदपक्षे त्वभिन्नरूपसमाश्रयणेनैवेति न किञ्चिदवद्यम् ।।१७९।।**

ततो यदि शब्दभेदपक्षस्तादधातूपसर्गयोः पृथक्त्वकल्पनमित्याह—

**अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।**
**धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ।।१८०।।**

**क्रियाविशेषविषया हि धातवः कार्यार्थं भेदेनोपदिष्टाः। निवासयत्यास्फोटयति जुगुप्सते मूत्रयतीति ल्यब्द्विर्वचनादीनि विभागे सतीष्टां व्यवस्थां**

---

चेत् कश्चित् प्रब्रूयात्, तदा जित्वरीवदुपाचरेद् व्यवहरेत्। यथा लोके वाराणस्यामप्रसिद्धोऽपि जित्वरीशब्दप्रयोगो वणिङ्मात्रप्रसिद्धस्तथा लोके बालवायेऽप्रसिद्धोऽपि विदूरशब्दस्तत्र वणिङ्मात्रप्रसिद्ध इति।

अयं भावः—यद्यपि लोके वैदूर्यादयः प्रकृतिप्रत्ययसमुदायत्वेनाभिमताः शब्दाः प्रकृतिप्रत्ययविभागशून्या व्यवस्थिता एवानादिकालात्, तथापि वैयाकरणाः परिकल्पितं तेषु प्रकृतिरूपं प्रत्ययरूपञ्चावयवं व्यवस्थापयन्तः प्रकृत्यन्तरं वा विदूरशब्दं व्याकरणशास्त्रस्य व्यवहारविषयमलौकिकं=लोकाप्रसिद्धम् जित्वरीवदुपाचरन्तो व्याचक्षीरन्, बालवायशब्दस्य वा तुल्यार्थं विदरशब्दादेशं कुर्युः। नह्यभेदेनादेशाभ्युपगमे प्रकृत्यन्तरस्य वा नियतविषयस्य=ञ्यप्रत्ययरूपतद्धितवृत्तिविषयस्य प्रतिज्ञाने लौकिकार्थस्य वैदूर्यपदार्थस्य समुदायशब्दस्य वा कश्चिदपि भेदो विद्यते। तस्मादादेशाभ्युपगमपक्षः, प्रकृत्यन्तरत्वाभ्युपगमपक्षो वोभयमपि साध्विति। बालवायपदे दन्तोष्ठ्यादिपाठ एव साधुर्बहुत्रोपलभ्यमानत्वात्।

वस्तुतस्तु बालाः केशा मनुष्याणां पशूनाञ्च तत्र गच्छतामूयन्ते सन्तन्यन्ते लताप्रतानादिभिर्यत्रेति व्युत्पत्तौ वेञ् धातोरधिकरणे घञि बाहुलकाद् बालवायशब्दव्युत्पादने पवर्गीयादिपाठ एव युक्तः प्रतिभातीति ।। १७९ ।।

ततो यदि व्यवस्थितेषु समुदायेषु शब्दभेदपक्षस्तदाऽडादीनां व्यवस्थार्थं धातूपसर्गयोः पृथक्त्वकल्पनमित्याह—अडादीनामिति।

अस्यार्थः—अडादीनाम्=अडाड्द्विर्वचनानाम्, व्यवस्थार्थमुपसर्गरहितस्याडादिकार्यार्थं शास्त्रे धातूपसर्गयोः पृथक्त्वेन=भेदेन, प्रकल्पनम्। तु=वस्तुतस्तु धातुरेव तादृशः सोपसर्गः।

**तथाहि संग्रामयतेः सोपसर्गाद्विधिः स्मृतः ।**
**क्रियाविशेषाः संघातैः प्रक्रम्यन्ते तथाविधाः ॥१८१॥**

लभन्ते । 'संग्राम युद्धे' इति क्रियाविशेषवाची सम्पूर्वः सङ्घात एव प्रक्रम्यते । पुनश्चोक्तम्—अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्येति ।। १८०-१८१ ॥

अड्द्विर्वचनव्यवस्थार्थं केवलं धातवः पृथगुपदिष्टाः, वस्तुतः पुनर्विशिष्टक्रियावचना एव त इति सोपसर्गाणामेव धातुत्वम ॥१८०॥

एतदेव प्रतिपादयितुमाह—**तथाहिति** ।

**असङ्ग्रामयत, सिसङ्ग्रामयिषते,** सोपसर्गस्यैवाड्द्विर्वचनदर्शनात् सोपसर्गस्यैवास्य धातुत्वम , अत उपक्रम एवाख्याते विशिष्टैव धातुवाच्या क्रिया निवर्तयितुमुपक्रम्यत इत्याख्यातानां स्वरूपप्रदर्शनार्थमाह—**क्रियाविशेषा** इत्यादि । संघातैर्धातूपसर्गसमुदायैरित्यर्थः । तथाविधा अभिन्ना भिन्ना वा ॥१८१॥

---

अयं भावः—अडाड्द्विर्वचनव्यवस्थार्थं केवलं धातवः पृथगुपदिष्टाः, वस्तुतः पुनर्विशिष्टक्रियावचना एव सोपसर्गा इति सोपसर्गाणामेव धातुत्वमिति ॥१८०॥

एतदेव प्रतिपादयितुमाह—**तथाहीति** ।

अस्यार्थः—तथाहि सोपसर्गात् संग्रामयतेः, संग्रामधातोः सोपसर्गाद् विधिः = अड्द्विर्वचनविधिः, 'असंग्रामयत' सिसंग्रामयिषते' इत्यादौ स्मृतः = व्याकरणस्मृत्या बोधितः । अत उपक्रम एवाख्याते विशिष्टैव धातुवाच्या क्रिया निवर्तयितुमुपक्रम्यत इत्याख्यातानां स्वरूपदर्शनार्थमाह—क्रियाविशेषा इत्यादि । यतस्तथाविधाः क्रियाविशेषा युद्धक्रियादिरूपाः, अभिन्ना भिन्ना वा संघातैः = धातूपसर्गसंघातैः संग्रामादिभिः, प्रक्रम्यन्ते = क्रमवद्भिर्धातूपसर्गसंघातैर्बोध्यन्ते, विपरीतक्रमवद्भिस्तु न बोध्यन्त इति प्रक्रमे = प्रारम्भे बोध्यन्त इति वा ।

अयं भावः—'असंग्रामयत, सिसंग्रामयिषते' इत्यादौ सोपसर्गस्यैवाड्द्विर्वचनदर्शनात् सोपसर्गस्यैवास्य धातुत्वम् । कारिकाद्वयस्य समुदितस्य परमाशयस्तु—क्रियाविशेषविषया हि धातवः सोपसर्गा अनुपसर्गाश्चाऽडादिकार्यार्थमुपसर्गाद् भेदेन निर्दिष्टाः । निवासयति, आस्फोटयति, जुगुप्सते, मूत्रयतीति ल्यबड्द्विर्वचनादीनि धातूपसर्गविभागे सतीष्टां व्यवस्थां लभन्ते । प्रजुगुप्स्य, प्रमुमुत्रयिषतीति । 'संग्राम युद्धे' इति क्रियाविशेषवाची = युद्धक्रियावाची संपूर्वः संघात एव प्रक्रम्यते युद्धक्रियाबोधनाय प्रक्रम्यते = प्रक्रमेण उत्साहेन प्रयुज्यते । पुनश्चोक्तम्—अवश्यं संग्रामयतेः सोपसर्गाद् उत्पत्तिर्वक्तव्येति ।

अस्यार्थः—अवश्यं सोपसर्गात् संग्रामयते, असंग्रामयत' इत्येतत्सिध्यर्थमडुत्पत्तिर्वक्तव्येति ॥१८१॥

कार्याणामन्तरङ्गत्वमेवं धातूपसर्गयोः ।
साधनैर्याति संबन्धं तथाभूतैव सा क्रिया ॥१८२॥

उपसर्गसम्बन्धाधीना स्वार्थव्यवस्था धातूनाम् । स्वार्थयोगे च सिद्धे सम्बन्ध्यन्तरस्य सन्निधानेन भवितव्यम् । तत्र गौरखरादिवद् विशि-

अतः किं भवतीत्याह—कार्याणामिति ।

एवं धातूपसर्गाश्रयाणि यानि कार्याण्यन्तरङ्गाणीत्युच्यन्ते पूर्वं तान्येव प्रवर्तन्ते, यथा सुडादयः । तथाभूतैव च सा क्रिया साधनसम्बन्धं गच्छतीत्याह—साधनैरिति । तथाभूतैवोपसर्गविशिष्टैव कारकसम्बन्धमुपगच्छति । एवं चानुभूयत इत्यत्र कर्मणि लकारः सिद्ध्यति, तथा 'षत्वतुकोरसिद्धः' ( अष्टा० ६।१।८६ ) इत्यारम्भणीयम् । 'अडभ्यासव्यवायेऽपि' ( भाष्य० ६।१।१३५, वा० ६ ) इत्यनारम्भणीयमेवेति स्थितम् । उक्तं च—कारकाणां प्रवृत्तिविशिष्टक्रियायामन्यथा कृत्वा मांसौदने प्रवर्तन्ते, अन्यथा च शुष्कौदने' ( भाष्य० १।३।१, वा० ११ ) इति । वृत्तोपसर्गसम्बन्धायाश्च तस्या वैशिष्ट्यमिति क्रमाश्रयणेन पूर्वमेवोपसर्गेण सम्बन्धः ॥१८२॥

---

अतः किं भवतीत्याह—कार्याणामिति ।

अस्यार्थः—एवम्, धातूपसर्गसंघातैः प्रक्रम एव विशिष्टक्रियाया बोधने च धातूपसर्गयोः कार्याणामन्तरङ्गत्वमुपपद्यते । तथाभूतैव—धातूपसर्गरूपसमुदायवाच्यैव च, सा विशिष्टा क्रिया साध्या सती साधनैः कारकैः सम्बन्धं याति प्राप्नोतीति । एवञ्च अनुभूयते इत्यत्र कर्मणि लकारः सिध्यति । तथा 'षत्वतुकोरसिद्ध' इत्यारम्भणीयम् । धातूपसर्गयोः कार्याणामन्तरङ्गत्वे हि 'अधीत्य' इत्यादौ प्राग् दीर्घे कृतेऽसिद्धत्वस्य तुगर्थमावश्यकता नान्यथा । धातुसाधनयोः सम्बन्धस्यान्तरङ्गत्वे तु तुक् सिद्ध एवेति 'अडभ्यासव्यवायेऽपि' इत्यनारम्भणीयम् । अडुत्पत्तेर्लकारोत्पत्त्युत्तरकालभावित्वेन ततः प्रागेव धातूपसर्गयोः सम्बन्धे षत्वसिद्धेः । उक्तञ्च वार्त्तिककृद्भिः—कारकाणां प्रवृत्तिर्विशिष्टक्रियायाम् । अन्यथाकृत्वा मांसौदने प्रवर्तन्ते, अन्यथा च शुष्कौदन इति । ( महाभा० ६।१।१३५, वा०-५-६ ), ( महाभा० १।३।१।११ वा० )

अस्यार्थः—कारकाणां प्रवृत्तिः = संबन्धः, विशिष्टक्रियायाम् = धातूपसर्गसमुदायाभिहितक्रियायां भवति । अन्यथाकृत्वा मांसौदने प्रवर्तन्ते, अन्यथा शुष्कौदन इत्यस्योदाहरणं यथा—मांसौदनं प्रभक्षयन्ति, शुष्कौदनं तु भक्षयन्तीति । समुपजातोपसर्गसंबन्धायाश्च तस्याः क्रियायाः वैशिष्ट्यमिति धातोरुपसर्गसाधनयोः संबन्धे क्रमाश्रयणेन पूर्वमेवोपसर्गेण सम्बन्धः पश्चात् साधनेनेति ।

अयं भावः—उपसर्गसंबन्धाधीना धातूनां स्वार्थव्यवस्था; भवति, प्रभवति, अनुभवतीत्यादावर्थभेददर्शनात् । स्वार्थसंबन्धसिद्ध्यनन्तरञ्च संबन्ध्यन्तरस्य साधनरूपस्य

ष्टार्थे प्रकृतिरूपे प्रतिलब्धे बाह्याः सम्बन्धिन उपजायन्ते। तस्माद् विशिष्ट-प्रकृतिरूपवाच्या विशिष्टा क्रिया तथाभूतैव साध्या सती साधनसम्बन्धं प्रतिपद्यते ॥१८२॥

**प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशिष्यते।**
**प्राक् च साधनसम्बन्धात् क्रिया नैवोपजायते ॥१८३॥**

इह प्रसिद्धं विशेष्यमनेकप्रकारसंभवे सति दृष्टप्रयोगेण शब्देनाभि-धीयमानं विशेषणविशेष्यभावं प्रतिपद्यते। साध्यत्वाच्च क्रियायाः साधन-

इदानीं पूर्वं धातुः साधनेन युज्यत इति क्रमसमाश्रयणेनाख्यातस्वरूपं प्रतिपादयितुमाह --प्रयोगार्हेष्विति। लब्धात्मनस्तस्या विशेष्यत्वोपपत्तेः प्रयोगा-र्हेषु धातुषु सिद्धः सन्नर्थो भेत्तव्यो विशेष्यो भवत्युपसर्गादिभिः, न तु पूर्वकाल आख्याते विशेषणयोगः। यदि प्राक्साधनसम्बन्धात् क्रियाविशेष इत्युच्यते, तदा-ऽन्यु[नु]त्पन्नायास्तस्याः स्वरूपाभावेन कथञ्चित् शेषसम्बन्धः स्यादित्याह--प्राक्-चेत्यादि। उक्तं च--'साधनं क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि' इति। पूर्वं

---

सन्निधानेन=सम्बन्धेन भवितव्यम्। स्वार्थसम्बन्धस्य तादात्म्यरूपस्य साधनरूपसंबन्ध्यन्तर-संबन्धापेक्षयाऽन्तरङ्गत्वात्। तत्र यथा गौरखरादिपदाद् अश्वतरादिरूपे विशिष्टार्थे प्रकृतिरूपे= गौरखरादिरूपविभक्तिप्रकृत्या निरूप्यमाणे प्रकृत्यर्थरूपे वा प्रतिलब्धे=निर्ज्ञाते सत्येव बाह्याः सम्बन्धिनो विभक्त्यर्थाः कर्तृत्वकर्मत्वादय उपजायन्ते=संबन्ध्यन्ते, तथा प्रकृते धातूपसर्गसमुदायबोध्ये विशिष्टार्थे निर्ज्ञाते एव विशिष्टक्रियारूपस्य तस्यार्थस्य साधनसम्बन्धो न ततः प्रागिति।

तस्माद् धातूपसर्गसमुदायरूपविशिष्टप्रकृतिवाच्या विशिष्टा क्रिया तथाभूतैव= विशिष्टैव साध्या सती साधनसम्बन्धं प्रतिपद्यते, नाविशिष्टा सामान्यरूपा धातुमात्रवाच्या; धातोरुपसर्गसमभिहारे तस्यास्तात्पर्याविषयत्वेनाविवक्षितत्वादिति ॥१८२॥

एवं पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति पक्षमुपपाद्य, इदानीं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति क्रमाश्रयणेनाख्यातस्वरूपं प्रतिपादयितुमाह— **प्रयोगार्हेष्विति।**

अस्यार्थः—उत्पत्त्या लब्धस्वरूपायाः क्रियाया विशेष्यत्वमुपपद्यते, नान्यथा। ततश्च साधनसम्बन्धात् प्रयोगार्हेषु धातुषु सत्सु तैरभिधीयमानः सिद्धस्वरूपः सन्नर्थः क्रियारूपो व्यावर्त्यो विशेष्यो भवत्युपसर्गादिभिः, न तु साधनसंबन्धात् पूर्वकालेऽसिद्धस्वरूपायां क्रियायामाख्यातार्थरूपायामुपसर्गार्थरूपविशेषणयोगः।

यदि प्राक् साधनसम्बन्धात् क्रिया विशेष्येत्युच्यते, तदाऽनुत्पन्नायास्तस्याः स्वरूपा-भावेन कथं शेषसम्बन्धः=उपसर्गार्थविशेषणरूपाङ्गसम्बन्धः स्यादित्याह—**प्राक् चेति।**

सम्बन्धनिर्वृत्तिः। तस्मात् प्राक् साधनसम्बन्धादनुपजाता क्रिया निरात्मिका द्योतकेनोपसर्गेण सह विशेषणविशेष्यसम्बन्धं नोत्सहते प्रतिपत्तुम्। पूर्वं धातुः साधनेन युज्यत इत्येकेषां दर्शनम् ॥१८३॥

साधनसम्बन्धस्तत उपसर्गैस्तद्विशेषणमुपपन्नम्। अस्मिंश्च पक्षे 'अड्भ्यासव्यवायेऽपि' इत्यारम्भणीयं 'षत्वतुकोरसिद्धः' इति तुकि कर्तव्ये एकादेशासिद्धत्वं न वक्तव्यम्, प्रत्यय इत्यन्तरङ्गत्वात् साधनाभिधायकार्द्धधातुकाश्रयो गुणः प्रवर्तत इति सिद्धम् ॥१८३॥

अथ पूर्वं धातुरुपसर्गेण युज्यत इत्यमुं पक्षं समाधातुमाह

**धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा।**
**धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥१८४॥**

---

साधनसम्बन्धात् प्राक् च क्रिया नैवोपजायत इत्यन्वयः। अत्र चो हेतौ। यतः साधनसम्बन्धात् प्राक् क्रियास्वरूपमेव नोत्पद्यत इत्यर्थः। उक्तञ्च—साधनं क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टीति पूर्वं साधनसम्बन्धस्तत उपसर्गैस्तद्विशेषणमुपपन्नम्। अस्मिंश्च पक्षे 'अड्भ्यासव्यवायेऽपि' इत्यारम्भणीयम्। 'षत्वतुकोरसिद्ध' इति तुकि कर्तव्य एकादेशासिद्धत्वं न वक्तव्यम्। प्रत्ययशब्देऽन्तरङ्गत्वात् साधनाभिधायकार्धधातुकाश्रयो गुणः प्रवर्तत इति गुणेऽयादेशे च दीर्घाप्राप्त्या यणः प्राप्त्या च प्रत्ययशब्दसिद्धिरिति।

अयं भावः—इह = आख्याते साधनसम्बन्धात् प्राक् प्रसिद्धं = धातुवाच्यम् विशेष्यं क्रियासामान्यरूपम् अनेकप्रकारसंभवे = अनेकविशेषणसंभवे सति दृष्टप्रयोगेण शब्देन धातूपसर्गसमुदायरूपेणाभिधीयमानं क्रियाविशेषरूपतामाप्नुवद् विशेषणविशेष्यभावरूपं सम्बन्धं प्रतिपद्यते।

किञ्च, साधनसम्बन्धात् प्राक् क्रियायाः साध्यत्वात् साधनसम्बन्धादेव निर्वृत्तिरिति क्रियास्वरूपनिष्पत्तये क्रियाया उपसर्गसम्बन्धात् प्राक् साधनसम्बन्ध आवश्यकः।

तस्मात् प्राक् साधनसम्बन्धादनिष्पन्नस्वरूपा निरात्मिका क्रिया द्योतकेनोपसर्गेण सह विशेषणविशेष्यभावरूपं सम्बन्धं लब्धुं नोत्सहत इति 'पूर्वं धातुः साधनेन युज्यते, तत उपसर्गेण' इत्येकेषां दर्शनमिति ॥१८३॥

एवं पक्षद्वयं साधनबाधनाभ्यां प्रदर्श्य 'पूर्वं धातुरुपसर्गेण युज्यते' इत्यमुं पक्षं बाधननिरासपुरस्सरं व्यवस्थापयितुमाह—**धातोरिति**।

अस्यार्थः—यथा भाविनो भविष्यतः साधनयोगस्य = धातोः साधनवाचकप्रत्ययसंसर्गस्य, प्रक्रमात् = उपक्रम एवानुसन्धानात्, धातुत्वम् = क्रियावचनो धातुरिति धातु-

क्रियावचनो धातुरित्युक्तम्, साधनसम्बन्धाच्च प्राक् क्रियानिर्वृत्तेरसम्भवाद्यथा भाविसाधनसम्बन्धसमाश्रयणेनोपक्रम एव धातुत्वं धातुसंज्ञोच्यते, यथा च धातोः कर्मण इत्युच्यते, कर्म यो धातुरितीषिकर्मत्वस्य भावित्वादुपक्रम एवेषिकर्मत्वमुक्तं तथान्यदपि दृश्यतां भाविसम्बन्धादुपक्रम एव विशिष्टक्रियावचनत्वं दृश्यतां को दोषः। एवं च भिन्नपक्षाश्रयणेन तथाविधविशेषनिर्वर्तन शोभत इत्युच्यते 'क्रियाविशेषाः सङ्घातैः प्रक्रम्यन्ते तथाविधाः' इति ॥१८४॥

उपक्रम एव चासौ क्रिया विशिष्टैवाभ्युपगन्तुं युक्तेति दृष्टान्तप्रदर्शनपूर्वकमाह—

---

संज्ञा। यथा च भाविन इषिकर्मत्वस्य सन्प्रत्ययोत्पत्तय उपक्रम एवानुसन्धानेन समाश्रयणाद् इषिकर्मभावश्च इषिकर्मत्वमपि सन्प्रकृतिधातोः, तथाऽन्यदपि साधनसम्बन्धात् प्रागुपसर्गसम्बन्धवशेन धातोर्विशिष्टक्रियावचनत्वमपि 'अनुभूयते' इत्यादौ कर्मणि लकारादिसिद्धये दृश्यताम् = ज्ञायतामिति।

अय भावः—'भूवादयो धातवः' इत्यस्य स्थाने 'क्रियावचनो धातुः' इति भाष्योक्तन्यासे साधनसम्बन्धात् प्राक् क्रियाया अनिष्पत्तेः क्रियावचनत्वासिद्धौ यथा भाविनः धातोः सम्बन्धस्योपक्रम एव बुद्धया समाश्रयणेनोपक्रम एव धातुसंज्ञा। यथा च—'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रे इषिकर्मत्वस्य धातुविशेषणत्वेन सन्प्रत्ययोत्पत्तिसम्भवः विद्यमानस्यैव विशेषणत्वात्, इषिकर्मत्वस्य च भावित्वादिति भाविनोऽपि तस्योपक्रम एव बुद्धयाऽनुसन्धानेन धातूपलक्षणतया सन्प्रत्ययोत्पत्तिसम्भवः, तथा धातोर्भाविसाधनसम्बन्धात् प्रागुपक्रम एव विशिष्टक्रियावचनत्वं दृश्यतामिति रीत्या 'अनुभूयते' इत्यादौ कर्मणि लकारादिसंभवे को दोषः।

एवञ्च 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षान्तराश्रयणेन अनुभूयते' इत्यादौ कर्मणि लकारादिसिद्धये विशिष्टक्रियावचनत्वोपपादनं न शोभते।

अत एवोक्तं प्राक्—'क्रियाविशेषाः संघातैः प्रक्रम्यन्ते तथाविधाः' (वा० प० २।१८१) इति। तथाविधाः साधनसम्बन्धोत्तरं भाविनः क्रियाविशेषाः, संघातैः = धातूपसर्गसमुदायैः, प्रक्रम्यन्ते = उपक्रम एव बुद्धयाऽनुसन्धीयन्त इत्यर्थः। यद्यपि प्राक् पुण्यराजेन तथाविधा इत्यस्य 'अभिन्ना भिन्ना वा' इति व्याख्या कृता, तथाप्यत्रैष एव तदर्थः। वाचश्च कामदोग्ध्रीत्वं श्रुतावप्युक्तम्—वाचं धेनुमुपासीतेति। (बृहदा० ५।८)। अतस्तत्र तत्र तात्पर्यभेदेनार्थभेदसम्भव इति ॥१८४॥

'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति सिद्धान्तमनुसृत्य धातोः संबन्धात् प्राक् सामान्येन प्रतीयमाना क्रिया साधनसम्बन्धोत्तरमेव विशिष्टा प्रतीयत इत्यभ्युपगन्तुं

**बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।**
**वर्णादिपरिणामेन फलानामुपकुर्वते ॥१८५॥**

बीजवापकाल एव यथा लाक्षारसादयो बीजसंबन्धादुत्तरकालं वर्णरसादिपरिणामेन फलोपकारं कुर्वन्ति ॥१८५॥

तथा दार्ष्टान्तिके योजयितुमाह—

**बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥१८६॥**

धातूपसर्गयोः सम्बन्धबुद्ध्या समुल्लिखितो योऽन्तर्णीतः केवलं तस्मात् सम्बन्धात्तयोर्धातूपसर्गयोः सम्बन्धे पदकाले पदनिष्पत्तौ सत्यामसौ भेदः प्रकाशते, न तु स्वत इति वृत्तोपसर्गसम्बन्धाया एव साधनयोग उपपन्नः ॥१८६॥

---

न युक्तम्, किन्तु धातोः साधनसम्बन्धात् प्रागुपक्रम एव धातूपसर्गयोः सम्बन्धे 'पूर्वं धातुपसर्गेण युज्यते पश्चात्साधनेन' इति सिद्धान्तमनुसृत्याभ्युपगम्यमाने उपक्रम एव विशिष्टा क्रियाऽव्यक्तं प्रतीयमाना साधनसम्बन्धे सति स्फुटं प्रतीयत इत्येवाभ्युपगन्तुं युक्तम्, न तु साधनसम्बन्धात् प्राग्। विशिष्टा क्रिया नास्त्येवेत्यभ्युपगन्तुमिति दृष्टान्तप्रदर्शनपूर्वकमाह—**बीजकालेष्विति** ।

यथा बीजकालेषु = बीजवापकालेष्वेव बीजेषु संबद्धा लाक्षारसादय उत्तरकाले फलानां वर्णरसादिपरिणामेन स्वगतवर्णरसादिसदृशवर्णरसादिपरिणामेन फलानामुपकुर्वत इति योजना ॥१८५॥

तथा दार्ष्टान्तिके योजयितुमाह—**बुद्धिस्थादिति** ।

**अस्यार्थः**—तथा = लाक्षारसादिवत्, धातूपसर्गयोः, बुद्धिस्थादभिसम्बन्धात्, न तु वस्तुसतः, धातूपसर्गसमुदायस्य वस्तुतो धातुत्वेन धातूपसर्गविभागस्याडादिकार्यार्थं कल्पितत्वेन बाह्यस्य तयोरभिसम्बन्धस्यासंभवे बौद्धस्यैव तस्य संभवादिति। अभ्यन्तरीकृतो भेदः = अन्तर्लीनतयाऽव्यक्तं प्रतीयमानः क्रियाविशेषः, पदकाले = धातोः साधनसम्बन्धोत्तरं पदनिष्पत्तिकाले, प्रकाशते = स्फुटं प्रतीयत इति ।

अयं भावः—लाक्षारसादिदृष्टान्तेन समुपजातोपसर्गसम्बन्धाया एव क्रियायाः साधनसम्बन्धसहस्रेणापि कर्तुं शक्यते। तत्र विद्यमाना तु साधनसम्बन्धेनाविर्भावयितुं शक्यते । अतो धातूपसर्गसम्बन्धेऽव्यक्तं प्रतीयमाना विशिष्टा क्रिया पश्चाद् धातोः साधनसम्बन्धे स्फुटं प्रतीयत इत्यस्यैव दृष्टान्तोपपन्नत्वेन 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' इति सिद्धान्त एव युक्त इति ॥१८६॥

एवमपोद्धारप्रस्तावे वाक्ये पदस्य पदभागयोः प्रकृतिप्रत्यययोः शक्याशक्यान्वयव्यतिरेकसमाश्रयणेन सनिमित्तमन्वाख्यानं कर्तुमनेकधार्थः क्वचिन्निमित्तं स्वरूपं वेत्याख्यातम् ततश्च पदमेकमनेकं वेति नामपदं लेशतो निर्णीतम्। आख्यातमपि 'क्रियाविशेषाः सङ्घातैः प्रकम्यन्ते तथाविधाः' ( वा० प० २।१८१ ) इत्यादिना भेदाभेदविचारपूर्वकमपि निदर्शितप्रायम्, इदानीम् 'नामाख्यातोपसर्गनिपाताश्चेति चत्वारि पदजातानि' इति निरुक्तकारस्तत्र नामाख्यातस्वरूपे प्रदर्शिते। उपसर्गाणां प्रदर्शनीयमिति तत्स्वरूपं प्रदर्शयितुमाह—

**क्वचित् संभविनो भेदाः केवलैरनिदर्शिताः।**
**उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना ॥१८७॥**

क्वचित्पचत्यादौ प्रकर्षादीनां सम्भवात् केवलैस्तेषामप्रतीतेरुपसर्गसम्बन्धात्

---

एवं वाक्येऽपोद्धारप्रस्तावे पदस्य शक्यान्वयव्यतिरेकसमाश्रयणेनार्थरूपशब्दप्रवृत्तिनिमित्तसहितमन्वाख्यानं कर्तुमनेकधाऽर्थः क्वचित्प्रवृत्तिनिमित्तं जात्यादिरूपमर्थं इति क्वचित्तु पदस्य स्वरूपमेव प्रवृत्तिनिमित्तभूतोऽर्थ इत्याख्यातम्। पदस्यार्थान्वयबोधं प्रत्यन्वयव्यतिरेकयोः शक्यता चैतत्पदसत्त्वे एतदर्थं प्रतीतिमत्त्वम् एतत्पदाभावे एतदर्थप्रतीत्यभाव इत्येवं स्फुटं प्रतीयमानत्वात्।

एवं पदभागयोः प्रकृतिप्रत्यययोः पदादपोद्धारप्रस्तावेऽशक्यान्वयव्यतिरेकसमाश्रयणेनार्थरूपमनिमित्तसहितमन्वाख्यातं कर्तुमनेकधाऽर्थः क्वचित्प्रवृत्तिनिमित्तमर्थः, शब्दस्वरूपं वा क्वचिदित्याख्यातम् = उक्तम्। प्रकृतिप्रत्यययोस्तत्तदर्थान्वयबोधं प्रत्यन्वयव्यतिरेकस्याशक्यता च पदे प्रकृतिप्रत्ययकल्पनाया व्याकरणभेदेन व्यवस्थितत्वाद् नुट्शबादिष्वर्थाव्यभिचारेऽपि प्रत्ययव्यभिचारदर्शनाच्च बोध्या। तदनन्तरञ्च 'संहिताविषये वर्णाः, इति 'अर्धर्चादिषु शब्देषु' इति कारिकाभ्यां श्वेतो धावति', अलंबुसानां याता' इत्यादौ श्वेतादिपदमेकमनेकं वेति नामपदं लेशतो निर्णीतम्, आख्यातपदमपि 'क्रियाविशेषाः संघातैः प्रक्रम्यन्ते तथाविधाः' इत्यादिना भू-प्रभूवाच्यक्रिययोर्भेदाभेदविचारपूर्वकमपि निदर्शितम्।

इदानीं 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च' इति निरुक्तकारवाक्योक्तपदेषु नामाख्यातस्वरूपयोः प्राक्प्रदर्शितत्वादवसरप्राप्तमुपसर्गाणां स्वरूपं प्रदर्शनीयमिति तत्स्वरूपं प्रदर्शयितुमाह—**क्वचित्संभविन इति।**

अस्यार्थः—क्वचित्पचत्यादौ संभविनो भेदाः = प्रकृष्टपाकादयः, केवलैरनिदर्शिताः—केवलैः = प्राद्युपसर्गरहितैः पचत्यादिभिः, अनिदर्शिताः—नितराम् = व्यक्ततया न दर्शिताः सन्तः, उपसर्गेण प्रपरादिना सम्बन्धे सति व्यज्यन्ते = व्यक्ततया बोध्यन्ते। अत्र कारिकायां 'केवलैरभिदर्शिताः' इति, 'केवलैरतिदर्शिताः' इति च पाठद्वयमुपलभ्यते, तदुभयमपि हेयमेव। पुण्यराजेन 'केवलैस्तेषामप्रतीतेः' इति व्याख्यानात्। अतः 'केवलैरनिदर्शिताः'

तदवगम इति तेषूपसर्गाणां विशेषद्योतकत्वमुच्यते। अत एव चोक्तम् 'तमेव विशिनष्टयन्यः' इति ॥१८७॥

तर्हि द्योतकत्वमेव किं तेषामाहोस्वित्पक्षान्तरमपीत्याह—

**स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा ।**
**शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥१८८॥**

केवलं न द्योतका यावद्वाचका अपि दृश्यन्ते। यथा प्रतिष्ठत इत्यादौ धातोर्गतिनिवृत्तिवाचकत्वं प्रेण तु गतिवाचकत्वं व्यवस्थाप्यते। तथा चोक्तं 'धात्वर्थं बाधते कश्चित्, इति। सम्भवाद् द्योतकोऽपि वा' इत्येतदादावेव कारिकायां व्याख्यातम्। अथ तृतीयमपि पक्षं दर्शयितुमुक्तम् शक्त्याधानायेत्यादि। सम्भूय धातूपसर्गावर्थमाहतुरिति शक्तिमात्रमुपसर्गः कुरुत इत्यर्थाभिधाने सहकारिण उपसर्गाः। अत्राप्युक्तम् 'कश्चित्तमनुवर्तते' इति ॥१८८॥

---

इति पाठ एव युक्तः। एवञ्च क्रियाविशेषद्योतकत्वमुपसर्गाणामुच्यतेऽनया कारिकया। अत एव चोक्तमन्यत्र—'तमेव विशिनष्टयन्यः' इति।

अस्यार्थः—तमेव केवलेन धातुनाऽभिहितं क्रियासामान्यरूपमसत्त्वभूतं भावमेवान्यः प्रपरादिरुपसर्गः, विशिनष्टि = क्रियागतं प्रकर्षादिरूपं विशेषमवद्योतयन् धात्वभिहितं क्रियासामान्यं व्यावर्तयतीति ॥१८७॥

तर्हि किमुपसर्गाणां द्योतकत्वमेवाहोस्विद् वाचकत्वमपीत्याशङ्कयाह—**स वाचक** इति।

अस्यार्थः—सः = उपसर्गः विशेषाणाम् = क्रियागतविशेषाणां प्रकर्षादीनाम्, वाचकः स्यात्। वा = अथवा द्योतकोऽपि स्यात्, कुत इत्याह—संभवादिति। वाचकत्वद्योतकत्वयोरुभयोरप्युपसर्गे संभवात्, केवलेन धातुना विशेषाणामप्रतीतेः। वा, अथवा, शक्त्याधानाय धातुषु क्रियाविशेषबोधानुकूलशक्तिं जनयितुमुपसर्गः सहकारी धातोः क्रियाविशेषबोधे सहकारी, प्रयुज्यत इति।

अयं भावः—न केवलं द्योतका एवोपसर्गाः, यतो वाचका अपि ते दृश्यन्ते लोकव्यवहारे। तथाहि—स्थाधातोः केवलस्य गतिनिवृत्तिवाचकत्वम् 'तिष्ठति' इत्यादावनुभूयते 'प्रतिष्ठते' इत्यादौ प्रेण तूपसर्गेण गतिवाचकत्वं तस्यैव धातोर्व्यवस्थाप्यत इति। तथा चोक्तम्—'धात्वर्थं बाधते कश्चिदि'ति। अत्रोपसर्गकर्तृको धात्वर्थस्य बाधो नाम धात्वर्थं प्रतिषिध्यान्यार्थव्यवस्थापनमिति। संभवाद् द्योतकोऽपि वेत्यथमर्थस्तु पूर्वकारिकायामुपपादितः। 'शक्त्याधानाय धातोर्वा' इति तु तृतीयः पक्ष उपन्यस्तः। धातूपसर्गौ संभूय विशिष्टक्रियारूपमर्थमाहतुरिति मते—उपसर्गो धातोर्विशिष्टक्रियारूपार्थाभिधानानुकूलं शक्तिमात्रं कुरुत इत्यभ्युपगमेन विशिष्टक्रियारूपार्थाभिधाने धातोः सहकारिण उपसर्गा इति।

प्रतिष्ठत इत्यादौ प्रसिद्ध्या धातोर्गतिनिवृत्तिवाचकत्वे उपसर्गस्य गतिवाचकत्वं स्थापितम्, इदानीमनुमानेन द्योतकत्वमेव सर्वत्रास्य व्यवस्थापयितुमाह—

**स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते ।**
**तत्रानुमानाद् द्विविधात्तद्धर्मा प्रादिरुच्यते ॥१८९॥**

तिष्ठतिर्गतिनिवृत्तिं प्रसिद्ध्याभिदधाति । अतः केवलेन तेन गमनं न प्रतिपाद्यत इत्यनेकार्था धातव इति कृत्वानुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते, उपसर्गस्तु तद्द्योतक एव । गतिनिवृत्तौ तु प्रसिद्धत्वात्तिष्ठतेः प्रशब्दस्य गतिवाचकत्वमुच्यते, वस्तुस्थित्या त्वनुमानेन प्रादेर्द्योतकत्वमेव सामान्यतो दृष्टेन विशेषतो दृष्टेन चेत्याह—तत्रेत्यादि । धातुरनेकार्थ उपसर्गश्च द्योतक इत्यनुमानेन व्यवस्थाप्यते । द्विविधमनुमानं भवति—विशेषतो दृष्टं, सामान्यतो दृष्टं चेति । तत्राविशेषेणोपसर्गाणां द्योतकत्वं तथा च प्रशब्दो धर्मी आदिकर्मद्योतक इति साध्यो धर्मः प्रशब्दत्वात् पूर्वोदितपच्यादि(पूर्व)दृष्टप्रशब्दवदिति । विशेषतो दृष्टेनानुमानेन तद्धर्मप्रशब्दस्य समानधर्मा सर्वोऽपि प्रादिरुपसर्गो द्योतकत्वधर्मयुक्त उच्यत इति । धातुश्च सामान्यतो दृष्टेनानुमानेनानेकार्थः । यथा तिष्ठतिर्धर्म्मी

---

अत्राप्युक्तम्—कश्चित्तमनुवर्तत इति । कश्चिदुपसर्गस्तं धातुम् अनुवर्तते विशिष्टक्रियारूपार्थाभिधानशक्तिं तत्र प्रजनयन् तदर्थाभिधाने सहकारितया तमनुसरतीत्यर्थ इति ॥१८८॥

तिष्ठतीत्यादौ केवले प्रसिद्ध्या धातोर्गतिनिवृत्तिवाचकत्वे स्थिते 'प्रतिष्ठते' इत्यादौ धात्वर्थप्रबाधनपूर्वकमुपसर्गस्य गतिवाचकत्वं स्थापितम् । इदानीं 'प्रतिष्ठते' इत्यादावपि धातूनामनेकार्थत्वाद् धातोरेव गतिवाचकत्वमुपसर्गस्य तु तद्द्योतकत्वमिति रीत्याऽनुमानेन सर्वत्र द्योतकत्वमेवोपसर्गस्य व्यवस्थापयितुमाह—**स्थादिभिरिति** ।

अस्यार्थः—केवलैः स्थादिभिर्गतिनिवृत्तिवाचकत्वेन प्रसिद्धैः 'प्रतिष्ठते' इत्यादावुपसर्गसमभिव्याहारे धातूनामनेकार्थत्वप्रवादमाश्रित्य विविधादनुमानात् =सामान्यतो दृष्टाद् विशेषतो दृष्टाच्च, गमनादि तु यच्च यदपि गम्यते=प्रतीयते । तत्र प्रतिष्ठते' इत्यादौ गतिप्रतीतौ धातुरेव गतिवाचकः प्रादिरुपसर्गस्तु तद्धर्मा = गमकत्वधर्मा—द्योतकत्वधर्मा उच्यते, उपसर्गस्य द्योतकत्ववादिभिरिति शेष इति ।

अयं भावः—स्थाधातुर्गतिनिवृत्तौ प्रसिद्धः, अत एव शिष्टैरपि ष्ठा गतिनिवृत्ताविति पठ्यते । अत एव च केवले तिष्ठतिप्रयोगे गतिनिवृत्तिरेवाभिधीयते, न गतिः । एवञ्च 'प्रतिष्ठते' इत्यादावनेकार्था धातव इति सिद्धान्तमभ्युपेत्य सामान्यतो दृष्टादनुमानाद् गतिवाचकत्वमपि स्थाधातोरभ्युपगम्यते ।

अनुमानाकारश्च—स्थाधातुरनेकार्थः, धातुत्वाद्, उभयवादिसम्मतानेकार्थयज-

अनेकार्थ इति साध्यो धर्मो धातुत्वाद् उभयवादिसम्मतानेकार्थयजत्यादिधातुवदिति। एवं सामान्यतो दृष्टानुमानात् तद्धर्मान्यो धातुरप्यनेकार्थ उच्यत इति योजना ॥१८९॥

इदानीं संभूयार्थाभिधायकत्वमपि दर्शयितुमाह—

**अप्रयोगेऽधिपर्योश्च यावद् दृष्टं क्रियान्तरम्।**
**तस्याभिधायको धातुः सह ताभ्यामनर्थकः ॥१९०॥**

अध्यागच्छति पर्यागच्छतीत्यत्राधिपरी अनर्थकावागच्छतीत्यस्मादेवोपरिभावविशिष्टस्य वा सर्वतोभावविशिष्टस्य वाऽप्यागमनस्य प्रकरणादिनावगतत्वाद् लौकिकशब्दव्यवहारे लाघवं प्रत्यनादरादिति स्पष्टार्थमेवाधिपर्योः प्रयोगः। समुदाय एव विशिष्टार्थाभिधायक इत्यधिपर्योः केवलयोर्धातोश्चाऽत्रानर्थकत्वमनर्थान्तरवाचकत्वमित्यर्थः। अतो धातूपसर्गौ सम्भूयैवार्थविशेषं ब्रूत इति धातोर-

---

त्यादिधातुवदिति। एवं चैतन्मूलकेन सामान्यतो दृष्टानुमानेन, अन्येषामपि धातूनामनेकार्थत्वं सिद्ध्यति। तथाहि—अन्येऽपि धातवोऽनेकार्थाः, धातुत्वात्, स्थाधातुवदिति ॥१८९॥

उपसर्गस्तु तत्र विशेषतो दृष्टादनुमानाद् गतिद्योतक एव। अनुमानाकारश्च—'प्रतिष्ठते' इत्यत्र प्रशब्द आदिगतिरूपकर्म (क्रिया) द्योतकः प्रशब्दत्वात्, पच्यादिपूर्वोदितदृष्टप्रशब्दवदिति। एवमेतदनुमानमूलकेन सामान्यतो दृष्टानुमानेन सर्वेषामुपसर्गाणां द्योतकत्व सिद्ध्यति। तथाहि—परादय उपसर्गा द्योतकाः, उपसर्गत्वात् 'प्रतिष्ठते' इत्यत्र प्रोपसर्गवदिति।

यत्तु कैश्चित्—'प्रतिष्ठते' इत्यादौ धातोर्गतिनिवृत्तिवाचकत्वं प्रबाध्य प्रशब्दस्य गतिवाचकत्वमुच्यते, तत्तिष्ठतेर्गतिनिवृत्तौ प्रसिद्धत्वात्।

वस्तुतस्तु—प्रागुक्तानुमानद्वयेन उपसर्गस्य द्योतकत्वमेव, धातोस्तु वाचकत्वमिति व्यवस्था। एवं धातोर्विशिष्टक्रियारूपार्थाभिधायकत्वमुपसर्गस्य तु तद्द्योतकत्वमित्यभिधायेदानीं धातूपसर्गयोः संभूय विशिष्टक्रियाभिधायकत्वम्, तयोरेकैकस्य त्वनर्थकत्वमेवेति प्रदर्शयितुमाह—अप्रयोगेऽधिपर्योश्चेति।

अस्यार्थः—अधिपर्योरुपसर्गयोरप्रयोगे च = तु, यावत् क्रियान्तरम् उपरिभावविशिष्टागमनापेक्षया, सर्वतोभावविशिष्टागमनापेक्षया चान्या क्रियाऽऽगमनरूपा, दृष्टम्, तस्याभिधायकस्तत्र धातुः। ताभ्याम् = अधिपरिभ्यां सह प्रयुज्यमानस्तु धातुरनर्थकः। एवमुपसर्गोऽप्यनर्थकः। तत्र विनिगमनाविरहेण संघातस्यैवार्थत्वादिति।

अयं भावः—'अध्यागच्छति, पर्यागच्छति' इत्यत्र 'अधिपरी अनर्थकौ"। तथाहि—आगच्छतीत्यस्मादेवोपरिभावविशिष्टस्य सर्वतोभावविशिष्टस्य वाऽप्यागमनस्य प्रकरणेन

र्थाभिधाने सहकारिण उपसर्गाः। उपसर्गाणां रूढितोऽर्थवत्त्व एव तावधिपरी अनर्थकाविति (अष्टा० १।४।९३) केवलानर्थकतया। नहि तयोरुपसर्गयोः केवलयोस्तत्रार्थोऽस्ति, अत एवोक्तम् – कश्चित्तमनुवर्तते' इति ॥ १९० ॥

प्रसङ्गात् स्वार्थिकप्रत्ययानां स्वरूपमाह—

**तथैव स्वार्थिकाः केचित् सङ्घातान्तरवृत्तयः।**
**अनर्थकेन संसृष्टाः प्रकृत्यर्थानुवादिनः ॥१९१॥**

यावक इत्यादौ कनादयः सम्भूयैवार्थबोधका बोद्धव्याः। यावशब्दात् केवलात् पृथगेव कन्प्रकृतिर्यावशब्दोऽध्यवसित इति संघातान्तरवृत्तयस्ते बोद्धव्याः। अत एवाह—अनर्थकेन संसृष्टा इति। यावशब्दः कन्प्रकृतिरनर्थक एव, समुदायस्तु परस्परशक्त्याहितविशेषस्तत्रार्थवान् नासंभूय स्वार्थमाहेत्याह 'प्रकृत्यर्थानुवादिनः' इति।

ननु प्रकृतिभागस्येदानीमेवानर्थकत्वमुक्तमतः कथं प्रकृत्यर्थानुवादिन

---

शब्दान्तरसान्निध्येन वाऽर्थलिङ्गादिनाऽवगतत्वात्। एवमनर्थकत्वेऽप्यधिपर्योः प्रयोगस्तु लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरात् स्पष्टार्थमेव क्रियते, इत्यतो धातुरेवात्रार्थवानित्येकः पक्षः। विनिगमनाविरहेण धातूपसर्गयोरुभयोरप्यनर्थकत्वे समुदाय एव विशिष्टार्थाभिधायक इति न धातोरत्रार्थान्तराभिधायित्वमित्यपरः पक्षः। अस्मिन् पक्षे धातूपसर्गौ संभूयैवार्थविशेषं ब्रूत इति अर्थान्तराभिधाने धातोः सहकारिण उपसर्गाः। अयञ्च धातूपसर्गयोः संभूयैवार्थाभिधायकत्वपक्ष उपसर्गाणां रूढितः = लोकप्रसिद्धितः अर्थवत्त्व एव।

यत्तु 'अधिपरी अनर्थकौ' (पा० १।४।९३) इति सूत्रं तत्केवलानामुपसर्गाणामनर्थकत्वाभिप्रायेण। नहि तयोरुपसर्गयोः केवलयोस्तत्रार्थोऽस्ति, किन्तु धातुसहितयोः। अत एवोक्तम्—'कश्चित्तमनुवर्तते' इति।

अस्यार्थः—कश्चिदुपसर्गः, तम् = अर्थान्तरमभिदधतं धातुम्, अनुवर्तते = सहकारितयाऽनुसरतीति ॥१९०॥

धातुसमभिव्याहृतानामुपसर्गाणां सार्थक्यानर्थक्यविचारप्रसङ्गात्तासमभिव्याहृतानामपि स्वार्थिकप्रत्ययानां स्वरूपं तन्निर्दिधारयिषया विचारयति—**तथैवेति।**

अस्यार्थः—तथैव = धातुसमभिव्याहृताधिपर्याद्युपसर्गवदेव, केचित् स्वार्थिकाः = यावकादौ कन्नादयः, संघातान्तरवृत्तयः = यावशब्दापेक्षयाऽन्यः संघातो यावक इति तद्घटकाः, अनर्थकेन संसृष्टाः = संघातस्यैवार्थवत्त्वेन यावकशब्दघटकेन यावशब्देनानर्थकेन संसृष्टाः सन्तः, प्रकृत्यर्थानुवादिनः = स्वप्रकृतेर्यावादिशब्दस्यार्थानुवादिनः। इदञ्च कन्प्रत्ययासमभिव्याहारे यावशब्दस्यार्थवत्त्वमालक्ष्य भूतपूर्वगतिमनुरुध्योक्तम्। 'अतः अनर्थकेन संसृष्टा' इत्यनेन न विरोधः। अत एव 'संघातान्तरवृत्तयः' इत्युक्तम्।

इत्युच्यते ? सादृश्यमात्रादित्यभिप्रायः। कन्प्रकृतिः केवला यावशब्देन सदृशमभिमन्यत इति तदभिप्रायेण प्रकृत्यर्थानुवादिन इत्युक्तम्, वस्तुतस्तु 'सङ्घातान्तरवृत्तयः' इत्येव बोद्धव्यम् ॥१६१॥

अथ निपातानामनैयत्येन स्वरूपं प्रदर्शयितुमाह—

**निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।**
**आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः ॥१९२॥**

तेषामुपसर्गवद् द्योतकत्वं क्वचिद् यथा वृक्षश्च प्लक्षश्चेत्यादौ। चादीनां केवलानां च केषाञ्चित् पृथगर्थाभिधायित्वं वाचकत्वमेव सिद्धमित्याह—केचिदि-

---

वस्तुतस्तु धातोरर्थाभिधाने उपसर्गवत् प्रकृतेरर्थाभिधाने कन्नादयः स्वार्थिका सहकारिण इत्येव कारिकाकृतोऽभिप्रायः, तथैवेत्युक्तिस्वारस्यादिति।

अयं भावः—यावक इत्यादौ स्वार्थिकाः कन्नादयः प्रकृत्या संभूयेव = संहितीभूयैव अर्थबोधका इति बोद्धव्यम्। एवञ्च केवलानां स्वार्थिकानां कन्नादीनामानर्थक्यमायातम्। एवं यावशब्दात् केवलात् = कन्प्रत्ययरहितात् पृथगेव कन्प्रकृतिर्यावशब्दो निश्चित इति संघातान्तरवृत्तयः = यावशब्दाघटितं यत्संघातान्तर यावक इति तद्वृत्तयः ते यावशब्दादयो द्रष्टव्या इत्येवमानर्थक्यं यावकशब्दादौ केवलायाः प्रकृतेरपीत्यायातम्। अत एवाह—'अनर्थकेन संसृष्टाः' इति।

अयं भावः—यावशब्दः कन्प्रकृतिरनर्थक एव, प्रकृतिप्रत्ययसमुदायस्तु परस्परशक्त्याहितशक्तिविशेषसपन्नस्तत्रार्थवानिति न परस्परमसंभूय स्वार्थमाह। तदेतदुक्तम्—प्रकृत्यर्थानुवादिन इति।

यद्यपि साम्प्रतमेव स्वार्थिकप्रत्ययप्रकृतेरानर्थक्यस्योक्तत्वेन प्रकृत्यर्थानुवादिन इति वक्तुं न युज्यते, तथापि संघातान्तराघटकस्य केवलस्य यावशब्दस्यार्थवत्त्वेनानुपूर्व्या तत्सदृशे संघातान्तरघटके यावशब्दे सादृश्यमात्रादैक्यमध्यवसाय प्रकृत्यर्थानुवादिन इत्युक्तम्।

वस्तुतस्तु न संघातान्तरघटकस्य कन्प्रकृतेर्यावशब्दस्यार्थवत्त्वमित्यभिप्रेत्य संघातान्तरवृत्तय इत्युक्तमिति ॥१६१॥

अथोपसर्गवद् निपातानामपि स्वरूपमनियतमेव द्योतकत्वेन वाचकत्वेन संभूयार्थवाचकत्वप्रयुक्तेनानर्थक्येन चेति। एवं तेषां स्वरूपं समनन्तरकारिकाभिरुपपाद्य प्रदर्शयितुमाह—**निपाता द्योतका इति।**

**अस्यार्थः**—केचिद् वादिनो निपाता द्योतका इति। तथाहि यद्यपि वटप्लक्षशब्दयोः स्वार्थयोरेव शक्तिः, तथापि वटश्च प्लक्षश्चेत्यादौ स्वेतरपदार्थसमुच्चिते स्वार्थयोः शक्तिर्लक्षणा वेति। तदर्थविषयकवृत्तिव्यञ्जकत्वमेव च तदर्थद्योतकत्वमित्यत्र निपातानां द्योतकत्वम्। यदि त्वत्र चकारस्य समुच्चयार्थाभिधायित्वं स्वीक्रियते, तदा साहित्यरूपे समुच्चये चार्थे नामान्तरार्थस्य निरूप्यनिरूपकभावसम्बन्धेनान्वयोऽनुपपन्नः। नामार्थयोरभेदान्वय

त्यादि। केचिन्निपाता आगमवत्संभूय वाचकाः, यथा येषां पृथगर्थप्रकल्पन इति पाठः, तेषां मते निपातानां द्वैविध्यम्—केचिदर्थवन्तः, केचिदनर्थका इति। तत्र केचिन्निपाताः पृथगर्थप्रकल्पने सत्यर्थाभिधायिनस्ततो द्योतका इत्यर्थवतां स्वरूपकथनम्, ये त्वनर्थकास्तेषां स्वरूपमाह—आगमा इत्यादि ॥१९२॥

---

इति व्युत्पत्तेरिति। अत्रास्यैव केचित्पदस्य काकाक्षिन्यायेन मध्यमणिन्यायेन देहलीदीपकन्यायेन वा पृथगर्थाभिधायिन इत्यत्रापि सम्बन्धः। अत्रापि केचिद्वादिनो निपाताः पृथगर्थाभिधायिन इत्यर्थः।

अयं भावः—चकारस्यैव समुच्चयार्थाभिधायित्वमिति। न च नामार्थयोरभेदान्वय इति व्युत्पत्तिविरोध इति वाच्यम्, निपातातिरिक्तत्वेन नाम्नः संकोचात्। केऽपि = केचित्तु निपाता आगमा इव संभूय = प्रकृत्या सह संहतत्वमापद्य अर्थस्य वाचका इति केवलनिपातानामानर्थक्यमेवेति।

यद्यपि चकारस्य द्योतकत्वोपपादनावसरे—वृक्षश्च प्लक्षश्चेत्युदाहृतं पुण्यराजीये तथापि तन्न शोभनम्, सामान्यविशेषयोः समुच्चयासंभवात्। तथा हि—साहित्यरूपः समुच्चयो भेदे सत्येव सम्भवति दृष्टश्च, न त्वभेदे; सामान्यविशेषयोरभेदस्तु सुप्रसिद्ध एवेति।

यस्तु क्वचित्सामान्यविशेषयोरपि समुच्चयो दृश्यते, स धर्मयोरेव भिन्नयोर्न तु धर्मिणोरित्येवं द्रष्टव्य इति। तत्र धर्मभेदप्रयुक्तो धर्मिभेदो वा द्रष्टव्य इति। यद्वा—केचिद् निपाताश्चादयो द्योतका इति सम्बन्धः। अस्यैव केचित्पदस्य प्रागुक्तरीत्याऽग्रे सम्बन्धे—'केचिन्निपाताः पृथगर्थाभिधायिनः' इति। तद्यथा—शश्वत्, युगपत् एकपदे इत्यादयो वाचका इति।

क्वचित्तु—"निपाता द्योतका येषां पृथगर्थं प्रकल्पते' इति पाठः" इति पुण्यराजीय उक्तम्। तत्र पृथगर्थं इति पाठः साधुः। यद्वा सोऽपि पाठः साधुः, पृथगर्थं निपातपदं प्रकल्पत इति योजनया।

तत्रायमर्थः—येषां मते निपातपदं पृथगर्थं = बहुव्रीहिणा पृथगर्थबोधकम् प्रकल्पते = प्रसिध्यति, तेषां मते निपातानां द्वैविध्यम्—केचिदर्थवन्तः, केचिदनर्थका इति। तत्र केचिन्निपाताः पृथगर्थप्रकल्पने सत्यर्थाभिधायिनः = द्योत्यार्थज्ञापकाः ततो द्योतका इत्यर्थवतां स्वरूपकथनम्। अत्र मते निपातानां द्योतकत्वमेव, न तु वाचकत्वमिति। ते च चादयो युगपदादयश्चेति। ये त्वनर्थका निपाता यथा—अधिपर्यादयः। खलु किल इत्यादयश्च। येऽनर्थका अपि वाक्यालङ्कारे प्रयुज्यन्ते; तेषां स्वरूपमाह—आगमा इवेत्यादि ॥१९२॥

तथा च लौकिके प्रयोगेऽनियम इत्याह--

**उपरिष्टात् पुरस्ताद्वा द्योतकत्वं न भिद्यते ।**
**तेषु प्रयुज्यमानेषु भिन्नार्थेष्वपि सर्वथा ॥१९३॥**

पूर्वं पश्चाद्वा प्रयुक्तास्तदर्थद्योतनं कुर्वन्तीति तेषु विकल्पसमुच्चयाद्यर्थेषु द्योतकत्वमेव प्रयुज्यमानेषु स्थितम् ॥१९३॥

अथ वाचका एव कस्मान्नोच्यन्ते, किं द्योतकत्वेनेत्यर्थद्योतकत्वं दृढीकर्तुमाह—

**चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।**
**प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ॥१९४॥**

एते हि चादयः केवला न प्रयुज्यन्ते ततो वाचका न भवन्तीति बोद्धव्यम् । चादयो धर्मिवाचका न भवन्तीति साध्यो धर्मः, केवलानामप्रयोगात् । यदि हि वाचकाः स्युस्तदा गवादिवत् केवलानामपि तेषां प्रयोगः स्यादित्यनुमानम् ।

---

एवं पूर्वकारिकया केषाञ्चिन्निपातानां द्योतकत्वम् येषां पदान्तरसमभिव्याहारं विना प्रयोगो न भवति, यथा चादीनाम्; केषाञ्चित्तु वाचकत्वं येषां पदान्तरसमभिव्याहारापेक्षा न नियता, यथा 'शश्वत्' 'युगपद्' 'एकपदे' इत्यादीनाम् । तत्र येषां द्योतकत्वं तेषां द्योत्यार्थाभिधायिपदात् प्राक् पश्चाद्वा लौकिके प्रयोगेऽनियमः । वैदिके प्रयोगे तु नियमो वेदानुपूर्व्या नित्यत्वेन नियतत्वादित्याह--**उपरिष्टात् पुरस्ताद्वेति ।**

अयमर्थः--तेषु द्योतकेषु निपातेषु स्वसमभिव्याहृतपदार्थात् सर्वथा भिन्नार्थेष्वपि द्योत्यार्थाभिधायिपदाद् उपरिष्टात् = ऊर्ध्वम् = अनन्तरम्, पुरस्तात् पूर्वं वा प्रयुज्यमानेषु द्योतकत्वं समानमेव न तु भिद्यत इति । तदुक्तं पुण्यराजेन— पूर्वं पश्चाद्वा प्रयुक्तास्तदर्थद्योतनं कुर्वन्तीति तेषु विकल्पसमुच्चयाद्यर्थेषु द्योतकत्वमेव प्रयुज्यमानेषु स्थितमिति ॥१९३॥

अथ सर्वेऽपि निपाता वाचका एव कस्मान्नोच्यन्ते, किं केषुचिद् द्योतकत्वस्वीकारेणेत्याशङ्क्यार्थद्योतकत्वं केषाञ्चिद् दृढीकर्तुमाह—**चादय इति ।**

अयमर्थः—यतश्चादयः पदत्वे सत्यपि केवला न प्रयुज्यन्ते, अतो द्योतकत्वमेव तेषाम् । वाचकत्वे हि गवादिपदवद् युक्तस्तेषां केवलानां प्रयोग इति । प्रत्ययस्तु वाचकत्वेऽपि पदत्वाभावात् केवलो न प्रयुज्यते, 'अपदं न प्रयुञ्जीत' इति निषेधात् । तथा च वाचकावाचकयोर्द्वयोरपि समभिव्याहारापेक्षायाः केवलानामप्रयोगस्य च साम्येऽप्यस्ति तयोः पदत्वभावाभावकृतो विशेषः, पदत्वे सति केवलानामप्रयोगस्यैव च वाचकत्वाभावसाधकत्वमिति ।

अयमत्रानुमानप्रयोगः—चादयो वाचका न भवन्ति, पदत्वे सति केवलानाम-

नन्वत्र प्रत्यनुमानमस्ति - चादयो धर्मिद्योतका न भवन्तीति साध्यो धर्मः, केवलानामप्रयोगात्। प्रत्ययवत्तत्राह--पदत्वे सतीति।

एतदुक्तं भवति - न निर्विशेषणोऽयं हेतुरपि तु पदत्वे सति केवलानामप्रयोगाद् द्योतका एत इति पदत्वे सतीत्यनेन प्रत्ययव्यावृत्तिः। एतदेव दर्शयितुमाह--प्रत्ययो वाचकत्वेऽपीत्यादि। प्रत्ययस्य कस्यचिद्वाचकत्वेऽपि पदत्वाभावात् केवलस्याप्रयोगः ॥१९४॥

अथ शब्दशक्तिस्वाभाव्याच्चादिपदस्यासत्त्वभूतो यः पृथगर्थस्तद्वाचकत्वाद्वाचकत्वं व्यवस्थाप्यते, तदनुपपन्नम्; शक्त्यनुग्रहाद्यथा तदर्थवाचकानां समुच्चयादीनां प्रयोगे षष्ठी श्रूयते, वृक्षस्य समुच्चयः, प्लक्षस्य समुच्चय इति, तद्वन्निपातप्रयोगे षष्ठी श्रूयेत वृक्षस्य च प्लक्षस्य चेति। स्यादेवं यदि समुच्चयाभिधायकाः स्युः, न चैवम्। किं तर्हि समुच्चिताभिधायिन एत इत्युच्यते तदभिधाने च व्यतिरेको नास्तीत्याह--

**समुच्चिताभिधानेऽपि व्यतिरेको न विद्यते।**
**असत्त्वभूतो भावश्च क्रियाऽन्येनाभिधीयते ॥१९५॥**

यद्येवं समुच्चितस्य सत्त्वभूतस्याभिधानेऽसत्त्व इति प्रतिषेधान्निपातसंज्ञाया अभावे तत्पूर्विकाया अव्ययसंज्ञाया अभावाच्चादेरपि विभक्तेः श्रवणं प्राप्नोतीत्याह—असत्त्वेति।

---

प्रयुज्यमानत्वाद् व्यतिरेके गवादिपदवदिति। 'पदत्वे सती'ति विशेषणेन च प्रत्यये व्यभिचारवारणमिति।

अयं भावः - यत एते चादयः केवला न प्रयुज्यन्ते, ततो वाचका न भवन्तीति। एतेनेदमनुमानं सूचितम्— चादयो वाचका न भवन्ति, केवलानामप्रयोगाद्, व्यतिरेके गवादिवदिति।

यत्तु पुण्यराजीये—नन्वत्र प्रत्यनुमानमस्ति—चादयो द्योतका न भवन्ति, केवलानामप्रयोगात्, प्रत्ययवदित्याशङ्क्य 'पदत्वे सति' इति विशेषणेन वारितम्।

तत्रेदं वक्तव्यम् - साध्याभावसाधक हि हेत्वन्तरं सत्प्रतिपक्ष उच्यते। अत्र तु न साध्याभावः साध्यम्, न च तत्साधकं हेत्वन्तरमिति सत्प्रतिपक्षाप्रसक्त्या प्रत्यये व्यभिचारवारणाय पदत्वे सतीति हेतौ विशेषणं देयमिति युक्तं प्रतिभाति ॥१९४॥

ननु चादिपदस्यासत्त्वभूतो यः पृथगर्थः समुच्चयरूपस्तद्वाचकत्वं तस्याऽन्वयव्यतिरेकाभ्यां व्यवस्थाप्यते, शब्दशक्तिस्वाभाव्यात्। तदर्थान्वयव्यतिरेकानुविधाने हि तदर्थवाचकत्वं शब्दशक्तिस्वभाव इति चेन्न, शक्त्यनुग्रहमूलके हि चादीनां समुच्चयाद्यर्थवाचकत्वे स्वीक्रियमाणे यथा समुच्चयादिपदप्रयोगे षष्ठी श्रूयते—वृक्षस्य समुच्चयः, प्लक्षस्य समुच्चय इति। तद्वन्निपातपदप्रयोगेऽपि षष्ठी श्रूयेत, वृक्षस्य च प्लक्षस्य चेति।

एतदुक्तं भवति--इह शब्दैरर्थाभिधानं स्वाभाविकमिति स्थितम्। अत्र निपाताः शब्दशक्तिस्वभावादेवासत्त्वभूतार्थाभिधायिनः प्रतीयन्त इति सनिदर्शनमाह--क्रियते। अत्र यथेत्यनुषङ्गः। यथा पाक एवोभयत्र नामपदस्याख्यातस्य च वाच्यः शब्दशक्तिस्वाभाव्यात्तथा पचतीत्याख्यातेनासत्त्वभूतोऽसावभिधीयते पाक इत्यत्र नामपदेन परिनिष्ठितस्वभावः सिद्ध इति, तद्वन्निपातैः समुच्चितादेरसत्त्वभूतस्याभिधानमिति न विभक्तेरुत्पत्तिः।

---

ननु चादीनां समुच्चयार्थवाचकत्वे एष दोषः स्यात्, षष्ठ्यर्थसम्बन्धनिदानस्य भेदस्य संभवात्, चादीनां समुच्चितार्थाभिधायकत्वे तु न दोषः, समभिव्याहृतपदार्थेन सह चाद्यर्थस्याभेदादित्याशङ्कते--**समुच्चिताऽभिधानेऽपीति**।

पूर्वार्धस्यायमर्थः--यथा चादीनां द्योतकत्वपक्षे प्लक्षादिपदानामेव समुच्चितप्लक्षाद्यर्थाभिधायकत्वं, चादीनां तु प्लक्षादिगततादृशार्थशक्तिव्यञ्जकत्वरूपं द्योतकत्वमिति व्यतिरेकाभावान्न प्लक्षादिपदात् षष्ठी, तथा चादीनां समुच्चितार्थाभिधानेऽपि = तदर्थाभिधायकत्वेऽपि व्यतिरेको = भेदो न विद्यत इति न चादीनां समुच्चितार्थवाचकत्वपक्षे षष्ठ्यापत्तिरूपो दोष इति।

यदि चादीनां सत्त्वभूतसमुच्चिताद्यर्थाभिधायकत्वं तदा 'चादयोऽसत्त्वे' (१।४।५७) इत्यसत्त्व इति पर्युदासात् निपातसंज्ञाया अभावे स्वरादिनिपातमव्ययम्' (१।१।३७) इति निपातसंज्ञापूर्विकाया अव्ययसंज्ञाया अभावे विभक्तिलुकोऽभावाच्चादेरपि विभक्तेः श्रवणं प्राप्नोति तस्मादयुक्तश्चादेः समुच्चिताद्यर्थाभिधायकत्वपक्ष इत्येतदाशङ्क्य चादेरसत्त्वभूतसमुच्चिताद्यर्थाभिधानं स्वभावः, यथाऽऽख्यातपदस्यासत्त्वभूतक्रियाभिधानं स्वभावः।

एवञ्च न चादेर्विभक्त्युत्पत्तिः; चाद्यर्थस्यासत्त्वभूतत्वेन लिङ्गसंख्यारहितत्वेन तद्बोधफलकविभक्त्युत्पत्तेरनुपपत्तेरित्याह--**असत्त्वभूतो भावश्चेति**।

अयमर्थः--असत्त्वभूतो भावः = समुच्चितादिरूपोऽर्थः। चशब्दस्त्वर्थे। निपातपदैरभिधीयत इति शेषः। अत्र दृष्टान्तमाह--'क्रियाऽन्येनाभिधीयत' इति। अत्रादौ यथेति पदमध्याहार्यम्।

अयमर्थः--यथाऽन्येन पाक इत्यादिसत्त्वभूतक्रियाभिधायिनामपदेभ्योऽन्येन, पचतीत्याद्याख्यातपदेन असत्त्वभूता क्रिया स्वभावतोऽभिधीयत इति।

अयं भावः--यथा पाकः पचति इत्यादौ उभयत्रापि पाक एव नामपदस्याख्यातपदस्य च वाच्यः, किन्तु शब्दशक्तिस्वाभाव्यात् पचतीत्यत्राख्यातेनासत्त्वभूतः पाकः साध्यत्वेनाभिधीयते, पाक इत्यत्र नामपदेन तु परिनिष्ठितस्वभावः सिद्ध इति, तद्वन्निपातैश्चादिभिः शब्दशक्तिस्वाभाव्यादेवासत्त्वभूतस्य समुच्चिताद्यर्थस्याभिधानमिति तदर्थस्यासत्त्वभूतत्वेन लिङ्गसंख्याऽन्वयायोग्यतया न चादिभ्यो विभक्तेरुत्पत्तिः।

उक्तं च—"नेदं वाचनिकं लिङ्गसंख्यादिस्वाभाविकमेव। तद्यथा—समानमधीयानानां केचिदर्थैर्युज्यन्ते अपरे न" (भाष्ये २।१।१) इति। एवं वाचकत्वात् समुच्चिताभिधानेऽप्याख्यातपदवदसत्त्वभूतार्थाभिधायित्वाद्वि-भक्तेरभावः॥ १९५॥

अस्त्वेवमपि समुच्चिताभिधायित्वाद्यथा स्वतन्त्राणां तदभिधायकानां विशेषणेन योगस्तथा निपातानामपि स्यात्, अथ च गुणवचनानामाश्रयतो लिङ्ग-वचनानि भवन्तीत्यसत्त्ववाचकत्वाद्विभक्त्यभावात् शोभनं च वृक्ष इति प्राप्नोति। तथा चान्यत्रोक्तम्—प्रतिप्रयोगं जात्यङ्ग सम्बन्धमुपगच्छति। विशेषणं, ततो धर्मान् जातिस्थान् प्रतिपद्यते। ततश्च पञ्चाला जनपदो बहुधनो रमणीय

---

तदुक्तं भाष्ये—नेदं वाचनिकं लिङ्गसंख्यादि, स्वाभाविकमेव। तद्यथा—समान-मीहमानानामधीयानानाञ्च केचिदर्थैर्युज्यन्ते, अपरे नेति।

अयमर्थः—इदम् = शब्दतः प्रतीयमानमर्थे लिङ्गसंख्यादि न वाचनिकम् = वचन-कृतं शास्त्रकृतम्, किन्तु स्वाभाविकम्, शब्दशक्तिस्वभावप्रयोज्यम्। स्वभावतो हि केचन शब्दा लिङ्गसंख्यादियुक्तमर्थं प्रत्याययन्ति, यथा सत्त्वार्थकानि नामानि पाकादिशब्दाः। स्वभावत एव च केचन शब्दा लिङ्गसंख्यादिरहितमसत्त्वभूतमर्थमभिदधति, यथा पच्यादयो धातुशब्दाः।

अत एवोक्तम्—'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति (निरुक्तम् १।१)। अत्र भावपदेनाऽसत्त्वभूता क्रियोच्यते। अत एवोक्तम्—'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते' इति (वाक्य प०)। नामानि तु सत्त्वप्रधानानि। अत्र सत्त्वं द्रव्यम्। अत एव लिङ्गसंख्यान्वितं द्रव्यमित्यभियुक्ताः। शब्दानां सत्त्वासत्त्वप्रधानत्वस्वभावकत्वे निदर्शनमाह—तद्यथेति।

अयमर्थः—यथा कक्षासु गुरुप्रोक्तार्थं ग्रहीतुं समानमीहमानानाम् = प्रयतमानानाम्, समानमेव च वाक्यजातमधीयानानां छात्राणां केचन छात्रा आर्थैर्युज्यन्ते = अर्थान् प्रबुध्यन्ते, अपरे छात्रा नेति एतादृशस्तेषां स्वभाव एव, अर्थप्रबोधाबोधहेतुस्तत्र गुरवः किं कुर्वन्तु। एष चार्थो लोकप्रसिद्धोऽनूदितः कविभिः सुमनःपदश्लेषेण छात्रपुष्पयोः, कलानिधिपदेन गुरुचन्द्रयोरौपम्यमाश्रयद्भिः।

किरति प्रकरं गवां प्रकामं सुमनस्स्वच्छतरं निधौ कलानाम्।
कतिचित् कलयन्ति यत्प्रबोधं कतिचिन्नेति स तत्स्वभाव एव॥ इति।

एवञ्च चादिपदानां वाचकत्वात् समुच्चिताभिधानेऽप्याख्यातपदवदसत्त्वभूतार्था-भिधायित्वात् तेभ्यो विभक्तेः प्रसक्त्यभाव इति चादीनां वाचकत्वपक्षे न कोऽपि दोष इति॥१९५॥

**इति भवति । अथ लुबन्तस्य विशेषणं न जातेस्ततः पञ्चाला रमणीया जनपद इति भवति, एतदाशङ्क्य समर्थयितुमाह—**

**समुच्चिताभिधानेऽपि विशिष्टार्थाभिधायिनाम् ।**
**गुणैः पदानां सम्बन्धः परतन्त्रास्तु चादयः ॥१९६॥**

**गुणैर्विशेषणैः पदानां विशिष्टार्थाभिधायिनां सम्बन्ध उपपद्यते । निपातानां तु शक्तिस्वाभाव्यादसत्त्ववाचित्वेऽपि नियतपरतन्त्रत्वाद्विशेषणयोगो नास्तीति न कश्चिद्दोषः । एतदुक्तं भवति—एतदपि शक्तिस्वाभाव्यमेव यत्तेषां नित्यपरतन्त्रत्वं**

---

नन्वस्त्वेवं चादीनां समुच्चिताद्यर्थवाचकत्वम्, एवमपि दोषः । तथाहि—यथा स्वतन्त्राणां समुच्चिताद्यर्थाभिधायिनां समुच्चितादिपदानां विशेषणेन योगः—शोभनः कटेन समुच्चितः पट इति, तथा स्वसमभिव्याहृतपदपरतन्त्राणां चादिनिपातानामपि समुच्चिताद्यर्थाभिधायित्वाद् विशेषणेन योगः स्यात् । किञ्चायमस्ति मुनित्रयसम्मतोऽभ्युपगमः—गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीति ।

अस्यार्थः—गुणवचनानाम् = विशेषणवाचकानां पदानाम्, आश्रयतः = विशेष्यवाचकपदमाश्रित्य, अत्राश्रयपदेन विशेष्यं गृह्यते । आश्रीयते = आधारीक्रियते विशेषणैः स्ववृत्तय इति व्युत्पत्त्या, व्यवच्छेद्यत्वेनाश्रीयते विशेषणैरिति व्युत्पत्त्या वा । ल्यब्लोपे च पञ्चमी । विशेष्यवाचकपदार्थगतलिङ्गसंख्यानुरोधेनेति यावत् । लिङ्गवचनानि भवन्ति । अत्र वचनं संख्या ।

एवञ्च लिङ्गानि संख्याश्च भवन्तीत्यर्थः । ततश्च चादीनामसत्त्ववाचकत्वेन विभक्त्यभावात् तदर्थान्वये हरितं शोभनञ्च वृक्ष इति प्राप्नोति । चार्थस्याऽसत्त्वभूतत्वेन लिङ्गसंख्यारहितत्वात् सामान्ये नपुंसकमापद्यते हरितशोभनपदयोः, चकारस्य च विशेषणयोग इति । तथा च 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इत्येतद् वचनानुरोधि पद्यमन्यत्रोक्तम्—
"प्रतिप्रयोगं जात्यङ्गे सम्बन्धमुपगच्छति । विशेषणं ततो धर्मान् जातिस्थान् प्रतिपद्यते ॥" इति ।

अयमर्थः—विशेषणे प्रतिप्रयोगम् = प्रतिशब्दम्, सम्बन्धम् = अन्वयम्, उपगच्छति = प्राप्नुवति सति, कदाचित्तस्मिन् जात्यङ्गे = जातिविशिष्टस्य विशेषस्याङ्गे गुणे सति ततः = जात्यङ्गत्वादेव विशेषणं जातिस्थान् = जातिविशिष्टविशेष्यस्थितान्, धर्मान् = लिङ्गवचनादीन् प्रतिपद्यते = प्राप्नोतीति । तदुक्तमभियुक्तैः—

या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥ इति ।

ततश्च पञ्चाला जनपदो बहुधनो रमणीय इति तदा भवति, यदा बहुधनो रमणीय इति जातिवाचिनो जनपदशब्दस्य विशेषणम् । यदा तु तदेव पञ्चाला इत्येतस्य तद्राजलुबन्तस्य विशेषणं तदा पञ्चाला रमणीया बहुधना जनपद इति भवति । एवञ्च चादीनां समुच्चिताद्यर्थाभिधायित्वे विशेषणस्य तदन्वयित्वे च हरितं शोभनञ्च वृक्ष इति प्रयोगापत्तिः सुस्थिरेत्येतदाशङ्कां समाधातुमाह—समुच्चिताभिधानेऽपीति ।

नामेति। अतः समुच्चिताभिधानेऽपि न केवलः प्रयोगो नापि विशेषणसम्बन्ध इति स्थितम् ॥१९६॥

एवं नामाख्यातोपसर्गनिपातलक्षणं पदचतुष्टयं व्याख्यातम्, अथ कर्मप्रवचनीयाः पञ्चमं पदमभ्युपगतमिति तद्विचारयितुमाह—

**जनयित्वा क्रिया काचित् सम्बन्धं विनिवर्तते।**
**श्रूयमाणे क्रियाशब्दे सम्बन्धो जायते क्वचित् ॥१९७॥**

**सम्बन्धावच्छेदहेतवः कर्मप्रवचनीया इष्यन्ते। यद्वक्ष्यति 'सम्बन्धस्य भेदकाः' (२।२०४) इति। सम्बन्धश्च सर्वः क्रियाकारकपूर्वको भवति। तत्र**

---

अयमर्थः – स्वार्थबोधने नियमेन पदान्तरसमभिव्याहारापेक्षारूपपारतन्त्र्याभावरूपस्वातन्त्र्ये सति जात्यादिविशिष्टार्थाभिधायिनां पदानां गुणैर्विशेषणैः सम्बन्धो भवति। चादयस्तु समुच्चिताभिधानेऽपि समुच्चिताभिधानेन विशिष्टार्थाभिधायित्वेऽपि परतन्त्राः = प्रागुक्तरूपपारतन्त्र्यवन्तो न स्वतन्त्रा इति तेषां स्वभावदर्शनान्न तेषां विशेषणैः सम्बन्ध इति न कश्चिद् दोषस्तेषां समुच्चयाभिधायित्वपक्ष इति।

अयं भावः—स्वतन्त्राणां जात्यादिविशिष्टार्थाभिधायिनां पदानां विशेषणसम्बन्धो दृश्यते, अत एवोपपद्यते च। निपातानां तु शब्दशक्तिस्वाभाव्यादसत्त्वभूतार्थाभिधायित्वेऽपि शब्दशक्तिस्वाभाव्यादेव नियमेन पदान्तरसमभिव्याहारपरतन्त्रत्वाद् विशेषणयोगो नास्तीति न कश्चिद् दोषः। तथा च निपातानामसत्त्वभूतसमुच्चितान्यर्थाभिधानेऽपि न तेषां केवलः प्रयोगो नापि विशेषणसम्बन्ध इति शब्दशक्तिस्वाभाव्यमूलिका स्थितिरिति ॥१९६॥

एवं नामाख्यातोपसर्गनिपातलक्षणं बाहुल्येन शास्त्रेषु प्रसिद्धं पदचतुष्टयं प्राग् व्याख्यातम्। अथ कर्मप्रवचनीया अपि पञ्चमं पदं वैयाकरणनिकाये कार्यार्थमभ्युपगतमिति, इदानीं तद्विचारयितुमुपक्रमते—**जनयित्वा क्रियेति।**

अत्र "जनयित्वा क्रिया काचित् सम्बन्धं विनिवर्तते" इति पाठः साधुः। "जनयित्वा क्रियां काञ्चित् सम्बन्धो विनिवर्तते" इति पाठस्तु पुण्यराजव्याख्याविरोधादनुभवविरोधाच्चोपेक्ष्यः। पुण्यराजीये हि—"अत्र हि राज्ञः पुरुषोऽयं यस्मात् स राजा पुरुषं बिभर्ति, अतो भरणलक्षणा क्रियाऽऽश्रयाश्रयिभावलक्षणं सम्बन्धं जनयित्वा निवृत्ता" इत्युक्तम्। अनुभूयते चैतदेवमिति।

श्लोकार्थस्तु—क्वचित् काचित्क्रिया सम्बन्धं जनयित्वा विनिवर्तत इति न श्रूयते। यथा राज्ञः पुरुष इत्यत्र भरणक्रिया राजपुरुषयोराश्रयाश्रयिभावलक्षणं सम्बन्धं जनयित्वा निवृत्तेति न श्रूयते। अत्र हि यतः, पुरुषमिमं राजा बिभर्ति, अतोऽयं राज्ञः पुरुष इत्यनुभवने क्रियायाः सम्बन्धजनकत्वमिति। क्वचित्तु क्रियाशब्दे श्रूयमाणे सत्येव सम्बन्धो जायते। यथा मातुः स्मरतीत्यादौ।

क्वचित् सम्बन्ध जनयित्वा क्रिया विनिवर्तते, यथा राजपुरुष इति। अत्र हि राज्ञः पुरुषोऽयं यस्मात् स राजा पुरुषं बिभर्ति, अतो भरणलक्षणा क्रिया आश्रयाश्रयिभावलक्षणं सम्बन्धं जनयित्वा निवृत्ता। क्वचित् क्रियापदं श्रूयमाणसम्बन्धमुपजनयति, यथा मातुः स्मरतीति। अत्र हि मातुरिति कर्मपदमतो मातृसम्बन्धि स्मरणमिति निमित्तिनिमित्तभावलक्षणं सम्बन्धं स्मरति क्रिया श्रूयमाणैव जनयति।

---

अत्र हि—श्रूयमाणैव स्मरतिक्रिया मातुः स्वेन सह जन्यजनकभावलक्षणं सम्बन्धं जनयतीति न विनिवर्तते। एवं श्रूयमाणक्रियापदस्थले षष्ठीविषये सर्वत्र बोध्यमिति।

अयं भावः—सम्बन्धावच्छेदहेतवः=श्रूयमाणक्रियोपजनितसम्बन्धविशेषावद्योतकाः कर्मप्रवचनीया इष्यन्ते। यथा वृक्षं प्रति विद्योतते विद्युदित्यत्र प्रतिः कर्मप्रवचनीयो विद्योतनक्रियोपजनितं स्वस्य वृक्षेण सह लक्ष्यलक्षणभावरूपं सम्बन्धमवद्योतयति। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इति व्युत्पत्तेः। बाहुलकाद् भूतेऽर्थे कर्तर्यनीयर्। क्वचिदन्यत्र क्रियां प्रोक्तवन्तः साम्प्रतं तु न क्रियावाचकाः, किन्तु क्रियोपजनितस्य सम्बन्धविशेषस्यावद्योतका इति व्युत्पत्तेरर्थः। यथा 'वृक्षं प्रति विद्योतते' इत्यत्र प्रतिः कर्मप्रवचनीयः सम्बन्धविशेषं लक्ष्यलक्षणभावमवद्योतयन् सम्बन्धसामान्यं द्वितीयार्थं परिच्छिनत्ति, प्रतिस्त्वयमन्यत्र-—देवा असुरान् अप्रत्यजयन्नित्यादौ प्रतिष्ठारूपां क्रियां प्रोक्तवानित्यप्रतिष्ठितान् असुरान् देवा अजयन्निति तदर्थः। यद्वक्ष्यति—

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥ इति।

(वा० प० २।२०५)

अयमर्थः—अयम् =वृक्षं प्रति विद्योतते विद्युदित्यत्र कर्मप्रवचनीयः प्रतिः क्रियाया द्योतको न, विद्योतनक्रियायाः श्रवणात्; क्रियान्तरस्य चाप्रतीतेः। सम्बन्धस्यापि वाचको न, षष्ठ्यपवादभूतया द्वितीययैव सम्बन्धस्याभिधानात्। प्रादेशं विपरिलिखतीत्यादौ यथा विशब्दो विमानक्रियापेक्षी, प्रादेशं विमाय परिलिखतीति तथा क्रियापदाक्षेपी न, आक्षिप्तस्य क्रियान्तरस्यात्राप्रतीतेः। किन्तु क्रियाविशेषजनितस्य = विद्योतनक्रियाजनितस्य स्वेन सह सम्बन्धसामान्यस्य भेदको विशेषकः = लक्ष्यलक्षणभावरूपे सम्बन्धविशेषेऽवस्थापकः प्रकृते प्रतिरूपः कर्मप्रवचनीय इति। एवं सम्बन्धावच्छेदहेतवः कर्मप्रवचनीया इति स्थितम्। सम्बन्धश्च सर्वोऽपि क्रियाकारकपूर्वको भवति। कस्याञ्चित् क्रियायां कारकीभूतयोरेव द्वयोः परस्परं सम्बन्धः क्रियया जन्यत इति यावत्।

तथाहि—'राजा पुरुषमिमं बिभर्ति' इति वाक्ये भरणक्रियायाः कर्तृकर्मभूतयोरेव राजपुरुषयोः स्वस्वामिभावलक्षण आश्रयाश्रयिभावलक्षणो वा सम्बन्धो भरणक्रिययोपजन्यत इति। तत्र क्वचित्सम्बन्धं जनयित्वा क्रिया विनिवर्तते, यथा राजपुरुष इति।

अत्र हि राज्ञः पुरुषोऽयं यस्मात् स राजा पुरुषं बिभर्ति, अतो भरणलक्षणा क्रिया आश्रयाश्रयिभावलक्षणं राजपुरुषयोः सम्बन्धं जनयित्वा राज्ञः पुरुष इत्यत्र निवृत्तेति न श्रूयते।

एतदेवान्यत्रोक्तम्—"सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥" वाक्यप० साधन १५६) इति ॥१९७॥

सम्बन्धसामान्ये षष्ठीति किमर्थम् अधीगर्थदयेशां कर्मणी'त्यादि (पा० २।३।५२) प्रकरणारम्भ इति प्रसङ्गाद्विचारयितुमाह—

**तत्र षष्ठी प्रतिपदं समासस्य निवृत्तये।**
**विहिता दर्शनार्थं तु कारकं प्रत्युदाहृतम् ॥१९८॥**

मातुः स्मरणमित्यादौ कर्मणि शेषत्वेन विवक्षिते सिद्धैव षष्ठीति पुनः प्रातिपद्येनाधीगर्थेत्यादिना (पा० २।३।५२) या षष्ठी विहिता सा नियमाय भवति। कर्मादौ शेषत्वेन विवक्षिते षष्ठ्येव भवति। यदन्यत् प्राप्नोति तन्निषिध्यते किं

---

क्वचित् क्रियापदं श्रूयमाणमेव सत् स्ववाच्यक्रियायाः कारकेण सम्बन्धमुपजनयति। सम्बन्धं जनयित्वाऽपि च श्रूयत एव, न तु विनिवर्तते। तद्विनिवृत्तौ सम्बन्धस्यापि विनिवृत्तिप्रसङ्गात्, द्विष्ठत्वात् सम्बन्धस्येति।

उदाहरणं तु 'मातुः स्मरती' ति। अत्र हि मातुरिति कर्मपदमतो मातृसम्बधि स्मरणमिति निमित्तनिमित्तिभावलक्षणं=जन्यजनकभावलक्षणम् सम्बन्धं श्रूयमाणैव स्मरतिक्रिया जनयति। एतदेवान्यत्रोक्तम्—

"सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते।" इति। (वा० प० ३ साधन १५६)

अयमर्थः—सर्वोऽपि सम्बन्धः कारकेभ्योऽन्यः, किन्तु क्रियाकारकपूर्वकः, क्रियाया ये कारके तत्पूर्वकः। यद्वा—क्रियापूर्वकः कारकपूर्वकश्चेति। तत्राद्यस्योदाहरणं राज्ञः पुरुष इति। द्वितीयस्योदाहरणं मातुः स्मरतीति। अश्रुतायां क्रियायां षष्ठ्या सम्बन्धोऽभिधीयत इत्यस्याप्युदाहरणमाद्यम्। श्रुतायां क्रियायां सम्बन्धस्तयाऽभिधीयत इत्यस्योदाहरणं द्वितीयमिति ॥ १९७ ॥

ननु यदा सम्बन्धसामान्ये 'शेषे षष्ठी'ति सूत्रविहिता षष्ठीति स्वीक्रियते, तदा किमर्थम् 'अधीगर्थदयेशां कर्मणी'त्यादिः प्रतिपदषष्ठीविधानार्थः प्रकरणारम्भ इति प्रसङ्गाद्विचारयितुमाह—तत्र षष्ठीति।

अयमर्थः—तत्र 'शेषे षष्ठी'ति सूत्रेण सम्बन्धसामान्ये षष्ठी विधीयत इति स्थिते सति, 'अधीगर्थदयेशां कर्मणी'त्यादिशास्त्रेण या प्रतिपदं षष्ठी विहिता सा न व्यर्था, किन्तु मातुः स्मरणमित्यादौ समासस्य निवृत्तये विहितेति। तदाहुर्वार्त्तिककाराः—'प्रतिपदविधाना च षष्ठी न समस्यते' इति।

नन्वेवं सति 'अधीगर्थदयेशां कर्मणि' इति सूत्रे कर्मणीति किम्? मातुर्गुणैः स्मरणमिति कथं प्रत्युदाहृतम्? तथा सति मातुर्गुणानां स्मरणमिति प्रत्युदाहरणं करणे शेषत्वेन

चान्यत् प्राप्नोति ? लुगादि । तत्र निदानोच्छेदनं विना न लुगादिनिवृत्तिः कर्तुं शक्येति समासनिवृत्तिरेव क्रियते। ततश्च षष्ठ्येव भवति। यदन्यतः पृष्ट्वाऽऽयाति समासलुगादि प्राप्नोति, तन्निवार्यत इत्यतः प्रतिपदं पुनः षष्ठी समासस्य निवृत्तये विहितेति बोद्धव्यम्। अतश्च 'प्रतिपदविधाना च षष्ठी न समस्यते' इति भाष्यं नारम्भणीयमेव। यद्येवं 'कर्मणीति किं मातुर्गुणैः स्मरणम्" इति कथं प्रत्युदाहृतम्। यथा गुणानां स्मर्तव्यत्वस्यासम्भवः, तथा शेषत्वस्यापि। यदि शेषत्वेनास्य [यदि शेषत्वस्यापि] विवक्षिताः स्युस्तदा तेषां षष्ठी स्यात्, तृतीया न भवेत्। ततश्च द्वयङ्गवैकल्यमेतस्येत्येतदाशङ्क्याह--दर्शनार्थं त्वित्यादि। मातुर्गुणानां स्मरणमित्युक्ते संदिह्येत, गुणा कर्म करणं वेति। तत्रोक्तं गुणैः स्मरणमिति। गुणैरिति करणं यदा शेषत्वेन विवक्ष्यते तदा प्रतिपदविधाना षष्ठी मा भूदित्येवमर्थं कर्मणीत्युक्तमिति द्वयङ्गवैकल्याभावः। पुनः षष्ठीविधानं समासादि-

---

विवक्षिते षष्ठ्यापादनपरं युक्तं स्यात्। यथाश्रुते तु गुणैरिति करणत्वस्य विवक्षया तृतीयेति शेषत्वाविवक्षया करणे षष्ठ्याः प्राप्तिरेव नास्तीति चेन्न; मातुर्गुणैः स्मरणमित्यस्य गुणेषु करणत्वप्रदर्शनार्थं प्रत्युदाहृतत्वात्।

वस्तुतस्तु मातुर्गुणानां स्मरणमित्येव प्रत्युदाहरणम्। 'कर्मणि' इति पदाभावे गुणेषु करणेषु शेषत्वेन विवक्षितेषु 'अधीगर्थदयेशाम्' इति षष्ठी स्यात्। ततश्च 'प्रतिपदविधाना षष्ठी न समस्यत' इति समासनिषेधाद् मातुर्गुणानां स्मरणमित्येव स्यात्। सम्बन्धसामान्ये षष्ठीस्वीकारे तु षष्ठीति समासविकल्प इष्यते, मातुर्गुणस्मरणमिति गुणानां स्मरणमिति चेति मातुर्गुणैः स्मरणमिति प्रत्युदाहरणदानाभिप्रायात्। दर्शनार्थं तु कारकं प्रत्युदाहृतमित्यस्य-मातुर्गुणानां स्मरणमिति प्रत्युदाहरणे गुणानां कर्मत्वसन्देहनिवृत्तिपूर्वकं गुणानां करणत्वप्रदर्शनार्थं तु कारकम्, गुणैरिति करणकारकं प्रत्युदाहृतमित्यर्थ इति।

अथ भावः—'षष्ठी शेषे' इत्यनेनैव मातुः स्मरणमित्यादौ कर्मणि शेषत्वेन विवक्षिते षष्ठी सिद्धेति। 'अधीगर्थदयेशां कर्मणि' इत्यादिना या पुनः प्रतिपदं षष्ठी विहिता, सा नियमार्था भवति। कर्मादौ शेषत्वेन विवक्षिते षष्ठ्येव भवति, यदन्यत्प्राप्नोति लुगादि तन्निषिध्यते। लुगादिनिवृत्तिश्च तन्निदानसमासनिवृत्तिं विना न कर्तुं शक्येति समासनिवृत्तिरपि क्रियत इत्यभिप्रेत्योक्तम्—"तत्र षष्ठी प्रतिपदं समासस्य निवृत्तये, विहिता" इति। एवञ्च 'प्रतिपदविधाना च षष्ठी न समस्यते" इति वार्त्तिकं नापूर्वमिति बोध्यम्।

ननु यदि 'षष्ठी शेषे', 'अधीगर्थदयेशां कर्मणि' इत्यनयोः शेषविषयकत्वेन व्याप्यव्यापकभावमाश्रित्य 'अधीगर्थदयेशाम्' इत्यस्य गतार्थत्वेन वैयर्थ्यमाश्रित्य नियमार्थत्वमाश्रीयते, तदा कर्मणीति किम्? मातुर्गुणैः स्मरणमिति कथं प्रत्युदाहृतम्? तथाहि—अत्र यथा गुणानां करणत्वेन स्मरणकर्मत्वं नास्ति, तथा शेषत्वमपि नास्ति; तृतीयादर्शनेन करणत्वविवक्षाऽनुमानात्। एवञ्च सूत्रे कर्मणीति पदाभावेऽपि शेषत्वाभावादेव करणे षष्ठी न प्राप्नोतीत्याशङ्क्य समाधत्ते—दर्शनार्थं तु कारकं प्रत्युदाहृतमिति।

निवृत्तय एवेति स्थितम्। उक्तं च—"साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ताप्रतिपदं षष्ठी समासस्य निवृत्तये" (साधनसमुद्देशे, १५९) इति। साधनैर्व्यपदिष्टे शेषसम्बन्धे इत्यर्थः।

एवं कर्मण्येव शेषत्वेन विवक्षिते षष्ठी, कारकान्तरे त्वेकैवेति वृत्तिकाराः। तेषां मते गुणैः स्मरणं न तु गुणानां स्मरणमिति काचिदपि षष्ठी।

टीकाकारमते तु करणस्य शेषत्वविवक्षायां गुणानां स्मरणं गुणस्मरणमित्यपि भवतीति मतभेदः॥ १९८॥

एवं क्रियया सम्बन्धो जन्यत इति स्थितम्, ततः किमित्याह—

**स चोपजातः सम्बन्धो विनिवृत्ते क्रियापदे।**
**कर्मप्रवचनीयेन तत्र तत्र नियम्यते॥१९९॥**

---

अयं भावः—गुणानां करणत्वस्य प्रदर्शनार्थं तु गुणैरिति करणकारकं प्रत्युदाहृतम्। वस्तुतस्तु मातुर्गुणानां स्मरणमित्येव शेषे षष्ठ्या प्रत्युदाहरणमत्राभिप्रेतं मातुर्गुणैः स्मरणमित्येवं ब्रुवतो भाष्यकृत इति। अत्र शेषे षष्ठी वर्तते, प्रतिपदषष्ठी तु प्राप्नोति सूत्रे कर्मणीति पदाभावे। शेषषष्ठ्यां समासलुगादिकं भवति, प्रतिपदषष्ठ्यां तु तन्न प्राप्नोतीत्यपि तदभिप्रायः। एवं चाधीगर्थेत्यादिना पुनः षष्ठीविधानं समासादिनिवृत्तय एवेति स्थितम्। तदुक्तम्—

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥ इति।

(साधन १५९)

अस्यार्थः—पूर्वं साधनैः कर्मकरणादिशब्दैर्व्यपदिष्टे = व्यवहृते साम्प्रतं तु शेषत्वेन विवक्षिते श्रूयमाणा क्रिया स्वान्वयिनी यस्य तथाभूतेऽर्थे समासस्य निवृत्तये = समासनिवृत्तिफला, प्रतिपदम् क्रियापदम्, कारकपदञ्च निमित्तमाश्रित्य षष्ठी 'अधीगर्थदयेशां कर्मणि' इत्यादिशास्त्रैः प्रोक्ता विहितेति।

वृत्तिकारास्तु—'अधीगर्थदयेशां कर्मणि' इत्यस्य नियमाकारमन्यथैव प्राहुः—कर्मण्येव शेषत्वेन विवक्षिते षष्ठी, न तु कारकान्तरे। कारकान्तरे त्वेकैव वा काचित् कारकविभक्तिर्भवतीति। तेषां मते गुणैः स्मरणमित्येव भवति, न तु गुणानां स्मरणमिति शेषत्वविवक्षयाऽपि षष्ठीति।

टीकाकारमते (श्रीभर्तृहरिमते) तु 'कर्मणि षष्ठ्येव, न तु समासलुगादि' इति नियमस्वीकारेण करणस्य शेषत्वविवक्षायां षष्ठ्यभ्युपगमेन समासविकल्पेन गुणानां स्मरणं गुणस्मरणमिति रूपद्वयं भवतीति॥१९८॥

एवं श्रूयमाणयाऽश्रूयमाणया वा क्रियया सम्बन्धो जन्यत इति व्यवस्थितम्। ततः प्रकृते किमायातमिति जिज्ञासायामाह—**स चोपजात इति।**

स च क्रिययोपजनितः सम्बन्धः तस्मिंश्चोपजाते यदा क्रियापदं कश्चिन्न श्रूयते, तदा क्रियाजनितोऽयं स्यादिति सन्देहे कर्मप्रवचनीयेन तत्र तस्यां क्रियायां नियम्यत इति सम्बन्धविशेषः कर्मप्रवचनीयैः प्रत्याय्यते। अत एव कर्मप्रोक्तवन्तः क्रियाकृतं विशेषसम्बन्धं द्योतयन्तीति कर्मप्रवचनीया उच्यन्ते ।।१९९।।

अथाऽश्रूयमाणायाः क्रियाया आक्षेपकाः कर्मप्रवचनीयाः कस्मान्नाश्रीयन्त इत्याह—

---

अयमर्थः—सम्बन्धं जनयित्वा क्रियापदे विनिवृत्ते सति स उपजातः सम्बन्धश्च त्वेतत्क्रियाकृतोऽयं सम्बन्ध इति नियमेनाप्रतीयमानः कर्मप्रवचनीयैस्तत्र तत्र तस्यां तस्यां क्रियायां जन्यत्वेन नियम्यते। तत्तत्क्रियाजन्यत्वेन सम्बन्धविशेषः कर्मप्रवचनीयैः प्रत्याय्यते-ऽवद्योत्यते, सम्बन्धस्य षष्ठ्यपवादभूतया द्वितीययैवोक्तत्वात्। वृक्षं प्रति विद्योतते विद्युत्। अत्र हि वृक्षमभिलक्ष्य विद्युद् विद्योतत इत्यर्थाभिप्रायेण वृक्षविद्योतनयोर्लक्ष्यलक्षणभावः सम्बन्धो लक्षणक्रिययोपजनितः।

सा च क्रिया तं सम्बन्धमुपजन्य प्रतिनिवृत्तेति हेतोर्वृक्षविद्योतनयोः सम्बन्धः कश्चिदस्ति। स च कः, किं क्रियाकृतश्चेति कर्मप्रवचनीयाभावेन विज्ञायेत। कर्मप्रवचनीय-सत्त्वे त्वत्र प्रतिना कर्मप्रवचनीयेन पूर्वं लक्षणक्रियामुक्त्वा तत्कृतो लक्ष्यलक्षणभावरूपः सम्बन्धो द्वितीययोक्तोऽवद्योत्यत इति। सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्याय-विरोधस्तु न; कर्मप्रवचनीयेऽभिधाव्यञ्जनारूपवृत्तिद्वयाभ्युपगमात्। दृश्यते च 'गङ्गायां घोषः' इत्यादौ सकृदुच्चरितस्यापि गङ्गापदस्य वृत्तिभेदेन क्रमेण शक्यलक्ष्यव्यङ्ग्यरूपार्थत्रय-बोधकत्वमिति न्यायो वृत्तिभेदाभावविषयकः।

अत एव पूर्वं कर्मक्रियां प्रोक्तवन्तः सन्तः पश्चात् तत्क्रियाकृतं सम्बन्धविशेषमवद्योत-यन्तीति कर्मप्रवचनीया इत्युच्यन्त इति। ततश्च—

> क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।
> नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥

(वा० प० २।२०४)

इतीयं कारिका प्राग् व्याख्याताऽपि प्रथमपादभागेऽन्यथा व्याख्यातव्या। एष एव चार्थो युक्तः। अयम् = कर्मप्रवचनीयः, क्रियायाः = सम्बन्धविशेषजनिकाया लक्षणादि-क्रियाया द्योतको न, किन्तु वाचकः, सम्बन्धविशेषं जनयित्वा क्रियाया विनिवृत्तेः, समभि-व्याहृतधात्वर्थक्रियाविशेषावद्योतकत्वस्यैवोपसर्गादीनां दृष्टत्वाच्चेति। विद्योतनक्रियाया अपि न द्योतकः, विद्युतिनैव तद्वाचकेन तस्याः स्फुटं प्रतीयमानत्वात्; प्रतिद्योत्यस्य लक्ष्य-लक्षणभावसम्बन्धस्य तज्जनितत्वाभावाच्चेति ॥ १९९ ॥

**येन क्रियापदाक्षेपः स कारकविभक्तिभिः ।**
**युज्यते विर्यथा तस्य लिखावनुपसर्गता ॥२००॥**

इह तेन शब्देन क्रियापदस्याक्षेपः क्रियते, स कारकविभक्त्या युज्यत इति दृश्यते । यथा प्रादेशं विपरिलिखतीति । अत्र विशब्दो मानक्रियाया आक्षेपकः, प्रादेशं विमाय परिलिखतीत्यर्थावगतेः । ततो विमानक्रिययाऽत्र प्रादेशलक्षणं कर्माक्षिप्तमिति तस्य कारकविभक्त्यैव द्वितीयया योगः ।

यदा च क्रियान्तराक्षेपको विशब्दस्तदाऽस्य लिखत्यसंबन्धात् तं प्रत्यनुपसर्गत्वमेव । ततश्च 'गतिर्गता'विति (पा० ८।१।७०) निघाताभावः । तद्वत् कर्मप्रवचनीयैर्यदि क्रियापदमाक्षिप्येत, तदा तद्योगे कारकविभक्तिरेव स्यात् । ततश्च कर्मप्रवचनीययुक्ते द्वितीया' (पा० २।३।८) इति नारम्भणीयमेव स्यात् । किन्तु सम्बन्धसामान्ये षष्ठी प्राप्नोति तद्बाधनाय द्वितीयाऽऽरभ्येत, तदारम्भः शोभते ॥ २०० ॥

---

ननु यथा 'प्रादेशं विलिखति' इत्यत्र विर्विमानक्रियाया आक्षेपकः, प्रादे॰ विमाय लिखतीति । एवं वृक्षं 'प्रति विद्योतते विद्युत्' इत्यादौ प्रत्यादयः कर्मप्रवचनीया अश्रूयमाणया लक्षणादिक्रियाया आक्षेपकाः कुतो नाश्रीयन्ते, वृक्षमभिलक्ष्य विद्युद् विद्योतत इति ।

एवञ्च प्रत्यादयः कर्मप्रवचनीयाः षष्ठ्यपवादभूतद्वितीयोक्तस्य सम्बन्धस्यावद्योतका लक्षणादिक्रियाया आक्षेपमुखेन भविष्यन्ति । तथा च न कर्मप्रवचनीयप्रयोगस्थले क्रियासम्बन्धं जनयित्वा विनिवृत्तेति कथमुच्यते—'विनिवृत्ते क्रियापदे' इतीत्याशङ्कायामाह—**येन क्रियापदाक्षेप इति ।**

अयमर्थः—येन शब्देन क्रियापदस्याक्षेपः क्रियते, स क्रियापदाक्षेपकत्वेन क्रियाबोधकत्वात् कारकविभक्तिभिर्युज्यते । यथा प्रादेशं विपरिलिखतीत्यत्र विशब्दो विमानक्रिया क्षेपकत्वेन प्रादेशमिति कारकविभक्त्या युज्यते, न तु लिखतिः, प्रादेशं विमाय परिलिखती त्यर्थात् ।

एवञ्च विशब्दस्य माधात्वर्थं प्रत्युपसर्गत्वं गतित्वञ्च, न तु लिखति प्रतीति प्र विपरिलिखतीत्यत्र 'गतिर्गतावि'ति निघातो न । तथा च विशब्दादिवत् कर्मप्रवचनी॰ यदि क्रियापदमाक्षिप्येत, तदा तद्योगे कारकविभक्तिरेव स्यात् । ततश्च "कर्मप्रवचनीययु॰ द्वितीया" इति सूत्रं नारम्भणीयं स्यात् । यदा तु कर्मप्रवचनीयेन क्रियापदं नाक्षिप्यत इ॰ स्वीक्रियते, तदा वृक्षविद्योतनयोः सम्बन्धसामान्ये षष्ठी प्राप्नोतीति तद्बाधनाय "कर्मप्रवचनीययुक्ते द्वितीये"ति शास्त्रारम्भः शोभत इति ॥ २०० ॥

क्रियापदाक्षेपकत्वमन्यत्रापि दृष्टमिति तदेव दृढीकुर्वन्नाह—

**तिष्ठतेरुपयोगश्च दृष्टोऽप्रत्यजयन्निति ।**
**सुन्वन्तीत्याभिमुख्येऽभिः केवलोऽपि प्रयुज्यते ॥ २०१ ॥**

अप्रत्यजयन्नित्यत्र प्रतिशब्दः स्थितिक्रियाया आक्षेपकः परिदृष्टः। देवा असुरानप्रतितिष्ठतः प्रतिष्ठामलभमानानजयन्निति तिष्ठतेरुपयोग आक्षेपः परिदृष्टः। तथा धातुना सम्बन्धेऽपि सुन्वन्तीत्यत्राभिशब्दस्य केवलस्य चाभिमुख्ये वृत्तिः परिदृष्टेति प्रसङ्गादाह—सुन्वन्तीति। तदेवं कर्मप्रवचनीयानां सम्बन्धनियामकत्वमन्वर्थसंज्ञाश्रयेणैव स्थापितम् ॥ २०१ ॥

---

न केवल विशब्द एव क्रियापदाक्षेपकत्व दृष्टम्, किन्त्वन्यत्रापि प्रतिशब्दादाविद्गु-पसर्गस्य क्रियापदाक्षेपकत्वमेव दढीकुर्वन्नाह—तिष्ठतेरुपयोगश्चेति ।

अयमर्थः—अप्रत्यजयन्निति = देवा असुरानप्रत्यजयन्नित्यत्र = अप्रति = अप्रतिष्ठि-तान् प्रतिष्ठामलभमानान् असुरान्, देवा अजयन्नित्यर्थके, प्रतिना तिष्ठतेः = स्थितिरूपस्य स्थाधात्वर्थस्य, उपयोगश्च = आक्षेपोऽपि दृष्ट इति ।

प्रादेशं विपरिलिखतीत्यत्र विशब्दस्य लिखाविवात्रापि प्रतिशब्दस्य जयतावनुपसर्ग-तेति बोध्यम्। क्वचित्तूपसर्गस्य स्वार्थाभिधायित्वेऽपि स्वार्थाभिधानमुखेन धातुना सम्बन्धो भवत्येव, न तु क्रियापदाक्षेपकोपसर्गवत् समभिव्याहृतधातुना सम्बन्धो न भवति। किञ्च, तत्रोपसर्गस्य स्वार्थाभिधानमुखेनैव सम्बन्धः, न तु धात्वर्थाद्योतकत्वेनेत्येतमर्थं प्रसङ्गप्राप्तं प्रदर्शयितुमाह—सुन्वन्तीति ।

अयमर्थः—'अभिषुण्वन्ति' इत्यत्राभिः केवले आभिमुख्ये वर्तते, न तु धातुगभि-मुख्यविशिष्टे सवने वर्तते; तद्द्योतकत्व त्वमेरिति, आभिमुख्यस्य लिङ्गसंख्यान्वय-योग्यस्यार्थस्य सत्त्वभूतस्य धातुनाऽभिधानायोगात्; 'असत्त्वभूतो भावश्च तिङ्पदैरभि-धीयते' इति धातुस्वभावात्। एवं चाभिमुख्यविशिष्टस्याभिपदार्थस्य क्रियाविशेषणत्वेन भेदेन सवनेऽन्वय इति। स्वार्थमुखेनाभेर्धात्वर्थे सवनेऽन्वय इति।

अक्षरार्थस्तु—'सुन्वन्ति' इत्यत्र = 'अभिषुण्वन्ति' इत्यत्र। अत्र 'पिधेहि' इतिवद् वाक्ये प्रयोक्तव्ये वाक्यैकदेशप्रयोगश्छन्दोऽनुरोधेन। केवलोऽपि = केवल एव, अभिः, न तु धातुरपि; आभिमुख्ये वर्तमानः प्रयुज्यत इति।

तदेव कर्मप्रवचनीयाना सम्बन्धनियामकत्व सम्बन्धनियमनात् पूर्वं कर्मक्रिया प्रोक्त-वन्तः = सम्बन्ध जनयित्वा विनिवृत्ते तु क्रियापदे क्रियाकृतं सम्बन्धविशेषमवद्योतयन्ती-त्यन्वर्थसंज्ञाश्रयणेनैव स्थापितमिति ॥ २०१ ॥

अथ स्वत्यादीनां तद्रूपत्वासम्भवे कथं कर्मप्रवचनीयसंज्ञा स्यादित्याह—

**कर्मप्रवचनीयत्वं क्रियायोगे विधीयते ।**
**षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां विधर्मणाम् ॥ २०२ ॥**

अत्र स्वत्यादीनां कर्मप्रवचनीयत्व विधीयते संज्ञान्तरव्युदासायैवेत्यतश्चैक-संज्ञाधिकाराद् गत्युपसर्गसंज्ञाभावे तदाश्रयं षत्वादिकम् "उपसर्गाद्" ( पा० ८।३।६५ ) इत्यादिना न भवति ॥ २०२॥

अन्यदपि प्रसङ्गादाह—

**हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते ।**
**आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा ॥ २०३ ॥**

लक्षणेत्थंभूतेत्यादिना ( पा० १।४।९० ) सिद्धाऽनोः कर्मप्रवचनीयसंज्ञा। लक्षणं हि ज्ञापकं यथा तथा हेतुरप्युच्यते । ततश्च यथा ज्ञाप्यज्ञापकभावे वृक्षमनु

---

ननु प्रागुक्तरीत्या क्रिया प्रोच्य सम्बन्धं जनयित्वा विनिवृत्ते क्रियापदे सम्बन्ध-विशेषावद्योतकानामेव कर्मप्रवचनीयत्वे स्वत्यादीना क्रियायोगेन क्रियाविशेषावद्योतकाना कर्मप्रचनीयत्व न स्यात् । यथा सुसिक्तम्, अतिसिक्तमिति । अत्र हि सुष्ठु सिक्तम्, अतिशयेन सिक्तमित्यर्थेन क्रियागतस्यैव सौष्ठवस्यातिशयस्य च प्रतीत्या क्रियाविशेषावद्योत-कावेव स्वती इत्याशङ्कयाह—**कर्मप्रवचनीयत्वमिति** ।

अयमर्थः— विधर्मणाम् = सम्बन्धविशेषावद्योतकत्वापेक्षया क्रियाविशेषावद्योतकत्व-रूपविरुद्धधर्मवता स्वत्यादीनाम्, 'सुसिक्तमतिसिक्तम्' इत्यादौ षत्वादिविनिवृत्त्यर्थम् = एकसंज्ञाऽधिकाराद् गत्युपसर्गसंज्ञाबाधपुरःसरम् 'उपसर्गात् सुनोति' इत्यादिशास्त्रप्राप्त-षत्वादिविनिवृत्त्यर्थम्, क्रियायोगे = क्रियाविशेषावद्योतकत्वे, सम्बन्धविशेषावद्योतकत्वा-भावेऽपि कर्मप्रवचनीयत्वं विधीयत इति ॥ २०२ ॥

एवं प्रायेण कर्मप्रवचनीयाः संबन्धविशेषावद्योतकाः, क्वचित्तु क्रियाविशेषाव-द्योतकाः । तत्र तेषा सम्बन्धविशेषावद्योतकत्वे द्वितीयाप्रापकत्वेन शेषषष्ठीबाधः फलम् । क्रियाविशेषावद्योतकत्वे तु वृक्ष सुसिञ्चतीत्यादौ द्वितीयाया उत्सर्गसिद्धत्वेन शेषषष्ठ्याश्चा-प्राप्तत्वेन न द्वितीयाप्राप्तिषष्ठीबाधौ फलम्, किन्तु षत्वादिविनिवृत्तिः फलमिति स्थितम् ।

अथेदानीं कर्मप्रवचनीयानां सम्बन्धविशेषावद्योतकत्वेन शेषषष्ठीबाध एव फलम्, किन्तु कचिद्धेतुतृतीयाबाधोऽपीत्येतमधिकमर्थं प्रसङ्गाद् वक्तुमाह—**हेतुहेतुमतोरिति** ।

अयमर्थः—'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्र हेतुहेतुमतोः शाकल्यस्य संहिता-प्रवर्षणयोर्योगस्य हेतुहेतुमद्भावलक्षणस्य परिच्छेदेऽवधारणेऽनुना कृते सति कर्मप्रवचनीय-योगात् प्राप्तां लक्षणद्वितीयां ज्ञाप्यज्ञापकभावस्थले सावकाशां परत्वात् प्रबाध्य प्राप्ता हेतु-

विद्योतते विद्युदित्यत्रानोः कर्मप्रवचनीयसंज्ञा, तथा शाकल्यस्य संहितामनु प्रावर्षदित्यत्रापि। तत्र हेतुहेतुमद्भावलक्षणव्यतिरेकव्यवच्छेदेऽनुना कृते हेतुतृतीयैव-परत्वात् प्राप्नोति, तथा च तृतीयाया अवकाशो धनेन कुलमित्यादि। लक्षणेत्थंभूते-त्यस्यावकाशोऽनुर्ज्ञाप्यज्ञापकभावलक्षणः। सम्बन्धस्यावच्छेदकः, यथा वृक्षमनु विद्योतते विद्युदिति। इहोभयं प्राप्नोति शाकल्यस्य संहितामनु प्रावर्षदिति। अत्र हेतुहेतुमद्भावसम्भवात् तृतीया प्राप्नोति। परत्वात् 'अनुर्लक्षणे' (पा० १।४।८४) इति पुनर्विधानान्न भवति ॥२०३॥

---

लक्षणा तृतीया लक्षणत्वेनानोः कर्मप्रवचनीयत्वे लक्षणेत्थंभूतेति शास्त्रेण सिद्धे सति पुनः 'अनुर्लक्षणे' (पा० १।४।८४) इति कर्मप्रवचनीयसंज्ञाविधायकशास्त्रारम्भसामर्थ्याद् बाध्यत इति।

अयं भावः—हेतुर्द्विविधः—कारको ज्ञापकश्च। तत्र कारको दण्डादिर्घटादेः, ज्ञापको वृक्षमनु विद्योतते विद्युदित्यादौ वृक्षादिर्विद्युद्विद्योतनादेः। एवञ्च यथा वृक्षमनुविद्योतते विद्युदित्यत्रानोः कर्मप्रवचनीयसंज्ञा लक्षणेत्थंभूतेत्यादिना ज्ञाप्यज्ञा-पकभावरूपे लक्ष्यलक्षणभावे भवति, तथा 'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्रापि लक्षणेत्थंभूतेत्यादिनैवानोः कर्मप्रवचनीयसंज्ञा सिद्धा, अत्र हेतुहेतुमद्भावलक्ष्यलक्षणभावयोर-व्यतिरेकात्।

किञ्चात्र संहिताप्रवर्षणयोरुभयविधो हेतुहेतुमद्भावः—ज्ञाप्यज्ञापकभावः, कार्यकारण-भावश्चेति। तत्र तयोर्ज्ञाप्यज्ञापकभावः प्रसिद्ध एव, शाकल्येनाधीतायाः संहितायाः प्रवर्षणोपलक्षणत्वात्। संहिताया अदृष्टद्वारा प्रवर्षणजनकत्वमपि शास्त्रसिद्धम्। तथा च प्रकृते हेतुहेतुमद्भावलक्ष्यलक्षणभावयोर्व्यतिरेकस्य व्यवच्छेदेऽनुना द्योतिते लक्षणद्वितीया प्रबाध्य हेतुतृतीयैव परत्वात् प्राप्नोति।

तथाहि—तृतीयाया अवकाशः, धनेन कुलमित्यादौ। लक्षणद्वितीयाया अवकाशः, वृक्षमनु विद्योतते विद्युद् इत्यादौ। यत्र लक्ष्यलक्षणभावमात्रस्य द्योतकोऽनुः। यद्यपि 'शाकल्यस्य संहितामनु प्रावर्षत्' इत्यत्र लक्षणद्वितीयाहेतुतृतीये उभे प्राप्नुतः, लक्ष्यलक्षण-भावजन्यजनकभावयोरुभयोरप्यत्रानुना द्योत्यत्वात्; तथापि द्वितीयां परत्वात् प्रबाध्य हेतुतृतीयैव प्राप्नोति।

किन्तु लक्षणेत्थंभूतेत्यनेनैव कर्मप्रवचनीयत्वेऽनोः सिद्धे 'अनुर्लक्षणे' इत्यनेन तस्य पुनः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्याद् हेतुतृतीया न भवति, लक्षणेत्थंभूतेत्यादिसंज्ञा-शास्त्रेणैकवाक्यत्वमापन्नस्य कर्मप्रवचनीययुक्ते द्वितीयेति (पा० २।३।८) शास्त्रस्य सावका-शत्वेऽपि 'अनुर्लक्षणे' इति संज्ञाशास्त्रैकवाक्यतापन्नस्य तस्यानवकाशत्वात्; 'प्रतिलक्ष्यं लक्षणोपप्लवः' इति न्यायेन शास्त्रभेदादिति ॥२०३॥

एवं कर्मप्रवचनीयानां प्रासङ्गिकं विचारं कृत्वा वाचकत्वादिप्रकारत्रितय-निराकरणेन सम्बन्धविशेषकत्वमेव व्यवस्थापयन्नाह—

**क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ २०४**

प्रपचतीत्यादावुपसर्गवद् नैवायं क्रियाद्योतकः। षष्ठ्यपवादभूतया च द्वितीययैवोक्तः सम्बन्ध इति न तस्य कर्मप्रवचनीयो वाचकः। नापि प्रादेशं विपरिलिखतीत्यादौ विशब्दवत् क्रियापदस्याक्षेपकः। किं तर्हि विशिष्टक्रियाजनितोऽयं सम्बन्ध इति सम्बन्धस्य भेदको विशेषकः कर्मप्रवचनीयः ॥ २०४ ॥

इत्येवमपोद्धारप्रसङ्गेन पञ्चधा पदविभागः प्रदर्शितः। एवं दर्शितं पदप्रविभागमग्रेऽनूद्य सप्रपञ्चं पदार्थभेदमुपपादयिष्यति। यथा

"द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधापि च।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥
पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव च।" इत्यादि। [वा० प० ३। जाति० १-२]

एवमखण्डवाक्यवादिनाऽपोद्धारसमाश्रयेण प्रासङ्गिकादिकार्यसमर्थने विहिते तत्प्रसङ्गात्पदपदार्थपदभागार्थपदभागविचारः कृतः, निरुक्तकारमता-

---

एवं कर्मप्रवचनीयाना प्रासङ्गिकं विचारं परिसमाप्य तेषां सबन्धावाचकत्वक्रिया-द्योतकत्वक्रियापदाक्षेपकत्वरूपप्रकारत्रयनिराकरणपुरस्सरं सम्बन्धविशेषद्योतकत्वमेवेति व्यस्थापयन्नाह—क्रियाया इति।

अयमर्थः—यथा प्रपचतीत्यादौ उपसर्गः प्रपचनक्रियाया अवद्योतकः, वाचकत्वे 'अनुभूयते' इत्यादौ कर्मणि लकारानापत्तेः; तथाऽयं कर्मप्रवचनीयो लक्षणक्रियाया न द्योतक इति वैधर्म्ये दृष्टान्तः। लक्षणक्रियाया द्योतकत्वाभावे हेतुश्च लक्षणक्रियायाः कर्मप्रवचनीयस्थलेऽप्रतीतिरेव। तदुक्तं प्राक् 'जनयित्वा क्रिया काचित् सम्बन्धं विनिवर्तते' (वा० प्र० १९९ श्लो० ) इति।

किञ्च कर्मप्रवचनीयो लक्ष्यलक्षणभावरूपस्य सम्बन्धस्य वाचको न, षष्ठ्यपवाद भूतया द्वितीययैव तस्योक्तेः। द्वयोः समानविषयकत्वे हि बाध्यबाधकभावः। नापि 'प्रादेशं विपरिलिखति' इत्यादौ यथा विमानक्रियाया आक्षेपको विशब्दः, विमाय परिलिखति इत्यर्थात्; तथा वृक्षमनु विद्योतते विद्युदिति वृक्षमनुलक्ष्य विद्युद् विद्योतते' इत्यर्थे लक्षणक्रियाया आक्षेपकोऽनुः कर्मप्रवचनीयः,लक्षणक्रियाया लक्ष्यलक्षणभावरूपं सम्बन्धं जनयित्वा विनिवृत्तेः; अनुना सम्बन्धस्यैवोपजातस्य प्रतीतेरिति। तु = किन्तु, संबन्धस्य = सम्बन्धस्यैव लक्षणक्रियाजनितस्य सामान्यस्य, भेदको विशेषकः = विशेषेऽवस्थापकः कर्मप्रवचनीयः। तथा षष्ठ्यपवाद-द्वितीयोक्तसम्बन्धविशेषावद्योतकत्वमेव कर्मप्रवचनीयानामिति पर्यवसितम् ॥२०४॥

नुसारेण च नामाख्यातोपसर्गनिपातलक्षणप्रदर्शनं कृतम्, कर्मप्रवचनीयाः पञ्चमपदजातमिति केचित्प्रतिजानत इति तदपि प्रदर्शितम्, एवं च दूषितेषु परपक्षेषु स्वपक्षे च दूषणनिराकरणपूर्वकं स्थापिते पुनरप्यखण्डपक्षमेव समर्थयितुकामो वार्त्तिकविरोधमाशङ्कयाह—

**अनर्थकानां सङ्घातः सार्थकोऽनर्थकस्तथा ।**
**वर्णानां पदमर्थेन युक्तं नावयवाः पदे ॥ २०५ ॥**

---

एवं वाक्यवाक्यार्थयोरखण्डत्ववादिना सिद्धान्तिना तयोरखण्डत्वं व्यवस्थाप्य वाक्याद् वाक्यार्थाच्च यथाक्रम पदपदार्थापोद्धारकल्पनाप्रसङ्गेन पञ्चधा पदविभागः प्रदर्शितः। दर्शितञ्च पदप्रविभागमनूद्याग्रे सप्रपञ्चं पदार्थभेदमुपपादयिष्यति —

द्विधा कैश्चित् पदं भिन्नं इत्यादि । ( वा० प० ३ जाति० १-१)

एवमखण्डवाक्यवादिना स्वपक्षेऽनुपपद्यमानाना पदकार्याणामपोद्धारसमाश्रयणेन प्रासङ्गिके समर्थने विहिते तत्प्रसङ्गात् पदपदार्थपदभागार्थविचारः कृतः, निरुक्तकारमतानुसारेण च नामाख्यातोपसर्गनिपातलक्षणस्य पदचतुष्टयस्य प्रदर्शनं कृतम्। कर्मप्रवचनीयाः पञ्चमं पदजातमिति केचित् प्रतिजानत इति तन्मतमाश्रित्य तदपि प्रदर्शितम्।

एवं दूषितेषु परपक्षेषु = सखण्डत्ववादिना पक्षेषु स्वपक्षे च वाक्यवाक्यार्थाखण्डत्वे निरपवादं व्यवस्थापिते पुनरप्यखण्डत्वपक्षमेव समर्थयितुकामः 'संघातार्थवत्त्वात्' इति" भाष्यवार्त्तिकविरोधमाशङ्कयाह—**अनर्थकानामिति ।**

प्रागुक्तवार्त्तिकविरोधश्चैवमुन्नेयः—यदि वर्णसंघातः पदम्, वर्णा अप्यर्थवन्तः, पदमप्यर्थवत्, पदसंघातश्च वाक्यम्, संघातस्यापि चार्थवत्त्वमिति तदा कथं वाक्यवाक्यार्थाखण्डत्वपक्षः ।

श्लोकार्थस्तु—अनर्थकाना वर्णाना संघातः सार्थकस्तथाऽनर्थक इत्येवं द्विविधो दृष्टः । घट इति सार्थकः, कचटेत्यादिरनर्थकः। संघातार्थवत्त्वे चार्थेन युक्त पदमेव, न वर्णाः, तेषामर्थवत्त्वस्य पदार्थवत्त्व उपयोगाभावात्। नहि पदानामर्थवत्त्वस्य वाक्यार्थे इव वर्णार्थवत्त्वस्य पदार्थे उपयोगोऽस्ति, पदार्थे वर्णार्थघटितत्वस्यानुभवात्। एवं वर्णानामर्थवत्त्वाभावे पदे वर्णरूपा अवयवा न सन्त्येव। एवञ्च वर्णा अर्थवन्तः, संघातार्थवत्त्वात्, अर्थवत्संघातावयवत्वादिति हेतुरसिद्ध इति 'नावयवाः पदे' इत्यनेन सूचितम् ।

किञ्च, संघातघटका वर्णा नार्थवन्तः संघातेऽर्थवत्त्वेनानभूयमानत्वादिति व्यतिरेकी प्रतिप्रयोगोऽपीति। अथवेदं पद्यमन्यथा व्याख्येयम्—वर्णानामर्थवता संघातः सार्थको यथा—'ओम्' इति। अत्राकारोकारमकारा वर्णा यथाक्रमं विष्णुशिवब्रह्मरूपैरर्थैरर्थवन्तस्तत्संघातोऽप्यर्थवान्, परापरब्रह्मान्यतररूपेणार्थनार्थवत्त्वात्। तथाऽनर्थकानां वर्णानां संघातोऽनर्थको यथा—खथफादिः। एवञ्च पदमर्थेन युक्तम्। पदे चावयवा न सन्ति वर्णरूपाः, पदार्थे वर्णानामननुभवादिति ॥ २०५ ॥

किञ्च,

**पदानामर्थयुक्तानां सङ्घातो भिद्यते पुनः ।**
**अर्थान्तरावरोधेन सम्बन्धविगमेन च ॥ २०६ ॥**

अर्थान्तरस्य संसर्गलक्षणस्यावरोधेन परिग्रहणेन कश्चिदेव देवदत्त गामभ्याजेत्यादिकः पदसङ्घातोऽर्थवान् कश्चित्तु दश दाडिमादिः परस्परसम्बन्धविगमेनानर्थक इति सम्बन्धाद् व्यपेतः ॥२०६॥

तदेव दर्शयितुमाह—

**सार्थकानर्थकौ भेदे सम्बन्धं नाधिगच्छतः ।**
**अधिगच्छत इत्येके कुटीरादिनिदर्शनात् ॥ २०७ ॥**

भेदे क्रियमाणे सति यौ वर्णसमुदायौ सार्थकानर्थकौ, यथा कुटीशब्दो-रशब्दश्च, तौ सम्बन्धमनर्थकत्वान्नाधिगच्छत इति केचित्। द्योत्येनार्थेनार्थवत्त्वादपरे सम्बन्धमधिगच्छत इत्याहुः ॥ २०७ ॥

---

किञ्च, यथाऽनर्थकानां वर्णानां संघातस्य सार्थकानर्थकभेदेन द्वैविध्यम् तथाऽर्थवतां पदानामपि सम्बन्धपरिग्रहतदभावाभ्यां सार्थक्यानर्थक्यप्रयुक्तं द्वैविध्यमित्याह—**पदानामिति** ।

अयमर्थः—अर्थयुक्तानां पदानां पुनः=अपि संघातो वाक्यरूपः, अर्थान्तरावरोधेन=पदार्थापेक्षयाऽन्यस्य संसर्गलक्षणस्यार्थस्यावरोधेन=आत्मन्यवरुध्य परिग्रहणेन, सम्बन्धविगमेन=पदार्थयोर्वाक्यार्थयोर्वा परस्परं सम्बन्धस्य विगमेन=अभावेन च भिद्यते । सम्बन्धपरिग्रहणेन कश्चिदेव=देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिः पदसंघातोऽर्थवान् । कश्चित्तु दश दाडिमादिर्वाक्यार्थयोः परस्परं सम्बन्धस्य विगमेनानर्थक इति ॥ २०६ ॥

तदेवं वर्णपदसंघातयोः सार्थक्यानर्थक्ये प्रयोजकभेदेनोपपाद्य सार्थकस्य पदस्यानर्थकस्य च वर्णस्य संघाते कुटीरादिशब्दे, यद्वा सार्थकस्य वर्णसमुदायस्य कुटीशब्दरूपस्यानर्थकस्य च वर्णद्वयरूपस्य समुदायस्य रप्रत्ययस्य मतभेदेन सम्बन्धोपगमसम्बन्धविगमाभ्यां सार्थक्यानर्थक्ये दर्शयितुमाह—**सार्थकानर्थकाविति** ।

अयमर्थः—कुटीरादिशब्दे भेदे=प्रकृतिप्रत्ययविभागे क्रियमाणे सति, यौ वर्णसमुदायौ कुटीशब्दरशब्दरूपौ सार्थकानर्थकौ तौ परस्परं सम्बन्धं कुटीशब्दस्यार्थवत्त्वेऽपि रशब्दस्यानर्थकत्वान्नाधिगच्छत इति केचित् । रप्रत्ययस्य द्योत्येनार्थेन=अल्पत्वरूपेण अर्थवत्त्वात्तौ परस्परं सम्बन्धमधिगच्छत इत्यपरे आहुः ॥ २०७ ॥

सङ्घातार्थवत्त्वादवयवार्थवत्त्वमपि दर्शयितुमाह—

**अर्थवद्भ्यो विशिष्टार्थः सङ्घात उपजायते ।**
**नोपजायत इत्येके समासस्वार्थिकादिषु ॥२०८॥**

राजपुरुष इत्यादावर्थवद्भ्यः सङ्घातोऽर्थवानुपजायते । स्वार्थिकादिषु त्ववयवार्थप्रकृतिकमर्थान्तरं नाविर्भूतमिति नास्त्यवयवार्थवद्भ्यो व्यतिरिक्तः सङ्घातार्थस्य सम्भवः ॥ २०८ ।

द्विविधरूपतयाऽवस्थितास्त इत्याह—

**केचित्तु युतसिद्धार्था भेदे निर्ज्ञातशक्तयः ।**
**अन्वयव्यतिरेकाभ्यां केचित् कल्पितशक्तयः ॥ २०९ ॥**

युतः सिद्धोऽर्थो येषां ते तथाविधाः यथा शमीवृक्षो दाडिमीवृक्ष इत्यादयः। कस्मादेवमित्याह—भेद इत्यादि । भेदे वाक्ये सति, रूपस्याऽविनष्टत्वात् पृथगेव

---

एवं संघातार्थवत्त्वमुपपाद्य तेनानुमित तदवयवार्थवत्त्वमपि दर्शयितुमाह—**अर्थवद्भ्य इति ।**

अयं चात्रानुमानप्रयोगः—अर्थवत्संघातावयवा वर्णपदादयोऽर्थवन्तः, अर्थवत्संघातावयवत्वात्, व्यतिरेकेऽनर्थकसमुदायघटकवर्णपदादिवदिति ।

श्लोकार्थस्तु—अर्थवद्भ्यो वर्णेभ्यः = अर्थवतो वर्णान् पदानिवापादानीकृत्य, विशिष्टार्थः = अर्थवद्वर्णपदविलक्षणार्थकः, संघातः = पदवाक्यादिरूपः, उपजातो यथा—जरच्चित्रगुरित्यादौ समासेऽर्थवद्भ्यः पदेभ्यः संघातोऽर्थवान् समासरूप उपजायत इति केचिद् मन्यन्ते । एके = अन्ये तु, स्वार्पिकादिषु = स्वार्थिकादिप्रत्ययान्तेषु, अर्थवद्भ्योऽवयवेभ्यो विशिष्टार्थः संघातो नोपजायते । तत्र तदवयवार्थप्रकृतिकमर्थान्तरं नाविर्भूतमिति नास्त्यवयवार्थवद्भ्यो व्यतिरिक्तस्य संघातार्थस्य संभव इति ।

अत्र श्लोकस्य पूर्वार्धमेकं वाक्यम्, 'नोपजायते' इत्यपरम्, समासस्वार्थिकादिषु' इति तृतीयम् । अस्मिन् वाक्ये तथा दर्शनादिति शेषोऽध्याहार्यः । इदं च वाक्यं विभज्य यथायथं पूर्वोक्ते वाक्यद्वये हेतुत्वेन योजनीयम् । अत्रादिपदेन शप्श्यन्यगादयो विकरणा आगमाश्च गृह्यन्त इति ॥२०८॥

एवमर्थवन्तः संघाता द्विविधरूपतया स्थिता इति स्थितम् । केचिद् विभक्तार्थाः संघाताः समासरूपाः । यतो वाक्ये पृथक् प्रतीयमानार्थका राजपुरुषादयः । केचित्तु तत्त्वेनाप्रत्यभिज्ञायमानपदाः सूत्रानुसरणेनान्वयव्यतिरेकाभ्यां कल्पितशक्तयः, यथा प्रश्नसंज्ञप्रभृतयः । तथा च संघातार्थवत्त्वादिति वार्त्तिककारोक्तं लिङ्गं भागासिद्धमनैकान्तिकं चेति विवक्षन्नाह—केचित्त्विति ।

निर्ज्ञातशक्तयः केचित् संज्ञुप्रज्ञ्वाद्योऽन्वयव्यतिरेकाभ्यां कल्पितशक्तय इति। अत्र हि 'प्रगते जानुनी यस्य' सङ्गते जानुनी यस्य' 'प्रसंभ्यां जानुनोर्ज्ञुः' (पा० ५।४।१२९ इति लक्षणानुगमेनार्थः कल्प्यः, न तु पृथगेव, वाक्ये दृष्टस्य जानुशब्दस्य नष्टत्वात्। तस्मात् संघातार्थवत्त्वादिति भागासिद्धमनैकान्तिकं च बोद्धव्यम् ॥ २०६ ॥

यद्यप्युक्तम् "अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्" इति, तत्राह—

**शास्त्रार्थ एव वर्णानामर्थवत्त्वे प्रदर्शितः।**
**धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते ॥ २१० ॥**
**कृत्तद्धितानामर्थश्च केवलानामलौकिकः।**
**प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥ २११ ॥**

---

अयमर्थः—केचित्तु संघातायुतसिद्धार्थाः = युतः—विभक्तः सन् सिद्धो निर्ज्ञातोऽर्थो येषां ते तथाभूताः, यथा शर्मावृक्षौ; दाडिमीवृक्ष इति। यत एते संघाताः, भेदे = विभागे वाक्ये सति, पृथगेव निर्ज्ञातशक्तयः समासे तदवयवपदानां स्वरूपस्याविनाशात्। केचित् प्रज्ञुसंज्ञुप्रभृतयः, समासे वाक्यदृष्टस्यावयवस्वरूपस्य जानुरूपस्य विनाशात् 'प्रसंभ्यां जानुनोर्ज्ञुः' इति लक्षणानुसरणपुरःसरमन्वयव्यतिरेकाभ्यां कल्पितशक्तयः, न तु पृथगेव निर्ज्ञातशक्तय इति। अत्र हि प्रगते जानुनी यस्य, संगते जानुनी यस्येति प्रागुक्तलक्षणानुगमेनार्थः कल्प्यो न तु पृथङ्निर्ज्ञात इति भावः। एवञ्च संघातार्थवत्त्वादित्यवयवार्थवत्त्वे भागासिद्धोऽनैकान्तिकश्चेति हेतुरिति हृदयम् ॥२०९॥

यदप्युक्तं वार्तिककृता— अर्थवन्तो वर्णाः, धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनादिति। तत्र धातव एकवर्णा गत्याद्यर्थका इणादयः। प्रातिपदिकान्येकवर्णरूपाणि विष्णवादिवाचकान्यकारादीनि। प्रत्ययाः कर्त्राद्यर्थका उकारादयः। निपाता 'अपेहि' इत्यादौ सम्बोधनाद्यर्थका अकारादयः, स्मरणाद्यर्थका आकारादयो वा। अत्रोक्तं वर्णानामर्थवत्त्वं प्रतिषेद्धुमाह—**शास्त्रार्थ एवेति**।

अयमर्थः—शास्त्रप्रक्रियानिर्वाहाय वर्णानामर्थवत्त्वे इष्यमाणे वार्त्तिककृताऽनेन वार्त्तिकवाक्येन शास्त्रार्थ एव = शास्त्रीयोऽर्थ एव प्रदर्शितो न लौकिकः। यतो धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यत इति, लोकेऽर्थप्रत्ययार्थं केवलानां धात्वादीनामप्रयोगात्। प्रयोगेऽपि वा ततस्तदप्रतीतेरिति शास्त्रप्रक्रियानिर्वाहायैवापोद्धारकल्पनया कल्पितान्वयव्यतिरेककल्पितः शास्त्रीय एवार्थो धात्वादीनामेकवर्णानामिति ॥२१०॥

**अभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते ।**
**अर्थवत्ताप्रकरणादाश्रितः स तथाविधः ॥ २१२ ॥**

वर्णानामर्थवत्त्वाभ्युपगमे पदवाक्ययोरभिधायकता भज्येतेत्याह—

**आत्मभेदो न चेत् कश्चिद्वर्णेभ्यः पदवाक्ययोः ।**
**अन्योन्यापेक्षया शक्त्या वर्णः स्यादभिधायकः ॥ २१३ ॥**

सुबोधम् ॥२१३॥

---

केवलधात्वाद्यानर्थक्यप्रसङ्गात् केवलकृत्तद्धितानां तदन्तानां चापि केवलानामानर्थक्यमाह = **कृत्तद्धितानामिति** ।

अयमर्थः—केवलधात्वादीनामिव केवलानां कृत्तद्धितानामर्थश्च = अपि, अलौकिकः = शास्त्रीय एव, न तु लौकिकः । तथैव केवलकृत्तद्धितानां लौकिकार्थाभाव इव, विभक्तेः प्राक् तदन्तस्य = कृत्तद्धितान्तस्य विभक्तिप्रकृतिभूतस्य, अर्थः = लौकिकोऽर्थः, न विद्यते, प्रयोगप्रतीत्योरनुपलम्भादिति प्रसिद्धो हेतुरिति नोक्त इति ॥२११॥

ननु यदि कृत्तद्धितान्तानामप्यर्थवत्त्वं न विद्यते, तर्हि कथमर्थवदित्यनुवृत्त्या कृत्तद्धितसमासाश्चेति तदन्तानां प्रातिपदिकत्वं विधीयत इति प्राप्ते आह—**अभिव्यक्ततर इति** ।

अस्यार्थः—प्रकृत्यर्थापेक्षयाऽभिव्यक्ततरो योऽर्थः शास्त्रीयः, कृत्तद्धितानामपि विभक्तिरहितानां लोकेऽप्रयोगात् । प्रत्ययान्तेषु = कृत्तद्धितान्तेषु, लक्ष्यते = अपोद्धारकल्पनया कल्पितान्वयव्यतिरेकाभ्यां प्रतीयते । सः = तथाविधः शास्त्रीयोऽर्थः, अर्थवत्ताप्रकरणात् = कृत्तद्धितेति सूत्रेऽर्थवदित्यस्यानुवृत्तेः तदन्ताना प्रातिपदिकत्वविधानार्थं तस्मिन् सूत्रे आचार्यैरुद्देश्यतावच्छेदकत्वेनाश्रित इति ॥२१२॥

किञ्च, वर्णानामर्थवत्त्वाभ्युपगमे पदवाक्ययोरभिधायकता सकललोकप्रसिद्धा भज्येतेत्याह—**आत्मभेद इति** ।

अस्यार्थः—यदि वर्णा अर्थवन्तः स्युस्तदाऽर्थवद्वर्णसमुदाय एव पदं वाक्यञ्च स्यात्, एवं वर्णेभ्यः पदवाक्ययोर्न चेत् कश्चिदात्मभेदः = स्वरूपभेदः, तदाऽर्थबोधनेऽन्योन्यापेक्षया शक्त्या = वर्णानां परस्परापेक्षावत्या शक्त्या वर्ण एवाभिधायकः स्यात्, न तु पदं वाक्यं वा; तयोर्वर्णानतिरेकात् । परस्परापेक्षा वर्णा एव वाचकाः स्युः । वर्णानामानर्थक्ये तु तेभ्यः पदवाक्ययोरर्थवतोरात्मभेदात् तयोरेवाभिधायकत्वं लोकसिद्धं सिद्धमिति भावः ॥२१३॥

इदानीं मतभेदं प्रदर्शयितुमाह—

**वर्णेन केनचिन्न्यूनः सङ्घातो योऽभिधायकः ।**
**न चेच्छब्दान्तरमसावन्यूनस्तेन गम्यते ॥ २१४ ॥**

यदि केनचिद्वर्णेन न्यूनः सङ्घात इष्कर्तारमित्यादावभिधायकस्तदा द्वयी गतिः—शब्दान्तरत्वमेकशब्दत्वं वा । यदि न शब्दान्तरत्वमिष्कर्तारमित्यस्य तदा न्यूनवर्णोऽपि [ वर्णेनापि ] पूर्णवर्णो निष्कर्तारमिति शब्द एव गम्यते, तस्मात् स्वार्थप्रतीतिरिति बोद्धव्यम् ॥२१४॥

एतदेव प्रतिपादयितुमाह—

**स तस्मिन् वाचके शब्दे निमित्तात् स्मृतिमादधत् ।**
**साक्षादिव व्यवहितं शब्देनार्थमुपोहते ॥ २१५ ॥**

यदि केनचिद्वर्णेन न्यूनः स न्यूनवर्णः परिपूर्णशब्दवाचकरूपे निमित्ता-च्छास्त्राभ्यासात् स्मृतिमुपजनयन् साक्षादिव व्यवहितमप्यर्थं शब्देन स्मृत्युपस्थापि-तेनोपोहते समर्पयतीति । अथ शब्दान्तरत्वं तदा यथा परिपूर्णवर्णो वाचकस्तथा तत्सम्बन्धाद् न्यूनवर्णोऽपीति न कश्चिद्विशेषः ॥२१५॥

---

ननु केनचिद् वर्णेन न्यूनस्यापि संघातस्याभिधायकत्वं दृश्यते । यथा निष्कर्तार-मित्यादाविष्कर्तारमित्यस्य । तथा चावयवस्याप्यभिधायकत्वेनार्थवत्त्वं सिद्धमिति रीत्या वर्णानामप्यर्थवत्त्वं स्यादिति प्राप्ते किञ्चिद्वर्णन्यूनसंघातस्य शब्दान्तरत्वमेकशब्दत्वं वेति मतद्वयेऽप्यवयवानामानर्थक्यं प्रदर्शयितुमाह—वर्णेनेति ।

अस्यार्थः—केनचिद् वर्णेन न्यूनो यः संघातः, यथा निष्कर्तारमित्यादाविष्कर्तार-मित्यादिः, स यद्यभिधायकस्तदा तस्य शब्दान्तरत्वम्, पूर्णशब्दावयवत्वेनैकशब्दत्वं वा ? यदि द्वितीयः पक्षस्तदा न्यूनवर्णेन संघातेनेष्कर्तारमित्यनेन पूर्णवर्णः संघातो निष्कर्तारमिति शब्द एव गम्यते, न तु साक्षादर्थः; पूर्णवर्णादेव च संघाताद् निष्कर्तारमित्यस्मात्तत्र स्वार्थप्रतीतिरिति । केनचिद्वर्णेन न्यूनो यः संघातः स यद्यभिधायकस्तदाऽसौ न चेत् शब्दान्तरं तर्हि तेनान्यूनः संघात एव गम्यते, न तु साक्षादर्थ इति योजना ॥२१४॥

पूर्वकारिकोक्तमेवार्थं प्रतिपादयितुमाह—स तस्मिन्निति ।

अस्यार्थः—सः केनचिद् वर्णेन न्यूनः संघातः, तस्मिन्=पूर्णवर्णे वाचके शब्दे निमित्तात्=व्याकरणशास्त्राभ्यासरूपात्, स्मृतिमादधत्=पूर्णवर्णविषया स्मृतिमुपजनयन्, व्यवहितम्=पूर्णवर्णशब्दस्मृतिव्यवहितमप्यर्थम्, साक्षादिव=अव्यवहितमिव, शब्देनो-पोहते=स्मृत्युपस्थापितेन पूर्णवर्णेन शब्देन समर्पयति, बोधयतीति यावत् । यदि तु न्यूनवर्णस्य शब्दस्य शब्दान्तरत्वमिति पक्षस्तदा यथा परिपूर्णवर्णः शब्दो वाचकस्तथा तदर्थसम्बन्धाद् न्यूनवर्णोऽपीति न कश्चिद्विशेषः । एवञ्च न न्यूनवर्णस्य शब्दस्य शब्दान्तरत्व एकशब्दत्वे वाऽवयवानामर्थवत्त्वं सिध्यतीति भावः ॥ २१५ ॥

तस्मादवयवानां तदर्थप्रतिपादनमनुपपन्नमेवेति प्रतिपादयितुमाह—

**पदवाच्यो यथा नार्थः कश्चित् गौरखरादिषु ।**
**सत्यपि प्रत्ययेऽत्यन्तं समुदाये न गम्यते ॥ २१६ ॥**
**समन्वित इवार्थात्मा पदार्थैर्यः प्रतीयते ।**
**पदार्थदर्शनं तत्र तथैवानुपकारकम् ॥ २१७ ॥**

गौरखरः कृष्णसर्प इत्यादौ यथा नैव पदानां चान्यः कश्चिदर्थोऽस्ति, सत्यपि वा तच्छ्रवणकाले तदर्थप्रत्यये गौरखर इत्यस्मिन् समुदायेऽत्यन्तं सर्वथा नैवायमर्थो गम्यते, जात्यन्तरमेव हि पदार्थसंस्पर्शमात्रविरहितं समुदायात्तत्राव-गतम्, तथैव देवदत्त गामभ्याजेत्यादिभिः पदार्थैर्यः प्रतिभालक्षणोऽर्थः समन्वित इव, परमार्थतस्तु निर्विभागः पानकरसादिवत् प्रतीयते, तत्र पदार्थदर्शनमवयवार्थ-प्रतिभासोऽनुपकारक एव मन्तव्यः ॥२१६-२१७॥

यदि चैतन्नाभ्युपगम्यते तदा समुदायावयवयोर्भिन्नार्थत्वे सति वृत्तौ सम-कालमेव विरुद्धधर्मसंसर्गः प्राप्नोतीति पदवादिमतं दूषयितुमाह—

**समुदायावयवयोर्भिन्नार्थत्वे च वृत्तिषु ।**
**युगपद् भेदसंसर्गौ विरुद्धावनुषङ्गिणौ ॥ २१८ ॥**

---

एवमवयानां संघातांशप्रतिपादनमनुपपन्नमेवेति प्राक् प्रतिपादितमपि दृष्टान्तान्तरेण पुनः प्रतिपादयति बुद्धिदार्ढ्याय द्वाभ्याम्—पदवाच्य इति, समन्वित इवेति च ।

अयमर्थः—**यथा** वृत्तिविषये गौरखरादिषु = गौरखरः कृष्णसर्प इत्यादिषु, पदवाच्यः = स्वावयवपदवाच्यः, कश्चिदर्थो नास्ति । गौरखरादिपदश्रवणकाले सत्यपि वा तदवयवपदार्थप्रत्यये गौरखरादिसमुदायेऽत्यन्तम् = सर्वथा, नैवावयवार्थो गम्यते । तत्र जात्यन्तरस्यैव हि पदार्थसंस्पर्शविरहितस्य गौरखरादिरूपपदद्वयसमुदायादवगमात् । तथैव देवदत्त गामभ्याज कृष्णां दण्डेनेत्यादिवाक्येषु स्वघटकपदार्थैरसमन्वितोऽपि समन्वित इव, परमार्थतस्तु निर्विभागो यः प्रतिभालक्षणः = प्रातिभज्ञानविषयीभूतः वाक्यार्थः पानकर-सादिवत् प्रतीयते । अत्र पानकरसो दृष्टान्तः पदार्थप्रत्ययसत्त्वमात्रेण, न तु वाक्यार्थस्य सखण्डत्वेन; उपक्रान्तेन वाक्यार्थाखण्डत्वेन विरोधात् । तत्र पदार्थदर्शनमवयवार्थप्रतिभासो वाक्यार्थस्यानुपकारकः, तस्याखण्डत्वादिति मन्तव्यम् ॥ २१६–२१७ ॥

यदि चार्थवति संघातेऽवयवानामानर्थक्यं नाभ्युपगम्यते, तदा वृत्तौ गौरखर-कृष्णसर्पादिषु समुदायावयवयोर्भिन्नार्थत्वे सति वृत्त्यर्थे समकालमेव विरुद्धधर्मसंसर्गः प्रतीयमानत्वेन प्राप्नोति । तथाहि—गौरखरपदेऽवयवयोरर्थवत्त्वे = वृत्त्यर्थे गौरत्वखरत्व-रूपधर्मद्वयसंसर्गप्रतीतिः; गौरखरत्वरूपजात्यन्तरसंसर्गप्रतीतिश्च प्राप्नोति । एवं

वृत्तिषु समासादिकासु। तुल्यकालं समुदायेन पांसूदकवदविभागापन्नस्यार्थस्य प्रतिपादनात् संसर्गः समासार्थः पदेभ्यश्च भिन्नस्यार्थस्य प्रतीतेर्भेदसंसर्गौ विरुद्धौ युगपत् प्राप्नुतः। न चैतद् युक्तं प्रतीत्यभावादिति ॥२१८॥

पदपदार्थानां च सत्यत्वेऽध्यादीनां वाक्ये साधनाभिधायित्वं प्राप्नोति। न चैतद् दृष्टं साधनाभिधायकत्वेन स्वतन्त्राणां तेषां प्रयोगादर्शनादित्याह—

**कश्च साधनमात्रार्थानध्यादीन् परिकल्पयेत्।**
**अप्रयुक्तपदश्चार्थो बहुव्रीहौ कथं भवेत् ॥ २१९ ॥**

अधिस्त्रीत्यादौ समुदायस्याधिकरणवृत्तित्वं परिदृष्टं न कदाचिदप्यवयवस्येति। यदा च पदानि सत्यार्थानि विद्यन्ते तदा बहुव्रीह्यर्थो नावकल्पेतेत्याह—अप्रयुक्तेत्यादि। चित्रगुरित्यादाववयवानां सत्यार्थत्वे चित्रशब्दस्य गुणः कश्चिद्-

---

कृष्णसर्पादिपदेष्विति वाक्यवृत्त्योरवयवत्वेनार्थवत्पदवादिमतं दूषयितुमाह—**समुदायावयवयोरिति**।

अस्यार्थः—वृत्तिषु = समासादिकासु गौरखरकृष्णसर्पादिषु, समुदायावयवयोर्भिन्नार्थत्वे च = चशब्दस्त्वर्थे। विरुद्धौ भेदसंसर्गौ वृत्त्यर्थे युगपद् अनुषङ्गिणौ = संसर्गिणौ स्यातामिति।

अयं भावः—वृत्तौ गौरखरादिरूपसमुदायेन पांसूदकवदविभागापन्नस्यार्थस्य गौरखरत्वरूपजात्यन्तरविशिष्टस्य प्रतिपादनाद् वृत्त्यर्थे जात्यन्तरसंसर्गः समासार्थः, पदेभ्यश्च प्रागुक्तार्थाद् भिन्नस्यार्थस्य गौरत्वखरत्वरूपधर्मद्वयवतः प्रतीतेस्तुल्यकालमेवावयवार्थभेदरूपो जात्यन्तरसंसर्गरूपश्चेत्येवं विरुद्धावर्थौ वृत्त्यर्थे विशेषणतया प्रतीयमानौ प्राप्नुतः। न चैतद् युज्यते, तथा प्रतीत्यभावादिति ॥**२१८**॥

वृत्तौ वाक्यवाक्यार्थयोश्च पदपदार्थानां कल्पितत्वाभावे अधिभुवि रामः, अधिस्त्रि इत्यादावध्यादीनामधिकरणादिसाधनाभिधायित्वं प्राप्नोति। न चैतदनुभवसिद्धम्, अधिकरणादिवाचकपदान्तरसमभिव्याहाराभावे विभक्तिसमभिव्याहाराभावे च स्वतन्त्राणां तेषां साधनाभिधायकत्वेन प्रयोगादर्शनादित्याह—**कश्चेति**।

अस्यार्थः—अधिस्त्रि इत्यादौ समुदायस्याधिकरणवृत्तित्वं परिदृष्टं न कदाचिदप्यवयवस्याध्यादेरिति लोकानुभवविरोधे कश्च = कस्तु, अध्यादीन् अवयवान् साधनमात्रार्थान् परिकल्पयेत्, न कोऽपीत्यर्थः।

किञ्च, वृत्तौ पदानामेवार्थवत्त्वे बहुव्रीहावप्रयुक्तपदः = न प्रयुक्तं पदं वाचकं यस्य स तथाभूतोऽर्थः = अन्यपदार्थो देवदत्तादिः, कथं भवेत् = कथं प्रतीतो भवेत् तद्वाचकपदाभावादिति।

भिधेयो गोशब्दस्य गोजातयः काश्चिदित्यप्रयुक्तं वाचकं पदं यस्यासावप्रयुक्तपदो देवदत्तार्थः कस्याभिधेयः स्यात् ॥२१९॥

यदि चावयवानामर्थवत्त्वं स्यात्तदा प्रज्ञः संज्ञुरित्यत्रापि ज्ञुशब्दस्यार्थः पृथगुपलभ्येत, न चोपलभ्यत इति प्रतिपादयितुमाह—

**प्रज्ञसंज्ञ्वाद्यवयवैर्न चास्त्यर्थावधारणम् ।**
**तस्मात् संघात एवैको विशिष्टार्थनिबन्धनम् ॥ २२० ॥**

उपसंहर्तुमाह—तस्मादिति । तस्मात् समासेषु विरुद्धार्थोपस्थापनादध्यादीनां साधनमात्रार्थवृत्तित्वासम्भवाद् बहुव्रीह्यर्थस्यासङ्गतेः प्रज्ञसंज्ञ्वित्यादाववयवार्थानुपलम्भादित्युपपत्तिचतुष्टयेन सत्यार्थानां पदानामनुपपत्तेः सङ्घात एवैकोऽखण्डः प्रविभागशून्यः स्फोटात्मा विशिष्टस्यैव प्रतिभात्मकस्यार्थस्य निबन्धनमभ्युपगन्तुं युक्त इति सिद्धम् । सङ्घातसाधर्म्याच्च स्फोट एवात्र सङ्घातशब्देनोक्तः । सङ्घातो ह्यवयवैराच्छुरितो भवति, स्फोटश्चापि ध्वनिभिराच्छुरित इति सङ्घातसाधर्म्यम् ॥२२०॥

---

अयं भावः—चित्रगुरित्यादाववयवानां सत्यार्थकत्वेऽप्रयुक्तवाचकपदो देवदत्तादिरूपोऽर्थः कस्याभिधेयः स्यादिति ? तदर्थं समुदायस्य विशिष्टार्थकत्वेऽवयवानामानर्थक्यमेव युक्तम्; तदा तदर्थवत्त्वे फलाभावादिति ॥ २१९ ॥

किञ्च, यद्यवयवानामर्थवत्त्वं स्यात्तदा प्रज्ञुः संज्ञुरित्यत्रापि ज्ञुशब्दस्य पृथक्कृतस्य प्रादिशब्दसमभिव्याहाराभावेऽर्थ उपलभ्येत, न चोपलभ्यते; अतोऽपि नास्त्यवयवानामर्थवत्त्वमिति प्रतिपादयितुमाह—**प्रज्ञुसंज्ञ्वाद्यवयवैरिति** ।

अत्र चो हेतौ । यतः प्रज्ञुसंज्ञ्वाद्यवयवैर्ज्ञुशब्दादिभिरर्थावधारणं पृथक्कृतैर्नास्ति, अतो नार्थवन्तोऽवयवा इति विज्ञायते । अवयवानामानर्थक्यमुपसंहर्तुमाह—**तस्मादिति** ।

अस्यार्थः—तस्मात् = समासेषु युगपद् भेदसंसर्गरूपविरुद्धार्थोपस्थितिप्रसङ्गात्, अध्यादीना स्वतन्त्राणां साधनमात्रार्थाभिधायित्वादर्शनात् बहुव्रीहावन्यपदार्थस्याप्रतीतिप्रसङ्गात्, प्रज्ञुसंज्ञ्वित्यादावयवस्य ज्ञुशब्दादेः पृथगर्थानुपलम्भादिति प्रागुक्तयुक्तिचतुष्टयेन वृत्तौ पदानां सत्यार्थानुपपत्तेः पदसंघात एवैकोऽखण्डः प्रविभागशून्यः स्फोटात्मा विशिष्टस्यैव प्रतिभात्मकस्य वृत्त्यर्थस्य वाक्यार्थस्य वा निबन्धनम् = प्रतीतिनिमित्तम् अभ्युपगन्तुं युक्तमिति सिद्धम् । अत्र संघातशब्देन सादृश्यात् स्फोटो लक्ष्यते । तथाहि—संघातो यथाऽवयवत्वेन प्रतीयमानैराच्छुरितः = व्याप्तः प्रतीयते, तथा स्फोटोऽप्यवयवत्वेनाभिमन्यमानैर्ध्वनिभिरित्यवयवत्वेन प्रतीयमानैराच्छुरितत्वेन प्रतीयमानत्वमेव स्फोटे संघातसाधर्म्यमिति ॥२२०॥

इदानीमखण्डवाक्यात्मीयपक्षे परकीयचोद्यसप्तकमाशङ्क्य क्रमेण समर्थयितुमुपक्रमते। तथा च यदि पदार्थो नैव विद्यते तदा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र द्वन्द्वेनैक एवाखण्डः समुदायो वाक्यार्थो विधीयते, ततश्च पदार्थभेदस्यानभ्युपगमादेकत्वे च सति बहुवचनं सति नोपपद्येतेत्याशङ्क्य समर्थयितुमाह--

**गर्गा इत्येक एवायं बहुष्वर्थेषु वर्तते।**
**द्वन्द्वसंज्ञोऽपि सङ्घातो बहूनामभिधायकः ॥२२१॥**

यथा गर्गस्यापत्यानि बहूनि गर्गा इत्यत्रैकशेषे कृते गर्गशब्द एक एव निरस्तावयवविभागो बह्वर्थवृत्तित्वाद् बहुवचनान्तः, तथैव द्वन्द्वसंज्ञः संघातो निरस्तावयवभेदोऽपि शब्दशक्तिमाहात्म्याद् बहुत्वमभिधत्त इति सत्यपि बहुवचने नास्ति तावता वाक्यार्थव्यतिरेकेण पदार्थसद्भावः ॥२२१॥

---

वृत्तिपदवाक्यानां तदर्थानाञ्चाखण्डत्ववादिपक्षे चोद्यसप्तकम्। तथाहि --द्वन्द्वे तद्घटकपदार्थभेदानभ्युपगमे तदेकत्वे सति देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र बहुवचनं नोपपद्यत इत्येकम्। द्वन्द्वे प्रत्येकं वाक्यपरिसमाप्तिर्नोपपद्यत इति द्वितीयम्। जनपदतदवध्योश्चेत्यादौ द्वन्द्वघटकेन सर्वनाम्ना तच्छब्देन जनपदपदार्थस्य प्रत्यवमर्शो नोपपद्यत इति तृतीयम्। धवखदिरपलाशाश्छिद्यन्तामित्यादावखण्डेऽक्रमे वृत्त्यर्थे क्रमेण छिदिक्रियानुष्ठानं नोपपद्यत इति चतुर्थम्। अस्मिन् पर्वते मम पुरुषैर्धवखदिरपलाशाश्छिद्यन्तामित्यत्र पर्वतनिरूपितं धवखदिरपलाशच्छेदनं वाक्यार्थः।

तत्रैकदेशमात्रेऽपि कैश्चिच्छिन्ने यदादिष्टं तत्कृतमिति ते ब्रुवन्ति, तदयमेकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानो वाक्यार्थे वृत्त्यर्थे वा पदार्थभेदानभ्युपगमे नोपपद्यत इति पञ्चमम्। वृत्तौ पदार्थभेदानभ्युपगमे पूर्वोत्तरपदार्थप्राधान्यविकल्पकृतो वृत्तिविकल्पो नोपपद्यत इति षष्ठम्। वृत्तौ पदार्थासम्भवे जहत्स्वार्थाजहत्स्वार्थविकल्पो नोपपद्यत इति सप्तमम्।

इदं चोद्यसप्तकमिदानीं क्रमेण समाधायाखण्डत्वपक्षं समर्थयितुमुपक्रममाण एकोऽपि निरस्तावयवभेदो बहूनामभिधायको भवति, यथा गर्गा इति दृष्टान्तेनाद्यं चोद्यं परिहरति—**गर्गा इति।**

अस्यार्थः—यथा गर्गस्यापत्यानि बहूनि गर्गा इत्यत्रैकशेषे कृते गर्गा इति गर्गशब्द एक एवायं निरस्तावयवविभागो बहुष्वर्थेषु वर्तत इति बह्वर्थवृत्तित्वाद् बहुवचनं ततो जायत इति बहुवचनान्तः तथैव द्वन्द्वसज्ञः, संघातो निरस्तावयवभेदोऽपि शब्दशक्तिस्वाभाव्याद् बहूनामभिधायक इति। ततः सत्यपि बहुवचने न तत्र तावता वृत्त्यर्थव्यतिरेकेण पदार्थसद्भावोऽनुमातुं शक्य इति ॥ २२१ ॥

अथ धवखदिरपलाशाः सिच्यन्तामित्यत्र वाक्यार्थव्यतिरेकेण पदार्थासम्भवात् प्रत्येकं वाक्यपरिसमाप्त्ययोगात् समुदायस्य च युगपत्सेचनक्रियाऽसम्भवाद्वाक्यार्थस्यानुपपत्तिरित्याशङ्क्य समर्थनार्थमाह—

**यथैकदेशे भुज्यादिः प्रत्येकमवतिष्ठते ।**
**क्रियैवं द्वन्द्ववाच्येऽर्थे प्रत्येकं प्रविभज्यते ॥२२२॥**

ब्राह्मणा भोज्यन्तामित्यत्र यथा विनापि वाक्यार्थव्यतिरेकेण पदार्थसद्भावं पदार्थानां भुजिक्रिया प्रत्येकमवतिष्ठते, तथा द्वन्द्ववाक्ये समुदायलक्षणेऽर्थे प्रत्येकं प्रविभज्यत इति न कश्चिद्दोषः ।

एतदुक्तं भवति—ब्राह्मणा भोज्यन्तामित्यत्र यथा सत्यामपि समुदायप्रतिपत्तावपोद्धारबुद्ध्या प्रकल्प्यावयवान् प्रत्येकं भुजक्रिया समाप्यते, तथैव द्वन्द्वात् समुदाये प्रतिपन्ने बुद्धिपरिकल्पितप्रविभागसमाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिर्बोद्धव्या ॥ २२२ ॥

पुनरप्याशङ्क्य परिहर्तुमाह—

**यच्च द्वन्द्वपदार्थस्य तच्छब्देन व्यपेक्षणा ।**
**साऽपि व्यावृत्तरूपेऽर्थे सर्वनामसरूपता ॥ २२३ ॥**

---

अथ वृत्तेरखण्डार्थत्ववादिमते धवखदिरपलाशाः सिच्यन्तामित्यत्र वृत्त्यर्थव्यतिरेकेण पदार्थासंभवात् प्रत्येकं वाक्यपरिसमाप्तेरयोगः, समुदायस्य च युगपत् सेचनक्रियाकर्मत्वासम्भव इति द्विधाऽपि वाक्यार्थबोधस्यानुपपत्तिरिति द्वितीयं चोद्यमाशङ्क्य दृष्टान्तेन परिहरति—यथैकदेश इति ।

अस्यार्थः—यथा ब्राह्मणा भोज्यन्तामित्यत्रैकशेषे वृत्त्यर्थसमुदायव्यतिरेकेण पदार्थसद्भावं विनापि पदार्थेषु प्रत्येकमेकदेशे=समुदायैकदेशे भुजिक्रियाऽवतिष्ठते योग्यतया प्रत्येकं वाक्यपरिसमाप्तिरिति पक्षाश्रयणाद् व्यवतिष्ठते । एवम्=तथा, द्वन्द्ववाच्ये समुदायरूपेऽर्थे प्रत्येकं सेचनक्रिया प्रविभज्यते=बुद्ध्या समुदायावयवान् कल्पनया प्रविभज्य सम्बध्यत इति नाखण्डत्वपक्षे कश्चिद् दोषः ।

अयं भावः—यथा ब्राह्मणा भोज्यन्तामित्यत्र पूर्वमेकशेषात् समुदायप्रतिपत्तौ सत्यामपि पदार्थान्वयबाधेऽनन्तरमपोद्धारबुद्ध्याऽवयवान् प्रकल्प्य प्रत्येकं भुजिक्रिया समाप्यते, तथैव द्वन्द्वात् समुदाये प्रतिपन्ने सति बुद्धिपरिकल्पितावयवप्रविभागसमाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिरुपपत्स्यत इति ॥ २२२ ॥

अखण्डत्वपक्षे द्वन्द्वघटकपदार्थस्य वृत्त्यर्थव्यतिरेकेणसंभवात् सर्वनाम्ना परामर्शो नोपपद्यते, यथा जनपदतदवध्योरिति । अत्र हि जनपदवाचकाच्छब्दात् तच्छब्देन सर्वनाम्ना परामृष्टाच्च तस्मादेव जनपदावधिभूतात् प्रत्ययो विधीयते । वृत्त्यर्थव्यति-

द्वन्द्वान्तवर्तिनः पदार्थस्य वाक्यार्थव्यतिरेकेणासम्भवात् सर्वनाम्ना परामर्शो नोपपद्यते। यथा 'जनपदतदवध्योश्च' इति (पा० ४।२।१२४)। अत्र हि जनपदात्तच्छब्देन परामृष्टाच्च तस्मादेवावधिभूतात् प्रत्यय इष्यते। वाक्यार्थव्यतिरेकेणासति च पदार्थे कथमसतः सर्वनाम्नाऽपेक्षणमिति पराभिप्रायमनूद्य समाधत्ते--साऽपीत्यादिना। नात्र किञ्चित् सर्वनाम विद्यते। तत्कुत एव तत्र द्वन्द्वपदार्थपरामर्शः स्यात्? केवलव्यावृत्तरूपे विशिष्ट एवात्र वाक्यार्थे प्रतिभामात्रेऽन्वयात् सर्वनामसारूप्यमात्रमाभाति, न तु वास्तवोऽत्र तत्पदार्थप्रत्ययः कश्चित् प्रतिपन्नः। यद्वक्ष्यति--

"यदन्तराले ज्ञानं तु पदार्थेषूपजायते।
प्रतिपत्तेरुपायोऽसौ प्रक्रमानवधारणात्॥" इति॥ २२३।

(वा० प० २।४१०)

नन्वसति पदार्थे धवखदिरपलाशाश्छिद्यन्तामित्यत्राक्रमिकनिर्विभागो वाक्यार्थ इष्टस्ततश्च यथैव शब्दादवगतोऽर्थस्तथैवानुष्ठानमिति युगपदेव च्छिदिक्रिया प्राप्नोति, न चैवमनुष्ठातुं पार्यत इत्याह---

---

वृत्त्यर्थव्यतिरेकेणासति च वृत्तिघटकपदार्थे कथमत्रासतो जनपदपदार्थस्य तच्छब्देनापेक्षणमिति तृतीयं चोद्यमाशङ्क्य परिहरति---यच्चेति।

अस्यार्थः---यच्च = यत्तु, द्वन्द्वपदार्थस्य = 'जनपदतदवध्योरि'ति द्वन्द्वघटकजनपदपदार्थस्य, तच्छब्देन सर्वनाम्ना व्यपेक्षणा = परामर्शः, साऽपि व्यावृत्तरूपेऽर्थे विशेषणविशेष्योभयसमुदायाद् व्यावृत्तरूपे विशिष्ट एवात्र वृत्त्यर्थेऽखण्डे प्रतिभामात्रे बुद्ध्यापोद्धारकल्पनया कल्पितं पदार्थान्वयमाश्रित्य बोधनीये सर्वनामसरूपता = सर्वनामपदजन्यपरामर्शसारूप्यम्। धर्मधर्मिणोरभेदोपचारादियमुक्तिः।

अय भावः---द्वन्द्वघटकतच्छब्दस्य सर्वनामसारूप्यमात्रमाभाति, न तु वस्तुतस्तत्र तच्छब्दो द्वन्द्वघटकः सर्वनामास्ति, न वा तत्पदार्थप्रत्ययः कश्चित् संप्रतिपन्नः (सम्मतः)। नात्र किञ्चित् सर्वनाम विद्यत, तत् कुत एवात्र द्वन्द्वघटकपदार्थपरामर्शः स्यादिति। यद् वक्ष्यति मूलेऽत्रैवाग्रे---

'यदन्तराले' इति (२।४१०)।

अस्यार्थः---यत्तु अन्तराले = शब्दप्रतिपत्तेरखण्डस्य वृत्त्यर्थस्य च प्रतिपत्तेरन्तराले मध्ये, पदार्थेषु ज्ञानम् = वृत्तिघटकपदार्थविषयकं ज्ञानमुपजायते। असौ = अखण्डस्य वृत्त्यर्थस्य प्रतिपत्तेरुपायो बुद्ध्यापोद्धारकल्पितः, न तु वास्तवः। तत्र हेतुः---प्रक्रमानवधारणादिति। शब्दप्रतिपत्त्यखण्डवृत्त्यर्थप्रतिपत्त्योर्मध्ये वृत्तिघटकपदार्थप्रत्ययरूपस्य प्रक्रमस्य व्याकरणप्रक्रियानभिज्ञैरनवधारणादिति॥ २२३॥

**यथा च खदिरच्छेदे भागेषु क्रमवांश्छिदिः ।**
**तथा द्वन्द्वपदार्थस्य भागेषु क्रमदर्शनम् ॥ २२४ ॥**

यत्रापि भवतः पदार्थवाक्यार्थयोर्भेदः खदिरश्छिद्यतामित्यादौ, तत्रापि युगपदेवानुष्ठातुं न याति। यावता खदिरस्य प्रथमं त्वग्भागं छिन्दन्ति, ततोऽप्यस्थिभागं तदनन्तरं सारभागमिति क्रमवर्तिन्येव छिदिक्रिया पर्यवस्यति। तथैव द्वन्द्वे यः पदार्थोऽपोद्धारबुद्धिपरिकल्पितस्तस्य क्रमेण दर्शनं व्यवस्थितिरनुष्ठानमिति यावत् ॥ २२४ ॥

---

ननु वृत्तिवृत्त्यर्थयोरखण्डत्ववादिमते वृत्त्यर्थघटके पदार्थेऽसति धवखदिरपलाशाश्छिद्यन्तामित्यत्राक्रमिको निर्विभागश्च वृत्त्यर्थ एषितव्यस्ततश्च यथैव शब्दादर्थोऽवगम्यते क्रमरहितस्तथैव तस्यानुष्ठानं युक्तमिति क्रमरहितैव युगपद् धवखदिरपलाशानां छिदिक्रिया प्राप्नोति। न चैवं साऽनुष्ठातुं शक्यत इति चतुर्थे चोद्यमाशङ्क्य परिजिहीर्षुराह—यथा चेति।

अस्यार्थः—यथा च खदिरश्छिद्यतामित्यादौ शब्दादनवयवस्य खदिरस्याखण्डायाश्च छिदिक्रियाया उपस्थित्या वाक्याद् अक्रमे खदिरच्छेदेऽवगम्यमानेऽपि तदनुष्ठानस्यायोग्यत्वेनाप्रसिद्धत्वेन च भागेषु = खदिरावयवेषु त्वगस्थिसाररूपेषु क्रमवान् छिदिः पर्यवस्यति, तथा द्वन्द्वपदार्थस्याखण्डस्य = अक्रमस्य युगपच्छिदिक्रियाकर्मत्वासम्भवाद् भागेषु = अपोद्धारबुद्धिपरिकल्पितेषु क्रमदर्शनम् = छिदिक्रियाया अनुष्ठानक्रमस्य दर्शनं लोक इति शेषः।

अयं भावः—पदार्थवाक्यार्थयोर्भेदवादिमते यत्रापि खदिरश्छिद्यतामित्यादौ पदार्थवाक्यार्थयोर्भेदः प्रतीयते, तत्रापि सावयवोऽपि खदिरोऽखण्ड एव शब्दशक्त्या प्रतीयते, सावयवाऽपि छिदिक्रियाऽखण्डैव प्रतीयते। तत्र खदिरस्य सावयवत्वं प्रसिद्धमेव। क्रियाया अपि सावयवत्वम् "क्रिया नामेयमत्यन्तापरिदृष्टाऽवयवा न शक्या पिण्डीभूता निदर्शयितुम्" इत्यादिभाष्यतः प्रतीयते। उक्तञ्च—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ इति ( ३ क्रिया ४ )

लोके चापि प्रसिद्धः क्रियाया अवयवभेदः। यथात्रैव प्रथमं खदिरस्य त्वग्भागं छिन्दन्ति, ततोऽस्थिभागम्, ततः सारभागमिति क्रमवर्तिन्येव छिदिक्रियाऽनुभूयते। तथा च खदिरश्छिद्यतामित्यादावखण्डाऽक्रमा च छिदिक्रिया शब्दशक्त्या प्रतीयमानाऽपि युगपदनुष्ठातुमशक्यत्वात् क्रमवर्तिन्येव पर्यवस्यति, तथैव धवखदिरपलाशाश्छिद्यन्तामित्यादौ द्वन्द्वे वृत्त्यर्थेऽखण्डेऽपि यः पदार्थोऽपोद्धारबुद्धिपरिकल्पितस्तस्य क्रमेण दर्शनमिति। तत्क्रमेणैव छिदिक्रियाया व्यवस्था = अनुष्ठानमिति यावदिति ॥ २२४ ॥

अथास्मिन् पर्वते धवखदिरपलाशाश्छिद्यन्तामिति धवखदिरपलाशच्छेदनं निरूपितं वाक्यार्थः, तत्रैकदेशमात्रेऽपि च्छिन्ने यदादिष्टं तत् कृतमिति ब्रुवन्ति, तदेतदनंशे वाक्यार्थे कथमुपपत्तिमदित्याशङ्क्याह—

**संघैकदेशे प्रक्रान्तान् यथा सङ्घानुपातिनः ।**
**क्रियाविशेषान् मन्यन्ते स द्वन्द्वावयवे क्रमः ॥ २२५ ॥**

यथा ब्राह्मणा भोज्यन्तामित्यत्र सङ्घातानुपातिन्यपि भुजिक्रिया तदेकदेशे प्रक्रान्ता प्रवर्तिता, अतो भुक्तं ब्राह्मणैरित्युच्यते; तथा द्वन्द्ववाच्यसमुदायान्तरगतावयवप्रवर्तितापि शब्दार्थपरित्यागकारणतां न प्रतिपद्यत इति विज्ञेयम् ॥ २२५ ॥

यदि च पदपदार्थासम्भवस्तदा पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तर-

---

न तु यदा केनचिद् वनपालेनाज्ञप्तम्—मम पुरुषैरस्मिन् पर्वते धवखदिरपलाशाश्छिद्यन्तामिति । तत्र पर्वतनिरूपितं धवखदिरपलाशच्छेदनं वाक्यार्थः । तत्र यदा कैश्चिद् धवा एव च्छिन्नाः, कैश्चित्तु खदिराः, कैश्चित्तु पलाशाः; तदा वृत्त्यर्थैकदेशमात्रेऽपि च्छिन्ने यदाऽऽदिष्टं तत्कृतमिति ते वदन्ति, तदेतदखण्डे वृत्त्यर्थे वाक्यार्थे च नोपपद्यत इति पञ्चमं चोद्यमाशङ्क्य ब्राह्मणा भोज्यन्तामित्यादावेकशेषवृत्त्यर्थे समुदाये वाक्यपरिसमाप्तेर्बाधादेकदेशे प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति लोकनिदर्शनेन समाधत्ते—**संघैकदेश** इति ।

अस्यार्थः—यथा ब्राह्मणा भोज्यन्तामित्यादौ संघानुपातिनः = एकशेषवृत्त्यर्थब्राह्मणादिसंघातान्वितान् प्रक्रान्तान् = प्रक्रमे प्रतीतान्, प्रक्रमे संघातान्वयित्वेन प्रतीतानिति यावत् । क्रियाविशेषान = भोजनादिक्रियाविशेषान, संघैकदेशे मन्यन्ते = प्रत्येकं ब्राह्मणादौ सम्बद्धान् मन्यन्ते । समुदाये बाधादिति तत्र हेतुर्बोध्यः । अत एव ब्राह्मणा भोज्यन्तामित्यादेशोत्तरं प्रत्येकं भोजयित्वा भुक्तं ब्राह्मणैरित्युच्यते । स द्वन्द्वावयवे क्रमः । पूर्वं द्वन्द्वार्थे समुदाये क्रियासम्बन्धस्तद्बाधे पश्चात् प्रत्येकं स इत्यर्थः ।

एवञ्च यथा ब्राह्मणा भोज्यन्तामित्यत्र प्रत्येकं भुजिक्रियापरिसमाप्तावपि न शब्दार्थः परित्यक्तो भवति, तथा द्वन्द्ववाच्यसमुदायान्तर्गतावयवप्रवर्तिताऽपि च्छिदिक्रिया शब्दार्थपरित्यागकारणतां न प्रतिपद्यत इत्यवधेयम् ।

श्रीपुण्यराजैस्तु—यथा ब्राह्मणा भोज्यन्तामित्यत्र संघातानुपातिनः क्रियाविशेषान् संघैकदेशे प्रक्रान्तान् मन्यत इत्येवं पदाना सम्बन्धमभिप्रेत्य 'प्रक्रान्तान्' इत्यस्य प्रवर्तितान् इत्यर्थोऽभिप्रेयते । तत्र शब्दस्वारस्यं तु बुधैर्विचिन्त्यम् ॥ २२५ ॥

पदार्थप्रधानस्तत्पुरुष इत्यादिकं समासेष्वर्थाभिधानमनुपपन्नमित्याशङ्क्य परिहर्तुमाह—

**प्रतिपादयता वृत्तिमबुधान् वाक्यपूर्विकाम् ।**
**वृत्तौ पदार्थभेदेन प्राधान्यमुपदर्शितम् ॥ २२६ ॥**

वाक्यपूर्विकां वृत्तिं समासलक्षणामबुधान् प्रतिपादयता तद्भेदेन समासेषु पदार्थप्राधान्यमाचार्येणोपदर्शितम् । वाक्यपूर्विकामिति । यदा वाक्यमेव वृत्तौ भवति कार्यवशादन्वाख्यानपक्षे तदैवमुक्तमित्यर्थः ।

एतदुक्तं भवति—अबुधबोधनाय तथा शास्त्रे क्रियामात्रप्रदर्शनं कृतम्, न पुनस्तावता पदपदार्थसत्ताऽभ्युपगता ॥ २२६ ॥

अब्राह्मण इत्यादौ नञ्समासेऽपि यत् पदार्थप्राधान्यं बहुधा भाष्ये विकल्पितम् तदप्यबुधबोधनाय शास्त्रप्रक्रियामात्रप्रदर्शनमेव बोद्धव्यमित्याह—

**अभेदादभिधेयस्य नञ्समासे विकल्पितम् ।**
**प्राधान्यं बहुधा भाष्ये दोषास्तु प्रक्रियागताः ॥ २२७ ॥**

---

यदि च वृत्तौ तदर्थे चाखण्डत्वेन पदार्थासम्भवस्तदा पूर्वपदार्थप्रधानोऽव्ययीभाव उत्तरपदार्थप्रधानस्तत्पुरुषोऽन्यपदार्थप्रधानो बहुव्रीहिरित्यादिकं समासेषु तत्तत्पदार्थप्राधान्याभिधानं नोपपद्यत इत्याशङ्क्यते । तदा समाधातुमाह—प्रतिपादयतेति ।

अस्यार्थः—पदान्वाख्यानपक्षे यदा तत्तत्कार्यवशाद् वृत्तावपोद्धारकल्पनयाऽलौकिकं विग्रहवाक्यं वृत्तिसिद्धये लौकिकञ्च विग्रहवाक्यं तदर्थसिद्धये कल्पितं भवति, तदाऽलौकिकविग्रहवाक्यपूर्विकां वृत्तिं समासलक्षणां प्रतिपादयता आचार्येण पदार्थभेदेन = अलौकिकवाक्यगतपदार्थभेदप्रयुक्तेन वृत्तौ पदार्थभेदेन, वृत्तौ समासेषु प्राधान्यम् = तत्तत्पदार्थप्राधान्यमुपदर्शितमिति ।

अयं भावः—अबुधबोधनाय वृत्तावपोद्धारकल्पनयाऽलौकिकविग्रहवाक्यं कल्पयित्वा तत्र शास्त्रप्रवृत्तिरूपं प्रक्रियामात्रमाचार्येण प्रदर्शितमिति न वृत्तौ वस्तुतः पदपदार्थविभागोऽस्तीति न तावता तत्र पदार्थसत्ताऽभ्युपगतेति वक्तुं शक्यत इति ॥ २२६ ॥

अब्राह्मण इत्यादौ नञ्समासे पदार्थप्राधान्यं भाष्ये त्रिधा विकल्पितम्—नञ्समासेऽन्यपदार्थः प्रधानम्, पूर्वपदार्थः प्रधानम्, उत्तरपदार्थः प्रधानमिति । तत्र यदा जातौ ब्राह्मणशब्दो वर्तते, अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिरिति, तदाऽन्यपदार्थप्रधानः; यदा त्वसत्सामान्यवृत्तिर्नञ् ब्राह्मणादिभिर्विशेष्यते—ब्राह्मणत्वेनासन्, अन्यथा तु सन्नर्थः क्षत्रियादिरब्राह्मणशब्देनोच्यते, तदा पूर्वपदार्थप्रधानः । यदा तु दुरुपदेशाद् मिथ्याज्ञानाद्वा ब्राह्मणशब्दः केनचित् क्षत्रिये प्रयुज्यते, तदा तन्निरासाय 'अब्राह्मणः'

परमार्थस्त्वेकमेव । तत्राभिधेयरूपं सकलजनप्रसिद्धं स्थितमिति न तत्र कश्चित् पूर्वोत्तरपदार्थव्यवहार उपपद्यत इति बोद्धव्यम् । प्रतिपादयिष्यते च—

शास्त्रवृत्तिभेदेन लौकिकोऽर्थो न भिद्यते ।
नञ्समासे यतस्तत्र त्रयः पक्षा विचारिताः ॥" इति ॥२२७॥
( वा० प० ३ वृत्ति २५० )

अथ पदार्थासम्भवे वृत्तिषु जहत्स्वार्थविकल्पो नोपपद्यते किल पदार्थसम्भवे कुत्रैतदुच्यत इत्याशङ्क्य समर्थयितुमाह—

**जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता ।**
**बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः ॥ २२८ ॥**

---

इत्यन्येन तं प्रति प्रयुज्यते । तत्र ब्राह्मणपदार्थनिवृत्तिः स्वाभाविकी नञा द्योत्यत इति तदोत्तरपदार्थप्रधानः, ब्राह्मणभिन्नः ब्राह्मणत्वाभाववानिति वेति ।

सोऽयं त्रिधा विकल्पोऽप्यबुधबोधनाय शास्त्रप्रक्रियामात्रप्रदर्शनमेव बोद्धव्यमिति न तेनापि वृत्तौ पदपदार्थसिद्धिरिति परिजिहीर्षन्नाह अभेदादिति ।

अत्र यदिति, तत्प्रयुक्ता इति च पदद्वयमध्याहृत्याद्यं विकल्पितपदेन, द्वितीयं तु दोषपदेन संयोज्यम् ।

अस्यार्थः—वृत्तावभिधेयस्य अभेदात् = तत्र परमार्थतोऽभिधेयैक्यस्य सकलजनप्रसिद्धत्वात्, तत्र पूर्वोत्तरपदार्थतत्प्राधान्यव्यवहारानुपपत्तौ नञ्समासे भाष्ये प्राधान्यम् = पूर्वोत्तरपदार्थप्राधान्यम्, बहुधा = त्रिधा द्विकल्पितम्, तत्प्रयुक्ता दोषाः = वृत्तौ पूर्वोत्तरपदतदर्थाभ्युपगमापत्तिरूपा दोषास्तु प्रक्रियागताः = अपोद्धारकल्पिता लौकिकविग्रहवाक्यरूपप्रक्रियागताः, न तु वृत्तिगता इति । प्रतिपादयिष्यते चैतदग्रे—शास्त्रवृत्तिप्रभेदेन इत्यादिना ( स० प० ३ वृत्ति २५० ) ।

अयमर्थः—नञ्समासे यतः शास्त्रवृत्तिप्रभेदेन = समासरूपवृत्तिसिद्ध्यर्थेऽलौकिकविग्रहरूपप्रक्रियावाक्ये शास्त्रस्य या वृत्तिः = प्रवृत्तिस्तद्भेदेन परमार्थतोऽखण्डत्वेन सकलजनप्रसिद्धो वृत्यर्थो न भिद्यते, अतस्तत्र नञ्समासे त्रयः पक्षा अन्यपदपूर्वपदोत्तरपदार्थप्राधान्यविकल्पविषया विचारिताः, न तु नञ्समासे, वस्तुतः पदतदर्थसत्तामभ्युपेत्येति ॥ २२७ ॥

ननु वृत्तौ पदपदार्थसंभवे जहत्स्वार्था वृत्तिरजहत्स्वार्था वेति विकल्पो नोपपद्यते । तथा हि—जहत् = त्यजत् पदं स्वं स्वकीयं यमर्थं स जहत्स्वोऽर्थः, जहत्स्वोऽर्थो यस्यां वृत्तौ सा जहत्स्वार्था, तद्विपरीता त्वजहत्स्वार्थेति विकल्पार्थः ।

न चैषा विकल्पोक्तिर्वृत्तौ पदपदार्थासम्भव उपपद्यत इत्यतो न वृत्तेस्तदर्थस्य वाऽखण्डत्वमित्याशङ्क्य तत्समर्थयितुमाह—जहत्स्वार्थविकल्पे चेति ।

यत एवमत एव तत्प्रदर्शनायाचार्येण वृत्तिषु जहत्स्वार्थपक्षे सर्वार्थत्यागमिच्छता बहुव्रीहौ समासे सर्वस्य पदार्थस्य त्याग उपदर्शितः। तत्र हि पदार्थव्यतिरेकेणान्य एव समुदायार्थो विशिष्ट एव प्रतिभातीत्यतः सर्वथा न वास्तवः कश्चित् पदार्थव्यवहारोऽङ्गीकार्य इति।

तदेवं द्वन्द्वबहुवचनं प्रत्येकं वाक्यपरिसमाप्तिः सर्वनामप्रत्यवमर्शः क्रमेणानुष्ठानमेकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानश्चेति पञ्च चोद्यान्यपोद्धारसमाश्रयेणाखण्डवादिना परिहृतानि। बहुव्रीहौ च जहत्स्वार्थपक्षे सर्वार्थत्यागोपदर्शनादखण्डमेव वाक्यमभिप्रेतमिति लक्ष्यते ॥ २२८ ॥

इदानीं सर्वोऽयं पदपदार्थव्यवहारः काल्पनिकोऽसत्यभूत एव नानाविधशास्त्रप्रक्रियामात्रशरणोऽवगन्तव्य इत्युपपादयितुमाह—

**शास्त्रे क्वचित् प्रकृत्यर्थः प्रत्ययेनाभिधीयते।**
**प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः ॥ २२९ ॥**

---

अत्र चशब्दो हेतौ, अत एव पुण्यराजेनैतत्कारिकाव्याख्यानोपक्रमे -'यत एवमत एव तत्प्रदर्शनाय" इत्याद्युक्तम्। एवं चैतदग्रे एवपदसमन्वयः। यतो वृत्तौ सर्वार्थत्यागम् = सर्वपदार्थत्यागमिच्छता "अनेकमन्यपदार्थे" (पा० २।२।२४) इति वदता आचार्येण सूत्रकृता सर्वस्य बहुव्रीहिपदार्थस्य त्यागो जहत्स्वार्थविकल्पे = जहत्स्वार्था समासरूपा वृत्तिरिति विकल्पैकदेशे, प्रमाणत्वेन दर्शितः, अतो वृत्तितदर्थयोरखण्डत्वमेवाचार्याभिप्रेतमिति लक्ष्यते। बहुव्रीहौ हि पदार्थव्यतिरेकेणान्य एव समुदायार्थो विशिष्ट एवाखण्डः प्रतिभातीत्यतः सर्वथा न वास्तवः कश्चित् पदार्थव्यवहारो वृत्तावङ्गीकार्य इति।

तदेवं द्वन्द्वे बहुवचनम्, प्रत्येकं वाक्यपरिसमाप्तिः, सर्वनाम्ना प्रत्यवमर्शः, क्रमेणानुष्ठानम्, एकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानश्चेति पञ्च चोद्यान्यपोद्धारकल्पनासमाश्रयेणाखण्डवादिना परिहृतानि। नञ्समासेऽन्यत्र वृत्तौ चान्यपदपूर्वपदोत्तरपदार्थप्राधान्यविकल्पः कल्पितेऽलौकिकप्रक्रियावाक्य एव, न तु वृत्तौ; तत्राखण्डत्वेन जहत्स्वार्थपक्षाभ्युपगमे च 'अनेकमन्यपदार्थे' (पा० २।२।२४) इति सूत्रं मानमित्येवमन्यदपि चोद्यद्वयं समाहितम्॥ २२८ ॥

साम्प्रतं सर्वोऽप्ययं वृत्तौ वाक्ये च पदपदार्थव्यवहारः कल्पितोऽसत्यभूत एव वृत्तिवाक्यसाधुत्वबोधाभ्युपायभूतो नानाविधशास्त्रप्रक्रियामात्रशरणोऽवगन्तव्य.। प्रकृतिप्रत्ययतत्तदर्थव्यवहार इवेत्युपपिपादयिषन्नाह—**शास्त्र** इति।

अयमर्थः—शास्त्रे क्वचिद् प्रकृतौ विनिवृत्तायां प्रकृत्यर्थः प्रत्ययेनाभिधीयते। यथा 'इयान्' इत्यादौ। तदुक्तं कविभिर्ब्राह्मणः श्लेषेण—

तथा च पदस्य प्रकृतिभागाश्रितमभिधेयं प्रकृत्यसद्भावेऽपि प्रत्यय एवाभिदधाति, यथा इयानित्यादौ। तथा प्रत्ययार्थश्च विनिवृत्तेऽपि प्रकृत्यै-वाभिधीयते, यथाऽहन्निति ॥ २२९ ॥

पुनरप्यव्यवस्थां प्रदर्शयितुमाह—

**यमर्थमाहतुर्भिन्नौ प्रत्ययावेक एव तम्।**
**क्वचिदाह पचन्तीति धातुस्ताभ्यां विना क्वचित् ॥ २३० ॥**

तत्र पचन्तीत्यादौ भिन्नौ प्रत्ययौ शप्तिङौ समर्थं कर्तृलक्षणमाहतुस्तमे-वैकोऽप्याह, अत्ति, जुहोतीत्यादौ। क्वचिद्धातुरेव तमर्थं ताभ्यां विनैवाह, अहन् वृत्रमिन्द्र इत्यादाविति। किमेतत्पदार्थानां वास्तवत्वे प्रमाणधुरामवगाहत इति यत्किञ्चिदेतत् ॥२३०॥

शास्त्रप्रक्रियाणामप्यवास्तवत्वमुपपादयितुमाह—

**अन्वाख्यानस्मृतौ ये च प्रत्ययार्था निबन्धनम्।**
**निर्दिष्टार्थ [ष्टास्ते] प्रकृत्यर्थाः स्मृत्यन्तर उदाहृताः ॥२३१॥**

---

उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ
गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे।
सपदि पदमुदीतं केवलः प्रत्ययो यत्
तदियदिति मिमीते को हृदा पण्डितोऽपि ॥ इति।

तदेतेनाध्यर्धेन = प्रकृतकारिकार्धेनैतदुक्तं भवति पदस्य प्रकृतिभागाश्रित-मभिधेयं प्रकृत्यसद्भावे प्रत्यय एवाभिदधाति शास्त्रे लोके तु न जातु प्रकृतिप्रत्ययौ तत्र, किन्तु निर्विभागं निर्विभागार्थवदेव च तत्पदमिति। तथा विनिवृत्ते प्रत्यये प्रत्ययार्थश्च धातुभिः प्रकृतिभिरेवाभिधीयते। यथाऽहन्निति, दधि अशान इति चेति ॥ २२९ ॥

अर्थबोधाव्यवस्थयाऽपि प्रकृतिप्रत्यययोः कल्पितत्वं प्रदर्शयितुमाह—**यमर्थमिति**।

अयमर्थः—पचन्तीति = पचन्तीत्यत्र, यमर्थम् = कर्तृरूपमर्थम्, भिन्नौ प्रत्ययौ शप्तिङावाहतुः, तमर्थमेक एव प्रत्ययः क्वचित् = अत्तिजुहोतीत्यादावाह शब्लोपे, क्वचित्तु = अहन् वृत्रमिन्द्र इत्यादौ, ताभ्याम् = शप्तिङ्प्रत्ययाभ्यां विना धातुरेव तमर्थमाहेत्येवमर्थबोधाव्यवस्थया प्रकृतिप्रत्ययतदर्थाना वास्तवत्वं नोपपद्यते, तद्वद् वृत्तौ वाक्ये च पदपदार्थानामित्यवधेयमिति ॥ २३० ॥

न केवलं प्रकृतिप्रत्ययतत्तदर्थानामेवावास्तवत्वम्, किन्तु शास्त्रप्रक्रियाणामपि तदित्युपपादयितुमाह—**अन्वाख्यानस्मृताविति**।

ये च प्रत्ययार्थाः कस्याञ्चिद् अन्वाख्यानस्मृतौ = शब्दानुशासनस्मृतौ प्रत्यय-विधाने निबन्धनम् = निमित्तं निर्दिष्टास्त एव स्मृत्यन्तरे प्रकृत्यर्था निबन्धनमुदाहृता

कस्याञ्चिच्छब्दानुशासनस्मृतौ ये प्रत्ययविधाने प्रत्ययार्था निबन्धनं निर्दिष्टास्त एव स्मृत्यन्तरे प्रकृत्यर्था निबन्धनमुदाहृता इति नास्त्येव नैयत्यं पदपदार्थानाम् ॥ २३१ ॥

प्रसिद्धत्वाच्च शास्त्राभ्यासाधिवासितमानसाः शास्त्रव्यवहारेषु पद-विभागमपि प्रयुञ्जत एव। यथा उद्रमतीत्येवं प्रयोक्तव्ये उद्रमीति लाघवार्थं प्रयुञ्जते। करोषि करोमीति प्रयोक्तव्ये करीत्येतदेकदेशमात्रं प्रयुञ्जत एवेत्यभिधातुमाह—

**प्रसिद्धेरुद्रमिकरीत्येव शास्त्रेऽभिधीयते।**
**व्यवहाराय मन्यन्ते शास्त्रार्थप्रक्रिया यतः ॥२३२॥**

---

इति नास्ति नैयत्यं शास्त्रप्रक्रियाणाम्, नापि च प्रकृतिप्रत्ययतत्तदर्थानामिति। यथा केचन स्मृतिकारा लिङ्गसंख्याकारकाणि प्रकृत्यर्थ इति मन्वानास्तत्तत्प्रकृत्यर्थनिमित्तकमेव तत्तत्प्रत्ययविधानमाचक्षते।

अन्ये तु तानि प्रत्ययार्थ इति वदन्तः प्रत्ययार्थनिमित्तकमेव तत्तत्प्रत्ययविधान-मिति प्रतिजानते। एते च पक्षविकल्पास्तत्तद्व्याकरणस्मृतिप्रसिद्धाः सङ्कलय्य भाष्ये निरूपिताः। तदुक्तम्—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ इति भूषणे।

अत्र 'निर्दिष्टास्ते प्रकृत्यर्थाः" इत्येव पाठः साधुरिति पुण्यराजटीकादर्शनेन निश्चीयते। "निर्दिष्टाथप्रकृत्यर्थाः" इति साम्प्रतमुपलभ्यमानः पाठस्त्वर्थासङ्गतेरपपाठ एवेति ॥२३१॥

ननु यदि पदस्याखण्डस्य प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च बुद्ध्याऽपोद्धृतः शास्त्रकृत्कल्पित एव, न वास्तवस्तदा कथम् इक्श्तिपौ धातुनिर्देशे', (६६१) 'भुवो वुग् लुङ्लिटोः' (पा० ६।४।८८) इत्यादिशास्त्राभ्यासाधिवासितवासनाः शास्त्रव्यवहारेषु तिङन्तं पदं विभज्य तदेकदेशं प्रयुञ्जते। यथा—'उद्रमति' इति प्रयोक्तव्ये 'उद्रमीति' लाघवार्थं शास्त्रे प्रयुञ्जते। अनाचमिकमिवमीनामि' (५४०)त्यादिकञ्च यथा। अत एव 'नौलिम्पेर्वाच्यः' इत्यत्र लिम्पतेः स्थाने लाघवेन प्रयोगः लिम्पेरिति। एष प्रत्याहारन्यायेन प्रयोगो लिम्पतेराद्यन्तभागावाश्रित्य। इक्प्रत्यये तु लिम्पेरिति न सिध्यति, 'शे मुचादीनाम्' (पा० ७।१।५९) इति नुमः सार्वधातुक एव सम्भवात्। इका निर्देशस्तु गवादिषु विदेरुपसंख्यानमिति।

किञ्च लोकेऽपि 'करोति' इति प्रयोक्तव्ये 'कर्' इत्यादिमं वर्णसमुदायमन्त्यं चेकारमादाय प्रत्याहारन्यायेन करिरिति लाघवार्थं प्रयुज्यते। यथा स्तम्बकरिरिति। अस्य = स्तम्बकरिरित्यस्य कर्मकरिः, यागकरिरित्यादीनामप्युपलक्षणत्वेन तदप्यनेन न्यायेन प्रयोक्तव्यमेवेत्याशङ्का समाधातुमाह—प्रसिद्धेरिति।

ननु वस्तुभूताः शास्त्रप्रक्रियाः किमिति नाश्रिता॰ इत्याह—शास्त्रार्थेति। शास्त्रार्थप्रक्रियाः केवलमबुधानां व्युत्पादनाय। अतो न शास्त्राणि तत्त्वं वक्तुं पारयन्ति॥ २३२॥

अथाविद्यैवासत्या प्रक्रियाभेदेनोपवर्ण्यत इत्याह—

**शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।**
**अनागमविकल्पा तु स्वयं विद्योपवर्तते॥ २३३॥**

यद्येवं किमविद्योपदर्शकशास्त्रप्रक्रियासमाश्रयेण प्रेक्षापूर्वकारिणामित्याह—अनागमेति। अविद्योपमर्दने ह्युत्तरकालमागमविकल्परहिता शास्त्र-

उद्भमि, करि इति शास्त्र एवाभिधीयते, न तु लोके। प्रसिद्धेः=शास्त्र एव तथा प्रयोगस्य प्रसिद्धत्वादित्यर्थः। तथा च शास्त्रीयतादृशव्यवहारनिर्वाहायैव शास्त्रकृत्कल्पितस्तथा पदप्रविभागस्तादृशानां साधुत्वञ्च शास्त्र एव। एवञ्च स्तम्बकरिरित्यादीनां साधुत्वं शास्त्रे परिगणितमेव, न तूदाहरणरूपमिति कर्मकरिः, यागकरिरित्यादिप्रयोगाणां लोकेऽसाधुत्वमेवेति भावः। ननु शास्त्रप्रक्रियाणां वास्तवत्वं कुतो नाश्रीयत इत्याशङ्क्याह—व्यवहारायेति। यतः शास्त्रार्थप्रक्रियाः=शास्त्रसम्बन्धिनोऽर्थाः, पदसाधुत्वप्रक्रियाश्च केवलमबुधेषु व्यवहाराय=केवलमबुधानां व्युत्पादनाय, इत्यतो न शास्त्राणि तत्त्वं वक्तुं शक्नुवन्तीति॥ २३२॥

यत. सर्वेषु व्याकरणेषु स्थान्यादेशभावकल्पनाभेदाः, प्रकृतिप्रत्ययतत्तदर्थकल्पनाभेदा आगमविकारादिकल्पनाभेदा बहुशः समुपलभ्यन्ते पुरुषमतिविकल्पप्रभवाः। न केवलं व्याकरण एव प्रक्रियाभेदा उपलभ्यन्ते, किन्तर्हि वेदान्तशास्त्रेषूपनिषत्स्वपि जगत्सर्गप्रक्रियाभेदाः, समुपलभ्यन्त एव। तद्यथा क्वचिज्जगतः सक्रमा सृष्टिः श्राव्यते, क्वचिदक्रमा, क्वचिद्वियदादिका, क्वचित्तेजआदिकेति। अतो विज्ञायते—व्याकरणेष्वन्यत्र चाबुधानां व्युत्पादनरूपाय व्यवहारायाऽविद्यैवासत्या प्रक्रियाभेदेनोपवर्ण्यते। विद्या ह्येकरूपैव भवति, न तु तत्र प्रक्रियाभेदः संभवतीत्याशयेनाह पूर्वार्धेन—**शास्त्रेष्विति**।

निगदव्याख्यातम्। अत्रैवकारेण विद्या व्यवच्छिद्यते। एतदभिप्रेत्यैवोक्तम्—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ (२।२३८ इति)

अन्यत्रापि=अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यत इति।

ननु यद्येवं शास्त्रेषूपवर्णितः प्रक्रियाभेदोऽविद्यैव, तर्हि किमर्थमसावविद्योपदर्शकः शास्त्रीयः प्रक्रियाभेदः प्रेक्षापूर्वकारिभिः समाश्रीयत इत्याशङ्कायामाह—**अनागमविकल्पेति**।

प्रक्रिया प्रपञ्चशून्या विद्योपावर्तते प्रकटीभवति। एतदुक्तं भवत्यविद्यैव विद्योपाय इति ॥ २३३ ॥

ननु कथमविद्या विद्यास्वरूपविलक्षणा विद्याया उपायः स्यादित्याह—

**अनिबद्धं निमित्तेषु निरुपाख्यं फलं यथा।**
**तथा विद्याऽप्यनाख्येया शास्त्रोपायेव लक्ष्यते ॥ २३४ ॥**

नहि कारणेषु कार्यं केनचिद् व्यपदेश्येन रूपेण सम्बद्धं वक्तुं पार्यते। यत्र यथा कार्यलक्षणं फलं निमित्तेषु कारणेषूपाख्याविरहितं कारणसमन्वयविरहितमप्यद्भुतेन रूपेणोपजायते। तथैवाविद्याविलये स्वयं विद्योपावर्त-

---

अस्यार्थः—अनागमविकल्पाः = आगमः शास्त्रम्, आगम्यते = प्राप्यते गुरुपरम्परयेति कर्मणि घञा व्युत्पन्नत्वात्। शास्त्रकल्पितप्रकृतिप्रत्यया दविकल्परहिता तु स्वभावसामर्थ्यसंपन्ना विद्या पदादिविषया अविद्यामुपमर्द्य तदुत्तरकालं शास्त्रप्रक्रियाप्रपञ्चशून्या, उपवर्तते सन्निहितैव वर्तमाना भवति, पदादिप्रतिपत्तुरिति।

एतदुक्तं भवति—शास्त्रेप्रपवर्णिता प्रकृतिप्रत्ययतत्तदर्थादिकल्पनारूपाविद्यैव पदादिप्रतिपत्तिरूपविद्याप्राप्त्युपाय इति ॥ २३३ ॥

ननु कथमविद्या विद्यास्वरूपविलक्षणा विद्याविरोधिनी च विद्याया उपायः स्यात्? कार्यानुगुणस्य कार्याविरोधिनः सत्त्वादिभिः सामान्यधर्मैः कार्यसजातीयस्यैव कार्योपायत्वेनासत्याया अविद्यायाः सद्विद्योपायत्वायोगादित्याशङ्क्याह – **अनिबद्धमिति।**

**अस्यार्थः**—यथा उत्पत्तेः प्राग् निमित्तेषु—सर्वेष्वपि स्वकारणेषु, अनिबद्धम् = केनचिद् व्यपदेश्येन रूपेणाऽसम्बद्धम्, अत एव निरुपाख्यम् = उपाख्या व्यपदेशस्तद्रहितमपि, फलम् = कार्यम्, अद्भुतेन रूपेण जायत इति शेषः। तथा पदादिविद्यापि स्वप्रकाशशब्दब्रह्मरूपत्वादनाख्येया, 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इत्यादिश्रुतेः। पदादिविषयकान्तःकरणवृत्तिरूपयाऽविद्ययैव शास्त्रीयप्रकृतिप्रत्ययादिकल्पनाया अविद्यायाः प्रविलये सति स्वयमुपावर्तमाना = सन्निधीयमाना शास्त्रोपायेव = शास्त्रादुपजातेव लक्ष्यते। न तु वस्तुतस्तस्याः शास्त्रजातत्वम्, पदादेरखण्डस्फोटरूपस्य ब्रह्मरूपत्वेन तत्स्वरूपभूताया विद्याया अपि ब्रह्मविद्यावद् नित्यत्वात्।

वस्तुस्थित्या तु शास्त्राभ्यासवशात् समुपजातेनान्तःकरणवृत्तिरूपेणाविद्यात्मकेनाखण्डपदादिसाक्षात्कारेण शास्त्रप्रक्रियारूपाऽविद्याप्रविलये सत्यनुभूयमाने च विद्याऽविद्ययोः प्रविवेकेऽसौ भग्नावरणप्रदीपादिवत् स्वयंप्रकाशा नित्यसविद्रूपा विद्या प्रकाशत इति शास्त्ररूपोपायशून्याऽपि शास्त्रोपायेव लक्ष्यत इति। तदुक्तं पुण्यराजेन—

माना शास्त्रादुपजानेति नाख्यातुं शक्यते, केवलमदूरविप्रकर्षेण शास्त्राभ्यासाद्यदसावनुशील्यते ततो विद्यायां शास्त्रो[शास्त्राण्यु]पाया इव लक्ष्यन्ते, वस्तुस्थित्या तु प्रविवेकादसौ प्रकाशत इति बोद्धव्यम् ॥ २३४ ॥

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते' (२।२३३) इत्युक्तम्, ततश्च शास्त्राभ्यासानतिक्रमेणैव लोकस्य वाक्शब्दो[शब्दाद]र्थप्रतिपत्तिं समीहत इत्याह—

**अ[य]थाभ्यासं हि वागर्थे प्रतिपत्तिं समीहते ।**
**स्वभाव इव चानादिर्मिथ्याभ्यासो व्यवस्थितः ॥ २३५ ॥**

स चानादिरभ्यासो मिथ्याभूत एव स्वाभाविक इव प्रतिभातीत्याह—स्वभाव इति ॥ २३५ ॥

---

'तथैवाविद्याविलये स्वयं" इत्यादिना ।

अयं भाव—यथान्तःकरणवृत्तिरूपया विद्ययाऽज्ञानकृतावरणभङ्गे स्वयंप्रकाशा ब्रह्मविद्या प्रकाशत इति नासावुपनिपत्प्रक्रियाकार्यभूता, किन्त्वन्तःकरणवृत्तिरेव तादृशीति; तथा ब्रह्मविद्याऽविशिष्टा पदादिविद्याऽपीत्यन्तःकरणवृत्तिरूपायां विद्यायामुपायः शास्त्रप्रक्रियारूपाऽविद्या । तथा चात्र कारणे कार्यसाजात्यम् = कार्यानुगुण्यम् = कार्याविरोधित्वं चोपपन्नमिति ॥ २३४ ॥

यद्यपि 'शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते' इत्युक्तं प्राक्, तथाप्यखण्डपदादितत्त्वसाक्षात्कारात् प्राक् शास्त्रीयप्रक्रियाभेदानामविद्याकार्यत्वं नाध्यवसीयते । ततश्च शास्त्राभ्यासानतिक्रमेणैव लोकस्य वाक्शब्दार्थप्रतिपत्तिं जनयितुं समीहत इत्याह—**यथाभ्यासमिति** ।

अथाभ्यासमित्यपपाठः, अर्थासङ्गतेः । अत एवैतत्पद्यावतरणिकाया पुण्यराजेन—"शास्त्राभ्यासानतिक्रमेणैव लोकस्य वाक्शब्दादर्थप्रतिपत्तिं समीहते" इत्युक्तमिति । अत्र पद्ये हि शब्दो हेतौ । यतो लोकस्य वाग् यथाऽभ्यासम् = शास्त्राभ्यासानतिक्रमेणैव प्रकृतिप्रत्ययतदर्थज्ञानपूर्वकं शब्दोच्चारणद्वाराऽर्थे प्रतिपत्तिं जनयितुं समीहते । अतः शास्त्रेषु प्रक्रियाभेदोऽविद्याविषयोऽपि शब्दतदर्थप्रतिपत्तिहेतुत्वादभ्यसनीय एव, न तु हेयो लक्षणैकचक्षुष्कैः, लक्ष्यैकचक्षुष्काणां त्वार्षदृष्टीनां विदितवेदितव्यानां पदतदर्थतत्त्वज्ञानां नास्ति प्रक्रियाभेदैरविद्यामेव प्रतिपादयद्भिः शास्त्रैः प्रयोजनमित्येतत्पद्यपूर्वार्धार्थः । स च शास्त्राभ्यासो यद्यपि मिथ्याभूतप्रक्रियाभेदविषयकत्वाद् मिथ्याभूत एव, तथाप्यनादिगुरुपरम्पराप्राप्तत्वादनादिः स्वाभाविक इव प्रतिभातीत्याह—स्वभाव इवेति । स च मिथ्याभूतः शास्त्राभ्यासः प्रागुक्तरीत्याऽनादिरतोऽध्यारोपितत्वेऽपि देहात्मैक्याध्यासाभ्यासवत् स्वभाव इव व्यवस्थित इत्यर्थः ॥ २३५ ॥

मिथ्यात्वमेव प्रतिपादयितुमाह—

उत्प्रेक्षते सावयवं परमाणुमपण्डितः ।
तथावयविनं युक्तमन्यैरवयवैः पुनः ॥ २३६ ॥

तारतम्ययोगादपकर्षप्राप्तिं परिमाणस्यानुमाय परमाणुः स्थापितः, तस्याप्यन्यः सावयवत्वमुत्प्रेक्षत इति नास्त्येव पुरुषबुद्धीनां वास्तवत्वम्। अवयविनमप्यवयवान्तरयोगिनमुत्प्रेक्षते ॥ २३६ ॥

तथा परिमितपरिमाणं घटादिकं दृष्ट्वा लोच्यत इति लोकोऽयं विश्वप्रपञ्चरूपः परिच्छिन्नतयाऽवस्थितोऽध्यवसीयत इत्याह—

घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयते ।
समारम्भाच्च भावानामादिमद् ब्रह्म शाश्वतम् ॥ २३७ ॥

---

सर्वासां कल्पनानां पुरुषमतिविकल्पप्रभवाणां शास्त्रीयाणामशास्त्रीयाणां वा मिथ्यात्वमेव। इयाँस्तु विशेषः—शास्त्रीयाणां कल्पनानां तत्त्वप्रतिपत्त्युपायत्वम्, तत्त्वप्रतिपत्तृबुद्धिप्रभवत्वात्; अन्यासां तु न तथात्वम्, अतथात्वात्; इत्येतत् प्रतिपिपादयिषन्नाह—उत्प्रेक्षत इति।

अयमर्थः—अपण्डितः परिमाणापकर्षकाष्ठामात्मवयवविभागपरमावधि परमाणुमपि सावयवमुत्प्रेक्षते। तथा—अवयविनं पुनः=अवयविनमपि, पुनःशब्दस्यात्र शक्त्या लक्षणया वा समुच्चयार्थकत्वमिति बुधैरनुसन्धेयम्। अन्यैरवयवैः=स्वावयवस्यावयवैरित्यभिप्रायः। युक्तमुत्प्रेक्षत इति सम्बन्धः।

अयं भावः—महत्परिमाणस्य नगनगरगिरिवियदादिषूत्कर्षतारतम्ययोगवत् तस्यैव परमाणुष्वपकर्षतारतम्यसमाप्तिमनुमाय परमाणुः शास्त्रेषु स्थापितः, कश्चिद् पण्डितस्तु तस्यापि सावयवत्वमुत्प्रेक्षत इति नास्त्येव पुरुषबुद्धीना वास्तवत्वम्, एवमवयविनमपि स्वावयवतदवयवधारायोगिनमुत्प्रेक्षत इति ॥ २३६ ॥

एवं परिमितपरिमाणं घटादिकं दृष्ट्वा लोकोऽयं विश्वप्रपञ्चरूपो लोच्यमानत्वेन=दृश्यमानत्वेन हेतुना परिच्छिन्नतयाऽवस्थितोऽनुमीयतेऽपरिच्छिन्नमायाकार्यत्वेनापरिच्छिन्नोऽपि, तथा घटादीनां भावानामुत्पत्तिदर्शनाद् ब्रह्म शाश्वतमपि भावत्वसाम्येन आदिमदित्युत्प्रेक्षत इत्याह—घटादिदर्शनादिति।

अयमर्थः—लोकः=लोच्यत इति लोकः, 'लोचृ दर्शने' इति धातोः कर्मणि घञ्। दृश्यो विश्वप्रपञ्चः, घटादिदर्शनात्=घटादिरूपपरिच्छिन्नपदार्थदर्शनात् परिच्छिन्नोऽवसीयते दृश्यत्वेन हेतुनाऽनुमीयत इत्यर्थः। भावानां घटादीनां समारम्भात्=उत्पादाच्च, उत्पादं दृष्ट्वा, भावत्वेनैव हेतुना शाश्वतमपि ब्रह्म आदिमदित्यवसीयत इति।

**उपायाः शिक्षमाणानां बालानामपलापनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ २३८ ॥**

समारम्भादुत्पादाच्च भावानामिदं शाश्वतमपि ब्रह्मादिमदिति लोके **व्यपदिश्यते** । तस्मादुपायाः शास्त्राणि जिज्ञासूनामबुधानामपलापनाः **प्रतारणा एव** बोद्धव्याः । यस्मात्तत्रासत्यरूपे शास्त्रप्रक्रियामात्रेऽर्थे स्थित्वा अविद्या-मुत्सृज्य सत्यं विद्यास्वरूपं ब्रह्म समीहते प्राप्नोतीति यावत् ॥ २३८ ॥

इदानीं पुनरपि पदपदार्थनिराकरणं प्रतिपादयितुमाह—

**अन्यथा प्रतिपद्यार्थं पदग्रहणपूर्वकम् ।**
**पुनर्वाक्ये तमेवार्थमन्यथा प्रतिपद्यते ॥२३९॥**

---

यत्तु लोके व्यपदिश्यत इत्युक्तं पुण्यराजेन, तत्तु फलितार्थकथनम्; अवसीयत इत्यस्यैव पूर्वोत्तरवाक्याभ्यां सम्बन्धसम्भवे व्यपदिश्यत इति क्रियान्तराध्याहारा-सम्भवात् । मुख्यार्थे बाधाभावे लक्षणाया असम्भवाच्चेति ॥ २३७ ॥

एवं स्थिते उपक्रान्तमुपसंहरति—**उपाया** इति ।

अयमर्थः—तस्मात् प्रागुक्तरीत्योपायाः शास्त्राणि, शिक्षमाणानां बालानाम् = जिज्ञासूनामबुधानाम्, अपलापनाः = प्रतारणा एव बोद्धव्याः । यस्मात्तत्रासत्यरूपे शास्त्रप्रक्रियामात्रेऽर्थे प्राक् स्थित्वाऽविद्यामुत्सृज्य सत्यं विद्यास्वरूपं ब्रह्म समीहते = उपायसमीहया = उपायविषयकप्रयत्नेन प्राप्नोति । संपूर्वकस्य ईह धातोः समीहाकरणि-कायां प्राप्तौ लक्षणेति ॥ **२३८** ॥

इदानीं पुनरपि वाक्यवाक्यार्थयोरखण्डत्वं प्रतिपिपादयिषन् तत्र पदपदार्थ-निराकरणं प्रतिपादयति—**अन्यथेति** ।

अयमर्थः—कस्मिंश्चिद् वाक्ये पदग्रहणपूर्वकं शक्त्याऽर्थमन्यथा प्रतिपद्य = विधेयतया निषेध्यतया वा प्रतिपद्य, पुनस्तस्मिन्नेव वाक्ये तमेवार्थं लक्षणया व्यञ्जनया वाऽन्यथा प्रतिपद्यते = विधेयतया प्रतिपन्नं निषेध्यतया प्रतिपद्यते, निषेध्यतया प्रतिपन्नं च विधेयतया प्रतिपद्यत इति । तत्र शक्त्याऽन्यथा प्रतिपन्नस्य अर्थस्य लक्षणयाऽन्यथा प्रतिपत्तिर्यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता भवता प्रथिता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम् ॥

अत्र शक्त्या पदपदार्थग्रहणपूर्वकं विधेयत्वेन वाक्यार्थः प्रतिपन्नः, निषेधे विपरीत-लक्षणया तु स एव वाक्यार्थो निषेध्यत्वेनान्यथा प्रतिपन्नः । पदग्रहणपूर्वकं शक्त्याऽन्यथा प्रतिपन्नस्य = विधेयत्वेन प्रतिपन्नस्य वाक्यार्थस्य व्यञ्जनयाऽन्यथा प्रतिपत्तिः = निषेध्य-त्वेन प्रतिपत्तिः । यथा—

यदि च सत्यभूताः पदार्थाः स्युः, तदा पदार्थप्रतिपत्त्यवसरे सर्वमन्यथा प्रतिपद्यते। वाक्यार्थावसरे तत्परित्यागेनान्यथैव प्रतिपत्तिर्दृश्यमाना नोपपद्यते। एतच्चाग्रे स्तुतिनिन्देत्यादिना व्यक्तीकरिष्यति ॥ २३९ ॥

यथा च पदग्रहणपूर्वकमादौ पदार्थः प्रतिपन्नः, पश्चाद्वाक्यार्थप्रतिपत्त्यवसरे तदर्थपरित्यागेनान्य एवार्थ उपजायत इति प्रतिपादयितुमाह—

**उपात्ता बहवोऽप्यर्था येष्वन्ते प्रतिषेधनम्।**
**क्रियते ते निवर्तन्ते तस्मात् तांस्तत्र नाश्रयेत् ॥ २४० ॥**

इहाद्य धवखदिरपलाशाश्छेदनीया नेत्यत्र पदार्थप्रतिभाससमयेऽन्य एव

---

भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥ इति।

अत्र शक्त्या पदपदार्थग्रहणपूर्वकं तत्तत्साधनावच्छिन्नं भ्रमणं वाक्यार्थो विधेयत्वेन प्रतीयते, व्यञ्जनया तु तदेव निषेध्यत्वेन प्रतीयत इति।

एवं निषेध्यत्वेन प्राक् प्रतीतस्य विधेयत्वेन पुनः प्रतीतिरित्यस्योदाहरणं यथा—

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ इति।

अत्र शक्त्या निषेध्यत्वेन प्रतीतं साधनावच्छिन्नं गमनं व्यञ्जनया विधेयत्वेन प्रतीयते। इदञ्च

वाक्यार्थान्यथाप्रतिपत्तेर्दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं काव्यविद्भिर्निरूपितम्।

इत्यलं प्रसक्तानुप्रसक्त्या।

प्रकृतहरिकारिकाया निगूढोऽभिसन्धिस्तु—यदि वाक्यवाक्यार्थयोः सत्यभूताः पदपदार्थाः स्युस्तदा पदार्थप्रतिपत्त्यवसरे सर्वं पदार्थं परस्परान्वितमन्यथा प्रतिपद्य पुनर्वाक्यार्थबोधावसरे तत्परित्यागेनान्यथैव वाक्यार्थप्रतिपत्तिर्दृश्यमाना नोपपद्यते।

एतच्चाग्रे—'स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः' ( वा० प० का० २।२४९ ) इत्यादिना प्रपञ्चयिष्यत इति ॥ २३९ ॥

यथा च पूर्वं नञ्पदप्रयोगाभावे पदग्रहणपूर्वकमादौ यः पदार्थः प्रतिपन्नस्तत्समन्वयेन च यो वाक्यार्थः प्रतिपन्नः, पश्चान्नञ्पदप्रयोगे पुनर्वाक्यार्थान्तरप्रतिपत्त्यवसरे तत्पदार्थतद्वाक्यार्थपरित्यागेन ततोऽन्य एव वाक्यार्थ उपजायत इति प्रतिपादयितुमाह—उपात्ता इति।

धवादिच्छेदनलक्षणोऽर्थ उपादीयते, पश्चान्निषेधेन तन्निवर्तनं क्रियते, न चैतद्युक्तम्; उपात्तस्य त्यागे शब्दार्थसंबन्धस्यानित्यत्वप्राप्तेरिति तेषां तत्रानाश्रयणमेव युक्तमित्याह—तस्मात्तांस्तत्र नाश्रयेदिति ॥ २४० ॥

अतो वाक्यवाक्यार्थयोरेव सत्यत्वमत्र युक्तमभ्युपगन्तुमित्याह—

**वृक्षो नास्तीति वाक्यं च विशिष्टाभावलक्षणम् ।**
**नार्थेन बुद्धौ सम्बन्धो निवृत्तेरवतिष्ठते ॥ २४१ ॥**

एतद्वाक्यमेवाखण्डं विशिष्टाभावलक्षणमिति वृक्षाभावावगतिरूपस्य वाक्यार्थस्य लक्षणं प्रत्यायकमिष्यते । यदि पुनः पदार्थोऽत्र व्यतिरिक्तोऽभ्युपगम्यते, तदा वृक्षलक्षणे पदार्थे व्यवस्थिते नञ्सम्बन्धस्तस्य नोपपद्यते, तस्य हि स्वकारणाल्लब्धात्मलाभस्य न जातनिवृत्तिः कर्तुं शक्यते । अथासत एव नञा सम्बन्धस्तदाऽसत्त्वादेव निवृत्तोऽसाविति नञो वैयर्थ्यम् । यदुच्यते—

---

अयमर्थः—ये नञ्प्रयोगात् पूर्वमुपात्तैर्बहुभिः पदैर्बहवोऽप्यर्था उपात्ताः, येष्वन्ते उपात्तेन नञ्पदेन प्रतिषेधनं क्रियते, ते सर्वेऽपि पदार्था नञर्थघटिते वाक्यार्थे जायमाने निवर्तन्ते, तस्मात्तत्र निवर्तमानत्वात् तान् पदार्थान् तत्र नञ्रहितेऽपि वाक्येनाश्रयेत् । उपात्तस्य त्यागे शब्दार्थसम्बन्धस्यानित्यत्वप्रसङ्गादिति । यथा—इहाद्य धवखदिरपलाशाश्छेदनीया नेत्यत्र पदार्थप्रतिभाससमयेऽन्य एव धवादिच्छेदनलक्षणोऽर्थ उपादीयते, पश्चान्निषेधेन तन्निवर्तनं क्रियते, न चैतद्युक्तम्, उपात्तस्य त्यागे शब्दार्थसम्बन्धस्यानित्यत्वप्रसङ्गादिति तेषां तत्रानाश्रयणमेव युक्तमिति ॥ २४० ॥

अतो नञ्समभिव्याहारेऽखण्डयोर्वाक्यवाक्यार्थयोरेव सत्यत्वमभ्युपगन्तुं युक्तं तद्दृष्टान्तेन च तत्समभिव्याहाराभावेऽपीत्याह—वृक्षो नास्तीति ।

अयमर्थः—नञाऽसमभिव्याहृतं वृक्षोऽस्तीत्यादिवाक्यं तदर्थो वा सखण्डमखण्डं वेति संशयो भवतु नाम । नञ्समभिव्याहृतं वृक्षो नास्तीत्यादिवाक्यञ्च = वाक्यं तु, चशब्दस्त्वर्थे । विशिष्टाभावलक्षणम् = विशिष्टो विलक्षणोऽखण्डो योऽभावस्तस्यैव लक्षणम् = ज्ञापकम् । लक्ष्यते ज्ञाप्यतेऽनेनेति करणे ल्युट् । अबभक्ष इतिवत् समासेऽपि सावधारणमिदम् । तत्र हेतुमाहोत्तरार्धेन—नार्थेनेति । नञ्समभिव्याहारे वाक्यस्य सखण्डार्थवाचकत्वे हि अर्थेन निषेध्येन सताऽसता वा निवृत्तेर्निषेधस्य सम्बन्धो बुद्धौ नावतिष्ठते, न बुद्ध्यारूढो भवति असम्भवात्; सतोऽर्थस्य निषेधायोगात् । असतश्च तस्य नित्यनिवृत्तत्वादिति ।

अयं भावः—वृक्षो नास्तीति वाक्यमखण्डमेव, अखण्डस्य वृक्षाभावावगतिरूपस्य वाक्यार्थस्य लक्षणं प्रत्यायकमिष्यते । तथा च नात्र वृक्षाभावो वाक्यार्थ इति सखण्डत्वाशङ्का, किन्तु वृक्षाभावावगतिः स इति बौद्धार्थवृक्षाभावाकारावगमस्य वाक्यार्थत्वेऽखण्डत्वमेव तस्येति । यदि तु तत्तत्पदार्थघटितः सखण्डोऽत्र वाक्यार्थोऽभ्युपगम्यते, तदा

"सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥" इति ।

तस्मादर्थस्य स्वत एव निवृत्तेस्तेन सह निवृत्तिवाचकस्य सम्बन्धो न विद्यते ॥ २४१ ॥

अथोच्यते विच्छेदेन पदार्थविषयास्तिबुद्धिरवधृता सा नञा निवार्यत इत्याह—

**विच्छेदप्रतिपत्तौ च यद्यस्तीत्यवधार्यते ।**
**अशब्दवाच्या सा बुद्धिर्निवर्तेत स्थिता कथम् ॥ २४२ ॥**

एवं च बुद्धावपि नञ्सम्बन्धो नोपपद्यत इत्याह—अशब्दवाच्येति । नञा शब्दवाच्योऽर्थः प्रतिषिध्यते न च बुद्धिः शब्दवाच्या । शब्देन हि बाह्योऽर्थोऽभिधीयते, बुद्धिस्त्वर्थालम्बना [ न ] शब्दाभिधेयत्वमर्हतीत्यतः कथं नञा सा प्रतिषिध्यते ॥ २४२ ॥

---

स्वकारणाल्लब्धसत्ताकेन व्यवस्थितेन वृक्षपदार्थेन नञर्थस्य निषेधस्य सम्बन्धो नोपपद्यते । नहि जातस्य सतो निवृत्तिः कर्तुं शक्यते । अथ बुद्धौ सत्त्वेऽपि बहिरसत एव वृक्षपदार्थस्य नञर्थेन सम्बन्धस्तदाऽसत्त्वादेव निवृत्तोऽभावविति नञो वैयर्थ्यम् । तदुक्तम्—

"सतां च न" इत्यादितः ।

तस्मादर्थस्य स्वत एव निवृत्तेस्तेन सह निवृत्तिवाचकस्य नञः सम्बन्धो नोपपद्यत इति विशिष्टाभावावगतिरूपोऽखण्ड एव वाक्यार्थो वृक्षो नास्तीत्यखण्डस्य वाक्यस्येति वाक्यत्व-वाक्यार्थत्वयोरविशेषाद् वृक्षोऽस्तीत्यादावपि तद्दृष्टान्तेनाखण्डमेव वाक्यमखण्डस्यैव वाक्यार्थस्य विशिष्टार्थप्रतिभारूपस्य प्रत्यायकमिति स्थितम् ॥ २४१ ॥

यद्युच्यते नञा प्रतिषेधबुद्धिजननात् प्राग् वृक्षो नास्तीत्यत्र वाक्ये पदपदार्थविच्छेदं कृत्वा वृक्षपदार्थविषयाऽस्तित्वबुद्धिरवधार्यते, सैव बुद्धिर्नञ्सम्बन्धे सति नञा निवार्यते न तु वृक्षास्तित्वं प्रतिषिध्यत इति । एवमपि तस्या बुद्धेरशब्दार्थत्वेन नञ्शब्दार्थप्रतिषेधेन साकं सम्बन्धो नोपपद्यत इति मनसि निधायाह—**विच्छेदप्रतिपत्ताविति** ।

अयमर्थः—यदि च = यदि तु, चशब्दस्त्वर्थे । विच्छेदप्रतिपत्तौ = पदपदार्थविच्छेद-ज्ञाने सति, अस्तीत्यवधार्यते वृक्षास्तित्वमवधार्यत इत्युच्यते, तदा सा बुद्धिः प्रकृतेऽशब्दवाच्या = शब्दवृत्तेरगोचरीभूतेति हेतोः, स्थिता सतीति हेतोश्च कथं निवर्तेत, तदर्थविषयकशाब्दबोधं प्रति वृत्त्या तत्पदजन्यतदर्थविषयकोपस्थितेर्हेतुत्वाभ्युपगमेन— शब्दस्यैव पदार्थद्वयस्य परस्परं सम्बन्धात् । सतो भावस्य निषेधायोगाच्चेति । तदुक्तमस्य पद्यस्योत्तरार्धं व्याचक्षाणेन पुण्यराजेन—"नञा शब्दवाच्योऽर्थः प्रतिषिध्यते, न च बुद्धिः शब्दवाच्या, शब्देन हि बाह्योऽर्थोऽभिधीयते, बुद्धिस्त्वर्थालम्बना न शब्दाभिधेयत्वमर्हतीत्यतः कथं नञा सा प्रतिषिध्यते" इति ॥ २४२ ॥

अथ बुद्धिर्न निवर्तते; अपि तु तस्या नञा मिथ्यात्वमावेद्यत इत्याह---

**अथ यज्ज्ञानमुत्पन्नं तन्मिथ्येति नञा कृतम् ।**
**नञो व्यापारभेदेऽस्मिन्नभावावगतिः कथम् ॥ २४३ ॥**

एतदपि निराकर्तुमाह—नञ इति। नञ एवमात्मके व्यापारविशेषे बुद्धिनिषेधात्मकेऽङ्गीक्रियमाणे सति वृक्षस्याभावावगतिर्न स्यात् किल, पर्युदासे सदृशप्रतिपत्तिविधायिनि नञ्वाच्ये एतदुपपद्यते। प्रसज्यप्रतिषेधे तु नैतदुपपद्यते, वृक्षाभावो हि तत्र वाक्यार्थ इति ॥ २४३ ॥

अथ निवर्त्यमान एवास्याधारोऽभिधेयः कल्प्यते, तत्राप्याह—

**निराधारप्रवृत्तौ च प्राक्प्रवृत्तिर्नञो भवेत् ।**
**अथाधारः स एवास्य नियमार्था श्रुतिर्भवेत् ॥ २४४ ॥**

---

यदि तु नञा न वृक्षास्तित्वविषया बुद्धिर्निवर्त्यते, किन्तु तस्या नञा मिथ्यात्वमेवावेद्यत इत्युच्यते, तदापि वृक्षस्याभावावगतिर्न ततः स्यादित्येतदाह—**अथ यज्ज्ञानमिति**।

अयमर्थः—अथ = यदि, यज्ज्ञानमुत्पन्नं वृक्षास्तित्वविषयकं तन्मिथ्येति ज्ञानं नञा कृतमुत्पादितमित्युच्यते, एवमप्यस्मिन् = पूर्वज्ञानस्य मिथ्यात्वप्रवेदनलक्षणे नञो व्यापारभेदे = व्यापारविशेषेऽभ्युपगम्यमाने वृक्षो नास्तीति वाक्याद् वृक्षस्याभावावगतिः कथं स्यादिति। सदृशप्रतिपत्तिविधायिनि पर्युदासे हि नञ्वाच्ये वृक्षप्रवेदनस्य मिथ्यात्वावेदनमुपपद्यते। वृक्षो नायम्, किन्तु वृक्षसदृशः; अतो वृक्षज्ञानं मिथ्येति। नञः प्रसज्यप्रतिषेधार्थकत्वे तु नैतदुपपद्यते, वृक्षाभावो हि तत्र वाक्यार्थ इति।

यत्तु—'अस्मिन् व्यापारभेदे' इत्यस्य "नञ एवमात्मके व्यापारविशेषे बुद्धिनिषेधात्मकेऽङ्गीक्रियमाणे सति" इति व्याख्यानं कृतं पुण्यराजेन, तद्विरुद्धम्; 'तन्मिथ्येति नञा कृतम्" इति पूर्वार्धवाक्येनेति स्पष्टमेवेति ॥ २४३ ॥

यदि निवर्त्यमान एवाधारः = निवृत्तिरूपस्य निषेधस्य आधारः प्रतियोगी वृक्षादिर्नञोऽभिधेयः, तथा च तदानीं प्रतियोगिनो निवर्त्यमानस्य वृक्षादेर्बौद्धपदार्थस्य सत्त्वासत्त्वाभ्यां विकल्पासंभवे उभयविलक्षणत्वसंभवेन 'सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते' इति न्यायानवसर इत्युच्यते, तदा आधारमनपेक्ष्यैव नञ् प्रवर्तत इत्युक्तं स्यात्। तदा च प्रागेव प्रतियोगिपदात् नञः प्रयोगः स्यात् नोत्तरत्र। दृश्यते च सर्वत्र प्रतियोगिपदोत्तरमेव नञः स्वारसिकः प्रयोगः।

किञ्च, प्रतिषेद्धुमिष्टे सर्वत्र नेत्येवाभिदध्युः, न तु वृक्षादिपदं प्रतियोगिवाचकमिति। यदि तु प्रतियोगिनियमार्थं प्रतियोगिवाचकपदप्रयोगो 'न वृक्षः' इति, वृक्षस्यैव निषेधो न घटादेरित्युच्यते? तदापि नियमार्थः प्रतियोगिवाचकपदप्रयोगः समाश्रितः स्यात्, प्रतियोगि-

आधारमनपेक्ष्यैव नञ् प्रवर्तेत इति यद्युच्येत तदा नञः प्रागेव प्रवृत्तिः प्रयोगः स्यात्। प्रतिषेद्धारः शिष्टाः सर्वत्र नेत्येवाभिदध्युरिति। अथ विषयनियमार्थमाधारप्रयोगो न वृक्ष इति वृक्षस्य निषेधो न घटादेरिति प्रतिपादयितुमाह—अथाधार इति। अत्रापि दूषणमभिधातुमाह - नियमार्थेति। नञैव तदर्थनिषेधे जाते पुनरसौ तच्छ्रुतिर्नियमाय वा स्यात्॥ २४४॥

निपाता द्योतकाः केचिदित्यभिप्रायेणाह

**नियमद्योतनार्था वा अनुवादोऽथवा भवेत्।**
**कश्चिदेवार्थवांस्तत्र शब्दः शेषास्त्वनर्थकाः॥२४५॥**

---

वाचकपदस्य स्वार्थं परित्यज्य लक्षणया स्वेतरार्थनिषेधपरत्वस्यानौचित्यादित्येतत्सर्वं मनसि निधायाह—**निराधारप्रवृत्तौ चेति।**

अत्र नञ इति पदमनुवृत्त्या निराधारप्रवृत्ताविति, प्राक्प्रवृत्तिरिति च पदद्वयेन सम्बध्यते। चशब्दस्त्वर्थे। तथा च नञो निराधारप्रवृत्तौ तु नञः प्रतियोगिवाचकपदात् प्राक्प्रवृत्तिर्भवेदिति योजना।

**अयमर्थः**—निर्गत आधारः=आधारापेक्षा यस्याः सा निराधारा प्रवृत्तिस्तस्यां निराधारप्रवृत्तौ, च=तु, नञः स्वीक्रियमाणायां नञः प्रतियोगिवाचकपदात् प्राक्प्रवृत्तिः प्रयोगो भवेत्। न चैतद् दृश्यते, प्रत्युत विपरीतं तदुत्तरं तत्पदप्रयोगो दृश्यत इति। अथ यद्याधारः, प्रतियोगी, स एवास्य, सः=निषेधः, अस्यैव=प्रतियोगिन एव, न तु तदितरस्य पदार्थस्येति नियम्यते, तदाऽपि श्रुतिः=प्रतियोगिश्रुतिः, प्रतियोगिवाचकशब्दप्रयोग इति यावत्, नियमार्था भवेत्। नञैव तदर्थनिषेधे जाते पुनरसौ तच्छ्रुतिर्नियमायैव स्यादिति। तथा च प्रतियोगिवाचकशब्दप्रयोगस्य नियमार्थत्वाश्रयणमेव प्रागुक्तरीत्या दूषणमिति भावः॥ २४४॥

**य**दि तु 'निपाता द्योतकाः केचित्' (२।१९२) इति मतमाश्रीयते, तदा वृक्षो नेत्यादौ प्रतियोगिवाचकपदस्यैव निवर्त्यमानप्रतियोगिवाचकत्वम्, नञो निपातस्य तु तद्द्योतकत्वमिति। एवञ्च द्योतकस्य नञो वैयर्थ्यम्। न च तदर्थद्योतकनञ्पदसमभिव्याहाराभावे प्रतियोगिपदं न निवर्त्यमानप्रतियोगिवाचकत्वेन व्यवस्थाप्येतेति नञस्तदर्थद्योतकतया सार्थक्यमिति वाच्यम्; संयोगादीनां शब्दार्थावच्छेदकानामन्यतमस्य तत्र तत्र संभविन एव प्रतियोगिवाचकपदशक्तिनियामकत्वसंभवात्। एवञ्च नञो वैयर्थ्ये प्रतियोगिनिषेधनियमद्योतनार्थत्वमेव तस्य स्यात्, नियमस्यानौचित्यञ्च प्रागेव दर्शितमितीदं सर्वं मनसि निधायाह—**नियमद्योतनार्था वेति।**

अत्र विशेष्यवाचकं श्रुतिपदं पूर्ववाक्यादनुषज्यते। पूर्वत्र श्रुतिपदस्य प्रतियोगि-

अथवाऽनुक्रम्य विस्पष्टार्थं पुनर्वचनमनुवादः स्यादित्याह—अनुवाद इति। सर्वथैवमानर्थक्यमेव पदार्थानां स्यादित्याह—कश्चिदिति। न ब्राह्मण इत्यादौ नञ एवार्थवत्त्वमित्यन्येषामानर्थक्यं स्यात्, न चैतदुपपन्नम्। तस्माद् वृक्षो नास्तीत्यस्मादखण्डादखण्ड एव विशिष्टाभावरूपो वाक्यार्थः, न पुनस्तत्त्वतः पृथगेव पदार्थः सत्यभूतः कश्चिदुपपन्नः॥ २४५॥

---

वाचकपदमर्थः, श्रूयत इति व्युत्पत्तिमाश्रित्य बाहुलकात् कर्मणि क्तिनः स्वीकारात्। अत्र तु श्रुतिपदस्य नञ्पदमर्थः, श्रूयमाणत्वाविशेषात्।

अथवैकेन पदेन प्रतियोगिवाचकेन नञा वा निवर्त्यमानप्रतियोगिबोधमनुक्रम्य उपक्रमे संगाद्य पुनरन्यतरस्य विस्पष्टार्थं वचनमनुवादः स्यात्; सोऽप्यनुचितः, पुनरुक्तिदोषात्। न च विस्पष्टप्रतिपत्तिरूपप्रयोजनसत्त्वेन पुनरुक्तिदोषः। तदुक्तम्—'क्वचिद्दोषो गुणायते' इति। तथाहि—दृष्टा सुबहुशः पुनरुक्तिर्वाक्यचारुतामादधाना—

कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः॥ इत्यादौ।

अनन्वयालङ्कारोदाहरणे तु सर्वत्रैव पुनरुक्तिरलङ्कारत्वमेव धत्ते—

गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव॥ इत्यादिष्विति।

कथमत्र पुनरुक्तेर्दोषत्वमुच्यत इति वाच्यम्, प्रयोजनसत्त्वेन स्वाभाविकस्य दोषत्वस्याऽनपगमात्। नहि कीटानुविद्धरत्नादीनां प्रयोजनमस्तीति कीटानुवेधादयो न तस्य दोषाः। किञ्च, दुस्त्यजा प्रकृतिरिति दोषाणां दोषत्वमेव, न तु तत्कदाचिदौत्यग्नेरिवौष्ण्यम्। न नैवं कथं नित्यदोषत्वानित्यदोषत्वविभागाभ्युपगम आलङ्कारिकाणामिति वाच्यम्; दोषत्वसाम्येऽप्युद्वेजकत्वानुद्वेजकत्वाभ्यां भेदादित्यभिप्रेत्याह—अनुवादोऽथवा भवेदिति।

अथवा पुनः श्रुतिरनुवादो भवेदिति योजना। एवं पुनः श्रुतेरनुवादो भवेदिति योजना। एवं पुनः श्रुतेर्नियमार्थत्वे नियमद्योतनार्थत्वेऽनुवादत्वे वा प्रागुक्तरीत्या नञादिपदार्थानामन्यतमस्य वैयर्थ्यरूपमानर्थक्यं स्यादेव वाक्यार्थसखण्डत्ववादिन इत्युपसंहरन्नाह—कश्चिदेवेति।

अयमर्थः—तत्र=नञ्घटिते पदकदम्बकरूपे वाक्ये 'वृक्षो नास्ति' इत्यादौ कश्चिदेवार्थवान् सप्रयोजनः शब्दो नञादीनामन्यतमः, शेषास्तु=तदतिरिक्तास्तु तद्वाक्यघटका अनर्थकाः=अप्रयोजना इति, न चैतदुपपन्नम्। तस्मात् 'वृक्षो नास्ति' इत्यादिरूपादखण्डाद् वाक्यादखण्ड एव विशिष्टाभावरूपः=तत्तत्पदार्थोपहिताभावरूपः, अत्रोपाधिः परिचायकोऽभिप्रेतः वाक्यार्थः प्रतीयते, न तु तत्र वस्तुतः पृथगेव पदार्थः सत्यभूतः कश्चिदुपपन्नोऽस्तीति सिद्धम्॥ २४५॥

अथ 'अन्यथा प्रतिपद्यार्थम्' ( २३९ कारिका ) इत्येतद् व्याख्यातुमाह—

**विरुद्धं चाभिसम्बन्धमुदहार्यादिभिः कृतम् ।**
**वाक्ये समाप्ते वाक्यार्थमन्यथा प्रतिपद्यते ॥२४६॥**

उदहार्यादिभिः पदैर्विरुद्धपदार्थप्रतिभासावसरेऽभिसम्बन्धमवगच्छति । यथा उदहारि—"भगिनि ! या त्वं शिरसानडुवाहं वहसि सा त्वं प्राचीनं कुम्भमभिधावन्तमद्राक्षीः" इत्यत्रोत्तरकालं वाक्यार्थप्रतिपत्त्यवसरेऽन्यथैवार्थप्रतिपत्तिरिति न पदार्थः कश्चिदुपपन्नः ॥२४६॥

एतदेवान्यथा प्रतिपादयितुमाह—

**स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः ।**
**पदानां प्रविभागेन यादृशः परिकल्प्यते ॥२४७॥**

स्तुतिप्रधानं वाक्यं किञ्चिद्भवति यत्र पदार्थो निन्दा—

'इन्दोर्लक्ष्म स्मरविजयिनः कण्ठमूलं मुरारि-
र्दिग्नागानां मदमलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक ! श्यामलिम्नाऽनुलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥"

---

अथ 'अन्यथा प्रतिपद्यार्थं पदग्रहणपूर्वकम्' ( २।२३६ ) इत्येतत्प्रसङ्गागतं सिंहावलोकितकेन व्याख्यातुमुपक्रमते—**विरुद्धञ्चेति** ।

अयं चकारो भिन्नक्रमः 'वाक्ये समाप्ते' इत्यनन्तरं द्रष्टव्यः, त्वर्थकश्च ।

अयमर्थः—उदहारि—"भगिनि या त्वं शिरसाऽनड्वाहं वहसि सा त्वं प्राचीनं कुम्भमभिधावन्तमद्राक्षीः" इत्यत्र वाक्यसमाप्तेः प्राक् पदार्थप्रतिभासावसरे विरुद्धं पदार्थानामभिसम्बन्धमवगच्छतीत्यध्याहार्यम् । वाक्ये समाप्ते च तु, वाक्यार्थप्रतिपत्त्यवसरे पदार्थाना योग्यताबलादन्यथा सम्बन्धं कृत्वाऽन्यथा वाक्यार्थं प्रतिपद्यत इति नास्ति वाक्यार्थे पदार्थः कश्चिद् वस्तुभूत उपपन्नः । पदार्थानामभिसम्बन्धस्य भेदे उभयत्रापि पदार्थानामैक्यस्य सत्त्वेऽपि वाक्यार्थभेदस्य प्रमीयमाणत्वादिति ॥ २४६ ॥

वाक्यार्थे पदार्थानामवास्तवत्वमेव प्रकारान्तरेण प्रतिपादयितुमाह—**स्तुतिनिन्दाप्रधानेष्विति** ।

अत्र 'वाक्येषु' इति पाठो युक्तः, 'वाच्येषु' इति त्वपपाठः । "स्तुतिप्रधानं वाक्यं किञ्चिद् भवति यत्र पदार्थो निन्दा"इत्यादिपुण्यराजीयव्याख्यादर्शनेनापीदमेवावसीयते।

अयमर्थः—स्तुतिनिन्दाप्रधानेषु = स्तुतिप्रधानेषु निन्दाप्रधानेषु च वाक्येषु । पदानां प्रविभागेण । अत्र 'कुमति च' इति णत्वम् । यादृशोऽर्थः, स्तुतिप्रधानेषु निन्दारूपः, निन्दाप्रधानेषु च स्तुतिरूपः, परिकल्प्यते, तादृशोऽर्थो वाक्यार्थो न भवति; किन्तु स्तुतिप्रधानेषु

अत्र पदार्थप्रतिभासवेलायां निन्दावगम्यते – यस्माद्धे राजन्नलीकमेवोद्धतां कन्धरां वहसि, तथाहि न सर्वत्र व्यापि त्वदीयं यशः; यदि हि तथा स्यात्, तदा किमित्यद्यापि प्रसिद्धा एव शशलक्ष्मादयः पदार्थाः श्यामलतया भासन्ते ? यशसो ह्यवदाततया तदीयस्य व्यापितायां तद्व्याप्तास्ते श्वेता भवेयुरेवेति पदार्थोऽत्र निन्दा, स्तुतिस्तु वाक्यार्थः। तथा च राजन् सर्वमेव जगद्यशसा त्वदीयेन धवलितं केवलं स्वभावस्य दुस्त्यजत्वाद्यदि परं चत्वार्यैव वस्तूनि त्रिजगति श्यामगुणयुक्तान्यन्यत्सर्वमेव त्वदीयेन यशसा व्याप्तमिति सर्वत्र त्रिलोक्यामपि प्रथितप्रतापस्त्वमिति वाक्यार्थः। निन्दाप्रधाने स्तुतिः पदार्थो यथा—

"हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥"

अत्र बोधिसत्त्वचरितस्यापि त्वदीयेनानेन तोयनिधे ! परार्थसम्पादनषाड्-[साद्]गुण्येन पराजय इति पदेभ्यः स्तुतिरवगम्यते, वाक्यार्थस्तु निरतिशय-गर्हापात्रत्वमुदधेरवेक्ष्यत इति। ततश्च पदपदार्थानां वास्तवत्वे कथमेतत्सङ्गच्छत इति ॥२४७॥

---

स्तुतिरेव, निन्दाप्रधानेषु च निन्दैव वाक्यार्थ इति। तथाहि—किञ्चिद् वाक्यं स्तुतिप्रधानं भवति, यत्र पदार्थप्रतिभासावसरे निन्दारूपोऽर्थः प्रतीयते। तद्यथा—

इन्दोर्लक्ष्म स्मरविजयिनः इत्यादि।

अत्र पदार्थप्रतिभासवेलाया निन्दाऽवगम्यते। तथाहि—हे राजन् अलीकमेव यशोगर्वं वहसि, अद्यापि न सर्वव्यापि त्वदीयं यशः। तथाहि—अद्यापि इन्दुलक्ष्मादयः श्यामलिम्नाऽनुलिप्ता एव दृश्यन्ते। वद धवलितं किं यशोभिस्त्वदीयैरिति। वाक्यार्थस्तु स्तुतिः। तथा हि—हे राजन् ! सर्वमेव जगत् त्वदीयेन यशसा धवलितम्। केवलं स्वभावस्य दुस्त्यजत्वात् चत्वार्यैव वस्तूनि त्रिजगति श्यामगुणयुक्तानि, अन्यत् सर्वमेव त्वद्यशोभिर्धवलितमिति त्रिलोक्यां प्रथितप्रतापस्त्वमिति स्तुतिरूपो वाक्यार्थः। किञ्चिद् वाक्य तु निन्दाप्रधानम्। तत्र पदाथप्रतिभासवेलाया स्तुतिरूपोऽथः प्रतीयते। तद्यथा—

हे हेलाजितबोधिसत्त्व इत्यादि।

अत्र हे तोयनिधे ! बोधिसत्त्वचरितस्यापि त्वदीयेनानेन परार्थसंपादनसाद्गुण्येन पराजय इति पदेभ्यः स्तुतिरवगम्यते, वाक्यार्थस्तु उदधेर्निरतिशयगर्हापात्रत्वमवेक्ष्य इति। इदञ्च वाक्यवाक्यार्थयोः पदपदार्थाना सत्यत्व कथ सङ्गच्छत इति ॥२४७॥

अथात्र पदवादिमतमाशङ्कितुमाह—

**अथासंसृष्ट एवार्थः पदेषु समवस्थितः।**
**वाक्यार्थस्याभ्युपायोऽसावेकस्य प्रतिपादने ॥२४८॥**

पदेष्वर्थोऽसंसृष्ट एव वाक्यार्थस्यैकस्य ससर्गलक्षणस्य प्रतिपादनेऽभ्युपायः स्थितः। पदार्थपूर्वको हि वाक्यार्थावसायो व्यवस्थित इति ॥२४८॥

एतन्निराकर्तुमाह -

**पूर्वं पदेष्वसंसृष्टो यः क्रमादुपचीयते।**
**छिन्नग्रथितकल्पत्वान्न विशिष्टतरं विदुः ॥२४९॥**

आदौ पदेष्वसंसृष्ट एव स्थितः क्रमाच्च संसृज्योपचीयते यो वाक्यार्थः स विशिष्टतरः सुदृढं विशिष्ट एव कस्मात्? छिन्नग्रथितकल्पत्वादिति पूर्वं छिन्नः पश्चाद् ग्रथितो यस्तत्तुल्योऽसावित्यसंसृष्टपदार्थपूर्वको वाक्यार्थावसायो न युज्यत इति।

---

अथ वाक्यवाक्यार्थयोः पदपदार्थौ तयोः प्रतिपत्तावभ्युपायभूतावश्यमभ्युपेयौ तथाहि—पदप्रतिपत्तिपूर्विका वाक्यप्रतिपत्तिः। पदार्थप्रतिपत्तिपूर्वकश्च वाक्यार्थावसायः। अर्थान्तरैरसंसृष्टो हि—अर्थः=पदार्थः, तैः संसृष्टश्च वाक्यार्थ इति। किञ्च, वाक्यार्थे पदार्था अनेकेऽनुभूयन्ते, वाक्यार्थश्चैक इत्येव पदार्थवाक्यार्थयोर्भेदस्य, तज्ज्ञानयोः साध्यसाधनभावस्य च सर्वानुभवसिद्धत्वमिति पदवादिमतमाशङ्कितुमाह—**अथासंसृष्ट एवेति।**

अयमर्थः—अथ=यदि, असंसृष्ट एव=अर्थान्तरैरनन्वित एवानेकश्च योऽर्थः पदेषु वाच्यत्वेन समवस्थितः, असावेकपदार्थसंसृष्टापरपदार्थरूपस्य पदार्थद्वयसंसर्गरूपस्य वा, एकस्य च वाक्यार्थस्य प्रतिपादनेऽभ्युपायो हेतुरिति। पदार्थज्ञानपूर्विका हि वाक्यार्थावसायो व्यवस्थित इति वाक्यार्थे पदार्थो वस्तुभूत एवाभ्युपगन्तव्य इति भावः ॥२४८॥

एतन्निराकर्तुमाह—**पूर्वंपदेष्विति।**

अयमर्थः—पूर्वम्=आदौ, योऽर्थः असंसृष्टः=अर्थान्तरैरनन्वित एव स्थितः, क्रमाच्चार्थान्तरैः संसृज्य, उपचीयते=वृद्धिमाप्नोति। तदानीं च यो वाक्यार्थ इति गीयते। तं विशिष्टतरम्=अतिशयेन पदार्थाद् विशिष्टम्=विलक्षणम्=भिन्नमेव, न तु शाखादितो वृक्षादिरिव पदार्थघटितत्वेन पदार्थाद् भिन्नाभिन्नम्, छिन्नग्रथितकल्पत्वात् पूर्वं छिन्नः पश्चाद् ग्रथितो यस्तत्तुल्यत्वाद् विदुर्वाक्यार्थविद इति।

अयं भावः—यथा पूर्वं छिन्नं कपालान्तरेणासंसृष्टं कपालं पश्चाद् ग्रथितं कुम्भकारेण कपालान्तरेण संयोजितमपरं वस्तु घटाख्यं कपालादत्यन्तभिन्नमेव, न तु कपालाद् भिन्नाभिन्नमिति नैयायिकाः, तद्वदयं बौद्धपदार्थसंसर्गप्रभवो बौद्धो वाक्यार्थोऽत्यन्तं भिन्न एव पदार्थान्न तु भिन्नाभिन्नः पदार्थ इति, वाक्यार्थ इति च भिन्नाभिलापप्रत्ययगोचरत्वादिति।

**तदेवं प्रकृतिप्रत्यययोः परस्परमेकापायेनाप्यर्थावगतेः, उभयतोऽर्थस्य सम्प्रत्यये सत्येकस्मादेव प्रत्ययात् क्वचिदर्थप्रतिपत्तेः प्रकृतिप्रत्ययार्थयोश्च साङ्कर्येण शास्त्रेष्वभिधानात्, वाक्यार्थस्य च पदार्थप्रतिपत्तिविलक्षणत्वात्, नञर्थानुपपत्तेः, सर्वत्रोपात्तत्यागप्रसक्तेरित्युपपत्तिषट्केन वृत्तिषु विरुद्धार्थोपपादनादिना च पूर्वोक्तोपपत्तिचतुष्टयेन सत्यभूतानां पदार्थानामनुपपत्तेः, अखण्डपक्षे च प्रतिनिध्यादिचोद्यपञ्चकस्य तथा द्वन्द्वाश्रयेण चोद्यसप्तकस्य परिहरणान्निरवद्यमखण्डमेव स्फोटात्मकं वाक्यं प्रतिभैव च वाक्यार्थ इति स्थितम् ॥ ४९॥**

---

तदेवम्—इयाय, अहन् इत्यादौ प्रकृतिप्रत्यययोः परस्परमेकापायेनाप्यर्थावगतेः, पचन्तीत्यादौ च प्रत्ययद्वयेन झप्तिङ्रूपेण कर्तृरूपार्थस्य संप्रत्ययेऽपि अस्ति, जुहोति इत्यादावेकेनैव प्रत्ययेन तदर्थस्य प्रतिपत्तेः, अहन्नित्यत्र धातुनैवैकेन तदर्थप्रतिपत्तेश्च ।

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ भूषणे ॥

इत्यभ्युपगमेन प्रकृतिप्रत्ययार्थयोश्च साङ्कर्येण शास्त्रेष्वभिधानात्, वाक्यार्थस्य च पदार्थप्रतिपत्तिविलक्षणत्वात्, 'उपात्ता बहवोऽप्यर्थाः' ( वा० २, का० २४० ) इत्यारभ्य 'नियमद्योतनार्थो वा' ( वा० २, का० २०५ ) इति कारिका यावद् अनुपदोक्तरीत्या प्रतिपादितेन सर्वत्रैव वाक्यार्थे उपात्तानां तत्तत्पदार्थानां वाक्यार्थे निर्निमित्तत्यागप्रसक्तेरित्यादिना उपपत्तिषट्केन नञर्थानुपपत्तेः, समुदायावयवयोर्भिन्नार्थत्वे च वृत्तिषु, ( वा० २, का० २१८ ) इत्यारभ्य "अनुषङ्गवाऽवयवेन नास्त्यर्थावधारणम्" ( वा० २ का० २२० ) कारिका यावत् प्रतिपादितेन वृत्तिषु विरुद्धार्थोपपादनादिना च पूर्वोक्तोपपत्तिचतुष्टयेन सत्यभूतानां पदार्थानामनुपपत्तेः ।

अखण्डपक्षे च—प्रतिनिध्यादिकल्पनम्, पिकादिनियतपदप्रश्नः, 'श्रुतिवाक्ययोर्विरोधे श्रुतिर्बलीयसी'' इति, अवान्तरवाक्यानामर्थवत्त्वञ्च न स्यात् लक्षणानां न्यायानाम् अनुपपत्तिश्चेति चोद्यपञ्चकम्—"ग्रामस्य यस्य सामर्थ्यात्" इति ( वा० २, का० ६५ ) कारिकामारभ्य 'सर्वे तेन प्रकल्पेरन् पदं चेत् स्यादवाचकम्' ( वा० २, का० ८६ ) कारिकां यावत् प्रतिपादितस्य तथा द्वन्द्वाश्रयेण आपादितस्य = द्वन्द्वे तद्घटकपदार्थभेदानभ्युपगमे तदेकत्वे सति देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र बहुवचनं नोपपद्यत इति, द्वन्द्वे प्रत्येकं वाक्यपरिसमाप्तिर्नोपपद्यत इति, 'जनपदतदवध्योश्चे'त्यादौ द्वन्द्वघटकेन सर्वनाम्ना तच्छब्देन जनपदपदार्थस्य प्रत्यवमर्शो नोपपद्यत इति, धवखदिरपलाशाश्छिद्यन्तामित्यादौ क्रमेण छिदिक्रियानुष्ठानं नोपपद्यत इति, अस्मिन् पर्वते मम पुरुषैर्धवखदिरपलाशाश्छिद्यन्तामित्यत्र पर्वतनिरूपितं धवखदिरपलाशच्छेदनं वाक्यार्थः ।

तत्रैकदेशमात्रेऽपि कैश्चिच्छिन्ने यदादिष्टं तत्कृतमिति ते ब्रुवन्ति, तदात्मेकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानिनो वाक्यार्थं वृत्त्यर्थं वा पदार्थभेदानभ्युपगमे नोपपद्यत इति,

इदानीमपोद्धारसमाश्रयेणापि पदार्थस्याभ्युपगतत्वान्मुख्यगौणविचारमप्यासूत्रयितुमाह—

**एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः ।**
**निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते ॥२५०॥**

अत्रैकशब्ददर्शनमनेकशब्ददर्शनं चेति द्वौ पक्षौ। तत्रापि पदपदार्थयोः सत्यत्वं पदवादिमतेन, असत्यत्वं च वैयाकरणमतेनेति चत्वारः पक्षाः। प्रतिक्षिप्तमपि पक्षं व्यवहारार्थमङ्गीकरोत्येव टीकाकारः। यतः सर्वपार्षदमिदं हि व्याकरणं शास्त्रम् तत्र चायं स्थित इत्यत्र पुनः पदपदार्थावङ्गीकरोति। तत्रैकशब्ददर्शने

---

वृत्तौ पदार्थभेदानभ्युपगमे पूर्वोत्तरपदार्थप्राधान्यविकल्पकृतो वृत्तिविकल्पो नोपपद्यत इति, वृत्तौ पदार्थासम्भवे जहत्स्वार्थाजहत्स्वार्थविकल्पो नोपपद्यत इति, 'गर्गा इत्येक एवायम्' (वा० २।२२१) इत्यारभ्योपवर्णितस्य चोद्यसप्तकस्य च परिहरणान्निरवद्यमखण्डमेव स्फोटात्मकं प्रतिभैव च वाक्यार्थ इति स्थितम्'॥२४९॥

पदवादिभिर्वाक्यवाक्यार्थयोः सत्यभूतावेव पदपदार्थौ समाश्रीयेते, वाक्यवाक्यार्थयोरखण्डत्ववादिभिस्तु तथ ऽनभ्युपगमेऽपि तत्रान्ततः पदपदार्थापोद्धारसमाश्रयणेनापि पदपदार्थभेदोऽभ्युपगम्यत एवेति मनसि कृत्वा प्राक् प्रतिक्षिप्तमपि वाक्यवाक्यार्थयोः पदपदार्थभेदं व्यवहारार्थमभ्युपेत्येदानीं पदार्थेषु मुख्यगौणविचारमपि प्रसङ्गादासूत्रयितुम् संग्रहेण प्रवक्तुम् तदुपयोगितया प्रत्यर्थं शब्दभेदः शब्दाभेदो वेत्येव प्राक् परीक्ष्यते—**एकमाहुरिति**।

अयमर्थः—अन्ये परीक्षका एकं शब्दमनेकार्थमाहुः। तद्यथा—एक एव गोशब्दो गोक्षितिगभस्त्याद्यनेकार्थवाचक इति। ननु यद्यर्थभेदेऽप्येक एव गोशब्दस्तदा कथं ततो भिन्नार्थबोधः, पदभेदे हि भिन्नार्थबोधो दृष्टः। युज्यते च कारणभेद एव कार्यभेद इत्याशङ्क्यार्थप्रकरणादिरूपसहकारिकारणभेदाद् उपपद्यत एव पदैक्येऽपि भिन्नार्थबोध इत्याह—**निमित्तभेदादिति**।

पदरूपस्य निमित्तस्यैक्येऽप्यर्थप्रकरणादिरूपस्य निमित्तान्तरस्य भेदात्, एकस्यापि तस्य गवादिपदस्य सार्वार्थ्यम् = सर्वार्थवाचकत्वम्, अनेकार्थविषयकबोधजनकत्वमिति यावत्। भिद्यते = अभिन्नमपि भिन्नत्वेन प्रतीयते। तत्तदर्थविषयकबोधत्वरूपस्य कार्यतावच्छेदकस्यार्थभेदेन भेदेऽपि गोपदत्वादिरूपस्य कारणतावच्छेदकस्यैक्येन तदवच्छिन्नस्य तादृशबोधजनकत्वस्यैकगवादिपदनिष्ठस्यैकत्वेऽपि निमित्तान्तरसहकारेण भिन्नार्थबोधजननाद् भिन्नार्थबोधं प्रति गवादिपदस्य कारणत्वभेदभानमिति।

अयं भावः—व्याकरणशास्त्रे एकशब्ददर्शनमनेकशब्ददर्शनञ्चेति द्वौ पक्षौ। तथाहि—प्रत्यर्थं शब्दाभिनिवेश इति भाष्ये स्मर्यते। तत्र अर्थमर्थं प्रति प्रत्यर्थमिति व्युत्पत्तिमाश्रित्य अर्थभेदेन शब्दभेद इत्यनेकशब्ददर्शनं प्रवृत्तम्, वृत्तावेकत्वमानस्यौत्सर्गिकत्वात्। अर्थो

शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः। तत्रैव चार्थोपचारो द्विधा—स्वरूपार्थत्वेन बाह्यार्थत्वेन च। इति त्रयः पक्षाः। एवमन्यत्र। तदेवमेतैस्त्रिभिः पक्षैश्चत्वारोऽपि पक्षा अभिहिता द्वादश सम्पद्यन्त इति बोद्धव्यम्। तत्रैकशब्ददर्शनसमाश्रयणेन तावद् गौणमुख्यविचारम् 'एकमाहुरि'त्यादिना करोति, सर्वेष्वप्यर्थेष्वेक

---

अर्थौ प्रति, अर्थान् अर्थान् प्रति यत्तदपि प्रत्यर्थमेवेति भाष्यकृता स्वयमेव व्याख्यानाद् अर्थभेदेऽपि शब्दैक्यमेवेत्येकशब्ददर्शनं प्रवृत्तम्। तत्रापि पदपदार्थयोः सत्यत्वं पदवादिमतेन, असत्यत्वञ्च वैयाकरणमतेनेति प्रागुक्तसङ्कलनया चत्वारः पक्षाः।

तदेतं प्राक् प्रतिक्षिप्तमपि पदवादिनां पक्षं व्याकरणशास्त्रे व्यवहारार्थमङ्गीकरोत्येव परमवैयाकरणः श्रीभर्तृहरिः। यत इदं व्याकरणशास्त्रं नैकस्य दर्शनस्य सिद्धान्तमनुरुध्य प्रवृत्तं किन्तर्हि शब्दसाधुत्वानुशासनरूपस्वव्यवहारसिद्धये सर्वानपि दर्शनसिद्धान्तान् क्वचित् क्वचिदनुरुणद्धि। अत एव सर्वपार्षदमिदं गीयते वैयाकरणैरन्यैश्च। सर्वा दर्शनपरिषदः शब्दसाधुत्वसिद्धये समाश्रयत इति सर्वपार्षदम्। शेषे इति त्रिधिसूत्रेण अण्प्रत्ययः।

तथाहि—सत्कार्यवादाभिप्रायेण कोशे संभवति कौशेयं वस्त्रमित्यस्य सिद्धये पाणिनिना—'कोशाड्ढञ्' इति सूत्रं कृतम्। मतान्तराभिप्रायेण तु वार्त्तिककृता विकारे कोशाड्ढञ्, संभूते ह्यर्थानुपपत्तिरित्युक्तम्। किञ्चास्य शास्त्रस्य सर्वपार्षदत्वादेव—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः॥

इत्युक्तम्।

किञ्च, शब्दानित्यत्ववादं तार्किकसंमतं समाश्रित्य—'इको यणचि' इत्यादीनि आदेशसूत्राणि, 'अचः परस्मिन्' इत्यादीन्यतिदेशसूत्राणि च प्रवृत्तानि।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥

इति भाष्कृता शब्दनित्यत्ववादोऽपि समादृतः।

वार्त्तिककृताऽपि—'सिद्धे शब्दार्थसम्बन्धे' इत्युक्तम् सूत्रकृताऽपि—'तदशिष्यं सञ्ज्ञाप्रमाणत्वादि'ति शब्दनित्यताभिप्रायेणैवोक्तम्। किञ्च, सूत्रकृता प्रत्यर्थमनेकशब्ददर्शनमाश्रित्य 'सरूपाणामेकशेष' इति सूत्रं कृतम्। एकशब्ददर्शनमाश्रित्य तु भाष्यकृता व्याख्यातमिति दिक्।

सर्वपार्षदे च व्याकरणशास्त्रे स्थितोऽयं तत्रभवान् भर्तृहरिरिति प्राक् प्रतिक्षिप्तावपि पदपदार्थावत्र पुनरङ्गीकरोति। तत्रैकशब्ददर्शने गौणमुख्यविभागरूपः शब्दोपचारः = शब्दव्यवहारः प्रसिद्ध्यप्रसिद्धनिमित्तकः। तथाहि—प्रसिद्धेऽर्थे सास्नादिमत्यनारोपितगोत्ववति शक्त्या प्रयुज्यमानो गोशब्दः प्रसिद्धिनिबन्धनो मुख्यः। जाड्यादिगुण-

एव गोशब्दो वाचकः। यद्येवं युगपदेव सर्वार्थप्रकाशनं कस्मान्न करोतीत्याह—निमित्तभेदादित्यादि। निमित्तभेदो वक्ष्यमाणस्तस्मात् सार्वार्थ्यं भिद्यत इति ॥ २५० ॥

ततश्च किमित्यत आह—

**यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते।**
**अर्थप्रकरणाभ्यां वा योगाच्छब्दान्तरेण वा ॥२५१॥**

---

वत्वेन सादृश्याद् गोत्वमारोप्य आरोपितगोत्ववति बाहीकादावप्रसिद्धया शक्त्या लक्षणया वा प्रयुज्यमानो गोशब्दोऽप्रसिद्धिनिबन्धनो गौणः। स च शब्दोपचारः प्रसिद्धयप्रसिद्धरूपनिमित्तभेदेऽप्येक एव, एकस्यैव गोशब्दस्यैकस्मिन्नेवार्थे आरोपितत्वानारोपितत्वे अनादृत्य गोत्ववति प्रयुज्यमानत्वात्। एकशब्ददर्शने एव चार्थोपचारः अर्थव्यवहारः द्विधा, स्वरूपार्थत्वेन बाह्यार्थत्वेन चेति।

तथाहि—गोशब्दस्य गोत्वजातीये बाहीकादौ च प्रयुज्यमानस्य शब्दस्वरूपमेवार्थः प्रवृत्तिनिमित्तमित्येकोऽर्थोपचारः, अपरस्तु—एकस्यैव गोशब्दस्य गोत्वजातीये बाहीकादौ च प्रयुज्यमानस्य शब्दस्वरूपात् बाह्यं भिन्नं गोत्वमेव आरोपितमनारोपितं वाऽर्थः प्रवृत्तिनिमित्तमिति। तथा चैवमेकः शब्दोपचारः, शब्दैकत्वात्, द्वौ तु—अर्थोपचारौ अर्थभेदात्; इत्येवं त्रयः पक्षाः। एवमन्यत्र=अनेकशब्ददर्शने अपि त्रयः पक्षाः। तदेवमेतैस्त्रिभिः पक्षैर्भेदिताः=प्रत्येकं विभाजिताः चत्वारः प्रागुक्ताः पक्षाः=एकदर्शनमनेकशब्ददर्शनमिति द्वौ पक्षौ पदवादितार्किकमतेन पदपदार्थयोः सत्यत्वम्, वैयाकरणमतेन च तयोरसत्यत्वमिति द्वौ, एवं सङ्कलनया चत्वारः पक्षाः द्वादश संपद्यन्त इति बोध्यम्। तत्रैकशब्ददर्शनसमाश्रयणेन तावद् गौणमुख्यविचारम् 'एकमाहुरित्यादिना करोति। सर्वेष्वप्यर्थेषु गौणेषु मुख्येषु चैक एव गोशब्दो वाचकः।

यद्येवम्, युगपदेव सर्वार्थप्रकाशनं कस्मान्न करोतीत्याह—**निमित्तभेदादित्यादि।** निमित्तभेदः—'अर्थप्रकारणाभ्या वा' इत्यादिना वक्ष्यमाणः, तस्माद् गोशब्दस्य सार्वार्थ्यम्=भिन्नार्थवाचकत्वम्, भिन्नार्थविषयाऽभिन्नाऽपि शक्तिः, भिद्यते=भिन्नत्वेन प्रतीयत इति ॥२५०॥

ननु सर्वेष्वर्थेष्वेकस्यैव गोशब्दस्य निमित्तभेदाच्छक्तिभेदाभ्युपगमेऽपि प्रकृते किमायातमित्याशङ्कयाह—**यौगपद्यमिति।**

अयमर्थः—यौगपद्यम्=युगपत् सर्वार्थवाचकत्वम्, अतिक्रम्य=विहाय, निमित्तभेदवशात् पर्याये=पर्यायेण सर्वार्थप्रकाशने, व्यवतिष्ठते=व्यवस्थितो भवति। तेन युगपत् सर्वार्थप्रकाशनं न करोति।

निमित्तवशाद् युगपत् सर्वार्थप्रकाशनं न करोतीत्यर्थः। निमित्तभेदमाह—अर्थप्रकरणाभ्यामिति ॥२५१॥

यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठत इत्यस्योदाहरणमाह—

**यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते ।**
**तथा स एव गोशब्दो वाहीकेऽपि व्यवस्थितः ॥२५२॥**

---

ननु=कोऽसौ निमित्तभेद इति जिज्ञासायामाह—अर्थप्रकरणाभ्यामिति। अर्थः=प्रयोजनम्, प्रकरणम्=अर्थपदस्य वक्तृश्रोतृबुद्धिस्थता। गवादिशब्दो नानार्थोऽपि—अर्थप्रकरणाभ्याम्, वा निमित्ताभ्याम्, शब्दान्तरेण योगाद्वा=शब्दान्तरसन्निधिरूपाद्वा निमित्ताद् यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठत इत्युक्तेन सम्बन्धः।

अर्थस्योदाहरणं तु—गौः पालयितव्या दुग्धायेति। अत्र दुग्धरूपात् प्रयोजनात् प्रतीयमानात् धेनुरूपस्य मुख्यस्यैव गोपदार्थस्य प्रतीतिः। 'गौर्भर्तव्यो गृहकर्मसिद्धये' इत्यत्र गृहकर्मसिद्धिरूपात् प्रयोजनादेव वाहीकरूपस्य गौणस्य गोपदार्थस्य प्रतीतिः।

प्रकरणाद्यथा—'गौस्तिष्ठति, गौर्गच्छति' इत्यादौ यथायथं मुख्यस्य गौणस्य वा गोपदार्थस्य प्रतीतिः।

शब्दान्तरसन्निधानाद्यथा—'गौर्दुह्यते' इत्यत्र धेनुरूपस्य मुख्यस्य गोपदार्थस्य प्रतीतिः। 'गां पाठय' इत्यत्र तु गौणस्य।

एषाञ्चार्थादीनां यथायथं क्वचित् क्वचित् सङ्करोऽपि दृश्यते। यथा—'समांसमीना गौः पालयितव्या दुग्धाय' मुख्य एव गोपदार्थः शब्दान्तरसन्निधानादर्थाच्च प्रतीयते। एवम्—'गां पाठय विवेकाय' इत्यत्रार्थशब्दान्तरयोगरूपनिमित्तद्वयेन गौण एव गोपदार्थः प्रतीयत इति। यद्यपि—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

(वा० प० २।३१५-३१६)-

इत्यन्योक्तं कारिकाद्वयमत्रापि वक्ष्यत इति त्रयाणामेवात्र शब्दार्थनिर्णयनिमित्तत्वेनोपादानं कुत इति शङ्का जायते, तथापि—अत्रोक्तानां त्रयाणां गौणमुख्यार्थविभागनिर्णयनिमित्तत्वम्, अन्येषां तु मुख्यार्थनान्तरीयकार्थविभागनिर्णयनिमित्तत्वमित्यतोऽत्र गौणमुख्यविभागनिश्चयोपायप्रदर्शनप्रस्तावेऽन्येनोक्ता इति।

एतच्च—"अथात्रेदं गौणमिदं मुख्यमिदं नान्तरीयकमि"त्येवं शब्दार्थनिर्णयप्रस्तावे तत्तन्निश्चयोपायानुपदर्शयितुकाम आह—"वाक्यादिति" (वा० प० २, का० ३१४) इति

यद्येवं गौणमुख्यविभागः कुत इत्याह—

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।**
**प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपवर्ण्यते ॥२५३॥**

सर्वशक्तिमत्त्वं चानेकधर्मण इत्यनेन व्याख्यातम् । प्रसिद्धिभेदात् प्रसिद्धिविशेषाद् गोजातीये सातिशया गोशब्दस्य प्रसिद्धिः । बाहीके त्वीषदिति । तस्मात् प्रसिद्ध्यप्रसिद्धिकृतो गौणमुख्यभावः ॥२५३॥

---

पुण्यराजटीकादर्शनेनावसीयत इति । संयोगो विप्रयोगश्चेति कारिकाद्वयं तु सोदाहरणं सविशेषञ्चाग्रे व्याख्यास्यते वैशद्येनेति नेह तद्व्याख्यानाय प्रयत्यते ॥२५१॥

यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते इत्यस्योदाहरणमाह—यथा **सास्नादिमानिति** ।

अयमर्थः—यथा गोत्वजात्यभिधानपुरस्सरं येन गोशब्देन सास्नादिमान् पिण्डोऽभिधीयते = अभिधया वृत्त्या बोध्यते, तथा स एव गोशब्दस्तयैव वृत्त्या अर्थभेदेन स्वरूपभेदेऽप्यभिधात्वेनैकया, बाहीकेऽपि = बाहीकार्थाभिधानेऽपि, व्यवस्थितः, व्यवस्थात्रार्थभेदे शक्तिभेदे चापि शब्दैक्यरूपो नियमस्तां प्राप्त इति । एतेनात्रैकशब्ददर्शनम्, शक्तिस्वरूपभेदेऽप्यभिधात्वेन—एकैव चाभिधा वृत्तिः, नास्ति लक्षणा नाम शुद्धा गौणी वा वृत्त्यन्तरम्, अभिधायाः प्रसिद्ध्यप्रसिद्धिनिमित्तकश्च गौणमुख्यविभागरूपः शब्दोपचार इति सर्वं सूचितम् ॥२५२॥

एतदेव विवरीतुकाम आह—**सर्वशक्तेरिति** ।

पुण्यराजेन तु—"**यदि स एव गोशब्दो** बाहीकेऽपि व्यवस्थितस्तदा गौणमुख्यविभागः कुत इत्याह—सर्वशक्तेरिति" इत्यवतरणं कृतम्, तत्स्थूलार्थदृष्ट्येति प्रत्येतव्यम् ।

अयं तु कारिकार्थः—अनेकधर्मणः = अर्थभेदेन भिन्नशक्तिमतः, अनेकधर्मण इत्यस्यैव व्याख्यानं सर्वशक्तेरिति । सर्वार्थविषयकभिन्नशक्तिमत इत्यर्थः ।

पुण्यराजेन तु—"सर्वशक्तिमत्त्वञ्चानेकधर्मण इत्यनेन व्याख्यातम्" इत्युक्तम् ।

वस्तुतस्तु—अनेकधर्मत्वञ्च सर्वशक्तेरित्यनेन व्याख्यातमिति वक्तुमुचितम् । अनेकधर्मत्वं हि सामान्यं सर्वशक्तित्वं तु विशेषः । विशेषेण च सामान्यस्य व्याख्यानं भवति । सामान्यस्य हि विशेषरूपेणाख्यानं व्याख्यानमिति व्याख्यानपदात् प्रतीतेः । तस्यैव = एकस्यैव गोशब्दस्य तु प्रसिद्धिभेदात् सातिशयत्वेषत्त्वाभ्यां प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपवर्ण्यत इति । गोजातीये सातिशया गोशब्दस्य प्रसिद्धिः, बाहीके त्वीषदिति । तस्मात् प्रसिद्ध्यप्रसिद्धिकृतो गोशब्दस्य गौणमुख्यविभागो न स्वरूपकृत इत्येकशब्ददर्शनं स्थितमिति ॥२५३॥

तथैकदर्शन एव प्रक्रियां दर्शयति—

**एको मन्त्रस्तथाध्यात्ममधिदैवमधिक्रतु ।**
**असङ्करेण सर्वार्थो भिन्नशक्तिर्व्यवस्थितः ॥२५४॥**

तथा चैक एव मन्त्र आत्मन्यपि जपावसरे देवेष्वपि क्रतो यजनसमयेऽपि विनियुज्यते, भिन्नशक्तित्वादसाङ्कर्येण प्रतिनियतार्थतया व्यवस्थितिं लभत इत्यर्थः ॥२५४॥

एवं शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः प्रदर्शितः । एतस्मिंश्च शब्दोपचारे शब्दार्थसम्बन्धस्यानित्यत्वं स्यादित्याशङ्क्यार्थोपचारमाश्रित्याह—

**गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥२५५॥**

---

यथा शब्दैकत्वदर्शने गौणमुख्यविभागः प्राक् प्रदर्शितस्तथा तस्मिन्नेव दर्शने मन्त्राणां तत्तदर्थभेदेन तत्र तत्र भिद्यमाना प्रक्रियाम् = विनियोगप्रकारभेदम् अपि दर्शयति—**एको मन्त्र इति ।**

अयमर्थः—यथैकशब्ददर्शने एक एव शब्दस्तत्तदर्थेषु भिन्नशक्तिरसङ्करेण = प्रतिनियतार्थतया सर्वार्थो व्यवस्थितस्तथैको मन्त्रो गायत्र्यादिरध्यात्ममधिदैवमधिक्रतु आत्मनि, देवेषु, क्रतौ च भिन्नशक्तिः सन्नसङ्करेण सर्वार्थः = भिन्नार्थो व्यवस्थितः । व्यवस्थाऽत्र तत्तदर्थेषु विनियोगनियमः ।

अयं भावः—यथैक एव शब्दो भिन्नशक्तिरसङ्करेण = नियमेन भिन्नार्थो व्यवस्थितस्तथैक एव मन्त्र आत्मन्यपि विचारावसरे, देवेष्वपि जपावसरे, क्रतौ यजनसमयेऽपि विनियुज्यते। यथैक एव गायत्रीमन्त्रो मननोत्तरं ध्यानावसरेऽध्यात्मं ब्रह्मरूपतया प्रत्यगात्मनो ध्यानपरः, जपावसरेऽधिदैवतं सूर्यदेवताध्यानपरः, कर्मसु चाधिभूतं सौरमण्डलपरः, दृष्टस्य कर्माङ्गत्वसम्भवेऽदृष्टदेवतादेस्तदङ्गत्वकल्पनाऽनौचित्यात् । यथा दृष्टस्यैवाग्नेः कर्माङ्गत्वम्, देवतायास्तु तदभिमानित्वेन, न तु साक्षात्; देवताऽनङ्गीकारे तु भौतिकस्यैवाग्नेरिति भिन्नशक्तित्वादसाङ्कर्येण प्रतिनियतार्थतया व्यवस्थितिं लभत इति ॥२५४॥

एवं शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः प्रदर्शितः । एतस्मिंश्च शब्दोपचारे शब्दार्थसम्बन्धस्यानित्यत्वं स्यात्, अर्थभेदेन सम्बन्धस्य कादाचित्कत्वात्; अर्थोपचारे त्वर्थस्य शब्दस्वरूपाद् बाह्यस्य गोत्वस्य गौणे मुख्ये चार्थे एकत्वमेव । एवं गोशब्दस्वरूपस्याप्यर्थस्योभयत्रैकत्वमेवेति न शब्दार्थसम्बन्धनित्यताहानिरित्यभिप्रायेणार्थोपचारमाश्रित्याह—**गोत्वानुषङ्ग इति ।**

अयमर्थः—कैश्चिद् वादिभिः, निमित्तात् जाड्यादिगुणरूपसाधारणधर्मरूपं निमित्तमुपादाय, वाहीके गोत्वानुषङ्गः = गोत्वस्याहार्यारोपमूलक आध्यासिकतादात्म्यरूपः सम्बन्ध

अर्थः शब्दस्य द्विविधः—स्वरूपं बाह्यश्च। तत्र निमित्ताज्जाड्यादेर्गोत्वं बाहीकेऽप्यनुषज्यते, शब्दऽस्तु गोत्वमेवाभिधत्त इति बाह्यार्थोपचारः। इयांस्तु विशेषः—गोरित्यत्र मुख्यमेव गोत्वम् गौर्बाहीक इत्यत्र तूपचरितं तदेव वाच्यमिति ॥२५५॥

अथ स्वरूपोपचारमाह—

**तथा स्वरूपं शब्दानां सर्वार्थेष्वनुषज्यते।**
**अर्थमात्रं विपर्यस्तं स्वरूपे तु स्थितिः स्थिरा ॥२५६।**

शब्दानां स्वरूपमेव सर्वत्र वाच्यम्, तत् गोजातीये कदाचिदनुषज्यते, कदाचिद्वाहीक इत्यनित्यत्वं नास्ति शब्दार्थसम्बन्धस्य। प्रसिद्ध्यप्रसिद्धिकृतस्तु गोणमुख्यविभागो बोद्धव्यः ॥२५६॥

---

इष्यते। अर्थमात्रम् = पदजन्यप्रतिपत्तिविशेष्यभूतोऽर्थ एव विपर्यस्तम् = विपर्यासेन वैपरीत्येन = भिन्नतया प्रतीतम्, आक्षेपपदान्तरसमभिव्याहारादिनेति शेषः। शब्दः = गोशब्दः, स्वार्थे = स्वप्रवृत्तिनिमित्तभूतेऽर्थे गोत्वरूपे, व्यवस्थितः = नियतः, मुख्ये गौणे चार्थे नियमेन प्रतीयत इति यावत्।

अयं भावः—अर्थः शब्दस्य द्विविधः—स्वरूपम् बाह्यश्च। तत्र गोत्वस्य बाहीके आरोपनिमित्ताज्जाड्यादेर्गोत्वं बाहीकेऽप्यारोपेणानुषज्यते, गोशब्दस्तु गवि बाहीके वा प्रयुज्यमान आकृत्यधिकरणन्यायेन गोत्वमेवाभिधत्त इति गोत्वस्य गोशब्दस्वरूपाद् बाह्यत्वेन बाह्यार्थोपचारः = बाह्यार्थत्वव्यवहारः।

इयांस्तु विशेषः—गौरित्यत्र पदान्तरासमभिव्याहारे मुख्यमेव गोत्वं वाच्यम्; बाहीकादिपदान्तरसमभिव्याहारे तु गोपदार्थस्याभेदेन विशेषणत्वे बाहीके तस्य बाधानुसन्धाने गौर्बाहीक इत्यत्र तूपचरितम् = आरोपितम् गोत्वमेव वाच्यमिति ॥२५५॥

अथ शब्दस्य स्वरूपमेव गौणे मुख्ये चार्थेऽनुषज्यमानं वाच्यमिति शब्दस्वरूपस्य प्रवृत्तिनिमित्तस्य नियतत्वान्नास्ति शब्दार्थस्यानित्यत्वरूपो दोषः, गौणमुख्यविभागस्तु प्रसिद्ध्यप्रसिद्धिकृत इत्याह—तथा स्वरूपमिति।

अयमर्थः—यथा गोत्वं स्वतो जाड्यादिगुणरूपनिमित्तकृतारोपाद्वा गवि बाहीके च मुख्ये गौणे चार्थेऽनुषज्यते, तथा शब्दस्वरूपस्य प्रवृत्तिनिमित्तत्वपक्षे गवादिशब्दानां स्वरूपं सर्वार्थेषु = मुख्येषु गौणेषु चार्थेषु, अनुषज्यते = आध्यासिकेन अनाध्यासिकेन वा तादात्म्येन सम्बध्यते। तत्रार्थमात्रम् = गवादिशब्दजन्यप्रतिपत्तिविशेष्यभूतोऽर्थ एव, विपर्यस्तम् = विपरीतम्, मुख्यार्थाद् भिन्नमिति यावत्। स्वरूपे तु शब्दस्वरूपात्मके प्रवृत्तिनिमित्ते विशेषणे तु, स्थितिः = वाच्यत्वसम्बन्धेन गवादिशब्दस्य सत्ता, उभयत्रापि = गौणे मुख्ये चार्थे स्थिरा = नियता, इति न शब्दार्थसम्बन्धस्य नित्यताहानिरिति ॥२५६॥

अथानेकशब्ददर्शनमाश्रित्याह—

**एकत्वं तु स्वरूपत्वाच्छब्दयोर्गौणमुख्ययोः ।**
**प्राहुरत्यन्तभेदेऽपि भेदमार्गानुदर्शिनः [नुसारिणः] ॥२५७॥**

भेदमार्गानुसारिणः शब्दभेदवादिनः गौणमुख्यार्थाभिधायिनोर्गोशब्दयोर्भेदमेवाहुः। ते ह्यर्थभेदाच्छब्दभेदं मन्यन्ते; यतः शब्दार्थयोरिहाध्यासलक्षणः सम्बन्धो व्यवस्थितः। एकत्र चेदध्यस्तस्तस्मिंस्तेनैवाभेदमापन्नः कथमन्येन सहाध्यासमुपेयादित्यर्थः। तदेवं शब्दभेद एवोपपन्नः। एतच्च भेदाभेदस्वभावं दर्शनद्वयं शब्दानां भाष्यकारेण वार्त्तिकव्याख्यानावसरे दर्शितम्। तत्र ह्युक्तम्—'तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्'।

अत्रोत्तरम्—'एकत्वादकारस्य सिद्धम्' इति। यद्येवम्, अनुबन्धसङ्करस्तु, एकाजनेकाज्ग्रहणेषु चानुपपत्तिरित्यादीनि चोद्यानि प्राप्नुवन्ति, तत्रैवैतानि

---

अथानेकशब्ददर्शनमाश्रित्य शब्दोपचारार्थोपचारावुपपादयितुमाह—**एकत्वमिति**।

अयमर्थः—भेदमार्गानुदर्शिनः=शब्दभेदवादिनः, गौणमुख्ययोः=गौणार्थकमुख्यार्थकयोः शब्दयोः, अर्थभेदेनात्यन्तभेदेऽपि, सरूपत्वात्तु=आनुपूर्वीसाम्यात्तु एकत्वम्=आध्यासिकमभेदं प्राहुरिति। एकशब्ददर्शनसमर्थनावसरे—एकमेवाहुरनेकार्थमित्यत्राहुरित्युक्तम्। अत्र त्वनेकशब्ददर्शनसमर्थनावसरे—प्राहुरित्युक्तम् तेनानेकशब्ददर्शने स्वस्य निर्भरः सूचितो हरिणा।

अयं भावः—भेदमार्गानुसारिणो गौणमुख्यार्थाभिधायिनोर्गोशब्दयोर्भेदमेवाहुः। ते ह्यर्थभेदाच्छब्दभेद इति मन्यन्ते। यतः शब्दार्थयोर्भिन्नाकारयोर्भिन्नेन्द्रियग्राह्ययोर्भिन्नदेशावस्थितयोर्वस्तुतस्तादात्म्यं सम्बन्धान्तरं वा न सम्भवतीति तयोर्बौद्धयोर्बाह्ययोर्वा तादात्म्याध्यासलक्षण एव सम्बन्धो व्यवस्थितः। एवञ्चैकत्रार्थे चेदध्यस्तः शब्दः, तस्मिन् काले तेनैवाभेदमापन्नः कथमन्येन सहाध्यासमुपेयात्? दृश्यते च श्लेषे तन्त्रेणानेकार्थबोधः, तदेवं शब्दभेद एवोपपन्नः। एतच्च भेदाभेदस्वभावं शब्दानां दर्शनद्वयं वार्त्तिकव्याख्यानावसरे भाष्यकारेण दर्शितम्। तत्र ह्युक्तम्—तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्' इति।

अस्यार्थः—तत्र=तस्मिन् सति, अणुदित्सूत्रघटकेनाण्पदेन वार्णसमाम्नायिकानामेव ग्रहणे सति, अनुवृत्तिनिर्देशे वृत्तिम्=शास्त्रवृत्तिमनुगतो निर्देशोऽनुवृत्तिनिर्देशस्तत्र, विधिप्रदेषु—'अस्य च्वौ' इत्यादिषु सवर्णाग्रहणम्=सवर्णग्रहण न प्राप्नोति, अनेकशब्ददर्शने तत्रत्यस्याकारस्यानण्त्वादिति गङ्गीभवतीत्यादि न सिध्येदिति।

अत्रोत्तरम्—'एकत्वादकारस्य सिद्धम्' इति। अबाधितप्रत्यभिज्ञाबलादेकशब्ददर्शनेऽभ्युपगम्यमाने यश्चायमकारोऽनुवृत्तौ यश्चाक्षरसामाम्नाये स एक इत्येकत्वादकारस्य सवर्णग्रहणं सिद्धमित्यर्थः। यदि शब्दैकत्वदर्शनं तदा—'अनुबन्धसङ्करस्तु', अण्-अच्-क-घ-घञ प्रत्याहारेषु णकाराद्यनुबन्धसङ्करस्तत्प्रयुक्तः कार्यसङ्करोऽपि प्राप्नोतीत्यर्थः।

परिहृतानि, विषयेण तु नानालिङ्गकरणात् सिद्धम्, एकाजनेकाज्ग्रहणेषु चावृत्ति-संख्यानादित्येवमेकशब्ददर्शनं स्थापितम् ।

अथानेकदर्शनमाश्रित्य तत्रैवोक्तम्—आन्यभाव्यं तु कालशब्दव्यवायाद् युगपच्च देशपृथक्त्वदर्शनादित्येवं भेदाभेदौ शब्देषु व्यवस्थापितौ । तद्व्याख्यानायैव च टीकाकारः स्वतन्त्रपक्षद्वयदर्शनं करोतीति बोद्धव्यम् ॥२५७॥

अथैतदेव शब्दभेददर्शनं प्रसङ्गाद्वैदिकेष्वपि शब्देषु योजयितुमाह—

**सामिधेन्यन्तरं चैवमावृत्तावनुषज्यते ।**
**मन्त्राश्च विनियोगेन लभन्ते भेदमूहवत् ॥२५८॥**

---

किञ्च, 'एकाजनेकाज्ग्रहणेषु चानुपपत्तिः' । शब्दैकत्वदर्शने घटशब्दस्यैकाच्त्वात् प्रकृत्यैकाज् इति प्रकृतिभावे घटमाचष्टे घटापयतीति स्यात्; इष्यते तु घटयति' इति । किञ्च, घटेन तरति 'घटिकः' इति न स्यात् घटशब्दस्य द्व्यच्त्वाभावेन 'नौ द्व्यचः' इति ठनोऽप्रवृत्तेरित्यादयो दोषाः शब्दैकत्वदर्शने प्राप्नुवन्ति, परिहृताश्च तत्रैवैते दोषाः । तथाहि—विषयेण तु नानालिङ्गकरणात् सिद्धम्, एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानादिति ।

तत्राद्यस्यायमर्थः—यदयं विषये विषये नानालिङ्गमकार करोति, तेन विज्ञापयत्याचार्यो नानुबन्धसङ्करोऽस्तीति । द्वितीयस्यायमर्थः—एकाजनेकाज्ग्रहणेषु चावृत्ति-संख्यानात्, आवृत्तेर्गणनया न दोषः । घटशब्देऽकारावृत्तिगणनया द्व्यच्त्वमेव, न त्वेकाच्त्वमिति न दोष इत्येवमेकशब्ददर्शनं स्थापितम् ।

अथानेकशब्ददर्शनमाश्रित्य तत्रैवोक्तम्—"आन्यभाव्यन्तु कालशब्दव्यवायात्" ।

अस्यार्थः—आन्यभाव्यन्तु = अन्यत्वमेव अन्यभावशब्दादन्यत्ववाचकात् स्वार्थे ष्यञ् । तु शब्दोऽवधारणार्थकः । तत्र हेतुः कालशब्दव्यवायादिति । घटशब्दघटकाकारयोः सव्यञ्जनयोर्विलम्बेनोच्चारणे कालव्यवायः शब्दव्यवायश्च दृश्यते, न चेदं शब्दैकत्वदर्शने संभवति, भिन्नयोर्हि केनचिद् व्यवायो लोके दृश्यत इति, 'युगपच्च देशपृथक्-त्वदर्शनात्' ।

अस्यार्थः—नह्येकं देवदत्तं देशपृथक्त्वेषु सत्सूपलभते । अकारं तूपलभते ततो युगपद् देशपृथक्त्वदर्शनादपि मन्यामहे भिन्ना वर्णा इति । चशब्दोऽत्र पूर्वोक्तहेतुसमुच्चायकः । एव शब्दभेदपक्ष उपसंहृतः । तेषां वार्त्तिकानां तात्पर्यतो व्याख्यानायैव च श्रीभर्तृहरिरत्र स्वतन्त्रपक्षद्वयदर्शनं करोतीति बोध्यमिति ॥२५७॥

यत एतदेव शब्दभेददर्शनं वैदिकेष्वपि शब्देषु योजितमत एतदेव न्याय्यमित्य-भिप्रेत्याह—**सामिधेन्यन्तरमिति** ।

अयमर्थः—एवं = प्रागुक्तरीत्या शब्दभेददर्शनेऽभ्युपगते आवृत्तौ = प्रथमाया उत्तमायाश्च सामिधेन्यास्त्रिस्त्रिरावृत्तौ, सामिधेन्यन्तरञ्च अन्या अपि चतस्रः सामिधेन्यः,

त्रयोदशैकादश वा समिन्धनार्था ऋचः सामिधेन्यः। तत्र त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह। एवं चावृत्त्या सप्तदश पञ्चदश वा सामिधेन्यो भवन्तीति स्थितम्। तत्रावृत्तं सामिधेन्यन्तरमेव विभिन्नस्वरूपमनुषक्तं बोद्धव्यम्, न तत्त्वे[नै]कैवासौ पुनरावृत्तेति शब्दभेदवादिनः।

एवं च मन्त्राणामपि भेदमाहुरिति प्रदर्शयितुमाह—मन्त्राश्चेति। विनियोगेनाभ्युपयोगादिनापरक्षिता अपि मन्त्रा भिन्ना एव बोद्धव्याः। यथा आह—'देवीरापः शुद्धाः' इत्यस्मादन्य एव स्तुत्यर्थवादोऽभ्यूह्यते देव आज्यं शुद्धमित्यादि। एवमूहमन्त्राणामन्यत्वम्, तथैव विनियुक्तानां मन्त्राणामन्यत्वमेव॥२५८॥

---

अनुषज्यते सामिधेन्येकादशके, तत्त्रयोदशके वा वर्गे सम्बद्धा भवन्ति। येन स्वरूपत एकादश त्रयोदश वा पठिताः सामिधेनीनाम्न्य ऋचः पञ्चदश सप्तदश वा संपद्यन्ते। अत आवृत्तौ सामिधेनीसंज्ञकानां मन्त्रणां स्वरूपभेदाभ्युपगम आवश्यक इति शब्दभेददर्शनमप्यावश्यकमिति।

अयं भावः—त्रयोदशैकादश वाऽग्निसमिन्धनार्था ऋचः सामिधेन्यः सन्ति। अग्निराधीयते=स्वकर्मकाधानेन समिध्यते प्रदीप्यते याभिस्ताः सामिधेन्य इति नामनिर्वचनम्। समिधशब्दाद् आधानेऽर्थे षेण्यण् प्रत्ययः। तत्र त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह इति श्रूयते। एवञ्चावृत्त्या सप्तदश पञ्चदश वा सामिधेन्यः संपद्यन्त इति स्थितम्। तत्रावृत्तं सामिधेन्यन्तरमेव विभिन्नस्वरूपं सामिधेनीपञ्चदशके तत्सप्तदशके वाऽनुषक्तं बोद्धव्यम्। न तु तत्त्वत एकैवासौ सामिधेनी, या पुनरावृत्ता इति शब्दभेदवादिनः प्रवदन्तीति।

एवमेवान्यमन्त्राणामपि विनियोगभेदेन भेदं प्राहुरित्युत्तरार्धेन प्रदर्शयितुमाह—मन्त्राश्चेति।

अयमर्थः—मन्त्राश्च=मन्त्रा अपि, आनुपूर्वीभेदाभावेऽपि विनियोगेन=विनियोगभेदेन ऊहवद् भेदम्=स्वरूपभेदं लभन्त इति। अत्रोहे विनियोगभेदेन न भेदः, किन्त्वेकदेशभेदेन=यथा=प्रकृतौ 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रः तद्विकृतौ सौर्ययागे तु सूर्याय त्वा जुष्टं निर्वपामीत्यत्र पदमात्रे भेदः। आनुपूर्वीभेदाभावेऽपि विनियोगभेदेन मन्त्रभेदो यथा बौधायनगृह्यसूत्रे उपनयनप्रकरणे—"'तत्सवितुर्वरेण्यम्' इत्येतं पच्छोऽर्धर्चश-स्ततः समस्ताम्" इति। अत्र हि गायत्रीमन्त्रस्य ब्रह्मचारिणं प्रत्याचार्यकर्तृके उपदेशे विनियोगः। तत्रैव विवाहप्रकरणेऽस्यैव मन्त्रस्य जायापतिकर्तृके हुतशेषप्राशने विनियोगः। "अपरेणाग्निमुभौ जायापती प्राश्नीयाताम्, तत्सवितुर्वरेण्यम्" इति। बौधायनगृह्यसूत्र एव—"तत्सवितुर्वरेण्यमिति सद्यः पात्रमादाय ब्रह्मपात्रेण योजयेत्" इति पात्रद्वययोजनेऽस्य मन्त्रस्य विनियोगः। अग्निपुराणे—'गायत्र्याऽत्युष्णवारिणा' ( अ० १८ श्लो० १३ )। अत्र गायत्रीमन्त्रस्य स्नपने विनियोगः। तत्रैव—'गायत्र्याऽऽगृह्य गोमूत्रम्' ( अ० १७५ श्लो० २५ )। अत्र तस्य गोमूत्रग्रहणपूर्वके प्रक्षेपे विनियोगः। तत्रैव—'गायत्र्या समिधो

अन्यत्वे च तेषां किं वेदत्वं स्यान्न वेत्याशङ्क्य वेदत्वमेव तेषां बोद्धव्य-मित्याह—

**तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु ।**
**अनर्थकानां पाठो वा शेषस्त्वन्यः प्रतीयते ॥२५९॥**

मन्त्राणां सर्वेषां वेदत्वमेव, वेदे तु कश्चिदेव मन्त्रः पठ्यते । न चैतावता तेषामेव वेदत्वम्, अन्यथा वेदेऽनर्थका एव सर्वे पठिता इत्याह—**अनर्थकानामिति** । उपलक्षणभूता अनधिकारा एव वेदे मन्त्राः पठिताः, तैस्तु विनियोगावसरे प्रतीयमानानामन्येषामेव वेदत्वं बोद्धव्यम् ॥२५९॥

---

हुनेत्' वासुदेवादिदेवताप्रतिष्ठाप्रकरणे ( अ० ६० श्लो० १० ) । अत्रास्यैव मन्त्रस्य समिद्धोमे विनियोगः । अयं च सर्वोऽपि गायत्रीविनियोगः श्रीरामशङ्करभट्टाचार्यस्य संग्रहप्रयत्नलब्ध इति ।

अयं भावः—विनियोगेन = अभ्युपयोगाभ्यूहादिनोपलक्षिता अपि मन्त्रा भिन्ना एव बोद्धव्याः । तत्राभ्यूहो यथा—प्रकृतावाह स्तुत्यर्थवादः—'देवीरापः शुद्धाः' इति । विकृतौ तु एतस्मादन्य एवाभ्यूहः—'देव आज्यं शुद्धन्' इति । एवमूहमन्त्राणां यथाऽन्यत्वं तथैव विनियुक्तानामपि मन्त्राणामन्यत्वमेवेति ॥२५८॥

ननु यद्यानुपूर्वीसाम्येऽपि विनियोगाभ्यूहादिना मन्त्राणामन्यत्वमेव, तदा पठितादन्येषां वेदत्वं स्यान्न वेत्याशङ्क्यान्येषामपि वेदत्वमेव, पठ्यमानस्याकृतिसाम्यवतामुपलक्षणत्वकल्पनात् । परिगणने हि विनियोगाद्यनुपपत्तिः, मन्त्राणामेव पदार्थस्मरणद्वारा कर्माङ्गत्वादित्याह—**तानीति** ।

**अयमर्थः**—तानि = अपठितानि, अन्यानि आम्नायान्तराण्येव = वेदान्तराण्येव, न स्ववेदाः; आनुपूर्वीसाम्यवता सर्वेषां वेदत्वेऽपि कश्चिदेव तूपलक्षणार्थं पठ्यते, अन्यथा वृथा ग्रन्थगौरव पुनरुक्तिश्च स्यादिति ।

अयं भावः—मन्त्राणां सर्वेषां पठितानामपठितानां चानुपूर्वीसाम्यवतां वेदत्वमेव । वेदे तु कश्चिदेव मन्त्रो लाघवायोपलक्षणतया पठ्यते, न चैतावता पठितानामेव वेदत्वमिति ।

अथवा वेदे पठिताः सर्वेऽप्यनर्थका एव लक्षणया स्वरूपोपलक्षका अपि स्वरूपातिरिक्तार्थरहिता एव । अतः पठितानां न मन्त्रत्वम्, प्रयोगसमवेतार्थस्मारकाणामेव मन्त्रत्वादित्याह—**अनर्थकानामिति** ।

**अयमर्थः**—वा = अथवा, अनर्थकानाम् = प्रागुक्तरीत्या स्वरूपातिरिक्तार्थरहितानामेव वेदे पाठः । अन्यस्तु = पठितादन्यस्तु लक्षणया तद्बोध्यः शेषः = कर्माङ्गम्, प्रतीयत इति ।

तदेवमर्थभेदाच्छब्दस्य भेदे मन्त्राणां भेद एव, पठितानां चोपलक्षणार्थतेति प्रदर्शितम्। अथ स्वरूपार्थमेव पाठः सर्वेषां वैदिकानां कैश्चिदुच्यत इत्याह—

**शब्दस्वरूपमर्थस्तु पाठोऽन्यैरुपवर्ण्यते।**
**अत्यन्तभेदः सर्वेषां तत्सम्बन्धात्तु तद्वताम् ॥२६०॥**

ततश्च सर्वेषां स्वरूपवतां भेद एवेत्याह—अत्यन्त इति। ननु पाठ्यमानानामेव स्वरूपार्थत्वात् स्वरूपवत्ता युज्यते, इतरेषां तु यागादौ विनियुक्तानां कथं स्वरूपवत्त्वमेव स्यादित्याह—तत्सम्बन्धादिति। तत्रापि प्रवृत्तिनिमित्तस्य स्वरूपस्यैव विद्यमानत्वात्तद्वत्त्वमेव बोद्धव्यम् ॥२६०॥

---

अयं भावः—वेदे पठिता मन्त्रा लक्षणयाऽन्येषां मन्त्राणां स्वसदृशानामुपलक्षणभूता इति प्रयोगसमवेतार्थस्मारकत्वाभावादनधिकारा एव = अनङ्गत्वेन कर्मनिष्पादनसामर्थ्यशून्या एव, अतो न तेषां वेदत्वम्। विनियोगावसरे तैस्तु प्रतीयमानानामन्येषामेव वेदत्वमिति ॥२५९॥

तदेवमर्थभेदाच्छब्दस्य भेदे मन्त्राणां भेद एव, पठितानां चोपलक्षणार्थतेति प्रदर्शितम्। अथवा वेदे पठिताः सर्वेऽनर्थका एव = निष्प्रयोजनाः कर्मानङ्गभूताः स्वरूपातिरिक्तार्थरहिताः। तदर्थभूतास्त्वन्ये एव कर्माङ्गभूताः। यथा—व्याकरणे सर्वत्रैव = 'अग्नेर्ढग्'ित्यादौ पठिता अग्न्यादिशब्दा अनर्थकाः = स्वरूपातिरिक्तार्थरहिताः स्वरूपमात्रबोधनपरिसमाप्तप्रयोजना न कार्यभागिनः, कार्यभागिनस्तु सौत्राग्निपदाभिधेयाः स्वरूपातिरिक्तार्थवन्तोऽग्न्यादिशब्दा एवेत्यभिप्रेत्याह—**शब्दस्वरूपमिति**। पाठेऽन्यैरिति सप्तम्यन्तपाठो युक्तः।

अयमर्थः—अन्यैस्तु पाठे = वेदमन्त्राणां पाठे शब्दस्वरूपमेवार्थः—अभिधेयमित्युपवर्ण्यते। एवञ्च शब्दस्वरूपे शक्तिरेव, न लक्षणेति भावः।

एवं प्रागुक्तरीत्या सर्वेषां पठितापठितानां प्रवृत्तिनिमित्तीभूतस्वरूपार्थत्वे समाने स्थिते सर्वेषां स्वरूपवतां प्रत्युच्चारणं स्वरूपभेदेन भेद एवेत्याह—**अत्यन्तभेदः सर्वेषामिति**।

अयमर्थः—सर्वेषां पठितानामपठितानाञ्च प्रागुक्तरीत्या स्वरूपभेदेनात्यन्तभेद एव, न तु कथञ्चिदभेद इति। ननु पठ्यमानानामेव स्वरूपार्थत्वात् स्वरूपवत्ता युज्यते, इतरेषां तु यागादौ विनियुक्तानां कथं स्वरूपवत्त्व स्यात्, कथञ्च तत्प्रयुक्तः परस्परं भेदः? इत्याशङ्क्याह—तत्सम्बन्धादिति। अत्र तुशब्दोऽवधारणे। तत्सम्बन्धात् = तस्य = प्रवृत्तिनिमित्तभूतस्य स्वरूपस्य, सर्वत्रापि सम्बन्धादेव तद्वताम् = स्वरूपवतां सर्वेषामत्यन्तभेद इति योजना ॥२६०॥

तस्मान्मन्त्रेषु संस्कारादिविनियोगभेदात् पाठोपलक्षितानां चाभिन्नानामेव प्रतीतिः स्वरूपार्थत्वाद्वा, भिन्नानामेषां भेद एव मन्तव्य इत्युपसंहर्तुमाह—

**अन्या संस्कारसावित्री कर्मण्यन्या प्रयुज्यते।**
**अन्या जपप्रबन्धेषु सा त्वेकैव प्रतीयते ॥२६१॥**

सारूप्यात् त्वेकत्वव्यवहारस्तत्र बोद्धव्यः। तदेवमनेकशब्ददर्शनेऽर्थभेदाच्छब्दभेदे गौणोऽर्थोऽन्यः, मुख्योऽर्थश्चान्य एव; किन्तु सारूप्यादभेदे मुख्यार्थस्य प्रसिद्धत्वात् तद्वाचक उपचर्यत एवेति। शब्दोपचार एव तत्र कल्पयितुं शक्यः, न त्वेकशब्ददर्शन इव शब्दसम्बन्धस्यानित्यत्वादुपचारोऽर्थस्याश्रीयते। अत एवाभिप्रायवता टीकाकृता तत्र शब्दोपचारार्थोपचारौ व्याख्यातौ ॥२६१॥

तत्सम्बन्धात्तु तद्वताम्' (वाक्य० २।२६०) इत्यत्र स्वरूपेण प्रवृत्तिनिमित्तेन सम्बन्धः प्रतिपादितः। तदेव च सर्वेषां शब्दानां प्रवृत्तिनिमित्तं बोद्धव्यमिति विस्पष्टयितुमाह—

---

तदेवं मन्त्राणां संस्कारादिकर्मसु विनियोगभेदात् पाठोपलक्षितानाम् = पठ्यमानमन्त्रेण लक्षणया बोधितानाम्, चाभिन्नानामेवापठितानां प्रतीतिः, यद्वा शक्त्या स्वरूपार्थत्वमाश्रित्य भिन्नानामेव पठ्यमानमन्त्रेभ्यः प्रतीतिरस्तु, सर्वथाऽपि त्वेषां = पठितापठितानाम् स्वरूपभेद एव मन्तव्यः, न त्वेकत्वमित्युपसंहरन्नाह—**अन्येति**।

अयमर्थः—संस्कारे उपनयनादौ विनियुज्यमाना सावित्री = सवितृदेवताको मन्त्रो गायत्र्याख्यः अन्या। या कर्मणि = यागे, प्रयुज्यते = विनियुज्यते साऽन्या, जपप्रबन्धेषु = चतुर्विंशतिलक्षजपादिषु विनियुज्यमानाऽन्या, तु = किन्तु, सा आनुपूर्वीसाम्यादेकैव प्रतीयते व्यवह्रियते चेति। तदेवमनेकशब्ददर्शनेऽर्थभेदाच्छब्दभेदे गौणोऽर्थोऽन्यः मुख्योऽर्थश्चान्य एव, किन्त्वानुपूर्वीसाम्यात् शब्दयोरभेदारोपे मुख्यार्थस्य प्रसिद्धत्वात् तद्वाचको गौणार्थस्य चाप्रसिद्धत्वात्तल्लक्षक = उपचर्यते ऐक्यारोपाद्व्यवह्रियते।

वस्तुतस्तु द्वावपि गोशब्दौ स्वस्वार्थवाचकावेवेति। तत्र वाचकत्वलक्षकत्वव्यवहारे शब्दोपचार एव = शब्दयोर्मुख्यगौणयोरानुपूर्वीसाम्यमूलकोऽभेदारोप एव, हेतुत्वेन कल्पयितुं शक्यः। न त्वेकशब्ददर्शन इव शब्दसम्बन्धस्यार्थेऽनित्यत्वाद् बाहीके गोत्वस्य जाड्यादिगुणमूलक उपचारः = आरोपः आश्रीयते। अत एवैतदभिप्रायवता महाभाष्यटीकाकृता हरिणा तत्र तत्र शब्दैक्यानैक्यदर्शनभेदेन शब्दोपचारार्थोपचारौ व्याख्याताविति ॥२६१॥

'तत्सम्बधात्तु तद्वताम्' (२।२६०) इत्यत्र स्वरूपेण प्रवृत्तिनिमित्तेन साकं शब्दस्याध्यासिकस्तादात्म्यलक्षणः सम्बन्धो वाच्यवाचकभावसम्बन्धस्य नियामकः प्रतिपादितः। तदेव च सर्वेषां शब्दानां प्रवृत्तिनिमित्तं बोद्धव्यमिति व्यवस्थापयितुमाह—**अर्थस्वरूप इति**।

**अर्थस्वरूपे शब्दानां स्वरूपाद्वृत्तिरिष्यते ।**
**वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया ॥२६२॥**

अर्थस्वरूपेऽर्थवस्तुनीति यावत्। तत्र सर्वेषां स्वरूपादेव निमित्तात् प्रवृत्तिर्बोद्धव्या। न केवलं पदानां सर्वत्र स्वरूपमेव प्रवृत्तिनिमित्तम्, यावद्वाक्यरूपस्यापि शब्दस्य वाक्यार्थे वर्तमानस्य वृत्तिरन्यानपेक्षया स्वरूपेणैव बोद्धव्येति प्रसङ्गेन प्रतिपादयितुमाह—वाक्यरूपस्येति ॥२६२॥

इदानीमेकशब्ददर्शने गौणमुख्यविभाग इत्युपसंहरन्नाह -

**अनेकार्थत्वमेकस्य यैः शब्दस्यानुगम्यते ।**
**सिद्ध्यसिद्धिकृता तेषां गौणमुख्यप्रकल्पना ॥२६३॥**

सिद्ध्यसिद्धिभ्यां प्रसिद्ध्यप्रसिद्धिभ्यां तत्र गौणमुख्यविभागो बोद्धव्यः। अनेनैकशब्ददर्शनेऽपि सादृश्यादभेदे पुनरपि प्रसिद्ध्यप्रसिद्धिभ्यामेव गौणमुख्यविभाग इत्युक्तमेव ॥२६३॥

---

अयमर्थः—सर्वेषामेव शब्दानामर्थस्वरूपे=अर्थवस्तुनि, स्वरूपात् शब्दस्वरूपं निमित्तमुपादाय, वृत्तिः=प्रवृत्तिरिष्यत इति। अथेदानीं न केवलं पदानामेव सर्वत्र स्वरूपं प्रवृत्तिनिमित्तम्, किन्तु वाक्यरूपस्यापि शब्दस्य वाक्यार्थे वर्तमानस्य तद्बोधनाय प्रवृत्तिरन्यानपेक्षया स्वरूपेणैव बोद्धव्येति प्रसङ्गतः प्रतिपादयितुमाह—**वाक्यरूपस्येति**।

वाक्यरूपस्य शब्दस्य वाक्यार्थे वृत्तिः=वाक्यार्थबोधनाय प्रवृत्तिः, **अन्यानपेक्षया**= स्वरूपातिरिक्तप्रवृत्तिनिमित्तानपेक्षयेत्यर्थः ॥२६२॥

इदानीमेकशब्ददर्शन एव गौणमुख्यविभागो न त्वनेकदर्शने, तत्र त्वर्थभेदेन शब्दभेदात् सर्वोऽपि शब्दः स्वार्थाभिधायित्वेन मुख्यार्थक एवेत्युपसंहरन्नाह—**अनेकार्थत्वमिति।**

अयमर्थः—यैरेकस्य शब्दस्याऽनेकार्थत्वम् = गौणमुख्यभेदेन नानार्थत्वम्, **अनुगम्यते**=लोकव्यवहारमनुसृत्य आश्रीयते, तेषां मते एकस्य गौणमुख्यप्रकल्पना= गौणमुख्यविभागप्रकल्पना सिद्ध्यसिद्धिकृता=अर्थस्य प्रसिद्ध्यप्रसिद्धकृतैव, न तु शक्तिलक्षणारूपवृत्तिभेदकृता। तथा चाप्रसिद्धार्थबोधिका शक्तिरेव लक्षणा, न तु वृत्त्यन्तरम्; मानाभावात्, अक्लृप्तकल्पनायां गौरवाच्च। अनेनैकशब्ददर्शनेऽपि गवादिपदार्थस्य बाहीकादिपदार्थेन सह जाड्यादिगुणैः सादृश्यादभेदारोपे पुनरपि प्रसिद्ध्यप्रसिद्धिभ्यामेव गौणमुख्यविभागोऽनेकशब्ददर्शन इवेत्युक्तप्रायमेव भवति ॥२६३॥

अथोभयत्रापि गौणमुख्यविभागे निमित्तान्तरं दर्शयितुमाह—

**अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह ।**
**युक्तः प्रत्याययत्यर्थं तं गौणमपरे विदुः ॥२६४॥**

अर्थप्रकरणशब्दान्तरसंनिधानानि गौणमुख्यभावमुभयत्रापि प्रयोजयतीत्युच्यते ॥२६४॥

एतदेव संग्रहकारोक्तश्लोकप्रदर्शनेन संवादयितुमाह—

**शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते ।**
**स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः ॥२६५॥**

एतन्मुख्यार्थशब्दलक्षणम् ॥२६५॥

गौणार्थशब्दस्वरूपमप्याह—

**यस्त्वन्यस्य प्रयोगेण यत्नादिव नियुज्यते ।**
**तमप्रसिद्धं मन्यन्ते गौणार्थाभिनिवेशिनम् ॥२६६॥**

---

अथेदानीमुभयत्रापि दर्शने गौणमुख्यविभागे प्रसिद्ध्यप्रसिद्धिभ्यामतिरिक्तं निमित्तं दर्शयितुमाह—**अर्थप्रकरणापेक्ष** इति ।

अयमर्थः—यः शब्दः, अर्थप्रकरणापेक्षः=अर्थप्रकरणे अपेक्षत इत्यर्थप्रकरणापेक्षः । अत्रार्थः प्रयोजनम् । तत्रार्थापेक्षो गौणो यथा—'गां पाठय' इति । अत्र पाठनक्रियारूपप्रयोजनसिद्धये गोपदस्य बाहीकोऽर्थः । यत्र पूर्वं बाहीकार्थवर्णना प्रकृता तत्र गौर्गच्छतीत्यादौ गोपदस्य बाहीकोऽर्थः शब्दान्तरैः सह युक्तो वाऽर्थं प्रत्याययति । तद्यथा गौर्बाहीक इति । अत्र गोशब्दो बाहीकपदसंनिधानेन गौणार्थकः । अपरे तं शब्दं गौणम्=गौणार्थकं विदुरिति योजना । अर्थप्रकरणशब्दान्तरसनिधानानि शब्दैक्यदर्शने शब्दानेकत्वदर्शने चोभयत्रापि शब्दस्य गौणमुख्यभावं प्रयोजयन्तीत्यनेन पद्येनोच्यत इति ॥ **२६४** ॥

एतदेव संग्रहकारोक्तश्लोकप्रदर्शनेन संवादयितुमाह—**शुद्धस्येति** ।

अयमर्थः—यस्य शुद्धस्य=अर्थप्रकरणशब्दान्तरसनिधिरूपार्थप्रतीतिप्रयोजकरहितस्योच्चारणे प्रसिद्धः स्वार्थो गम्यते, स रूपमात्रनिबन्धनः=रूपमात्रम् शब्दस्वरूपमात्रम्, मात्रपदेनार्थादीनां व्यवच्छेदः । निबन्धनम्=प्रवृत्तिनिमित्तं यस्य स रूपमात्रनिबन्धनः, मुख्य इति विज्ञेय इति मुख्यार्थशब्दलक्षणम् । यथा—गौरिति केवलं पदमिति ॥ २६५ ॥

यत्नादिवेति। अर्थप्रकरणादेरित्यर्थः ॥२६६॥

अथ प्रकारान्तरेण गौणमुख्यविभागमाह—

**स्वार्थे प्रवर्तमानस्य यस्यार्थं योऽवलम्बते।**
**निमित्तं तत्र मुख्यं स्याद् निमित्ती गौण इष्यते ॥२६७॥**

यो वाहीके प्रवर्तमानः स्वार्थे सास्नादिमति वर्तमानस्य गोशब्दस्य सम्बन्धिनमर्थं निमित्तत्वेनावलम्बते, तत्र विषये मुख्योऽर्थो निमित्तं स्यात्, गौणस्तु निमित्तीत्युच्यते।

एतदुक्तं भवति—यत्रास्खलद्गतिः शब्दस्तत्र मुख्योऽर्थः, स्खलद्गतित्वे तु गौणार्थतेति बोद्धव्यम्। नन्वेतेनार्थोपचार उक्तः, स चैकशब्ददर्शने स्थितः। तत्र यस्यार्थं योऽवलम्बत इति शब्दभेद उक्तः स्यात्। असदेतत्; अत्रापि शक्तिभेदाश्रयणे कल्पितस्य भेदस्योपपत्तेर्युज्यत एतदिति न कश्चिद्दोषः ॥२६७॥

---

गौणार्थशब्दस्वरूपमप्याह—यत्नादिवेति।

अयमर्थः—यस्तु शब्दः, अन्यस्य शब्दस्य प्रयोगेण यत्नादिव = अर्थप्रकरणादिरूपाद् यत्नादेव, अत्रेवशब्दोऽनर्थको वाक्यालङ्कारे, एवकारार्थको वा। नियुज्यते = अप्रसिद्धेऽर्थान्तरे प्रयुज्यते। तमप्रसिद्धम् = अप्रसिद्धार्थकम्, शब्दं गौणार्थाभिनिवेशिनम् = गौणार्थविषयकबोधानुकूलो योऽभिनिवेश आग्रहो हठात् प्रवृत्तिरूपस्तद्वन्तं मन्यन्ते। शब्दस्य गौणार्थे हठादेव प्रवृत्तिरर्थप्रकरणादिनियोजितस्य न तु स्वारसिकी; मुख्ये तु सा स्वारसिकीति भावः ॥२६६॥

अथ शब्दैक्यदर्शने प्रकारान्तरेण गौणमुख्यविभागमाह—स्वार्थ इति।

अयमर्थः—स्वार्थे = सास्नादिमति, प्रवर्तमानस्य = अन्यत्र बाहुल्येन प्रयुज्यमानस्य यस्य गोशब्दस्यार्थम् = प्रवृत्तिनिमित्तभूतं गोत्वं यः शब्दो वाहीके प्रयुज्यमानो गोशब्दः, अवलम्बते = जाड्यादिगुणमूलकारोपात् प्रवृत्तिनिमित्ततयाऽऽश्रयते। तत्र विषये मुख्यम् = मुख्योऽर्थः = अनारोपितं गोत्वं निमित्तं स्यात्। गौणस्त्वारोपितगोत्वरूपोऽर्थो निमित्ती इष्यत इति।

अयं भावः—यत्र मुख्यार्थबाधाभावादस्खलद्गतिः शब्दस्तत्र मुख्योऽर्थः, मुख्यार्थबाधात् स्खलद्गतित्वे तु प्रवृत्तिनिमित्तारोपाद् गौणार्थतेति। नन्वेतेनाऽर्थोपचारः = अर्थारोपः उक्तः, स चैकशब्ददर्शने स्थितः। तत्र यस्यार्थं योऽवलम्बत इत्यनेन शब्दभेद उक्तः स्यादिति विरोध इति चेन्न; शब्दैक्यदर्शनेऽप्यर्थभेदेन शक्तिभेदाश्रयणे तत्प्रयुक्तस्य कल्पितस्य शब्दभेदस्योपपत्तेर्युज्यत एतदिति न कश्चिद् विरोधः ॥२६७॥

अथार्थप्रकरणादेः शुद्धस्य गौणमुख्यविभागहेतुत्वेऽतिप्रसङ्गमाह—

**पुरारादिति भिन्नेऽर्थे यौ वर्तेते विरोधिनि ।**
**अर्थप्रकरणापेक्षं तयोरप्यवधारणम् ॥२६८॥**

पुराराच्छब्दौ भाविभूतदूरान्तिकलक्षणेषु यथायोगं परस्परविरुद्धेष्वर्थेषु वर्तेते, तत्रैतयोरर्थ [प्रकरणादि]नार्थनिर्णयः । ततश्चात्रापि गौणमुख्य भावः स्यात्, न चैतदिष्टम्; अनयोरुभयत्रादि[मुख्यार्थ]त्वमिष्यत इत्यतोऽर्थप्रकरणादीन् केवलान् गौणमुख्यभावो न प्रयोजयतीति बोद्धव्यम् ॥२६८॥

इदानीमखण्डपक्षमाश्रित्य गौणमुख्यतामाह—

**वाक्यस्यार्थात् पदार्थानामपोद्धारे प्रकल्पिते ।**
**शब्दान्तरेण सम्बन्धः क[त]स्यैकस्योपपद्यते ॥२६९॥**

पूर्वमेकशब्ददर्शनेऽनेकशब्ददर्शने वा पदपदार्थयोः सत्यत्वमभ्युपगम्योक्तम्, तत्र त्वसत्यौ पदपदार्थौ बोद्धव्यौ । अतश्चाखण्डमेव वाक्यं वाक्यार्थस्य प्रत्यायकमिति पदपदार्थासद्भावे कीदृशो गौणमुख्यभावः किल ? गौर्वाहीक इत्यत्र पद-

---

तदेवमर्थद्वयस्य योऽयं निमित्तनिमित्तिभावस्तत्सहितस्यैवार्थप्रकरणादेर्गौणमुख्यविभागहेतुत्वम्, शुद्धस्य = केवलस्य तु तस्य तत्त्वेऽतिप्रसङ्गमाह—पुरारादितीति ।

अयमर्थः- यौ पुरारादितिशब्दौ भिन्ने विरोधिनि चार्थे वर्तेते । तद्यथा पुराशब्दो भाविनि भूते चार्थे भिन्ने परस्परविरोधिनि च वर्तते । तत्र भाविनि यथा भविष्यतीत्यनुवर्तमाने 'यावत्पुरानिपातयोर्लट्' । पुरा भुङ्क्ते भोक्ष्यत इत्यर्थः । भूते यथा—यजन्ति स्म पुरा युधिष्ठिर इति । आराच्छब्दोऽपि समीपे दूरे चार्थे भिन्ने परस्परविरोधिनि च वर्तते । 'आराद् दूरसमीपयोरि'त्यमरः । तत्रैव सति तयोरप्यर्थप्रकरणापेक्षमर्थावधारण इष्टम् । न च तत्र पुराशब्दस्य आराच्छब्दस्य वाऽर्थद्वये गौणमुख्यविभाग इष्टः, उभयोरपि मुख्यत्वाद् इत्यतो गौणमुख्यविभागः स्वसंपत्तये केवलान् अर्थप्रकरणादीन् न प्रयोजयति, किन्तु प्रागुक्तनिमित्तनिमित्तिभावसहितान् इति सिद्धम् ॥२६८॥

पूर्वमेकशब्ददर्शनेऽनेकशब्ददर्शने वा पदपदार्थयोः सत्यत्वं स्वीकृत्य गौणमुख्यविभागः सनिमित्त उक्तः । वस्तुतस्तु तत्रासत्यौ पदपदार्थौ, अतश्चाखण्डमेव वाक्यं तादृशस्य वाक्यार्थस्य प्रत्यायकमिति प्रागुक्तरीत्या स्थिते वाक्ये पदपदार्थासद्भावे कीदृशो गौणमुख्यविभागः ? तथाहि—गौर्वाहीक इत्यत्र पदपदार्थयोः सत्यत्वाभ्युपगमे विरुद्धसामानाधिकरण्यान्यथाऽनुपपत्त्या गोपदस्योपचरितार्थत्वम् = आरोपितार्थकत्वम्, इति गौणत्वमुच्यते, अनारोपितार्थकत्वे तु मुख्यत्वमिति । यदा तु गौर्वाहीक इत्यनेनाखण्डेनैव

पदार्थाभ्युपगमे विरुद्धसामानाधिकरण्यान्यथानुपपत्त्या गोपदस्योपचरितार्थत्व-मुच्यते; यदा तु गौर्वाहीक इत्यनेनाखण्डेनैव गोगतधर्मावच्छिन्नो बाहीक-लक्षणोऽर्थोऽखण्ड एव प्रतिपाद्यते, तदा पदपदार्थानामसत्यत्वात् क [त] स्यैकस्याविद्यमानस्यैव तथाभूतेनैवेतरेण सम्बन्ध इति कुतस्त्यो गौणविभागः?

यद्येवमेतस्मिन् पक्षे कथं गौणमुख्यविभागः स्यात्?

उच्यते—अपोद्धारसमाश्रयणेन पदपदार्थविभागमुपकल्प्य प्रसिद्ध्यप्रसिद्धि-निमित्तको गौणमुख्यविभागोऽभ्युपगन्तव्य इत्यभिप्रायः ॥२६९॥

ननु स्वतन्त्रं पदं पदान्तरमन्तरेण प्रयुज्यत एव, अतस्तत्र वास्तवः पद-पदार्थप्रविभाग इत्याह—

**यच्चाप्येकं पदं दृष्टं चरितास्तिक्रियं क्वचित् ।**
**तद्वाक्यान्तरमेवाहुर्न तदन्येन युज्यते ॥२७०॥**

---

गोगतजात्यादिधर्मावच्छिन्नो बाहीकलक्षणो वाक्यार्थोऽखण्ड एव प्रतिपाद्यते तत्तत्पदार्थानुसन्धानपुरस्सरः, तदा पदपदार्थानामसत्यत्वात् तस्यैकस्याविद्यमानस्यैव तथाभूतेनैवेतरेण सम्बन्ध इति कुतस्त्यो गौणमुख्यविभागः? इत्याशङ्क्येदानीं वाक्यवाक्यार्थयोरखण्डत्वपक्षे गौणमुख्यभावमुपपादयितुमाह— **वाक्यस्येति** ।

अत्र चतुर्थपादे—कस्यैकस्योपपद्यत इति पाठ उपलभ्यते, स तु न युक्तः, किन्तु 'तस्यैकस्य' इति पाठो युक्तः, अस्य पाठस्य समाधानपरत्वसंभवात्, यथाश्रुतपाठस्या-क्षेपपरत्वे एवोपपत्तेरिति ।

अयमर्थः—वाक्यस्याखण्डस्यार्थाद् अखण्डात्, पदार्थानाम्=वाक्यात् पदानां तदर्थाच्च तदर्थानां बुद्ध्यापोद्धारे=पृथक्कारे प्रकल्पिते सति तस्य बुद्ध्याऽपोद्धृतस्यैकस्य पदस्य, शब्दान्तरेण तादृशेनैव सम्बन्ध उपपद्यत इति ।

अयं भावः—अखण्डे वाक्ये वाक्यार्थे च बुद्धिप्रकल्पितापोद्धारसमाश्रयणेन पद-पदार्थविभागमुपकल्प्यार्थानां प्रसिद्ध्यप्रसिद्धिनिमित्तिको गौणमुख्यविभागोऽभ्युपगन्तव्य उपपन्नश्चेति ॥२६९॥

ननु क्वचित् स्वतन्त्रं पदं पदान्तरमन्तरेण प्रयुज्यत एव प्रातिपदिकार्थमात्रविषयक-प्रश्ने तन्मात्रबुबोधयिषया, अतस्तत्र वास्तवः पदपदार्थविभागोऽस्तीति गौणमुख्यविभागोऽपि तत्र वास्तवः संभवतीत्याशङ्क्याह – **यच्चापीति** ।

अत्र निपातद्वयमपि समुच्चयस्यैव द्योतकम्, द्वौ ब्राह्मणावितिवत्, संभेदेनान्यतर-वैयर्थ्यमिति न्यायाच्च ।

अयमर्थः—यच्चापि=यदपि, एकं पदं क्वचिद् दृष्टं गौरिति । तदपि चरितास्ति-क्रियम्=चरिता भुक्ता कवलीकृता, अन्तःप्रवेशितेति यावत्; चरतेर्भक्षणार्थत्वात्

एकं पदं चरितक्रियत्वाद्वाक्यमेवाखण्डमिति प्रतिपादयिष्यति। अतस्तदन्येन नैव युज्यत इति बोद्धव्यम् ॥२७०॥

एतदेव स्फुटीकृत्य प्रतिपादयितुमाह--

**यच्च कोऽयमिति प्रश्ने गौरश्व इति चोच्यते ।**
**प्रश्न एव क्रिया तत्र प्रक्रान्ता दर्शनादिका ॥२७१॥**

कोऽयमिति प्रश्ने दृश्यते भवतीति वा कापि क्रिया गर्भीकृता, सैवोत्तरेऽपि गर्भीकृतेति तदपि चरितक्रियमेकं वाक्यमेवेति मन्तव्यम् ॥२७१॥

इदानीं न्यूनाधिकभाव एव गौणमुख्यविभागकारणं कैश्चिदभ्युपगतमित्याशङ्क्य निराकर्तुमाह—

**नैवाधिकत्वं धर्माणां न्यूनता वा प्रयोजिका ।**
**आधिक्यमपि मन्यन्ते प्रसिद्धेर्न्यूनतां क्वचित् ॥२७२॥**

कस्मादित्याह—आधिक्यमपीति। आपेक्षिकत्वादस्याव्यवस्थितत्वमेवेति न तेन गौणमुख्यव्यवहारः कल्पयितुं शक्यः ॥२७२॥

---

अस्तिक्रिया येन तत्तथाभूतम्। अत एव तत्पदं क्रियान्तरानाकाङ्क्षत्वाद् वाक्यान्तरमेवेत्याहुः, अतस्तत्पदमन्येन पदेन न युज्यत इति।

अयं भावः—एकं पदं चरितास्तिक्रियत्वाद् वाक्यमेवाखण्डमिति प्रतिपादयिष्यत्यग्रे। अतस्तदन्येन पदेनानाकाङ्क्षत्वान्न युज्यत इति बोद्धव्यमिति ॥२७०॥

चरितास्तिक्रियमित्येतदेव प्रपञ्चेन स्फुटीकृत्य प्रतिपादयितुमाह—**यच्चेति**।

अयमर्थः—यच्च = यत्तु, कोऽयम्? इति प्रश्ने, गौरिति, अश्व इति च क्रियापदविरहितं पदमात्रमुच्यते। तत्र प्रश्ने एव क्रिया दर्शनादिका दृश्यते, जायते, अस्ति, भवतीत्यादिपदप्रतिपाद्याना काप्यनुच्चारितपदापि प्रश्नवाक्येनैव गर्भीकृता प्रक्रान्ता प्रक्रमे = आदावेव प्रश्नवाक्यतोऽवबुद्धाऽस्ति। सैवोत्तरेऽपि गौरिति, अश्व इति वा पदमात्रे गर्भीकृतेत्युत्तरवाक्यमपि चरितक्रियमेकं वाक्यमेव मन्तव्यमिति ॥२७१॥

केचित्तु धर्माणां न्यूनाधिकभाव एव गौणमुख्यविभागकारणमित्यभ्युपगच्छन्ति। तथाहि—यत्राधिकं जाड्यादिकं स मुख्यो गोपदार्थस्तद्वाचको गोशब्दो मुख्यः। यत्र तु बाहीकादौ ततो न्यूनं जाड्यादिकं स गौणो गोपदार्थस्तद्वाचको गोशब्दो गौण इति। एतन्मतं निराकर्तुमाह—**नैवाधिकत्वमिति**।

अयमर्थः—धर्माणामधिकत्वम् = प्रकर्षः न्यूनता = अपकर्षः, वा शब्दः समुच्चये। नैव प्रयोजिका = गौणमुख्यविभागस्य कारणम्। आधिक्यन्यूनत्वयोरापेक्षिकत्वादव्यवस्थितत्वेन व्यवस्थितगौणमुख्यविभागकारणत्वस्य तयोः कल्पयितुमशक्यत्वादित्याह—**आधिक्यमिति**।

सादृश्यमिदानीं निमित्तत्वेनाह—

**जातिशब्दोऽन्तरेणापि जातिं यत्र प्रयुज्यते ।**
**सम्बन्धिसदृशाद्धर्मात् तं गौणमपरे विदुः ॥२७३॥**

गोशब्दो गोत्वजातिं विनापि स्वव्यक्तिगतगुणसादृश्याद् वाहीके प्रयुज्यत इति सादृश्यं गौणमुख्यभावे निमित्तम् ॥२७३॥

अथ विपर्यासमेव निमित्तत्वेनाह—

**विपर्यासादिवार्थस्य यत्रार्थान्तरतामिव ।**
**मन्यन्ते स गवादिस्तु गौण इत्युच्यते क्वचित् ॥२७४॥**

अर्थस्य बाहीकलक्षणस्यार्थान्तरतां गोरूपतां विपर्यासादिव यत्र मन्यन्ते तत्र तस्मिंस्तद्वाचको गोशब्द. प्रवृत्तो गौण इति कचिन्मतम् । विपर्यासश्चाध्यव-

---

अयमर्थः—यतः क्वचित् = बाहीकादौ गोशब्दस्य गौणेऽर्थे आधिक्यमपि = सदपि जाड्यादिधर्माणामाधिक्यं प्रकर्षम्, प्रसिद्धेः = अनादिलोकप्रसिद्धिबलात् न्यूनताम् = अपकर्षम् मन्यन्ते लौकिकाः । ततश्चापेक्षिकत्वादनियते आधिक्यन्यूनत्वे इति न नियतं गौणमुख्यव्यवहारं प्रयोजयितुं शक्येते इति भावः ॥२७२॥

अथेदानीं मतान्तरमनुसृत्य सादृश्यं गौणमुख्यव्यवहारनिमित्तत्वेनाह—**जातिशब्द इति ।**

अयमर्थः—जातिशब्दो गोत्वादिजातिप्रवृत्तिनिमित्तको गवादिशब्दोऽन्तरेणापि जातिम् = गोत्वादिजातिं विनाऽपि, यत्र = बाहीकादौ, सम्बन्धिसदृशाद् धर्मात् = गोत्वादिजातेः, आश्रयत्वेन संबन्धिना गवादिव्यक्तिः, तस्या धर्मो जाड्यादिः, तत्सदृशो धर्मो बाहीकादिगतो जाड्यादिस्तस्मात् = तं धर्मं निमित्तीकृत्य प्रयुज्यते, तम् = सदृशधर्मं निमित्तीकृत्य बाहीकादौ प्रयुज्यमानं गवादिशब्दमपरे गौणं विदुरिति । गोशब्दो गोत्वजातिं विनाऽपि स्वाश्रयव्यक्तिगतजाड्यादिगुणसादृश्याद् बाहीके प्रयुज्यत इति सादृश्यमेव तत्र गौणमुख्यव्यवहारे निमित्तं विज्ञेयमिति भावः ॥ २७३ ॥

अथातस्मिंस्तद्भावाध्यारोपरूपं विपर्यासमेव शब्दस्य गौणत्वव्यवहारे निमित्तत्वेनाह—**विपर्यासादिवेति ।**

अयमर्थः—अर्थस्य = गौणत्वेनाभिमतस्य बाहीकादिलक्षणस्य, अर्थान्तरताम् = मुख्यार्थगवादिरूपताम्, विपर्यासादिव मुख्यार्थगवादिगतजाड्यादिगुणाध्यारोपमूलकात् = अतस्मिंस्तद्बुद्धिरूपाद् विपर्यासादिव, अत्रातद्वस्तुनस्तद्वस्तुत्वेनाध्यवसायरूपस्यानारोपप्रवृत्तस्य विपर्यासस्याभावादिव शब्दप्रयोगः । यत्र मन्यन्ते, स गवादिस्तु शब्दः, अतस्मिन् प्रवृत्तो गौण इत्युच्यते, क्वचिदिति कस्यचिन्मतमिति ।

सायेन भवति अध्यारोपेण च। रजतमिदमित्यत्र विपर्ययाध्यवसाय एव। इह त्वध्यारोप्यगोगतान् गुणान् बाहीकेऽध्यवस्यतीत्यधारोपिततद्भावोऽयं विपर्यासः। अत एव विपर्यासादिवेत्युक्तम्, तस्मादध्यवसिततद्भावनिमित्तप्रयुक्तो नास्ति गौणमुख्यव्यवहार इति ॥२७४॥

अथ रूपशक्तिनिमित्तिको गौणमुख्यव्यवहार इति पक्षान्तरं दृष्टान्तप्रदर्शनपूर्वकं दर्शयितुमाह—

**नियताः साधनत्वेन रूपशक्तिसमन्विताः।**
**यथा कर्मसु गम्यन्ते सीरासिमुसलादयः ॥२७५॥**

खड्गमानयेत्युक्ते सन्नद्धानां संग्रामकथा वर्तत इति रूपशक्तिमाहात्म्याद्‌-भिधीयते। एवं सीरादिषु ॥२७५॥

---

अयं भावः—अतस्मिंस्तद्वाचकशब्दप्रयोगरूपो विपर्यासो द्विधा भवति। अध्यवसायेन = विपर्ययरूपेण मिथ्याज्ञानेन = अभेदग्रहरूपेण = अध्यारोपेण = भेदग्रहस्य अभेदग्रहबाधस्य च सत्त्वेऽपि, इच्छाजन्येन सादृश्यदर्शनप्रयुक्तेन तद्भावाध्यारोपेण च। तत्र शुक्तिकायां रजतमिदमित्यत्र प्रयोगे विपर्यासरूपे विपर्ययज्ञानरूपोऽध्यवसाय एव निमित्तम्। गौर्बाहीक इति प्रयोगे तु विपर्यासरूपे तु तद्भावाध्यारोपो निमित्तम्। नह्यत्र तद्भावाध्यवसायरूपो विपर्ययोऽस्ति, विपर्ययबाधकस्य गोबाहीकयोर्भेदग्रहस्य सत्त्वात्। बाहीके हि गोरवधृतभेदे गोगतान् गुणान् जाड्यादीन् तत्सदृशान् वा दृष्ट्वा सादृश्यात्तत्र गोत्वमध्यारोप्य गौर्बाहीक इत्यध्यवस्यतीत्यध्यारोपितद्भावनिमित्तकोऽयं विपर्यासः। अत एव विपर्यासादिव इत्युक्तं कारिकायाम्। तद्भावाध्यवसायरूपविपर्याससदृशात् तद्भावाध्यारोपरूपविपर्यासाद् इति च तदर्थः। सादृश्यं चोभयोस्तद्भावविषयकत्वेन। तस्मादध्यवसिततद्भावरूपनिमित्तप्रयुक्तो नास्ति गौणमुख्यव्यवहारः, किन्त्वध्यारोपिततद्भावरूपनिमित्तप्रयुक्त एवेत्यवधेय इति ॥२७४॥

केचिद् वदन्ति रूपनिमित्तकः, शक्तिनिमित्तकश्च गौणमुख्यव्यवहार इति। तथा हि—यत्र सास्नादिमद्रूपं दृश्यते तत्र मुख्यो गोशब्दः, अन्यत्र तु गौणः। किञ्च, यत्र दोहनवहनादिसाधनत्वरूपा शक्तिर्दृश्यते तत्र गोशब्दो मुख्यः, अन्यत्र तु गौणः इति। साम्प्रतमिममेव पक्षं दृष्टान्तप्रदर्शनपूर्वकं दर्शयितुमाह---**नियता इति।**

अयमर्थः—यथा रूपशक्तिसमन्विताः = स्वस्वासाधारणाकारसमन्विताः तत्तत्प्रतिनियतक्रियानुकूलशक्तिसमन्विताश्च सीरासिमुसलादयः कर्मसु = स्वस्वसाध्यक्रियासु कर्षणच्छेदनावघातादिषु, साधनत्वेन = करणत्वेन, नियता गम्यन्ते, सीरासिमुसलादिशब्दैर्नियमेनाभिधीयन्ते ते तेषामर्था मुख्याः, रूपशक्तिरूपनिमित्तद्वयदर्शनेन प्रयोगात्। असाधारणरूपाभावे केवलं क्रियाशक्तिं समीक्ष्यैव प्रयोगे तु गौणः शब्दस्यार्थश्चेति वक्ष्यते—'शब्दो

क्रियान्तरे लताच्छेदादौ नैतेषां शक्तयो भवन्तीति वक्तुं पार्यते। ततश्च रूपे नियत एव कर्मणि सामर्थ्यमेषां व्यवसीयत इत्याह—

**क्रियान्तरेण चैतेषां भवन्ति नहि शक्तयः।**
**रूपादेव तु तादर्थ्यं नियमेन प्रतीयते॥ २७६॥**

प्रकृते योजयितुमाह—

**तथैव रूपशक्तिभ्यामुत्पत्त्या समवस्थितः।**
**शब्दो नियततादर्थ्यः शक्त्याऽन्यत्र प्रयुज्यते॥२७७॥**

उत्पत्त्या **स्वभावेनैव। यथोच्यते—'औत्पत्तिकः शब्दस्यार्थेन** सम्बन्धः।" **सहज एवेति गम्यते। अनेकशक्तिसद्भावाच्चान्यत्रापि प्रयुज्यते॥२७७॥**

---

नियततादर्थ्यः शक्त्याऽन्यत्र प्रयुज्यते इति। अनेकार्थकशब्दप्रयोगस्थलेऽप्यर्थप्रकरणादि-सहकृताद् रूपशक्तिमाहात्म्यादेव तत्तन्मुख्यार्थबोधः। रूपाभावे केवलशक्त्या प्रयोगे तु गौणः शब्दस्तदर्थश्च। यथा—खड्गमानयेत्युक्ते संनद्धानां सग्रामकथा वर्तत इति प्रकरणज्ञाने सति रूपशक्तिमाहात्म्यादसिरभिधीयते। वनाद् बृहच्छृङ्गः खड्ग आनीयतामित्यत्र शब्दान्तर-संनिधिसहकृताद् रूपशक्तिमाहात्म्यात् पशुविशेषोऽभिधीयते, रूपाभावे केवलया क्रियाशक्त्या **प्रयोगे** त्वन्यः कश्चनार्थः शङ्कुलादिर्गौणः प्रतीयत इति॥ २७५॥

क्रियान्तरे लताच्छेदादौ सीरासिमुसलादीनां शक्तयो भवन्तीति वक्तुं न शक्यते, अतः प्रतिनियतेन तत्तद्रूपेण प्रतिनियतास्वेन तत्तत्क्रियासु सामर्थ्यमेषां व्यवसीयत इत्याह—**क्रियान्तरेण चेति।**

अयमर्थः—एतेषाम् = सीरासिमुसलादिनाम्, क्रियान्तरेण = सह च कर्षणच्छेद-नावघातादिभ्यो भिन्नेन लताच्छेदनादिना कर्मणा सह नु शक्तयो न भवन्ति हि। अत्र हिशब्दः प्रसिद्धौ। अतो रूपादेव त्वेतेषा नियमेन तादर्थ्यम् = तत्तत्क्रियार्थत्वम्, तत्तक्रिया-नुकूलसामर्थ्यमिति यावत्। प्रतीयत इति। अत्र 'नियमेन' इत्यस्य स्थाने 'निधनेन' इति पाठोऽसाधुः, अर्थासगतेः॥२७६॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयितुमाह—**तथैवेति।**

अयमर्थः—तथैव सीरासिमुसलादिवदेव, रूपशक्तिभ्या प्रागुक्ताभ्याम्, उत्पत्त्या = **स्वभावेनैव**, समवस्थितः = सहावस्थितः। उत्पत्तिशब्दस्य स्वभावार्थकत्वं यथोच्यते पूर्वमी-मांसासूत्रे—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति। सहज एवेति गम्यत इति। **गोशब्दो नियततादर्थ्यः** = नियतम् = व्यवस्थितं तादर्थ्यम् = सास्नादिमत्पिण्डार्थकत्वं **यस्य स** तथा भूतोऽपि **शक्त्या** = भारवहनादिक्रियानुकूलया रूपाभावेन केवलया, **अन्यत्र** = बाहीके, **प्रयुज्यते**, गोशब्दे प्रसिद्धाप्रसिद्धभेदेनानेकशक्तिसद्भावात्। गोपदार्थे वा मुख्ये कर्षणक्रिया-ऽनुकूलशक्तेरन्यासामपि भारवहनादिक्रियाऽनुकूलशक्तीनामनेकासा सद्भावादिति॥२७७॥

ततश्च गौणमुख्यभावः कथमत्र ज्ञायेतेत्याह—

**श्रुतिमात्रेण यत्रास्य ता[या]दर्थ्यमवसीयते ।**
**मुख्यं तमर्थं मन्यन्ते गौणं यत्रोपपादितम् ॥२७८॥**

गौणं यत्रोपपादितमिति तदभिधानशक्तिसद्भावेऽप्यप्रसिद्धत्वाद्यत्नेन प्रकरणादिना गौणत्वाध्यवसाय इत्यर्थः। तदेवमर्थप्रकरणशब्दान्तरसन्निधानमात्रं प्रसिद्ध्यप्रसिद्धिसहितं चार्थप्रकरणादिकमत्रानादिसमुच्चयेन अङ्गाङ्गिभावेन चेति द्वौ पक्षौ। न्यूनाधिकभावः सादृश्यं विपर्यासो रूपशक्तिमिति सप्त पक्षाः। अत्राथप्रकरणमात्रं पुरारादित्यादिभिरतिप्रसङ्गादनिमित्तमेव। न्यूनाधिकभावस्याव्यवस्थितेरनिमित्तत्वमेव। सादृश्यस्यापि काश्यपप्रतिकृतिः काश्यप इत्यादौ निमित्तयुक्तेऽपि गौणत्वासद्भावादनिमित्ततैव। पारिशेष्यात् प्रसिद्ध्यप्रसिद्धिसहिताः प्रकरणादयः प्रकरणादिसहिते वा प्रसिद्ध्यप्रसिद्धी विपर्यासोऽध्यारोपः

---

यद्यनेकशक्तिसद्भावाद् गोशब्दो बाहीकेऽपि प्रयुज्यत इत्युच्यते तदा गोशब्दे गौणमुख्यविभागः कथं प्रतीयेतेत्याशङ्कायामाह—**श्रुतेमात्रेणेति** ।

अत्र यद्यपि 'तादर्थ्यमवसीयते' इति पाठः समुपलभ्यते, तथापि 'यादर्थ्यमवसीयते' इति पाठ एव युक्तः । 'मुख्यं तमर्थं मन्यन्ते' इत्यग्रिमग्रन्थानुरोधात् ।

अयमर्थः—यत्र = यस्मिन् प्रयोगे वाक्ये वा, अस्य गवादिशब्दस्य, यादर्थ्यम् = यदर्थबोधकत्वम्, श्रुतिमात्रेण = अर्थप्रकरणादिनिरपेक्षेण श्रवणमात्रेण, अवसीयते = निश्चीयते । तमर्थं मुख्यं मन्यन्ते शब्दार्थविदः । यत्र तु प्रयोगे वाक्ये वा, अर्थप्रकरणादिनोपपादितम्, न तु श्रवणमात्रेण यादर्थ्यमवसीयते, तमर्थं गौणं मन्यन्ते त एवेति ।

अय भावः—प्रसिद्धत्वाद् यदर्थाभिधाने शब्दस्यार्थप्रकरणाद्यपेक्षा नास्ति, किन्तु श्रुतिमात्रेण प्रतीयते, स तस्य मुख्योऽर्थः । यत्र तु यदर्थाभिधानशक्तिसद्भावेऽप्यप्रसिद्धत्वाद् अर्थप्रकरणादिरूपेण यत्नेन यदर्थप्रतीतिः, स तस्य गौणोऽर्थ इत्यध्यवसीयते ।

तदेवम्—एकमाहुरनेकार्थमि ( २।२५० )त्येतां कारिकामारभ्य प्रकृतकारिकां यावत् कृत्स्नेन प्रबन्धेन सप्तपक्षा उपदर्शिताः । तथाहि— अर्थप्रकरणशब्दान्तरसन्निधानमात्रम्, प्रसिद्ध्यप्रसिद्धिसहितमर्थप्रकरणादिकम् । अत्र साहित्यमनादिना समुच्चयेन, अङ्गाङ्गिभावेन चेति द्वौ पक्षौ । न्यूनाधिकभावः, सादृश्यम्, विपर्यासः रूपशक्तिरिति चत्वार इत्येवं संकलनया सप्त संपद्यन्ते । अत्रार्थप्रकरणमात्रं न गौणमुख्यविभागे निमित्तम् । पुरारादित्यादिशब्दैरर्थप्रकरणादिना प्रतीयमानस्यार्थद्वयस्यापि मुख्यत्वेनातिप्रसङ्गात् । न्यूनाधिकभावस्यापि न तत्र निमित्तत्वम् तस्यापेक्षिकत्वेनाव्यवस्थितत्वात् । सादृश्यस्यापि तत्रानिमित्ततैव, काश्यपप्रतिकृतिः काश्यप इत्यादौ कन् लुबन्ते सादृश्यरूपगौणत्वनिमित्तयुक्तेऽपि गौणत्वासद्भावात् । तदर्थे तस्य व्याकरणेन साधुत्वबोधनात् तदर्थे तस्य मुख्यत्वात् । परिशेष्यात् प्रसिद्ध्यप्रसिद्धिसहिताः प्रकरणादयः, प्रकरणादिसहिते वा प्रसिद्ध्यप्रसिद्धी, अध्यारोपलक्षणो

लक्षणो रूपशक्तिरिति चत्वारः प्रकारा गौणमुख्ययोर्निमित्तत्वेन परिगृहीताः। इत्येतैर्निमित्तैः शब्दोपचारोऽर्थोपचारो वा। स च द्विविधः—वाक्या (च्या) र्थोपचारः स्वरूपोपचारो वेत्येवं गौणमुख्यविभागो मन्तव्यः॥ २७८॥

इदानीमेतदेव लक्ष्ये योजयितुमाह—

**गोयुष्मन्महतां च्व्यर्थे स्वार्थादर्थान्तरे स्थितौ।**
**अर्थान्तरस्य तद्भावस्तत्र मुख्योऽपि दृश्यते॥ २७९॥**

गवादीनां शब्दानां स्वार्थादर्थान्तरेऽगवादिलक्षणे आश्रितपूर्वावस्थोपचरितोत्तरावस्थात्मके स्थितौ प्रवृत्तौ सत्यामर्थान्तरस्य बाहीकादेस्तद्भावो गवादिरूपतापत्तिलक्षणो यदा तदा गौणोऽर्थस्तेषां दृश्यत इति बोद्धव्यम्। न केवलं गौणोऽर्थस्तथा यावन्मुख्योऽपि दृश्यत इति बोद्धव्यम्।

तत्रागौर्गौः समपद्यत गोऽभवत्; अत्वं त्वं सम्पद्यते त्वद्भवतीत्यत्रागवि अयुष्मदि च गोरूपता युष्मद्रूपता चोत्तरावस्थाऽविद्यमानैवोपचर्यत इति गौणा-

---

विपर्यासः, रूपशक्तिरिति चत्वारः पक्षा गौणमुख्ययोर्निमित्तत्वेनात्र प्रकरणे परिगृहीताः। एतैरेव च चतुर्भिर्निमित्तैः शब्दोपचारः = शब्दसम्बन्धी गौणमुख्यत्वव्यवहारः अर्थोपचारो वा = अर्थसम्बन्धी गौणमुख्यत्वव्यवहारः।

स चायमर्थोपचारो द्विविधः—वाच्यार्थस्य गोत्वादेर्बाहीकादौ उपचार आरोपो जाड्यादिगुणमूलक एकः; अपरस्तु गोश दस्वरूपस्य बाहीके तद्गुणमूलक आरोपः। स चायं द्विविधोऽप्यर्थाश्रयत्वादर्थोपचारः। आद्यस्तूभयोरप्यर्थयोः शब्दशक्यत्वेऽपि शब्दस्य तत्तदर्थे प्रसिद्ध्यप्रसिद्धिभ्यां गौणमुख्यत्वव्यवहार इति शब्दोपचार इति॥ २७८॥

तदेवं यत्राध्यारोपलक्षणः शब्दोपचारोऽर्थोपचारो वा स गौणः, यत्र तु न तथा स मुख्य इति स्थिते च्व्यन्ते गोयुष्मन्महतां प्रयोगो अगौर्गौः समपद्यत गोऽभवत्, अत्वं त्वं संपद्यते त्वद् भवति, अमहान् महान् भूतो महद्भूतः पूर्णमाया चन्द्र इत्यादावविशेषेण गौणत्वप्रयुक्तं कार्यं दृश्यते। गोणमुख्यन्यायप्रवृत्त्या 'गोऽभवत्' इत्यत्र ओदिति प्रगृह्यसंज्ञाया अभावः, त्वद् भवति इत्यत्र मध्यमपुरुषाभावः, महद्भूत इत्यत्रान्महत इत्यात्त्वाभाव इति। तत्र अर्थान्तरेऽध्यारोपसत्त्वेन गोयुष्मदोर्गौणत्वस्य युक्तत्वेऽपि महच्छब्दे गौणत्वं तत्प्रयुक्त आत्त्वाभावश्च न युज्यते, पूर्वममहति चन्द्रे पूर्णाया महत्त्वस्य वस्तुभूतत्वादित्याशङ्क्ते—**गोयुष्मन्महतामिति।**

अयमर्थः—यत्र गोयुष्मन्महताम् = च्व्यन्तानां गोयुष्मन्महच्छब्दानाम्, च्व्यर्थेऽभूततद्भावरूपे स्वार्थादर्थान्तरेऽगवादिरूपे आश्रितपूर्वावस्थे उपचरितोत्तरावस्थे च स्वनिष्ठवाचकतानिरूपितवाच्यतासम्बन्धेन स्थितौ = स्थितिपूर्विकायां प्रवृत्तौ सत्याम्, अर्थान्तरस्य = बाहीकादेः, तद्भावः—गवादिरूपतापत्तिः तत्र गौणोऽर्थो मुख्योऽपि मुख्यश्च दृश्यते। तत्र गोयुष्मदोर्गौणोऽर्थः, महच्छब्दे तु मुख्य इति विवेकः।

र्थता। अमहान महान्, अशुक्लः शुक्लः सम्पद्यते: महद्भूतश्चन्द्रमा:, शुक्लीभवति पट इत्यत्र तूत्तरावस्था वस्तुसत्येवेति मुख्य एवार्थे महच्छुक्लीशब्दौ स्थिताविति नास्ति गौणत्वम्। अतश्च गोऽभवदित्यत्र गौणार्थत्वादोदन्तस्य निपातत्वेऽप्योदिति प्रगृह्यसंज्ञाया नास्त्येव प्राप्तिः। तथा त्वद्भवतीत्यत्रोपचरितस्य युष्मदर्थस्य प्रतीते-र्गौणार्थत्वादेव मध्यमपुरुषस्याप्यभाव:। यतो गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति भाष्ये स्थापितम्।

वार्त्तिककारस्तु गोऽभवदित्यत्र च्व्यर्थवृत्तित्वान्निपातस्य गोशब्दस्य च्व्यर्थ-लक्षणं मुख्यमेव सर्वमर्थमवगच्छन् गौणमुख्यभावासम्भवमेवाभिमन्यमानः प्रगृह्यसंज्ञानिवृत्तये 'ओतश्च्विप्रतिषेध:' ( १।१।१५ वा० ) इति यत्नमारब्धवान्।

भाष्यकारस्त्वभिप्रायानभिज्ञ एवान्तरङ्गत्वाद् गौणमुख्ययोर्मुख्ये सम्प्रत्यय इत्येवमत्र [न] प्रगृह्यसंज्ञा। अतोऽन्तरङ्गस्य कार्यस्याप्राप्तिरिति स्थितम्।

---

अयं भावः—अगौर्गौः समपद्यत गोऽभवत्, अत्वं त्वं संपद्यते त्वद्भवतीत्यत्र अगवि = अयुष्मदि = असंबोध्ये च गोरूपता युष्मद्रूपता च = संबोध्यरूपता च उत्तरा-वस्थाऽविद्यमानेत्यध्यारोप्यत इति गौणार्थता। अमहान् महान् भूतः, महद्भूतः पूर्णिमायां चन्द्रः, अशुक्लः शुक्लः संपद्यते शुक्लीभवति पट इत्यत्र तूत्तरावस्था वस्तुभूताऽस्त्येवेति मुख्य एवार्थे महच्छुक्ली शब्दौ स्थिताविति नास्ति गौणत्वम्। अतश्च गोशब्दस्य च्व्यन्तस्य ओदन्तनिपातत्वेऽपि 'ओत्' इति प्रगृह्यसंज्ञाया नास्त्येव प्राप्तिर्गौणार्थत्वात्। तथा त्वद्भ-वतीत्यत्राध्यारोपितस्य युष्मदर्थस्य = संबोध्यस्य प्रतीतेर्गौणार्थत्वादेव मध्यमपुरुषस्याभावः। गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादिति भाष्ये स्थितम्।

वार्त्तिककारस्तु गोऽभवदित्यत्र च्व्यन्तस्य निपातस्य गोशब्दस्य च्व्यर्थरूपोऽर्थो मुख्य एव, व्याकरणेनानुशिष्टत्वात्। अत एव व्याकरणं शक्तिग्राहकेषु संगृहीतं वृद्धैः—

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति।

एवमच्व्यन्तस्य च्व्यन्तस्य च गोशब्दस्यार्थे गौणमुख्यभावा संभवमेवाभिमन्यमानः प्रगृह्यसंज्ञानिवृत्तये—'ओतश्च्विप्रतिषेध' इति वचनमेवारब्धवान्।

भाष्यकारस्तु वार्त्तिककृतः प्रागुक्ताभिप्रायानभिज्ञ एवं मन्यते— गोऽभवदित्यत्रापर-निमित्तकत्वेनान्तरङ्गत्वात् प्राप्तापि प्रगृह्यसंज्ञा गौणमुख्यन्यायेन न भवतीति। अत्र यथोत्तरं मुनीनां प्रामाण्यमिति भाष्यकारमतमेव युक्तम्। व्याकरणस्य च क्वचिल्लक्षणाग्राहकत्वमेव युक्तम्, यत्रार्थस्य लोके गौणत्वेन व्यवहारः प्रत्ययश्च; लोकव्यवहारानुरोधित्वाद् व्याकर-णस्य। अत एव व्याकरणेन सिद्धमपि रूपं लोकेऽनभिधानाद् न प्रयुज्यत इति।

ननु शब्दानां गौणार्थत्वे गौणमुख्यन्यायेन कार्याप्रवृत्तौ गौर्वाहीकस्तिष्ठति, गां बाही-

ननु गौणार्थत्वे शब्दानां कार्यप्रवृत्तौ गौर्बाहीकस्तिष्ठति, गां बाहीकमानये-त्यत्र वृद्ध्यात्वे [न] प्राप्नुतः। अत्र ह्युपचरितार्थो गोशब्द इति उच्यते—द्विविधं हि शब्दानां कार्यमस्ति प्रातिपदिककार्यं पदकार्यं च। तत्र पदकार्येषु गौणमुख्य-न्यायः, न प्रातिपदिककार्येषु। पदस्य विरुद्धपदसामानाधिकरण्यान्यथानुपपत्त्या गौणार्थता, प्रातिपदिकस्य प्रयोगानर्हस्य पदान्तरेण सामानाधिकरण्यासम्भवाद् गौणार्थता नैव निश्चेतुं शक्यते. प्रातिपदिककार्यं च वृद्ध्यात्वे इति तत्प्रवर्तत एव। तदुक्तम्—"अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्वे" (म० भा० १।१।१५) इति ॥२७९॥

तदेवं गोऽभवत् त्वद्भवतीति चात्र गौणार्थत्वे सिद्ध्यतीष्टं महद्भूत-श्चन्द्रमा इत्यत्र तु चन्द्रमसः पौर्णमास्यां महत्त्वस्य सद्भावादनुपचरितत्वमिति महच्छब्दस्य 'आन्महत' इत्यादिना प्राप्नोत्येवात्वमित्याशङ्क्यात्रापि गौणार्थतां प्रतिपादयितुमाह—

**महत्त्वं शुक्लभावं च प्रकृतिः प्रतिपद्यते।**
**भेदेनापेक्षिता सा तु गौणत्वस्य प्रयोजिका ॥२८०॥**

---

कमानय, इत्यत्र वृद्ध्यात्वे न प्राप्नुतः, अत्र गोशब्दस्य उपचरितार्थत्वात् = आरोपित-गोत्ववद् बाहीकरूपार्थबोधकत्वेन गौणत्वात् इति।

अत्रोच्यते—द्विविधं हि शब्दानां कार्यमस्ति—प्रातिपदिककार्यम्, पदकार्यं चेति। पदकार्यत्वं च विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम्। तत्र पदकार्येषु गौणमुख्य-न्यायः प्रवर्तते, न प्रातिपदिककार्येषु। पदस्य हि विरुद्धपदसामानाधिकरण्यान्यथाऽनुपपत्त्या गौणार्थता निश्चेतुं शक्यते। प्रातिपदिकस्य तु पदान्तरेण सह प्रयोगानर्हस्य सामानाधि-करण्यासंभवाद् गौणार्थता नैव निश्चेतुं शक्यत इति प्रातिपदिकस्य स्वकार्यप्रवृत्तिवेलायां न गौणार्थत्वग्रह इति प्रातिपदिककार्ये न गौणमुख्यन्यायप्रवृत्तिरिति प्रातिपदिककार्यरूपे वृद्ध्यात्वे 'गौर्बाहीकस्तिष्ठति, गां बाहीकमानये' त्यत्र प्रवर्तेते एव।

तदुक्तं भाष्ये—"अर्थाश्रये एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्वे" इति।

अयमर्थः— अर्थवत्त्वयोग्यपदाश्रये कार्ये, एतद् = गौणमुख्यन्यायस्वरूपम्, एवं भवति—गौणार्थे शब्दे कार्यस्य निवर्तकम्, मुख्ये च कार्यस्य प्रवर्तकं भवति। वृद्ध्यात्वे च तु, शब्दाश्रये लोके केवलप्रातिपदिकस्य प्रयोगाभावेन अर्थवत्त्वरहितप्रातिपदिकरूपशब्द-मात्राश्रय इति ॥२७९॥

तदेवं यद्यपि 'गोऽभवत्, त्वद् भवति' इत्यादौ व्यज्यते गौणार्थत्वे व्यवस्थिते गौण-मुख्यन्यायप्रवृत्त्या यथायोगं प्रगृह्यसंज्ञाया अभावः, मध्यमपुरुषाऽभावश्चेतीष्टद्वयमपि सिद्धम्, तथापि महद्भूतश्चन्द्रमा इत्यत्र चन्द्रमसः पूर्णिमायां महत्त्वस्य वास्तवस्य सद्भावादनुपचरि-

महद्भूतश्चन्द्रमाः शुक्लीभवति पट इत्यत्रापि प्रकृतिर्महत्त्वं शुक्लभवनं च भेदेनाश्रितपूर्वावस्थोपचरितोत्तरावस्थतयैव प्रतिपद्यते, ततश्च यद्यपि वस्तुवृत्त्या एक एवार्थः, तथापि वक्त्रापेक्षिता आश्रिता सती गौणत्वं प्रयोजयति।

एतदुक्तं भवति—यद्यप्यत्र महत्त्वं शुक्लभावश्च तथैव विद्यते, तथाप्यत्र शब्दवृत्त्योन्मज्जद्रूपा प्रकृत्यवस्थैवोच्यत इति तदाश्रयेणोपचरितत्वान्महत्त्वस्य न भवत्यत्र महच्छब्दस्यात्त्वम्। शुक्लीभवति पट इत्यस्य कार्यं न किञ्चिदस्ति, अर्थप्रदर्शनाय केवलमत्र प्रदश्यते ॥२८०॥

अथाग्निसोमौ माणवकावित्यत्र संज्ञाशब्दत्वान्मुख्यार्थत्वे 'अग्नेःस्तुत्स्तोमसोमाः" (८।३।८२) इति षत्वं कस्मान्न क्रियत इत्याह—

**अग्निसोमादयः शब्दा ये स्वरूपनिबन्धनाः।**
**संज्ञिभिः संप्रयुज्यन्तेऽप्रसिद्धेस्तेषु गौणता ॥२८१॥**

---

तत्वम् = अनारोपितत्वम् इति। अत्र मुख्यार्थकस्य महच्छब्दस्य 'आन्महत' इत्यादिना प्राप्नोत्येवात्त्वमित्याशङ्क्यात्रापि गौणार्थतां प्रतिपादयितुमाह— महत्त्वमिति।

अयमर्थः—महद्भूतश्चन्द्रमाः शुक्लीभवति पट इत्यत्रापि अमहान् चन्द्रः, अशुक्लश्च पटो वस्तुतोऽभेदेऽप्यवस्थाकृतभेदमाश्रित्य आश्रितपूर्वावस्थः प्रकृतिः, उपचरितोत्तरावस्थस्तु = आरोपितोत्तरावस्थस्तु विकृतिरित्येवं महत्त्वं शुक्लभावं च स्वस्मिन्नविद्यमानं प्रतिपद्यते = आरोपेण प्राप्नोति। सा तु प्रकृतिर्यद्यपि वस्तुगत्या विकृतेरभिन्नैव, तथापि भेदेनापेक्षिता = वक्त्रा विवक्षया भेदेनाश्रिता सती गौणत्वस्य प्रयोजिकेति।

अयं भावः—यद्यप्यत्र महत्त्वं शुक्लभावश्च तथ्यमेव विद्यते, तथाप्यत्र च्व्यन्तेन महत्पदेन शब्दवृत्त्या = च्वितद्धितवृत्त्या प्रकृत्यवस्थैव पूर्वावस्थारूपा विशेष्यतया प्राधान्येनोन्मज्जद्रूपोच्यत, उत्तरावस्था तु तत्राध्यारोपिताऽप्राधान्येन विशेषणतया निमज्जद्रूपोच्यत इति तत्र प्रकृतौ महत्त्वस्यारोपितत्वान्न भवति महद्भूतश्चन्द्र इत्यत्र च्व्यन्ते महच्छब्दस्यात्त्वमिति। यद्यपि शुक्लीभवति पट इत्यत्र न किञ्चिदपि गौणत्वेन निवर्तनीयं कार्यमस्ति, तथापीदं केवलं गौणार्थप्रदर्शनायैव प्रदर्श्यत इति बोध्यमिति ॥२८०॥

नन्विहाग्निसोमादयः शब्दा देवतावाचकाः, तेजस्वित्वाह्लादकत्वादिगुणसादृश्येन माणवकादावध्यारोपितशब्दस्वरूपनिमित्तकाश्च पित्रादिसंकेतेन समध्यारोपितशब्दस्वरूपनिमित्ताकाश्च संज्ञाभूतार्थवृत्तय इति त्रिविधाः संभवन्ति। तत्र देवतायां संज्ञासु चैते मुख्यार्था एव, मुख्यार्थबाधप्रतिसन्धानपुरस्सरं सादृश्याद्यप्रतिसन्धानपुरस्सरं च प्रवृत्तेरिति। अग्निसोमौ माणवकावित्यत्र संज्ञाशब्दत्वान्मुख्यार्थत्वे 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वं कस्मान्न क्रियत इत्याशङ्क्याह—अग्निसोमादय इति।

अयमर्थः—येऽग्निसोमादयः शब्दाः स्वरूपनिबन्धनाः = पित्रादिसंकेतेन समध्यारो-

इहाग्निसोमादयः शब्दा देवतावाचकाः स्वरूपनिमित्तकाश्च संज्ञाभूतार्थवृत्तयश्चेति त्रिविधाः सम्भवन्ति। तत्र देवतायां स्वरूपनिमित्तेषु चैते मुख्यार्था एव। तत्र संज्ञायां गौणतेति। देवतायामग्निसोमादयः प्ररूढिमुपगता माणवके चाप्रसिद्धा इत्येवमप्रसिद्ध्या तेषां गौणार्थत्वमुच्यते, न त्वध्यारोपेणेति बोद्धव्यम्। अतश्च षत्वाप्रवृत्तिरेव ॥२८१॥

यत्र त्वतस्मिंस्तदध्यारोपेणाग्निसोमादयः प्रवर्त्यन्ते, तत्र स्फुटैव गौणार्थता तेषामित्याह—

**अग्निदत्तस्तु योऽग्निः स्यात् तत्र स्वार्थोपसर्जनः।**
**शब्दो दत्तार्थवृत्तित्वाद् गौणत्वं प्रतिपद्यते ॥२८२॥**

---

पितशब्दस्वरूपप्रवृत्तिनिमित्तकाः संज्ञाशब्दाः संज्ञिभिरर्थैः सह संप्रयुज्यन्ते = वाच्यवाचकभावसंबन्धेन संप्रयुक्ताः = संबद्धाः भवन्ति, तेषु = शब्देषु, अप्रसिद्धेर्गौणता = अप्रसिद्धिमूलकं गौणत्वम्, न तु सादृश्यादिगुणमूलकशब्दस्वरूपाध्यारोपमूलकं गौणत्वमिति गौणमुख्यन्यायप्रवृत्त्याऽग्निसोमौ माणवकावित्यत्र षत्वं न भवतीति।

अयं भावः—इहाग्निसोमादयः शब्दास्त्रिविधाः संभवन्तीत्युक्तं प्राक्, तेषु ये सादृश्यमूलकशब्दस्वरूपाध्यारोपप्रवृत्तिनिमित्तकास्ते गौणा इति स्थितमेव। एवं देवतायामग्निसोमादयः शब्दाः प्ररूढिम् = प्रसिद्धिम् उपगताः, माणवके च संज्ञिन्यप्रसिद्धा इत्यप्रसिद्धया तेषां संज्ञाभूतानां गौणार्थत्वमुच्यते, न त्वध्यारोपेणेत्यतस्तत्र षत्वाप्रवृत्तिरिति। तदुक्तमभियुक्तैः—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ इति ॥

अयमर्थः—ये शब्दा अभिव्यक्तपदार्थाः = अभिव्यक्ताः प्रसिद्धा अर्था येषां ते अभिव्यक्तपदार्थाः = प्रसिद्धपदार्थकाः। अस्यैव व्याख्यानम्—स्वतन्त्रा लोकविश्रुता इति। स्वतन्त्राः = स्वार्थाभिधाने पदान्तरसमभिव्याहारानपेक्षाः, लोकविश्रुताः = तदर्थकत्वेन लोके विश्रुताः = विख्याताः = प्रसिद्धा इति यावत्। यथाग्निसोमादयः शब्दा देवतायां स्वतन्त्रा लोकविश्रुताः, संज्ञाभूतास्तु ते न तथेति। तेषु शब्देषु शास्त्रार्थः = शास्त्रप्रयोजनं शास्त्राभिधेयं वा शास्त्रविधेयं कार्यम् = कर्तव्यम्, तदुक्तिषु = तेषामुक्तिरिव वचनमुच्चारणमिव आनुपूर्वीसाम्येन वचनं येषां तेषु तत्सदृशेषु शब्देषु संज्ञाभूतेषु तत्सदृशार्थपरेषु वा शास्त्रार्थो न कर्तव्य इति। एवं चाप्रसिद्धत्वं सदृशलाक्षणिकार्थबोधकत्वं वा गौणत्वं गौणमुख्यन्याये विवक्षितमिति फलितमिति ॥२८१॥

एवमप्रसिद्धरूपं गौणत्वमभिधाय यत्र त्वतस्मिंस्तदध्यारोपेण सादृश्यमूलकेनाग्निसोमादयः शब्दाः प्रवर्तन्ते माणवकादिषु, तत्र स्फुटैव गौणार्थता तेषामित्याह—**अग्निदत्तस्त्विति।**

स्वार्थं देवतालक्षणमुपसर्जनीकृत्यार्थान्तरमेव तदध्यारोपेण यत्राभिदधति, तत्र गौणार्थत्वं स्फुटमेवैते शब्दाः प्रतिपद्यन्त इति बोद्धव्यम् ॥२८२॥

अथ हरिश्चन्द्रो माणवक इत्यत्र सुट्समर्थनार्थं प्रस्तोतुमाह—

**निमित्तभेदात् प्रक्रान्ते शब्दव्युत्पत्तिकर्मणि ।**
**हरिश्चन्द्रादिषु सुटो भावाभावौ व्यवस्थितौ ॥२८३॥**

हरिश्चन्द्रादिषु सुटो भावाभावौ नियतावेव, यस्माच्छब्दव्युत्पत्तिक्रियायां तत्र निमित्तभेदः समाश्रीयते। ऋषावनादिभूते प्रसिद्धो हरिश्चन्द्रः साधुः हरिश्चन्द्रो यस्येत्येतस्मिंस्तु व्युत्पत्तिकर्मण्यभाव एव स्फुट इत्यसाङ्कर्यमेव ॥२८३॥

---

अयमर्थः—यस्तु अग्निदत्तः = अग्निदत्तरूपोऽर्थः, अग्निः स्यात् = अग्निपदबोध्यः स्यात्। तत्र स्वार्थोपसर्जनः स्वार्थो देवतारूप उपसर्जनम् = अध्यारोपेण विशेषणं यस्य स तथाभूतोऽग्निशब्दः। दत्तार्थवृत्तित्वात् = अग्निदत्तपदार्थवृत्तित्वात्, स्फुटमेव गौणत्वं प्रतिपद्यते = प्राप्नोतीति।

अयं भावः—यत्राग्निशब्दः स्वार्थं देवतारूपं सादृश्यमूलकाध्यारोपेणार्थान्तरेऽग्निदत्तादावुपसर्जनीकृत्य तादात्म्येन विशेषणीकृत्यार्थान्तरमभिदधाति, तत्र गौणार्थत्वं स्फुटमेवायमग्निशब्दः प्रतिपद्यत इति बोध्यमिति ॥२८२॥

ननु ऋषौ हरिश्चन्द्र इति भवति, अन्यत्र तु हरिचन्द्र इति। तथा च सुड्विधायकं पाणिनीयं सूत्रम् — 'प्रस्कण्वहरिश्चन्द्रावृषी' (६।१।१५३) इति। एवञ्च हरिश्चन्द्रो माणवक इति प्रयोगो न स्यात्। दृश्यते च हरिश्चन्द्रे ऋषिगतगुणसंदर्शनेन माणवकेऽपि साक्षाद् हरिश्चन्द्रोऽयमिति सुड्घटितो गौणः प्रयोग इत्याशङ्क्यात्र सुटं द्वितीयश्लोकेन समर्थयिष्यमाणः प्रथमपद्येन तदनुकूलं प्रस्तावमाचयति = निमित्तभेदादिति।

अयमर्थः—निमित्तभेदाद् ऋषित्वतदभावसमानाधिकरणयोग (अवयवार्थ) रूपप्रवृत्तिनिमित्तभेदात्, शब्दव्युत्पत्तिकर्मणि हरिश्चन्द्रशब्दयोस्तत्तदर्थे साधुत्वबोधनरूपा या व्युत्पत्तिस्तद्रूपे कर्मणि 'प्रस्कण्वहरिश्चन्द्रावृषी' इति सूत्रेण पाणिनिना प्रक्रान्ते = उपक्रान्ते सति, हरिश्चन्द्रादिषु हरिश्चन्द्रहरिचन्द्रादिशब्देषु सुटो यथाशास्त्रं भावाभावौ व्यवस्थिताविति।

अयं भावः—हरिश्चन्द्रहरिचन्द्रशब्दयोः सुटो भावाभावौ प्रागुक्तप्रवृत्तिनिमित्तभेदान्नियतावेव। एवं चानादिभूते ऋषौ हरिश्चन्द्रशब्दः सुड्घटित एव साधुः। हरिश्चन्द्रो यस्य (हरिः = हरिद्वर्णः, हरित्वेनाभिमन्यमानो वा) स हरिचन्द्र इत्येतस्मिंस्तु व्युत्पत्तिकर्मणि सुटोऽभाव एवेति तत्तदर्थेऽनयोः प्रयोगेऽसाङ्कर्यमेवेति ॥२८३॥

अथ यदा पुरातनहरिश्चन्द्रगतगुणसंदर्शनेन साक्षाद्धरिश्चन्द्रोऽयं माणवक इत्युच्यते, तदा किं गौणार्थत्वान्न भवितव्यमेव सुटेत्यसाङ्कर्यं दर्शयितुमाह—

**ऋष्यादौ प्राप्तसंस्कारो यः शब्दोऽन्येन युज्यते ।**
**तत्रान्तरङ्गः संस्कारो बाह्येऽर्थे न निवर्तते ॥२८४॥**

हरिश्चन्द्रशब्दस्तावदृषावेव संस्कृत उत्तरकालं प्राप्तसंस्कारः सन्नसौ यदा हरिश्चन्द्रगुणसधर्मण्यन्यत्र प्रयुज्यते तदान्तरङ्गः संस्कारो वाक्यार्थवेलायामर्थान्तरसम्बन्धावसरे न निवर्तत इति वैयाकरणसमयः । यथा करिष्यति श्वः, वर्षेण गमिष्यतीत्यत्र श्वःशब्दसन्निधानाद्भविष्यदनद्यतनलक्षणकालप्रादुर्भावे भविष्यत्सामान्यसमाश्रयणेन विहितस्य लृटो न निवृत्तिः शक्या कर्तुम्, एवमत्रापि हरिश्चन्द्रो माणवक इति गौणार्थत्वेऽपि सुट्सिद्धिरेवेति ॥२८४॥

---

ननु 'हरिश्चन्द्रादिषु सुटो भावाभावौ व्यवस्थितौ' (२८३) इति स्थिते यदा पुरातनर्षिहरिश्चन्द्रगतगुणसंदर्शनेन 'साक्षाद्धरिश्चन्द्रोऽयं माणवकः' इत्युच्यते, तदा किं गौणार्थत्वान्न भवितव्यमेव सुटेत्याशङ्क्य ऋषिगुणसंदर्शनेन ऋषिवाचकस्य माणवके तत्त्वाध्यारोपेण प्रयोगे भवितव्यमेव सुटा, ऋषौ संस्कृतस्य माणवके गौणे प्रयोगे जातस्य संस्कारस्य निवृत्त्ययोगात्; जातसंस्कारो न निवर्तत इति वैयाकरणसमयात् । अत एव सिंहो माणवक इत्यादौ पूर्वं प्रातिपदिकार्थमात्रे जातायाः प्रथमायाः पदान्तरसम्बन्धे प्रातिपदिकार्थव्यतिरिक्तसादृश्यमानेऽपि न निवृत्तिरिति वैयाकरणाः । तथा च ऋषेरन्यत्र यदा हरिश्चन्द्रशब्दस्य ऋषिगुणसंदर्शनेन प्रयोगस्तदा सुड् भवति, यदा तु षष्ठ्यर्थबहुव्रीहिमाश्रित्य योगदर्शनेन प्रयोगस्तदा स न भवतीति सुटो भावाभावयोरसाङ्कर्यं दर्शयितुमाह—ऋष्यादाविति ।

अयमर्थः—यो व्याकरणेन ऋष्यादौ सुडादिकरणेन प्राप्तसंस्कारो हरिश्चन्द्रादिशब्दः ऋष्यादितोऽन्येन माणवकादिना गुणसंदर्शनमूलकस्त्वाध्यारोपेण युज्यते = संबध्यते, तत्र शब्देऽन्तरङ्गः पदान्तरनिरपेक्षत्वेन स्वार्थमात्रमादाय प्रवृत्तः संस्कारः सुडादिरूपः, बाह्येऽर्थे सति तदर्थस्य गौणेनाध्यारोपेण बाह्यार्थसम्बद्धे सति न निवर्तते, जातः संस्कारो न निवर्तत इति वैयाकरणसमयादिति ।

अयं भावः—हरिश्चन्द्रशब्दो व्याकरणेन ऋषावेव संस्कृतः । तथा च यदाऽसौ संस्कारोत्तरकाले हरिश्चन्द्रगुणसंदर्शनेन तत्सदृशे माणवके प्रयुज्यते, तदा वाक्यार्थबोधवेलायां तदर्थस्यार्थान्तरसम्बन्धावसरे प्राक् प्रवृत्तोऽन्तरङ्गः संस्कारो न निवर्तत इति वैयाकरणसिद्धान्तः । यथा करिष्यति श्वः, गमिष्यति वर्षेण इत्यत्र श्वःशब्दसंनिधानाद् वर्षशब्दसंनिधानाच्च भविष्यदनद्यतनलक्षणकालप्रादुर्भावेऽपि भविष्यत्सामान्यसमाश्रयणेन विहितस्य लृटो न निवृत्तिः कर्तुं शक्या, एवं हरिश्चन्द्रो माणवक इत्यत्र गौणार्थत्वेऽपि सुटोऽनिवृत्तिरिति ॥२८४॥

इदानीं न्यायदर्शनच्छायया बौद्ध एव शब्दार्थो नास्ति कश्चिच्छब्देषु गौणमुख्यविभाग इत्याशङ्क्याह—

**अत्यन्तविपरीतोऽपि यदा योऽर्थोऽवधार्यते ।**
**यथासंप्रत्ययं शब्दस्तत्र मुख्यः प्रवर्तते ॥२८५॥**

इह वक्तुरिच्छया विषयीकृतेऽर्थे कश्चिद्यावच्छब्दः प्रवर्तते, तावद्यदा यथा विपर्ययेण चार्थावधारणं क्रियते, तदा यथासंप्रत्ययं प्रत्ययानुसारेणैव शब्दः प्रवर्तमानः सर्वत्र मुख्यतयैव प्रवृत्त इति वाक्ये न शब्देषु गौणमुख्यविभागः कश्चित् ॥२८५॥

इदानीमत्रापि गौणमुख्यविभागं समर्थयितुं सत्यासत्यविभागं तावदुपक्रमितुमाह—

**यद्यपि प्रत्ययाधीनमर्थतत्त्वावधारणम् ।**
**न सर्वः प्रत्ययस्तस्मिन्नसिद्ध इव जायते ॥८६॥**

---

इदानीं न्यायदर्शनच्छायया "शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" इति मीमांसासूत्रम् । तदर्थस्तु—पशुना यजेतेत्यत्र शब्दवत् शब्दवाच्यं यथा भवति तथोपलभ्यते एकत्वम् , हि = यतः, तदागमे = तस्य एकवचनस्य, आगमे = श्रवणे, दृश्यते एकत्वम् , अतस्तस्य एकत्वस्य अङ्गत्वज्ञानम् = यागाङ्गत्वज्ञानम् , यथाऽन्येषां पशुलौहित्यादीनामिति । तत्सूत्रनिर्धारितो न्यायः सिद्धान्तः, यच्छब्दान्वयव्यतिरेकानुविधायित्वं यदर्थबोधस्य तदर्थस्य तच्छब्दवाच्यत्वमित्येवंरूपस्तस्य यद् दर्शनं ज्ञानं तस्य च्छाया यच्छब्दान्वयानुविधायित्वं यदर्थबोधस्य तदर्थस्य तच्छब्दवाच्यत्वमित्येवंरूपा तया ।

बौद्ध एव शब्दार्थो यो यच्छब्दोच्चारणे बुद्ध्यारूढो भवति । अतो नास्ति कश्चिच्छब्देषु गौणमुख्यविभागः । गौणत्वेनाभिमतस्याप्यर्थस्य तच्छब्दप्रयोगे बुद्ध्यारोहेण मुख्यत्वादित्याशङ्कते—**अत्यन्तविपरीतोऽपीति** ।

अयमर्थः—यदा योऽर्थः, अत्यन्तविपरीतोऽपि मुख्यत्वेन प्रसिद्धादत्यन्तभिन्नोऽपि, यस्माच्छब्दादवधार्यते, तदा तत्रार्थे स शब्दो यथासंप्रत्ययं संप्रत्ययमर्थावधारणमनतिक्रम्य, मुख्य एव सन् प्रवर्तते न गौण इति नास्ति गौणमुख्यविभागः कश्चिदिति ।

अयं भावः—इह वक्तुरिच्छया विषयीकृते यावत्यर्थे कश्चिच्छब्दः प्रवर्तते, तावत्यर्थे तस्य शब्दस्य शक्तिरेव । यथा यदा स्वमुख्यार्थाद् विपर्ययेण यस्माच्छब्दादर्थावधारणं क्रियते, तदा स शब्दः प्रत्ययानुसारेणैव प्रवर्तमानः सर्वेष्वर्थेषु मुख्यतयैव प्रवृत्त इति न वाक्ये न वा शब्देषु गौणमुख्यविभागः कश्चिदिति ॥२८५॥

इदानीं बौद्ध एव शब्दार्थ इति मतेऽपि गौणमुख्यविभागं समर्थयितुं तदुपयोगितया सत्यासत्यविभागं वक्तुमुपक्रमते—**यद्यपीति** ।

**दर्शनं सलिले तुल्यं मृगतृष्णादिदर्शनैः ।**
**तुल्यत्वे दर्शनादीनां न जलं मृगतृष्णिका ॥२८७॥**
**यदसाधारणं कार्यं प्रसिद्धं रज्जुसर्पयोः ।**
**तेन भेदः परिच्छेद्यस्तयोस्तुल्येऽपि दर्शने ॥२८८॥**

---

मन्दमतयो हि सत्यासत्यविभागमेव गौणमुख्यविभागं प्रतीयुरिति । न चैतद् युक्तम्, असत्यार्थस्य भेदग्रहाभावे सत्यनाहार्यविभ्रमप्रत्ययविषयत्वात्, गौणार्थस्य च भेदग्रहपुरस्सरस्य आहार्यविभ्रमप्रत्ययस्य विषयत्वादिति ।

अयमर्थः—यद्यपि प्रत्ययाधीनं प्रत्ययरूपलिङ्गाधीनम्, अर्थतत्त्वावधारणम् अर्थे सत्यत्वानुमितिः, तथापि सर्वः प्रत्ययः, यथार्थोऽयथार्थो वा, तस्मिन् सत्येऽसत्ये चार्थे, असिद्ध इव न जायते, किन्तु सिद्ध एव जायते; सत्येऽसत्ये च जले जलप्रत्ययाविशेषात् । अत्रासिद्धस्य शशशृङ्गादिवत् प्रतिषेधायोगाद् बुद्ध्या प्रसक्तस्य असिद्धत्वस्य प्रतिषेधं बोधयितुमत्रेव शब्दप्रयोगः । वाक्यालङ्कारे वा इवशब्दोऽनर्थक एव, अध्यागच्छतीत्यादावध्यादिवत् । इहशब्दो वा इवशब्दरूपतया विकृतः । इह इत्यस्य लोके इत्यर्थः ॥२८६॥

यद्यपि जलप्रत्ययः सत्ये जले मृगतृष्णिकादौ च तुल्यस्तथापि तद्विषयीभूता मृगतृष्णिका जलं न भवतीत्यतो न प्रत्ययरूपलिङ्गाधीनमर्थतत्त्वावधारणमिति प्रत्ययरूपस्य हेतोर्व्यभिचारित्वं दर्शयति—**दर्शनमिति ।**

अत्र यद्यपीति तथापीति च पदद्वयमध्याहर्तव्यम् ।

अयमर्थः—यद्यपि सलिले वास्तवे दर्शनं जलप्रत्ययः, मृगतृष्णादिदर्शनैरसत्यसलिलविषयैस्तुल्यम्; तथापि मृगतृष्णिकादिषु दर्शनादीनां तुल्यत्वेऽपि, अत्रादिपदेनानुमित्यादयो गृह्यन्ते, मृगतृष्णिका जलं न भवति । अतः प्रत्ययोऽर्थतत्त्वावधारणे लिङ्गं न भवति, व्यभिचारित्वादिति भावः ॥२८७॥

एवं स्वरूपप्रत्ययस्य व्यभिचारित्वे स्थितेऽसाधारणकार्यस्य प्रमितस्य तत्प्रमारूपस्य प्रत्ययस्य वाऽर्थतत्त्वावधारणहेतुत्वं व्यवस्थापयति— **यदसाधारणमिति ।**

अयमर्थः—यद् रज्जुसर्पयोः, इदं सत्यमिथ्यावस्तुनोरुपलक्षणम् । असाधारणं कार्यम् । यथा रज्जोर्बन्धनम्, सर्पस्य दंशनमिति । सर्पस्य जीवतो मृतस्य वा बन्धने योग्यत्वेऽपि न तत्तस्य कार्यम्, लोके तेन तस्याक्रियमाणत्वात् । तेन = असाधारणकार्यदर्शनेन, तयोः = रज्जुसर्पयोः दर्शने जलत्वप्रकारके तुल्ये सत्यपि, भेदो रज्जुः सत्या, सर्पो मिथ्येति सत्यत्वमिथ्यात्वाभ्यां निश्चीयमानाभ्यां भेदः, परिच्छेद्यः = निश्चेय इति । तथा चासाधारणकार्यकरवस्तुविषयकत्वतत्त्वाभाववद्वस्तुविषयकत्वाभ्यां दर्शनद्वयस्य सत्यासत्यवस्तुविषयकस्य तुल्यत्वे निरस्तेऽसाधारणकार्यकरवस्तुविषयकप्रत्यय एवार्थतत्त्वावधारणे लिङ्गमित्यभ्युपगमे न व्यभिचार इति भावः ॥२८८॥

अथ दर्शनस्य विषयासत्यत्वेनाप्यसत्यत्वमुपदर्शयितुमाह—

**प्रसिद्धार्थविपर्यासनिमित्तं यच्च दृश्यते ।**
**यस्तस्माल्लक्ष्यते भेदस्तदसत्यं प्रचक्षते ॥२८९॥**

यच्च नैमित्तिकदर्शनं प्रसिद्धार्थविपर्यासनिमित्तमिति प्रसिद्धः सत्यरूपोऽर्थः तस्य विपरीतो यो मिथ्यात्वलक्षणस्तस्य निमित्तं कारणमिन्द्रियविषयगतो दोष इति। यश्च तस्माद्भेदो विशेषो लक्ष्यते द्विचन्द्रादिस्तं तथाभूतं दर्शनविषयं प्रचक्षते ॥२८९॥

पुनरपि दर्शनभेदमाह—

**यच्च निम्नोन्नते चित्रे सरूपं पर्वतादिभिः ।**
**न तत्र प्रतिघातादि कार्यं तद्वत् प्रवर्तते ॥२९०॥**

पर्वतादिभिः सरूपं निम्नोन्नत चित्रभित्तौ दृश्यते, न च तावता तत्र प्रतिघातादिकार्यभेदो ज्ञानान्तरेण तत्र भेदावगतिरेवेत्यर्थः ॥२९०॥

---

एवमसाधारणकार्यदर्शनाभावेन विषयस्यासत्यत्वम् तेन च दर्शनस्यासत्यत्वमुपदर्श्येदानीमिन्द्रियविषयान्यतरगतदोषरूपनिमित्तेन विषयासत्यत्वम्, तेन च दर्शनस्यासत्यत्वम्, सत्यत्वासत्यत्वाभ्याञ्च दर्शनद्वयस्य भेदमुपदर्शयितुमाह—**प्रसिद्धार्थविपर्यासनिमित्तमिति** ।

अयमर्थः—यच्च = यत्तु, प्रसिद्धार्थविपर्यासनिमित्तम्, प्रसिद्धोऽर्थः सत्यरूपस्तस्य विपर्यासो विपर्यस्यमानो वैपरीत्येन प्रतीयमानो विपरीतोऽर्थो मिथ्यात्वलक्षणो मिथ्याभूतस्तस्य निमित्तं कारणमिन्द्रियविषयान्यतरगतो दोषः। इन्द्रियगतो दोषः काचकामलादिः, विषयगतस्तु चाकचक्यादिः। तस्मात् प्रागुक्ताद् विपर्यासनिमित्ताद् यो भेदो विशेषो लक्ष्यते द्विचन्द्रादिस्तं तथाभूतं विपर्यासदर्शनविषयीभूतमर्थमसत्यं प्रचक्षते लौकिकास्तैर्थिकाश्चेति ॥

प्रथमं स्वविषयस्यासाधारणकार्यकरत्वतदभावाभ्यां दर्शनभेद उक्तः, ततः स्वविषयस्य सत्यत्वासत्यत्वाभ्यामपि स उपदर्शितः, अथेदानीं स्वविषयस्यासाधारणधर्मदर्शनेऽपि तत्प्रयुक्तकार्यदर्शनादर्शनाभ्यामपि दर्शनभेदमाह **यच्चेति** ।

अत्र निम्नोन्नत इति सप्तम्यन्तपाठो यद्यप्युपलभ्यते, स तु न युक्तः; चित्रस्य निम्नोन्नतत्वाभावात्, अतोऽत्र निम्नोन्नतमिति प्रथमान्तपाठ एव युक्तः।

अयमर्थः—यच्च = यत्तु, पर्वतादिभिः सरूपम् = समानाकारम्, चित्रेऽनिम्नोन्नतेऽपि निम्नोन्नतं दृश्यत इति शेषः। तत्र पर्वतादिसरूपे वस्तुनि प्रतिघाताद्यसाधारणधर्मनिम्नोन्नतत्वादिकार्यम्, तद्वद् निम्नोन्नते परमार्थपर्वते इव न प्रवर्तते।

अयं भावः— यद्यपि पर्वतादिभिः सरूपं वस्तु निम्नोन्नतं चित्रभित्तौ दृश्यते, तथापि न तत्र निम्नोन्नतत्वस्य कार्यविशेषः प्रतिघातादिस्तत्रास्ति, उपलभ्यते वा। अतो निम्नोन्नतत्वादिरूपासाधारणधर्मकार्यप्रतिघातादिदर्शनादर्शनाभ्यां पर्वतविषयकस्य दर्शनद्वयस्य भेदावगतिरिति ॥ २९० ॥

एतदेव दृष्टान्तान्तरैः प्रतिपादयितुमाह—

**स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।**
**न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥२९१॥**
**वप्रप्राकारतल्पैश्च स्पर्शनावरणे यथा ।**
**नगरेषु न ते तद्वद् गन्धर्वनगरेष्वपि ॥२९२॥**
**मृगपश्वादिभिर्यावान् मुख्यैरर्थः प्रसाध्यते ।**
**तावान्न मृन्मयेऽप्यस्ति तस्मात्ते विषयः कनः ॥२९३॥**

---

तुल्यवस्तुविषयकत्वेनासाधारणधर्मावगाहित्वेन च तुल्येऽपि दर्शनद्वयेऽसाधारणधर्म-प्रयुक्तकार्यदर्शनादर्शनाभ्यां भेदमेव प्रागुक्तमपि दृष्टान्तान्तरैः प्रतिपादयितुं युग्मेनाह—**स्पर्शप्रबन्ध इति ।**

अयमर्थः—यथा चक्रस्य = रथचक्रस्य, हस्तेन सह स्पर्शप्रबन्धः स्पर्शस्य = संयोगस्य, प्रबन्धः = संबन्धः समवायरूपस्तादात्म्यरूपो वा, सन्ततः = अविच्छिन्नः, तथाऽलातचक्रस्य भ्रामणातिशयाच्चक्रत्वेन प्रतीयमानस्य वस्तुतो दीर्घस्यालातस्य ज्वलतो दण्डकाष्ठस्य न स्पर्शप्रबन्धः सन्ततः । हि = यतः, तत् = अलातचक्रम्, दीर्घत्वाद् विच्छिन्नं स्पृश्यते = विच्छिद्य विच्छिद्य = वियुज्य वियुज्य स्पृश्यते, हस्तसंयोगित्वेनानुभूयत इति ॥२९१॥

वप्रः = अकृत्रिमः कृत्रिमो वा लोष्टादिचयरूप उन्नतो भूभागः । उप्यमस्मिन् पुरा रेणुलोष्टपाषाणादिकमिति विग्रहे वपते रन् औणादिकः । "वप्ररताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" इत्युणादिद्वितीयपादे तत्त्वबोधिन्यां मेदिनी । प्राकारः प्रकर्षेण नगरस्य रक्षार्थमा समन्तात् क्रियत इति विग्रहे प्राङ्भ्यां करोतेः कर्मणि घञ् । "स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" (२।२,३) इत्यमरः । तल्पम् = अट्टः—गृहविशेषः, अटारी इति लोके प्रसिद्धः । 'तल्पं शय्याऽट्टदारेषु' (३।३।१३१) इत्यमरः । तथा च वप्रप्राकारतल्पैरित्यनेन नगरनिर्माणपद्धतिर्व्यज्यते । पूर्वं सर्वासु दिक्षु वप्रो भवति, ततोऽभ्यन्तरे सर्वतः प्राकारो भवति, तस्याभ्यन्तरे सर्वतः सन्ततं संनिविष्टा अट्टा भवन्ति ततोऽभ्यन्तरे यथेष्टं संनिविष्टं नगरं भवति । एवं हि संनिविष्टं नगरं परैः पदातिभिरनाधृष्यं भवति ।

अयमर्थः—यथा च = यथा तु, नगरेषु वप्रप्राकारतल्पैः स्पर्शनावरणे कार्ये क्रियेते = हस्तादीनां स्पर्शनं क्रियते, नगरस्य आवरणं क्रियते; तद्वद् गन्धर्वनगरेष्वपि न ते स्पर्शनावरणे इति अतः स्वविषयस्य यदसाधारणं कार्यं तद्दर्शनादर्शनाभ्यां नगरविषयकस्य प्रत्ययद्वयस्य भेद इति भावः ॥२९२॥

**महानाव्रियते देशः प्रसिद्धैः पर्वतादिभिः ।**
**अल्पदेशान्तरावस्थं प्रतिबिम्बं तु दृश्यते ॥२९४॥**
**मरणादिनिमित्तं च यथा मुख्या विषादयः ।**
**न ते स्वप्नादिषु स्वस्य तद्वदर्थस्य साधकाः ॥२९५॥**

अत्र हस्तिकान् विक्रीणीते, अश्वकान् विक्रीणीते इत्यादौ कार्यभेदादेव भेदमवसाय कन्प्रत्ययान्तान् प्रतिकृतिवाचकानीरितवानिति मृगपश्वादिभिरित्यस्य श्लोकस्यार्थः । अन्यत् स्पष्टम् ॥२९१-२९५॥

---

एवं समानाभिलापानामपि दर्शनानां प्रागुक्तक्रमेण तत्तन्निमित्तभेदैर्भेदं तेन च तद्विषयाणां सत्यासत्यविभागं तेन च तेषां गौणमुख्यविभागं शास्त्रीयतत्तत्कार्योपयोगिनं प्राक् प्रदर्श्य साम्प्रतं शक्ततावच्छेदकानुपूर्वीसाम्येऽपि शब्दानां स्वार्थकार्यभेदावसेयं कन्प्रत्ययोपयोगिनं गौणमुख्यविभागं विशेषकेणाह—**मृगपश्वादिभिरिति** ।

अयमर्थः—बहुलधर्मोपलम्भान्मुख्यैर्मृगपश्वादिभिर्यावानर्थः प्रयोजनं प्रसाध्यते= क्रियते, मृन्मयेऽपि मृगपश्वादौ तावानर्थः स्वप्रसाध्यो नास्ति । तस्मात् तावतोऽर्थस्याप्रसाधनात्, ते मृन्मयमृगपश्वादिवाचकाः शब्दाः कनो विषयः प्रकृतिः । अत्रैकवचनं जात्यभिप्रायेण । यदसाधारणं कार्यमित्यत्र साधारणकार्यदर्शनेन दर्शनभेद उपपादितः, अत्र तु तेन शब्दभेद इति न पौनरुक्त्यम् ।

अयं भावः—हरिणकान् विक्रीणीते, हस्तिकान् विक्रीणीते, अश्वकान् विक्रीणीते इत्यादौ गौणमुख्ययोरर्थयोः कार्यभेदादेव भेदं तदर्थकशब्दभेदं चानुमाय गौणार्थकेभ्यस्तेभ्यः "इवे प्रतिकृतौ" (अष्टा० ५।३।९६) इति कनमनुशिष्य कन्प्रत्ययान्तान् प्रतिकृतिवाचकान् ईरितवान् तत्रभवान् पाणिनिरिति ॥२९३॥

गौणान् चरपदार्थान् उदाहृत्य अचरपदार्थानुदाहरति बुद्धिवैशद्याय महानिति । अथवा गौणमुख्ययोः संस्थानेन सादृश्यमुदाहृत्य बिम्बप्रतिबिम्बभावेन सादृश्यमुदाहरति—**महानिति** ।

अयमर्थः—प्रसिद्धैर्बिम्बभूतैः पर्वतादिभिर्महान् देश आव्रियते= आच्छाद्यते । प्रतिबिम्बं त्वल्पदेशान्तरावस्थमल्पमणिदर्पणादिप्रदेशान्तरावस्थितं दृश्यते । अतो महादेशावरकत्वरूपप्रसिद्धपर्वतादिकार्यकरत्वाभावाद् अल्पदेशान्तरावस्थितत्वरूपप्रसिद्धपर्वतवैधर्म्याच्च प्रसिद्धपर्वतस्य बिम्बरूपस्य प्रतिकृतिः प्रतिबिम्बपर्वत इति तत्र पर्वतकाः सुरस्रोतस्विनीनीरे इति प्रयोगः ॥२९४॥

एवं चराचरे गौणमुख्यविभागं कन्प्रत्ययोपयोगिनं जागरिते उपपाद्य स्वप्नादिष्वपि तादृशं तमुपपादयति—**मरणादिनिमित्तमिति** ।

अयमर्थः—यथा च = यथा तु, मुख्या विषादयः, अत्रापि मुख्यत्वं बहुलकार्यकरत्वाद् बहुलधर्मोपलम्भाद्वा । मरणादिनिमित्तम् =मरणमदमूर्च्छादेर्निमित्तम्, तद्वत् स्वप्नादिषु=

इदानीमुपसंहर्तुमाह—

देशकालेन्द्रियगतैर्भेदैर्यद् दृश्यतेऽन्यथा ।
यथा प्रसिद्धिर्लोकस्य तथा तदवसीयते ॥२९६॥

देशभेदेनासति विप्रकर्षरूपेण, कालभेदेन यथा ग्रीष्मे मरीचयो भौमेनोष्मणा स्पन्दमाना दूरस्थस्य जलज्ञानमुपजनयन्ति, इन्द्रियभेदेन यथा तैमिरिकस्य द्विचन्द्रज्ञानमुपजनयन्ति तैर्देशकालेन्द्रियगतैर्भेदैरन्यथा दृश्यमानं वस्तु लोकप्रसिद्धिवशाद् दार्ढ्यादार्ढ्यप्रत्ययभेदेनार्थक्रियाभेदेन च यथावदवैपरीत्येनाध्यवसीयते ॥२९६॥

ततश्चेदमत्रार्थतत्त्वं बोद्धव्यमित्याह—

यच्चोपघातजं ज्ञानं यच्च ज्ञानमलौकिकम् ।
न ताभ्यां व्यवहारोऽस्ति शब्दा लोकनिबन्धनाः ॥२९७॥

उपघातजं सत्यत्वविपरीतं ग्रैष्मतिमिरिकादिज्ञानम्, अलौकिकं च यदपि परमर्षीणां सम्बन्धि ज्ञानं ताभ्यामुभाभ्यामपि व्यवहारनिर्वहणमशक्यमित्यतो यथैवाऽविसम्वाधं लोकप्रसिद्ध्या सकलव्यवहारनिर्वहणनिपुणं ज्ञानं यथावदर्थतत्त्वावधारणाय समाश्रीयते । यथोक्तम्—

---

स्वप्नभ्रममदमहेन्द्रजालमायासु, ते=विषादय उपयुक्ता अपि, स्वस्य अर्थस्य प्रयोजनस्य, न साधका भवन्तीति ते गौणा मुख्यस्य विषादेः प्रतिकृतय इति कनो विषय इति ॥२९५॥

प्रकृतं गौणमुख्यविभागं साम्प्रतमुपसहर्तुमाह—देशकालेन्द्रियगतैरिति ।

अयमर्थः—यद् वस्तु देशकालेन्द्रियगतैर्भेदैः=भिन्दन्ति वस्तुभूतात् स्वस्वरूपाद् भेदेन अन्यथा प्रत्याययन्ति वस्तु ये ते भेदा देशादिगता दोषाः, भिदेः पचाद्यचि बाहुलकात् कर्तरि घञि वा साधु । तत्र देशभेदेनासत्तिरूपेणान्यथा दर्शनं यथा—लौहितः स्फटिक इति । विप्रकर्षरूपेण देशभेदेन यथा—उच्चतरगिरिशिखरवर्तिषु महातरुषु दूर्वाप्रवालनिर्भासप्रत्ययः । कालभेदेन यथा—ग्रीष्मे भौमेनोष्मणा स्पन्दमानाः सौरमरीचयो दूरस्थस्य जलज्ञानमुपजनयन्ति । इन्द्रियगतेन भेदेन यथा—तैमिरिकस्य द्विचन्द्रज्ञानम् । अन्यथा दृश्यते=स्वासाधारणधर्मरूपप्रकारादन्यप्रकारेण प्रागुक्तैर्भेदैर्दृश्यते, तद् वस्तु यथा लोकस्य प्रसिद्धिस्तथाऽवसीयत इति ।

अयं भावः—देशकालेन्द्रियगतैर्भेदैरन्यथा दृश्यमानं वस्तु लोकप्रसिद्धिवशाद् बाधाबाधाभ्यां दार्ढ्यादार्ढ्यप्रत्ययभेदेन अर्थक्रियाभेदेन च यथावद् अवैपरीत्येन अध्यवसीयत इति ॥२९६॥

"असमाख्येयतत्त्वानामर्थानां लौकिकैर्यथा ।

व्यवहारे समाख्यानं तत्प्राज्ञो न विकल्पयेत् ।।" इति, ( वा० प० २।१४२ ) तथैवार्थस्वरूपप्रत्यायनाय शब्दा लोकनिबन्धना लोकव्यवहारनिमित्तभूताः प्रवर्तमानाः प्रसिद्ध्यप्रसिद्धिभ्यामेव स्खलद्गतित्वास्खलद्गतित्वाभ्यां गौणमुख्यविभागमापादयन्तीति बौद्धेऽपि शब्दार्थे व्यवस्थित एव गौणमुख्यविभाग इति सिद्धम् ।।२९७।।

---

ततश्च बौद्धः शब्दार्थो बाह्यो वा उभयं वेति मतत्रयेऽपि यदविसंवादि लोकप्रसिद्धया सकलव्यवहारनिर्वाहनिपुणं च ज्ञान तद्गोचरीभूतमेवात्रार्थतत्त्वं बोद्धव्यमित्यनद्व्यावृत्तिमुखेनाह—**यच्चोपघातजमिति ।**

अयमर्थः—यच्च = यत्तु, उपघातजं ज्ञानम् = उपहन्यतेऽर्थतत्त्वावधारणे प्रतिबध्यते इन्द्रियं येनासौ उपघातो दोषस्तज्जन्यं ज्ञानं विभ्रमरूपम्, यच्च = यत्तु, परमर्षीणामीश्वरादृष्टादिविषयकमलौकिकं ज्ञानम्, ताभ्यां ज्ञानाभ्यां हेतुभ्यां व्यवहारो नास्ति । ते ज्ञाने निमित्तत्वेनोपादाय व्यवहारो न प्रवर्तत इति यावत् । शब्दा लोकनिबन्धनाः = यतोऽर्थप्रत्यायनाय लोके प्रयुज्यमानाः शब्दा लोकव्यवहारे निमित्तभूताः, अतो लोकव्यवहारनिमित्तभूतमेवार्थज्ञानं जनयन्ति, न विभ्रमरूपं न वाऽलौकिकम्, अतोऽत्राश्रिते लौकिके चैवार्थे शब्दाः शक्ताः, तदेव चात्रार्थतत्त्वं गौणमुख्यन्याये मुख्यपदेनाभिप्रेतमिति । तदुक्तम्—

असमाख्येयतत्त्वानाम् इति ।

अयमर्थः—अर्थाः खलु सर्वेऽपि ऋते ब्रह्मात्मानं सत्त्वासत्त्वाभ्यामनिर्वाच्याः, एवञ्च व्यवहारे लौकिकैर्यथा तेषां समाख्यानं क्रियते तत् प्राज्ञः = प्रपञ्चमिथ्यात्वदृष्ट्याऽद्वितीयात्मदर्शी, इदमेवमनेवं वेति न विकल्पयेत् तत्र विकल्पं न कुर्यात्, किन्तु यथासमाख्यातमेव वस्तु मायेन्द्रजालादिवत् पश्यन् लोकसंग्रहार्थं तेन तथैव व्यवहरेदिति । तदुक्तं गीतासु—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ।।
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ।। इति ।

अयं भावः—अर्थप्रत्यायनाय लोके प्रयुज्यमानाः शब्दा लोकव्यवहारनिमित्तभूता मुख्येऽर्थे प्रसिद्धयाऽबाधेन चास्खलद्गतित्वेन, गौणे चार्थेऽप्रसिद्धया बाधेन च स्खलद्गतित्वेन प्रवर्तमाना गौणमुख्यविभागं प्रयोजयन्तीत्येवं बौद्धः शब्दार्थ इत्यभ्युपगमेऽपि व्यवस्थित एव गौणमुख्यविभाग इति ।।**२९७**।।

एवं गौणमुख्यविभागमुक्त्वा तत्प्रसङ्गेन च सत्यासत्यविभागं विधाय पुनरपि शब्दानां मुख्यनान्तरीयकविचारं वैतत्येन कर्तुमाह—

**घटादिषु यथा दीपो येनार्थेन प्रयुज्यते।**
**ततोऽन्यस्यापि सान्निध्यात् स करोति प्रकाशनम् ॥२९८॥**

इह यत्प्रतिपादनाय शब्दाः प्रयुज्यन्ते, तत्तस्य प्रयोजकं मुख्यं तत्प्रतिपादनावसरे च सन्निधानाद्यदन्यत् प्रत्याययति तत्तस्य नान्तरीयकमुच्यते। एतद् दृष्टान्तद्वयेन प्रदर्शयति—घटादिष्वित्यादिना।

तत्र यथा दीप इति ज्ञापकदृष्टान्तोपदर्शनं घटादिषु ज्ञातेषु विषयेषु यथा ज्ञापको दीपो येनार्थेन घटादिज्ञापनलक्षणेन ततः प्रयोजकादन्यत्प्रकाशं नान्तरीयकं यथा करोति ॥२९८॥

---

एवं गौणमुख्यन्यायोपयोगिनं गौणमुख्यविभागमुक्त्वा तत्प्रसङ्गेन च सत्यासत्यविभागमपि तद्रूपगौणमुख्यविभागोपदर्शनायैवाभिधाय साम्प्रतमर्थानां मुख्यगौणविभागम्, विवक्षिताविवक्षितत्वविभागम्, गुणप्रधानभावम्, गुणप्रधानभावविपर्ययम्, पदार्थैकदेशाविवक्षाम्, सकलपदार्थाविवक्षाम्, उपात्तपदार्थपरित्यागेनान्यार्थोपलक्षणञ्च प्रदर्शयितुं शब्दानां मुख्यनान्तरीयकार्थविचारं ज्ञापककारकरूपदृष्टान्तद्वयोपन्यासमुखेन वैतत्येन विस्तरेण करिष्यन् पूर्वं ज्ञापकदृष्टान्तोपन्यासेनैव तं कर्तुमुपक्रमते—**घटादिष्विति।**

अयमर्थः—यथा घटादिष्वर्थेषु ज्ञातव्येषु दीपो येनार्थेन घटादिना प्रयुज्यते संयुज्यते ततः प्रयुज्यमानाद् घटादेरर्थाद् अन्यस्यापि पटादिरूपस्यार्थस्य प्रकाशनं स दीपः सान्निध्यात् = पटादेरर्थस्य घटादिसहभावित्वात् करोतीति।

यद्वा यथा दीपो येनार्थेन घटादिप्रकाशनरूपेण येन प्रयोजनेन, प्रयुज्यते = प्रयुक्तो भवति, ततः प्रचिकाशयिषिताद् घटादेरन्यस्यापि पटादेरर्थस्य स दीपः सान्निध्यात् पटादेरर्थस्य घटादिसहभावित्वात् प्रकाशनं करोतीति।

अयं भावः—इह यदर्थप्रतिपादनाय यः शब्दः प्रयुज्यते, सोऽर्थस्तस्य प्रयोजक इति मुख्य उच्यते। तदर्थप्रतिपादनावसरे च तदर्थसन्निहितं यमन्यमर्थं प्रत्याययति, सोऽर्थस्तस्य शब्दस्य नान्तरीयक उच्यते। तथा च शब्दस्य मुख्यार्थनान्तरीयकार्थप्रतिपादकत्वे ज्ञापकदृष्टान्तं कारकदृष्टान्तं च दिदर्शयिषुः शब्दस्यार्थज्ञापकत्वाद् ज्ञापकदृष्टान्तमेव पूर्वं प्रदर्शयति—**घटादिष्विति।**

अत्र—"ततोऽन्यदपि सान्निध्यात् स करोति प्रकाशनम्" इति पुण्यराजसंमतः पाठः। तथाहि—अयं श्लोक एवं व्याख्यातस्तेन—"घटादिषु ज्ञातेषु विषयेषु यथा ज्ञापको दीपो येनार्थेन घटादिज्ञापनलक्षणेन, ततः प्रयोजकादन्यत् प्रकाशं नान्तरीयकं यथा करोति" इति॥२९८॥

एवं दार्ष्टान्तिके योजयितुमाह—

**संसर्गिषु तथाऽर्थेषु शब्दो येन प्रयुज्यते ।**
**तस्मात् प्रयोजकादन्यानपि प्रत्याययत्यसौ ॥२९९॥**

यथा भाव इत्यादावर्थेषु बहुषु संसर्गिषु मध्याद्येनार्थेन सिद्धत्वादिनाऽसौ भावशब्दः प्रयुज्यते तस्मादन्यानपि लिङ्गसंख्यादीन् नान्तरीयकतया स्थितान् सन्निधानात् प्रत्याययत्येवेति बोद्धव्यम् ॥२९९॥

कारकहेतुदृष्टान्तोपदर्शनार्थमाह—

**निर्मन्थनं यथाऽरण्योरग्न्यर्थमुपपादितम् ।**
**धूममप्यनभिप्रेतं जनयत्येकसाधनम् ॥३००॥**

अरण्योः सम्बन्धि यन्निर्मथनं तदग्न्यर्थम् अग्निनिष्पत्त्यर्थे, अग्निस्तस्य

---

एवं दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयितुमाह—**संसर्गिष्विति** ।

अयमर्थः—तथा भावः, पाकः, लवः, स्तव इत्यादौ संसर्गिषु स्वेन सहाध्यासिकतादात्म्यसंसर्गवत्सु बहुष्वर्थेषु सिद्धत्वलिङ्गसंख्यादिषु मध्याद् येनार्थेन सिद्धत्वादिनाऽसौ भावादिशब्दः प्रयुज्यते = स्वं बोधयितुं प्रयुक्तः कार्यते, तस्मात् प्रयोजकात् सिद्धत्वादिरूपादर्थादन्यानपि लिङ्गसंख्यादीन् तन्नान्तरीयकतया स्थितान् तदविनाभूतान् प्रत्ययविशेषविभक्तिविशेषसंनिधानाद् व्यञ्जनया प्रत्याययत्येवेति । तथा चाभिधेयस्य मुख्यत्वम्, व्यङ्ग्यस्य = द्योत्यस्य तु नान्तरीयकत्वमिति विवेकः ।

अयं भावः—यथा प्रदीपो घटप्रकाशनाय कृतो नान्तरीयकतया स्थितं पटादिकमपि सन्निधानात् प्रकाशयति, तथा सिद्धं धात्वर्थमभिधातुं प्रयुक्तो भावसामान्यवाची भावशब्दस्तद्विशेषवाची पाकादिशब्दो वा तं स्वमुख्यमर्थमभिदधत् तत्र नान्तरीयकतया स्थितान् लिङ्गसंख्यादिकानप्यर्थान् प्रत्ययविशेषविभक्तिविशेषसंनिधानाद् व्यञ्जनया प्रत्याययतीति । इदमेकं द्विकं वा प्रातिपदिकार्थ इति पक्षे बोध्यम् । त्रिकं चतुष्कं पञ्चकं वा प्रातिपदिकार्थ इति पक्षे तु लिङ्गसंख्यादेरपि मुख्यार्थत्वमेव । तदा तु प्रत्ययविशेषविभक्तिविशेषयोस्तदर्थद्योतकत्वमेवेति ध्येयम् ॥२९९॥

बौद्धः शब्दो बौद्धस्यार्थस्य कारकः प्रकाशकश्चेति पक्षे कारकहेतुरूपदृष्टान्तोपदर्शनार्थमाह—**निर्मन्थनमिति** ।

अयमर्थः—यथाऽग्न्यर्थम् = अग्नेरुत्पत्तयेऽभिव्यक्तये वा, उपपादितं कृतम्, अरण्योः = उत्तराधरयोः, निर्मन्थनम् = निर्घर्षणम्, अनभिप्रेतमपि = स्वानुद्देश्यमपि, एकसाधनम् = एकं वह्निसाधनमेवाऽरणिनिर्मन्थनसाधनं यस्य स तथाभूतो धूमस्तम् = एकहेतुकम्, धूममनुपयोगेऽपि नान्तरीयकतया जनयति = एकसाधनत्वादेवेति ।

प्रयोजक इत्यर्थः। यस्मान्नान्तरीयकतया धूममप्यनुपयोगिनं जनयत्येव। कीदृशम्? एकसाधनमेकहेतुकमित्यर्थः। अरण्योरित्यनेनोत्तरारणिरधरारणिश्च तत्रोच्यत इति दर्शितम् ॥३००॥

पुनरपि दार्ष्टान्तिके योजयितुमाह—

**यथा शब्दोऽपि कस्मिंश्चित् प्रत्याय्यार्थे विवक्षिते।**
**अविवक्षितमप्यर्थं प्रकाशयति सन्निधेः ॥३०२॥**

कस्मिंश्चित् प्रत्याय्येऽर्थे सिद्धताख्ये धर्मेऽविवक्षितमप्यर्थं पुंस्त्वैकत्वलक्षणं प्रकाशयति प्रत्याय्यति सन्निधानादिति ॥३०१॥

नन्वस्तु वस्तुगतिरीदृश्येव, यथा दीपादिना नान्तरीयकप्रत्यायनेन प्रयोजकं प्रकाश्यते तत्सन्निधानाद् नान्तरीयकतयाऽन्यदपि घटकुड्यादीति तत्र युक्तम्, शब्दस्तु यत्प्रतिपादनाय वक्त्रा प्रतिपादयितुमिष्टः, तथैव भूत्वा तत्प्रतिपादनं करोतु; किं तस्य नान्तरीयकप्रत्यायनेनेत्याशङ्कयाह—

**यथैवात्यन्तसंसृष्टस्त्यक्तुमर्थो न शक्यते।**
**तथा शब्दोऽपि सम्बन्धी प्रविवेक्तुं न शक्यते ॥३०२॥**

---

अयं भावः—अग्निररणिनिर्मन्थनस्य मुख्योऽर्थः, उद्देश्यत्वेन प्रयोजकत्वात्, धूमस्तु तस्य नान्तरीयकोऽर्थः, अनुद्देश्यत्वेनाप्रयोजकत्वादिति। एवमपि स्वोद्देश्यं स्वप्रयोजकं चाग्निं जनयदरणिनिर्मन्थनं स्वाप्रयोजकं स्वानुद्देश्यमपि च धूममेकसाधनत्वेन जनयत्येव यथा तथेत्युत्तरपद्येन सम्बन्ध इति ॥ ३०० ॥

दृष्टान्तसिद्धमर्थं पुनरपि दार्ष्टान्तिके योजयितुमाह—**यथा शब्दोऽपीति।**

अयमर्थः—यथाऽग्न्यर्थमुपपादितमरणिनिर्मन्थनमनभिप्रेतमपि धूमं नान्तरीयकमेकसाधनत्वाज्जनयति, तथा भावादिशब्दोऽपि कस्मिंश्चित् प्रत्याय्येऽर्थे सिद्धताख्ये धर्मे विवक्षिते सति तमर्थमभिदधानोऽविवक्षितमप्यर्थं पुंस्त्वैकत्वलक्षणं संनिधेः=संनिधानात्=शब्देन सह नान्तरीयकस्याप्यर्थस्याध्यासिकतादात्म्यरूपसंबन्धात्, यद्वा—प्रत्याय्यार्थेन विवक्षितेन सह तदविनाभूतस्य नान्तरीयकस्यार्थस्य सामानाधिकरण्येन प्रत्याय्यार्थसंनिहितत्वात् प्रकाशयतीति।

अयं भावः—यः शब्दस्य प्रत्याय्यत्वेन विवक्षितोऽर्थः स शब्दस्य प्रयोजकत्वाद् मुख्यः, यस्तु न तथा स संनिधानात् प्रतीयमानोऽपि नान्तरीयक इति। यद्वा यः शब्दस्याध्यासिकतादात्म्येन सम्बन्धी अर्थः स मुख्यः, यस्तु तदर्थस्य समानाधिकरणस्तदविनाभूतोऽर्थः स शब्दस्य परम्परासम्बन्धी नान्तरीयक इति ॥३०१॥

यथा मत्स्यमांसार्थिना मत्स्यमांससंसृष्टस्तोकत्वक्कण्टकादिरनुपयोग्यपि त्यक्तुं न शक्यते, तथा शब्दोऽप्यत्यन्तसम्बन्धाल्लिङ्गसंख्याप्रतिपादकः, तत्र न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्यय इति प्रविवेक्तुं परिहर्तुं न शक्यते ॥३०२॥

अतश्च तत्रार्थेषु बहुषु सन्निहितेषु कः शब्दस्यार्थो वाच्यः स्यादित्याह—

**व्यर्थानां सन्निधानेऽपि सति चैषां प्रकाशने [ने] ।**
**प्रयोजकोऽर्थः शब्दस्य रूपाभेदेऽपि शस्यते ॥३०३॥**

---

नन्वस्तु वस्तुगतिरीदृश्येव, यथा घटप्रकाशनाय कृतः प्रदीपो नान्तरीयकं पटकुड्याद्यपि प्रकाशयतीति, तथा हि—यथा तत्रास्ति प्रदीपे स्वप्रयोजकघटप्रकाशनसामर्थ्यं तथा नान्तरीयकपटकुड्यादिप्रकाशनसामर्थ्यमपि, न च प्रदीपे नान्तरीयकपटकुड्यादिप्रकाशनसामर्थ्यस्य प्रतिबन्धकं किञ्चिदस्ति । अतः प्रदीप उभयं प्रकाशयतु, शब्दस्य तु नान्तरीयकार्थप्रकाशकत्वं न युक्तम् । तथा हि—यद्यप्यस्ति शब्दे स्वप्रयोजकमुख्यार्थप्रकाशनसामर्थ्यम्, नान्तरीयकार्थप्रकाशनसामर्थ्यञ्च, तथापि वक्त्रा यदर्थप्रतिपादनाय यः शब्दो विवक्षितस्तमेवार्थं प्रतिपादयितुमीष्टे, तात्पर्यस्यार्थप्रकाशनसामर्थ्यरूपाभिधानियामकत्वात् कथमन्यथा नानार्थकहर्यादिपदस्थले युगपदनेकानवगतिः ।

एवञ्च कथं शब्दस्य नान्तरीयकार्थप्रकाशकत्वमित्याशङ्क्याह—**यथैवेति** ।

अत्रैवकारो वाक्यालङ्कारे । अत एव पुण्यराजेन व्याख्यानावसरे एवकारस्त्यक्तः ।

अयमर्थः—यथा मत्स्यमांसार्थिना मत्स्यमांसेन सहात्यन्तं संसृष्टः स्तोकत्वक्कण्टकादिः=स्तोका यास्त्वचः शल्काः—मत्स्यकण्टकानि च तदादिः, आदिपदेन मत्स्यस्य मलमूत्रादिकम्—सद्यो भुक्तञ्च शवमांसकफादिकम् अनुपयोग्यपि पदार्थस्त्यक्तुं न शक्यते, आपणतडागादितो ग्रहणकाले, संस्कारकाले तु किञ्चित् त्यज्यते त्वगादिकम्, भोजनकाले च कण्टकादिकमपि त्यज्यते । तथा मुख्यार्थप्रतिपादनाय शब्दं प्रयुयुक्षमाणेन शब्दोऽप्यत्यन्तसंबन्धाल्लिङ्गसंख्याप्रतिपादकस्तत्संबन्धी लिङ्गसंख्यादिरूपात् नान्तरीयकादर्थात् प्रविवेक्तुं पृथक्कर्तुं न शक्यते, अत एव लिङ्गसंख्यादिवाचकात् प्रत्ययादपि पृथक्कर्तुं न शक्यते इत्यपि बोध्यम् । अत एवोक्तम्—न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्यय इति (३।१।६४) ॥३०२॥

तथा शब्दोऽपि संबन्धी प्रविवेक्तुं न शक्यते इति वाक्यार्थस्य व्यवस्थितत्वाच्च शब्दे बहुष्वर्थेषु वाच्येषु नान्तरीयकेषु च प्रयोजकेष्वप्रयोजकेषु च सन्निहितेषु सत्सु कोऽर्थः शब्दस्य वाच्यः स्यादित्याशङ्कायामाह—**व्यर्थानामिति** ।

बहूनां संसर्गिणामर्थानां तत्र सन्निधानादेतेषां च सत्यपि शब्दाद् दीपादिवाविशेषेण प्रकाशने यस्तस्य प्रयोजकः; स एव वाच्योऽर्थः, अन्यो नान्तरीयकः न तस्य प्रयोजकत्वं तत्रापि रूपस्याभेदे समानरूपत्वे इति ॥२०३॥

एतदेव वैतत्येन प्रकारभेददर्शनपूर्वकमाह—

**क्वचिद् गुणप्रधानत्वमर्थानामविवक्षितम् ।**
**क्वचित् सान्निध्यमप्येषां प्रतिपत्तावकारणम् ॥३०४॥**
**यच्चानुपात्तं शब्देन तत्कस्मिंश्चित् प्रतीयते ।**
**क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम् ॥३०५॥**

---

अयमर्थः—शब्दे व्यर्थानाम् = अनुपयोगिनां नान्तरीयकाणामर्थानां मुख्यार्थवत्संनिधानेऽपि, एषाम् = नान्तरीयकाणामर्थानां दीपादिव शब्दान् मुख्यार्थवदविशेषेणप्रकाशने सति च = अपि, नान्तरीयकेष्वर्थेषु शब्दस्य मुख्यार्थे इव रूपाभेदेऽपि = स्वरूपाभेदेऽपि, आध्यासिकतादात्म्यरूपसंबन्धस्याविशेषेऽपि, प्रयोजकोऽर्थो वक्तृतात्पर्यविषयत्वाद् उपयोगित्वाच्च शस्यते = प्रशस्यते, न तु तद्विपरीतो नान्तरीयकोऽर्थ इति । प्रयोजकोऽर्थ एव शब्दस्य वाच्यः, न तु नान्तरीयक इति भावः ॥३०३॥

एव प्रयोजकस्यार्थस्य वाच्यत्वे नान्तरीयकस्य चावाच्यत्वे स्थिते क्वचिद् गुणप्रधानभावविपर्ययः, क्वचित् पदार्थैकदेशाविवक्षा, क्वचित् सकलपदार्थाविवक्षा, क्वचिदुपात्तपदार्थापरित्यागेनैवान्यार्थोपलक्षणमिति प्रकारचतुष्टयं शास्त्रे दृष्टमुपपन्नं भवतीत्याह युग्मेन—**क्वचिद् गुणप्रधानत्वमिति ।**

अयमर्थः—क्वचिल्लक्ष्ये प्रयोजकानामर्थानां गुणप्रधानभावेऽन्यथाऽनुभूयमाने लक्षणे उक्तानामर्थानां गुणप्रधानत्वमविवक्षितं भवति । तद् यथा—आक्षिक इत्यादौ 'अक्षकरणकदेवनकर्ता' इत्येवमर्थानां गुणप्रधानभावेऽबाधितेऽनुभूयमाने 'तेन दीव्यतीति' (४।४।२) लक्षणोक्तोऽर्थानां गुणप्रधानभावोऽविवक्षितो भवति, लक्षणोक्तार्थस्य लक्ष्ये नान्तरीयकत्वात्, आक्षिकशब्दात् प्रतीयमानार्थस्यैव प्रयोजकत्वेन वाच्यत्वात् । क्वचिद् लक्ष्ये एषां नान्तरीयकाणामर्थानां शब्दे सान्निध्यमपि प्रतिपत्तौ = प्रतिपत्तिद्वारके नान्तरीयकार्थसंबद्धे व्यवहारे, अकारणम् = निमित्तं न भवति । तद् यथा—'भावे' इत्यत्र भावशब्दस्य प्रयोजकः सिद्धावस्थापन्नो धात्वर्थ इति स एव वाच्य इति पाक इत्यादौ लक्ष्ये प्रतिपत्तिद्वारा शब्दप्रयोगादिरूपस्य उपादानादिरूपस्य वा व्यवहारस्याङ्गं भवति । भावे इत्यत्र सन्निधानात् प्रतीयमानोऽपि पुंस्त्वैकत्वादिरूपो नान्तरीयकोऽर्थः पाकपदादौ प्रतिपत्तिद्वारा व्यवहाराङ्गं न भवति । पाकौ, पाका इत्यादौ, कृतिः, कृतमित्यादौ च पुंस्त्वैकत्वयोरप्रतीतेर्व्यवहाराच्च । इत्येवं 'भावे' इत्यत्र पदार्थैकदेशयोः पुंस्त्वैकत्वयोरविवक्षा नान्तरीयकत्वेन ।

कस्मिंश्चित् स्थले यच्च = यत्तु, शब्देनाऽनुपात्तं शब्दावाच्यम्, तत् = तदेव, नान्तरीयकमपि प्रतीयते, उपादीयते च व्यवहारार्थं विवक्षारूपतात्पर्यविषयत्वात्, न तु

अत्र च गुणप्रधानताविपर्ययः पदार्थैकदेशाविवक्षा सकलपदार्थाविवक्षा, उपात्तपदार्थापरित्यागेनैवान्यार्थोपलक्षणमित्येवमनेन श्लोकद्वयेन प्रकारचतुष्टयस्योद्देशः कृतः ॥३०४–३०५॥

अथाद्यप्रकारप्रदर्शनार्थमाह—

**आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।**
**गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥३०६॥**

तेन दीव्यतीत्याख्यातं तद्धितार्थस्य निमित्तत्वेनोक्तम् । अतश्च तत्र क्रियाप्रधानमाख्यातमिति तदर्थस्यैव तद्धितान्तादवगतिः स्यात् । यतश्च तत्र क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः स्वभावात् साधनप्रधान इति साधनार्थस्यैव प्राधान्येनावगतिरिति । तेन दीव्यत्यादौ निर्देशे गुणप्रधानभावो न विवक्षितः, अक्षकरणकदेवनादिक्रियाकर्तृमात्रमेव तत्र प्रयोजकमिति स एव मुख्योऽर्थः ।

---

वाच्यार्थः; अविवक्षितत्वात् । तद् यथा—'तस्यादित उदात्तमर्धह्रस्वमि'त्यादावर्धह्रस्वशब्दस्य वाच्योऽर्थो नोपादीयते, तात्पर्याविषयत्वेनाप्रयोजकत्वात् , किन्तु तात्पर्यविषयत्वेन प्रयोजको वाच्यार्थाविनाभावी लक्ष्यार्थ एव नान्तरीयकस्तात्पर्यानुपपत्तिकल्प्य उपादीयते इत्येवमर्धह्रस्वपदे वाच्यस्य सकलस्याप्यर्थस्य कर्मधारयलभ्यस्य, एकदेशिसमासलभ्यस्य वाऽविवक्षा, लक्ष्यार्थस्य चार्धमात्रारूपस्य विवक्षा दीर्घस्वरितादावपीति । क्वचित् प्रधानमेवार्थो मुख्यार्थो वाच्यार्थोऽन्यस्य लक्ष्यार्थस्य नान्तरीयकस्य, लक्षणम् = उपलक्षणम् । तद् यथा—विध्यत्यधनुषा (४।४।८३) इत्यत्र धनुःपदं करणसामान्यस्योपलक्षणम् । तेन चोरं विध्यति खड्गेन इत्यत्रापि यत्प्रत्ययो नेत्येवं वाच्यार्थस्यान्यार्थोपलक्षणत्वेन प्राधान्यमिति रीत्या मुख्यार्थनान्तरीयकार्थयोः शाब्दे व्यवहारे प्रकारचतुष्टयं प्रदर्शितम् , तत्र च विवक्षैव नियामिकेति बोध्यम् ॥३०४–३०५॥

पूर्वोक्तप्रकारचतुष्टयमध्ये क्वचिद् गुणप्रधानत्वमर्थानामविवक्षितमित्याद्यप्रकारप्रदर्शनार्थमाह—आख्यातमिति ।

अयमर्थः— तेन दीव्यतीत्याख्यातम् , तत्करणकदेवनक्रियारूपार्थबोधकम् , आक्षिक इति तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् । तद्धितार्थसम्बन्धिनो यस्य कस्यचिद् अर्थस्य क्रियारूपस्य कारकरूपस्य चोपदर्शकम् न तु तस्य तद्धितार्थस्यैवोपदर्शकमित्यत्र हेतुमाह—**गुणप्रधानभावस्येति ।**

यतस्तत्राख्याते पदार्थानां गुणप्रधानभावस्य तद्धितार्थापेक्षया विपर्ययो वैपरीत्यं दृष्टमिति । अक्षैर्दीव्यतीति—आख्याते ह्यक्षकरणिका देवनक्रिया इति क्रियामुख्यविशेष्यको बोधः । आक्षिक इत्यादौ तद्धितान्ते त्वक्षकरणकदेवनक्रियाकर्तेति प्रथमान्तार्थमुख्यविशेष्यको बोध इति ।

अयं भावः—लक्षणे-'तेन दीव्यति' (४।४।२) इत्याख्यातं तद्धितार्थस्य ज्ञापक-

वक्ष्यति च—

"गुणप्रधानताभेदः पुरुषादिविपर्ययः ।
निर्दिष्टस्यान्यथा शास्त्रे नित्यत्वान्न विरुध्यते ॥
यथानिर्देशमर्थाः स्युर्येषां शास्त्रं विधायकम् ।
किञ्चित्सामान्यमाश्रित्य स्थिते तु प्रतिपादनम् ॥
योऽश्वे यः पीठ इत्यत्र भूतयोरश्वपीठयोः ।
यथोपलक्षणार्थत्वं तथार्थेष्वनुशासनम् ॥" इति ॥३०६॥

---

निमित्तत्वेनोक्तम् ; अतः 'क्रियाप्रधानमाख्यातम्' ( निरुक्त १।१ ) इति यास्काभ्युपगमानुरोधात् क्रियाप्रधानस्यैवार्थस्य तद्धितान्तादवगतिर्यद्यपि प्राप्नोति, तथापि = आख्यातस्य क्रियाप्रधानत्वेऽपि तद्धितः स्वभावात् साधनप्रधान इति तादृशक्रियाकर्तृरूपस्य साधनार्थस्यैव तद्धितान्तात् प्राधान्येनावगतिरिति 'तेन दीव्यति' इत्यादिनिर्देशेऽर्थानां गुणप्रधानभावो न विवक्षितः; अक्षकरणकदेवनादिक्रियाकर्तृमात्रमेव, तत्राक्षिकपदस्य प्रयोजकमिति स एव मुख्योऽर्थः । तदेतद् वक्ष्यति पद्यत्रयेणाग्रे—

गुणप्रधानताभेदः पुरुषादिविपर्ययः ।
निर्दिष्टस्यान्यथा शास्त्रे नित्यत्वान्न विरुध्यते ॥
यथानिर्देशमर्थाः स्युर्येषां शास्त्रं विधायकम् ।
किञ्चित् सामान्यमाश्रित्य स्थिते तु प्रतिपादनम् ॥
योऽश्वे यः पीठ इत्यत्र भूतयोरश्वपीठयोः ।
यथोपलक्षणार्थत्वं तथाऽर्थेष्वनुशासनम् ॥ इति ।

अयमर्थः—शास्त्रे = 'तेन दीव्यती'त्यादौ निर्दिष्टस्यान्यथा' = निर्दिष्टादन्यथा इति वक्तव्ये शेषत्वविवक्षया षष्ठी । गुणप्रधानताभेदः = गुणप्रधानभावविपर्ययः । अक्षैर्दीव्यति आक्षिक इत्यादौ पुरुषादिविपर्ययः = आक्षिकोऽसि, आक्षिकोऽहम् इत्यादौ पुरुषविपर्ययः । आक्षिकौ आक्षिका इत्यादौ संख्याविपर्ययः । नित्यत्वात् = शब्दानां नित्यत्वात्, अनादित्वाद् न विरुध्यते । अनादिः शब्दव्यवहार एव तत्तदर्थे शब्दप्रयोगनियामकः शास्त्रेऽर्थस्य निर्देशस्तु यत्किञ्चिदुपदर्शकोऽविवक्षित इति भावः ।

येषां शब्दानित्यत्ववादिनां मते शास्त्रं शब्दानां विधायकम्, तेषां मते शब्दानां तत्तदर्थे कृतसंस्काराणां शब्दानाम्, यथानिर्देशमर्थाः स्युः = शास्त्रे निर्दिष्टा येऽर्थास्तदनुसारेणार्थाः स्युः । स्थिते तु = नित्ये तु शब्दे, किञ्चित् सामान्यम् = शास्त्रनिर्देशानुसारिणं लोकव्यवहारानुसारिणं च कञ्चित् सामान्यभूतमर्थमाश्रित्य गुणप्रधानभावं पुरुषादिकञ्चाविवक्षित्वा शब्दानामर्थानुशासनं शास्त्र इति भावः ।

योऽश्वे दृष्टः स चैत्रः, यः पीठे दृष्टः स चैत्र इत्यत्र यथाभूतयोरश्वपीठयोश्चैत्रपदार्थे उपलक्षणार्थत्वम्, न तु विशेषणार्थत्वम् ; भूतत्वेनाविद्यमानत्वात् । गजप्रासादादावपि चैत्रस्य दर्शनाच्च । तथा शास्त्रेऽर्थेष्वनुशासनम् = अर्थविषयकमनुशासनमुपलक्षणम् । यथा विध्यत्यधनुषा इत्यत्र धनुःपदं करणसामान्यस्योपलक्षणमिति भावः ॥३०६॥

अथ क्वचित् सान्निध्यमित्येतस्य प्रतिपादनायाह—

**निर्देशे लिङ्गसंख्यानां सन्निधानमकारणम् ।**
**प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते ॥३०७॥**

सिद्धलक्षणो भावो घञादीनां निमित्तत्वेनाभीष्ट इति तत्प्रतिपादनाय भाव इत्यस्मिन् निर्देशे लिङ्गसंख्ययोर्नान्तरीयकतया प्रतिपत्तावपि सन्निधानमकारणम्, न तत्र तयोः प्रयोजकत्वमिति यावत्। ननु नान्तरीयकतया प्रतिपत्तौ कथं क्वचित् सान्निध्यमप्येषां प्रतिपत्तावकारणमित्युक्तम्। प्रयोजकार्थवत् तद्व्यवहारपर्यन्तायां प्रतिपत्तावकारणमित्यभिप्रायः।

इदानीं यच्चानुपात्तमित्येतस्य प्रतिपादनायाह—प्रमाणमेवेति। इह उदात्तानुदात्तस्वरसमाहारः स्वरित इत्युक्तम्, ह्रस्वदीर्घप्लुताश्च मात्रिकद्विमात्रिकत्रिमात्रलक्षणा उदात्तानुदात्तस्वरसमाहाररूपा भवन्ति। तत्र ह्रस्वस्वरितादीनां कियदुदात्तं कियदनुदात्तम्? आदौ किमुदात्तमथानुदात्तं मध्येऽन्ते वेति सन्देहापाकरणायो-

---

अथ 'क्वचित् सान्निध्यमप्येषां प्रतिपत्तावकारणम्' (३०४) इत्येतस्य द्वितीयप्रकारस्य प्रतिपादनायाह— **निर्देश इति।**

अयमर्थः—निर्देशे=भावे इत्यादौ सौत्रे निर्देशे, लिङ्गसंख्यानाम्—पुंस्त्वरूपस्य लिङ्गस्य, एकत्वरूपायाः संख्यायाश्च नान्तरीयकतया प्रतीतयोरपि संनिधानम्, प्रतिपत्तौ अकारणम्—प्रतिपत्तिमात्रे कारणत्वेऽपि व्यवहारफलायां प्रतिपत्तावकारणम्, भावे इत्यत्र—लिङ्गसंख्ययोर्न स्वविषयकव्यवहारप्रयोजकत्वमिति यावत्। अत एवेदं व्याख्यातं पुण्यराजेन—"प्रयोजकार्थवत् तद्व्यवहारपर्यन्तायां प्रतिपत्तावकारणमित्यभिप्रायः" इति।

अयं भावः—सिद्धलक्षणो भावो घञादीनां निमित्तत्वेनाभीष्ट इति तत्प्रतिपादनाय भाव इत्यस्मिन् निर्देशे लिङ्गसंख्ययोर्नान्तरीयकतया प्रतिपत्तावपि तयोः सन्निधानं स्वविषयकव्यवहारेऽकारणम्, न तयोरत्र स्वव्यवहारे प्रयोजकत्वमिति यावदिति।

इदानीं यच्चानुपात्तमित्येनं तृतीय प्रकारमुत्तरार्धेन प्रतिपादयितुमाह—**प्रमाणमेवेति।** अत्र—'प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते' इति पाठो हेलाराजसम्मत इति शब्दरत्नदर्शनेनावसीयते। तदुक्तं शब्दरत्ने—"हरिरप्याह—प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते इति। अनुपात्तमप्यर्धमात्रारूपं प्रमाणमेवोपलक्ष्यते इत्यर्थं तस्य हेलाराज आह" इति। क्वचित्तु—'प्रमाणमर्धह्रस्वादावनुपात्तं प्रतीयते' इति पाठः। अत्रार्धह्रस्वादावित्यस्यार्धह्रस्वादिपदे इत्यर्थः। अर्धह्रस्वादिपदे योगशक्त्याऽनुपात्तमप्यर्धमात्रारूपं प्रमाणं रूढ्या प्रतीयते इत्यक्षरयोजना। तदुक्तं भाष्ये—अर्धह्रस्वशब्दोऽर्धमात्रायां रूढः" इति।

अयं भावः—"समाहारः स्वरितः" (१।२।३१) इति सूत्रादुदात्तानुदात्तयोः समाहारः स्वरित इति लभ्यते। स्वरिताश्च ह्रस्वदीर्घप्लुता मात्रिकद्विमात्रिकत्रिमात्रिका भवन्ति। इत्यपि 'ऊकालोऽज्' इति सूत्रबलादवसीयते। तत्रैवं सति ह्रस्वस्वरितादीनां कियदुदात्तं

**क्तम्**—"तस्यादित उदात्तमर्धह्रस्वम्" ( १।२।३२ ) इति । अत्र चार्द्धह्रस्वग्रहणमर्द्ध-मात्रालक्षणस्य प्रमाणस्योपलक्षणमिति तदेव तस्मात् प्रतीयते इत्यर्धह्रस्वग्रहणप्रति-पाद्यस्याप्रधानस्याविवक्षैवोक्ता ॥२०७॥

एतदेव प्रदर्शयितुमाह -

**ह्रस्वस्यार्द्धं च यद् दृष्टं तत्तस्याऽसन्निधावपि ।**
**ह्रस्वस्य लक्षणार्थत्वात् तद्वदेवाभिधीयते ॥२०८॥**

अतश्च ह्रस्वस्यार्धं च दृष्टमर्धमात्रात्मकं तत्तस्य ह्रस्वस्यासन्निधावपि दीर्घ-प्लुतयोरप्यादिभूतार्द्धमात्रोदात्तेत्युच्यते । कस्मादित्याह – **ह्रस्वस्य लक्षणार्थत्वा-दिति** । अर्द्धह्रस्वमित्यत्र ह्रस्वग्रहणं मात्राया उपलक्षणार्थम् । अतो दीर्घप्लुतयो-रप्यादिभूतार्द्धमात्रोदात्तेति बोद्धव्यम् । एतदेवान्यैरुक्तम्—अर्धह्रस्वमित्यनेनार्द्ध-मात्रा लक्ष्यते ह्रस्वग्रहणमतन्त्रमिति । तस्माद्ध्रस्वस्यात्र लक्षणार्थत्वाद् दीर्घप्लुत-

---

कियदनुदात्तमिति, आदौ किमुदात्तमथानुदात्तं मध्येऽन्ते वेति संदेहनिरासाय—"तस्यादितमुदात्तमर्धह्रस्वम्" सूत्रं प्रणीतम् । अत्र चार्धह्रस्वग्रहणमर्धमात्रारूपस्य प्रमाणस्य रूढया बोधकम्, न तु यौगिकं योगरूढं वा; दीर्घादिष्वप्राप्तेः । वस्तुतस्त्वर्धह्रस्वशब्दोऽर्ध-मात्रायां रूढ इति भाष्यस्य लक्षणया रूढ इत्यर्थः । 'प्रयोजनवती रूढालक्षणा द्विविधा मता' इत्युक्तेर्लक्षणायामपि रूढिसद्भावात् ।

अत एव—"अत्रार्धह्रस्वपदेन अर्धमात्रा लक्ष्यते" इति हरदत्तोक्तिरपि समञ्जसा । **एवञ्च** "तस्यादितः" ( १।२।३२ ) इति सूत्रस्थमनोरमाऽन्यथालानपरः शब्दरत्न-ग्रन्थश्चिन्त्य एव । तस्मादर्धह्रस्वपदेनार्धमात्रैव रूढ्या प्रतीयत इत्यर्धह्रस्वपदेऽप्रधानीभूतस्य ह्रस्वपदार्थस्याविवक्षैवेति ॥२०७॥

उक्तमेवार्थं स्फुटीकुर्वन्नाह—**ह्रस्वस्यार्धमिति** ।

अयमर्थः—क्व वोऽश्वाः (ऋग्० ५।६१।२) इत्यादौ ह्रस्वस्वरितस्यार्धं च यद् दृष्टम-र्धमात्रारूपं प्रमाणं तत्तस्य ह्रस्वस्वरितस्य 'रथानां न येऽराः' (ऋग्० १०।७८।४) इत्यादौ = दीर्घस्वरितादौ असन्निधावपि 'अर्धह्रस्वम्' इत्यत्र ह्रस्वस्य = ह्रस्वपदस्य, लक्षणार्थत्वाद् = मात्रायां लाक्षणिकत्वाद्, तद्वदेव = ह्रस्वस्वरितस्येव । षष्ठ्यन्तादिवार्थे वतिः । अर्धह्रस्वपदेनार्धमात्रायां लाक्षणिकेन ह्रस्वस्वरितस्येव दीर्घप्लुतस्वरितयोरप्यर्ध-मात्रैवोदात्तेति अभिधीयते = बोध्यते इति । अर्धह्रस्वपदस्यार्धमात्रायामभिधा रूढिरूपेति तु न । रूढौ सर्वाऽवयवार्थबाधः, ह्रस्वपदस्य मात्रायां लाक्षणिकत्वे तु तस्यैवार्थबाध इति वरं ह्रस्वपदे लक्षणैव पदद्वयसमुदाये रूढिस्वीकारापेक्षया । किञ्चार्धमात्रायामर्धपदार्थानुगमो दृश्यते, ह्रस्वपदार्थानुगमस्तु नेति विशेषसत्त्वाद् ह्रस्वपदे लक्षणैव युक्ता । यत्रावयवार्थानुगमो

योरप्यर्द्धमात्रोदात्ता भवतीत्यभिधीयते। किंवदित्याह—तद्वदेवेति। यथा तस्य ह्रस्वस्यार्द्धमात्रोच्यते, तथा तदसन्निधौ दीर्घप्लुतयोरपीत्यर्थः ॥३०८॥

अथवा प्रकारत्रयमत्र प्रतिपाद्यते, तत्राद्यप्रकारमाह—

**दीर्घप्लुताभ्यां तस्य स्याद् मात्रया वा विशेषणम्।**
**जातेर्वा लक्षणा यस्मात् सर्वथा सप्तपर्णवत् ॥३०९॥**

ह्रस्वग्रहणेन "ऊ३कालोऽज्झ्रस्वदीर्घप्लुतः" इत्यत्रैकयोगनिर्दिष्टत्वाद् दीर्घप्लुतावपि लक्ष्येते, ततश्च दीर्घप्लुताभ्यां तस्यार्द्धस्यावच्छेदः स्यात्। विषमत्रिभागेऽप्यर्द्धशब्दो दृष्टो ग्रामार्द्धं नगरार्धमिति। तथाऽत्रेति दीर्घप्लुतयोरप्यर्द्धमात्रोदात्ता भवति।

---

न दृश्यते रथन्तरादौ तत्रैव रूढिस्वीकारादिति। एवञ्च दीर्घप्लुतस्वरितयोरप्यादिभूतार्धमात्रैवोदात्तेति बोध्यम्। एतदेवान्यैरुक्तम्—"अर्धह्रस्वमित्यनेनार्धमात्रा लक्ष्यते, ह्रस्वग्रहणमतन्त्रम्" इति।

तदुक्तं पुण्यराजेन—"किंवदित्याह—तद्वदेवेति। यथा तस्य ह्रस्वस्यार्धमात्रोच्यते, तथा तदसन्निधौ—दीर्घप्लुतयोरपीत्यर्थ इति। अर्धमात्रारूपप्रमाणस्य तुल्यत्वाभिप्रायेण तद्वदित्यत्र—'तत्र तस्येवे'ति षष्ठ्यन्ताद् वतिरिति तदभिप्रायः ॥३०८॥

अथवा प्रकारत्रयमर्धह्रस्वपदे प्रतिपाद्यते। तथा हि ह्रस्वपदस्य मात्रायां लक्षणा—इत्येकः प्रकारः। स च समनन्तरमेवोक्तः। इयं जहल्लक्षणा—इति वृद्धाः। ह्रस्वत्वजात्यवच्छिन्नस्य ह्रस्वपदार्थस्य परित्यागात्। वस्तुतस्तु ह्रस्वत्वं न जातिः, किन्तु मात्राकालिकत्वे सति अच्त्वम्। "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" (१।२।२७) इति संज्ञासूत्रस्य तत्रैवार्थे शक्तिग्राहकत्वात्। तथा च विशेषणीभूतस्य मात्रारूपस्यार्थस्यापरित्यागाद् अन्यांशस्य च परित्यागाद् जहदजहल्लक्षणैवात्र युक्ता 'तत्त्वमस्या'दि महावाक्येषु तत्त्वमादिपदेष्विव। अयं तु विशेषः—तत्त्वमादिषु विशेषणांशस्य हानम्, अत्र तु विशेष्यांशस्येति।

यद्वाऽर्धह्रस्वपदघटकह्रस्वपदेन छत्रिन्यायेन ह्रस्वघटितो ह्रस्वदीर्घप्लुतसमुदायो लक्ष्यते, यः खलु "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इत्यत्रोपात्त इत्यजहल्लक्षणा, अर्धशब्दस्तु द्विधाभूतस्य समविषमविभागसाधारण्येनैकदेशमात्रपरः। दृश्यते हि विषमविभागेऽप्यर्धशब्दो ग्रामार्धम्, नगरार्धमिति। तथा च अर्धह्रस्वमित्यत्रार्धशब्दः समविभागे, अर्धदीर्घम्, अर्धप्लुतम्—इत्यनयोस्तु स विषमविभागे इति दीर्घप्लुतयोरप्यर्धमात्रैवोदात्तेति द्वितीयः प्रकारः। यद्वा निरस्तावयवविभागस्याखण्डस्यार्धह्रस्वपदस्य सप्तपर्णादिवद्रूढिशक्तिरेवार्धमात्रारूपेऽर्थे इति तृतीयः प्रकारः। अयं तु न युक्तः; अत्र पक्षेऽनुभूयमानस्यावयवार्थस्य बाधाभ्युपगमादिति। तत्र द्वितीयं प्रकारमेवापूर्वत्वात् पूर्वमाह—दीर्घप्लुताभ्यामिति।

द्वितीयं प्रकारमाह—

मात्रया अथवार्द्धस्यावच्छेदः, ह्रस्वसंज्ञकत्वस्याविवक्षितत्वात्। एतच्च निदर्शितं ह्रस्वस्यार्द्धमित्यनेन।

अथवा निरस्तावयवविभागोऽर्द्धह्रस्वशब्दोऽखण्ड एवार्द्धमात्राजातेः सप्तपर्णादिवदुपलक्षक इति। तृतीयमत्र प्रकारमाह— जातेर्वेति ॥३०९॥

इदानीं क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणमिति व्याख्यातुमाह—

**गन्तव्यं दृश्यतां सूर्य इति कालस्य लक्षणे।**
**ज्ञायतां काल इत्येतत्सोपायमभिधीयते ॥३१०॥**

---

अयमर्थः—'ऊकालोऽज्झ्रस्वदीर्घप्लुतः'' इत्यत्रैकयोगनिर्दिष्टत्वाद् ह्रस्वग्रहणेन दीर्घप्लुतावपि छत्रिन्यायेन लक्ष्येते। ततश्चार्धह्रस्वमित्यत्र ह्रस्वग्रहणेनेव दीर्घप्लुताभ्यामपि तस्यार्धस्य विशेषणम्—अवच्छेदः=व्यावृत्तिरिति यावत्, स्यात्। विषमविभागेऽप्यर्धशब्दो दृष्टः, यथा ग्रामार्धम् नगरार्धमिति; तथाऽत्र दीर्घप्लुताभ्यां सह सम्बध्यमानोऽर्धशब्दो विषमविभागे, ह्रस्वशब्देन सह सबध्यमानस्तु समविभागे; समविषमविभागसाधारण्येनात्रार्धशब्दस्य प्रयोगादिति ह्रस्वस्वरित इव दीर्घप्लुतस्वरितयोरप्यर्धमात्रैवोदात्ता भवतीत्यवधेयम्। प्रथमं प्रकारमाह—**मात्रया वा विशेषणमिति।**

अयमर्थः—वा=अथवा, मात्रयाऽर्धस्य विशेषणम्—अवच्छेदोऽर्धह्रस्वपदे क्रियते इति शेषः। प्रागुक्तरीत्या ह्रस्वपदस्य मात्रायां लाक्षणिकत्वेन रूढ्यर्थस्य ह्रस्वसंज्ञकत्वस्याविवक्षितत्वादिति। एतच्च ह्रस्वस्यार्धञ्च यद्दृष्टमित्यत्र निदर्शितम्। तृतीयमत्र प्रकारमाह— **'जातेर्वा' इति।**

अयमर्थः—वा=अथवाऽर्धह्रस्वपदेन अखण्डेन सर्वथाऽवयवविभाग विहाय यस्मात् सप्तपर्णवत्=सप्तपर्णपदेन तुल्यम्। तुल्यार्थे वतिः, लक्षणाक्रियासाम्यात्। जातेर्लक्षणा— अर्धमात्रात्वरूपाया जातेर्ज्ञापना, न तु लक्षणाऽत्र वृत्तिः। तथात्वे सप्तपर्णवत्—इति दृष्टान्तासङ्गतिप्रसङ्गात्। तस्माद् दीर्घप्लुतादिष्वप्यर्धमात्रैवोदात्ता भवतीति।

अयं भावः- निरस्तावयवविभागोऽर्धह्रस्वशब्दोऽखण्ड एवार्धमात्रात्वजातेः सप्तपर्णादिवदुपलक्षक इति ॥३०९॥

इदानीं 'क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम्' (२।३०५) इति प्रागुक्तं व्याख्यातुमाह—**गन्तव्यं दृश्यतामिति।**

अयमर्थः—यत्र क्वचित् पथिकैरित्थमभिधीयते, त्वर्यतामद्यापरमपि वर्त्म गन्तव्यमस्ति, सूर्यश्च दृश्यतामिति। तत्र मुख्यया वृत्त्या सूर्यदर्शनप्राधान्येन श्रूयमाणेन 'दृश्यतां सूर्यः' इति वाक्येन कालस्य लक्षणे=कालविशेषस्य लक्षणया बोधने क्रियमाणे ज्ञायतां कालः =ज्ञायतामल्पीयान् अह्नो भागरूपः कालः परिशिष्यते—इत्येतद् वाक्यार्थरूपं वस्तु सोपा-

पथिकैः कचिदित्थमभिधीयते त्वर्यतामद्यापरोऽध्वा गन्तव्यः सूर्यश्च दृश्यतामित्यत्र सूर्यदर्शनप्राधान्येन शब्दः श्रूयमाणो ज्ञायतामल्पीयान् भागोऽह्नः परिशिष्यत इत्यर्थस्य सोपायस्य सनिश्चयस्योपलक्षकः सम्पद्यत इति प्रधानेनार्थेनान्यार्थोपलक्षणमिति लक्षितपरार्थो मुख्यः शक्त्यर्थोऽपि न त्यक्त इति ॥३१०॥

एतदेव श्लोकत्रयेण शास्त्रलोकयोरुदाहरणेषु वितत्य प्रदर्शयितुमाह—

**विध्यत्यधनुषेत्यत्र विशेषेण निदश्यते ।**
**सामान्यमाश्रयः शक्तेर्यः कश्चित्प्रतिपादकः ॥३११॥**

अधनुषेत्यनेन विशेषेण करणसामान्यमात्रं निदर्श्यते । तत्कीदृशमित्याह—शक्तेः करणशक्तेराश्रयोऽधिकरणमात्रम् ततश्च तस्या यः कश्चित्प्रतिपादक उपा-

---

यम् = सूर्यदर्शनरूप कालज्ञानोपायसहितम्, अभिधीयते = बोध्यते । तत्र साहित्यविशेषणीभूतो वाक्यार्थः शक्त्या, विशेष्यभूतस्तु लक्षणयेति विवेकः, शक्यार्थबाधश्च वैयर्थ्यात् । अत्र साहित्यञ्च बौद्धम् । शक्यार्थलक्ष्यार्थबोधयोः पूर्वापरभावित्वेन बाह्यस्य साहित्यस्यासंभवात् । यद्वा—विशेषणीभूतेऽर्थे केवले शक्तिः, सहिते त्वजहल्लक्षणेत्यवधेयम् ।

यत्तु पुण्यराजेनेदं पद्यमेवं व्याख्यातम्—"पथिकैः क्वचिदित्थमभिधीयते, त्वर्यतामद्यापरोऽध्वा गन्तव्यः, सूर्यश्च दृश्यताम्" इत्यत्र सूर्यदर्शनप्राधान्येन शब्दः श्रूयमाणो 'ज्ञायतामल्पीयान् भागोऽह्नः परिशिष्यते' इत्यर्थस्य सोपायस्य सनिश्चयस्योपलक्षकः संपद्यत इति प्रधानेनार्थेनान्यार्थोपलक्षणमिति लक्षितपरार्थो मुख्यशक्त्यर्थोऽपि न त्यक्त इति । अत्र—सोपायपदस्य सनिश्चयस्येति व्याख्यानं न युज्यते उपायपदस्य निश्चयेऽवृत्तेः; लक्षणया उपायनिश्चयपरत्वमपि न, अर्थासंगतेः । नहि सूर्यदर्शनरूपस्य कालज्ञानोपायस्य निश्चयः शक्यार्थः, येन तत्सहितोऽन्योऽर्थो लक्ष्यः स्यात् ।

किञ्च प्रागुक्तरीत्या उपायपदस्य मुख्यार्थपरत्वसंभवे निश्चये लक्षणा न युक्तेति । उपलक्षकः संपद्यत इत्यत्रोपलक्षको लक्षणया बोधकः । एवमन्यार्थोपलक्षणमित्यस्यान्यार्थस्य लक्षणया बोधनमित्यर्थः । लक्षितपरार्थो मुख्यशक्त्यर्थोऽपि न त्यक्त इत्यनेनाऽजहल्लक्षणा सूचितेति ॥३१०॥

क्वचित् प्रधानीभूतोऽर्थोऽन्यार्थस्योपलक्षकः संपद्यत इति 'क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम्' (२।३०५) इत्यस्य प्रधानीभूत एव विशेषार्थोऽन्यस्य समानार्थस्य लक्षणं लक्षणया बोधकमित्यर्थमभिप्रेत्य एतदेव शास्त्रलोकयोरुदाहरणेषु श्लोकद्वयेन वितत्य प्रदर्शयितुमाह —विध्यत्यधनुषेति ।

अयमर्थः—विध्यत्यधनुषा (४।४।८३) इत्यत्र सूत्रे विशेषेण करणविशेषवाचकेन धनुःपदेन शक्तेः = करणशक्तेः, आश्रयः = सामान्यमधिकरणमात्रं यः कश्चित् पदार्थः कुन्तशक्त्यादिस्तस्य प्रतिपादकः शब्दो निदर्श्यते । धनुःपदस्य करणसामान्ये 'काकेभ्यो दधि रक्ष्य-

दीयते। एतदुक्तं भवति—करणनिषेधपरायां चोदनायां धनुर्लक्षणस्य विशेषस्यापरित्यागेनैव करणमात्रस्य मुख्यत्वमिति [लक्ष्यत्वमिति] शास्त्रीयमुदाहरणम्। उक्तं च—"विध्यत्य-करणेनेतीतरथा ह्यतिप्रसङ्गः" (भा० ४।४।८३) इति ॥३११॥

विशेषाभिधायकेऽपि वाक्ये सामान्यमात्रमेव प्रयोजकं लोकेऽपि दृश्यत इत्याह—

**काकेभ्यो रक्ष्यतां सर्पिरिति बालोऽपि चोदितः ।**
**उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति ॥३१२॥**

सर्पिषः काकेभ्यो रक्षणमत्र विशिष्टमेव विहितमप्युपघातमात्रनिवारणफले पर्यवस्यतीति तदेव तत्र प्रयोजकं बोद्धव्यम् ॥३१२॥

---

मित्यत्रैवाजहल्लक्षणयोपलक्ष्यते। धनुःपदस्य करणसामान्ये लक्षणयाऽन्येऽपि करणान्तरवाचकाः कुन्तशक्त्यादिशब्दास्तृतीयान्ता धनुःपदेनोपादीयन्त इति भावः।

पुण्यराजेन त्वत्र वाक्यत्रयं कृत्वेयं कारिका एवं व्याख्याता—अधनुषा इत्यनेन विशेषेण करणसामान्यमात्रं निदर्श्यत इत्येकं वाक्यम्। तत् कीदृशमित्याह—शक्तेः = करणशक्तेः, आश्रयः = अधिकरणमात्रम्, इति द्वितीयम्। ततश्च तस्याः यः कश्चित् प्रतिपादक उपादीयत इति तृतीयमिति।

इदं तु चिन्त्यम्—मदुक्तरीत्या संभवत्येकवाक्यत्वे श्रीपुण्यराजस्य वाक्यभेदप्रयासः किमर्थं इति।

काशिकाया आशयस्तु—"विध्यत्यधनुषा" इति सूत्रस्य करणसामान्यनिषेधे तात्पर्यम्। ततश्चाजहल्लक्षणया धनुर्लक्षणस्य विशेषस्य मुख्यार्थस्यापरित्यागेनैव करणमात्रस्य लक्ष्यत्वमिति 'क्वचित् प्रधानमेवार्थो भवत्यन्यस्य लक्षणम्' इत्यस्य शास्त्रीयमुदाहरणम्। उक्तञ्च—विध्यत्यकरणेतीतरथा ह्यतिप्रसङ्ग इति।

अयमर्थः—'विध्यत्यधनुषा' इत्यस्य स्थाने विध्यत्यकरणेनेति वक्तव्यम्; अन्यथा हि 'चोरं विध्यति खड्गेन' इत्यादौ यतोऽतिप्रसङ्ग इति ॥३११॥

विशेषाभिधायकेऽपि वाक्ये सामान्यमात्रमेव प्रयोजकमित्येतल्लोकेऽपि दृश्यत इत्याह—**काकेभ्य इति।**

काकेभ्यो रक्ष्यतां सर्पिरित्युपघातपरे—काकपदस्याजहल्लक्षणया दध्युपघातकमात्रविषयकतात्पर्यवति वाक्ये प्रयुक्ते सति अनेन वाक्येन चोदितः सर्पीरक्षणे प्रवर्तितोऽपि बालः श्वादिभ्यः सर्पिर्न रक्षति न, किन्तु रक्षत्येवेति योजना। अत्रोपघातशब्दो दध्युपघातशब्दस्य कर्मण्यणन्तस्यैकदेशः—"विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः" इति वार्त्तिकमनुसृत्य प्रयुक्तः। अपिशब्दश्च भिन्नक्रमश्चोदितपदोत्तरं द्रष्टव्यः।

अयं भावः—यद्यपि सर्पिषः काकेभ्यो रक्षणमत्र विशेषरूपमेव विहितम्, तथापि दध्युपघातकमात्रनिवारणफलकमेव तात्पर्यतः पर्यवस्यतीति सामान्यरूपमेतदेव विशेषाभिधायकस्य प्रकृतवाक्यस्य प्रयोजकम् = प्रयोगनिमित्तम् बोध्यमिति ॥३१२॥

क्वचित् साक्षादनुक्तमपि मुख्यार्थनान्तरीयकतया प्रतिपद्यत एवेति दर्श-यितुमाह—

**प्रक्षालनं शरावाणां स्थालीनां मार्जनं तथा।**
**अनुक्तमपि रूपेण भुज्यङ्गत्वात् प्रतीयते ॥३१३॥**

भोजनमस्योपपाद्यतामित्यत्र भोजनोपपादनं शब्दः प्रत्याययंस्तदङ्गानामासनदानपात्रप्रक्षालनादीनां नान्तरीयकतया प्रत्यायनं करोत्येवम्। प्रक्षालने इति वा पाठः। शरावाणां प्रक्षालने शब्देनोपात्ते स्थालीनिर्मार्जनाद्यनुक्तमपि सम्भवाद् भुज्यङ्गत्वात् प्रतीयत एवेति। तदेवम् 'प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम्" (२।८१) इत्येतदेव वितत्य प्रसङ्गाद्वैचित्र्येणोपदर्शितम्।

एवम् 'प्रमाणमर्द्धह्रस्वादौ" इत्यादिना "प्रक्षालनं शरावाणाम्" इत्यन्तेन ग्रन्थेन यच्चानुपात्तमित्यादिश्लोको व्याख्यातः। एतेन श्लोकेन प्रकारद्वयेन लक्षणा

---

'यच्चानुपात्तं शब्देन तत् कस्मिंश्चित् प्रतीयते' (२।३०५) इत्यस्य क्वचित् साक्षादनुक्तमपि वाक्यार्थरूपं वस्तु मुख्यार्थनान्तरीयकतया प्रतीयत एवेत्यर्थमभिप्रेत्यैतदुदाहरणं दर्शयितुमाह—**प्रक्षालनमिति**।

अयमर्थः—भोजनमस्याभ्यागतस्योपपाद्यतामित्यस्माद् भोजनोपपादनप्रत्यायकात् शब्दाद् रूपेण=स्वरूपेण, अनुक्तमपि शरावाणाम्—स्वल्पपात्रीणाम्, हैमीनां राजतीनां वा जलेन प्रक्षालनम्, तथा स्थालीनां पिठराणां मार्जनं मृज्जलादिभिः शोधनम्, भुज्यङ्गत्वाद् =भोजनक्रियाशेषत्वाद् आक्षेपलक्षणयाऽर्थापत्त्या नान्तरीयकतया प्रतीयत एवेति। अनेन साम्प्रत चीनमृत्तिकापात्राणामिव पुराऽपि हैमराजतभोजनपात्राणां प्रतिभोजनं जलेन प्रक्षालनमेव सदाचारप्राप्तमासीत्, पाकपात्राणां तु सायं प्रातर्वारद्वयं मृज्जलादिभिर्मार्जनमिति गम्यते। धर्मशास्त्रेऽपि हैमराजतपात्राणां जलप्रक्षालनादेव शुद्धिरुक्तेति। मृत्पात्राणां तूच्छिष्टवतां परित्याग एव धर्मशास्त्रे विहित इति न तेषां जलेन प्रक्षालनात् शुद्धिरिति। प्रक्षालने इति पाठे—शरावाणां प्रक्षालने शब्देनोपात्ते, तथा शरावणां प्रक्षालनवत्, स्थालीनां मार्जनं स्वरूपेणानुक्तमपि संभवात्—भुज्यङ्गत्वात् प्रतीयत एवेति योजना।

तदेवम्—'प्रयोजकमिदं त्वेषामत्रेदं नान्तरीयकम्' (२।८१) इति प्रागुक्तमेव वितत्य प्रसङ्गाद् वैचित्र्येण—'विध्यत्यधनुषेति, काकेभ्यो रक्ष्यतामिति, प्रक्षालनं शरावाणाम्' इति श्लोकत्रयेणोपदर्शितम्। अत्राप्ययं विशेषः—प्रयोजकमिदं तेषामित्यंशः श्लोकद्वयेन आद्येन, अत्रेदं नान्तरीयकमित्यंशस्तु अन्त्येन पद्येनेति।

किञ्च, प्रमाणमर्धह्रस्वादावित्यादिना प्रक्षालनं शरावाणाम् इत्यनेन च ग्रन्थेन 'यच्चानुपात्तं शब्देन तत् कस्मिंश्चित् प्रतीयते' (२।३०५) इति श्लोकार्धं व्याख्यातम्। किञ्च, एतेनैव श्लोकसंदर्भद्वयेन प्रकारद्वयेन लक्षणाऽपि प्रदर्शिता। तथाहि—कदाचिन्मुख्यार्थत्यागेनैवान्यस्योपलक्षणमेतदेवाविवक्षितवाच्यमुच्यते। एतदुपदर्शितम् 'प्रक्षालनं शरावाणाम्'

प्रदर्शिता। कदाचिन्मुख्यार्थत्यागेनैवान्यस्योपलक्षणमेतदेवाविवक्षितवाच्यमुच्यते। कदाचिन्मुख्यार्थाविरामोपायपूर्वकमन्यार्थोपलक्षणमेतदेव विवक्षितान्यपरवाच्यमुक्तं विज्ञेयम्। इत्येवं मुख्यनान्तरीयकविभाग उपदर्शितः ॥३१३॥

अथात्रेदं गौणमिदं मुख्यमिदं नान्तरीयकमित्येवं शब्दार्थनिर्णयप्रस्तावे तत्तन्निश्चयोपायानुपदर्शयितुकाम आह—

**वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः।**
**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥३१४॥**

तत्र वाक्याच्छब्दार्थनिर्णयो यथा कटं करोति भीष्ममुदारं दर्शनीयमिति तुल्यायामपि श्रुतौ यदा कटस्यैव करोतिक्रियया सम्बन्धः, तदा द्रव्यस्य च निर्गुणस्यानुपपत्तेर्गुणानां च निरधिकरणानामसम्भवादाकाङ्क्षादिना तत्सामानाधिकरण्यं वाक्यीयात् समन्वयादिति भीष्मगुणान्वितस्यैव कटस्य करणं वाक्यार्थः।

---

इत्यादिना पात्रप्रक्षालनमार्जनादेरमुख्यार्थत्वात्। कदाचिन्मुख्यार्थाविरामरूपो योऽन्यार्थलक्षणाया उपायस्तत्पूर्वकमन्यार्थोपलक्षणमेतदेव विवक्षितान्यपरवाच्यमुक्त विज्ञेयम्। एतच्चोपदर्शितम्—'विध्यत्यधनुषा' इत्यत्र 'प्रमाणमर्धह्रस्वादावि'त्यत्रापि च तत्र वाच्यार्थस्याप्युपग्रहात्।

यद्यप्येतौ काव्यप्रकाशादौ ध्वनिभेदावुक्तौ, तथापि ध्वनि लक्षणायामन्तर्भावयतां नैयायिकानां मतमाश्रित्येदमुक्तम्। एतयोः सप्रभेदयोरुदाहरणान्तराणि बहूनि काव्यप्रकाशादितो विज्ञेयानि। इत्येवमनेन प्रकरणेन मुख्यनान्तरीयशब्दार्थविभाग उपदर्शितः ॥३१३॥

अथात्रेदं गौणमिदं मुख्यमिदं नान्तरीयकमित्येवं शब्दार्थौ यत्र निर्णीयेते, तत्र तन्निर्णयोपायान् वाक्यादीन् रूपान्तान् सतोपदिदर्शयिषुराह—**वाक्यादिति**।

अत्र पूर्वार्धे प्रतिपद्यन्तपदमपिशब्दोऽध्याहृत्य योज्यः।

अयमर्थः—शब्दार्थाः = शब्दानामर्थाः, केवलात् = वाक्यादिरूपसहायरहितात्, रूपादेव = शब्दस्वरूपादेव, शब्दस्वरूपमेव निमित्तीकृत्येति यावत्। न प्रविभज्यन्ते = न शब्दार्थसामान्यात् प्रविभक्ता विशिष्टरूपाः प्रतीयन्ते, किं तर्हि? वाक्यादपि = एवं प्रकरणादपीत्यादि। तत्र वाक्याच्छब्दार्थनिर्णयो लोके, यथा—कट करोति भीष्ममुदारं दर्शनीयमिति। अत्र केवलस्यैव कटस्य करोति क्रियया सम्बन्ध इति पक्षः, द्वितीयस्तु भीष्मादिगुणान्वितस्य कटस्य क्रियासम्बन्ध इति। उभयोरपि पक्षयोर्वाक्यरूपा श्रुतिस्तुल्यैव। तथा च तुल्यायामपि श्रुतौ यदा कटस्यैव करोतिक्रियया सम्बन्धः, तदा द्रव्यस्य निर्गुणस्यानुपपत्तेर्गुणानाञ्च निरधिकरणानामसम्भवत् परस्पराकाङ्क्षया तद्वाचकपदयोः सामानाधिकरण्याम् = एकार्थवाचकत्वरूपम् = वाक्यीयात् समन्वयात्, वाक्यघटकात् पदद्वयस्य समभिव्याहाररूपात् सम्बन्धात्, इति भीष्मगुणान्वितस्यैव कटस्य करणं शाब्दिको वाक्यार्थः संपद्यते।

वक्ष्यति च आश्रयाश्रयिणोर्वाक्याद् निर्णयस्त्ववतिष्ठते" इति। तथा च शास्त्रे "कर्मणि द्वितीया" इत्यादीनि पृथगेव प्रकरणानि विरचितानि। तत्र प्रातिपदिकादनभिहिते कर्मादौ यदेकत्वादि तत्र द्वितीयाद्या विभक्तयो भवन्तीत्येवमर्थस्य सङ्गतेराकाङ्क्षादिवशाद् भिन्नेष्वपि प्रकरणेषु तात्पर्यालोचनके श्रोतरि वाक्यीयः सम्बन्धोऽर्थनिश्चयाय पर्यवस्यतीति वाक्याच्छब्दार्थनिर्णयः। तथात्र प्रकरणमप्यशब्दं शब्दार्थनिर्णयनिमित्तम्, यथा संग्रामप्रस्तावे सैन्धवानां चोदनमश्वानयनपर्यवसायि भवति, भोजनप्रस्तावे तु तदेव लवणप्रतीतिमुपजनयतीति। शास्त्रे यथा धातुप्रकरणाद् धातुरित्युक्तम्। तथा चोभयावगतौ सत्याम् "कर्तृकरणयोस्तृतीया" इत्यत्र कारकाणां प्रकान्तत्वात् करणशब्देन क्रियाग्रहणं न विज्ञायते, शब्दवैरेत्यादौ सूत्रे च धात्वधिकारे कारणशब्दात् क्रिया प्रतीयत इति।

अर्थस्तु शाब्दत्वाच्छब्दार्थनिर्णयं प्रकल्पयति, यथा अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते, अञ्जलिना पूर्णपात्रमाहरतीत्यत्र जुहोतित्याद्यर्थवशाद् विभिन्नार्थवाचकोऽञ्जलिशब्दः। शास्त्रेऽपि पूरणगुणसुहितार्थेत्यत्र गुणेन सह षष्ठी

---

वक्ष्यति च—'आश्रयाश्रयिणोर्वाक्याद् निर्णयस्त्ववतिष्ठते' इति। प्रकृते च आश्रयः कटः, आश्रयी भीष्मादिको गुणस्तयोर्निर्णयः = सम्बन्धनिर्णयो वाक्यात् = पदद्वयसमभिव्याहाररूपात्, अवतिष्ठते = पर्यवस्यतीति तदर्थः।

शास्त्रे च—"कर्मणि द्वितीया (पा० २।३।२। द्व्येकयोर्द्विवचनैकवचने (पा० १।४ २२) अनभिहिते" (पा० २।३।१) इत्यादिसूत्रघटितानि पृथगेव प्रकरणानि विरचितानि। तत्र प्रकरणभेदे सत्यपि तात्पर्यालोचके श्रोतरि = प्रातिपदिकादनभिहिते कर्मादौ यदेकत्वादि तत्र द्वितीयाद्या विभक्तयो भवन्तीत्येवमर्थस्य संङ्गतेराकाङ्क्षादिवशाद् महावाक्यनिष्पादको वाक्यानां परस्परं सम्बन्धोऽर्थनिश्चयाय पर्यवस्यति। तदुक्तम्—

"स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥" इति।

तदेवं शास्त्रे वाक्याच्छब्दार्थनिर्णयः। तथा शब्दातिरिक्तं प्रकरणमपि शब्दार्थनिर्णयनिमित्तं भवति। तद् यथा—लोके संग्रामप्रस्तावे सैन्धवमानयेति सैन्धवानां चोदनमश्वानयनपर्यवसायि भवति, भोजनप्रस्तावे तु तदेव लवणप्रतीतिमुपजनयतीति! व्याकरणशास्त्रे यथा धातुप्रकरणाद् धातुर्भ्वादिरित्युक्तम्. न तु ताम्रादिः कफादिर्वा। तथा करणशब्देन क्रियाकारकयोरुभयोरप्यवगतौ सत्याम् "कर्तृकरणयोस्तृतीया" (पा० २।३।१८) इत्यत्र कारकाणां प्रक्रान्तत्वात् करणशब्देन क्रियाग्रहणं न विज्ञायते, शब्दवैरेत्यादिसूत्रे च धात्वधिकारेण करणशब्दात् क्रिया प्रतीयत इति।

अर्थस्त्वत्राभिधेयरूपः, न तु प्रयोजनादिः। स तु शब्दाभिधेयत्वात् स्ववाचकसमभिव्याहृतशब्दार्थनिर्णय प्रकल्पयति। तद् यथाऽन्यत्र—अञ्जलिना जुहोति, अञ्जलिना सूर्य-

न समस्यत इत्यर्थसामर्थ्याददेङामसम्प्रत्ययः। तथा "न शसददवादिगुणानाम्" इत्यत्र नाश्रयिणो ग्रहणं भवत्यर्थादिति। औचित्यादपि शब्दार्थव्यवस्थानं दृश्यते, यथा सीरासिमुसलैः केवलैरनिर्दिष्टक्रियापदैरप्यौचित्याद् विलेखनयुद्धावहननलक्षणसमुचितक्रियापदाक्षेपे शब्दार्थनिर्णयः पर्यवस्यति।

यथा वा प्रष्ठादयः शब्दा अग्रगामित्वादिनिमित्तसमाश्रयणेन प्रवर्त्तमानास्तस्य च निमित्तस्यौचित्यात् पुंस्येव सम्भवात् पुंशब्दास्त उच्यन्ते तद्योगात् स्त्रियां वर्तन्ते न साक्षादिति प्रष्ठसम्बन्ध एव प्रष्ठयादीनाम् "पुंयोगादाख्याम्" इत्यनेन निमित्तत्वेनोपदर्शितः।

यथा च "यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः॥" इत्यत्रानुक्तक्रियापदानि साधनान्यैवौचित्यवशात् स्वसमुचितक्रियापदावगत्या अवान्तरवाक्योपप्लावनप्रत्यायनपूर्वकाप्रस्तुतप्रशंसालक्षणस्य वाक्यार्थस्य प्रतीतिमुपजनयन्ति। तथा च यो निम्बं परशुना छिनत्ति यश्चैनं

---

मुपतिष्ठते, अञ्जलिना पूर्णपात्रमाहरती इत्यत्र जुहोतीत्यादिपदार्थवशाद् विभिन्नाकारार्थवाचकोऽञ्जलिशब्दः। शास्त्रेऽपि पूरणगुणसुहितार्थेत्यत्र गुणेन सह षष्ठी न समस्यत इत्यत्र समासयोग्यषष्ठ्यन्तपदार्थसामर्थ्याददेङामसम्प्रत्ययः। तथा "न शसददवादिगुणानाम्" (पा० ६।४।१२६) इत्यत्र समभिव्याहृतपदार्थसामर्थ्यादेवादेङां संप्रत्ययो भवति, न तु द्रव्यसमवेतानां गुणानामिति। औचित्यादपि शब्दार्थव्यवस्था दृश्यते। यथा लोके सीरासिमुसलैस्तृतीयान्तैः केवलैरनिर्दिष्टक्रियापदैरपि = असमभिव्याहृतक्रियापदैरपि, औचित्यात् = स्वस्वक्रियौचित्यात्, विलेखनयुद्धावहननरूपसमुचितक्रियापदाक्षेपे शब्दार्थनिर्णयः पर्यवस्यति।

यथा वा प्रष्ठादयः शब्दा अग्रगामित्वादिनिमित्तसमाश्रयणेन प्रवर्तन्ते, तस्य च निमित्तस्य पुंस्येवौचित्येन संभवात् पुंवाचकास्ते शब्दा उच्यन्ते। पुंयोगाच्च दाम्पत्यादिलक्षणात् ते शब्दाः स्त्रियां वर्तन्ते, न साक्षादिति प्रष्ठस्त्र्यादिषु प्रष्ठसंबन्ध एव प्रष्ठयादिशब्दानाम् "पुंयोगादाख्यायाम्" (पा० ४।१।४८) इत्येनेन निमित्तत्वेनोपदर्शितः। अन्यच्च यथा लोके—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः॥

इत्यत्रानुक्ततत्तत्क्रियापदानि परश्वादीनि साधनान्येवौचित्यवशात् स्वसमुचितच्छिनत्तीत्यादिक्रियापदावगत्या यश्च निम्बं परशुना छिनत्तीत्याद्यवान्तरवाक्योपप्लावनप्रत्यायनपूर्वकमप्रस्तुतनिम्बवृत्तकीर्तनेन प्रस्तुतखलनिन्दारूपस्याऽप्रस्तुतप्रशंसालक्षणस्य महावाक्यार्थस्य प्रतीतिमुपजनयन्ति। तथा च यो निम्बं परशुना छिनत्ति, यश्चैनं गन्धेनानुलिम्पति, सर्वं तं प्रति तस्य दुस्त्यजा प्रकृतिरिति कृत्वा कटुरेव दौर्मनस्यदाननिपुण एवेति कस्यचित् खलत्वप्रतिपादनमत्र तात्पर्याख्यवृत्त्या महावाक्यार्थः।

गन्धेनानुलिम्पति सर्वस्य तस्य दुस्त्यजा प्रकृतिरिति कृत्वा कटुरेव दौर्जनस्यदान-निपुण एवेति कस्यचित् खलत्वप्रतिपादनमत्र तात्पर्यार्थः।

शास्त्रे यथा—"पुंयोगादाख्यायाम्" (पा० ४।१।४८) इत्यत्रोक्तं पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एत इति।

देशाच्छब्दार्थनिर्णयो यथा मथुरायाः प्राचीनादुदीचीनाद्वा नगरादागच्छामीत्युक्ते नगरविशेषात् पाटलिपुत्रादागच्छामीति गम्यते। पाटलिपुत्रस्य मथुरासम्बन्धिनोश्च प्राचीनोदीचीनभागयोर्विद्यते प्रत्यासत्तिरिति कृत्वा देशवशादत्र निर्णयः। कालात् खलु व्यवस्था दृश्यते, यथा शिशिरे द्वारमित्युक्ते पिधेहीति, ग्रीष्मसमये त्वेवमभिधाने समुद्घाटयेति गम्यते।

एतच्च शब्दार्थनिर्णयोपायानां दिङ्मात्रप्रदर्शनं बोद्धव्यम्। अन्येऽपि सन्निश्चयाय प्रकारा अनुसन्धातव्याः। श्लोकवशाच्चोदाहरणमात्रमेव दर्शितमिति मन्तव्यम्। सर्वथा न रूपमात्राच्छब्दार्थप्रविभागनिर्णयः कर्तुं शक्य इति प्रतिपादयितुमुक्तम्—न रूपादेव केवलादिति ॥३१४॥

तथा चापरैः संसर्गादयः शब्दार्थावच्छेदहेतवः प्रदर्शिता इत्याह—

**संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥३१५॥**

---

शास्त्रे औचित्याच्छब्दार्थनिर्णयो यथा "पुंयोगादाख्यायाम्" (पा० ४।१।४८) इत्यत्रोक्तम्—'प्रष्ठादिशब्दानामग्रगामित्वादिरूपस्य प्रवृत्तिनिमित्तस्य पुंस्येव संभवात् प्रष्ठादयः पुंशब्दाः' इति। देशाच्छब्दार्थनिर्णयो यथा—मथुरायाः प्राचीनादुदीचीनाद्वा नगरादागच्छामीत्युक्ते नगरविशेषात् पाटलीपुत्रादागच्छामीति गम्यते। पाटलिपुत्रस्य मथुरासम्बन्धिनोश्च प्राचीनोदीचीनभागयोः प्रत्यासत्तिः=संनिधिः, अस्तीति कृत्वा प्राचीनोदीचीनरूपदेशवशादत्र नगरविशेषनिर्णयः। कालादपि शब्दार्थव्यवस्था दृश्यते। यथा शिशिरे 'द्वारम्' इत्युक्ते पिधेहीति, ग्रीष्मसमये त्वेवमभिधाने समुद्घाटयेति गम्यते।

एतच्च शब्दार्थनिर्णयोपायानां दिङ्मात्रप्रदर्शनरूपमुपलक्षणम्=उदाहरणम्, बोध्यम्, न तु परिगणनम्। यतोऽन्येऽपि शब्दार्थनिर्णयोपायप्रकाराः संसर्गादयः सन्त्यन्यैरुपदर्शिताः, येऽत्रैवाग्रिमपद्ये प्रदर्श्यन्ते। अतो ग्रन्थाऽपि श्लोकवशादत्र षण्णामेव शब्दार्थनिर्णयोपायानामुदाहरणमात्रमेव दर्शितम्। सर्वथाऽपि न रूपमात्राच्छब्दार्थनिर्णयः कर्तुं शक्य इत्यत्रैवैतत्पद्यतात्पर्यम्। एतदेव प्रतिपादयितुमुक्तम्—**न रूपादेव केवलादिति** ॥ ३१४ ॥

पूर्वपद्ये शब्दार्थनिर्णयोपायप्रदर्शनस्योपलक्षणत्वादेवापरैरभियुक्तैरपरेऽपि संसर्गादयः शब्दार्थनिर्णयहेतवः प्रदर्शिता इत्याह श्लोकद्वयेन—**संसर्ग इति, सामर्थ्यमिति च**।

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥३१६॥**

इह केैश्चिदर्थभेदाच्छब्दभेदोऽभ्युपगतः, तदपरैरेकशब्दतेति द्वौ पक्षौ। तत्र नानात्वपक्षे स्वभावभिन्नेषु तुल्यश्रुतिषु रूपाभेदानवच्छिन्नेषु निमित्तान्तरैः संसर्गादिभिरवच्छेदः क्रियते । एकत्वपक्षे त्वर्थाभिधाने भिन्नासु शक्तिषु श्रुतिसारूप्यमात्रादलब्धविभागासु तथैव संसर्गादिभिरर्थनिर्णयः क्रियत इत्युभयत्रापि प्रकरणादयः शब्दार्थनिर्णयनिपुणा इति तदुपन्यासः कथ्यते ।

तदत्र केचित् सामर्थ्यमेवैकं शब्दार्थनिर्णयनिमित्तमिति मन्यन्ते । योऽप्यर्थप्रकरणादिना तत्र भेदः समधिगम्यते, सोऽपि सामर्थ्यादेवात्र प्रतीयत इति कथयन्ति । सामर्थ्यमेव हि संसर्गादिभिर्व्यज्यत इति ।

तत्र संसर्गाद्यथा संसर्गाद्यथा सकिशोरा धेनुरानीयतामित्यत्र नियतेन संसर्गिणा किशोरलक्षणेन विशेषावसाय निमित्तेन वडवाया एव सम्प्रत्ययः, यथा च सवत्सा धेनुरित्यत्र वत्ससंसर्गाद् गोर्धेनोरेव सम्प्रत्यय इति संसर्गादर्थनिर्णयः ।

---

इह केचिदर्थभेदाच्छब्दभेद इत्यभ्युपगच्छन्ति । अपरे तु नार्थभेदाच्छब्दभेदः, किन्तु शब्दैक्येऽपि शक्तिभेद इति द्वौ पक्षौ । तत्र शब्दनानात्वपक्षे स्वभावतो भिन्नेषु समानानुपूर्वीकेषु शब्देषु स्वरूपाभेदादव्यावृत्तार्थकेषु रूपसाम्येऽपि संसर्गादिभिर्निमित्तान्तरैरर्थावच्छेदः =अर्थविशेषनिर्णय. क्रियते, शब्दैकत्वपक्षे तु तत्तदर्थाभिधाने भिन्नासु शक्तिषु श्रुतिसारूप्यमात्रात्, आनुपूर्वीसाम्यात्, अलब्धविभागासु=आघातभेदासु तथैव=पूर्वकल्प इव संसर्गादिभिर्निमित्तैरर्थविशेषनिर्णयः क्रियत इति रीत्या पक्षद्वयेऽपि संसर्गप्रकरणादयः शब्दार्थनिर्णायका इति संसर्गादीनामुपन्यासः प्रकृतकारिकायां क्रियते ।

केचित्तु संसर्गादिषु सामर्थ्यमेवैकं शब्दार्थनिर्णयनिमित्तमिति मन्यन्ते । योऽप्यर्थप्रकरणादिना तत्रार्थभेदः प्रतीयते, सोऽपि सामर्थ्यसत्त्व एव न तु तदभावे इति सामर्थ्यमेव तत्राप्यर्थभेदप्रत्ययनिमित्तम्, अर्थप्रकरणादिकं तु तत्र संनिहितमप्यन्यथासिद्धमिति । सामर्थ्यमेव हि तत्र तत्र संसर्गादिभिर्व्यज्यत इति च कथयन्ति ।

तत्र संसर्गाद् यथा—सकिशोरा धेनुरानीयतामित्यत्र किशोरोऽश्वशावक एव भवतीति नियतेन=गोवत्सादिव्यावृत्तेन धेनुसंसर्गिणा किशोरलक्षणेन विशेषावसायनिमित्तेन = अर्थविशेषनिर्णयहेतुना वडवाया एव धेनुत्वेन संप्रत्ययः । यथा च सवत्सा धेनुरित्यत्र वत्सो गोशिशुरेव भवतीति वत्ससंसर्गाद् गोरेव धेनुपदेन संप्रत्यय इति संसर्गादर्थनिर्णयः । रूढ्या गौरेव धेनुरुच्यत इति तु येषां दर्शनं तेषामत्र संसर्गोऽर्थविशेषसंप्रत्ययेनोपयुज्यत इति बोध्यम् ।

शास्त्रे संसर्गार्थविशेषनिर्णयो यथा—अवाद् ग्र इत्यत्र निगरणार्थको गिरतिरेव गृह्यते,

रूढ्या गौरेव धेनुरुच्यते इति तु येषां दर्शनं तेषामत्र संसर्गो विशेषसम्प्रत्यये नोपयुज्यत इति बोद्धव्यम्। शास्त्रे यथा 'आवाद् ग्रः" (पा० ३।१।५१) इत्यत्र यस्यावेनोपसर्गेण सम्बन्ध· सम्भवति स एव गृह्यते गिरतिः, गृणोतेस्तु स्वभावादर्थविरोधादेव संबन्धो नोपपद्यत एव।

तथा संसर्गवद्विप्रयोगोऽप्यवच्छेदहेतुः। यथा निर्ज्ञातसम्बन्धस्योच्यते अकिशोरा धेनुः अवत्सा अकरभावा आनीयतामिति किशोरादिविप्रयोगेन विशिष्टजातीयाया एव धेनोरवगतिरुपजायत इति। शास्त्रेऽपि "भुजोऽनवने" (पा० १।३।६६) इति यस्य भुजेरवनमनवनं चार्थस्तस्य ग्रहणं विज्ञायते, न तु कौटिल्यार्थस्य। निर्भुजति पाणिमिति।

साहचर्याद्यथा रामलक्ष्मणावित्युक्ते लक्ष्मणसाहचर्याद् दाशरथेरेव प्रतीतिः। अत्र यद्यप्येको दृष्टव्यभिचारसाहचर्यात् तत्तुल्यधर्मा ज्ञायत इति बोद्धव्यम्।

---

न तु शब्दार्थको गृणातिः। तथाहि—ग्रासस्यावस्रंसनपूर्वकं निगरणमवगिरतिप्रयोग एव नियमेन संभवति, न तु शब्दस्यावस्रंसनपूर्वकमुच्चारणमवगृणातिप्रयोगे नियमेनोपपद्यते, उदात्तसरितादीनामवस्रंसनधर्मत्वाभावात्।

तदेतत् सर्वमभिप्रेत्यैतत्कारिकाव्याख्यावसरे उक्तं पुण्यराजेन—"शास्त्रे यथा—अवाद् ग्र इत्यत्र यस्यावेनोपसर्गेण संबन्धः संभवति, स एव गृह्यते गिरतिः। गृणातेस्तु स्वभावादर्थविरोधादेव संबन्धो नोपपद्यत एव" इति।

तथा संसर्गवद् विप्रयोगोऽप्यर्थविशेषनिर्णयहेतु. यथा किशोरसंबन्धो वडवाया एव भवति, वत्ससम्बन्धो गोरेव, करभसम्बन्ध उष्ट्राया एवेत्येवं निर्ज्ञातसंबन्धं प्रति यदोच्यते—अकिशोरा धेनुः, अवत्सा, अकरभा वा आनीयतामिति, तदा किशोरादिविप्रयोगेण किशोरादिसंसर्गयोग्याया एव तज्जातीयाया धेनोरवगतिरुपजायत इति। शास्त्रेऽपि विप्रयोगेणार्थविशेषनिर्णयो यथा—'भुजोऽनवने' इत्यत्रानवनार्थयोग्यस्यैव भुजेरनवनार्थस्य ग्रहणं विज्ञायते, न तु कौटिल्यार्थस्य। निर्भुजति पाणिमिति।

नन्वत्रानवनार्थविप्रयोगाद् धातुविशेषरूपशब्दविशेषनिर्णय एव, न त्वर्थविशेषनिर्णयः। एवञ्च— शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' इति कारकांशविरोधः. विशेषस्मृतिहेतव इत्यस्यार्थविशेषनिर्णायका इत्यर्थाभ्युपगमादिति चेन्न, अत्र भुज इत्यस्य शब्दस्वरूपपरतयाऽविरोधात्।

साहचर्याद् यथा लोके—रामलक्ष्मणावित्युक्ते लक्ष्मणसाहचर्याद् दाशरथेरेव प्रतीतिः, न त्वन्यरामस्य साहचर्यमत्र सादृश्यम्, सदृशयोरेव सहचारदर्शनात्। तदुक्तम्—

मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम्॥ इति।

शास्त्रे यथा "विपराभ्यां जेः" (पा० १।३।१९) इत्यत्र पराशब्दोऽदृष्टव्यभिचारेण विना साहचर्यादुपसर्ग एव गृह्यते। यद्यपि बहुविवनमित्यादौ विशब्दोऽनुपसर्गोऽस्ति, तथापि समुदायोऽर्थवान्। जहत्स्वार्थावृत्तिपक्षेऽवयवा अनर्थका एव। अजहत्स्वार्थावृत्तिपक्षे कथमुपसर्गभावमापन्नो विरप्राधान्याद् ग्रहीतुमशक्य एवेति नास्ति विरनुपसर्गः। वीजयते इत्यत्र तु वीशब्दो न विशब्द इति। भाष्येऽप्युक्तमस्य गोर्द्वितीयेनार्थ इति गौरेव प्रतीयते, नाश्वो न गर्दभ इति। यथा च "अन्तरान्तरेण युक्ते" (पा० २।३।४) इत्यत्र द्वावपि टाप्तृतीयान्तयोः सम्भवाद् दृष्टापचारौ। अतः परस्परसाहचर्यान्निपातयोरेव ग्रहणमित्येवं साहचर्यमर्थनिर्णयहेतुः शब्दानाम्।

---

सुन्दरकाण्डे श्रीहनुमद्वाक्यमपि—

"स्त्रियो हि स्त्रीषु दृश्यन्ते सदा संपरिमार्गणे" इति।

अत्र रामलक्ष्मणयोः परस्परं सादृश्यं च दशरथापत्यत्वरूपम्। अत एव लक्ष्मणपदेनापि रामसाहचर्याद् दाशरथिरेव। अत्र यद्यप्येको दृष्टव्यभिचारस्तथापि द्वितीयसाहचर्यमदृष्टव्यभिचारमित्यदृष्टव्यभिचारात् परस्परसाहचर्यात् परस्परं तुल्यधर्माणावेव ज्ञायेते इति बोधव्यम्।

शास्त्रे साहचर्यात् विशेषनिर्णयो यथा—"विपराभ्यां जेः" (पा० १।३।१९) इत्यत्र पराशब्दो जिधातुसमभिव्याहारेऽदृष्टव्यभिचारेण विशब्देनोपसर्गेण साहचर्यादुपसर्ग एव गृह्यते।

यत्त्वत्र पुण्यराजेनोक्तम्—'यद्यपि बहुविवनमित्यादौ' इत्यारभ्य 'अतः परस्परसाहचर्यान्निपातयोरेव ग्रहणमित्येवं साहचर्यमर्थनिर्णयहेतुः शब्दानाम्' इत्यन्तेन। अत्र 'समुदायोऽर्थवान्' इत्यस्य 'बहुवि' इति समुदायोऽर्थवान् इत्यर्थः। तथा च समुदायस्यार्थवत्त्वे 'बहुवि' इत्यत्र विशब्दोऽनर्थक इत्यर्थवद्ग्रहणपरिभाषया तस्याग्रहणे विरुपसर्गोऽदृष्टापचार इति जिधातुसाहचर्याद् विरुपसर्ग एव गृह्यते। "जहत्स्वार्थावृत्तिपक्षेऽवयवा अनर्थका एव" इत्यनेनाप्यर्थबोधनाय 'बहुवि' इति समुदायस्यैव प्रयोग इत्यर्थवद्ग्रहणपरिभाषाबलाच्च जिधातुसमभिव्याहृतस्य वेरदृष्टापचारत्वेनोपसर्गत्वमेव समर्थितं भवति।

'अजहत्स्वार्थावृत्तिपक्षे इत्यादेः' विरनुपसर्ग इत्यन्तस्यायमाशयः—अजहत्स्वार्थावृत्तिपक्षेऽपि 'वनं बहुवि जयति' इत्यत्र विरन्यपदार्थे उपसर्गभावमापन्न इति 'प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति न्यायबलेनाप्राधान्यात् कथं ग्रहीतुं शक्य इत्येवं नास्ति विरनुपसर्गः। "विजयते इत्यत्र तु वीशब्दो न विशब्दः" इति तु शङ्काया एवासंभावनयाऽनाशङ्कितजिज्ञासिकाप्रबोधनम्, भाष्येऽप्युक्तमित्यादेर्न गर्दभ इत्यन्तस्यायमाशयः—यथा गौर्द्वितीयो गौरेव नान्यस्तथा जिधातोर्द्वितीयो विरुपसर्ग एव नान्य इति। अत्र द्वितीयपदेनादृष्टापचारः सहचरो गृह्यते। 'विपराभ्यां जे'रित्यन्तरसाहचर्यस्योदाहरणम्। 'अन्तराऽन्तरेण युक्ते' इति तु परस्परसाचर्यस्यार्थनिर्णायकत्वे उदाहरणमिति विशेष इति।

विरोधादप्यर्थोऽवधार्यते, यथा रामार्जुनावित्यत्रार्जुनसन्निधाने निसर्गवैरिणो जामदग्न्यस्यैव प्रतीतिः। अर्थप्रकरणदेशकालौचित्यैर्विशेषेऽवस्थापनं वाक्यदर्शितम्।

लिङ्गाच्च वाक्यान्तरे दृष्टाद् भेदः प्रसिद्धः प्रतीयते, यथा अक्ताः शर्करा उपदधातीत्यत्रानेकस्याञ्जनद्रव्यस्य सम्भवे तेजो घृतस्य स्तुतिरुक्ताः। एतस्माल्लिङ्गाद् घृतसाधनत्वमञ्जिक्रियायाः शर्कराकर्मिकाया निर्द्धार्यते। तथा पशुमालभेतेत्यत्र पशुत्वसंबन्धिषु प्राणिषु सत्सु छागस्य हविषो वपाया मेदस इति लिङ्गाच्छागैकार्थसमवायि पशुत्वं प्रतीयते। शास्त्रेऽप्यूह्यम्।

शब्दान्तरसन्निधानादपि विशेषावगतिः। यथा अर्जुनः कार्तवीर्यो रामो जामदग्न्य इति।

---

विरोधादप्यर्थोऽवधार्यते यथा—रामार्जुनावित्यत्र तद्वैपरीत्येन प्रसिद्धस्य जामदग्न्यस्यैव प्रतीतिः। अनर्थप्रकरणदेशकालौचित्यैरर्थविशेषे शब्दस्यावस्थापनमेकस्मिन् वाक्ये दर्शितम्

लिङ्गाच्च वाक्यान्तरे दृष्टाल्लोके प्रसिद्धोऽर्थविशेषो वाक्यान्तरे प्रतीयते, यथा—'अक्ताः शर्करा उपदधाति' इत्यत्रानेकस्य घृततैलवसादिरूपस्याञ्जनसाधनद्रव्यस्य संभवे "तेजो वै घृतम्" इति घृतस्य तेजस्त्वेन स्तुतिरूपाल्लिङ्गाद् घृतसाधनकत्वमेव शर्कराकर्मिकाया अञ्जनक्रियाया निर्धार्यते। तथा—पशुमालभेतेत्यत्र पशुत्वसम्बन्धिषु बहुषु प्राणिषु सत्सु छागस्य हविषो वपाया मेदस इति वाक्यान्तरगताद् वैदिकाल्लिङ्गाच्छागमात्रसमवेतं पशुत्वं प्रतीयते।

शास्त्रे लिङ्गादर्थविशेषनिर्णयो यथा—शास्त्रे यानि ज्ञापकानि तानि लिङ्गान्येव, तेभ्योऽर्थविशेषनिर्णयः। यथा—'हृदयस्य हृल्लेखयदण्लासेषु' इत्यत्राणः पृथग् लेखग्रहणसामर्थ्यरूपाल्लिङ्गाद् लेखेति घञन्तं न त्वणन्तमिति निर्णयः।

वस्तुतस्तु शब्दस्यार्थप्रकाशनसामर्थ्यं लिङ्गमिति मीमांसकाः। अस्ति च वृद्धिपदस्यादैक्षु शक्तिरित्येतदर्थग्राहकसंज्ञासूत्रबलाद् वृद्धिपदस्यादैजर्थप्रकाशनसामर्थ्यरूपं लिङ्गं मृजेर्वृद्धिरित्यादाविति लिङ्गोदाहरणम्। अग्रे सामर्थ्यं त्वनुपपत्तिरूपत्वादर्थापत्तिरूपमिति विवेकः।

यत्तु परिभाषेन्दुशेखरे नागेशेनोक्तम्—'अस्ति च बह्वादीनां संख्या संज्ञाकृतेति ज्ञानरूपं प्रकरणम्' इति। तत्र लिङ्गप्रकरणयोः सङ्करं समर्थयामहे इति न कश्चन विरोधः।

शब्दान्तरसंनिधानादपि विशेषावगतिः। 'रामो जामदग्न्यः' इत्यत्र जामदग्न्यपदसंनिधानाद् रामः परशुरामः, अर्जुनः कार्त्तवीर्य इत्यत्र कार्तवीर्यपदसंनिधानाद् अर्जुनः कृतवीर्यापत्यं सहस्रबाहुः।

समाध्यद्विशेषप्रतिपत्तिर्यथा—अनुदरा कन्येति। सामर्थ्यादुदरविशेष-प्रतिषेधप्रतीतिः। तथा—अभिरूपाय कन्या देयेति। अभिरूपव [त] रायेति सामर्थ्यात् प्रतीयते।

शास्त्रेऽपि "प्रथमानिर्दिष्टं समास उपसर्जनम्" (पा० १।२।४३) इति समासार्थे शास्त्र समासशब्दस्य प्रवृत्तिः। "एकविभक्ति चापूर्वनिपाते" (१।२।४४) इत्यत्र यः समासशब्दोऽनुमीयते तस्य प्राथमकल्पिक एव।

वृत्तिर्व्यक्तिर्लिङ्गम्। तस्मान्निर्णयो यथा तद्ग्रामस्यार्थं लभेतेत्यत्र समप्रविभागेऽर्धशब्दो नपुंसकेन परामर्शात् [ग्रामस्यार्धं स्वयमेव प्रतीयते]। शास्त्रेऽप्यूह्यम्।

---

सामर्थ्याद् विशेषप्रतिपत्तिर्यथा—अनुदरा कन्या' इत्यत्र कन्याया उदराभावानुपपत्तिरूपात् सामर्थ्यादुदरविशेषप्रतिषेधप्रतीतिः। यथा वा—अभिरूपाय कन्या देयेति। अत्राभिरुपेषु पश्वादिषु कन्यासंप्रदानत्वानुपपत्तिरूपात् सामर्थ्याद् अभिरूपवरायेति प्रतीयते। इदं विधेरुदाहरणम्, आद्यं तु प्रतिषेधस्येत्युदाहरणद्वयम्।

शास्त्रेऽपि "प्रथमानिर्दिष्टं समास उपसर्जनम्" (१।२।४३) इत्यत्र समासशब्दस्य समासार्थे शास्त्रे लक्षणया प्रवृत्तिः, अधिहरीत्यादिसमासे प्रथमानिर्दिष्टपदस्यानुपपत्तिरूपात् सामार्थ्यात्। 'एकविभक्ति चापूर्वनिपाते' १।२।४४) इत्यत्र प्रसज्यमानपूर्वनिपातप्रतिषेधबोधकेनापूर्वनिपातपदेन यः समासशब्दोऽनुमीयते तस्य लक्षणया प्राथमकल्पिके समासार्थालौकिकविग्रहवाक्य एव प्रवृत्तिः। समासशब्दानुमानं चैवम्। उपसर्जनसंज्ञाया उद्देश्यभूतमेकविभक्तिकं पदम्. घटकत्वसंबन्धेन समासशब्दवद् वृत्तिः, प्रसज्यमानपूर्वनिपातप्रतिषेधप्रतियोगित्वात्, यन्नैवं तन्नैवम्, यथा वाक्यघटकं पदमिति। अत्र समासशब्दवत्ता च सकेतसम्बन्धेन बोध्या। विशिष्टानुमाने च समासशब्दानुमानं समायातं वेदितव्यम्। देशकालौ प्रागुदाहृतौ।

व्यक्तिर्लिङ्गम्, व्यज्यते द्रव्यं ययेति व्युत्पत्तेः। विप्र इत्यादौ पुंस्त्वादिना प्रादीनां द्रव्यार्थकत्वं विज्ञायते। लिङ्गसंख्यान्वितं द्रव्यमिति द्रव्यलक्षणात्।

लोके लिङ्गाद् निर्णयो यथा—'तद्ग्रामस्यार्धं लभेत' इत्यत्र समप्रविभागेऽर्धशब्दः, नपुंसकेन तत्पदेन परामर्शात्। तं ग्रामस्यार्धमित्यत्र तु तमिति पुंलिङ्गेन परामर्शाद् ग्रामैकदेशमात्रं प्रतीयत इति।

शास्त्रेऽपि यथा—"अर्धं नपुंसकम्" (२।२।२७३) इत्यत्र नपुंसकलिङ्गेन परामर्शात् समप्रविभागवाच्ये वार्धशब्दो गृह्यते।

स्वराद्यथा स्थूलपृषतीमालभेतेत्यत्रान्तोदात्तस्य श्रवणात स्थूला चासौ पृषतीत्येवंविधार्थप्रतीतिः। पूर्वपदप्रकृतिस्वरत्वदर्शने स्थूलानि पृषन्ति यस्यामित्यन्यपदार्थप्रतीतिः। तथा वैपाशः कूप इत्यत्राद्युदात्तस्याश्रवणाद्विपाश उत्तरस्य विशिष्टस्यैव प्रतीतिः। अन्तोदात्तश्रवणे तद्विपरीतस्येति।

सत्त्वाद्यथा सुसिक्तमतिस्तुतमित्यादौ पूजातिक्रमणयोः कर्मप्रवचनीयसंज्ञायामुपसर्गत्वाभावे तयोरेव प्रतिपत्तिः। उपसर्गसंज्ञायां तु सत्यां सुषिक्तं सुष्टुतमित्यादौ षत्वप्रवृत्तेरर्थान्तरस्य प्रतिपत्तिः। णत्वनत्वाभ्यां यथा प्रणायक इत्यत्रोपसर्गाश्रयणत्वसद्भावे प्रणयनक्रियाकर्तुः प्रतीति, णत्वाभावे तु प्रगता नायका अस्माद् देशादसौ प्रनायको देश इत्यस्य पदार्थप्रतीतिरिति।

तदेवमेते शब्दार्थस्य सन्देहनिराकरणद्वारेण नियतार्थावसायहेतुत्वाद्विशेषस्मृतिहेतवो निर्णयहेतवः संसर्गादय इति बोद्धव्यम् ॥३१५-३१६॥

न त्वेकत्वदर्शने भेदाभावाच्छब्दानामर्थस्य सन्देहे तन्निर्णयाय प्रकरणादय उच्यन्त इति शोभनम्, भेदपक्षे तु विभिन्नत्वादेव शब्दस्तदर्थप्रत्यायनं करिष्यतीत्या-

---

स्वरादर्थविशेषनिर्णयो यथा—स्थूलपृषतीमालभेतेत्यत्र अन्तोदात्तस्वरस्य श्रवणात् स्थूला चासौ पृषती चेत्येवंविधार्थप्रतीतिः, पूर्वपदप्रकृतिस्वरदर्शने तु स्थूलानि पृषन्ति यस्यामित्यन्यपदार्थप्रतीतिः। यथा-- वैपाशः कूप इत्यत्राद्युदात्तस्य श्रवणाद् विपाशानद्या उत्तरकूलस्थस्य कूपविशेषस्यैव प्रतीतिः। उदक् च विपाश इति ह्यत्र कूपेऽर्थेऽञ् प्रत्ययः, अन्तोदात्तस्वरश्रवणे तु तद्विपरीतस्य विगतपाशपुरुषसंबन्धिनः कूपस्य प्रतीतिः। अत्र हि तस्येदमित्यण् प्रत्ययः। प्रत्ययाद्युदात्तत्वादणन्तस्यान्तोदात्तत्वम्। सत्त्वाद् यथा —सुसिक्तमतिस्तुतमित्यादौ पूजातिक्रमणार्थयोः स्वत्योः 'सुः पूजायाम्' ( १।४।९४ ) 'अतिरतिक्रमणे च' ( १।४।९५ ) इति सूत्राभ्यां कर्मप्रवचनीयसंज्ञायामुपसर्गत्वाभावात् षत्वाभावे तयोरेवार्थयोः प्रतिपत्तिः। सुषिक्तं सुष्टुतं किं तवात्र इत्यादौ दीपे तु उपसर्गसंज्ञायां सत्यां षत्वप्रवृत्तेः क्षेपरूपस्यार्थान्तरस्य प्रतीतिः। णत्वनत्वाभ्यां यथा प्रणायक इत्यत्र 'उपसर्गादसमासेऽपि णोपदेशस्य' ( ८।४।१४ ) इत्युपसर्गाश्रयणत्वसद्भावे प्रणयनक्रियाकर्तुः प्रतिपत्तिः, णत्वाभावे तु--प्रगता नायका अस्माद् देशादसौ प्रनायको देश इत्यन्यपदार्थप्रतीतिः।

यदर्थे क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञका इति नियमेन नीधातुनिरूपितोपसर्गत्वाभावादिति। तदेवमेते संसर्गादयः शब्दार्थविषयकसन्देहनिराकरणद्वारा नियतार्थनिर्णयहेतुत्वाद् विशेषस्मृतिहेतवः = विशेषार्थनिर्णायका इति बोध्यम् ॥३१५-३१६॥

नन्वर्थभेदेऽपि शब्दैकत्वमिति दर्शनेऽर्थभेदेऽपि शब्दभेदाभावाच्छब्दानामर्थस्य सन्देहे तन्निर्णयाय संसर्गादय उच्यन्त इति युज्यते, अर्थभेदाच्छब्दभेद इति पक्षे तु भेदादेव शब्दाः स्वस्वार्थप्रत्यायनं करिष्यन्तीत्यर्थसन्देहाभावान्नास्त्यर्थविशेषनिर्णायकानां संसर्गादीनामत्रोपन्यासावसर इत्याशङ्क्य भेदपक्षेऽपि शब्देष्वानुपूर्वीरूपसादृश्यदर्शनेन व्यवहर्तॄणां तत्त-

शङ्क्य तत्रापि रूपसादृश्योत्पादितसंशीतीनां व्यवहर्तॄणां प्रकरणादिभिरेव शब्दार्थनिर्णय इति प्रतिपादयितुमाह—

**भेदपक्षेऽपि सारूप्याद्भिन्नार्थाः प्रतिपत्तिषु ।**
**नियता यान्त्यभिव्यक्तिं शब्दाः प्रकरणादिभिः ॥३१७॥**

भेदपक्षेऽपि प्रतिपत्तिषु भिन्नार्था अपि शब्दाः सारूप्यादभिन्ना इवेति प्रकरणादिभिरेवोक्तस्वरूपैर्नियता अवच्छिन्ना अर्थाभिव्यक्तावुपयोगं यान्तीति न कुत्रचित् प्रकरणादिमन्तरेण शब्दार्थनिर्णय इति बोद्धव्यम् ॥३१७॥

युक्तं चैतत्, कस्मादित्याह—

**नामाख्यातसरूपा ये कार्यान्तरनिबन्धनाः ।**
**शब्दा वाच्याश्च तेष्वर्थो न रूपादधिगम्यते ॥३१८॥**

इह वाक्ये नामरूपा आख्यातशब्दा अपि सम्भवन्ति । यथा अश्व इति टुओश्वि गतिवृद्ध्योरित्यस्माल्लुङि मध्यमपुरुषैकवचने सिपि 'नित्यं ङितः" (३।४।९९) "इतश्च" (३।४।१००) इतीकारलोपे च्लिप्रत्ययस्य 'जॄस्तम्भुम्रुचु' (३।१।५८।३) इत्यादिना चङादेशे श्वयतेरन्त्यातो गुणरूपत्वे सकारस्य रुत्व-विसर्जनीययोः कृतयोर्लुङ्लङ्लृङ्क्ष्वडित्यादिनाऽटि कृते अश्व इत्याख्यातपदं श्वयति-

---

दर्थविषयकशक्तिसन्देहसमुत्पादे संसर्गादिभिरेव शब्दार्थनिर्णय इति प्रतिपादयितुमाह—**भेदपक्षेऽपीति ।**

अयमर्थः—भेदपक्षेऽपि = 'अर्थभेदाच्छब्दभेदः' इति पक्षेऽपि, प्रतिपत्तिषु भिन्नार्था अपि शब्दाः = प्रतिपत्तिविषयीभूतभिन्नार्थबोधका अपि शब्दाः, भिन्नत्वेन प्रतीयमानार्थ-वाचकाः, अत एव भिन्ना अपीति यावत् । सारूप्यात् = समानानुपूर्वीकत्वात्, अभिन्ना इव प्रतीयमाना इति शेषः । प्रागुक्तस्वरूपैः प्रकरणादिभिर्नियता अवच्छिन्नाः = परस्परं व्यावर्तिताः, अभिव्यक्तिम् = लक्षणयाऽर्थाभिव्यक्तावुपयोगं यान्तीति प्रकरणादिकं विना न शब्दार्थनिर्णय इत्यवधेयम् ॥३१७॥

प्रकरणादिभिरेव शब्दार्थनिर्णयः, न तु केवलात् शब्दस्वरूपादित्येतद् युक्तमपीति प्रतिपादयितुमाह—**नामाख्यातसरूपा इति ।**

अयमर्थः—ये नामाख्यातसरूपाः = नामाख्यातयोः सरूपाः, समानानुपूर्वीकाः, कार्यान्तरनिबन्धनाः = कार्यान्तरम्—सुप्तिङ्रूपप्रत्ययविशेषलक्षणम्, तत्प्रकरणादिसहकारेण निबन्धनं स्वरूपभेदे निमित्तं येषां ते तथाभूताः शब्दाः, ये तद्वाच्याः अर्थाश्च, तेष्वर्थो न रूपादेव केवलादधिगम्यते, किन्तु प्रकरणादिभिरपीति ।

अयं भावः—लोकव्यवहारे वाक्ये नामसरूपा आख्यातशब्दा अपि संभवन्ति । यथा—अश्व इति । टुओश्वि गतिवृद्ध्योरित्यस्माल्लुङि मध्यमपुरुषैकवचने सिपि—'नित्यं

क्रियायाः कर्त्रवच्छिन्नाया अतीतकालायाः प्रतिपादकम्, अश्व इति च नामपदमश्वजातीयस्यार्थस्य सत्त्वभूतस्याभिधायकमिति सारूप्यात् सन्देहे प्रकरणादिभिरर्थव्यवस्था।

यथाऽजापय इत्येतद् जि जये इत्यस्माद्धातोः कश्चिदजेयं जितवान् तमन्योऽनुप्रयुक्तवानित्यर्थविवक्षायां हेत्वर्थे णिचि "क्रीङ्जीनां णौ" इत्यात्वे 'अर्तिह्रीव्ली' त्यादिना पुकि जापीत्येवं स्थिते लङि शपि गुणायादेशयोः कृतयोः सकारस्य सत्वविसर्जनीययोश्च 'लुङ्लङि' त्यादिना अडागमे च कृतेऽजापय इत्याख्यातम्।

अथवाऽजायाः पयोऽजापय इत्यपि नामपदं तत्सदृशमित्यर्थादिना तन्निश्चयः। आख्यातसरूपाश्च नामशब्दास्तेन यस्य तस्येत्यादयः। तथा तनु विस्तारे इत्यस्माल्लिटि मध्यमपुरुषबहुवचने द्विर्वचने कृते "अत एकहल्मध्ये" इत्यादिना एत्वाभ्यासलोपयोः कृतयोस्तेने त्याख्यातम्, तच्छब्दस्य तृतीयान्तस्य सदृशमिति। तसु उपक्षये, यसु प्रयत्ने इत्याभ्यां विध्यादौ लोटि तस्य च सिपि 'सेर्ह्यपिच्च" (३।४।८७) इति ह्यादेशे दिवादित्वाच्छ्यनोऽनुबन्धलोपे "अतो हेः" (६।४।१०५)

ङितः' (३।४।९९) इत्यनुवर्तमाने 'इतश्च' (३।४।१००) इतीकारलोपे च्विप्रत्ययस्य 'जृस्तम्भुम्रुचु' (३।१।५८) इत्यादिना चङादेशे 'श्वयतेरः' (७।४।१८) इति धातोरिकारस्याकारे तस्य 'अतो गुणे' (६।१।९७) इति पररूपत्वे सिपः सकारस्य रुत्वविसर्गयोः कृतयोः 'लादेशोत्तरमडादयः' इति मते 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) इत्यादिना अटि कृते 'अश्वः' इत्याख्यातपदं श्वयतिक्रियायाः कर्तृविशिष्टाया अतीतकालायाः प्रतिपादकम्, अश्व इति च नामपदमश्वत्वजातिमतोऽर्थस्य द्रव्यरूपस्याभिधायकमिति सारूप्यात् = समानानुपूर्वीकत्वात् सन्देहे प्रकरणादिभिरर्थनियमः।

यथा अजापयः' इत्येतद् जि जये इत्यस्माद्धातोः कश्चिदजेयं जितवान् तमन्यो नियुक्तवान् इत्यर्थविवक्षायां हेत्वर्थे णिचि 'क्रीङ्जीनां णौ' (६।१।४८) इत्यात्वे 'अर्तिह्रीव्ली' (७।३।३६) इत्यादिना पुकि 'जापि' इत्येवं स्थिते लङि शपि गुणायादेशयोः कृतयोः सकारस्य रुत्वविसर्गयोश्च' 'लुङ्लङ्' (६।४।७७) इत्यादिनाऽडागमे च कृते 'अजापयः' इत्याख्यातम्।

अथवाऽजायाः पयोऽजापय इत्यपि नामपदमानु.व्यीऽऽख्यातसदृशमित्यर्थसन्देहे समभिव्याहृतपदार्थरूपार्थप्रमाणबलात् प्रकरणादिना वा तन्निर्णयः। आख्यातसरूपाश्च नामशब्दा भवन्ति, यथा—तेन, यस्य, तस्य इत्यादयः। तनु विस्तारे इत्यस्माल्लिटि मध्यमपुरुषबहुवचने द्विर्वचने कृते—'अत एकहल्मध्ये' (६।४।१२०) इत्यादिना एत्वाभ्यासलोपयोः कृतयोः 'तेन' इत्याख्यातम्, तच्छब्दस्य तृतीयान्तस्य सदृशमिति। तसु उपक्षये, यसु प्रयत्ने इत्याभ्यां विध्यादौ लोटि तस्य च सिपि 'सेर्ह्यपिच्च' (३।४।८७) इति ह्यादेशे दिवादित्वाच्छ्यनि, अनुबन्धलोपे 'अतो हेः' (६।४।१०५) इति हेर्लुकि 'तस्य, यस्य'

इति हेर्लुकि तस्य यस्येत्याख्यातपदं यत्तदोः षष्ठ्येकवचनान्तयोः सदृशमिति सारूप्यात् सन्देहे प्रकरणादिभिस्तन्निश्चीयते। कीदृशाः? कार्यान्तरनिबन्धनाः। कार्यान्तरं विशिष्टप्रत्ययलक्षणं प्रकरणादिना तन्निबन्धनं निमित्तं येषां ते तथाभूताः। तेषु न रूपमात्रादर्थोऽवगम्यते। तस्मात् त्वमश्वोऽजापयः शत्रुभवनानीत्यादिवाक्यार्थपर्यालोचनयैवार्थनिर्णयः। आह च—

"नहि किञ्चित्पदं नाम रूपेण नियतं क्वचित्।

पदानामर्थरूपं च वाक्यार्थादेव जायते॥" इति॥३१८॥

अथ शब्दार्थनिर्णयप्रस्तावे पदपदार्थानामसत्यत्वमखण्डस्यैव च वाक्यार्थस्य सत्यत्वमभ्युपगन्तव्यमिति प्रदर्शयितुमाह—

**या प्रवृत्तिनिवृत्त्यर्था स्तुतिनिन्दाप्रकल्पना।**
**कुशलः प्रतिपत्ता तामयथार्था प्रतीयते॥३१९॥**

---

इत्याख्यातपदं यत्तदोः षष्ठ्येकवचनान्तयोः सदृशमिति सारूप्यादर्थसन्देहे प्रकरणादिभिः स निश्चीयते। तस्मात् 'त्वमश्वोऽजापयः शत्रुभवनानि' इत्यादौ वाक्यार्थपर्यालोचनयैवार्थनिर्णयः। त्वं वृद्धिमापः, वृद्धिमाप्तश्च शत्रुभवनानि जेतुं सैन्यानि परम् = राजानं वा न्ययोजय इत्येषोऽर्थः। तदुक्तम्—

नहि किञ्चित् पदं नाम रूपेण नियतं क्वचित्।

पदानामर्थरूपञ्च वाक्यार्थादेव जायते॥ इति।

अस्यार्थः—हि = यतः, क्वचिदपि प्रयोगे किञ्चित् = किमपि, पदम् = सुबन्तं तिङन्तं वा, रूपेण = अर्थेन, रूप्यते = शब्देन विरूप्यते बोध्यत इति रूपमर्थः; तेन न नियतं नाम, नैव नियतमित्यर्थः। नामेत्यवधारणार्थे निपातः। अतो नानार्थकत्वादर्थसंदेहे पदानामर्थरूपञ्च, चशब्दस्त्वर्थे। वाक्यार्थादेव = समभिव्याहृतपदार्थरूपाद् वाक्यार्थादेव— वाक्यरूपात् प्रमाणादेव, जायते निर्णीतं निष्पद्यत इति॥३१८॥

अथ शब्दार्थनिर्णयप्रसङ्गेन स्मृतं पदपदार्थानामसत्यत्वमखण्डस्यैव वाक्यस्य वाक्यार्थस्य च सत्यत्वमिति प्रदर्शयितुमाह—**या प्रवृत्तिनिवृत्त्यर्था इति।**

अयमर्थः—या प्रवृत्त्यर्था स्तुतिप्रकल्पना, या च निवृत्त्यर्था निन्दाप्रकल्पना तां शाब्दे व्यवहारे कुशलः प्रतिपत्ताऽयथार्थामसत्यभूतां प्रतीयतेऽभिमन्यते। प्रतिपूर्वस्य इङ् गतौ इति दैवादिकस्य कर्तरि लटि रूपम् 'प्रतीयते' इति, न तु प्रतिपूर्वस्येणः कर्मणि रूपम्। कुशलः प्रतिपत्ता इति कर्तुरभिधानदर्शनात्।

परमार्थतस्तु तथाविधस्य = स्तुत्यर्थत्वेन निन्दार्थत्वेन वा प्रतीयमानस्य वाक्यस्य प्रवर्तस्व, निवर्तस्व इति वा सत्यभूतं प्रवृत्तिनिवृत्त्यन्यतररूपं वाक्यार्थं तत्रावगच्छतीति स्तुतिनिन्दार्थकवाक्ययोः पदपदार्थश्वनाश्वासेन नैव न्यायेन सर्वत्रैव पदपदार्थप्रत्ययोऽसत्य

या प्रवृत्तये स्तुतिप्रकल्पना निवृत्तये च निन्दाप्रकल्पना प्रेक्षावान् अयथार्थामभिमन्यते। परमार्थतस्तु तथाविधस्य वाक्यस्य प्रवर्तस्व निवर्तस्वेति वा सत्यभूतं वाक्यार्थं तत्रावगच्छतीति पदपदार्थप्रत्ययः सर्वत्रासत्य एवेति सैवैषां तात्पर्यशक्तिरिति कैश्चिद् व्यवस्थापितम् ॥३१९॥

एतदेव प्रकटीकर्तुमाह —

**विधीयमानं यत्कर्म दृष्टादृष्टप्रयोजनम्।**
**स्तूयते सा स्तुतिस्तस्य कर्तुरेव प्रयोजिका ॥३२०॥**

दृष्टप्रयोजनं किञ्चित्कर्म स्तूयते, यथा यो राजानं भजते स सारं भुङ्क्ते। अदृष्टप्रयोजनमपि-योऽग्निष्टोमेन यजते स स्वर्गं गच्छतीति विलक्षणः प्रवृत्तिनिवृत्ति-प्रयोजनोऽन्य एवाविभागो वाक्यार्थस्तथाविधवाक्यनिबन्धन एवाभ्युपगन्तव्य इति स्थितम् ॥३२०॥

---

एवेति। सैवैषा तात्पर्याख्या शब्दशक्तिर्यया तात्पर्याविपर्याभूतः प्रवृत्त्यादिरूपोऽर्थो वाक्यात् प्रतीयत इति कैश्चिद् व्यवस्थापितम्। अत एवाभियुक्तानामाभाणकः—'यत्परः शब्दः स शब्दार्थः' इति। एवञ्च—

गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥

इत्यादिस्तुतिवाक्याना न स्वार्थे तात्पर्यम्, किन्तु 'गङ्गानामोच्चारणे प्रवर्तस्व' इत्यत्रैव तात्पर्यमिति स एव शब्दार्थः। तथा—सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्व-मित्यादिनिन्दावाक्यानामपि न स्वार्थे तात्पर्यम्, किन्तु 'बर्हिषि रजतदानान्निवर्तस्व' इत्यत्रैव तात्पर्यम्। एवं पौराणिकानां नृगाद्युपाख्यानानामपि निन्दार्थकानां न स्वार्थे तात्पर्यम्, किन्तु ब्रह्मस्वापहरणनिवृत्तावेव तात्पर्यमिति स एव शब्दार्थ इति ॥३१९॥

पूर्वकारिकोक्तमेव निगूढमर्थं विशदीकर्तुमाह—**विधीयमानमिति।**

अयं भावः—लोके वेदे वा विधीयमानं यथायथं दृष्टप्रयोजनमदृष्टप्रयोजनं वा कर्म यत् स्तूयते, तद् यथा दृष्टप्रयोजनं वृत्तिफलं किञ्चित् कर्म राजसेवारूपं स्तूयते। यथा—यो राजानं भजते स सारं भुङ्क्ते। अदृष्टप्रयोजनमपि—योऽग्निष्टोमेन यजते स स्वर्गं गच्छतीति।

वस्तुतस्तु नेदं स्तुतिवाक्यम्, किन्त्वपूर्वविधिरूपमविकारविधिरूपं वा। अत्र यद्यपि न विधायको लिङ् श्रूयते, तथापि—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्या चाच्युतो भवति' इतिवद् विधित्वकल्पनम्, अर्थवादवाक्यत्वाभावात्। एवञ्च 'वायुर्वै क्षेपिष्ठा देवता सा यजमानं भूतिं गमयति तां स्वेन भागेनोपधावति' इत्यर्थवादवाक्यं स्तुतिवाक्यमुदा-हर्तव्यम्। अत्र प्रागुक्तोदाहरणद्वयेऽपि स्वार्थाद् विलक्षणःप्रवृत्तिमात्रप्रयोजनः पदार्थघटितात् स्वार्थादन्य एवाविभागः = अखण्डः वाक्यार्थः, तथाविधवाक्यनिबन्धनः = अखण्डवाक्य-प्रयुक्त एव स्वीकार्य इति स्थितिः।

ननु कथं न तत्र स्पष्टमेव कृत्वा प्रवृत्तिनिवृत्ती विधीयेते, किमनुपयोगिनिन्दाद्यर्थप्रतिपादनासंभारेणेत्याशङ्क्याह—

**व्याघ्रादिव्यपदेशेन यथा बालो निवर्त्यते ।**
**असत्योऽपि तथा कश्चित् प्रत्यवायो विधीयते ॥३२१॥**

यथा रुदन्तं व्याघ्रो भक्षयतीति, बालस्योच्यते न तत्र व्याघ्रभक्षणं वस्तुस्थित्या संभवि, केवलं मा कदाचित् त्वं रोदीरिति रोदननिषेध एव तस्य क्रियते, तथा तत्र प्रतिषिद्धाचरणान्नरकपातो भवतीत्येतावन्मात्रं प्रतिग्राह्यत इति तत्तदर्थसमाश्रयणेन सत्यरूपपदपदार्थाभ्युपगमो न युक्तः ॥३२१॥

---

कारिकाया अर्थस्तु—लोके वेदे वा विधीयमानं दृष्टादृष्टप्रयोजनम् = दृष्टप्रयोजनम्, अदृष्टप्रयोजनं वा कर्म यत् स्तूयते सा तस्य = कर्मणः स्तुतिः = तत्कर्मणः स्तुतिवाक्यम्; कर्तुरधिकृतस्य प्रयोजिकैव प्रवर्तिकैव, न तु तस्याः स्वार्थे तात्पर्यमिति । यथा लोके—राजा सेवितव्य इति विधिः, तस्य स्तुतिवाक्यम्—यो राजानं सेवते स सारं भुङ्क्ते इति । वेदे च—'वायव्य श्वेतं पशुमालभेत पशुकामः' इति विधिः । तस्य स्तुतिवाक्यम्—'वायुर्वै क्षेपिष्ठा देवता' सा यजमानं भूतिं गमयतीत्यादीति ॥३२०॥

ननु यदि विधीयमानदृष्टादृष्टप्रयोजनकर्मसंबन्धिनां स्तुतिनिन्दावाक्यानां न स्वार्थे तात्पर्यम्, किन्तु तत्र प्रवृत्तिनिवृत्त्योरेव; तदा तत्र कथं न स्पष्टमेव प्रवृत्तिनिवृत्ती विधीयेते, किमनुपयोगिना स्तुतिनिन्दाद्यर्थप्रतिपादनाप्रयासेनेत्याशङ्कायामाह—**व्याघ्रादिव्यपदेशेनेति ।**

अयमर्थः—यथा रुदन् बालो व्याघ्रादिव्यपदेशेन व्याघ्रकर्तृकबालकर्मकभक्षणव्याजेन रुदन्त त्वां व्याघ्रो भक्षयिष्यतीति निवर्त्यते, तथा प्रतिषिध्यमानकर्मनिन्दास्थलेऽसत्योऽपि, अपिना सत्योऽपि कश्चित् प्रत्यवायः = प्रतिकूलतयाऽवेद्यतेऽवबुध्यत इति प्रत्यवायोऽनिष्टम्, नरकपातादिबाहुलकात् कर्मणि घञ् । प्रतिषिद्धाचरणान्निवृत्तये विधीयते = बोध्यत इति ।

अयं भावः—यथा 'रुदन्तं बालं प्रति रुदन्तं त्वां व्याघ्रो भक्षयिष्यति' इत्युच्यते, किन्त्वत्र व्याघ्रकर्तृकं बालकर्मकं भक्षणं न वस्तुगत्या संभवीत्यसत्यमेव, तत्र व्याघ्रासंनिधानात् । केवल मा कदाचित्त्वं रोदीरिति रोदननिषेध एव बालस्य क्रियत इति तत्रैव तद्वाक्यस्य तात्पर्यमिति स एव तद्वाक्यार्थः; तथा प्रतिषिद्धाचरणान्नरकपातो भवति, यथा कुलवधात् कुलघ्नपितॄणां नरकपातो भवति, 'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः' 'इति' इत्येतावन्मात्रं सत्यमसत्यं वा प्रतिपाद्यते, न तु तत्र तद्वाक्यतात्पर्यम्, किन्तु कुलवधान्निवर्तितव्यमित्यत्रैव तद्वाक्यतात्पर्यम् । तदुक्तमग्रे तत्रैव—

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ इति ।

तथा चातात्पर्यविषयीभूततद्वाक्यार्थघटकतत्तदर्थसमाश्रयणेन सत्यरूपपदार्थाभ्युपगमो न युक्त इति ॥३२१॥

तथा प्रत्यवायोपदेशेन च यच्छास्त्रेण प्रतिषिद्धं न तत्राहोपुरुषिकया प्रत्यवायसंविधानमारचय्य प्रेक्षापूर्वकारिणः प्रवृत्तिरुचितेत्याह—

**न संविधानं कृत्वापि प्रत्यवाये तथाविधे ।**
**शास्त्रेण प्रतिषिद्धेऽर्थे विद्वान् कश्चित् प्रवर्तते ॥३२२॥**

दृष्टप्रयोजनप्रत्यवायप्रतिविधाननिदर्शनपूर्वकमेतदेव व्याख्यातुमाह--

**सर्पेषु संविधायापि सिद्धैर्मन्त्रौषधादिभिः ।**
**नान्यथा प्रतिपत्तव्यं न दतो गमयेदिति ॥३२३॥**

---

ननु यदि प्रतिषिद्धाचरणात् प्रत्यवायोपदेशे न शास्त्रतात्पर्यम्, किन्तु निवृत्तावेव, तदा प्रत्यवायस्यासत्यत्वे रागतः प्रतिषिद्धाचरणे निःशङ्कं प्रवृत्तिर्भविष्यति, तस्य सत्यत्वे तु प्रत्यवायस्य प्रतिविधानं कृत्वा प्रतिषिद्धेऽर्थे तत एव प्रवृत्तिर्भविष्यति, तस्य सत्यत्वे तु प्रत्यवायस्य प्रतिविधानं कृत्वा प्रतिषिद्धेऽर्थे तत एव प्रवृत्तिर्भविष्यतीत्याशङ्क्य यच्छास्त्रेण प्रत्यवायोपदेशेन प्रतिषिद्धं तत्र प्रत्यवायस्यासत्यत्वे सत्यत्वे वा आहोपुरुषिकया=स्वात्मनि शास्त्रानायत्तत्वरूपस्वातन्त्र्यस्य पुंस्त्वस्य चाभिमानेन प्रत्यवायप्रतिविधानमारचय्यापि प्रेक्षापूर्वकारिणः प्रवृत्तिर्नोचिता, पुरुषस्य कार्याकार्यविनिश्चितौ शास्त्रेण स्वस्यैव प्रामाण्यव्यवस्थापनात् । तदुक्तम्—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यविनिश्चितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥

इत्येतत् सर्वं मनसि निधायाह—**न संविधानमिति** ।

अयमर्थः—तथाविधे=सत्येऽसत्ये वा शास्त्रतात्पर्याविषये प्रत्यवाये, संविधानम्=प्रतिविधानम्=प्रतीकारं कृत्वाऽकृत्वापि कश्चिद् विद्वान्=प्रागुक्तशास्त्रज्ञः, शास्त्रेण प्रतिषिद्धेऽर्थे न प्रवर्तत इति ॥३२२॥

दृष्टप्रयोजनं यत् प्रत्यवायप्रतिविधानं तद्दृष्टान्तपूर्वकमेतदेव पद्यं स्वयं व्याख्यातुं पद्यान्तरमाह--सर्पेषु इति ।

अयमर्थः—सिद्धैः- दृष्टसामर्थ्यैः, मन्त्रोषधादिभिः, सर्पेषु संविधायाऽपि=सर्पविषयकं प्रतीकारं कृत्वाऽपि । न दतो गमयेदिति । 'न दतो गमयेद् यद्दतो गमयेत् सर्पा एनं घातुका भवन्ति'' इति वाक्यम्, अन्यथा न प्रतिपत्तव्यम्=सत्यार्थकादन्यथाऽन्यादृशमसत्यार्थकं न प्रतिपत्तव्यम्=असत्यार्थकं प्रतिपद्य दन्तोपदंशनपूर्वकं पुरोडाशभोजनं न कर्तव्यम्, शास्त्रातिक्रमस्यानुचितत्वात् । कार्याकार्यविनिश्चितौ शास्त्रस्यैव प्रामाण्यमित्यर्थस्य प्रागुपदर्शितत्वादिति ।

'न दतो गमयेद् यद्दतो गमयेत् सर्पा एनं घातुका भवन्ति" इत्यनेन पुरोडाशस्य दन्तोपदंशनपूर्वकं भोजनं निषिद्धयते यत्र कश्चित् सर्पाणां प्रतिविधानं मन्त्रौषधादिभिः कृत्वा यदि तथा प्रवृत्तस्तदाऽनेन शास्त्रानुष्ठानं परित्यक्तमिति न शोभनमाचरितम् ।।३२३।।

अस्त्वेवं विधिनिषेधपरेषु स्तुत्यर्थादीनामसत्यत्वम्, यत्र तु स्तुतिनिन्दे एव प्रयोजिके तत्र तदर्थानां सत्यत्वमेवोचितमित्याशङ्क्याह--

**क्वचित् तत्त्वसमाख्यानं क्रियते स्तुतिनिन्दयोः ।**
**तत्रापि च प्रवृत्तिश्च निवृत्तिश्चोपदिश्यते ।।३२४।।**

यत्रापि क्वचित् स्तुतिनिन्दयोर्विषये तयोः सम्बन्धि वा तत्त्वाख्यानं क्रियते, तत्रापि सर्वथा स्तुतिनिन्दयोः केवलयोर्न किञ्चित् प्रयोजनमुत्पश्याम इति प्रवृत्तिनिवृत्ती एवोपदिश्येते इति बोद्धव्यम् ।।३२४।।

---

अयं भावः—'न दतो गमयेद् यद् दतो गमयेत् सर्पा एनं घातुका भवन्ति' इति वाक्येन दन्तोपदंशनपूर्वकं पुरोडाशभोजनं निषिध्यते । एवञ्च यदि कश्चित् सर्पाणां प्रतीकार मन्त्रौषधादिभिः कृत्वा दन्तोपदंशनपूर्वके पुरोडाशभोजने प्रवृत्तस्तदा तेन प्रागुक्तशास्त्रविधानं परित्यक्तमिति न शोभनमाचरितम्, शास्त्रविधानातिक्रमे दोषस्मरणात् । तदुक्तं गीतासु—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।। इति ।। ३२३ ।।

नन्वेवमस्तु—'वायुर्वै क्षेपिष्ठा देवता' इत्यादिषु प्रवर्तनारूपविधिपरेषु स्तुतिवाक्येषु 'यदरोदीत् तद् रुद्रस्य रुद्रत्वम्' इत्यादिषु निवर्तनारूपनिषेधपरेषु च निन्दावाक्येषु स्तुतिनिन्दयोरसत्यत्वम्, तयोस्तेषामतात्पर्यात् । यत्र तु स्तुतिनिन्दयोरेव तात्पर्यमिति, ते एव मुख्ये प्रयोजिके = पुरुषस्य स्तूयमानकर्मसु प्रवर्तिका स्तुतिः' निन्द्यमानकर्मसु च निवर्तिका निन्दा । तत्र स्तुतिनिन्दारूपार्थयोः सत्यत्वमिति तद्वाक्यार्थघटकपदपदार्थानामपि सत्यत्वमेवोचितमित्याशङ्कायामाह—**क्वचिदिति ।**

अयमर्थः—यत्रापि क्वचित्, स्तुतिनिन्दयोरिति विषयसप्तमी षष्ठी वा, तत्त्वसमाख्यानम् = तत्त्वेन = सत्यरूपेण सामाख्यानं तत्त्वस्य सत्यस्य समाख्यानम् = तत्त्वं समाख्यानमिति वा क्रियते, तत्रापि च प्रवृत्तिश्च, निवृत्तिश्च एकश्चकारः समुच्चायार्थः, अपर एवकारार्थः । प्रवृत्तिर्निवृत्तिश्चैवोपदिश्येते इति ।

अयं भावः—यत्रापि क्वचित् स्तुतिनिन्दयोर्विषये तयोः सम्बन्धि वा सत्याख्यानं क्रियते, तत्रापि सर्वथा स्तुतिनिन्दयोः केवलयोर्न किञ्चित् प्रयोजनं वक्तुं शक्यत इति तत्रापि स्तुतिनिन्दे सत्ये पुरस्कृत्य तत्सहिते प्रवृत्तिनिवृत्ती एवोपदिश्येते इति ।।३२४।।

एवं पदपदार्थानामसत्यत्वे वाक्यवाक्यार्थयोरखण्डयोरेव सत्यत्वे प्रतिष्ठापिते पदार्थानां स्वरूपस्य वाक्यार्थ एव निबन्धनमिति दर्शयितुमाह—

**रूपं सर्वपदार्थानां वाक्यार्थोपनिबन्धनम् ।**
**सापेक्षा ये तु वाक्यार्थाः पदार्थैरेव ते समाः ॥३२५॥**

एकस्मिन् वाक्यार्थे रूपनिबद्धास्ते साफल्यं भजन्ते, अन्यथा विशरारव एवेति वाक्यार्थ एव तेषां परस्परसमन्वये निबन्धनम् । वक्ष्यति च—

पृथग् विशिष्टतत्त्वानां पृथगर्थानुपातिनाम् ।
इन्द्रियाणां यथा कार्यमृते देहान्न कल्पते ॥
तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते ॥ (२।४१९–४२०) इति ।

---

एवं पदपदार्थानामसत्यत्वे वाक्यवाक्यार्थयोरखण्डयोरेव सत्यत्वे च प्रतिष्ठापिते पदार्थानां स्वरूपस्य वाक्यार्थ एव निबन्धनम् = परस्परान्वयरूपबन्धनस्थानम् = वाक्यार्थघटकतयैव च तेषां परस्परान्वितानामर्थवत्ता, न तु पृथक् पृथगवस्थितानामिति दर्शयितुमाह— **रूपमिति** ।

अयमर्थः—सर्वपदार्थानाम् = सर्वेषां वाक्यार्थघटकानां पदार्थानां रूपम् = स्वरूपम् वाक्यार्थोपनिबन्धनम् = वाक्यार्थ उपनिबन्धनं परस्परायन्वयरूपबन्धनस्थानं यस्य तत्तथाभूतमिति ।

अयं भावः—एकस्मिन् वाक्यार्थे स्वरूपेण निबद्धाः पदार्थाः साफल्यम् = सार्थक्यं भजन्ते । अन्यथा विशरारव एव त इत्यनर्थका इति वाक्यार्थ एव तेषां परस्परसमन्वये निबन्धनम् = निमित्तम् । अत्र वाक्यार्थपदेन वाक्यजन्यप्रतिपत्तिविशेष्यभूता क्रियोच्यते । वक्ष्यति च वाक्यात् प्रविभक्तानां पदानामानर्थक्यम् —**पृथग् विशिष्टेत्यादि** ।

अत्र प्रथमपद्यस्य प्रथमे पादे क्वचित् 'पृथग् निविष्टतत्त्वानाम्' इति पाठः, स च युक्तोऽर्थसंगतेः । तथाहि परस्परं भिन्नत्वे स्थितस्वरूपाणामित्यर्थः । 'पृथग् विशिष्टतत्त्वानाम्' इति पाठे तु पृथग् विलक्षणस्वरूपाणामित्यर्थे पृथक्पदवैयर्थ्यमित्येष पाठोऽयुक्तः । पृथगर्थानुपातिनाम् = भिन्नभिन्नस्वविषयानुगामिनामित्यर्थः । इन्द्रियाणां कार्यं रूपग्रहणादिकं यथा देहादृते = देहाश्रयं विना न कल्पते = न प्रसिध्यति, तथा पृथगर्थनिवेशिनाम् = भिन्नार्थविषयकशक्तिमतां पदानां वाक्येभ्यः प्रविभक्तानाम् = वाक्येभ्यः पृथक्कृतानामर्थवत्ता न विद्यते । परस्परं भिन्नानां यथा देहश्रितानामेवेन्द्रियाणां स्वस्वकार्यजननसामर्थ्यम्, तथा वाक्यान्तर्गतानामेव पदानां परस्परं भिन्नानां स्वस्वार्थबोधनसामर्थ्यमित्यर्थः । तथाऽन्यदप्युच्यते—

यथोच्यते—नहि किञ्चिदित्यादि। ननु वाक्यार्थस्यापि कस्यचिदपरिपूर्णत्वे किं तस्याप्यपरवाक्यार्थनिबन्धनत्वमङ्गीकार्यमित्याशङ्क्याह—सापेक्षेति।

एतदुक्तं भवति—अवान्तरवाक्यार्थाः साकाङ्क्षत्वात् पदार्थतुल्या एवेति न तत्र वाक्यार्थव्यपदेशः कार्यः ॥३२५॥

अथ यत्रैकस्मात् पदान्निराकाङ्क्षोऽर्थः प्रतीयते, तत्रापि किं तस्याऽसत्यार्थत्वं युक्तमभिधातुमित्याशङ्क्याह—

**वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम्।**
**आख्यातशब्दे नियतं साधनं यत्र गम्यते।**
**तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते ॥३२६॥**

एतदुक्तं भवति—सन्ति वाक्येषु वाक्यैकदेशाः प्रसिद्ध्यादिना वाक्यार्थप्रत्यायका इति। तदप्येकपदं वाक्यमेव। यस्मात्तच्चरितक्रियमिति, चरिता गर्भीकृता आख्यातक्रिया यस्य तद्गर्भीकृतक्रियापदं नामपदं वाक्यं प्रयुञ्जते,

---

नहि किञ्चित् पदं नाम रूपेण नियतं क्वचित्।
पदानामर्थरूपं च वाक्यार्थादेव जायते॥ इति।

इदञ्च पद्यम्—"नामाख्यातस्वरूपा ये' इति पद्यव्याख्यावसरे व्याख्यातमिति नेह व्याख्यायते।

ननु कस्यचिदवान्तरवाक्यार्थस्याप्यर्थान्तरसाकाङ्क्षत्वेनापरिपूर्णत्वे किं तस्याप्यपरवाक्यार्थनिबन्धनत्वमङ्गीकार्यमित्याशङ्क्य तेषामवान्तरवाक्यार्थानां साकाङ्क्षत्वेन पदार्थतुल्यत्वमेवेति न वाक्यार्थानामपरवाक्यार्थनिबन्धनत्वमङ्गीकार्यमित्याह—**सापेक्षा इति**।

अयमर्थः—ये तु वाक्यार्थाः पदार्थान्तरसापेक्षास्ते तत्त्वेन पदार्थैरेव समा इति न तत्र वाक्यार्थव्यपदेसः कार्य इति न वाख्यार्थस्य वाक्यार्थनिबन्धनत्वमिति ॥ ३२५ ॥

अथ यत्र द्वारमित्यादिकाद् गर्भीकृताख्याताद् एकस्मात् पदाद् यत किञ्चित् संबोध्य कर्तृकद्वारकर्मकपिधानरूप इष्टसाधनत्वविशिष्टोऽर्थो निराकाङ्क्षः प्रतीयते, तत्रापि किं तस्य पदस्यासत्यत्वमसत्यार्थत्व वा वक्तुंयुक्तमित्याशङ्क्य तस्यापि गर्भीकृताख्यातत्वाद् निराकाङ्क्षार्थप्रतिपादकत्वेन वाक्यत्वाद् मैवमित्याह—**वाक्यमिति**।

अस्यार्थः—यत् पदं चरितक्रियम् = भक्षितक्रियम् = उदरसात्कृतक्रियम् गर्भीकृतक्रियमिति यावत्। तदपि पदं निराकाङ्क्षार्थप्रतिपादकत्वाद् वाक्यं मन्यन्ते। वाक्यत्वेन च तस्य पदस्यापि सत्यत्वं सत्यार्थकत्व चेति फलितम्।

चरितक्रियापदादस्मादर्थावगतिर्निराकाङ्क्षोपजायमाना दृश्यत इतिपदमात्रस्यैवात्र वाक्यत्वम् ।

एवं यथा नामपदं केवलमपि गर्भीकृताख्यातं निराकाङ्क्षार्थप्रत्यायनाद्वाक्यमेवेति तत्प्रत्यायितादर्थात् प्रवृत्तिपर्यन्तव्यवहारसिद्धौ सत्यतैव तदर्थस्य, तथैवाख्यातं केवलमर्थौचित्यादिवशाद्विशिष्टाभिधायकं वाक्यमेवोच्यत इत्याह— आख्यात इति ।

यथा वर्षतीत्युक्ते देवो जलमिति कर्तृकर्माक्षेपात् परिपूर्णार्थत्वे वर्षति देवो जलमिति यथा वाक्यमेवं तदप्येकं पदं समाप्तार्थं परिपूर्णार्थं वाक्यमेवाभिधीयते । तदुक्तमादावेव आख्यातशब्द इति वाक्यमित्यर्थः ॥३२६॥

अत्र मीमांसकः प्राह—

**शब्दव्यवहिता बुद्धिरप्रयुक्तपदाश्रया ।**
**अनुमानात् तदर्थस्य प्रत्यये हेतुरुच्यते ॥३२७॥**

---

प्रकरणादिना वाक्यार्थप्रत्यायकाः । यथा 'परशुना' इति नामपदं प्रसिद्धया छिनत्तीत्यस्यापि प्रत्यायकम् । यथा वा द्वारमिति नामपदं गर्भीकृताख्यातं प्रकरणमनुसृत्य 'द्वारं पिधेहि' 'उद्घाटय' इति वा वाक्यार्थस्य प्रत्यायकमिति तदप्येकपदं समाप्तार्थत्वाद् वाक्यमेव । अत एव गर्भीकृताख्यातादस्मात् पदाद् निराकाङ्क्षाऽर्थावगतिर्जायमाना दृश्यत इतीदं नामपदमेवात्र वाक्यमिति । इदं सत्यं सत्यार्थकञ्चेति ।

एवं यथा नमपदं द्वारमिति केवलमपि = क्रियापदासमभिव्याहृतमपि, प्रकरणवशाद् गर्भीकृताख्यातमिति निराकाङ्क्षार्थप्रत्यायनाद् वाक्यमेवेति तत्प्रत्यायिताद् वाक्यार्थात् प्रवृत्तिपर्यन्तव्यवहारसिद्धौ तस्य तदर्थस्य च सत्यतैव, तथैव वर्षतीत्याख्यातं केवलम् = देवो जलमिति कर्तृकर्मवाचकपदरहितम्, प्रसिद्धिप्रयुक्तादौचित्यात् कर्तृकर्मवाचकपदविशिष्टवाक्यार्थाभिधायकमिति वाक्यमेवोच्यत इत्याह—आख्यातशब्द इति ।

अस्यार्थः—यत्र आख्यातशब्दे 'वर्षति' इत्यादौ केवले प्रयुक्ते नियतं वर्षक्रियाया अव्यभिचारि व्यापकं साधनं देवो जलमिति कर्तृरूपं कर्मरूपञ्च गम्यते = अनुमीयते, समासार्थमिति पाठे स्वस्मिन् संगृहीतसाधनरूपार्थमित्यर्थः, समाप्तार्थमिति पाठे तु परिपूर्णार्थमिति निराकाङ्क्षार्थमिति वाऽर्थः । एकमपि तत् = आख्यातपदम्, 'देवो जलं वर्षति' इति वाक्यवद् वाक्यमित्यभिधीयत इति तस्याख्यातपदस्यापि सत्यत्वं सत्यार्थत्वञ्चेति । तदुक्तमस्य काण्डस्यादावेवाष्टविधवाक्यविकल्पोपन्यासावसरे…आख्यातशब्दो वाक्यमिति ॥३२६॥

ननु न गर्भीकृताख्यातं द्वारमित्यादिपदं पिधेहीत्यादिक्रियापदार्थस्य वाचकम्, किन्तु प्रयुक्ताद् द्वारमित्यादिपदात् श्रुतार्थापत्त्या पिधेहीत्यादिक्रियापदमाक्षिप्यानुमाय वा क्रिया-

केवलात् पदाद्या साधुवद्भावना बुद्धिः सा साधुवत्तदर्थस्य तस्याप्रयुक्तस्य पदान्तरस्य योऽर्थस्तस्य हेतुरुच्यते । कीदृशी ? शब्दव्यवहिता । यथा धूमेन स्वार्थानुमाने शब्दमन्तरेण वह्नेराक्षेपः, नैवमत्रापि । [किन्तु] श्रुतार्थापत्त्या परिकल्पितो योऽसौ तिष्ठत्यादिशब्दः, तेन व्यवहिता ।

अथ तस्याऽश्रवणात् कथं तद्व्यवहितेत्याशङ्क्याह—अप्रयुक्तपदाश्रयेति । अप्रयुक्तमनुच्चारितं वाचकं श्रुतार्थापत्त्याक्षिप्तमाश्रयो द्वारमुपायस्तिष्ठत्याद्यर्थप्रत्यये यस्या सा तथेति । कस्मात्तदर्थस्य प्रत्यये हेतुरित्याह-अनुमानादिति । तिष्ठत्यादिकं

---

पदादेव तदर्थबोध इति मृषैवोच्यते सन्ति वाक्येषु वाक्यैकदेशा वाक्यार्थप्रतिपादका इति मीमांसकः शङ्कते—शब्दव्यवहितेति ।

अयमर्थः—प्रयुक्तेन पदेन द्वारमित्यादिना, अप्रयुक्तस्य स्वार्थान्वययोग्यस्य पदस्य 'पिधेहि' इत्यादेरनुमानाद् अप्रयुक्तपदाश्रया = अप्रयुक्तपिधेहीत्यादिपदविषया या अनुमितिरूपा बुद्धिः बुद्धेरप्रयुक्तपदाश्रयत्वञ्च विषयतासबन्धेन बोध्यम् ।

सा शब्दव्यवहिता अनुमितपिधेहीत्यादिपदव्यवहिता सती, तदर्थस्य = अप्रयुक्तपदार्थस्य प्रत्यये हेतुरुच्यते । अतो न प्रयुक्तस्य = द्वारमित्यादिकस्य नामपदस्याप्रयुक्तपिधेहीत्यादिक्रियापदार्थवाचकत्वमित्यायातम् । पुण्यराजस्तु—केवलाद् द्वारमित्यादिपदाद् या साधुवद् भावना बुद्धिः = द्वारं पिधेहीति साधुवाक्यवत् पिधानादिक्रियाबुद्धिः, सा साधुवत् प्रागुक्तसाधुवाक्यवत् तदर्थस्य = तस्याप्रयुक्तस्य पदान्तरस्य योऽर्थस्तस्य हेतुरुच्यते ।

कथमिति जिज्ञासिते आह—शब्दव्यवहिता इति । 'पिधेहि' इत्यप्रयुक्तं पदमनुमाय तद्द्वारेत्यर्थः । यथा स्वार्थानुमाने धूमेन वह्निशब्दमन्तरेण वह्नेराक्षेपः = अनुमानम्, नैवमत्रापि = द्वारमिति केवलपदस्थलेऽपि, किन्तु श्रुतार्थापत्त्या = व्यतिरेक्यनुमानेन, नैयायिकैरर्थापत्तेरनङ्गीकारात् । परिकल्पितः = अनुमितो योऽसौ पिधेहीत्यादिशब्दस्तेन व्यवहिता ।

ननु 'पिधेहि' इत्यादिशब्दस्याश्रवणात् कथं तद्व्यवहिता इत्याशङ्क्याह—अप्रयुक्तपदाश्रया इति ।

अप्रयुक्तमनुच्चरित् यत् पिधानादिक्रियावाचकम् 'पिधेहि' इत्यादिपदं श्रुतार्थापत्त्याऽऽक्षिप्तम् = व्यतिरेक्यनुमानेनानुमितम्. आश्रयो द्वारमुपायः पिधेहीत्याद्यर्थप्रत्यये यस्याः सा तथेति । कस्मात्तदर्थस्य प्रत्यये हेतुरित्याशङ्क्याह -अनुमानादिति । पिधेहीत्यादिकं शब्दं श्रुतार्थापत्त्योपस्थापितमनुमायाक्षिप्यासौ बुद्धिस्तदर्थप्रत्ययमुपजनयतीति यावत् ।

वस्तुतस्तु नेदं युक्तम्, तथाहि—'श्रुतार्थापत्त्योपस्थापितमनुमायाक्षिप्य' इत्यस्य हि श्रुतार्थापत्त्याक्षिप्तमाक्षिप्येत्यर्थः । तथा चार्थसङ्गतिः स्पष्टैव, श्रुतार्थापत्त्याऽऽक्षिप्येत्यस्यैव वक्तुमुचितत्वादिति । अग्रे च पुण्यराजेनोक्तम्—अतो न केवलमेव नामपद सक्रियस्यार्थस्य वाचकम्, आख्यातञ्च ससाधनस्य ।

शब्दं श्रुतार्थापत्त्योपस्थापितमनुमायाक्षिप्यासौ बुद्धिस्तदर्थप्रत्ययमुपजनयतीति यावत्। अतो न केवलमेव नामपदं सक्रियस्यार्थस्य वाचकम्, आख्यातं च ससाधनस्येति कथमुच्यते ? सन्ति वाक्येषु वाक्यैकदेशा वाक्यार्थप्रतिपादका इति ॥३२७॥

श्रुतार्थापत्त्या शब्दाभिसम्बन्धस्य किंप्रयोजनमेकपदादेव तस्माद् वृक्षस्तिष्ठतीत्यादिवन्निराकाङ्क्षार्थप्रत्यायनमुक्तं कथं वाक्यैकदेशस्य सकलवाक्यार्थप्रतिपादकत्वमन्तरेण शब्दान्तरपरिकल्पनं युज्यत इति परमतमाशङ्क्याह—

**यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते।**
**तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम् ॥३२८॥**

---

एवञ्च कथमुच्यते—सन्ति वाक्येषु वाक्यैकदेशा वाक्यार्थप्रतिपादका इति। एष च पुण्यराजस्य भावानुवादो मया कृतः, न तु भाषानुवादः, तेन क्वचिद् भाषाभेदः क्षन्तव्यो विद्वद्भिः। एतन्मते चैषा कारिकाया अक्षरयोजना—प्रयुक्तात् केवलाद् द्वारमित्यादिपदाद् जायमाना पिधानादिक्रियाविषया या बुद्धिः, सा शब्दव्यवहिताऽनुमानादप्रयुक्तपदाश्रया सती तदर्थस्य प्रत्यये हेतुरुच्यत इति।

अयं भावः—प्रयुक्तेन पदेन द्वारमित्यदिना स्वार्थान्वययोग्यपदार्थस्य पिधानादिक्रियारूपस्य व्यतिरेक्यनुमानम् आक्षेपः। तथा च प्रभाकरैः श्रुतार्थापत्त्याऽर्थाक्षेप एव स्वीक्रियते, न तु शब्दाक्षेपः। एवञ्चानुमितिरूपया बुद्ध्या स्वविषयपिधानादिक्रियावाचकस्य 'पिधेहि' इत्यादिशब्दस्यानुमानम्। अनुमिताच्च शब्दाच्छाब्दबोध एव पिधानादिक्रियाया इति न द्वारमित्यादेः पिधानादिक्रियावाचकत्वमिति। तथा च मदीयं व्याख्यानं शब्दाध्याहारवादिभट्टमतमाश्रित्य, पुण्यराजव्याख्यान त्वर्थाध्याहारवादिप्रभाकरमतमाश्रित्येति विवेकः।

वस्तुतस्तु—"श्रुतार्थापत्त्या शब्दाभिसम्बन्धस्य किं प्रयोजनम्" इत्यग्रिमकारिकावतरणेन मदुक्तभट्टमतावलम्बि व्याख्यानमपि पुण्यराजाभिप्रेतमिति गम्यते॥३२७॥

पूर्वकारिकया मीमांसकमतं सोपपत्तिकमाशङ्क्य द्वारमित्यादौ श्रुतार्थापत्त्याऽऽक्षिप्तो यः 'पिधेहि' इत्यादिकः शब्दस्तदभिसंबन्धस्य नास्ति प्रयोजनम्, यतो द्वारमित्यादिकादेकपदादेव शक्त्या 'द्वारं पिधेहि' इत्यादिव न्निराकाङ्क्षार्थप्रत्यायन प्रागुक्तम्। किञ्च, वाक्यैकदेशस्य द्वारमित्यादेः 'द्वारं पिधेहि' इति सकलवाक्यार्थप्रतिपादकत्वं बिना तेन 'पिधेहि' इति शब्दान्तरपरिकल्पनं नैव युज्यत इति समाधातुमाह—**यस्मिन्निति**।

अयमर्थः—यस्मिन् शब्दे उच्चरिते तु यदा योऽर्थः प्रतीयते, तदा तं तस्यैव शब्दस्यार्थमाहुः। अर्थस्य = शब्दार्थस्य, एतस्मादन्यल्लक्षणं नास्तीति।

इह यस्मादुच्चरिताद् यदर्थप्रत्ययो दृश्यते तं तस्यार्थमाहुः, वृक्ष इत्यस्मादेव चार्थप्रकरणादिना वृक्षस्तिष्ठतीत्यर्थप्रतीतेः। एतदेवार्थवाचकत्वाद्वाक्यमित्युक्तमेव ॥३२८॥

एवं कृत्वा क्रियार्थोपपदस्येत्यनेन नारम्भणीयैव चतुर्थी, तादर्थ्येन सिद्धत्वादित्याह—

**क्रियार्थोपपदेष्वेवं स्थानिनां गम्यते क्रिया।**
**वृत्तौ निरादिभिश्चैव क्रान्ताद्यर्थोऽवगम्यते ॥३२९॥**

क्रियार्थोपपदेषु विषये क्रियार्थोपपदानां चेति षष्ठीप्रयोगे सप्तमी। स्थानिनामप्रयुक्तानां धातूनां संबन्धिनी क्रियाहरणलक्षणा एधेभ्यो व्रजतीत्यत्रैधशब्द एव हरणमभिदधातीत्येधाहरणार्थं व्रजतीति प्रतीतिः। अतस्तादर्थ्यं स्फुटमेवेति सिद्धा चतुर्थी। एवं च कृत्वा वृत्तौ निरादयः क्रान्ताद्यर्थप्रतिपादका इत्याह—वृत्ताविति।

---

अयं भावः—लोकव्यवहारे यस्मादुच्चारिताच्छब्दाद् यस्यार्थस्य प्रत्ययो दृश्यते, तस्यैव शब्दस्य तमर्थमाहुः। द्वारमित्यस्मादेव चार्थप्रकरणादिना 'द्वारं पिधेहि' इति वाक्यार्थप्रतीतेर्द्वारमित्येतदेव वाक्यार्थवाचकत्वाद् वाक्यमिति। एतच्चोपपाद्योक्तमेव प्रागिति ॥३२८॥

एवं सति 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रं फलेभ्यो यातीत्यादौ चतुर्थीविधानार्थं नारम्भणीयम् तादर्थ्यचतुर्थ्यैव गतार्थत्वादित्याह—**क्रियार्थोपपदेष्विति**।

क्रियार्थोपपदानाञ्चेति स्थानिविशेषणत्वेन षष्ठीप्रयोगे प्राप्ते क्रियार्थोपपदेष्विति विषयसप्तमी। क्रियार्थोपपदेषु विषये **स्थानिनाम्** = प्रसङ्गवताम् अप्रयुक्तानामिति यावत्। धातूनां संबन्धिनी क्रिया, 'एधेभ्यो याति' इत्यादौ आहरणादिलक्षणप्रयुक्ताद् एधादिपदादेव **गम्यते**=शक्त्या तत्र ज्ञायते, न तु तत्र एधादिपदाद् आहर्तुमिति पदस्य तदर्थस्य वाऽध्याहारो युक्तः। तत एव तदर्थप्रतीतिदर्शनेन पदान्तराध्याहारकल्पने गौरवान्मानाभावच्च। अतस्तादर्थ्यं स्फुटमेवेति सिद्धा चतुर्थीति क्रियार्थोपपदस्येत्यादिसूत्रं नारम्भणीयमिति।

एवञ्च कृत्वा निष्कौशाम्बिरित्यादिवृत्तौ निरादय एव क्रान्ताद्यथप्रतिपादका इति सिद्ध भवति, अन्यथा तत्रापि क्रान्तादिपदानां तदर्थाना वाऽध्याहारः कल्प्येत। न चैतद्युक्तम्, वृत्तौ क्रान्तादिपदानां सर्वथाऽप्रयोगस्यैव सर्वसम्मतत्वादित्याह— **वृत्ताविति**।

चो हेतौ, यतो वृत्तौ। निरादिभिरेव क्रान्ताद्यर्थोऽवगम्यते। अतो वृत्तौ क्रान्तादीनामप्रयोग एवेति।

निष्कौशाम्बिरित्यादौ निरादय एव सामर्थ्यात् क्रान्तार्थप्रतिपादका इति गतार्थत्वात् क्रान्तादीनां शब्दानां वृत्तावप्रयोग एव । उक्तं च—

"उपसर्गा ह्येवमात्मका यत्र क्रियावाची शब्दः श्रूयते तत्र क्रियां विशिषन्ति, अन्यत्र क्रियाविशिष्टं साधनमाहुः" इति ॥२२९॥

यद्येवं वृक्षस्तिष्ठति, निष्क्रान्तः कौशाम्ब्या इत्यादौ तिष्ठत्यादीनां किं प्रयोगेण केवलं वृक्ष इत्यादिकं सर्वत्र नामपदमाख्यातं वा प्रयुज्यतां केवलैरेव सर्वत्र वाक्यार्थप्रतिपादनमित्याह—

**तानि शब्दान्तराण्येव पर्याया इव लौकिकाः ।**
**अर्थप्रकरणाभ्यां तु तेषां स्वार्थो नियम्यते ॥२३०॥**

केवलो वृक्षशब्दो वाक्यार्थप्रतिपादकोऽन्य एव वृक्षस्तिष्ठतीति चान्यदेव वाक्यं सादृश्याद् वृक्षस्तिष्ठतीत्यत्र वृक्षशब्दं वृक्ष इत्येकपदे वाक्येऽभिमन्यत इति । भवत्वेवं सर्वदा वृक्षशब्द एव केवलः किं न प्रयुज्यते ? तत एव हि सामर्थ्यादिना

अयं भावः—वृत्तौ निष्कौशाम्बिरित्यादौ निरादय एव सामर्थ्यात् क्रान्ताद्यर्थप्रतिपादका इति गतार्थत्वाद् वृत्तौ क्रान्तादीनां शब्दानामप्रयोग एवेति । उक्तञ्च- उपसर्गा ह्येवमात्मका यत्र क्रियावाची शब्दः श्रूयते तत्र क्रिया विशिषन्ति, अन्यत्र क्रियाविशिष्टं साधनमाहुरिति । अद्यस्योदाहरणं 'निष्क्रामन्ति' इति । अत्र क्रमधातोः क्रमणरूपं गमनसामान्यमर्थः । निर् उपसर्गस्य तु बहिर्गमनरूप निष्क्रमण गमनविशेषोऽर्थः । ततश्च विशेषणोपसर्गार्थेन धात्वर्थरूपं सामान्य विशेष्यते । तथा च 'निष्क्रामन्ति' इत्यस्य 'निष्क्रमणाभिन्नं क्रमणं कुर्वन्ति' इत्यर्थः । द्वितीयस्योदाहरणं तु 'निष्कौशाम्बिरिति । अत्र निरुपसर्गो निष्क्रमणक्रियाकर्माह, निष्क्रान्त इत्यर्थे निरुपसर्गोऽत्रेति यावदिति ॥२२९॥

यद्येवं द्वारं पिधेहि, निष्क्रान्तः कौशाम्ब्या इत्यादौ 'पिधेहि' इत्यादीनां प्रयोगस्य किं प्रयोजनम् ? केवलं द्वारमित्यादिकं नामपदमेव, 'पिधेहि' इत्यादि माख्यातपदमेव वा केवलं सर्वत्र प्रयुज्यताम् । एवं निरादिरुपसर्ग एव केवल सर्वत्र प्रयुज्यताम्, किं वाक्ये क्रान्तादिपदप्रयोगेण, केवलैरेव सर्वत्र वाक्यार्थप्रतिपादनादित्याशङ्क्याह—तानीति ।

अयमर्थः—तानि = द्वारमित्यादीनि, केवलानि नामपदानि 'पिधेहि' इत्यादीनि, केवलान्याख्यातपदादि वा, शब्दान्तराण्येव = अन्ये शब्दाः शब्दान्तराणि, 'द्वारं पिधेहि' इत्यादिवाक्यघटकनामाख्यातपदेभ्योऽन्ये तत्सदृशा एव केवलनामाख्यातशब्दा इत्यर्थः ।

अयं भावः—यद्यपि केवलं द्वारमिति नामपदं 'पिधेहि' इत्याख्यातपदं वा केवलं वाक्यार्थप्रतिपादकमन्यदेव, 'द्वारं पिधेहि' इति पूर्ण वाक्यं त्वन्यदेव, तथापि सादृश्याद् 'द्वारं पिधेहि' इति वाक्यगतं द्वारपदं द्वारमित्येकपदे वाक्येऽभिमन्यत इति ।

ननु भवत्वेवं सत्यम्, तथापि सर्वदा द्वारमिति केवल नामपदमेव, 'पिधेहि' इत्या-

वृक्षस्तिष्ठतीत्यर्थप्रतीतेः किमनेन विततेन वृक्षस्तिष्ठतीत्यादिकेन प्रयुक्तेनेत्याह—पर्यायेति।

एतदुक्तं भवति—लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरात् क्वचिद् वृक्षः क्वचिद् वृक्षस्तिष्ठतीति प्रयुज्यते। यथा तरुशब्देनैव लाघवाद् वृक्षार्थप्रतीतौ पादपशब्दं प्रयुञ्जत एव लौकिका इति न कश्चिद् दोषः। अथ वृक्ष इति केवलं नामपदं क्वचिद् वृक्षो दृश्यतां क्वचिद् वृक्षोऽस्तीत्येवंविधस्य नियतस्यार्थस्य विशेषभेदेन कथं प्रतिपादकं स्यादित्याह—अर्थेति। एषामेकपदानां वाक्यानां प्रतिनियतोऽर्थोऽर्थप्रकरणाभ्यां व्यवस्थाप्यते ॥३३०॥

एवमखण्डवाक्ये वाक्यार्थे सत्यरूपे स्थिते किं पदपदार्थानां वाक्यानां पदविभागपदभागार्थकल्पनयेत्याह—

**प्रतिबोधाभ्युपायास्तु ये तं तं पुरुषं प्रति।**
**नावश्यं तेऽभिसंबद्धाः शब्दा ज्ञेयेन वस्तुना ॥३३१॥**

---

ख्यातपदमेव वा केवलं लाघवात् किं न प्रयुज्य, तत एव हि सामर्थ्यादिना 'द्वारं पिधेहि' इति वाक्यार्थस्य प्रतीतिसंभवात्, किमनेन गुरुणा 'द्वारं पिधेहि' इत्यनेन प्रयुक्तेन फलमित्याशङ्क्याह—**पर्याया इव लौकिका इति।**

अयमर्थः—एते केवला नामशब्दा आख्यातशब्दा वा लौकिकाः पर्यायास्तरुपादपादिशब्दा इव स्थिताः। तथा च पर्यायशब्दानां 'लाघवगौरवचर्चा नाद्रियत' इति वैयाकरणाः। अत एव भगवान् पाणिनिः—वा, विभाषा, अन्यतरस्याम् इत्यादिकमविशेषेण तत्र तत्र प्रयुङ्क्ते।

अयं भावः—लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरात् क्वचिद् द्वारमिति नामपदमेव, 'पिधेहि' इत्याख्यातपदमेव वा केवलं प्रयुज्यते, क्वचित्तु 'द्वारं पिधेहि' इति वाक्यं प्रयुज्यते, यथा तरुशब्देनैव लाघवाद् वृक्षार्थप्रतीतौ पादपशब्दं गुरुमपि प्रयुञ्जत एव लौकिका इति न प्रागुक्तदोषः। ननु वृक्ष इति केवलं नामपदं क्वचिद् वृक्षो दृश्यतामिति, क्वचिद् वृक्षोऽस्तीत्येवंविधस्य तत्र तत्र नियतस्यार्थविशेषस्य कथं प्रतिपादकं स्यात्, अर्थभेदादित्याशङ्क्याह—**अर्थप्रकरणाभ्यामिति।**

अयमर्थः—तेषामेकपदानां वाक्यानां प्रतिनियतः स्वार्थस्त्वर्थप्रकरणाभ्यां नियम्यते = व्यवस्थाप्यते। एवं चैकपदानां वाक्यानां नानावाक्यार्थेषु नानाशक्तिमत्त्वेऽप्यर्थप्रकरणाभ्यां तेषां तत्र तत्र तत्तद्वाक्यार्थे शक्तिर्नियम्यत इत्येकस्मिन् स्थले एकवाक्यार्थबोध एव, नान्यवाक्यार्थबोध इति भावः ॥३३०॥

एवमखण्डे वाक्ये वाक्यार्थे च तथाविधे सत्यरूपे स्थिते किं वाक्ये पदपदार्थानाम्, पदे च पदभागपदार्थभागानां कल्पनयेत्याह—**प्रतिबोधाभ्युपाया इति।**

एतदुक्तं भवति—ये वाक्यार्थप्रतिबोधनोपायास्ते प्रतिनियतपुरुषसमाश्रयाः। ते चासत्यरूपा एव च पदपदार्था इत्याह—नावश्यमिति। ज्ञेयेन वाच्येन वस्तुना सत्यरूपेण लौकिकेन नैव तेऽवश्यं संबद्धा इत्यसत्यभूता इत्युच्यन्त इति ॥३३१॥

अथ यस्मिन्नुच्चरित इत्यादिकं यदि शब्दार्थलक्षणमाश्रीयते, तदा शब्दादुच्चरितात् प्रतिपत्तुरन्याक्षिप्तचित्तत्वादकृतसङ्केतत्वाद्वाऽसत्यामर्थप्रतिपत्तौ कुतश्चिद्भ्रमाद्वाऽन्यथाप्रतिपत्तौ तदर्थानवगतेरनित्यत्वमेव शब्दार्थसम्बन्धस्य स्यात्, न चैतद्युक्तमिति श्रुतार्थापत्तिवादी प्रतिपादयितुमाह—

**असत्यां प्रतिपत्तौ च मिथ्या वा प्रतिपादने।**
**स्वैरर्थैर्नित्यसम्बद्धास्ते ते शब्दा व्यवस्थिताः ॥३३२॥**

ते ते शब्दा नित्यत्वाच्छब्दसम्बन्धस्य नियतार्थप्रतिपादका एव व्यवस्थिताः ॥ ३३२ ॥

---

अयमर्थः—ये तु त त पुरुषं प्रति प्रतिबोधाभ्युपायाः प्रतिबोधेऽभ्युपाया इति सप्तमीसमासः। प्रतिबोधनोपायाः प्रतिनियतपुरुषाश्रयाः, प्रतिपुरुषं कल्पिता इति यावत्। वाक्ये पदरूपाः, समासादिरूपे च वृत्तिपदे पदैकदेशाः शब्दास्ते ज्ञयेन वाच्येन वस्तुना सत्यरूपेण लौकिकेनाखण्डेन वाक्यार्थेन नावश्यमभिसंबद्धाः, सदसतो रूपरागासभवादिति भावः ॥३३१॥

ननु 'यस्मिस्तूच्चरिते शब्दे" (१२८) इत्यादिकं प्रागुक्तं यदि शब्दार्थलक्षणमाश्रीयते, तदा विषयान्तरव्यासक्तचित्तत्वाद् अगृहीतशक्तिकत्वाद्वा उच्चरिताच्छब्दात् प्रतिपत्तुरसत्यामर्थप्रतिपत्तौ कुतश्चित्कारणाद् भ्रमाद्वाऽन्यथाप्रतिपत्तौ तदर्थानवगतेरनित्यत्वमेव शब्दार्थसंबन्धस्य स्यात्। न चैतद् युक्तम्, 'सिद्धे शब्दार्थसंबन्धे, लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते' इति वार्त्तिकोक्तेरिति श्रुतार्थापत्तिवादी = पदान्तराध्याहारवादी शङ्कते—असत्यामिति।

अयमर्थः—उच्चरिताद् द्वारमित्यादिपदात् प्रतिपत्तुरन्याक्षिप्तचित्तत्वाद् अगृहीतसकेतत्वाद्वा द्वारं पिधेहि' इत्येतद् वाक्यार्थप्रतीतावसत्याञ्च मिथ्याप्रतिपादने वा अन्यथाप्रतिपादने 'द्वारं पिधेहि' इत्येतद् वाक्यार्थाद् अन्यार्थप्रतिपादने वा, ते ते शब्दाः = द्वारमित्यादयः शब्दाः = तत्रापि स्वैरर्थैर्नित्यसंबद्धा एव व्यवस्थिताः = ते ते शब्दा द्वारमित्यादयः शब्दार्थसंबन्धस्य नित्यत्वात् स्वस्वनियतार्थप्रतिपादका एव व्यवस्थिताः, अतो यत्रापि द्वारमित्यादिकात् केवलात् पदात् पिधानादिक्रियाप्रत्ययस्तत्रापि पिधेहि' इति पदाध्याहार एव युक्तः, द्वारमिति तु केवलात् स्वार्थस्यैवावबोधकमिति भावः ॥३३२॥

कुतश्चिन्निमित्तादर्थानवगतौ शब्दार्थसम्बन्धहानिः प्राप्नोति, तस्मादेकपदेषु पदान्तराध्याहारेण वाक्यार्थावगतिरुपपन्नेति प्रतिपादयितुमाह—

**यथाप्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ।**
**बधान देहि वेत्येतदुपायादधिगम्यते॥ ३३३॥**

प्रकरणानतिक्रमेण साधनं क्रियाया अविनाभावितया आक्षेपकं भवतीति द्वारं द्वारमित्यत्र कर्मश्रुतिर्बधान देहि वेत्येतमर्थं प्रकरणादेरुपायात्तद्वाचकद्वारेणाक्षिपतीत्येतदेव युक्तम्॥ ३३३॥

---

कुतश्चिन्निमित्ताद् द्वारमिति केवलात् पदाद् 'द्वारं पिधेहि' इत्येतद्वाक्यार्थानवगतौ शब्दार्थसंबन्धहान्या तस्यानित्यत्वं प्राप्नोति। तस्मादेकपदेषु द्वारमित्यादिकेषु केवलेषूच्चरितेषु पिधेहि' इत्यादिपदान्तराध्याहारेण 'द्वारं पिधेहि' इत्येतद्वाक्यार्थावगतिरुपपन्नेति प्रतिपिपदयिषुराह श्रुतार्थापत्तिवादी—**यथाप्रकरणमिति**।

अयमर्थः—द्वारमित्यस्यां कर्मणः श्रुतौ = कर्मणो वाचके शब्दे, उच्चरिते सति, संवृतं बधान = यथा न विव्रियेत, धेहि = धारय। विवृत द्वारं धारय, येन न संवृतं स्यादित्येतद् वस्तु यथाप्रकरणम् = प्रकरणानतिक्रमेण, उपायात् = प्रकरणादिरूपादेवोपायात्, तद्वाचकपदाक्षेपेणाधिगम्यते = प्रतीयत इति।

अयं भावः—'साधनं क्रियाया अविनाभावितया प्रकरणानुसारेण आक्षेपकं भवति' इत्यभ्युपगमे द्वारमित्यत्र कर्मशब्दो बधान धेहि वेत्येतमर्थं प्रकरणादेरुपायाद् बन्धनादिक्रियावाचकं पदं द्वारंकृत्याक्षिपतीत्येतदेव युक्तम्, न तु द्वारमित्येतदेव बन्धनादिक्रियाविशिष्टस्य वाक्यार्थस्य वाचकमिति युक्तम्, शब्दार्थसंबन्धस्य हानेन तस्यानित्यत्वप्रसङ्गादिति। 'धेहि' इति पाठस्तु कारिकाया न युक्तः, अर्थासंगतेः।

यद्वा धातूनामनेकार्थत्वाद् दाधातुः पिधानार्थकोऽपि। अत एव लोकेऽपि प्रयुज्यते—'किवाड़ा दे दो' इति। एवञ्च 'देहि' इति पाठः साधुरेव। इदं त्ववधेयम्—कस्मिंश्चित् काले पुरा द्वारं पिधाय तत्र तालककुञ्चिकादिकं न दीयते स्म किन्तु रज्ज्वा लोहशृङ्खलया वा बन्धनमेव कपाटयोः क्रियते स्म। अत एव हरिणा तदेवानुसृत्य 'द्वारं बधान' इत्युच्यते। लोकेऽपि प्रयुज्यते—'द्वार बन्द करो' इति। तत्र 'बन्धधातोरेवापभ्रंश इति॥ ३३३॥

एवं 'यस्मिन्नुच्चरिते' इत्यादिकं शब्दार्थलक्षणं शब्दार्थसम्बन्धस्यानित्यत्वप्रसञ्जनेन विदूष्य तत्रैव दूषणान्तरमभिधातुमाह—यत्रेति। अयमर्थः = यत्र = यस्मिन् वाक्यप्रयोगे, साधनवृत्तिः—साधने = कारके कर्तृकर्मादौ वृत्तिर्यस्य स तथा, एव सत्त्वनिबन्धनः =

एवं 'यस्मिन्नुच्चरिते' इत्यादिके शब्दार्थलक्षणे शब्दार्थसम्बन्धस्यानित्यत्वमभिधाय दूषणान्तरमभिधातुमाह—

**यत्र साधनवृत्तिर्यः शब्दः सत्त्वनिबन्धनः ।**
**न स प्रधानभूतस्य साध्यस्यार्थस्य वाचकः ।।३३४।।**

यस्मात् साधनवृत्ताभिधायी सत्त्वप्रधानः शब्दो न स एव प्रधानभूतस्या-[र्थस्य प्रतिपाद्यस्यासत्त्वभूतस्या] भिधायक उपपद्यते, विरोधात् । तस्मादिदमत्र वक्तुं युक्तमित्याह--

**स्वार्थमात्रं प्रकाश्यासौ साकाङ्क्षो विनिवर्तते ।**
**अर्थस्तु तस्य सम्बन्धी प्रकाशयति सन्निधिम् ।।३३५।।**

असावाख्यातशब्दो नामशब्दो वा स्वार्थमेव केवलं प्रतिपाद्य सापेक्षः साकाङ्क्ष एव विनिवर्तते । तस्य विनिवृत्तस्य सम्बन्धी त्वर्थः । अर्थान्तरस्य तद्वाचकशब्दप्रकल्पनद्वारेण संन्निधिमुपकल्पयति, ततश्च वाक्यार्थप्रत्ययः परिपूर्ण उपजायत इत्येव युक्तमिति ।। ३३५ ।।

---

सत्त्वं द्रव्यं निबन्धनं प्रवृत्तिनिमित्तं यस्य स तथाभूतः, यः शब्दः=यथा द्वारमिति केवलस्य प्रयोगे द्वारशब्दः, स शब्दस्तत्रैव प्रयोगे शाब्दबोधे प्रधानभूतस्य साध्यस्यार्थस्य न वाचकः, एकस्मिन् शब्दे सिद्धार्थाभिधायित्वसाध्यार्थाभिधायित्वयोर्यौगपद्यविरोधादिति ।

अयं भावः=यः साधनवृत्तस्य=साधनरूपेण निष्पन्नस्य, साधनत्वं प्राप्तस्येति यावत् । अभिधायी सत्त्वप्रधानः शब्दः, स एव प्रधानत्वेन प्रतिपाद्यस्य साध्यस्याऽसत्त्वभूतस्यार्थस्याभिधायको नोपपद्यते, विरोधादिति ।।३३४।।

तस्माद् द्वारमित्यादावेकपदप्रयोगे श्रुतार्थापत्त्या पदान्तराध्याहारमाश्रित्यैव वक्ष्यमाण-प्रकारेण वा वाक्यार्थप्रत्ययो युक्त इति श्रुतार्थापत्तिवादी स्वमतमुपसंहरति—**स्वार्थमात्रमिति ।**

अयमर्थः--असौ नामशब्दः, आख्यातशब्दो वा केवलः, स्वार्थमात्रम्=**स्वार्थमेव** केवलम्, प्रकाश्य=**प्रतिपाद्य**, साकाङ्क्षः=स्वान्वययोग्यार्थान्तरसापेक्ष एव, विनिवर्तते=अर्थान्तराभिधानाद् विनिवृत्तो भवति, तु=किन्तु, तस्य=विनिवृत्तस्य नामपदस्याख्यातपदस्य वा सबन्ध्यर्थः शक्त्योपस्थापितः, अर्थान्तरस्य=स्वान्वययोग्यस्यार्थस्य, संनिधिम्=बुद्धौ संनिधानम्, तद्वाचकशब्दप्रकल्पनद्वारेण प्रकाशयति=उपकल्पयति । ततश्च वाक्यार्थप्रत्ययः परिपूर्णो जायत इत्येव युक्तमिति ।

एवञ्च द्वारमित्याद्येकपदप्रयोगस्थले एष वाक्यार्थबोधक्रमः श्रुतार्थापत्तिवादिमते पर्यवसितः--पूर्वं द्वारमिति पदाद् द्वारस्य कर्मतयोपस्थितिः, उपस्थितेन च तेनार्थेन

इदानीमखण्डवादी श्रुतार्थापत्तिवादिनं निराकर्तुमाह—

**पारार्थ्यस्याविशिष्टत्वान्न शब्दाच्छब्दसन्निधिः ।**
**नार्थाच्छब्दस्य सान्निध्यं न शब्दादर्थसन्निधिः ॥३२६॥**

इह पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र भोजनं बिना पीनत्वं देवदत्तस्यानुपपद्यमानं रात्रिभोजनं तद्वाचकशब्दपरिकल्पनद्वारेण गमयतीत्युच्यते, तदत्र किं शब्देन शब्द आक्षिप्यते, उतार्थेन शब्दः, आहोस्विच्छब्देनार्थः, उतार्थेनार्थ इति चतुष्टयी गतिः। तत्र शब्देन शब्दस्याक्षेपो न युज्यते; स्वार्थप्रतिपादन एव शब्दाक्षेपात्। तत्राह--न शब्दाच्छब्दसन्निधिरिति। अथार्थेन शब्दाक्षेप इत्युच्यते तत्राह—नार्थाच्छब्दस्य सान्निध्यमिति।

नापि शब्दाक्षेपो युज्यते, वाच्ये तु वाचकमाक्षिपतीति युक्तम। अतोऽन्यशब्दार्थस्य शब्दान्तरस्य च वाच्यवाचकताविरहात् कथमर्थेन शब्दस्याक्षपः। अथ शब्देनोच्चारितेन श्रुतार्थापत्तिपरिकल्पितशब्दवाच्योऽर्थ आक्षिप्यत इत्युच्यते, तदप्यनुपपन्नमित्याह—न शब्दादर्थसन्निधिरिति।

---

श्रुतार्थापत्त्या स्वान्वययोग्यार्थवाचकपदस्याक्षेपोऽनुमानं वा न तु स्वान्वययोग्यस्यार्थस्याक्षेपोऽनुमानं वा, आक्षिप्तस्यानुमितस्य वाऽर्थस्य शाब्दबोधे भानासंभवात्। तदर्थविषयकशाब्दबोधं प्रति वृत्त्या तत्पदजन्योपस्थितिः कारणमिति कार्यकारणभावस्वीकारात्। आक्षिप्तपदेन च वृत्त्योपस्थापितेऽर्थे द्वारपदार्थस्य कर्मत्वेनान्वयबोध इति ॥३२५॥

इदानीमखण्डवाक्यार्थवादी वाक्यवाक्यार्थयोः सखण्डत्वमभ्युपेत्य प्रवृत्तं श्रुतार्थापत्तिवादिनं निराकर्तुमुपक्रमते—पारार्थ्यस्येति।

अयमर्थः—द्वारमित्यादिशब्दात् शब्दसंनिधिः। स्वार्थान्वयोग्यार्थोपस्थापकस्य शब्दान्तरस्य 'पिधेहि' इत्यादेः संनिधिराक्षेपो न भवति। अत्राक्षेपकार्यप्रत्यासत्तिवाचकस्य संनिधिशब्दस्य लक्षणया कारणे प्रयोगः। उभयोरपि शब्दयोः पारार्थ्यस्य स्वार्थप्रतिपादनात्वस्य शब्दान्तराक्षेपाथत्वस्य चाऽविशिष्टत्वात् =तुल्यत्वात्। परार्थ्यस्य स्वार्थप्रतिपादनार्थत्वस्य शब्दान्तराक्षेपार्थकत्वस्य च तुल्यत्वेन स्वार्थं प्रतिपाद्यैव शब्दान्तराक्षेपसम्भवात्। अतो न शब्देन शब्दान्तराक्षेपः। अत एवोक्तं पुण्यराजेन—'तत्र शब्देन शब्दस्याक्षेपो न युज्यते, स्वार्थप्रतिपादन एव शब्दाक्षेपात्। तत्राह—न शब्दाच्छब्दसंन्निधिरिति।

अत्र स्वार्थप्रतिपादन इति सति-सप्तमी। नापि द्वारपदार्थात् 'पिधेहि' शब्दस्य सांनिध्यम्, द्वारपदार्थस्य 'पिधेहि' शब्देन सह सम्बन्धाभावात्। वाच्यं हि स्ववाचकमेवाक्षिपति, संबन्धात्। नापि द्वारशब्दात् पिधानरूपस्यार्थस्य संनिधिः, द्वारशब्दस्य पिधानरूपार्थेन सह वाच्यवाचकभावादिति।

न शब्दाच्छब्दान्तरवाच्यस्यार्थस्य सन्निधिरुपपद्यते, वाच्यवाचकभावाभावादेवेति कथं शब्देनार्थस्याक्षेपः ?

अथार्थेनार्थो गम्यत इत्युच्यते, अनुमानमेवैतत्स्पष्टं भवति, न शब्दार्थस्यासावर्थो [ न शब्दस्यासावर्थो ] इति शब्दैकत्वमेव परित्यक्तं स्यात्। अत एवात्र चतुर्थपक्षप्रदर्शनमौचित्यं न जहातीति तन्निरासो न कृत एव।

तस्मादेकपदेषु श्रुतार्थापत्त्या शब्दान्तराक्षेपे वाक्यार्थावगतिरिति यत्किञ्चिदेतत्। एकपदमेव शब्दान्तराभिसम्बन्धमन्तरेण प्रकरणादिवशात् तत्तदर्थप्रत्यायननिपुणमित्येव मन्तव्यम् ॥ ३३६ ॥

पुनः श्रुतार्थापत्तिवाद्याह—

---

अयं भावः—लोके द्वारमित्युक्तौ द्वारगत कर्मत्वं पिधानक्रियां विनानुपपद्यमानं तद्वाचकपिधेहिशब्दपरिकल्पनद्वारेण पिधानक्रियां गमयतीत्युच्यते। तदत्र किं शब्देन शब्द आक्षिप्यते, उतार्थेन शब्दः, अथवा शब्देनार्थः, उतार्थेनार्थ इति चत्वारः प्रकाराः।

तत्राद्यो न युज्यते, स्वार्थं प्रतिपाद्यैव शब्दाक्षेपसंभवात्। तथा च न शब्दाच्छब्दाक्षेपः, अर्थप्रतिपत्त्या व्यवधानादिति।

नापि द्वितीयः, अन्यशब्दार्थस्य शब्दान्तरस्य च वाच्यवाचकताविरहाद् अर्थेन शब्दस्याक्षेपासंभवात्।

यदि तृतीयः पक्ष उच्यते तथाहि—द्वारशब्देनोच्चरितेनार्थः, तेन च श्रुतार्थापत्तिसहकारेण पिधेहिशब्दः परिकल्प्यते, तेन च तद्वाच्योऽर्थः प्रतीयत इत्येवंरीत्या शब्देनोच्चरितेन श्रुतार्थापत्तिपरिकल्पितशब्दवाच्योऽर्थ आक्षिप्यत इत्युच्यते, तदप्यनुपपन्नम्; शब्दाच्छब्दान्तरवाच्यस्यार्थस्य वाच्यवाचकभावाभावेन संनिध्यनुपपत्तेः।

एव कृत्वा चतुर्थः पक्षः परिशिष्यतेऽर्थेनार्थ आक्षिप्यत इति। तदेतदनुमानमेवेति स्पष्टम्। एतत्पक्षाङ्गीकारे च द्वारमिति केवलं पदं 'द्वारं पिधेहि' इति वाक्यार्थे शक्तमिति पक्ष एव परित्यक्तः स्यादखण्डवाक्यवाक्यार्थवादिना। यतोऽस्मिन् पक्षे नासौ द्वारशब्दस्यार्थः, किन्तु तदर्थेनानुमित इति चतुर्थपक्षस्यौचित्यान्नासौ प्रत्याख्यातस्तेन। किञ्च, 'अर्थेनार्थोऽनुमीयते' इति पक्षो न कस्यापि वादिनः पक्षं प्रसाधयति प्रदूषयति वेत्यनुपयोगात् स न प्रत्याख्यातः, किन्तूपेक्षित इति।

एवं पक्षत्रयासंभवादेकपदेषु श्रुतार्थापत्त्या शब्दान्तराक्षेपे तत्तद्वाक्यार्थावगतिरिति श्रुतार्थापत्तिवादिपक्षो न युक्त इत्येकपदमेव शब्दान्तरसंबन्धं विनैव प्रकरणादिवशात् तत्तदर्थप्रत्यायकमित्यखण्डवादिपक्ष एव युक्त इति ॥ ३३६ ॥

एवमखण्डवादिना स्वपक्षे दूषिते पुनः श्रुतार्थापत्तिवाद्याह—**नष्टरूपमिवेति**।

**नष्टरूपमिवाख्यातमाक्षिप्तं कर्मवादिना ।**
**यदि प्राप्तं प्रधानत्वं युगपद् भावसत्त्वयोः ॥ ३३७ ॥**

**द्वारं द्वारं कर्म इत्यत्र [ द्वारम् इत्यत्र ] कर्मपदेनैवाख्यातमसत्कल्पमाक्षिप्तं यद्यत्रोच्यते, तदा युगपत्परस्परविरुद्धयोः सिद्धासिद्धयोरर्थयोरेकस्मिन् शब्दे प्रधानत्वेन वाच्यत्वमापतितम्, न चैतत्परिदृष्टम्, पूर्वं यत्र साधनवृत्तिरित्यनेन यः सत्त्वप्रधानो नासावाख्यातार्थवाचक उपपन्न इत्युक्तम्. इदानीं पुनः प्रत्ययस्य च विरुद्धार्थवाचकत्वमुच्यत इति विशेषः ॥ ३३७ ॥**

---

अयमर्थः—द्वारमित्यत्र यदि कर्मवाचिना = कर्मकारकवाचिना द्वारपदेन, आख्यातम् = पिधेहि इति पदम्, नष्टरूपमिव = अविद्यमानस्वरूपमिव, द्वारपदेनैव तदर्थाभिधानादप्रयोजनत्वादसत्कल्पम् । अत्रैवशब्दप्रयोगः श्रुतार्थापत्तिवादिमते द्वारपदेनागतार्थत्वात् पिधेहिपदस्याध्याहारेण सत्त्वमभिप्रेत्य । आक्षिप्तम् = द्वारपदेन गतार्थत्वाद् दूरीकृतम्, तेनैव हेतुना न प्रयोक्तव्यमिति निन्दितं वा ।

यद्वा—स्वस्मिन् आक्षिप्तम् = स्वार्थस्य अन्तःप्रवेशनेन प्रवेशितं वा, तदा भावसत्त्वयोः = क्रियाद्रव्ययोः, साध्यसिद्धयोरिति यावत् । अर्थयोर्विरुद्धयोर्युगपद् द्वाररूपैकपदवाच्यत्वेन प्रधानत्वं प्राप्तम् । न चैतदिष्टं दृष्टं वा वैयाकरणनिकाये, किन्तु सिद्धस्यार्थस्यान्यपदवाच्यस्य कारकत्वेनाप्राधान्यम्, क्रियायास्तु साध्यस्वरूपाया अन्यपदवाच्यायाः प्राधान्यमित्येतदेवेष्टं दृष्टं चेति ।

यत्तु पुण्यराजेन एवं व्याख्यातम्—'द्वारं द्वारं कर्म इत्यत्र कर्मपदेनैवाख्यातमसत्कल्पमाक्षिप्तं यद्यत्रोच्यते, तदा युगपत् परस्परविरुद्धयोः सिद्धासिद्धयोरर्थयोरेकस्मिन् शब्देन प्रधानत्वेन वाच्यत्वमापतितम्, न चैतत्परिदृष्टम्" इति । अत्र द्वारं द्वारमिति पुनरुक्तिः कर्मपदप्रयोगश्च व्यर्थः, द्वारमित्येतावन्मात्रेणैव 'पिधेहि' इत्यादेराख्यातस्याक्षेपसंभवात् । तत्र तत्र शास्त्रेषूपन्यासाच्च । अत्र पुण्यराजवाक्ये आक्षिप्तमित्यस्य मदुक्तव्याख्यानमेव ज्यायः । अध्याहृतमित्यर्थकत्वे तु 'एकस्मिन् शब्दे' इत्याद्यग्रिमग्रन्थविरोधः । 'पिधेहि' इत्याख्यातस्याध्याहारे शब्दद्वयसंभवादिति । अत्र कारिकायां क्वचित्पुस्तके यदि प्राप्तं प्रधानं चेति पाठः, स तु हेयः, युगपद् भावसत्त्वयोरिति षष्ठ्यन्तस्य सम्बन्धासंभवादिति ।

नन्वेतत्कारिकोक्तोऽर्थो यत्र साधनवृत्तिर्यः शब्दः सत्त्वनिबन्धन इत्येतया कारिकया प्रागुक्त एवेति पुनरुक्तिरिति चेत् ? अत्र पुण्यराज आह—पूर्वं यत्र साधनवृत्तिरित्यनेन यः सत्त्वप्रधानो नासावाख्यातार्थवाचक उपपन्न इत्युक्तम् । इदानीं पुनः प्रत्ययस्य च विरुद्धार्थवाचकत्वमुच्यत इति विशेष इति । अत्र—'प्रत्ययस्य च' इत्यस्य स्थाने 'प्रत्यया-

सिद्धान्तवाद्याह--

**तैस्तु नामसरूपत्वमाख्यातस्योपवर्ण्यते ।**
**अन्वयव्यतिरेकाभ्यां व्यवहारो विभज्यते ॥३३८॥**

द्वारं द्वारमित्येतदा [ द्वारमित्येतदा ] ख्यानमेव, नामपदसरूपं तु वर्ण्यते। अतश्चान्याख्यातवत् प्राधान्येन क्रियाया एतदपि नामपदसरूपं प्रतिपादकमेव। यद्येवं कथमस्माद् द्वितीया श्रूयत इत्याह--अन्वयेति। भाण्डं भाण्डं पिधेहि, द्वारं

---

न्तस्य च' इति वाच्यम्, द्वारमिति प्रत्ययान्तस्यैव प्रधानीभूतपिधानाक्रियारूपविरुद्धार्थवाचकत्वात् केवलस्य अम्प्रत्ययस्य तत्त्वाभावात्।

वस्तुतस्तु पूर्वकारिकाया सत्त्वरूपस्यार्थस्य प्राधान्यम् एकस्य पदस्य सिद्धसाध्ययोरर्थयोरभिधाने कालयौगपद्यं च नोक्तम्। अत्र कारिकाया तु तद्द्वयमप्युक्तमिति विशेषं वयमुत्पश्यामः॥३३७॥

अखण्डवाक्यवाक्यार्थवाद्याह--तैस्त्विति।

अयमर्थः--द्वारमित्यखण्डवाक्यस्वीकारे युगपत् परस्परविरुद्धयोः सिद्धासिद्धयोरर्थयोरेकस्मिन् शब्दे प्रधानत्वेन वाच्यत्वमापततीति प्रागुक्तो दोषो न भवति। यतस्तैस्तु= अखण्डवाक्यवादिभिर्द्वारमित्याख्यातस्य क्रियापदस्य नामसरूपत्व द्वारमिति द्वितीयान्तनामपदसादृश्यमुपवर्ण्यते।

अयं भावः--यथा--'अजापयः पीत्वा शत्रून' इत्यत्र अजापय इत्याख्यातस्य अजायाः पयः=अजापय इति नामसरूपत्वमिति तन्त्रावृत्त्यादिना अजायाः पयः पीत्वा शत्रून् सैनिकैर्जितवान् इति वाक्यार्थबोधः, तथा द्वारमिति धात्वर्थपिधानक्रियावाचकस्य पदस्य द्वारमिति नामसरूपत्वमिति तन्त्रादिना द्वारकर्मकपिधानरूपवाक्यार्थबोध इति न श्रुतार्थापत्त्या 'पिधेहि' इति पदाध्याहारस्य किमपि प्रयोजनमिति।

पुण्यराजव्याख्याने--'द्वारं द्वारम् इत्येतदाख्यातमेव।'' अत्र द्वारं द्वारम् इति पुनरुक्तिः संजातायाता। यदि तु ज्ञानकृता तदा व्यर्थेति सुधीभिरवधेयम्।

ननु यदि द्वारमिति नामपदसरूपमाख्यातमेवेति मन्यसे, तर्हि कथमस्माद् द्वितीया, अधातुरिति प्रतिषेधेन प्रातिपदिकत्वाभावादित्याशङ्क्याह--अन्वयव्यतिरेकाभ्यामिति।

अयमर्थः--'द्वारं पिधेहि' इत्यत्र पिधानक्रियोपस्थापकपदसत्त्वे द्वारपदस्य साधनरूपार्थाभिधायित्वमित्यन्वयः, 'पिधेहि' इति पदाभावे नामसरूपस्याख्यातपदस्य द्वारमित्यस्य साधनरूपार्थाभिधायित्वाभाव इत्यन्वयव्यतिरेकाभ्या व्यवहारः:- साध्यार्थसिद्धार्थवाचित्वव्यवहारः, विभज्यते= विभागेन क्रियत इति। एव द्वारमित्येकपदे धातुत्वेन साध्यार्थाभिधायित्वेऽपि नामसारूप्यादेकत्वमाश्रित्य भवत्येव द्वितीयेति हृदयम्।

द्वारं पिधेहीत्यादावाख्यातस्य क्रियाभिधायकत्वं परिदृष्टम्, नाम्नो द्रव्यवाचकत्व-मित्यन्वयव्यतिरेकाभ्यामन्यत्राप्येकपदे द्वारमित्यादौ सादृश्यात् साधनाभिधायित्व-मेवेति भवत्येव द्वितीया ॥ ३३८ ॥

अथ द्वारं द्वारमित्यस्यानेकार्थवाचकत्वात् सन्देहे कथमस्य वाचकत्वं भवेदित्याह—

**न चापि रूपात् सन्देहे वाचकत्वं निवर्तते ।**
**अर्धं पशोरिव यथा समर्थ्यात् तद्विकल्प्यते ॥३३९॥**

रूपसादृश्येऽपि सामर्थ्यादिनाऽर्थनिर्णयो व्यवस्थाप्यत इत्याह्--अर्धमिति । अत्र पश्ववयवोऽर्द्धं देवदत्तावयवो वार्द्धं पशुस्वामिकमिति सन्देहः । तत्र किं सन्देहे वाक्यमवाचकमेव, अर्थप्रकरणादिनाऽर्थस्तत्र कल्प्यत एव ॥ ३३९ ॥

पुण्यराजेन त्वेव व्याख्यातम्—"भाण्डं भाण्ड पिधेहि', 'द्वारं द्वारं पिधेहि' इत्यादा-वाख्यातस्य ··· भवत्येव द्वितीया" इति ।

अत्र भाण्ड भाण्डमिति, द्वारं द्वारमिति च पुनरुक्तिर्व्यर्था, तदभावेऽप्यन्वयव्यतिरेक-प्रदर्शनसंभवात् ।

यत्त्वत्र "इत्यन्वयव्यतिरेकाभ्याम्, इत्युक्तम् ।" तस्यायमर्थः—इत्यन्वयदर्शनरीत्या समुपस्थिताभ्यामन्वयव्यतिरेकाभ्यामिति ।

'यत्त्वत्र साधनाभिधायित्वमेवेति" इत्युक्तम्, अत्रैवकारोऽप्यर्थकः, साधनाभिधा-यित्वमपीत्यर्थः । तेन द्वारमित्येकपदस्थले पिधानक्रियाबोधोऽप्युपपन्नः ॥३३८॥

अथ द्वारमित्यस्य सिद्धसाध्यार्थभेदेनानेकार्थवाचकत्वाद् द्वारमित्येकपदस्थले इदं सिद्धार्थवाचकं साध्यार्थवाचक वेति सन्देहे उभयार्थवाचकत्वविनिवृत्तौ कथ. द्वारमित्येक-पदस्थले द्वारपदस्योभयार्थवाचकत्व भवेदित्याशङ्क्याह--न चापीति ।

पुण्यराजेन तु--'अथ द्वारं द्वारमित्यस्यानेकार्थवाचकत्वात् संदेहे कथमस्य वाचकत्वं भवेदित्याह" इत्येतदस्य पद्यार्थस्यावतरणं कृतम् । तत्र द्वारं द्वारमिति पुनरुक्ति-र्व्यर्था, शेषस्यार्थस्तु मदुक्तावतरणे विवृतः ।

अथ तु पद्यार्थार्थः—रूपात् = रूपसादृश्यात्, संदेहे = वाचकत्वसंदेहे, अपि वाचकत्वम् = तत्तदर्थवाचकत्वम् न च = नहि निवर्तत इति । किन्तु रूपसादृश्येऽपि सामर्थ्यप्रकरणादिनाऽर्थो व्यवस्थाप्यत इत्याह—अर्धं पशोरिति ।

अयमर्थः—यथा 'अर्धं पशोरिव' इति वाक्ये पश्ववयवोऽर्धम्, देवदत्तावयवो वाऽर्धं पशुस्वामिकमिति संदेहे तद् = वाचकत्वम्, सामर्थ्यात् = सामर्थ्यप्रकरणादितः, तत्र विकल्प्यते = विशेषेऽर्थे कल्प्यते = सपाद्यते, व्यवस्थाप्यत इति यावत् । तथा द्वारमित्यत्रापि रूपसादृश्यात् सिद्धार्थसाध्यार्थवाचकत्वसन्देहे सामर्थ्यात् = सामर्थ्यप्रकरणादिना तद्वचकत्व-मर्थविशेषे कल्प्यत इति ।

चोदयति--

**सर्वं सत्त्वपदं शुद्धं यदि भावनिबन्धनम् ।**
**संसर्गे च विभक्तोऽस्य तस्यार्थो न पृथग्यदि ॥३४०॥**
**क्रियाप्रधानमाख्यातं नाम्नां सत्त्वप्रधानता ।**
**चत्वारि पदजातानि सर्वमेतद्विरुध्यते ॥३४१॥**

स्पष्टोऽर्थः ॥ ३४०–३४१ ॥

एतच्चोद्यं निराकर्तुमाह—

**वाक्यस्य बुद्धौ नित्यत्वमर्थयोगं च लौकिकम्**
**दृष्ट्वा चतुष्ट्वं नास्तीति वार्ताक्षौदुम्बरायणौ ॥३४२॥**

वाक्यस्याखण्डस्य बुद्धौ प्रतिपत्तृबुद्धौ नित्यत्वं दृष्ट्वा तथा तस्यैवार्थेन प्रतिभालक्षणेन योगं संबन्धं दृष्ट्वा पदे तत्पदपरिकल्पनं पदार्थपरिकल्पनं च तत्रास्त्येव नैवोपपद्यत इत्याचार्यावाहतुः । अतोऽस्माकमेषा बिभीषिका यत्पदानां चतुष्ट्वं नोपपद्यत इति ॥ ३४२ ॥

---

अयं भावः—यथा 'अर्थं पशोरिव' इति वाक्ये इवशब्दप्रयोगदर्शनेन देवदत्तस्यार्धं पशोर्वेति संशयो यद्यपि समुत्पद्यते, तथापि नात्रार्धपदमवाचकम्, किन्तु सामर्थ्यप्रकरणादिना यत्र वाचकत्वमर्थविशेषेऽवस्थाप्यते, तथा द्वारमित्याख्यातपदे नामसारूप्याद् वाचकत्व-संदेहेऽपि सामर्थ्यप्रकरणादिना वाचकत्वमर्थविशेषेऽवस्थाप्यत इति ॥३३९॥

पुनः श्रुतार्थापत्तिवादी चोदयति—**सर्वमित्यादिपद्ययुग्मेन ।**

अयमर्थः—यदि शुद्धम् = आख्यातामिश्रितम्, आख्यातासमभिव्याहृतम्, सर्वं सत्त्वपदम् = द्रव्यार्थक पदम्, नामपदमिति यावत् । भावनिबन्धनम् = क्रियाप्रवृत्ति-निमित्तकम्, ससर्गे च = आख्यातपदसमभिव्याहारे तु, अस्य = नामपदस्य, विभक्तः = भावाद् भिन्नोऽर्थः । किञ्च तस्य = आख्यातपदस्य, नामपदार्थात् पृथग् यदि नार्थस्तदा "क्रियाप्रधानमाख्यातम्" इति, "नाम्नः सत्त्वप्रधानता" इति, 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च'' इत्येतत् पूर्वं विरुध्यते । तत्राद्ये नामापि क्रियाप्रधानं जातमिति, द्वितीये द्वारमित्याख्यातस्यापि सत्त्वप्रधानता जातेति, तृतीये नाम्नामाख्यातेनैवोपसंग्रहात् पदेषु चतुष्ट्वसंख्याऽनुपपत्तिरिति विरोधः ॥३४०--३४१॥

प्रागुक्तं चोद्यं निराकरिष्णुराह—**वाक्यस्येति ।**

अयमर्थः—वाक्यस्याखण्डस्य बुद्धौ = प्रतिपत्तृबुद्धौ, नित्यत्वम् = शाश्वतिकत्वं दृष्ट्वा, प्रतिपत्तृबुद्धिगोचरे वाक्ये कदाचिदपि पदपदार्थविभागमदृष्ट्वेत्यपि तुल्यवित्तिवेद्यम् ।

यद्येवं किं शास्त्रेणेत्याह--

**व्याप्तिमांश्च लघुश्चैव व्यवहारः पदाश्रयः ।**
**लोके शास्त्रे च कार्यार्थं विभागेनैव कल्पितः ॥३४३॥**

पदाश्रयो वाक्यव्यवहारः शास्त्रेणोपदिष्टः सन् व्याप्तिमान् सकलसाधुशब्दपरिज्ञानहेतुर्विभागेन परिकल्पित इति किमत्रानुपपन्नम् ॥३४३॥

अथ यदि पदपदार्थविभागः सर्वथैवासत्यभूतस्तत्कथं लौकिकानां तदाश्रयेण वृत्त्यादय इत्याशङ्क्याह --

**न लोके प्रतिपत्तृणामर्थयोगात् प्रसिद्धयः ।**
**तस्मादलौकिको वाक्यादन्यः कश्चिन्न विद्यते ॥३४४॥**

---

किञ्च, वाक्यस्याखण्डस्यैव लौकिकमर्थयोगम् = अर्थेनाखण्डेन प्रतिभालक्षणेन पदार्थोपस्थितिपूर्वकत्वाभाववत्प्रतीतिगोचरेण योगं सम्बन्धं च दृष्ट्वा द्वारमित्यादावेकपदे आख्यातपदपरिकल्पनम् आख्यातपदार्थपरिकल्पनं न नास्त्येव = नैवोपपद्यत इति पदचतुष्टं नास्त्येवेति, वृत्ताक्षस्यापत्यं वार्त्ताक्षः, उदुम्बरस्य युवापत्यम् औदुम्बरायण इतीमौ द्वावाचार्यावाहतुः । अतोऽस्माकमेषा बिभीषिका नास्ति यत्पदानां चतुष्टं नोपपद्यत इति, वार्त्ताक्षौदुम्बरायणवत् पदचतुष्टानङ्गीकारात् । श्रुतार्थापत्तिवादिनामेव पदचतुष्टाभ्युपगम इति ॥ ३४२ ॥

यद्यखण्डमेव वाक्यं वाक्यार्थश्च तदा किमर्थं शास्त्रेण प्रकृतिप्रत्ययान्वाख्यानमुखेन पदपदार्थौ व्युत्पाद्येते इत्याशङ्कायामाह—व्याप्तिमांश्चेति ।

अयमर्थः—यतः पदाश्रयः = पदमाश्रित्य शास्त्रेणोपदिश्यमानः, व्यवहारः = वाक्यव्यवहारः, शास्त्रेण तथोपदिष्टः सन् व्याप्तिमाँश्च = सकलसाधुशब्दव्यापकश्च, लघुश्चैव प्रतिपत्तिलाघवयुक्तश्चैव भवति ।

अयं भावः—एकस्मिन् वाक्यव्यवहारे प्रकृतिप्रत्ययविभागान्वाख्यानमुखेन पदमाश्रित्य शास्त्रेणोपदिष्टे सकलवाक्यगताः सर्वे ते साधवः शब्दाः परिज्ञाता भवन्तीत्येवंरीत्या पदमाश्रित्य शास्त्रेणोपदिष्टो वाक्यव्यवहारः सकलसाधुशब्दपरिज्ञानहेतुर्भवतीति व्याप्तिमान् प्रतिपत्तौ लघुश्चैव भवतीति कृत्वा शास्त्रे स प्रकृतिप्रत्ययविभागेन तत्तादर्थविभागेन पदपदार्थविभागेनैव च परिकल्पित इति न किञ्चिदप्यखण्डवाक्यवाक्यार्थवादिमतेऽनुपपन्नमिति ॥३४३॥

अथ यदि वाक्ये पदपदार्थविभागः सर्वथैवासत्यभूतस्तत्कथं लौकिकानां पदपदार्थविभागाश्रयेण तत्तत्पदार्थेषु प्रवृत्तिनिवृत्ती हानोपादानोपेक्षाबुद्धयश्चेत्याशङ्कयाह — न लोक इति ।

लोके प्रतिपत्तृणां सर्वथा न सत्यार्थयोगादेव प्रसिद्धयो व्यवहारनिष्पत्तयः, असत्येनाप्युपायेन मरीचिकास्वपि जलप्रसिद्धिस्तेषां दृश्यते। अथवा रेखागवयवदसत्यनाप्यनेनोपायेन सत्यभूतवाक्यपरिज्ञानं भवत्येव, सर्वथा न लोकस्यार्थं विना प्रवृत्त्यादयो न सन्तीति वक्तव्यम्, कदाचित् सत्यगवयेन गवयार्थप्रतीतिरस्य जन्यते, कदाचिद् रेखागवयेनेति बोद्धव्यम्। यत एवं तस्माद्वाक्यात् सत्यभूतादखण्डाद्वाक्यार्थप्रत्ययो जन्यत इति न कश्चिदलौकिकः सत्यभूतः पदार्थः पदं वा विद्यते, उपपत्तिविरहादिति ॥३४४॥

ज्ञापकगम्यश्चार्थः सर्वत्र वाक्यादेवावगम्यत इत्याह—

**अन्यत्र श्रूयमाणैश्च लिङ्गैर्वाक्येषु सूचिताः।**
**स्वार्था एव प्रतीयन्ते रूपाभेदादलक्षिताः ॥३४५॥**

अक्ताः शर्करा उपदधातीत्यत्र तैलेन घृतेन वेति संदेहेऽन्यत्र तेजो वै घृतमिति घृतस्य स्तुतिरुपक्रान्ता, तयैतत्सूच्यतेऽभ्यञ्जनं घृतेनैवोपदिष्टमिति। अतोऽत्राक्ता

---

अयमर्थः—लोके प्रतिपत्तृणाम् = बोद्धृणाम् अर्थयोगात् = सत्यार्थसम्बन्धादेव, असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायात्। प्रसिद्धयः = प्रवृत्त्यादिरूपव्यवहारनिष्पत्तयो न मरुष्विदं जलमिति वाक्याद् असत्यतोयसंबन्धवतस्तृषार्तस्य तत्र प्रवृत्तिदर्शनात्, असत्येनापि रेखागवयेन सत्यगवयस्य प्रतीतिदर्शनाच्च। तस्माद् वाक्यादखण्डात् सत्यभूतादन्योऽलौकिकः सत्यभूतः पदार्थः पदं वा न विद्यते, तस्योपपत्तिविरहादिति।

यत्त्वेतत्पद्यव्याख्यावसरे उक्तं पुण्यराजेन असत्येनाप्युपायेन मरीचिकास्वपि जलप्रसिद्धिस्तेषां दृश्यत इति। तत्र मरीचिकासु जलप्रसिद्ध्युपायस्य वाक्यस्यासत्यत्वमसत्यार्थबोधकत्वेन, न तु स्वरूपत इत्यवधेयम्।

यदप्युक्तं तत्रैव तेन—'अथवा रेखागवयवदसत्येनाप्यनेनोपायेन सत्यभूतवाक्यपरिज्ञानं भवत्येव, सर्वथा न लोकस्यार्थं विना प्रवृत्त्यादयो न सन्तीति वक्तव्यमिति। अत्र रेखागवयस्यासत्यत्वं न स्वरूपतः, किन्तु गवयत्वजात्यभावात्। तस्य गवयत्वेन व्यवहारस्त्वाकृतिसाम्यादिति।

अयं भावः—यथा प्रतिपत्तुः कदाचिद् गवयप्रतीतिः सत्यगवयेन जन्यते, कदाचित्तु रेखागवयेनेति। एवं वाक्यात् सत्यभूतादखण्डाद् वाक्यार्थप्रत्ययो जन्यत इति पदपदार्थविभागः कल्पित एव न सत्यभूतो विद्यते उपपत्त्यभावादिति ॥३४४॥

ज्ञापकगम्यश्चार्थः सर्वत्र वाक्यादेवावगम्यते, न तु वाक्यैकदेशात्। तद्यथा—वेदे अक्ताः शर्करा उपदधातीत्यत्र 'तेजो वै घृतम्" इति घृतस्तुतिरूपाल्लिङ्गाद् व्यज्यमानः = अनुमीयमानो वाऽर्थो घृतेनाक्ताः शर्करा उपदधातीत्येवंरूपः "अक्ताः शर्करा उपदधाति" इति वाक्यादेवाधिगम्यते, न तु 'अक्ताः' इति वाक्यैकदेशात्; तस्य—घृतेनाक्ता इति, तैलेनाक्ता

इत्यादौ वाक्ये घृताक्ता उपदधातीति वाक्यार्थो ज्ञायत इति विज्ञेयम्। यद्यक्ता इत्यस्यैव घृताक्ता उपदधातीयर्थोऽवगतः किं ज्ञापकानुसारेणेत्याह—रूपाभेदाद-लक्षिताः।

अक्ताः शर्करा उपदधातीति वाक्ये रूपमविशिष्टं पश्यन्तो विशेषमवगन्तु-मक्षमा इति लिङ्गानुसरणेनात्रार्थनिर्णयो व्यवस्थाप्यत इति वाक्येषु वाक्यैकदेशाः सन्तीत्येतदप्रमाणमेव ॥ ३४५ ॥

अथ बाध्यबाधकभावं निर्णेतुमाह—

**उत्सर्गवाक्ये यत्त्यक्तमशब्दमिव शब्दवत्।**
**तद् बाधकेषु वाक्येषु श्रुतमन्यत्र गम्यते ॥३४६॥**

---

इत्यर्थयोः स्वरूपाभेदेन व्यवस्थया तदर्थबोधनासंभवात्, वाक्यार्थज्ञानस्यैव प्रवर्तकतया घृतस्तुतेस्तादृशवाक्यार्थस्तुतावेव पर्यवसानाच्च।

एवं शास्त्रेऽपि—"वाह ऊठ्" (पा. ६।४।१३२) इत्यूठ्ग्रहणरूपज्ञापकगम्योऽर्थोऽन्त-रङ्गशास्त्राविषयत्वविशिष्टः स्वार्थो बहिरङ्गशास्त्ररूपेभ्यो वाक्येभ्य एव प्रतीयते, न तु तद्घटकपदेभ्यः, पदानां तदर्थान्यार्थयोः स्वरूपाभेदादिति।

एवं लोकेऽपि—'यो राजानं सेवते स सारं भुङ्क्ते' इति राजस्तुतिरूपाल्लिङ्गात् सूच्यमान इष्टकृत्त्वाद् राजा सेवितव्य इत्यर्थः 'राजा सेवितव्यः' इति वाक्यस्यैवार्थः, न तु राजपदस्यार्थ इत्येवरीत्या विचार्यमाणे सन्ति वाक्येषु वाक्यैकदेशा इत्यप्रमाणमेवेत्याह—अन्यत्रेति।

अयमर्थः—अन्यत्र 'अक्ताः शर्करा उपदधाति' इत्यादिविधिवाक्येभ्योऽन्यत्र श्रूय-माणैश्च = श्रूयमाणैस्तु, च शब्दस्त्वर्थे। लिङ्गैः = तेजो वै घृतम्' इत्यादिभिर्घृतादिस्तुतिरूपै-र्लिङ्गैः, सूचिताः स्वार्था एव = विधिवाक्यार्था एव, वाक्येषु = विधिवाक्येषु प्रतीयन्ते घृतादिस्तुतिभिः सूचिता अर्था घृतेनाक्ता इत्येवंरूपा अक्तादिपदैरेव कुतो न प्रतीयन्त इति शङ्कायामाह—रूपाभेदादलक्षिता इति।

अयमर्थः—'अक्ताः' इति पदस्य घृतेनाक्ता इति, तैलेनाक्ता इत्यर्थयो रूपाभेदात् = स्वरूपाभेदाद् एकत्रार्थे व्यवस्थापकाभावेनाऽलक्षिता अज्ञाता इति। ननु घृतस्तुतिरूपस्य लिङ्गस्यैव व्यवस्थापकत्वमस्त्विति चेन्न, वाक्यार्थज्ञानस्यैव प्रवर्तकत्वाद्. वाक्यार्थज्ञापकत्वमेव लिङ्गस्योचितमिति भावः ॥ ३४५ ॥

"प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते" इति न्यायानुरोधेनाऽपवाद-विषयविषयिका प्रकल्पनाम् = अत्रापवादशास्त्रं प्रवर्तिष्यत इत्येवंरूपाम्, पूर्वं कृत्वैव तद्विषयं विहायोत्सर्गशास्त्रं प्रवर्तते। तद्यथा—'कर्मण्यण्" (३।२।१) इत्युत्सर्गशास्त्रम्—"आतोऽनुप-सर्गे कः" (३।२।३) इत्यपवादशास्त्रविषयं विहायैव प्रवर्तते। तथा च 'कर्मण्यण्' इत्यस्य

उत्सर्गवाक्ये सामान्यलक्षणे उपक्रम एव यत्त्यक्तमपवादाक्रान्तं किं तत्र शब्देन परित्यक्तम् , नेत्याह—अशब्दमिवेति । बोधकविरहेणेव कथं त्यक्तम् ? शब्दवद् बोधकवदेव त्यक्तम् , धातोः कर्मण्युपपदेऽण्प्रत्ययस्तावदेव बाधकानाक्रान्तधातुविषयमेवाण्प्रत्ययविधानमिति गम्यत एव, अन्यथा त्वविशेषेण प्रवृत्तावुत्तरकालमाकारान्तेभ्यः कथं निवार्यते ? अतस्तात्पर्यपर्यालोचनवशाद् बाधकानाक्रान्तधातुविषये भवतीति वाक्यार्थो ज्ञायत एव, तद्दर्शिना एतत्तत्काल एव नावधारितम्, उत्तरकालं तु बाधकेषु वाक्येषु तच्छ्रुतं सदन्यत्र सामान्यलक्षणे वर्जितमिति गम्यते ॥३४६॥

---

कर्मण्युपपदे बाधकानाक्रान्तधातुभ्योऽण् प्रत्ययो भवतीति वाक्यार्थः'आतोऽनुपसर्गे कः'(३।२।३) इत्यादिशास्त्रदर्शने सति प्रतीयते। अयं च वाक्यार्थबोध उत्सर्गवाक्यादेव जायते, न तु वाक्यैकदेशात्। अयमेवोत्सर्गापवादयोर्बाध्यबाधकभाव। अपवादशास्त्रे उत्सर्गशास्त्रीयवाक्यार्थसंकोचकत्वमेव बाधकत्वम्। संकुचितवाक्यार्थबोधजनकत्वमेव चोत्सर्गशास्त्रे बाध्यत्वमितीयं बाध्यबाधकभावं निर्णेतुमाह—उत्सर्गवाक्य इति।

अयमर्थः—उत्सर्गवाक्ये = सामान्यलक्षणे 'कर्मण्यण्' इत्यादावुपक्रम एव = अपवादशास्त्रजन्यवाक्यार्थबोधात् प्रागेव, यत् त्यक्तमपवादाक्रान्तधात्वादिकम्, शब्दवत्—"कर्मण्यण्" इत्याद्यपवादवाक्यबोध्यमपि, अशब्दमिव वर्तते, अपवादशास्त्रदर्शनात् प्राक् तदनवगमात्। तत् = अपवादवाक्याक्रान्तं धात्वादिकम्, बाधकेषु वाक्येषु श्रुतम् = अपवादवाक्येषु श्रुतम्, अन्यत्र गम्यते = उत्सर्गसामान्यलक्षणे वर्जितमिति गम्यत इति। अन्यथाऽविशेषेण सर्वधातुभ्योऽण्प्रवृत्तावपवादशास्त्रदर्शनकाले कथमाकारान्तेभ्यः स निवार्येत ? अतस्तात्पर्यपर्यालोचनवशाद् बाधकानाक्रान्तधातुविषयेऽण् भवतीति वाक्यार्थो ज्ञायत एव प्रागपि तात्पर्यदर्शिना। यदि त्वेतत्कालेनावधारितं तात्पर्यं तदाऽप्युत्तरकालं तु बाधकेषु वाक्येषु तच्छ्रुतं सदन्यत्र सामान्यलक्षणे वर्जितमिति गम्यत इति पर्यवसन्नम्।

अयं भावः—लक्ष्यैकचक्षुष्काणाम् "कर्मण्यण्" (३।२।१) इत्यस्मादुत्सर्गवाक्यात् कर्मण्युपपदे बाधकानाक्रान्तधातुभ्योऽण् प्रत्ययो भवतीत्येव बोधोऽपवादशास्त्रदर्शनात् प्रागपि, तेनायं वाक्यार्थ एतद्वाक्यस्यैव, न त्वेतद्वाक्यैकदेशस्येति स्फुटमवगम्यते। लक्षणैकचक्षुष्काणां त्वपवादशास्त्रदर्शनात् प्राक् कर्मण्युपपदे धातुभ्योऽण् प्रत्ययो भवतीत्यसंकुचितवाक्यार्थबोधेऽप्यपवादशास्त्रदर्शनोत्तरं प्रागुपदर्शितः संकुचितार्थविषयको वाक्यार्थबोध इति सर्वथोत्सर्गवाक्याना बाधकानाक्रान्तविषयक एव वाक्यार्थबोधः। स च वाक्यादेव, न तु वाक्यैकदेशादिति वाक्ये वाक्यैकदेशकल्पनाऽप्रामाणिक्येवेति।

यत्तु पुण्यराजेनैतत्कारिकाव्याख्यानावसरे उक्तम्—'उत्सर्गवाक्ये सामान्यलक्षणे उपक्रम एव यत्त्यक्तमपवादाक्रान्तं किं तत्र शब्देन परित्यक्तं नेत्याह—अशब्दमिवेति। बोधक-

लौकिकेन दृष्टान्तेनैतदेव व्याख्यातुमाह—

**ब्राह्मणानां श्रुतिर्दध्नि प्रक्रान्ता माठरं विना।**
**माठरस्तक्रसम्बन्धात् तत्राचष्टे यथार्थताम् ॥३४७॥**

दधि ब्राह्मणेभ्यो दीयतामित्यत्र श्रुत्या माठरवर्जमेवात्र ब्राह्मणानां दधिदानमुपक्रान्तमिति बोद्धव्यम्, उत्तरकालं तक्रं माठरायेत्येतत्तत्र यथार्थबाधक [बोधकं स्व]- विषयपरिहारेणैवार्थवत्तां गमयतीत्येवं भिन्नवाक्यतासमाश्रयणेन तावदप्राप्त्यनुमानं बाध इति बोधव्यम् ॥३४७॥

---

विरहेणेव, कथं त्यक्तम्? शब्दवद् बोधकवदेव त्यक्तम्" इति। अत्र—'कि तत्र' इत्यस्य स्थाने 'किं तत्' इति पाठो युक्तः। किं तत्=यत् त्यक्तमपवादाक्रान्तं तत्, शब्देन परित्यक्तम्, शब्दावाच्यमित्यर्थः। अशब्दमिवेत्यस्य शब्दावाच्यमिवेत्यर्थः। एतदेव दर्शितम्—बोधकविरहेणेवेति। अत्रेवशब्दप्रयोगेण न वस्तुतः शब्दावाच्यम्, किन्तु शब्दवाच्यमेवेत्यर्थो लभ्यते। अशब्दमिवेत्यत्र निगूढमर्थं ज्ञातुं पृच्छति—कथं त्यक्तमिति।

अस्यार्थः—यत् त्यक्तं तत् कथं कीदृशम्? शब्दावाच्यं शब्दवाच्यं वेति? अत्रोत्तरमाह—शब्दवदिति। बोधकवदेव त्यक्तमिति=यत् त्यक्तं तद् बोधकवदेवेत्यर्थ इति ॥३४६॥

लोकेऽप्युत्सर्गवाक्याद् अपवादवाक्यविषयातिरिक्तपदार्थविषयक एव बोधो जायते। तद्यथा—'ब्राह्मणेभ्यो दधि दीयताम् तक्रं माठराय' इति। अत्रोत्सर्गवाक्यान्माठरातिरिक्तब्राह्मणसंप्रदानकमेव दधिदानं प्रतीयते। 'तक्रं माठराय' इति वाक्यं तु माठरे तक्रसम्बन्धमवबोधयत् तस्मिन् पूर्ववाक्यार्थबोधे यथार्थत्वमेवावबोधयति, न तु माठरे दधिदानोद्देश्यतां बाधते, प्रागुक्तरीत्या तस्या अप्रसक्तेः। एवञ्चोत्तरवाक्यार्थेन लिङ्गेन माठरे दधिदानाप्राप्त्यनुमानमेव बाध इत्येतत् सर्वं लौकिकोत्सर्गापवादवाक्यदृष्टान्तेन पूर्वकारिकोदाहृते शास्त्रीये उत्सर्गापवादवाक्यकदम्बके विशेषेणाख्यातुमाह—**ब्राह्मणानामिति।**

अयमर्थः—माठरं विना ब्राह्मणानां श्रुतिः—'ब्राह्मणेभ्यो दधि दीयताम्' इत्यत्र माठरवर्जितानां ब्राह्मणानां बोधको ब्राह्मणशब्दः, दध्नि प्रक्रान्ता, प्रक्रमे=उपक्रम एव—तक्रं माठराय' इत्येतद्वाक्यार्थालोचनात् प्रागेव दध्नि संबद्धा। तर्हि तक्रं माठराय' इतिवाक्येन किं क्रियत इति जिज्ञासायामाह—**माठर इति।** माठरः=माठरशब्दः, तक्रसंबन्धात्=स्वविषये तक्रसंबन्धात्, तत्र=प्रागुक्ते पूर्ववाक्यार्थे, यथार्थताम्=सत्यत्वमेवाचष्टे, न तु माठरे दधिदानं बाधते, अप्रसक्तेः। एवञ्च तक्रं माठरायेति वाक्यार्थेन माठरे दधिदानाप्राप्त्यनुमानमेवापवादवाक्येनोत्सर्गवाक्यस्य बाध इति फलितम्।

यत्त्वत्र पुण्यराजेनोक्तम्—"उत्तरकाले तक्रं मठरायेत्येतत् तत्र यथार्थत्वबोधकं स्वविषयपरिहारेणैवार्थवत्तां गमयतीत्येव भिन्नवाक्यतासमाश्रयणेन तावदप्राप्त्यनुमानं बाध इति बोद्धव्यम्" इति।

इदानीमेकवाक्यतामेवाश्रित्योत्सर्गापवादयोर्बाध्यबाधकभावं दर्शयितुमाह–

**अनेकाख्यातयोगेऽपि वाक्यं न्याय्यापवादयोः ।**
**एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥३४८॥**

कैश्चित् प्राप्यापवादयोरुत्सर्गापवादयोराख्यातभेदेऽपि एकवाक्यतैवेष्यते भिन्नवाक्यतैव तत्कालं प्रतिभाति । वस्तुतस्त्वाकाङ्क्षायोग्यतासंनिधिवशादेकवाक्यतां गतं वाक्यं बोद्धव्यम् ॥३४८॥

एवं सतीदं तत्र बोद्धव्यमित्याह—

**नियमः प्रतिषेधश्च विधिशेषस्तथा सति ।**
**द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥३४९॥**

---

अस्यायमाशयः—माठराय तक्रं दत्त्वा ब्राह्मणेभ्यो दधि दीयतामित्येकवाक्यतासमाश्रयणे तु तस्मिन्नेव काले ब्राह्मणानां माठरातिरिक्तत्वेन लक्षणया संकोचावगमाद् नास्त्यप्राप्त्यनुमानरूपबाधस्थावश्यकतेति माठरे दध्यप्राप्तेः शब्दत एव लाभादिति । एवञ्च भिन्नवाक्यतासमाश्रयणे उत्सर्गशास्त्रस्याप्राप्त्यनुमानमेव बाधः । तदनुमापकत्वमेव चापवादशास्त्रे बाधकत्वम् । एकवाक्यतासमाश्रयणे चोत्सर्गशास्त्रीयवाक्यार्थे लक्षणया संकोच एव बाधः । तत्संकोचकत्वमेव चापवादशास्त्रे बाधकत्वमिति ॥३४७॥

इदानीमेकवाक्यतामेवाश्रित्योत्सर्गापवादयोर्बाध्यबाधकभावं दर्शयितुमाह–**अनेकाख्यातयोगेऽपीति** ।

अयमर्थः—न्याय्यापवादयोः = न्यायदनपेतं न्याय्यम् = न्यायप्राप्तम्, उत्सर्ग इति यावत् । अपवादो बाधकं शास्त्रम् । पुण्यराजेन तु प्राप्यापवादयोरिति पाठो व्याख्यात उत्सर्गापवादयोरिति । अनेकाख्यातयोगे आख्यातद्वययोगरूपे भिन्नरूपत्वनिमित्ते स्थिते सति, भिन्नरूपमिव स्थितमपि वाक्यमङ्गाङ्गिभावप्रयुक्तयाकाङ्क्षयैकवाक्यतापादनेन कैश्चिदेकमेवेष्यत इति । तद्यथा—'कर्मण्यण्' (३।२।१) 'आतोऽनुपसर्गे कः' (३।२।३) इति । कर्मण्युपपदेऽनुपसर्गे सत्यादन्तेभ्यो धातुभ्यः कप्रत्ययोत्पत्त्यनन्तरं शेषेभ्यो धातुभ्योऽणप्रत्ययः स्यादित्येवमेकवाक्यता । तदुक्तम्—

'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥'' इति ।

अत्राङ्गित्वं शाब्दं प्राधान्यमाश्रित्योत्सर्गवाक्यानाम्, अपवादवाक्यानां तु तद्विपरीतं तादृशमप्राधान्यरूपमङ्गत्वमिति बोध्यम् । अत्राङ्गाङ्गित्वव्यपेक्षयेति योग्यतासंनिध्योरप्युपलक्षणम्, तयोरपि शब्दबुद्धिहेतुत्वादिति ॥३४८॥

एवं सत्यपवादो यथोत्सर्गशेषस्तथा नियमसूत्रं प्रतिषेधसूत्रं चापि विधिसूत्रशेष इति बोद्धव्यमित्याह—**नियम इति** ।

इको गुणवृद्धी इत्यादिको नियमः सार्वधातुकार्धधातुकयोरित्यस्य गुणविधेः शेषः, तेन सहास्यैकवाक्यतायां सार्वधातुकार्धधातुकयोः परतोऽङ्गस्येको गुणो भवतीत्येवं वाक्यार्थो ज्ञायते, अन्यथाऽङ्गस्येगनिकोः स्थाने गुणवृद्ध्योः प्रवृत्तायोरुत्तरकालं नियमेन किमत्र कृत्यम्। उक्तं च - यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यादिति। तथा प्रतिषेधोऽपि विधिना सहैकवाक्यतां गत्वा साफल्यं भजतीत्याह—प्रतिषेधश्चेति। प्रतिषेधश्च विधिशेष एव तथा सति बोद्धव्य इत्यर्थः। अलुगुत्तरपद इत्यनेनोत्तरपदे परतो लुक्प्रतिषेध उच्यमानः सुपो धातुप्रातिपदिकयोरित्यस्य लुग्विधेरङ्गभावमुपगच्छन् वाक्यैकवाक्यतयाऽर्थप्रत्यायनं करोतीति बोद्धव्यम्। एतदेव दर्शयितुमाह—द्वितीय इति। द्वितीयेऽध्याये य आख्यातो लुग्विधिस्तस्य पाष्ठिकं लुक्प्रतिषेधं शेषमङ्गं विदुर्व्याख्यातार इति ॥३४६॥

---

अयमर्थः—तथा सति = अनेकाख्यातयोगेऽपि प्रागुक्तरीत्या एकवाक्यतासमाश्रयणेनापवादशास्त्रस्योत्सर्गशास्त्रशेषत्वे सति, नियमः = नियमसूत्रम्, परिभाषारूपं परिसंख्यारूपञ्च; प्रतिषेधश्च = निषेधसूत्रमपि, विधिशेषः = विध्यङ्गमित्यर्थः।

इदं च परिभाषारूपस्य नियमसूत्रस्य विधिशेषत्वं पदैकवाक्यतया। तद्यथा—'सार्वधातुकार्धधातुकयोः (७।३।८४) इत्यस्य गुणविधेः शेषः 'इको गुणवृद्धी' (१।१।३) इति परिभाषारूपो नियमः। विधिना सहास्य पदैकवाक्यतायां सार्वधातुकार्धधातुकयोः परतोऽङ्गस्येको गुणो भवतीत्येवं वाक्यार्थो ज्ञायते। पदैकवाक्यताया अभावे त्वङ्गस्येगनिकोः स्थाने गुणवृद्ध्योः प्रवृत्तावुत्तरकालं नियमेन किं क्रियेत? उक्तम्—'यो भुक्तवन्तं प्रति ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यादि'ति।

परिसंख्यायाः प्रतिषेधस्य च विधिशेषत्वं तु वाक्यैकवाक्यतया। तथाहि—पूर्वं विधिप्रतिषेधशास्त्रयोः पृथक्-पृथक् सह वाक्यार्थबोधः। पश्चाच्च विधिशास्त्रवाक्ये लक्षणया प्रतिषेधशास्त्रविषयातिरिक्तविषयकत्वेन संकोचे तादृशसंकुचितार्थविषयको बोधः। एवं च विधिशास्त्रापेक्षितविषयविशेषणीभूतभेदप्रतियोगिसमर्पणद्वाराऽपवादशास्त्रस्य विधिशास्त्रेण सह वाक्यैकवाक्यतेति बोध्यम्। तदेतत् सर्वमभिप्रेत्योक्तं पुण्यराजेन—"अलुगुत्तरपदे इत्यनेनोत्तरपदे परतो लुक्प्रतिषेध उच्यमानः सुपो धातुप्रातिपदिकयोरित्यस्य लुग्विधेरङ्गभावमुपगच्छन् वाक्यैकवाक्यतयाऽर्थप्रत्यायनं करोतीति बोद्धव्यम्" इति।

वाक्यैकवाक्यतालक्षणं तूपकार्योपकारकभावापन्नबोधजनकत्वमिति। अत्रापवादवाक्यार्थस्योपकारकत्वं त्वेवम्—यद्यपवादवाक्यार्थबोधः पूर्वं न स्यात् तदा तद्विषयपरित्यागेन संकुचितार्थविषयको विधिवाक्यार्थबोधो न स्यादिति। पदैकवाक्यतालक्षणं तु निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वमिति।

वस्तुतस्तु विधिप्रतिषेधशास्त्रयोः पदैकवाक्यताऽपि सम्भवति। यथा—'क्ङिति च', (१।१।५) 'सार्वधातुकार्धधातुकयोः' (७।३।८४) इति। क्ङिद्भिन्नसार्वधातुकार्धधातु-

अथ वाक्यभेदवाद्याह—

**निराकाङ्क्षाणि निर्वृत्तौ प्रधानानि परस्परम् ।**
**तेषामनुपकारित्वात् कथं स्यादेकवाक्यता ॥३५०॥**

निर्वृत्तौ विशेषपरिपूर्णतायां वाक्यानि निराकाङ्क्षाण्येव । अतः परस्परं प्रधानानि तान्यभिधीयन्ते, न तेषामङ्गाङ्गिभाव इति । अतःपरस्परमुपकार्योपकारकभावाभावात् कथं तेषां निष्प्रयोजनापेक्षा परिकल्प्यते, [ अतो ] नैकवाक्यतेति पूर्वः पक्षः ॥३५०॥

अथैकवाक्यवाद्याह—

**विशेषविधिनाऽर्थित्वाद् वाक्यशेषोऽनुमीयते ।**
**विशेषवन्निवर्त्येऽर्थे तस्मात्तुल्यं व्यपेक्षणम् ॥३५१॥**

---

कयोरङ्गस्यैको गुणः स्यादिति । एवमन्यत्रापि तत्तत्पदार्थभिन्नत्वेनैव विधिशास्त्रीयपदार्थेषु संकोच इति । एवमप्यखण्डवाक्यवादस्यैव सिद्धान्तत्वेन समादृतत्वाद् वाक्यैकवाक्यतापक्ष एवोक्त इति ध्येयम् ।

विधिप्रतिषेधशास्त्रयोरङ्गाङ्गिभावेन वाक्यैकवाक्यतयाऽर्थप्रत्यायकत्वमेवाभिप्रेत्याह—**द्वितीय** इति । अस्यार्थः—द्वितीयेऽध्याये यो लुग्विधिराख्यातः सुपो धातुप्रातिपदिकयोरिति, तस्य षाष्ठिकमलुकं लुक्प्रतिषेधम् = अलुगुत्तरपदे इत्यधिकृत्य विहितं शेषमङ्गं विदुर्व्याख्यातार इति ॥३४९॥

अथोत्सर्गापवादादीनां वाक्यभेदवाद्याह—**निराकाङ्क्षाणीति** ।

अयमर्थः—निर्वृत्तौ = स्ववाक्यार्थबोधनिष्पत्तौ सत्याम् निराकाङ्क्षाणि = पदार्थान्तरवाक्यार्थान्तरविषयकाङ्क्षाशून्यानि, अतः प्रधानानि = प्रधानत्वादेव च तेषां परस्परमनुपकारित्वादेकवाक्यता कथं स्यादिति । अङ्गाङ्गिभावे हि वाक्यानां परस्परमुपकार्योपकारकभावस्ततश्चैकवाक्यतेति । यथा दर्शपूर्णमासादिवाक्यानां प्रयाजादिवाक्यैः सह परस्परमङ्गाङ्गिभाव उपकार्योपकारकभाव एकवाक्यता चेति ।

यत्तु पुण्यराजेन—'निर्वृत्तौ' इत्यस्य विशेषपरिपूर्णतायामित्यर्थः कृतः, स त्वार्थिकोऽर्थो न तु शब्दार्थः । आकाङ्क्षितपदार्थविशेषाणां प्रकरणादिना सन्निधाने हि वाक्यस्य परिपूर्णता भवति; परिपूर्णवाक्यादेव च वाक्यार्थबोधनिर्वृत्ति = निष्पत्तिरिति । स्वार्थे परिपूर्णानां वाक्यानां परस्परं निराकाङ्क्षत्वादङ्गाङ्गिभावाभावे उपकार्योपकारकभावाभावात् पुनः प्रयोजनापेक्षायाः कल्पकाभावाच्च परस्परं निराकाङ्क्षत्वेन नैकवाक्यतेति पूर्वपक्षिण आशयः ॥३५०॥

अथैकवाक्यतावाद्याह—**विशेषविधिनेत्यादि** ।

उत्सर्गवाक्यशेषः सर्वत्रानुमीयते कस्मादित्याह—विशेषविधिनेत्यादि। अन्यथा वाक्यान्तरवदविशेषेण तस्य प्रवृत्तिः स्यात्। न चैतद्युक्तम्, ततश्च निवर्त्ये प्रतिषेध्येऽर्थेऽपेक्षणमुपयुज्यत एव। तस्मात् तयोः परस्परापेक्षणं तुल्यमेवेति कृत्वाऽर्थपर्यालोचनावशेनाकाङ्क्षादिना परस्परसम्बन्धेनाङ्गाङ्गिभावापत्तावेकवाक्यतैव ज्यायसीत्युक्तम् ॥३५१॥

उद्धारेण वाक्येषु वाक्यैकदेशाः सन्तीति चतुर्भिः प्रकारैर्निरूपितम्। अर्थप्रकरणाभ्यां यथा वृक्ष इत्यादौ। प्रसिद्धेर्यथा वर्षतीत्यादौ। लिङ्गाद्यथा अक्ताः शर्करा इत्यादौ। आकाङ्क्षादिना वाक्यान्तरस्य सन्निधानाद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेत्यादौ। यथा च "कर्मण्यण्" "आतोनुपसर्गे कः" इत्यादौ। इदानीमपोद्धारसमाश्रयेण प्रसङ्गात् पदेषु पदैकदेशाः सन्तीति विचारयितुं प्रस्तौति—

---

अयमर्थः—उत्सर्गविधेर्विशेषविधिना नियमविधिना प्रतिषेधविधिनाऽपवादविधिना चार्थित्वात्,—विशेषविधिविषयपरिहारेण स्वविधेयसिद्धये तत्साकाङ्क्षत्वादित्यर्थः। वाक्यशेषः=उत्सर्गविधेर्नियमादिविधिर्वाक्यशेषोऽनुमीयते।

अयं चानुमानाकारः—विशेषविधिर् उत्सर्गविधेर्वाक्यशेषः उत्सर्गविधिना स्वविषयसंकोचायापेक्ष्यमाणत्वात्, व्यतिरेके प्रधानवाक्यान्तरवत्। विशेषवन्निवर्त्येऽर्थे यथोत्सर्गविधिविशेषे=विशेषविधिविषयेऽर्थे साकाङ्क्षस्तथा विशेषविधिरप्युत्सर्गविधिविधेयपरिहारेण स्वविधेयसिद्धये निवर्त्येऽर्थे=स्वबाध्ये स्वनिषेध्ये वाऽर्थे उत्सर्गविधिविधेये साकाङ्क्षस्तस्मात्तुल्यं व्यपेक्षणमाकाङ्क्षा परस्परमुभयोरिति।

पुण्यराजेन त्वियं कारिकेत्थं व्याख्याता—"उत्सर्गवाक्यशेषः सर्वत्रानुमीयते, कस्मादित्याह—**विशेषविधिनेत्यादि**।

अन्यथा वाक्यान्तरवदविशेषेण तस्य प्रवृत्तिः स्यात्, न चैतद् युक्तम्, ततश्च निवर्त्ये प्रतिषेध्येऽर्थेऽपेक्षणमुपयुज्यत एव, तस्मात्तयोः परस्परापेक्षणं तुल्यमेवेति कृत्वाऽर्थपर्यालोचनावशेनाकाङ्क्षादिना परस्परसम्बन्धेनाङ्गाङ्गिभावापत्तावेकवाक्यतैव ज्यायसीत्युक्तम्" इति।

अत्र वाक्यशेषोऽनुमीयत इति पद्यांशस्य व्याख्यानम्— उत्सर्गवाक्यशेषः सर्वत्रानुमीयत इति। तत्र वाक्यशेषपदस्य तात्पर्यानुपपत्त्योत्सर्गवाक्यशेषे लक्षणा सर्वत्रेति पदमध्याहार्यम्। सर्वत्रेत्यस्य नियमप्रतिषेधापवादेष्वन्यतमविषयानुमितिः क्रियत इत्यर्थः। 'न चैतद् युक्तम्" इत्यत्र हेतुः प्रसिद्धत्वान्नोपात्तः। भुक्तवन्तं प्रतीति न्यायेनोत्सर्गविधिविधेयस्याऽविशेषेण जातस्य निवृत्त्यनुपपत्त्या प्रतिषेधशास्त्रवैयर्थ्यापत्तेरिति। 'ततश्च निवर्त्ये प्रतिषेध्येऽर्थेऽपेक्षणमुपयुज्यत एव" इत्यत्र 'प्रतिषेध्ये' इत्यस्य प्रतिषेधप्रतियोगिन्यर्थे उत्सर्गविधिविधेये इत्यर्थः। निषेधस्य प्रतियोगिनि नित्यसाकाङ्क्षत्वादिति भावः। अपेक्षणं प्रतिषेधशास्त्रकर्तृकमिति बोध्यम्। तयोः=उत्सर्गापवादशास्त्रयोः, अर्थपर्यालोचनावशेन=तात्पर्यावधारणवशेन, परस्परसंबन्धेन=परस्परं विशेष्यविशेषणभावरूपेण संबन्धेनेत्यर्थ इति ॥३५१॥

**संज्ञाशब्दैकदेशो यस्तस्य लोपो न विद्यते ।**
**विशिष्टरूपा सा संज्ञा कृता च न निवर्तते ॥३५२॥**

इह देवदत्तादयः संज्ञाशब्दाः स्थिताः, तत्र कदाचिद्देवः कदाचिद्दत्त इति प्रयुञ्जाना दृश्यन्ते। तदेतत्कथमुपपद्यते ? यस्मात्तेषु संज्ञाशब्देष्वेकदेशास्तेषां लोपस्तावच्छास्त्रे न कुत्रचिदुपदिश्यते। उपदेशोऽपि तेन कर्तुं न पार्यत इत्याह—विशिष्टरूपेत्यादि। यदा लोके नियतवर्णानुपूर्वीकः पदसमुदायः संज्ञात्वेन विनियुज्यते, तदा तदन्तर्गता अवयवा विनियुक्ता एव, यथा वृक्षः प्रचलन् सहावयवैः प्रचलतीत्याचारानुरोधेन किमसौ न्यूनवर्णा वाचिका भवति, सा हि नियतानुपूर्वीका परिपूर्णैव कृता न निवर्तते ॥३५२॥

अथोच्यते दत्ताशब्दादसौ सकला प्रतीता स्वसंज्ञिनं प्रत्याययतीत्याशङ्क्याह-

---

वस्तुतो वाक्यानामखण्डत्वेऽप्यपोद्धारकल्पनया वाक्येषु वाक्यैकदेशाः सन्तीति चतुर्भिः प्रकारैर्निरूपितम्। अर्थप्रकरणाभ्यां यथा—वृक्ष इत्यादौ तिष्ठतीत्यादिः। प्रसिद्धेर्यथा—वर्षतीत्यादौ जलमित्यादिः। लिङ्गाद् यथा—'अक्ताः शर्करा उपदधाति' इत्यादौ घृतस्तुतिरूपाल्लिङ्गाद् घृतेनाक्ता इति। आकाङ्क्षादिना वाक्यान्तरस्य संनिधानाद् यथा लोके—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इत्यादौ। यथा च शास्त्रे—'कर्मण्यण्', (३।२।१) 'आतोऽनुपसर्गे कः' (३।२।३) इत्यादौ। वाक्येष्वपोद्धारसमाश्रयणप्रसङ्गादिदानीं पदेष्वपोद्धारसमाश्रयणेन पदैकदेशाः सन्तीति विचारयितुं प्रस्तौति—**संज्ञाशब्दैकदेश इति।**

अयमर्थः—यः देवो दत्तो वा संज्ञाशब्दैकदेशः = संज्ञाशब्दस्य देवदत्ताशब्दस्यैकदेशः, तस्य लोपो न विद्यते शास्त्रे अविहितत्वात्। देवशब्दस्य लोपे दत्तशब्दः संज्ञा स्यात्, दत्तशब्दस्य लोपे तु देवशब्दः संज्ञा स्यात्।

न च तयोः कस्यापि लोपः शास्त्रविहितो दृश्यते। नापि संज्ञाशब्दैकदेशस्य लोपः शास्त्रेण कर्तुं शक्यत इत्याह—**विशिष्टरूपेति**। चो हेतौ। यतो विशिष्टरूपा = आनुपूर्वीविशेषविशिष्टरूपा सा संज्ञा देवदत्तादिपदरूपा कृता = शास्त्रे विहिता, पित्रादिकृता वा, न देवादिपदरूपा दत्तपदरूपा वा, अतो देवादिपदरूपस्य देवदत्तादिपदैकस्य वाचकत्वमालम्ब्य देवदत्तादिपदरूपा संज्ञा वाचकत्वान्न निवर्तते, किन्तु सैव वाचिकेति।

यत्तु "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इत्यादि वार्त्तिकं दृश्यते, तत्तु लोकव्यवहारानुरोधेनाऽवयवस्यैव संज्ञात्वमभिप्रेत्य, न तु देवदत्तादिपदरूपसंज्ञैकदेशस्य लोपमभिप्रेत्य, नियतवर्णानुपूर्वीकस्यैव संज्ञात्वेनैकदेशलोपेऽसंज्ञात्वेनावाचकत्वापत्तेरिति। एवञ्च कथं देवशब्दाद् दत्तशब्दाद् वा देवदत्तपदाभिधेयस्यार्थस्य प्रतीतिरिति शङ्कितुराशयः ॥३५२॥

यद्युच्यते देवशब्दाद् दत्तशब्दाद् वा स्वभागादसौ सकला देवदत्तपदरूपा संज्ञोपस्थिता सती स्वसंज्ञिनं देवदत्ताख्यं प्रत्याययतीत्याशङ्क्याह—**संज्ञान्तराच्चेति**।

**संज्ञान्तराच्च दत्तादेर्नान्या संज्ञा प्रतीयते ।**
**संज्ञिनं देवदत्ताख्यं दत्तशब्दः कथं वदेत् ॥३५३॥**

दत्ताशब्दः स्वतन्त्रोऽन्य एव कस्यचित् संज्ञान्तरम्। तस्मात् कथमन्या देवदत्तेति संज्ञा प्रतीयते शब्दान्तरत्वादकृतसङ्केतत्वाच्चेत्यभिप्रायः। नापि तद्वाच्यं संज्ञिनमवगमयितुमलं दत्तशब्द इत्याह—संज्ञिनमिति। दत्तशब्दस्यान्य एव संज्ञी प्रत्याय्यस्तत्कथं शब्दान्तराभिधेयमसौ प्रत्याययेत्। तदेवं नियतवर्णानुपूर्वीकायास्तस्या लोपस्तावदेकदेशस्य नोपपद्यते, नापि दत्तशब्दाद्देवशब्दाद्वा तदेकदेशभूतदेवदत्तशब्दप्रतीतिरुपपद्यते, तत्रापि तद्वाच्यप्रतिपत्तिरिति यत्किञ्चिदेतत् ॥३५३॥

अत्र मतान्तरं दर्शयितुमाह—

**सर्वैरवयवैस्तुल्यं सम्बन्धं समुदायवत् ।**
**केचिच्छब्दस्वरूपाणां मन्यन्ते सर्वसंज्ञिभिः ॥ ३५४ ॥**

सर्वैरवयवैस्तुल्यमेव समकालमेव संज्ञिनः सम्बन्धः कथं समुदायवत्। यथा समुदायस्तस्य वाचकत्वेन नियुक्तः तथा तत्काल एव तदवयवा अपीत्यतस्तदेकदेशस्तस्य प्रत्यायनं करोतीति को दोषः ॥३५४॥

---

अयमर्थः—देवदत्तशब्दापेक्षया संज्ञान्तरात् = भिन्नसंज्ञारूपाद् दत्तादेश्च = दत्तादेस्तु, अन्या संज्ञा = देवदत्तपदरूपा न प्रतीयते, तया संज्ञया सह तस्याः संज्ञाया असंबन्धात्, स्वसंज्ञिबोधनेनैव तस्या उपक्षीणत्वाच्च। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायोक्तयुक्तेस्तुल्यत्वात्। दत्तशब्दस्य देवदत्तशब्दापेक्षया शब्दान्तरत्वाद् न स्वं रूपमिति सूत्रोक्तन्यायस्याप्यवसरः। तस्य तत्राकृतसंकेतत्वाच्चापि न तया संज्ञया संज्ञान्तरस्य प्रत्यायनसंभव इति; नापि देवदत्तशब्दवाच्यं संज्ञिनं दत्तशब्दोऽवगमयितुं समर्थः, आनुपूर्व्या न्यूनत्वाद् भेदाच्च। नहि शब्दान्तराभिधेयमर्थं प्रत्याययत् शब्दान्तरं दृष्टमित्याह—संज्ञिनमिति।

अयमर्थः—दत्तशब्दो देवदत्ताख्यम् = देवदत्तपदेनाख्यायमानं संज्ञिनं कथं वदेत्? आनुपूर्वीभ्रंशात्, नियतवर्णानुपूर्वीकस्य देवदत्तपदस्यैव तत्र संकेतितत्वादिति। तदेवं नियतवर्णानुपूर्वीकाया देवदत्तादिपदरूपायाः संज्ञाया एकदेशस्य लोपस्तावन्नोपपद्यते, नापि देवदत्तपदरूपसंज्ञैकदेशभूताद् देवशब्दाद् दत्तशब्दाद्वा देवदत्तशब्दरूपसंज्ञाप्रतीतिरुपपद्यते, नापि च देवशब्दाद् दत्तशब्दाद्वा देवदत्तशब्दवाच्यार्थप्रतीतिरिति पूर्वपक्षिणः कारिकाद्वयस्याशयः ॥

प्रागुक्त एव विषये मतान्तरं दर्शयितुमाह—सर्वैरवयवैरिति।

अयमर्थः—केचिदाचार्याः शब्दस्वरूपाणाम्=देवदत्तादिशब्दस्वरूपाणाम्, सर्वैरवयवैः—देवशब्देन दत्तशब्देन च तुल्यम् = तुल्यकालम् = युगपदेव, समुदायवत् = देवदत्तशब्दरूपसमुदायस्येव, सर्वसंज्ञिभिः = सर्ववाच्यैः सह सम्बन्धं मन्यन्ते। यथा देवदत्तशब्दरूपः समुदायस्तदर्थस्य वाचकत्वेन नियुक्तस्तथा तत्काल एव तदवयवा अपीति। अतोऽवयवा अपि समुदायसंज्ञिनो वाचका इति न कोऽपि दोष इति भावः ॥३५४॥

अत्र दूषणद्वयं दर्शयितुमाह—

**वर्णानामर्थवत्त्वं तु संज्ञानां संज्ञिभिर्भवेत् ।**
**सम्बद्धोऽवयवः संज्ञाप्रविवेके न कल्प्यते ॥३५५॥**

संज्ञानां ये वर्णास्तेषां संज्ञिनाऽर्थवत्त्वं प्राप्नोति । ततः स्वाभिमतैकदेशवदेकोऽपि वर्णो वाचकः स्यात् । न चैतत्परिदृष्टम् । अपि च तदवयवः पृथग्वाचको नोपपद्यत इत्याह—सम्बद्ध इति । योऽसौ भवता वाचकोऽवयव एकदेशः परिकल्प्यते, स संबद्ध एव वाचकत्वेन विनियुक्तः, समुदायाच्च तस्य प्रविवेके पृथग्भावे वाचकत्वं न कल्प्य [प]ते, विलक्षणत्वात् ॥३५५॥

एतदेवापरेण श्लोकेन प्रतिपादयितुमाह—

**सर्वस्वरूपैर्युगपत् सम्बन्धे सति संज्ञिनः ।**
**नैकदेशसरूपेभ्यस्तत्प्रत्यायनसम्भवः ॥३५६॥**

युगपत् सर्वावयवस्वरूपैः सम्बन्धे नैकदेशास्तद्वाचका उपपन्नाः, अथवा तदेकदेशास्ते न भवन्तीति प्रतिपादयितुमाह—नैकदेशसरूपेभ्य इत्यादि । एकदेशसरूपेभ्य इत्युक्तम् । एकदेशसदृशास्ते दत्तादयः, न पुनस्तदेकदेशा इति ॥३५६॥

---

देवदत्तादिशब्दरूपसंज्ञैकदेशस्य देवादेर्वाचकत्वे दूषणद्वयं दर्शयितुमाह—**वर्णानामिति** ।

अयमर्थः—यद्यपि प्रागुक्तरीत्या संज्ञाशब्दैकदेशानां दत्तादीनां समुदायसंज्ञिवाचकत्वं सिद्ध्यति, तु=किन्तु, वर्णानाम् = संज्ञानाम् = संज्ञाशब्दैकदेशदत्तादिशब्दवत्संज्ञात्वमापन्नानां वर्णानामप्यर्थवत्त्वमेवं सति भवेत्, न चैतत् परिदृष्टमिति । किञ्च, देवदत्तादिशब्दरूपसंज्ञैकदेशो दत्तादिः समुदायात् पृथग् वाचको नोपपद्यत इत्याह—**संबद्ध इति** ।

अयमर्थः—योऽसौ भवता अवयवः = देवदत्तादिशब्दरूपसंज्ञैकदेशो दत्तादिः समुदायवद् वाचकः परिकल्प्यते, स समुदायसम्बद्ध एव वाचकत्वेन विनियुक्त इति संज्ञाप्रविवेके=समुदायरूपायाः संज्ञायास्तस्य पृथग्भावे वाचकत्वं न कल्प्यते, समुदायासंबद्धस्यैकदेशमात्रस्य वाचकत्वेनाविनियोगात्, समुदायाद् विलक्षणत्वाच्चेति भावः ॥३५५॥

पूर्वपद्योत्तरार्धोक्तमेवार्थमपरेण प्रकारेण = अपरेण श्लोकेन प्रतिपादयितुमाह—**सर्वस्वरूपैरिति** ।

अयमर्थः—युगपत् = एककालं सर्वस्वरूपैः = सर्वावयवयुक्तैः स्वरूपैर्देवदत्तादिशब्दैः सह संज्ञिनः संबन्धे सत्येकदेशरूपेभ्यः = वाक्यवत् पदस्याप्यखण्डत्वाद् एकदेशसरूपेभ्यः, न त्वेकदेशेभ्यो दत्तादिशब्देभ्यः, तत्प्रत्यायनसंभवः = देवदत्तादिशब्दसंज्ञिप्रत्यायनस्य संभवो न, समुदायेनैव संज्ञिनः संबन्धात्, अवयवैरसम्बन्धात् । यदि तु "नह्यवयवा

मतान्तरमाह—

**एकदेशात्तु सङ्घाते केषाञ्चिज्जायते स्मृतिः ।**
**स्मृतेस्तु विषयाच्छब्दात् सङ्घातार्थः प्रतीयते ॥३५७॥**

स्पष्टोऽर्थः॥३५७॥

एतन्निराकर्तुमाह—

**एकदेशात् स्मृतिर्भिन्ने सङ्घाते जायते कथम् ।**
**कथं प्रतीयमानः स्याच्छब्दोऽर्थस्याभिधायकः ॥३५८॥**

सदृशवस्तुसन्दर्शनात् स्मृतिरुपजायत इति प्रसिद्धम्। तत्र सङ्घाते भिन्नस्वरूपे कथं तस्मात् स्मृतिः, कथं च तस्मात् प्रतीयमाना देवदत्तस्य संज्ञिनोऽभिधायक उपपद्यते? प्रतीयमानस्य वाचकत्वेऽतिप्रसङ्गः स्यात्। श्रुतिपथमवतीर्णाः शब्दा वाचका इति प्रसिद्धम् ॥३५८॥

---

संबद्धस्य समुदायेन सम्बन्धः संभवति" इत्युच्यते, तदाऽप्येकदेशसदृशास्ते दत्तादयो न पुनस्तदेकदेशा इति न दत्तादिशब्देभ्यो देवदत्तादिशब्दसंज्ञिप्रत्यायनसंभव इति बोध्यम् ॥३५६॥

मतान्तरमाह—**एकदेशात्त्विति।**

अयमर्थः—तुशब्दोऽवधारणे एवकारार्थः। केषाञ्चिन्मते एकदेशात्तु = एकदेशादेव दत्तादिशब्दात्, संघाते स्मृतिर्जायते = देवदत्तादिशब्दरूपसंघातविषया स्मृतिर्जायते। स्मृतेर्विषयात्तु संघातात् = देवदत्तादिशब्दात्, संघातार्थः = देवदत्तादिशब्दार्थः प्रतीयत इति ॥३५७॥

एतन्मतं निराकर्तुमाह—**एकदेशादिति।**

अयमर्थः सदृशवस्तुदर्शनात् सदृशवस्तुविषया स्मृतिरुपजायत इति प्रसिद्धं लोके। एवञ्च एकदेशाद् दत्तादिशब्दात्, भिन्ने = भिन्नस्वरूपे विसदृशे, संघाते = देवदत्तादिशब्दरूपे समुदाये, तद्विषया स्मृतिः कथं जायते? यदि तु सर्वात्मनानुपूर्वीसाम्यरूपसादृश्याभावेऽप्यंशत आनुपूर्वीसाम्यरूपं सादृश्यमादाय स्मृतिर्जायत इत्यच्युते, तथापि दत्तादिशब्दात् प्रतीयमानः स्मर्यमाणो देवदत्तादिशब्दोऽनुच्चारितत्वात् कथं स्वार्थस्याभिधायकः स्यात्? "उच्चरित एव हि शब्दः प्रत्यायको नानुच्चरितः' इति भाष्यसिद्धान्तात्। प्रतीयमानस्य वाचकत्वे ह्यतिप्रसङ्गः स्यात्। तथाहि घटं पश्येत्यत्र घटपदात् "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इति न्यायेन स्वाश्रयाकाशवाचकाकाशशब्दप्रतीतौ तस्य च वाचकत्वेन तत आकाशपदार्थप्रतीतावाकाशस्यापि कर्मतया दर्शनक्रियान्वयः स्यादिति। तस्मात् श्रुतिपथमवतीर्णा एव शब्दा वाचका इत्यभ्युपगमे दत्तादिशब्दात् प्रतीयमानस्य देवदत्तादिशब्दस्य न स्वार्थाभिधायकत्वमिति भावः ॥३५८॥

सिद्धान्तमाह--

**एकदेशसरूपास्तु तैस्तैर्लिङ्गैः समन्विताः ।**
**अनुनिष्पादिनः शब्दाः संज्ञासु समवस्थिताः ॥३५९॥**

यदा तु समुदायः संज्ञात्वेन विनियुज्यते, तदैव तदन्तर्गतावयवसरूपा अपि संज्ञात्वेन विनियुज्यन्त इति तेष्वनुनिष्पादिन्यायेन सिद्धाः संज्ञात्वेन बोद्धव्या इति ॥३५९॥

तदन्तर्गतावयवसरूपा अनुनिष्पादिन्यायेन विनियुक्ता अपि साधारणत्वात् संज्ञिनमभिधातुमसमर्थाः । तथा हि देवशब्दो देवानां वाचकः कस्यचित् संज्ञिनोऽपि, तथा दत्तशब्दः क्रियाशब्दोऽपि संज्ञाशब्दोऽपि, तत्र कथं नियतस्य संज्ञिनस्तेभ्यः प्रतिपत्ति स्यादित्याशङ्क्य नियतार्थतामेषां समर्थयितुमाह—

**साधारणत्वात् संदिग्धाः सामर्थ्यान्नियताश्रयाः ।**
**तेषां ये साधवस्तेषु शास्त्रे लोपादि शिष्यते ॥३६०॥**

---

साम्प्रतं सिद्धान्तमाह—**एकदेशसरूपा** इति ।

अयमर्थः—तुशब्द एवकारार्थः । एकदेशसरूपास्तु = देवदत्तादिसंज्ञाशब्दैकदेशसरूपा एव, न तु तादृशसंज्ञाशब्दैकदेशा एव; सिद्धान्ते वाक्यस्याखण्डत्वात् । तैस्तैर्लिङ्गैः समन्विता देवदत्तादिशब्दरूपसंज्ञागतैस्तैस्तैर्लिङ्गैः पुंस्त्वस्त्रीत्वादिभिः समन्विताः, अनुनिष्पादिनः = देवदत्तादिशब्दरूपसंज्ञानिष्पत्तिमनुनिष्पादिनः, स्वातन्त्र्येण निष्पद्यमानाः, न तु देवदत्तशब्दैकदेशभूता देवादयो दत्तादयश्च शब्दाः सज्ञासु स्वस्वार्थमभिदधतीषु सतीषु तत्तदर्थाभिधायिन एव पृथक् समवस्थिता इति ।

यद्वा संज्ञासु समवस्थिता इवेतीवपदमध्याहृत्य व्याख्येयम् । यथाश्रुतव्याख्याने त्वेकदेशसरूपा इत्यनेन विरोध इति ।

अयं भावः—यदैव देवदत्तादिशब्दरूपः सज्ञाभूतः समुदायः स्वस्वार्थे सज्ञात्वेन विनियुज्यते, तदैव तदन्तर्गतावयवसरूपा अपि देवादयो दत्तादयश्च शब्दाः स्वतन्त्राः पृथग्भूता देवदत्तादिशब्देषु निष्पद्यमानेष्वनुनिष्पादिन्यायेन सिद्धाः = सादृश्यात् स्मृताः संज्ञात्वेन विनियुज्यन्त इति तेऽपि देवत्तादिशब्दार्थसंज्ञात्वेन बोद्धव्या इति ॥३५९॥

देवदत्तादिशब्दान्तर्गतावयवसरूपा अनुनिष्पादिन्यायेन संज्ञात्वेन विनियुक्ता अपि देवादयो दत्तादयश्च शब्दा अन्यार्थसाधारणत्वाद् नियमेन देवदत्तादिशब्दसंज्ञिनमभिधातुमसमर्थाः । तथाहि—देवशब्दो देवानां वाचकः पित्रादिसंकेते सति कस्यचित् संज्ञिनोऽपि, दत्तशब्दः क्रियाशब्दोऽपि, देवदत्तादन्यस्मिन् सकेतितः सज्ञाशब्दोऽपि । एवञ्च तत्र कथं

सामर्थ्यादिभिर्नियताश्रयाः संज्ञ्यभिधायका व्यवस्थाप्यन्ते, तेषामनुनिष्पादिनामेव शास्त्रे लोपादिविधिप्रणालिकया साधुत्वमुच्यत इत्याह—तेषामित्यादि। तेन देवदत्ते स्वतन्त्र· क्रियावाचकदत्तशब्दसाधारणो दत्तः संज्ञाशब्दः, देवोऽपि संज्ञाशब्दोऽनुनिष्पादित्वान्न तदन्तर्गतोऽपीति बोद्धव्यम्। एतदेव शास्त्रे लोपादिद्वारेणान्वाख्यायते, यथोक्तम् "चतुर्थादनजादौ च लोपः पूर्वपदस्य च" इत्यादि ॥३६०॥

एतत्स्फुटीकरणायाह—

**तुल्यायामनुनिष्पत्तौ ज्ये द्रा घा इत्यसाधवः।**
**नह्यन्वाख्यायके शास्त्रे तेषु दत्तादिवत् स्मृतिः ॥३६१॥**

---

नियतस्य देवदत्तशब्दसञ्ज्ञिनो देवादिशब्देभ्यः प्रतिपत्तिः स्यादित्याशङ्क्य देवदत्तादिशब्दैकदेशसरूपाणा तेषा नियतार्थता समर्थयितुमाह—साधारणत्वादिति।

अयमर्थः—लोकेऽनुनिष्पादिनः = देवदत्तादिशब्दस्य ज्येष्ठादिशब्दस्य चोच्चारणमनुनिष्पद्यमानाः = प्रादुर्भवन्तः, शब्दा द्विविधाः - साधवोऽसाधवश्च। तत्र साधवो देवादयो दत्तादयश्च, असाधवो ज्ये, द्रा, घा इत्यादयः। एवं सति तेषाम् = साध्वसाधूना द्विविधानामनुनिष्पादिना शब्दाना मध्ये, ये साधवो देवादयो दत्तादयश्च शब्दाः साधारणत्वात् = समानानुपूर्वीकत्वात्, सदिग्धा. = सदिग्धार्थकाः, अयं देवशब्दो देवार्थको देवदत्तार्थको वा, अयं दत्तशब्दः क्रियार्थको देवदत्तार्थको वेत्येवंरूपेण संदिग्धार्थका इति यावत्।

किन्तु तादृशसन्देहसत्त्वेऽपि सामर्थ्यात् = स्वसमभिव्याहृतपदार्थान्वयानुपपत्तिरूपात्, नियताश्रया. = नियतो व्यवस्थितो वाच्यत्वेनाश्रयो येषा ते तथा भूताः, नियतार्थका इति यावत्। तेषु साधुष्वेव देवादिषु दत्तादिषु च बोधनापेषु सत्सु देवादीनां दत्तादीना च समुदायार्थे साधुत्वबोधनायेति यावत्। शास्त्र = व्याकरणशास्त्रे, लोपादि = देवदत्तादिशब्दे पूर्वोत्तरपदयोरन्यतरस्य लोपादिकम्, "चतुर्थादनजादौ च लोपः पूर्वपदस्य च" इत्यादिवार्त्तिकेन शिष्यते = उपदिश्यते, न तु ज्ये, द्रा, घा इत्यादाना साधुत्वबोधाय ज्येष्ठादिशब्दैकदेशस्य लोपादिकं शास्त्रे शिष्यत इत्यशिष्यमाणत्वात् तेषामसाधुत्वं बोध्यमिति।

इदं त्ववधेयम्—शास्त्रेण देवदत्तादिशब्दैकदेशाना लोपान्वाख्यानेऽपि न तत्र शास्त्रतात्पर्यम् किन्त्वनेन प्रकारेण देवादिशब्दाना दत्तादिशब्दानाञ्च स्वतन्त्राणा देवदत्तादिशब्दार्थे साधुत्वबोधन एव तच्छास्त्रतात्पर्यम्, पदानामखण्डत्वनित्यत्वाभ्यामेकदेशस्य लोपस्य चानुपपत्तेरिति ॥३६०॥

एतस्यैवार्थस्य स्फुटीकरणायाह—तुल्यायामिति।

समुदाये यथा पदान्यनुनिष्पादिन्यायेन तत्र विनियुज्यन्ते, नैवमत्र समा नायामप्यनुनिष्पत्तौ वर्णानां वर्णा विनियुज्यन्ते। अतश्च ज्येष्ठादिषु न ज्यादयः वर्णमात्रा वृद्धव्यवहारे साधवोऽभ्यनुज्ञायन्त इति, शास्त्रेऽप्यन्वाख्यायकेन तथाभूतानामनुगमः क्रियत इति बोद्धव्यम्। अतो नैते घादयो वर्णा मघादिवाच्येष्वर्थेषु वाचका इति ॥३६१॥

अथ पदेषु पदैकदेशाः सन्तीति विचारप्रस्तावे संज्ञाशब्दानां शब्दार्थसम्बन्धस्यानित्यत्वमाशङ्क्य समर्थयितुमाह—

**कृतणत्वाश्च ये शब्दा नित्यं खरणसादयः।**
**एकद्रव्योपदेशित्वात्तान् साधून् संप्रचक्षते ॥३६२॥**

इह संज्ञाशब्दानां संज्ञिसम्बन्धात् प्राग्लक्षणयोग उत तदुत्तरकालम्? यदा प्राक् तदासौ न कस्यचित् संज्ञेति तन्निबन्धनं कार्यं कथं स्यात्?

---

अयमर्थः—साधूनामसाधूनां च शब्दैकदेशसरूपाणां देवादीनां ज्ये, द्रा इत्यादीनाञ्च स्वघटितसमुदायशब्दोच्चारणमनुनिष्पत्तौ = अनुप्रादुर्भावे तुल्यायामपि सत्याम्—ज्ये, द्रा, घा इत्यसाधवः—ज्येष्ठशब्दे ज्ये इति, द्राघिष्ठशब्दे द्रा इति, श्लाघा मघा इत्यादिशब्देषु घा इत्यसाधव इति। अत्र हेतुमाह—नहीति। हि = यतः, अन्वाख्यायके शास्त्रे देवादीनां दत्तादीनां च साधुत्वबोधके 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः, चतुर्थादनजादौ च' इत्यादिके शास्त्रे, तेषु = ज्ये, द्रा, घा इत्यादिषु शब्देषु, दत्तादिवत् = दत्तादिदेवादिशब्देष्विव, स्मृतिः = साधुत्वस्मरणं नास्ति, अतो ज्ये, द्रा घा इत्यादयोऽसाधव इति।

अयं भावः—यथा स्वघटितसमुदायमनुनिष्पादीनि देवादिदत्तादिपदानि तादृशसमुदायार्थे विनियुज्यन्ते, न तथाऽपदाना वर्णसमुदायानामनुनिष्पत्तौ दत्तादिपदानामनुनिष्पत्त्या समानायामप्यनर्थका अपदभूता वर्णसमुदाया ज्ये, द्रा इत्यादयः स्वघटितसमुदायार्थे शास्त्रेण विनियुज्यन्त इत्यतो न ज्येष्ठद्राघिष्ठादिषु ज्ये, द्रा इत्यादयो वर्णसमुदाया वृद्धव्यवहारे शब्दानां साधुत्वे प्रमाणभूते साधुत्वेनाभ्यनुज्ञायन्त इत्यतः साधुत्वान्वाख्यायकेन शास्त्रेणापि समुदायैकदेशभूतानां पदानामेव साधुत्वेनानुगमः क्रियते। अतः शास्त्रेणाननुशिष्टत्वान्नैते श्लाघामघादिशब्दैकदेशा घादयो वर्णसमुदाया मघादिशब्दवाच्यानामर्थानां वाचका इति ॥३६१॥

अथ पदेषु पदैकदेशाः सन्ति न वेति विचारप्रसङ्गे यदि पदेषु पदैकदेशाः सन्तीत्युच्यते, तदा देवदत्तादिसंज्ञापदानां सावयवत्वेनानित्यत्वे तन्निष्ठयोस्तदर्थतत्सम्बन्धयोरपि आश्रयानित्यत्वेनानाश्रितयोस्तयोस्तयोः स्थित्यसंभवादनित्यत्वमित्याशङ्क्य शब्दार्थसम्बन्धानां नित्यत्वं समर्थयितुमाह—कृतणत्वाश्चेति।

अयमर्थः—ये च = ये तु, नित्यं कृतणत्वाः = अनादौ वृद्धव्यवहारे सदैव कृतणत्वाः,

अत्रोच्यते-- अत्र [यत्र] संज्ञासंज्ञिसम्बन्धात् संज्ञात्वं तत्र लक्षणमिति। अथोत्तरकालं संज्ञात्वम् (अथोत्तरकालं लक्षणयोगः), तदा चाकृतणत्वोऽसौ शब्दः सम्प्रति णत्वं भजत इत्यनित्यत्वं शब्दानां स्यादित्याशङ्क्याह—कृतणत्वा इत्यादि।

इह द्वौ राशी कृतणत्वानामेको राशिर्नित्य एव, अकृतणत्वानामपर इति। तत्र ये कृतणत्वास्ते साधवो नित्या एव, एकद्रव्योपदेशित्वात् स्वभावेनैव ते संज्ञाशब्दा इत्यर्थः। शास्त्रे 'पूर्वपदात् संज्ञायामगः' इत्यनेन कृतणत्वानामेव तेषां साधुत्वमन्वाख्यायत इति कृतणत्वता शास्त्रे प्रक्रियासमाश्रयणेनैषामुक्तेति न कश्चिद्विरोधः ॥१६२॥

---

खरणसादयः शब्दाः, तान् एकद्रव्योपदेशित्वात् = एकस्मिन् द्रव्ये संज्ञिनि उपदेशित्वात् = वाचकत्वेन शास्त्रीयोपदेशवत्त्वात् संज्ञाभूतान्, 'पूर्वपदात् संज्ञायामग' (८।४।३) इत्यादिशास्त्राणि साधून् संप्रचक्षते = अन्वाचक्षते, न तु तेष्वकृतणत्वेषु णत्वं कुर्वन्ति, तथा सति शब्दानित्यत्वप्रसङ्गादिति।

एवञ्च खरणसादयः शब्दा नित्यं कृतणत्वाः, न तु तेषु संज्ञासंज्ञिसम्बन्धात् प्राक तदुत्तरं वा णत्वविधियोग इति खरणसादयः शब्दा नित्या एव। "पूर्वपदात् संज्ञायामगः" इति सूत्रेण तु तेषां साधुत्वमात्रमभ्यनुज्ञायत इति न संज्ञाशब्दानां तेषा (८।४।३) शब्दार्थसम्बन्धस्य चानित्यत्वप्रसङ्ग इति कारिकाशयः।

यद्वा – कारिकायां नित्याः खरणसादय इति क्वचित् पाठः। कारिकायाश्चान्यथाऽवतरणम्। तथाहि—इह संज्ञाशब्दाना खरणसादीनाम्, संज्ञिसम्बन्धात् पित्रादिकृतात्, प्राग्लक्षणयोगः = पूर्वपदात्संज्ञायामग इत्यादिविधिशास्त्रसम्बन्धः, अथवा तेषा तदुत्तरकालं तद्योग इति संशयः। तत्र यदा तेषां ततः प्राग्लक्षणयोग इति पूर्वः कल्पस्तदा तदानीमसौ खरनसादिः, न कस्यचित् संज्ञेति हेतोः संज्ञात्वप्रयुक्त णत्वादिकार्यं तत्र कथं स्यादिति।

अत्रोच्यते—यत्र संज्ञासंज्ञिसंबन्धात् संज्ञात्वं भावि; तत्र लक्षणं प्रवर्तत इति। "पूर्वपदात् संज्ञायामगः" (८।४।३) इति सूत्रे च संज्ञायां भाविन्यामित्यर्थः स्वीक्रियत इति न काऽप्यनुपपत्तिरिति।

एवमपि –"अथ संज्ञासंज्ञिसंबन्धादुत्तरकालं लक्षणयोगः" इति द्वितीयकल्पे दोषो दुर्वारः, तदा च पूर्वमकृतणत्वोऽसौ खरनसादिशब्दः सम्प्रति णत्वं भजत इत्यनित्यत्वं शब्दानां स्यादिति, इमामाशङ्कामपनेतुमाह—कृतणत्वा इत्यादि।

अयं भावः—इह संज्ञाशब्दानां द्वौ राशी—कृतणत्वानामेको राशिर्नित्य एव; अकृतणत्वानामपर इति। तत्र ये शब्दाः खरणसादयः कृतणत्वाः, ते च = ते तु, नित्या एव, एकद्रव्योपदेशित्वात् = पित्रादिसंकेतविषयीभूतैकद्रव्यवाचकत्वात्, शास्त्रप्रवृत्तिं विना स्वभावेनैव ते संज्ञाशब्दा इति यावत्। पूर्वपदात्संज्ञायाम। इत्यादिशास्त्राणि तु स्वभावतः कृतणत्वान् तान् साधून् संप्रचक्षते = अन्वाचक्षत इति न णत्वादिविधिवैयर्थ्यमिति। एवञ्च सिद्धानां तेषां साधुत्वान्वाख्यानायैव णत्वादिप्रक्रियासमाश्रयणमिति न कश्चिद् विरोध इति ॥१६२॥

एतदेव प्रतिपादयितुमाह—

**गोत्राण्येव तु तान्याहुः संज्ञाशक्तिसमन्वयात् ।**
**निमित्तापेक्षणं तेषु स्वार्थे नावश्यमिष्यते ॥३६३॥**

संज्ञाशब्दकुलानि व्यवस्थितानि, न तेषु स्वार्थे संज्ञिनि निमित्तान्वेषण-मिष्यते नित्यत्वाच्छब्दार्थसम्बन्धस्य । तद्वाचकास्ते स्ववाच्ये नियता इति स्वरूपव्यतिरेकेण निमित्तान्तरान्वेषणमव्यापकमेव ॥३६३॥

ननु च नित्यत्वं संज्ञाशब्दानामनुपपन्नं सम्प्रति क्रियमाणत्वात्, यस्मा-त्पुरुषेच्छया यथा कथञ्चिन्नियुज्य संज्ञाः क्रियन्ते । उक्तं च-

---

पूर्वकारिकाया निगूढं यदुक्तम्—कृतणत्वानामेको राशिर्नित्य एव, णत्वविधिना तेषां साधुत्वमात्रमन्वाख्यायते, न त्वपूर्वं णत्वं क्रियत इति एतदेव स्फुटं प्रतिपादयितुमाह— **गोत्राण्येवेति ।**

अयमर्थः—ये संज्ञाशब्दाः कृतणत्वाः खरणसादयस्तानि तु गोत्राण्येवाकृतणत्वेभ्यः खरनसादिभ्यः पृथग्भूतानि संज्ञाशक्तिसमन्वयात् = संज्ञायत इति संज्ञा = संज्ञी, "आतश्चो-पसर्गे" ( ३।३।१०६ ) इति कर्मण्यङ् । तत्र तेषां शक्तेः समन्वयात् सम्बन्धाद् व्यवस्थितानि गोत्राण्येव = संज्ञाशब्दकुलान्येव नित्यान्याहुर्वैयाकरणाः ।

वस्तुतस्तु संज्ञाः शक्तिसमन्वयादिति व्यस्तं पदद्वयं भाति । एवं सति या इति प्रथमा-बहुवचनान्तं यत्पदमध्याहृत्योद्देश्यं निर्दिष्टं भवति । एवं सति याः संज्ञास्तानि तु शक्ति-समन्वयाद् गोत्राण्येवाहुरिति योजना । अत्र विधेयगोत्रलिङ्गमाश्रित्य नपुंसकनिर्देशः । स्वार्थ = स्ववाच्ये बोधनीये, तेषु संज्ञाशब्देषु, निमित्तापेक्षणम् = शब्दस्वरूपातिरिक्तस्य योगलभ्यस्य प्रवृत्तिनिमित्तस्यान्वेषणम्, नावश्यमिष्यते, खरनासावत्त्वादिरूपयोगार्थरहिते-ऽपि खरणसादिसंज्ञाशब्दप्रयोगदर्शनात् । नावश्यमिष्यत इत्युक्त्या क्वचित् योगार्थं प्रवृत्ति-निमित्तीकृत्यापि संज्ञाशब्दानां प्रयोगो भवत्येवेति सूचितम् । तदुक्तं कविभिः—

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।

निरीक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ इति ।(रघुवं ३सर्गः)

यत्त्वत्र पुण्यराजेनोक्तम्— 'संज्ञाशब्दकुलानि व्यवस्थितानि, न तेषु स्वार्थे संज्ञिनि निमित्तान्वेषणमिष्यते, नित्यत्वाच्छब्दार्थसम्बन्धस्य'' इति । अत्र शब्दार्थसम्बन्धस्य नित्यत्वं प्रवाहानादित्वरूपम्, न त्वाकाशादिवत् स्वरूपतो नित्यत्वम्, संज्ञाशब्दानामर्थसम्बन्धस्य तत्तत्काले पित्रादिकृतत्वादिति ।

यदप्युक्तम्— 'स्वरूपव्यतिरेकेण निमित्तान्तरान्वेषणमव्यापकमेव'' इति । अत्राव्या-पकत्वं संज्ञाशब्दप्रयोगनिष्ठव्याप्यतानिरूपितव्यापकत्वाभावरूपं बोध्यमिति ॥३६३॥

"कृतकत्वादनित्यत्वं सम्बन्धस्योपजायते ।
संज्ञायाः सा हि पुरुषैर्यथाकामं नियुज्यते ॥"

यथा हि पांसुरेखाणां बालकैर्मधुरादयः संज्ञाः क्रियन्ते, संज्ञासु सर्वास्वेपैव कल्पना इत्याशङ्क्य समर्थयितुमाह—

**व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।**
**नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥३६४॥**

संज्ञाशब्दानां कचित्संज्ञिनि यदि परं व्यवहारार्थं पुरुषैर्नियममात्रं क्रियते । यथाऽस्मिन् गृहेऽद्यप्रभृति डित्थशब्दवाच्योऽयमिति बोद्धव्यम् शब्दार्थसम्बन्धस्तु डित्थादिष्वनादिर्योग्यतालक्षणो नित्य एव, यद्वक्ष्यति—

"इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥" इति ।
( वा० प० ३।३।२९ )

तदेवं यथा गवादिष्वनादियोग्यतासम्बन्धाद्वाचकत्वं गोशब्दादीनां तथैव डित्थादीनां बोद्धव्यम् ॥३६४॥

---

ननु प्रागुक्तकारिकाद्वयोक्तं संज्ञाशब्दाना नित्यत्वं नोपपद्यते, तेषां तत्तत्पिण्डे सम्बन्धस्य तत्तत्काले पित्रादिभिः क्रियमाणत्वात् । तथाहि ते ते संज्ञाशब्दास्तत्तदर्थे तत्तत्काले तत्तत्पिण्डे सन्तमर्थं सत्त्वेनासन्तञ्च तमारोप्य प्रवृत्तिनिमित्तीकृत्य यथाकथञ्चिन्नियुज्यते । उक्तञ्च—

कृतकत्वादनित्यत्व सम्बन्धस्योपजायते ।
संज्ञायाः सा हि पुरुषैर्यथाकामं नियुज्यते ॥
यथा हि पांसुरेखाणा बालकैर्मधुरादयः ।
संज्ञाः क्रियन्ते सज्ञासु सर्वास्वेपैव कल्पना ॥

इत्याशङ्क्य संज्ञाशब्दानां नित्यत्वं समर्थयितुमाह—व्यवहारायेति ।

अयमर्थः—यद्यपि डित्थादिसंज्ञाशब्दानां सर्वास्वप्यतीतानागतवर्तमानासु डित्थादिव्यक्तिषु शक्तिः, तथापि संज्ञानाम् = संज्ञाभूतडित्थादिशब्दानाम् क्वचित्संज्ञिनि पिण्डविशेषे व्यवहाराय पित्रादिना नियमः क्रियते । यथाऽस्मद्गृहेऽद्यप्रभृति डित्थशब्दवाच्योऽयमिति । डित्थादिपदानां डित्थादिषु व्यक्तिषु योग्यतालक्षणः सम्बन्धस्तु गवादिपदानां गवादिवत् = गवादिष्विव, नित्य एव, प्रवाहानादित्वात् । एतच्च वक्ष्यति—

इन्द्रियाणा स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दाना सम्बन्धो योग्यता तथा ॥ ( ३ सम्बन्ध २९ )

एवं शब्दार्थयोः सम्बन्धस्य नित्यत्वे तदाश्रयशब्दार्थयोरपि तत्स्थित्यनुपपत्त्या स्वरूपेण प्रवाहानादित्वेन वा यथासम्भवं नित्यत्वम् ।

तदुक्तं वार्त्तिककृता—"सिद्धे शब्दार्थसम्बन्धे" इत्यादि । तदेवं यथा गोपिण्डा-

शास्त्रेऽपि तथैव व्यवहारनियमः संज्ञाशब्दानामवसातव्य इत्याह—

**वृद्धयादीनां च शास्त्रेस्मिञ्छक्त्यवच्छेदलक्षणः ।**
**अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥३६५॥**

शास्त्रे वृद्धयादीनां संज्ञाशब्दानां सर्वार्थप्रकाशनशक्तियोगः संज्ञिनामादैजादीनां च सर्वशब्दवाच्यता योग्यता, अतः केवलं शास्त्रे संज्ञान्तरादवच्छिद्यादैजादिप्रत्यया यत एव शक्तिर्वृद्धयादीनां नियम्यते, आदैजादीनां वृद्धयादिशब्दवाच्यत्वमेव व्यवस्थाप्यत इति सहजशक्तिप्रतिनियम एव वाच्यवाचकयोरुच्यते, न पुनः कृत्रिमसम्बन्धाधानं विज्ञेयम्, यथा विशेषणविशेष्ययोरनादिः शब्दवाच्यतात्मक एव सम्बन्धः न पुनस्तत्र पुरुषेण नीलादियोगः क्रियत इति ॥३६५॥

---

दिष्वनादियोग्यतारूपात् सम्बन्धात् तद्वाचकत्वं गोशब्दादीनाम् तथैव डित्थादिशब्दानां डित्थादिव्यक्तिवाचकत्वमनादियोग्यतारूपात् सम्बन्धादेवेति बोध्यम् ॥३६४॥

शास्त्रेऽपि वृद्धयादिसंज्ञाशब्दाना डित्थादिसंज्ञाशब्दवदेव व्यवहाराय क्वचित् संज्ञिनि नियमोऽवसातव्य इत्याह—वृद्धयादीनामिति ।

अयमर्थः—लोके डित्थादिसंज्ञाशब्दानामिवास्मिन् शास्त्रे वृद्धयादिसंज्ञाशब्दानां चापि शक्त्यवच्छेदलक्षणः=एकस्मिन् संज्ञिनि शक्त्यवच्छेदः शक्तेर्नियमनं लक्षणं ज्ञापकं यस्य स तथाभूतः । इतरसंज्ञिनो विहाय एकस्मिन् संज्ञिनि शक्तेर्नियमनेन लक्ष्यमाण इति यावत् । अर्थेन सह योग्यतालक्षणोऽकृत्रिमः=नित्यः=स्वाभाविकः, अभिसम्बन्धः संसर्गः ।

तदुक्तं परमर्षिणा—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः इति । अत्र औत्पत्तिक इत्यस्य स्वाभाविकोऽनादिरित्यर्थः । उत्पत्त्या सहैवाभिनिर्वृत्त औत्पत्तिकः । शब्दानामुत्पत्तिस्तु प्रवाहरूपेणानादिः, विशेषणविशेष्यवत् । तद्यथा विशेषणविशेष्ययोर्यथासम्भवं यः कोऽपि सम्बन्धोऽनादिरेव वाक्यरूपशब्दवाच्यः, न तु पुरुषेण स क्रियत इति ।

अयं भावः—यद्यपि शास्त्रे आदैजादिष्वर्थेषु संकेतितानां वृद्धयादिसंज्ञाशब्दानां सर्वे सर्वार्थवाचका इत्यभ्युपगमेन सर्वार्थप्रकाशनशक्तियोगात् सर्वैरर्थैः सहानादियोग्यतालक्षणः सम्बन्धः, अर्थाना च आदैजादीना सर्वशब्दवाच्यतारूपयोग्यतालक्षणः सम्बन्धोऽप्यनादिरिति वृद्धिरादैजित्यादिसंज्ञासूत्रैस्तत्तच्छब्दाना तत्तदर्थेषु संकेतनं व्यर्थम्, तथापि मच्छास्त्रे वृद्धयादिपदैरादैजादय एव प्रत्येतव्या इत्येवरूपेण वृद्धयादिपदानामादैजादिष्वर्थेषु शक्तिर्नियम्यत इत्यादैजादीनामेव वृद्धयादिपदवाच्यत्वं शास्त्रे व्यवस्थाप्यत इति रीत्या वाच्यवाचकयोः सहजैव शक्तिः संज्ञासूत्रैः शास्त्रे नियम्यते न तु वृद्धयादिशब्दानामादैजादिष्वर्थेष्वपूर्वा शक्तिराधीयते, यथा नीलो घट इत्यादिवाक्येषु विशेषणविशेष्ययोरनादिरेव वाच्यतारूपयोग्यतात्मकः सम्बन्धः, न तु तत्र प्रयोक्त्रा प्रतिपत्त्रा वा पुरुषेण घटादिषु नीलादियोगोऽपूर्वः क्रियत इति । एवञ्च शास्त्रे सर्वाण्यपि संज्ञासूत्राणि नियमसूत्राण्येव न तु विधिसूत्राणीति बोध्यमिति ॥३६५॥

अथ संज्ञाप्रवृत्तिनिमित्तं विचारयितुमाह—

**संज्ञास्वरूपमाश्रित्य निमित्ते सति लौकिकी ।**
**काचित् प्रवर्तते काचिन्निमित्तासंनिधावपि ॥३६६॥**

सर्वसंज्ञाशब्दानां स्वरूपमेव प्रवृत्तिनिमित्तं बोद्धव्यम् । तस्मिन् सति कुत्रचिदर्थानुपात्तं निमित्तं विद्यते, कुत्रचित्तस्याभाव एव डित्थादाविति कैश्चित् तत्राप्युच्यत एव ॥३६६॥

न केवलं तत्रैकाक्षराणां स्वरूपमेव प्रवृत्तिनिमित्तं विद्यते, यावन्महतीनामपि स्वरूपमेवोपनिबन्धनं प्रवृत्तिनिमित्तं बोद्धव्यमित्याह—

**शास्त्रे तु महती संज्ञा स्वरूपोपनिबन्धना ।**
**अनुमानं निमित्तस्य संनिधाने प्रतीयते ॥३६७॥**

---

अथ संज्ञाशब्दानां प्रवृत्तिनिमित्तं विचारयितुमाह—**संज्ञास्वरूपमिति ।**

अयं भावः—इह शास्त्रे लोके च संज्ञाशब्दा द्विविधाः—केचिद् रूढाः, केचिद् योगरूढा इति । तत्राद्याः शास्त्रे टिघुभादयः, द्वितीयास्तु कर्मप्रवचनीय-सर्वनाम-सर्वनामस्थानादयः । कर्म क्रिया प्रोक्तवन्तः कर्मप्रवचनीया इति, सर्वेषां नाम सर्वनाम इति, सर्वम् = अविकृतं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानमिति यथायथं तासां संज्ञानां योगः । लोकेऽपि रूढा डित्थडवित्थादयः, योगरूढास्तु शत्रुघ्नबलभद्रप्रलम्बघ्नादयः । ता एता द्विविधा अपि संज्ञा यद्यपि स्वरूपमेव प्रवृत्तिनिमित्तं समाश्रित्य स्वार्थेषु प्रवर्तन्ते, तथापि रूढेष्वासां स्वरूपमर्थाननुगतम्, योगरूढेषु त्वर्थानुगतमिति भेदः ।

अक्षरार्थस्तु—काचिद् लौकिकी संज्ञा—शत्रुघ्नादिशब्दरूपा । इदं शास्त्रीयसंज्ञाया अप्युपलक्षणम् । शास्त्रीयाऽपि सर्वनामादिसंज्ञा निमित्ते सति = शत्रुहननादिरूपे सर्वार्थवाचकत्वादिरूपे च प्रवृत्तिनिमित्ते सति, स्वरूपमाश्रित्य = स्वस्वरूपं प्रवृत्तिनिमित्तमाश्रित्य प्रयुज्यमाना स्वार्थं बोधयितु प्रवर्तते, काचित्तु डित्थादिरूपा टिघुभादिरूपा च, निमित्तासन्निधावपि शब्दस्वरूपातिरिक्तस्य निमित्तस्य सन्निधानाभावेऽपि = असत्त्वेऽपि प्रवर्तत इति ॥ ३६६ ॥

न केवलं शास्त्रे एकाक्षराणां टिघुभादिसंज्ञानामेव स्वरूपं प्रवृत्तिनिमित्तं किन्त्वन्वर्थाना महतीना सर्वनामादिसंज्ञानामपि सर्वार्थवाचकत्वादिरूपप्रवृत्तिनिमित्तान्तरसत्त्वेऽपि स्वरूपमपि प्रवृत्तिनिमित्तमित्यममर्थं प्रागुक्तमपि निगूढमत्र विशदीकर्तुं तत्र प्रवृत्तिनिमित्तयोर्माने भङ्गिभेदञ्च प्रदर्शयितुमाह—**शास्त्र इति ।**

अयमर्थः—शास्त्रे तु महती संज्ञा = सर्वनामादिसंज्ञा अपि, यद्यपि स्वरूपोपनिबन्धना स्वस्वरूपप्रवृत्तिनिमित्तका भवति, तथापि तत्र निमित्तस्य प्रवृत्तिनिमित्तस्यावयवार्थस्य

केवलं तत्र निमित्तस्यावयवार्थस्य संनिधाने सत्यनुमानं तत्सद्भावे प्रतीयते, अनुमानेनावयवार्थोऽपि तत्र निमित्तमिति प्रतीयत इत्यर्थः ॥३६७॥

कथं तदनुमानमित्याह—

**आवृत्तेरनुमानं वा सारूप्यात्तत्र गम्यते ।**
**शब्दभेदानुमानं वा शक्तिभेदस्य वा गतिः ॥३६८॥**

स एक एव द्विरावर्तते तत एकेन स्वरूपनिरूपितसंज्ञिनः प्रतिपत्तिरपरेणावयवार्थनिबन्धनता व्यवस्थाप्यते। नन्वावृत्तिरनुमीयते किं यदि ह तत्र तवाभीष्टं स्याद् द्विधोच्चारणादित्याह—सारूप्यादिति । सारूप्यादेक एवोच्चारितः शब्दः इति गम्यते । अथवा तन्त्रेण द्वावेव शब्दावुच्चारितावित्यनुमीयत इत्याह— शब्दभेदानुमानं वेति । तत एकेन स्वरूपाच्छादितसंज्ञिनः प्रतिपत्तिरपरेणावयवार्थनिबन्धनेति ।

---

सन्निधाने सति अनुमानम् = प्रवृत्तिनिमित्तत्वेनानुमीयमानोऽवयवार्थः, बाहुलकात् कर्मणि ल्युट् । प्रवृत्तिनिमित्तमिति प्रतीयते । अनुमानेन तत्रावयवार्थोऽपि प्रवृत्तिनिमित्तमिति प्रतीयत इति यावत् ॥ ३६७ ॥

कथं शास्त्रे महासंज्ञाप्रयोगेऽवयवार्थस्य प्रवृत्तिनिमित्तत्वानुमानमिति जिज्ञासायामाह— **आवृत्तेरिति** ।

अयमर्थः—तत्र = शास्त्रे महासंज्ञाप्रयोगे, सारूप्यात् = स्वरूपप्रवृत्तिनिमित्तकस्याऽवयवार्थप्रवृत्तिनिमित्तकस्य च सर्वनामादेर्महासंज्ञाशब्दस्य परस्परमानुपूर्वीसाम्यात् आवृत्तेरनुमानं वा गम्यते । अत्र वाशब्दो वक्ष्यमाणविकल्पापेक्षया । अनुमानशब्दार्थश्चात्रानुमितिः । गम्यते = प्रतीयते, प्रतीतिश्चात्र मानसप्रत्यक्षरूपा, अनुमितेर्ज्ञानरूपत्वात् ।

अनुमानाकारश्च—शास्त्रे प्रयुक्तः सर्वनामादिमहासंज्ञाशब्दो द्विधा आवर्तयितव्यः, स्वशक्यार्थनिष्ठप्रवृत्तिनिमित्तद्वयसंबन्धित्वे सति सारूप्यात्, यन्नैवं, तन्नैवं यथा घटादिपदमिति ; एवञ्च शास्त्रे एक एव प्रयुक्तः सर्वनामादिमहासंज्ञाशब्दो द्विरावर्तते । तत एकेन शब्देन स्वरूपं प्रवृत्तिनिमित्तमादाय तन्निरूपितस्य संज्ञिनः प्रतिपत्तिः, अपरेण त्ववयवार्थं सर्वार्थवाचकत्वादिकं प्रवृत्तिनिमित्तमादाय संज्ञिनः प्रतिपत्तिरिति व्यवस्थाप्यत इति । शब्दभेदानुमानं वा, वा = अथवा, शब्दभेदस्यानुमानम् = एक एव महासंज्ञाशब्दः शब्दतन्त्रेण द्विधोच्चारित इत्यस्यानुमानम् । एवञ्च पूर्वस्मिन् पक्षे आवृत्तिः साध्यभूता । अत्र तु तन्त्रेण शब्दभेद इति विशेषः । हेतुस्तु स एव तादृशं सारूप्यम् । एवञ्चात्रापि कल्पे एकेन शब्देन संज्ञास्वरूपाच्छादितस्य संज्ञिनः प्रतिपत्तिरपरेणावयवार्थनिबन्धना सेति ।

तृतीयमपि पक्षं प्रदर्शयति—शक्तिभेदस्य वा गतिरिति । अत्र गतिर्ज्ञानम्, अनुमितिरिति यावत् । अत्रापि साध्यभेदेऽपि स एव हेतुस्तादृशं सारूप्यमिति । अस्मिन् पक्षे स

तृतीयमपे पक्षं प्रदर्शयितुमाह—शक्तिभेदस्य वा गतिरिति। स एवैको द्विशक्तिरुच्चारितस्तत एकया संज्ञिनः प्रतिपत्तिरपरेणा [-परया]वयवार्थसङ्गतिरिति ॥३३८॥

इदानीं लौकिकस्याकृत्रिमस्य क्वचिद् ग्रहणं, क्वचित् कृत्रिमस्य पारिभाषिकस्य, क्वचिदुभयगतिरिह शास्त्रे सम्भवतीत्युभयोरपि कृत्रिमाकृत्रिमयोः क्वचिदकृत्रिम एव व्याप्तेः परिगृहीत इतरस्यापि विषयं व्याप्नोतीति चातुर्विध्यं संज्ञाशब्दानां प्रदर्शयितुमाह—

**क्वचिद्विषयभेदेन कृत्रिमा व्यवतिष्ठते।**
**संख्यायामेकविषयं व्यवस्थानं द्वयोरपि ॥ ३६९ ॥**

---

एवैको महासंज्ञाशब्दो द्विशक्तिः सकृदुच्चरित इति गम्यते। एवं चैकया शक्त्या संज्ञास्वरूपाच्छादितस्य संज्ञिनः प्रतिपत्तिः, अपरया तु तत्राऽवयवार्थं प्रवृत्तिनिमित्तमादाय संज्ञिनः प्रतिपत्तिरिति।

पुण्यराजेन तु—आवृत्तेरनुमानं वेत्यत्र सारूप्यात् तत्र गम्यत इति वाक्यार्थो हेतुरित्यभिप्रेत्य वाक्यभेदः समाश्रितः। तथा च तन्मते एव वाक्यार्थः संपद्यते—अथवा महासंज्ञाप्रयोगे आवृत्तेरनुमानं भवति, यतस्तत्र सारूप्यादेक एव शब्द उच्चारित इति गम्यत इति। एवं हि तेनोक्तम्—'नन्वावृत्तिरनुमीयते किम्, यदिह तत्र तवाभीष्टं स्यात्, द्विधोच्चारणादित्याह—सारूप्यादिति। सारूप्यादेक एवोच्चारितः शब्द इति गम्यते' इति। अत्र किमित्यस्य किमर्थमित्यर्थः। यदि ह इत्यत्र 'यदि' इति पृथक् पदम्, 'ह' इति पृथक्। हशब्दश्च प्रसिद्धार्थे। एवञ्च यदि तत्र महासंज्ञाशब्दप्रयोगे तवाभीष्टं प्रसिद्धं स्यात्, तदाऽऽवृत्तिरनुमातव्या नान्यथेत्यर्थः। तथा च श्लेषेण द्विधोच्चारणादावृत्तिर्नानुमातव्येति शङ्काग्रन्थाशयः।

वस्तुतस्तु—अत्र पुण्यराजव्याख्याने आवृत्तेरनुमाने हेतुर्न निर्दिष्टो भवति, सारूप्यादित्यस्य एक एवोच्चारितो भवतीत्यत्र हेतुत्वोपगमात्। वाक्यभेदश्च भवतीतीदं व्याख्यानमुपेक्ष्यं प्रतिभाति ॥ ३६८ ॥

इदानीं संज्ञाशब्दानां चातुर्विध्यं प्रदर्शयितुमिष्टम्, तथाहि—क्वचिल्लौकिकस्याकृत्रिमस्य ग्रहणं भवति, तद्यथा—'शब्दवैरकलहा' (३।१।१७) इत्यादावकृत्रिमा लौकिकी करणसंज्ञा, धातोरित्यधिकारेण कृत्रिमायाः प्रातिपदिकनिष्ठायाः करणसञ्ज्ञाया अनुपपत्तेः। अत एवं 'कर्तरि कर्मव्यतिहारे' (१।३।१४) इत्यत्राप्यकृत्रिमैव कर्मसंज्ञा क्रियाबोधिका। कर्मव्यतिहारस्य क्रियाविनिमयरूपस्यैव लक्ष्ये दर्शनात्। 'कर्मण्यण्' (३।२।१) इत्यत्र कृत्रिमा संज्ञा शास्त्रीया, लक्ष्यानुरोधादेव। एव 'कर्तृकरणयोस्तृतीया' (२।३।१८) इत्यत्रापि कृत्रिमैव, कर्तृकारकसाहचर्यात्, तस्या एव तृतीयाप्रकृतित्वयोग्यत्वाच्च। क्वचित्तु व्यापकत्वादकृत्रिम एव परिगृहीतः कृत्रिमस्यापि विषयं लक्ष्यं व्याप्नोति, तद्यथा—'संख्याया अतिशदन्तायाः कन्' (५।१।२२) इत्यत्र कृत्रिमायाः प्रकरणाद् ग्रहणम्,

कृत्रिमा शास्त्रीया पारिभाषिक्युच्यते। सा विषयभेदेन व्यवतिष्ठते, न तु सर्वत्र तथैव व्यवस्था। यथा "कर्तरि कर्मव्यतिहारे" इत्यत्राकृत्रिमा गृह्यते, व्यतिहारस्यात्र कृत्रिमसंज्ञा [ संज्ञायामा ] श्रयणानुपपत्तेः। 'कर्मण्यण्' इत्यत्र कृत्रिमा शब्दवैरेत्यादावकृत्रिमा धात्वधिकारात्कृत्रिमाया अत्रानुपपत्तेः। 'कर्तृकरणयोस्तृतीया' इत्यत्र कृत्रिमेति क्वचिदेकत्रोभयरूपताया ग्रहणमिति दर्शयितुमाह—संख्यायामिति। संख्याविषये शास्त्रे कृत्रिमाकृत्रिमयोरपि समाश्रयणं शास्त्रीयाया 'बहुगुणवतुडती'त्यादिकाया अपि कृत्रिमाया लौकिक्या अथ [ प्य ] कृत्रिमाया विंशत्यादिकाया अतिशदन्ताया इति प्रतिषेधादत्र ज्ञापकाद् ग्रहणम् ॥ ३६९ ॥

क्वचिदकृत्रिमः संज्ञाशब्दो गृहीतः कृत्रिमस्यापि प्रत्यायनं करोतीति प्रदर्शयितुमाह—

**विषयं कृत्रिमस्यापि लौकिकः क्वचिदुच्चरन्।**
**व्याप्नोति दूरात्सम्बुद्धौ तथाहि ग्रहणं तयोः ॥ ३७० ॥**

---

अकृत्रिमायास्त्वतिशदन्ताया इति पर्युदासादिति, तदेतत् प्रदर्शयितुमाह—**क्वचिदिति**।

अयमर्थः—कृत्रिमा = शास्त्रे कृता, पारिभाषिकी = आधुनिकसंकेतरूपया परिभाषयाऽभिनिवृत्ता कर्मादिसंज्ञा विषयभेदेन विषयविशेषसमाश्रयणेन, व्यवतिष्ठते, न तु सर्वत्र ऐकैव व्यवस्था। तेन 'कर्तरि कर्मव्यतिहारे' ( १।३।१० ) इत्यत्र कर्मपदेनाऽकृत्रिमैव, 'कर्मण्यण्' इत्यत्र कृत्रिमैव गृह्यते। क्वचित्तु—''संख्याया अतिशदन्तायाः कन्' (५।१।२२) इत्यादौ, संख्यायाम् = संख्यापदे, एकविषयम् = एकविधिविषयकम्, द्वयोरपि = कृत्रिमाकृत्रिमसंज्ञयोः, व्यवस्थानम् = व्यवस्था, दृश्यत इति शेषः ॥ ३६९ ॥

क्वचिदकृत्रिमः संज्ञाशब्द उच्चारितः स्वार्थं प्रत्याययन् कृत्रिमस्याप्यर्थं प्रत्याययति। तद्यथा—'एकश्रुतिदूरात् सम्बुद्धौ' ( १।२।३३ ) इत्यत्र संबोधनं संबुद्धिरित्यर्थे लौकिकमकृत्रिमं संबुद्धिपद मुपात्तम्, कृत्रिमस्य='एकवचनं संबुद्धिः' ( २।३।४९ ) इत्यस्याप्यर्थं बोधयति। न च विपरीतमेव किं न स्यादिति वाच्यम्, दूरादिति पदसन्निधानेन संबुद्धिसंज्ञाया अत्रान्वर्थत्वविज्ञानात्। नह्यामन्त्रितविभक्तेर्दूरत्वमदूरत्वं च संभवति। संबोधनस्य तु क्रियारूपत्वेन कारकापेक्षत्वाद् दूरादित्यस्यापादानत्वेन विशेषणत्वसंभवः। दूरत्वं चात्र न देशकृतमाश्रीयते, अव्यवस्थितत्वात्, किन्तु संबोधनक्रियापेक्षं दूरत्वम्, यावति देशे प्राकृतप्रयत्नोच्चारितं संबोध्यमानेन न श्रूयते, किन्त्वधिकं प्रयत्नमपेक्षते, तत्सम्बुद्धौ दूरं भवति। ईदृशं च दूरत्व संबोधन एव, न तु विभक्तौ। कथं तर्हि संबुद्धिसंज्ञकविभक्तावेकश्रुतिस्वरसिद्धिः, तत्रापि संबोधनसत्त्वादिति गृहाण। एवञ्चात्र प्रागुक्तन्यायेन संबुद्धिपदे आवृत्त्या तन्त्रेण शक्तिभेदेन वा कृत्रिमाकृत्रिमयोर्ग्रहणसंभव इत्येतमर्थजातं प्रदर्शयितुमाह—**विषयमिति**।

लौकिकोऽकृत्रिमः संज्ञाशब्दः समुच्चरन् कृत्रिमस्यापि शास्त्रीयस्य विषयं व्याप्नोति, यथा 'एकश्रुति दूरात् सम्बुद्धौ' इत्यत्र सम्बोधनं सम्बुद्धिरिति लौकिकेन शास्त्रीयमप्येकवचनं सम्बुद्धिरिति गृह्यत एव, तत्रापि सम्बोधनस्य विद्यमानत्वादित्यर्थः ।। ३७० ।।

अथेदानीं वाक्यविचारप्रस्तावे क्वचित्प्रत्येकं वाक्यपरिसमाप्तिः क्वचित्समुदाय इति प्रदर्शयितुमाह --

**सङ्घैकशेषद्वन्द्वेषु केचित्सामर्थ्यलक्षणम् ।**
**प्रत्याश्रयमवस्थानं क्रियाणां प्रतिजानते ।। ३७१ ।।**

वाक्यवद्वाक्यार्थस्यापि प्रत्येकसमुदायपरिसमाप्ति वाक्यपरिसमाप्तिं प्रसङ्गान्मतभेदेन निरूपयति । तत्र वाक्यार्थस्य प्रत्येकपरिसमाप्तिरिति तावद्दर्शयति— सङ्घैकशेषद्वन्द्वेष्वित्यादिना । कदाचित्संघेनैकशेषेण द्वन्द्वेन वार्थप्रतिपादनं क्रियते, यथा ब्राह्मणा भोज्यन्तां 'ब्राह्मणो भोज्यतां' देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम् ।

---

अयमर्थः—क्वचिद् दूरात् संबुद्धावित्यादौ लौकिकोऽकृत्रिमः संबुद्ध्यादिसंज्ञाशब्दः समुच्चरन् कृत्रिमस्यापि शास्त्रीयस्य विषयमर्थं व्याप्नोति = व्याप्यावबोधयति । हि = यतः, तथा = तेन प्रकारेणाकृत्रिमसंज्ञायाः कृत्रिमसंज्ञाविषयार्थव्यापकत्वरूपेण, तयोः = द्वयोरपि संज्ञिनोस्तत्र ग्रहणं भवतीति ।। ३७० ।।

अथेदीनां वाक्यविचारप्रस्तावे क्वचित् प्रत्येकं वाक्यपरिसमाप्तिर्यथा भुज्यादिषु, क्वचित् समुदाये सा यथा दृश्यादिष्विति प्रदर्शयितुमाह— **संघैकशेषद्वन्द्वेष्विति ।**

अयमर्थः—केचित् प्रत्येकं वाक्यपरिसमाप्तिरिति वादिनः, संघैकशेषद्वन्द्वेषु = संघबोधनाय जात्यभिप्रायेण प्रयोगे, एकशेषेण प्रयोगे द्वन्द्वस्य प्रयोगे इति फलितार्थः । यथाक्रमं ब्राह्मणो भोज्यताम्, ब्राह्मणा भोज्यन्ताम्, देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युदाहरणानि । संघैकशेषद्वन्द्वेष्वित्यत्र 'निर्दिष्टेषु' इति विशेष्यबोधकं पदमध्याहार्यम् । संघपदस्य च संघबोधाभिप्रायविषये पदे लक्षणा । संघैकशेषद्वन्द्वेषु निर्दिष्टेषु, क्रियाणां भुज्यादीनाम्, सामर्थ्यलक्षणम् = सामर्थ्यम् = शब्दस्वाभाव्यं लक्षणं निमित्तं यस्मिन् तत् तथाभूतम्, प्रत्याश्रयम् = प्रतिकर्तृ, अवस्थानम् = अवसानरूपा = समाप्तिरूपा या स्थितिस्ताम्, प्रतिजानते = भुज्यादिक्रियाणा प्रत्याश्रयं परिसमाप्तिरिति प्रतिज्ञां कुर्वन्तीत्यर्थः ।

अयं भावः—वाक्यस्य आख्यातस्य यथा प्रत्येकं पदे परिसमाप्तिः सम्बन्धः संघैकशेषद्वन्द्वेषु निर्दिष्टेषु भवति, तथा वाक्यार्थस्यापि प्रत्येकं पदार्थे परिसमाप्तिः सम्बन्धो भवति ।

इयाँस्तु विशेषः—आख्यातपदस्य कर्तृबोधकपदेन सह सम्बन्धः पदार्थद्वारकः । आख्यातार्थस्य कर्तृपदार्थेन सह सम्बन्धस्तु साक्षादिति । क्वचित्तु वाक्यवद् वाक्यार्थस्यापि

अत्र ब्राह्मणकर्तृकाया भुजिक्रियाया वाक्यार्थभूताया प्रत्याश्रयमवस्थानं प्रतिजानतेऽभ्युपगच्छन्ति। कीदृशम् ? सामर्थ्यलक्षणमिति, सामर्थ्यं समर्थभावात्मकमग्रे निरूप्यमाणलक्षणं स्वरूपं [ निरूप्यमाणं लक्षणं निमित्तस्वरूपं ] यस्य तत्तथाविधं सामर्थ्यलक्षणत्वादित्यर्थः ॥ ३७१ ॥

अथ भुजिक्रिया कारकसमुदाय एव नाट्यक्रियावत् किं न समाप्यत इत्याह—

**भोजनं फलरूपाभ्यामेकैकस्मिन् समाप्यते।**
**अन्यथा हि व्यवस्थाने न तदर्थः प्रकल्प्यते ॥ ३७२ ॥**

इहैकेन पादप्रक्षालनमपरेणासनोपवेशनमपरेणान्नदानमन्येनान्ननिगरणमिति नैवं भुजिक्रिया निर्वर्तयितुमायाति, तस्मादसौ भुजिक्रिया फलेन तृप्तिलक्षणेन

---

समुदाये परिसमाप्तिः सम्बन्धो यथा देवदत्तयज्ञदत्तविष्णुमित्रा दृश्यन्तामित्यादौ दृश्यन्तामित्यस्य पदस्य द्वन्द्वेन पदसमुदायरूपेण सह संबन्धवदाख्यातार्थस्य दर्शनक्रियारूपस्य द्वन्द्वार्थेन समुदायेन संबन्धः। तत्र वाक्यार्थस्य प्रत्येकं परिसमाप्तिरिति पक्षो निरूप्यते—सर्वैकशेषद्वन्द्वेष्विति।

प्रागुदाहृतेषु सर्वैकशेषद्वन्द्वेषु ब्राह्मणकर्तृकाया भुजिक्रियाया वाक्यार्थभूतायाः प्रतिकर्तृ अवस्थानं प्रतिजानते तच्चावस्थानं वस्तुस्वाभाव्यरूपसामर्थ्यनिमित्तकं बोध्यम्। सामर्थ्यलक्षणमित्यस्य व्याख्यानमेवं पुण्यराजेन कृतम्—"सामर्थ्यं समर्थभावात्मकम् अग्रे निरूप्यमाणलक्षणं स्वरूपं यस्य तत्तथाविधम्, सामर्थ्यलक्षणत्वादित्यर्थः। अत्र अग्रे निरूप्यमाणं निमित्तस्वरूपं यस्य" इति पाठो युक्तः। अग्रे निरूप्यमाणम्, 'सामर्थ्यादवतिष्ठते" इति कारिकाया निरूप्यमाणमित्यर्थः। अत्र सामर्थ्यं वस्तुस्वाभाव्यरूपमिति टीकायां वक्ष्यते ॥ ३७१ ॥

ननु नाट्यक्रिया = नाटकवृत्ताभिनयक्रिया यथा कर्तृसमुदाये = अभिनेतृसमुदाय एव परिसमाप्यते, न तु प्रत्येकमिति प्रत्यक्षसिद्धम्, तथा भुजिक्रियापि नानाकर्तृनिर्वर्त्यत्वात् कर्तृसमुदाय एव परिसमाप्यत इति वक्तुं युक्तम्। तथाहि—यथा पचिक्रियाऽधिश्रयणाद्यधःश्रयणान्तव्यापारकलापरूपा, तथा भुजिक्रियापि पादप्रक्षालनासनोपवेशनान्नदानान्ननिगरणरूपव्यापारकलापरूपेति नानाकर्तृनिर्वर्त्यत्वात् कर्तृसमुदाय एव समाप्यत इति। तथाहि—एकेन भोक्तुः पादप्रक्षालनं क्रियते, अपरेण भोक्ता आसने उपवेश्यते, अपरेण तस्मै अन्नं दीयते, अन्येन च ( भोक्त्रा ) अन्नं निगीर्यत इति। एवञ्च नाट्यक्रियावद् भुजिक्रियाया अपि नानाकर्तृनिर्वर्त्यायाः कर्तृसमुदाय एव परिसमाप्तिरुचितेत्याशङ्क्याह— **भोजनमिति।**

अयमर्थः—भोजनम् = भुजधात्वर्थः, फलरूपाभ्याम् = तृप्तिरूपेण फलेन, रूपेण अन्नादानादिना = अन्नादानान्ननिगरणाभ्यां रूपाभ्यां च, एकैकस्मिन् प्रत्येकं कर्तरि समाप्यते।

रूपेणान्नदानादीनां [ णान्नादनादिना ] चैकाधिकरणेन निर्वर्त्यते, तथाऽनाश्रयणेन [ ऽनाश्रयणे च ] भुज्यर्थानिष्पत्तेः, भिन्नाधिकरणा सा स्वरूपं न प्रतिभजत इति प्रत्यक्षसिद्धमेव ॥ ३७२ ॥

एतदेव स्फुटयितुमाह—

**अन्नादानादिरूपां च सर्वे तृप्तिफलां भुजिम् ।**
**प्रत्येकं प्रतिपद्यन्ते न तु नाट्यक्रियामिव ॥ ३७३ ॥**

नियतस्वरूपा हि वस्तुगतयो दृश्यन्ते, नाट्यक्रियाऽनेकसाधनसाध्या सती फलवत्युपजायते, भुजिक्रिया त्वेकैककारकनिर्वर्त्येति वस्तुगतिः ॥ ३७३ ॥

---

हि = यतः, अन्यथा = प्रत्येकं परिसमाप्तेरन्यप्रकारेण समुदाये परिसमाप्तिरित्येव रूपेण व्यवस्थाने = भुज्यर्थस्य व्यवस्थाकरणे, तदर्थो = भुज्यर्थो न प्रकल्पते = न प्रसिद्ध्यति । क्वचित्तु न प्रकल्प्यत इति पाठः, स नायुक्तः, कर्तुरश्रवणेन तदन्वेषणे प्रतिपत्तिगौरवात् ।

अयं भावः—'चैत्रमैत्राविष्णुमित्रदेवदत्ता भोज्यन्ताम्' इत्यत्र चैत्रेण पादप्रक्षालनं भोक्तुः क्रियते, मैत्रेण च स आसने उपवेश्यते, विष्णुमित्रेण तु तस्मै अन्नं दीयते, देवदत्तेन तु तदन्नं निगीर्यत इत्येवमनेककर्तृसाध्या भुजिक्रिया पादप्रक्षालनादिनिगरणान्तव्यापारकलापरूपेति वक्तुं न शक्यते यतो भुजिक्रिया तृप्तिरूपेण फलेन तृप्तिसमानाधिकरणाभ्यां चान्नादानान्ननिगरणाभ्यां रूपाभ्यां निर्वर्त्यते । एवमस्वीकारे च भुज्यर्थानिष्पत्तेः ।

तथाहि—यदि पादप्रक्षालनाद्यन्ननिगरणान्तव्यापारकलापरूपा भुजिक्रिया स्यात्, तदा पादप्रक्षालनादिकर्तृष्वपि 'चैत्रो भुङ्क्ते' इति प्रयोगः स्यात् यथाऽधिश्रयणकालेऽपि 'पचति' इति प्रयोगः । न च सा भिन्नाधिकरणा स्वरूपं प्रतिभजत इति प्रत्यक्षसिद्धमेव । तस्मादन्नादानान्ननिगरणरूपैव भुजिक्रिया, न तु प्रागुक्तपादप्रक्षालनादिरूपेति न नाट्यक्रियावद् भुजिक्रियायाः कर्तृसमुदाये परिसमाप्तिरिति ॥ ३७२ ॥

पूर्वकारिकापूर्वार्धोक्तमेव स्फुटयितुमाह—**अन्नादानादिरूपामिति** ।

अयमर्थः—सर्वे लोकाः अन्नादानादिरूपाम्, आदिनाऽन्ननिगरणं गृह्यते, तृप्तिफलाञ्च भुजिम् = भोजनक्रियाम्, प्रत्येकं परिसमाप्तां प्रतिपद्यन्ते जानन्ति, न तु नाट्यक्रियामिव प्रागुक्तरीत्या समुदाये परिसमाप्तां प्रतिपद्यन्त इति । तृप्तिफलामिति कथनेन पादप्रक्षालनादेर्भुजित्वं पराकृतं भवति । क्वचित्तु अन्नदानादिरूपामिति पाठो दृश्यते, स तु न युक्तः, अन्नदानादिरूपक्रियायास्तृप्तिरूपफलव्यधिकरणत्वेन भुजित्वानुपपत्तेः ।

अयं भावः—नियतस्वरूपा हि लोके वस्तुगतयः = सिद्धवस्तुप्रकाराः साध्यवस्तुप्रकाराश्च, दृश्यन्ते । तद्यथा—'पशु' इति साम्यगर्थो निपातः, लोधं नयन्ति पशु मन्यमाना इति वेदे दर्शनात् । लोमवल्लाङ्गूलवदर्थकोऽपि । एवञ्च निपातार्थानिपातार्थयोः परिनिष्पन्नत्वाविशेषेऽपि निपातार्थस्य लिङ्गसंख्याद्यनन्वयित्वरूपमसत्त्वभूतत्वमेव स्वभावः । अनिपातार्थस्य

एतदेव दृष्टान्तान्तरेण व्याचष्टे—

**पाद्यवत् सा विभागेन सामर्थ्यादवतिष्ठते।**
**भुजिः करोति भुज्यर्थं न तन्त्रेण प्रदीपवत् ॥ ३७४ ॥**

श्राद्धकर्मणि ब्राह्मणेषु कर्त्रा यथा पाद्यमनेकाधिकरणं तदभ्यर्चनायोपकल्प्यते, तथैवेयं भुजिक्रिया सामर्थ्याद्वस्तुस्वाभाव्याद्विभागेनैवावतिष्ठत इति। न तु तन्त्रेण साधारण्येनासौ प्रदीपवदेकाधिकरणैव भुज्यर्थं तृप्तिलक्षणं करोति ॥३७४॥

अथ भुजिक्रियावदन्यासामपि क्रियान्तर[ रा ]समाश्रयणेन समुदायपरिसमाप्तिमुपदर्शयितुमाह—

**दृश्यादिस्तु क्रियैकापि तथाभूतेषु कर्मसु।**
**आवृत्तिमन्तरेणापि समुदायाश्रया भवेत् ॥३७५॥**

---

तु सत्त्वभूतत्वमेव नियतः स्वभावः। एव नाट्यक्रियाभुजक्रिययोः क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकधर्मविशेषरूपसाध्यत्वाविशेषेऽपि नाट्यक्रियाऽनेककारकसाध्या सत्येव फलवत्युपजायते भुजिक्रिया त्वेकैककारकसाध्या सत्येव फलवती भवतीति नियतस्वभावः साध्यवस्तुप्रकारभेद इति नाट्यक्रियायाः समुदाये परिसमाप्तिः, भुजिक्रियायास्तु प्रत्येकमिति ॥३७३॥

भुजिक्रियायाः प्रत्येकमेव परिसमाप्तिरित्येतदेव वस्तुसमुदाये परिसमाप्तिसाधकनाट्यक्रियातिरिक्तेन पादप्रक्षालनक्रियारूपेण दृष्टान्तेन साधयितुं विशेषरूपेणाह—**पाद्यवदिति**।

अयमर्थः--सा = भुजिक्रिया, पाद्यवत् = पादार्थमुदकं पाद्यं तद्वत्, सामर्थ्यात् = वस्तुस्वभाव्यात्, विभागेन विशिष्टे वैशिष्ट्यार्थे तृतीया। विभक्ते प्रत्येकमिति यावत्। अवतिष्ठते। श्राद्धकर्मणि ब्राह्मणेषु श्राद्धकर्त्रा यथा पादप्रक्षालनार्थमुदकमनेकाधिकरणस्थं प्रत्येकं तेषामभ्यर्चनायोपकल्प्यते, तथा भुजिक्रियापीयं वस्तुस्वभाव्यरूपात् सामर्थ्याद् विभागेनैव प्रत्येकमवतिष्ठत इति भावः। अत्र हेतुमाह—यतो भुजिः = भुजिक्रिया, भुज्यर्थम् = भुजिक्रियाप्रयोजनं तृप्तिरूपं प्रदीपवत् तन्त्रेण = साधारण्येन न करोति। अत्र तन्त्रपदस्य साधारण्ये लक्षणा, एकस्यास्य पदानेकार्थबोधकत्वं तन्त्रमिति तन्त्रलक्षणेनार्थबोधकतो तन्त्रस्याप्यनेकार्थसाधारण्यात्।

अयं भावः—यथा प्रदीप एकाधिकरणस्थोऽनेकेषां विषयाणामनेकाधिकरणस्थानां साधारण्येन प्रकाशं करोति, तथा भुजिरेकाधिकरणस्था तन्त्रेण साधारण्येन न भुज्यर्थं तृप्तिलक्षणं करोति, वस्तुस्वभावस्य नियतत्वादिति व्यतिरेके दृष्टान्तः ॥ ३७४ ॥

अथ संघैकशेषद्वन्द्वेषु सर्वा अपि क्रियाः समुदाये परिसमाप्ताः। तत्रानेकाधिकरणस्था तृप्तिफला भुज्यादिक्रिया आवृत्तिरूपक्रियान्तरसमाश्रयणेन प्रत्येकं परिसमाप्तिमेत्य सामान्यरूपेण समुदाये परिसमाप्तिमेति, समुदायान्वयाभावे द्वन्द्वैकशेषयोरनुपपत्तेः। अनेकस्य मिलि-

देवदत्तयज्ञदत्तविष्णुमित्रा दृश्यन्तामित्यत्र दृशिक्रिया तथाभूतेषु योग्यदेश-स्थितेषु विषयेषु प्रत्येकपरिसमाप्तिं विना भुक्तिवन्नोपपद्यत इति नोच्यते, युगपदेवात्र दर्शनक्रियाधिगमफला समुदायमाप्नोतीत्यसौ समुदायाश्रया भवेत्॥ ३७५ ॥

अथ पच्यादिक्रिया किं समुदायपरिसमाप्ता, किं वा प्रत्येकं समाप्तेत्या-शङ्क्याह—

**भिन्नव्यापाररूपाणां व्यवहारादिदर्शने ।**
**कर्तॄणां दर्शनं भिन्नं संभूयार्थस्य साधकम् । ३७६॥**

---

तस्य एकत्रान्वये हि द्वन्द्वस्तदपवाद एकशेषो वा भवतीत्यभ्युपगमात् । एकाधिकरणस्था = एकाधिकरणस्थानेककर्मिका अधिगमफला दृश्यादिक्रिया स्वावृत्तिरूपक्रियान्तरसमाश्रयण विनैव समुदाये परिसमाप्तिमेति, प्रतिनियतेन वस्तुस्वाभाव्येन तथैव योग्यत्वादितीदानीमुप-दर्शयितुमाह— दृश्यादिस्त्विति ।

तदेतदवतरणम्—"अथ भुजिक्रियावदन्यासामपि क्रियान्तरासमाश्रयणेन समुदाय-परिसमाप्तिमुपदर्शयितुमाह" इति पुण्यराजकृतावतरणदर्शनमूलकम् । प्रकाशे "क्रियान्तर-समाश्रयणेन" इति पाठस्त्वयुक्त एवार्थासंगतेः ।

अयं तु कारिकार्थः—दृश्यादिस्तु क्रिया, अत्र तुशब्दो भुजिक्रियातो दृश्यादिक्रियाया वैलक्षण्यं द्योतयति । संघैकशेषद्वन्द्वेषु एकापि = एकैव, न तु भुजिक्रियावद् आवृत्त्याऽनेकाः, तथाभूतेषु कर्मसु = एकाधिकरणस्थेषु योग्यदेशस्थितेषु योग्येषु कर्मसु सत्सु, आवृत्ति-मन्तरेणापि समुदायाश्रया = समुदायपरिसमाप्ता भवेदिति । पुण्यराजेन त्वियं कारिका व्याख्याता ॥ ४७५ ॥

पूर्वं संघैकशेषद्वन्द्वेषु प्रत्येकपरिसमाप्ततृप्तिफला भुजिक्रिया प्रत्येकं कर्तरि परिसमाप्यते समुदायपरिसमाप्ताधिगमफला तु दृश्यादिका क्रिया कर्तृसमुदाये परिसमाप्यत इत्युक्तम् । क्रिया प्रत्येकं कारके परिसमाप्यते, कारकसमुदाये वा परिसमाप्यत इत्ययं विचारस्तु प्राङ् न कृतः, तत्र भुजिक्रियाफलस्य तृप्तिलक्षणस्य कारकसमुदाये प्रत्येकं वा कारकेऽसम्भवात् । दृशिक्रियाफलस्य चाधिगमस्य प्रत्येकं कारकेषु तत्समुदाये वाऽसम्भवादिति ।

अथाधुना पच्यादिकानां क्रियाणां तत्फलानां च प्रत्येकं कारकेषु तत्समुदाये वा परिसमाप्तेरस्ति सम्भवः, पचिक्रियाया अधिश्रयणाद्यधःश्रयणान्तव्यापारकलापरूपत्वात् । एवमन्यधात्वर्थक्रियाणामप्यवान्तरक्रियाकलापरूपत्वमवसेयम् । एवञ्च पच्यादिक्रिया किं कारकसमुदायपरिसमाप्ता, किं वा प्रत्येकं कारकेषु परिसमाप्तेत्याशङ्क्य क्रियासमुदायरूपा सा योग्यतया कारकसमुदाये परिसमाप्तेति पक्षस्य निर्दिधारयिषयाऽऽह— **भिन्नव्यापार-रूपाणामिति** ।

देवदत्तः काष्ठैः स्थाल्यामोदनं पचति, विक्लिद्यतस्तण्डुलान् विक्लेदयतीत्यत्र भिन्नव्यापाररूपाणां कारकाणां दर्शनं भिन्नं प्रार्थनादिको व्यापारो भिन्नः, स सम्भूय सङ्घादर्थस्य पाकक्रियालक्षणस्य साधको दृश्यते व्यहारादिदर्शन इति। व्यवहारः कश्चिन्नियतविषय एवोपयोगोऽत्राभिप्रेतः। आदिग्रहणेन तदन्येषां परिग्रहः। तेषां दर्शनं समारम्भः प्रारम्भ इति यावत्। तस्मिन् सतीत्यर्थः।

एतदुक्तं भवति- कर्तृस्था वा क्रिया भवति कर्मस्था वेत्यत्र पचिक्रिया कर्मणि समवेता न समुदाय इति केचित्। अन्ये त्वाहुः— यद्यपि कर्मणि

---

अयमर्थः—देवदत्तः काष्ठैः स्थाल्या तण्डुलं पचतीत्यत्र काष्ठव्यापारोऽग्नेः संधुक्षणात्मकः, स्थालीव्यापारस्त्वधिश्रयणम् = चुल्युपरिभागस्याश्रयणमिति यावत्। तण्डुलव्यापारोऽपि कश्चन स्वनिष्ठविक्लित्यनुकूल इतरकारणव्यापारविलक्षणः स्वासाधारणः। एवञ्च भिन्नव्यापाररूपाणाम्, भिन्नानि व्यापाररूपाणि येषां येषु वा तानि तथाभूतानि तेषाम्, कर्तृणाम् = कर्तृपदस्येतरकारकोपलक्षणतया कारकाणामित्यर्थः। दर्शनम् = भिन्नव्यापारवत्त्वेन दर्शनम् भिन्नम्, व्यापारो भिन्न इति यावत्। व्यवहारादिदर्शने सति, व्यवहारः = अधिश्रयणादिरूपेषु तत्तदर्थेषु प्रत्येकं पचतिशब्दप्रयोगरूपः आदिपदेन पचतिशब्दादधिश्रयणादिरूपस्यार्थस्य प्रतिनियतो बोधः, तत्तदर्थबोधने पचतिपदस्य तात्पर्यम्, तस्मात् पदात् प्रतिनियतस्य तदर्थस्योपस्थितिरित्यादिकं ग्राह्यम्। व्यवहारादीनां दर्शने = ज्ञाने सति, सम्भूयार्थस्य साधकम्, सम्भूय = कारकसमुदायं परिसमाप्य स्थितस्यार्थस्य = अधिश्रयणाद्यधःश्रयणान्तक्रियाकलापरूपस्य पचधात्वर्थस्य साधकम् = अनुमापकमिति।

अयं भावः—प्रागुक्तव्यवहारादिदर्शने सति कारकसमुदाये व्यापारभेददर्शनरूपं लिङ्गं कारकसमुदायं परिसमाप्य स्थितस्याऽधिश्रयणाद्यधःश्रयणान्तक्रियाकलापरूपस्य पचधात्वर्थस्य लिङ्गिनोऽनुमापकमिति।

अत्रायं प्रयोगः—पच्यादिक्रियायाः कारकसमुदायः स्वपरिसमाप्तपर्याप्ताधिश्रयणाद्यधःश्रयणान्तव्यापारकलापरूपपचधात्वर्थवान्, प्रागुक्तव्यवहारादिदर्शनविषयत्वे सति भिन्नव्यापारवत्त्वेन दृश्यमानत्वात्, भुजिक्रियाकर्तृवदिति। अत्र भुजिक्रिया हस्तावरणकान्नादानमुखाभिकरणकान्नप्रक्षेपनिगरणरूपावान्तरव्यापारत्रयसमुदायरूपेति तत्कर्तरि साध्यसाधनयोः समन्वयः।

पुण्यराजेन त्वियं कारिकैवं व्याख्याता—"देवदत्तः काष्ठैः स्थाल्यामोदनं पचति, विक्लिद्यतस्तण्डुलान् विक्लेदयतीत्यत्र भिन्नव्यापाररूपाणां कारकाणां दर्शनं भिन्नं प्रार्थनादिको (पाचनादिक इति पाठान्तरम्) व्यापारो भिन्नः, स सम्भूय सङ्घादर्थस्य =

समवेता, तथाप्यधिश्रयणोपसर्जनविक्लित्तिरपि पचेरर्थ इत्यवान्तरक्रियान्याभावे प्रधानक्रियासमाश्रयणेन व्यावृत्तव्यापारस्याविशेषात् संभूय सर्वैर्निर्वर्त्यत इति समुदाय एव परिसमाप्यत इति ॥ १७६ ॥

---

संघातार्थस्य पाकक्रियालक्षणस्य साधको दृश्यते व्यवहारिदर्शने इति" इत्यत्र 'प्रार्थनादिकः' इत्यस्य स्थाने 'पाचनादिकः' इत्येव पाठो युक्तः, प्रार्थनादिरूपस्यार्थस्यात्रासंभवात्। 'संघादर्थस्य' इत्यस्यापि स्थाने 'संघातार्थस्य' इत्येव युक्तः अर्थसंभवात्। अन्यथाऽपार्थक्यापत्तेरिति। संघातार्थस्य = अधिश्रयणाद्यधःश्रयणान्तक्रियाकलापस्य पाकक्रियारूपस्येत्यर्थः। ओदनपदं चात्र भाविनीं संज्ञामाश्रित्य प्रयुक्तम्। अत एवाग्रे व्याख्यायाम्—विक्लिद्यतरतण्डुलान् विक्लेदयतीति। ओदनमित्येकवचनं च जात्येकत्वाभिप्रायेण। व्यवहारादिदर्शन इति पदं चाग्रे स्वयमेव व्याख्यातं तेन—'व्यवहारः कश्चिन्नियतविषय एवोपयोगोऽत्राभिप्रेतः। आदिग्रहणेन तदन्येषां परिग्रहः, तेषां दर्शनं समारम्भः, प्रारम्भ इति यावत्। तस्मिन् सतीत्यर्थः" इति। अत्र 'व्यवहार' इत्यारभ्य 'अत्राभिप्रेतः' इत्यन्तस्य वाक्यस्याऽधिश्रयणाद्यर्थेषु प्रत्येकं पचतिशब्दस्य प्रतिनियतः प्रयोग एवाभिप्रेत इत्यर्थः। "आदिग्रहणेन तदन्येषां परिग्रहः" इत्यत्र तदन्येषामित्यस्य तादृशव्यवहारातिरिक्तानां तादृशबोधतादृशतात्पर्यतादृशपदार्थोपस्थितीनां प्रागुक्तानां परिग्रहः। तेषां दर्शनं समारम्भः प्रारम्भ इति यावद्। पुण्यराजस्य व्याख्यानं तु न युक्तम्। प्रागुक्तरीत्या दर्शनपदे लक्षणया ज्ञानार्थकत्वस्य प्रसिद्धस्य सम्भवे स्वारसिकलक्षणया, एतादृशस्याप्रसिद्धार्थत्वस्य वक्तुमनौचित्यात्। रूढिप्रयोजनयोरभावे लक्षणाया अनौचित्यमिति ह्यभियुक्तानां नैसर्गिकः सर्गः।

यत्त्वेतदग्रे तेनेष कारिकाशयो दर्शितः—"एतदुक्तं भवति—कर्तृस्था वा क्रिया भवति कर्मस्था वेत्यत्र विक्रियाकर्मणि समवेता न समुदाय इति केचित्" इति। तत्र 'न समुदाये' इत्यस्य 'न कारकसमुदाये' इत्यर्थः। यदप्यग्रे उक्तं तेन तत्रैव—'अन्ये त्वाहुः—यद्यपि कर्मणि समवेता तथाप्यधिश्रयणोपसर्जनविक्लित्तिरपि पचेरर्थ इत्यवान्तरक्रियान्यग्भावे प्रधानक्रियासमाश्रयणेन यावृत्तव्यापारस्याविशेषात् संभूय सर्वैर्निर्वर्त्यत इति समुदाय एव परिसमाप्यत इति" इति।

तस्यायमाशयः—यद्यपि विक्लित्तिरूपा पचिक्रिया कर्मणि तण्डुलादौ वाक्ये एव समवेता, न तु कारकसमुदाये, अयोग्यत्वात्, तथापि न केवलं विक्लित्तिरेव पचेरर्थः, किन्त्वधिश्रयणोपसर्जनविक्लित्तिरपि पचेरर्थ इत्यवान्तरक्रियाया अधिश्रयणक्रियाया न्यग्भावे = उपसर्जनरूपेण न्यग्भावेन परित्यागे, प्रधानक्रियासमाश्रयणेन = प्रधानाभूताया विक्लित्तिक्रियाया एव पच्धात्वर्थत्वेन समाश्रयणेन व्यावृत्तस्य स्वस्वव्यापारस्य प्रतिकारकमविशेषात् = तुल्यत्वात् सर्वैरपि कारकैर्विक्लित्तिक्रिया संभूय = संघीभूय निर्वर्त्यत इत्येवं पचिक्रियाकारकसमुदाय एव परिसमाप्यते, न तु प्रत्येकमिति ॥ १७६ ॥

अथ शास्त्रे प्रत्येकं वाक्यपरिसमाप्तिमुपदर्शयितुमाह—

**लक्ष्यस्य लोकसिद्धत्वाच्छास्त्रे लिङ्गस्य दर्शनात् ।**
**अर्थित्वादैक्षुभेदेन वृद्धिसंज्ञा समाप्यते ॥३७७॥**

'वृद्धिरादैच्' इत्यत्र वृद्धिशब्दः प्रत्येकमादैक्ष्वर्थिषु संज्ञात्वेन नियुज्यते, यस्माल्लोके, तथैव लक्ष्यं सिध्यति—आम्रगुप्तायनिः, ऐतिकायनिः औपगव इति। तथा शास्त्रे प्रत्येकमादैचां वृद्धिसंज्ञा लिङ्गाद् दृश्यते, यथा 'प्रस्थेऽवृद्धमकर्क्यादीनाम्' 'मालादीनां च' 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यत्र प्रस्थे उत्तरपदे पूर्वपदमवृद्धमाद्युदात्तं भवति, तदनन्तरं मालादीनामादिरुदात्तो भवतीत्युक्तम्, यदि चैकैकस्य वृद्धिसंज्ञा तदा मालादीनां 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति मालादयो वृद्धा भवन्ति ॥ ३७७ ॥

---

अथाधुना संज्ञाशास्त्रेषु प्रत्येकं संज्ञिषु वाक्यपरिसमाप्तिमुपदर्शयितुमाह—लक्ष्यस्येति ।

अयमर्थः—'वृद्धिरादैज' इत्यत्र वृद्धिसंज्ञा, भेदेन विशिष्टेषु अत्र वैशिष्ट्यार्थे प्रकृत्यादित्वात् तृतीया, ऐक्षु=आकारैकारौकारेषु प्रत्येकं समाप्यते। न तु समुदाये उपसर्जनीभूतानामभिन्ने समुदाये परिसमाप्यत इति प्रतिज्ञानिर्देशः। तत्र हेतुत्रयमत्र निर्दिष्टम्। तत्राद्यो हेतुः—लक्ष्यस्य लोकसिद्धत्वादिति। प्रत्येकं वृद्धिसंज्ञा परिसमाप्यत इति सिद्धान्तमाश्रित्यैव आम्रगुप्तायनिः, ऐतिकायनिः, औपगव इति लक्ष्यस्य लोकसिद्धत्वादित्यर्थः। अत्र प्रत्येकं लक्ष्ये आदैजरूपा एकैकैव वृद्धिर्दृश्यत इति भावः। हेत्वाकारस्तु—लोकप्रयोगप्रसिद्धैकसंज्ञिनिरूपितसंज्ञात्वादिति। शास्त्रे लिङ्गस्य दर्शनादिति द्वितीयो हेतुः।

अस्यार्थः—शास्त्रे लिङ्गात् प्रत्येकमादैचां वृद्धिसंज्ञा दृश्यते। तथा—'प्रस्थेऽवृद्धमकर्क्यादीनाम्' इति प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवतीत्यर्थकेन सूत्रेण मालाप्रस्थ इत्यादौ मालादीनां वृद्धानामाद्युदात्तत्वाप्राप्तौ वृद्धार्थं' मालादीनां चेति सूत्रमारब्धमिति तदेव लिङ्गमादैचां प्रत्येकं वृद्धिसंज्ञा भवतीत्यत्र। तथाहि—यदि चैकैकस्य वृद्धिसंज्ञा भवति, तदेव वृद्धिर्यस्याचामादिस्तद्वृद्धमिति मालादयो वृद्धा भवन्ति। हेत्वाकारस्तु—शास्त्रे=वृद्धिर्यस्याचामादिस्तद्वृद्धम् इत्यादौ। यल्लिङ्गदर्शनम्=एतत्सूत्रारम्भसामर्थ्यरूपेण लिङ्गेन आकारैकारौकाराणां प्रत्येकं वृद्धिसंज्ञेत्याकारकं तद्विशेष्यत्वादिति हेतुः। अर्थित्वादिति तृतीयो हेतुः।

अस्यार्थः—आदैचां संज्ञिनां प्रत्येकं संज्ञासापेक्षत्वादिति। अस्माकं प्रत्येकं वृद्धिसंज्ञा भवत्वित्याकारिकाया अपेक्षातद्विशेष्यत्वादिति यावत्। समुदाये तु नैतादृशी अपेक्षा, क्वचिदपि लक्ष्ये समुदाये वृद्धिसंज्ञाफलस्यादर्शनात्। यद्यप्यपेक्षा इच्छारूपा पुरुषधर्मस्तथाप्यादैक्षु आरोप्यते। यथाकाङ्क्षा पुरुषधर्मोऽपि तत्तच्छाब्दबोधौपयिके पदानां समभिव्याहारे आरोप्यत इति ॥३७७॥

इदानीं क्वचित् समुदाये वाक्यपरिसमाप्तिरिति प्रदर्शयितुमाह—

**शतादाने प्रधानत्वाद् दण्डने शतकर्मके ।**
**अर्थिनां गुणभेदेऽपि संख्येयोऽर्थो न भिद्यते ॥३७८॥**

गर्गाः शतं दण्ड्यन्तामित्यत्र शतकर्मकं दण्डनं समुदाये परिसमाप्यते । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति यस्माद्वाक्यार्थज्ञा राजानो विवेचयन्ति यथात्र द्वे कर्मणी प्रधानमप्रधानं चेति । तत्र शतकर्मके दण्डने शतादानमेव प्रधानम् ।

यदि च प्रत्येकं शतकर्मदानं समाप्येत, तदा गर्गाः शतानि दण्ड्याः स्युः । ततश्च प्रधानकर्मणः स्वरूपभ्रंशो भवेत् । न च प्रधानार्थपरित्यागो युक्तः, अतः संख्यान्तराश्रयणे विरोधो वाक्यस्य स्यात्, वीप्सायां बाधप्राप्तेः । अत्र गुणभेदेऽपि दण्ड्य-

---

इदानीं लोके गर्गाः शतं दण्ड्यन्तामित्यादौ क्वचित् समुदाये वाक्यपरिसमाप्तिः शतकर्मकस्य दण्डनस्य वाक्यार्थस्य गर्गसमुदाय एव पर्याप्तिदर्शनात्, प्रत्येकं चादर्शनात्, 'अर्थिनश्च राजानो हिरण्येन भवन्ति' इति न्यायेन ह्यत्र शतं प्रधानं कर्म, गर्गास्त्वप्रधानम् । एवञ्चात्र वाक्यार्थस्य प्रत्येक परिसमाप्तौ प्रधानकर्मणः स्वरूपमेव हीयेत, तथा सति शताधिकसंख्याया नियतं समवादिति प्रदर्शयितुमाह—शतादान इति ।

अयमर्थः — गर्गाः शतं दण्ड्यन्तामित्यादौ शतकर्मके दण्डने शतादाने शतग्रहणेऽर्थिनां राज्ञामभिप्रेतत्वेन शतस्य प्रधानत्वाद् गुणभेदेऽपि = अनीप्सितत्वेन गुणभूताना गर्गाणां भेदेऽपि गर्गा इत्यत्र वक्तुरेकशेषप्रयोगप्रयोज्या या श्रोतुरावृत्तिकल्पना तस्यां सत्यामपि, संख्येयोऽर्थः = शतमुद्रारूपः, न भिद्यते = आवर्त्यमानाप्रधानीभूतगर्गानुरोधेनावृत्तिकल्पनया न भिद्यते । तथा सति प्रधानकर्मणः शतस्य स्वरूपभ्रंशप्रसङ्गाद् । अप्रधानगर्गानुरोधेन प्रधानीभूते शते आवृत्तिकल्पनाया अन्याय्यत्वाच्च । अत्र प्रधानत्वादिति संख्येयोऽर्थो न भिद्यत इत्यत्र हेतुः ।

पुण्यराजव्याख्यादर्शनेन त्वेवं पदानां योजना प्रतीयते । गर्गाः शतं दण्ड्यन्तामित्यत्र शतकर्मके दण्डने शतादाने प्रधानत्वात् = शतादानस्य प्रधानत्वात्, संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी । अर्थिनां शतादानार्थिना राज्ञाम्, गुणभेदेऽपि = अप्रधानीभूतदण्ड्यगर्गभेदेऽपि सख्येयोऽर्थः शतमुद्रारूपो न भिद्यते = आवृत्त्या भेदेन प्रत्येकं परिसमाप्यते किन्तु गर्गसमुदाय एवावतिष्ठत इति । यद्यप्यत्र व्याख्याद्वयेऽपि फलत ऐक्यमेव तथापि पुण्यराजव्याख्याने शतादाने प्रधानत्वमार्थम्, मदीयव्याख्याने तु शतस्य प्रधानत्वं शाब्दम्, 'अर्थिनश्च राजानो हिरण्येन भवन्ति' इति भाष्यवाक्यात् शतस्यैवेप्सिततमत्वाच्च ।

किञ्च, शतादाने प्रधानत्वादित्येवं सम्बन्धेऽर्थिनामित्यस्य विषयाकाङ्क्षायां शतादाने इत्यस्यावृत्त्या सम्बन्धकल्पने गौरवम् । किञ्च 'संख्येयोऽर्थो न भिद्यते' इति चतुर्थपादार्थ-

भेदेऽप्यप्रधानत्वात्तेषां नात्र प्रत्येकमपि त्वर्थिनां राज्ञां शतकर्मकं दण्डनं समुदाय एवावतिष्ठत इति बोद्धव्यम् ।

एतदुक्तं भवति—प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वाक्यपरिसमाप्तिरित्येतन्न राजाज्ञावशाद् व्यवस्थाप्यते, अपि त्वर्थतथाभावादिति न्यायसिद्धमेवैतद् वेदितव्यम् ॥ ३७८ ॥

शास्त्रे प्रदर्शयितुमिदानीमाह—

**संघस्यैव विधेयत्वात् कार्यवत्प्रतिपादने ।**
**तत्र तन्त्रेण सम्बन्धः समासाभ्यस्तसंज्ञयोः ॥ ३७९ ॥**

समाससंज्ञाऽभ्यस्तसंज्ञा च समुदाय एव परिसमाप्यते—'सह सुपा', 'उभे अभ्यस्तम्' इति च । अत्र समाससंज्ञाया अभ्यस्तसंज्ञायाश्च तन्त्रेण साधारण्येन समुदायस्यैव सम्बन्धः । कस्मादित्याह—सङ्घस्यैव विधेयत्वादिति । यस्मादत्र सङ्घ एव विधीयते । पूर्वपदोत्तररूपे हि समाससंज्ञा विधीयते । तथाऽभ्यस्तमित्यत्र युगपद् द्वयोरभ्यस्तसंज्ञा विधीयते किञ्चित्कार्यं विधातुमिति ।

---

दर्शनेन शतस्यैव प्रधानत्वं प्रतीयते शतादानप्रधानत्वादिति समस्तपाठे तु पुण्यराजव्याख्यैव न्याय्येत्येव ध्येयम् । यस्त्वत्र— वाक्यार्थज्ञा राजानो विवेचयन्ति' इति पाठोऽन्त्ये प्रकाशे दृश्यते, स तु न युक्तः । गर्गाः शतं दण्ड्यन्तामित्यत्र राजकर्मचारिणामेव नियोज्यत्वेन तेषामेव बोद्धत्वात् अतो 'राजकर्मचारिणो विवेचयन्तीति' पाठो युक्तः ।

यदप्युक्तं प्रकाशे—"यदि च प्रत्येकं शतकर्मकादानं समाप्येत, तदा गर्गाः शतानि दण्ड्याः स्युः" इति । अत्र गर्गाः प्रत्येकं शतानि दण्ड्याः स्युरिति बोद्धव्यम् ।

एतत्कारिकाया निगूढोऽभिसन्धिस्तु—प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वाक्यपरिसमाप्तिरिति वा न राजाज्ञावशाद् व्यवस्थाप्यते, किन्त्वर्थतथाभावात्=पदार्थानां परस्परान्वययोग्यतावत्त्वादिति न्यायसिद्धमेवैतद् वेदितव्यमिति ॥ ३७८ ॥

इदानीं शास्त्रेऽपि समुदाये वाक्यपरिसमाप्तिं प्रदर्शयितुमाह—**संघस्यैवेति** ।

अयमर्थः—कार्यवत् प्रतिपादने=कार्याः शब्दार्थसम्बन्धाः सन्ति यस्मिन् ज्ञापकतासम्बन्धेन तत्कार्यवदन्वाख्यानमिति पक्षमाश्रित्य कार्यवतोऽन्वाख्यानस्य प्रतिपादने, संघस्यैव=पूर्वोत्तरपदयोः समुदायस्यैव द्विरुक्तसमुदायस्यैव च, समासाभ्यस्तसंज्ञयोर्विधेयत्वात्, 'सह सुपा' इत्यत्र सहशब्द सामर्थ्येन, 'उभे अभ्यस्तम्' इत्यत्र उभे इति पदश्रवणसामर्थ्येन च तादृशसमुदायस्यैव समासाभ्यस्तसंज्ञयोर्विधेयत्वात्, तत्र=तयोः समुदाययोरेव, समासाभ्यस्तसंज्ञयोस्तन्त्रेण युगपत् सम्बन्धः । सकृदुच्चरितस्यानेकार्थबोधकत्वे तन्त्रपदस्य शक्तिः, तादृशतन्त्रकार्यभूते सम्बन्धयौगपद्ये तन्त्रपदस्य लक्षणा । कार्यकारणभावश्च सम्बन्धः । अत्र समासाभ्यस्तसंज्ञयोरिति पदस्य

ननु समाससंज्ञायां कथं राजपुरुष इत्यादौ समुदायो विधीयते, यावता नित्यत्वाच्छब्दार्थसम्बन्धानां विधेयतानुपपत्तिरित्याशङ्क्याह—कार्यवत्प्रतिपादन इति । यदा कार्यवदन्वाख्यानमिति पक्षः प्रतिपाद्यते, तदैतदुक्तमित्यर्थः ॥ ३७९ ॥

इदानीं क्वचिदेकत्रैवोभयथापि वाक्यपरिसमाप्तिर्दृश्यत इति प्रतिपादयितुमाह—

**लक्षणार्था स्तुतिर्येषां काश्चिदेव क्रियां प्रति ।**
**तैर्व्यस्तैश्च समस्तैश्च स धर्म उपलक्ष्यते ॥ ३८० ॥**

---

सकृच्छ्रुतस्यावृत्त्योभयत्रापि प्रागुक्तरीत्या सम्बन्ध इति । पुण्यराजेन तु—तन्त्रेणेत्यस्य साधारण्येनेत्यर्थः कृतः । तत्र समाससंज्ञायाः पूर्वोत्तरपदसाधारण्येन, अभ्यस्तसंज्ञायाश्च पदद्वयसाधारण्येनेत्यर्थः । इदञ्च तन्त्रपदस्यार्थिकार्थकथनम्, न तु तन्त्रपदस्य तत्र शक्ति-र्लक्षणा वेत्यवधेयम् ।

यत्तूक्तम्—"संघस्यैव विधेयत्वादिति । यस्मादत्र संघ एव विधीयते पूर्वोत्तरपदरूपे ऽपि समाससंज्ञा विधीयते । तथा—अभ्यस्तमित्यत्र युगपद् द्वयोरभ्यस्तसंज्ञा विधीयते, किञ्चित् कार्यं विधातुमिति" इति । अत्र संघस्य विधेयत्वोक्तिर्न युक्ता, संघस्य सिद्धत्वेनोद्देश्यत्वात्, समासाभ्यस्तसंज्ञयोरेवाप्रवृत्तत्वेन विधेयत्वादिति ॥ ३७९ ॥

इदानीं क्वचिदेकत्रैव वाक्ये प्रत्येकं समुदाये च वाक्यपरिसमाप्तिर्दृश्यत इति प्रतिपादयितुमाह—लक्षणार्थेति ।

अयमर्थः—'अस्मिन् गृहे वृषलैर्न प्रवेष्टव्यम्' इत्यत्र येषां शूद्राणां वाचिका श्रुतिर्वृषल-शब्दः, काञ्चिदेव क्रियां प्रति=प्रवेशक्रियां प्रति वृषलत्वरूपस्य धर्मस्य लक्षणार्था=उपल-क्षणार्था, अत्रार्थः प्रयोजनम् । तैः शूद्रैर्व्यस्तैः समस्तैश्च=अपि स धर्मः=वृषलत्वरूपः, उपलक्ष्यते=स्वस्मिन् उपलक्षणीक्रियते ।

अयं भावः—इह गृहे वृषलैर्न प्रवेष्टव्यमित्यत्र वृषलशब्दतः प्रतीयमानं वृषलत्वं तत एवोपस्थितासु विशेष्यभूतासु व्यक्तिषूपलक्षणम्, न तु विशेषणम् । वृषलत्वजातेर्नित्यत्वेन दैशिकविशेषणतया सर्वदेशसम्बन्धित्वेन, कालिकविशेषणतया सर्वकालसंबन्धित्वेनाऽ-नवयवत्वेनामूर्तत्वेनापरिच्छिन्नत्वेन च प्रवेशक्रियायां कर्तृविशेषणतयाऽन्वयासंभवात् । अतो वृषलव्यक्तिषु तदुपलक्षणमेव, न तु विशेषणम्, विधेयानन्वयित्वात् । विद्यमानं विधेयान्वयिव्यावर्तकं विशेषणम्, अविद्यमानं विद्यमानं वा विधेयानन्वयिव्यावर्तकमुप-लक्षणमिति तयोर्लक्षणभेदात् । विद्यमानमुपलक्षणमेव चोपाधिरित्यनेनापि व्यवह्रियते । अत्र च वृषलत्वं वृषलेषु विद्यमानमेव विधेयानन्वयिव्यावर्तकमित्युपलक्षणम् । अतो वृषलत्वोपल-क्षितानामेकैकस्यात्र प्रवेशो निषिध्यते समुदायस्य चेत्येवमुभयोर्वाक्यपरिसमाप्तिरिति ।

यत्तु—वृषलैर्न प्रवेष्टव्यमित्यग्रिमकारिकाव्याख्यानावसरे पुण्यराजेनोक्तम्—"अत्र

उदाहरणमाह—

**वृषलैर्न प्रवेष्टव्यमित्येतस्मिन् गृहे यथा ।**
**प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते ॥३८१॥**

अत्र वृषलजातीयस्य प्रवेशनिषेधः क्रियते । तत्र चैकस्यापि वृषलत्वस्य सद्भावात् सामर्थ्यान् पृथक् समुदाये च प्रवेशनिषेधार्थः सम्पद्यत इति ॥३८०-३८१॥

प्रकारान्तरेणोपदर्शयितुमाह—

**सम्भूय त्वर्थलिप्सादिप्रतिषेधोपपादने ।**
**पृथगप्रतिषिद्धत्वात् प्रवृत्तिर्न विरुध्यते ॥३८२॥**

---

वृषलजातीयस्य प्रवेशनिषेधः क्रियते, तत्र चैकस्यापि वृषलत्वस्य सद्भावात् सामर्थ्यात् पृथक् समुदाये च प्रवेशनिषेधार्थः संपद्यत इति" इति ।

तस्यायमाशयः – वृषलजातीयस्य = वृषलत्वजात्युपलक्षितस्य व्यक्तिमात्रस्य तत्समुदायस्य वा । तत्र च = प्रत्येकं वृषलेषु, तत्समुदाये च, एकस्यापि = एकस्यैव, सद्भावात् = प्रत्येकं समुदाये च सद्भावात्, सामर्थ्यात् = वृषलत्वोपलक्षितस्य एकैकस्य तत्समुदायस्य च प्रवेशक्रियायां कर्तृतयाऽन्वययोग्यतारूपात् सामर्थ्यात्, प्रवेशनिषेधार्थः = प्रवेशनिषेधफलको वृषलैर्न प्रवेष्टव्यमिति पदसमूहः संपद्यत इति ॥३८०॥

उदाहरणमुखेन पूर्वकारिकोक्तमर्थं विशदीकुर्वन्नाह— वृषलैरिति ।

अयमर्थः— यथैतस्मिन् देवगृहे पाकगृहे वा वृषलैः शूद्रैर्न प्रवेष्टव्यम्, शूद्राणामसंस्कृतत्वेन श्मशानवदशुचित्वस्य "पद्य ह वा एतत् श्मशानं यच्छूद्रः" इत्यपशूद्राधिकरणोद्धृतश्रुतिबोधितत्वात् । अस्मिंश्च शूद्राणां प्रवेशनिषेधवाक्ये प्रत्येकं संहतानाञ्च शूद्राणां गृहविशेषे प्रवेशः प्रतिषिध्यत इत्यस्मिन् वाक्ये प्रत्येकं समुदाये च वाक्यार्थस्य समाप्तिरिति ॥३८१॥

वृषलैर्न प्रवेष्टव्यमित्यत्र प्रत्येकं समुदाये च प्रवेशक्रियाकर्तृत्वयोग्यतासत्त्वेनोभयत्रापि तत्प्रसक्तावुभयत्रापि तत्प्रतिषेध इत्युभयत्रापि वाक्यपरिसमाप्तिः प्राक् प्रदर्शिता, वृषलैः प्रत्येकं समुदितैश्च न प्रवेष्टव्यमिति । इदानीं तु यत्र समुदाये प्रतिषेधरूपो वाक्यार्थः शब्दत उपात्तस्तत्र प्रत्येकमपि प्रतिषेधो न विरुध्यते किन्त्ववबुध्यते योग्यताबलादित्येवं प्रकारान्तरेणैकस्मिन् वाक्ये उभयत्र = प्रत्येकं समुदाये च, वाक्यपरिसमाप्तिमुपदर्शयितुमाह— संभूयेति ।

अयमर्थः— यत्र गुरुः शिष्यान् संन्यासधर्मे दीक्षयित्वोपदिशति—अद्यप्रभृति भवद्भिः समग्रैरेव समर्थैरपि राजोपसेवा न कार्या, अप्रयोजनत्वात् संन्यासिनां कृते गर्ह्यत्वाच्च । कस्यापि समुद्गमनम् = अभ्युत्थानम्, वा न विधेयम्, संन्यासिनो नारायणरूपत्वेन सर्वस्यापि लोकस्य ततः कनिष्ठत्वात् । कृषिकर्म वा वृत्तये नानुष्ठेयम्, भिक्षाया एव यतिवृत्तित्वेन

भवद्भिः समग्रैरेवाद्यप्रभृति राजोपसेवा न कार्या, समुद्गमनं वा न विधेयम्, कृषिकर्म वा नानुष्ठेयमित्यत्र समुदाये प्रत्येकं वा निषेधे वाक्यस्य न प्रवृत्त्यनुपपत्तिः ॥३८२॥

अत्रापि शास्त्रीयमुदाहरणं दर्शयितुमाह—

**व्यवायलक्षणार्थत्वादट्कुप्वाङादिस्तथा ।**
**प्रत्येकं वा समस्तैर्वा णत्वं न प्रतिषिध्यते ॥ ३८३ ॥**

व्यवायो व्यवधानं तदुपलक्षणार्थत्वादट्कुप्वाङादिभिरिति प्रत्येकं समुदायेऽपि तेषां स्थितेर्व्यवायस्य सिद्धत्वात्तथैव णत्वं प्रवर्तत इति न कश्चिद् दोषः ॥ ३८३ ॥

---

शास्त्रेषूक्तत्वात् । दारुमय्यपि योषा न स्प्रष्टव्या, यतिव्रतविघातिविकारकारित्वात् । आक्रोशन्तेऽपि नाक्रोष्टव्याः, घ्नतोऽपि न हन्तव्याः, न्यस्तदण्डत्वादिति । संभूय तु = संभूयैव, न तु प्रत्येकम् अर्थलिप्सादिप्रतिषेधोपपादने, आदिपदेन रागद्वेषादयः संग्राह्याः । अर्थलिप्सारागद्वेषादीना प्रतिषेधस्योपपादने, पृथगप्रतिपिद्धत्वात्, समग्रदोषादानेन पृथक् = प्रत्येकम्, प्रतिषेधस्याकृतत्वात्, प्रवृत्तिः = प्रतिषेधवाक्यस्य प्रत्येकमपि प्रवृत्तिर्न विरुध्यते, समुदायेऽर्थलिप्सादिप्रतिषेधे प्रत्येकमपि तस्यार्थाक्षिप्तत्वादिति । एवमत्रापि वाक्यस्योभयत्र परिसमाप्तिरिति ।

यस्त्वत्र पुण्यराजेनोक्तम्—"समुदाये प्रत्येकं वा निषेधे वाक्यस्य न प्रवृत्त्यनुपपत्तिः" इति । अ वाग्न्दर्शनार्थं । उभयत्र वाक्यपरिसमाप्तिरिति पक्षस्यात्र प्रदर्शयितत्वादिति ॥ ३८२ ॥

उभयत्रापि वाक्यपरिसमाप्तिरिति पक्षस्य शास्त्रीयमुदाहरणं दर्शयितुमाह—**व्यवायलक्षणार्थत्वादिति ।**

अयमर्थः— तथा = यथा संभूयार्थलिप्सादिप्रतिषेधोपपादने प्रत्येकं समुदाये च प्रतिषेधे वाक्यस्य प्रवृत्तिः प्रागुदाहृता, तथा अट्कुप्वाङादीनां व्यवायलक्षणार्थत्वात् = व्यवायस्य व्यवधानस्योपलक्षणार्थत्वात् ।

अय भावः—अट्कुप्वाङ्नुम्व्यवाये इत्यत्र अट्कुप्वाङ्नुम् इति व्यवाये उपलक्षणम्, न तु विशेषणम्; विशेषणत्वे तेषां समस्तानां विद्यमानत्वावश्यकत्वेन प्रत्येकं यथासम्भवं मिलितानां वा व्यवाये णत्वं न स्यात् । किञ्चाडादीनामत्र व्यवायस्यैव निमित्ततया णत्वरूपकार्याश्रयित्वमपि नास्ति रेफषकारयोरिवाडादीना निमित्तत्वात् । एवमडादीनां व्यवाये उपलक्षणत्वस्वीकारे नापि समस्तानां विद्यमानत्वस्यावश्यकता । एवमडादीनां व्यवायोपलक्षणार्थत्वात् प्रत्येकं समुदितानां वा तेषां स्थितौ व्यवायस्य सिद्धत्वादट्कुप्वाङादिभिः प्रत्येकं वा समस्तैर्वा व्यवाये णत्वं न प्रतिषिध्यते, किन्तु प्रवर्तत एवेति ।

इदानीं भुजिक्रियाया एकत्वानेकत्वविचारः। तत्रापि किमेकस्मिन् देशे काले पात्रेऽनुष्ठिता स्वरूपमासादयति, उत देशादिभेदेनानुष्ठितेति विचारयितुमाह—

**अनुग्रहार्थं भोक्तृणां भुजिरारभ्यते यदा।**
**देशकालाद्यभेदेन नानुगृह्णाति तानसौ ॥३८४॥**

देशकालाद्यभेदेनेति नात्र भुजेरनुग्रहार्थाया विशेषः कश्चित्, उभयथापि तदनुग्रहस्य निर्वृत्तेरिति ॥३८४॥

अथास्या एकत्वानेकत्वे विचारयितुमाह—

**पात्रादिभेदान्नानात्वं यस्यैकस्योपदिश्यते।**
**विपर्यये वा भिन्नस्य तस्यैकत्वं प्रकल्प्यते ॥३८५॥**

---

यत्तु पुण्यराजेनोक्तम्—"व्यवायो व्यवधानं तदुपलक्षणार्थत्वादट्कुप्वाङ्.दिभिरिति प्रत्येकं समुदायेऽपि तेषां स्थितेर्व्यवायस्य सिद्धत्वात्, तथैव णत्वं प्रवर्तत इति न कश्चिद् दोषः" इति। अत्र द्वितीयपादान्तश्रुतस्य 'तथा' इत्यस्य 'णत्व न प्रतिषिध्यते' इति चतुर्थपादान्ते संबन्धोऽसंनिधानान्न सम्भवतीति मदुक्तव्याख्यानरीत्या 'तथा'पदस्य क्रमानुरोधी सम्बन्ध एव युक्तः ॥ ३८३ ॥

अथेदानीं "देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम्" इत्यत्र भोजनक्रिययाक्षिप्तस्य भुजिक्रियारूपस्य वाक्यार्थस्य प्रत्येकं परिसमाप्तिः, समुदाये वेति निर्णेतुं प्राग् भुजिक्रियाया एकत्वानेकत्वविचारः प्रस्तूयते। तत्र तस्या एकत्वे वाक्यस्य समुदाये परिसमाप्तिः, अनेकत्वे तस्य प्रत्येकं समाप्तिः। तत्रापि भुजिक्रियाऽनुकूला भोजनक्रिया द्विविधा—काचिद् भोक्तृणामनुग्रहफला, काचित्तु लोकापवादपरिहारफला। तत्र निमन्त्रितानामाद्या, अनिमन्त्रितानां द्वितीया। तत्रापि सा किमेकस्मिन् देशे काले पात्रेऽनुष्ठिताऽनुग्रहफलकं स्वरूपमासादयति=प्राप्नोति, अथवा देशादिभेदेनानुष्ठिता? तद्यथा—क्वचिद् देशे काले पात्रे च ओदनो भोक्तव्यः, क्वचित् शष्कुली, क्वचिन्मिष्टान्नं मोदकादिकम्, क्वचित् फलमित्यादिकं विचारयितुमाह—**अनुग्रहार्थमिति।**

अयमर्थः—यदा भोक्तृणामनुग्रहार्थं भोजयित्रा भुजिक्रिया देशकालाद्यभेदेनारभ्यते = निष्पाद्यते, तदाऽसौ देशकालाद्यभेदस्तान् = भोक्तॄन् नानुगृह्णाति देशकालाद्यभेदे भेदे च तदनुग्रहस्य तुल्यत्वादिति। एवं देशकालादिभेदेनानुष्ठिताऽपि भोक्तॄन् नानुगृह्णाति उभयथापि तदनुग्रहस्य निष्पत्तेरित्यपि बोध्यम् ॥ ३८४ ॥

अथ भुजिक्रियाया एकत्वानेकत्वे विचारयितुमाह—**पात्रादिभेदादिति।**

अयमर्थः—यस्य मते नानाभोक्तृष्वेकैव भुजिः, तृप्तिरूपस्य फलस्य तुल्यत्वात्।

यस्य मते एकैव भुजिः, तृप्तिलक्षणसमानफलत्वात्, तस्य देशकालभेदाद्-नानात्वं स्वतस्त्वेकत्वमेव। कस्यचिन्मते तु भोक्तृभेदात् फलभेदे भुजिक्रियाभेद एव। तस्य विपर्यये पात्राद्यभेदादेकत्वं तस्या बोद्धव्यं स्वभावतस्तु भिन्नत्वमेवेति मतभेदः ॥३८५॥

किञ्च—

**संहत्यापि च कुर्वाणा भेदेन प्रतिपादिताः।**
**स्वं स्वं भोज्यं विभागेन प्राप्तं संभूय भुञ्जते ॥३८६॥**

**देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र सामर्थ्याद्भेदेन वाक्यार्थप्रतिपत्ताविच्छावशात् संभूय स्वं स्वं भोज्यं विभागेन प्राप्तं संभूय भुञ्जते ॥ ३८६ ॥**

---

एवञ्च यस्य मते वस्तुगत्यैकस्य भुजिक्रियारूपस्य वाक्यार्थस्य पात्रादिभेदात् = पात्रदेशकालकर्तृभेदात्, औपाधिकं नानात्वमुपदिश्यते, तस्य मते भुजिक्रियाया वस्तुत एकत्वं प्रकल्प्यते = प्रकर्षेण ज्ञाप्यते। विपर्यये वा = अथवा विपर्यये, यस्य मते भोक्तृभेदात् तृप्तिलक्षणफलभेदे भुजिक्रियाभेद एव, तस्य मते विपर्यये वस्तुतो भिन्नस्य तस्य भुजिक्रिया-रूपस्य वाक्यार्थस्य पात्राद्यभेदाद्येकत्वमौपाधिकमेकत्व प्रकल्प्यते, स्वभावतस्तु नानात्वं भिन्नत्वमेवेति मतभेदः ॥ ३८५ ॥

एवं स्थिते यत् फलितं तदाह—संहत्येति।

अयमर्थः—देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र तत्तच्छब्दैर्भेदेन पृथक् पृथक् प्रतिपादिता भुजिक्रियाकर्तारः, संहत्य = समुदित्य = संघीभूय, भुजिक्रियां कुर्वाणा अपि च विभागेन परिवेषणाद् विभागेन प्राप्तं स्वं स्वं भोज्यमिच्छावशात् संभूय भुञ्जत इति।

अयं भावः—देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र भुजिक्रियाया मतभेदेन वास्तवमौपाधिकं वैकत्वमादाय समुदाये वाक्यपरिसमाप्तिः, वास्तवमौपाधिकं वा तस्या नानात्वमादाय प्रत्येकमपि वाक्यपरिसमाप्तिरिति रीत्यात्रोभयत्रापि वाक्यपरिसमाप्तिरिति फलितमिति।

यत्तु पुण्यराजेनेयं कारिकैवमर्थतो व्याख्याता—"देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र सामर्थ्याद् भेदेन वाक्यार्थप्रतिपत्ताविच्छावशाद् संभूय स्वं स्वं भोज्यं विभागेन प्राप्तं संभूय भुञ्जते" इति।

अत्र सामर्थ्यादित्यस्य तृप्तिरूपफलस्य भेदेन भिन्नाया भुजिक्रियायाः समुदायेऽन्व-यानुपपत्तिरूपात् सामर्थ्यादित्यर्थः। इच्छावशात् संभूयेत्यस्य परस्परप्रीतिप्रकर्षप्रयुक्तसह-भोजनेच्छावशादित्यर्थः ॥ ३८६ ॥

अथ शतादानप्रधानत्वादित्येतत्प्रतिपाद्यस्यार्थस्योपपत्तिं प्रतिपादयितुमाह—

**वीप्साया विषयाभावाद् विरोधादन्यसंख्यया।**
**द्विधा समाप्त्ययोगाच्च शतं सङ्घेऽवतिष्ठते ॥२८७॥**

---

अथ सिंहावलोकितकन्यायेन 'शतादानप्रधानत्वात्' इत्येतत्कारिकाप्रतिपाद्यस्यार्थस्योपपत्तिं प्रकारान्तरेणापि प्रदर्शयितुमाह—वीप्साया इति।

अयमर्थः—गर्गाः शतं दण्ड्यन्तामित्यत्र शतं संघे = गर्गसंघातेऽवतिष्ठतेऽवसाय परिसमाप्य स्थितं भवति, न तु प्रत्येकं गर्गेषु। तत्र हेतुत्रये आद्यो हेतुः, वीप्साया विषयाभावादिति। अत्र गर्गाः शतं दण्ड्यन्तामिति वाक्ये वीप्साया विषयस्याभावादित्यर्थः।

तथा हि—वीप्साया विषय आवृत्तिः, 'वृक्षं वृक्षं प्रतिपिञ्चति' इत्यादौ दर्शनात्। सा चात्र नास्ति। द्वन्द्वापवाद एकशेष इत्यभ्युपगमेनैकशेषस्य द्वन्द्ववत् समुदायोपस्थापकत्वेनैकशेषोपस्थापिते समुदाय एव शतकर्मकदण्डनान्वयसम्भवात्।

यदि ह्यत्र प्रत्येकं गर्गेषु शतकर्मकदण्डनक्रियान्वयोऽभिप्रेतः स्यात्, तदा गर्गौ गर्गाः शतं दण्ड्यतामित्यावृत्त्या गर्गान् वदेत्, आख्यातं चाप्रधानकर्मानुरोधेनैकवचनान्तमिति। यद्युच्यते वक्तुरत्रैकशेषेण प्रयोगः, बोद्धुस्त्वावृत्त्या बोध इत्यस्त्येवात्र वीप्साया विषय आवृत्तिरिति, तदा विषयाभावादित्यत्र भावप्रधानो निर्देशः, प्रधानीभूते शतेऽप्रधानगर्गानुरोधेनावृत्तेरनौचित्येन वीप्साया विषयत्वस्याभावादित्यर्थः।

तथा हि—शतं ह्यत्रोद्देश्यत्वेन प्रधानम्।

तदुक्तं भाष्ये—शतं ह्यत्र प्रधानम्, अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्तीति। एवं शतस्योद्देश्यत्वेन प्राधान्येऽप्रधानगर्गानुरोधेन प्रधानस्य शतस्यावृत्तिर्न संभवति, नहि लोकेऽप्रधानानुरोधेन प्रधानस्य क्वचित् प्रवृत्तिर्दृष्टा येनात्रापि प्रधानमप्रधानमनुरुध्येतेति। विरोधादन्यसंख्यया इति द्वितीयो हेतुः।

अयं भावः—अपराद्धपुरुषेष्वविज्ञायमानेष्वद्यापि ग्रामनगरादौ सामूहिको दण्डो निपात्यते—अयं ग्रामः षट्सहस्राणि दण्ड्यतामिति। न चात्रैकस्मिन् पुरुषे दण्डपरिसमाप्तिः, न वा प्रत्येकम्, किन्तु समुदाय एव सा भवति। एवमत्रापि गर्गसमुदाय एव शतकर्मकं दण्डनं न्याय्यम्, प्रत्येकं शतदण्डनावृत्तौ हि संपन्नयाऽन्यसंख्यया सहस्रायुतादिरूपया शतसंख्याया विरोधः स्यात्। एवञ्च शासनातिक्रमः, अधिकदण्डपातनेन प्रजासु विद्वेषश्च कृतः स्यादिति।

यत्तु पुण्यराजेनोक्तम्—"यद्येकैकं शतं शतं दण्ड्येत, तदा वीप्साविषयोऽपह्नुतः स्यात्। तथा शतकर्मकमत्र दण्डनं प्राधान्येन विधीयते" इति। अत्र वीप्सया विषयोऽपह्नुतः स्यादिति पाठः साधुर्भाति।

एतदर्थस्तु—वीप्सया = आवृत्त्या, विषयः = उद्देश्यम् शतम्, अन्यसंख्यापत्त्यापह्नुतं स्यादिति। 'तथा' इत्यस्याग्रे च 'हि' पदमावश्यकम्। एवं सत्यर्थः संगच्छते।

यद्येकैकं शतं शतं दण्ड्येत, तदा वीप्साविषयोऽपहृतः स्यात्, कथा शतकर्मक-मत्र दण्डनं प्राधान्येन विधीयते। यदि तु प्रत्येकं शतदण्डनं प्राधान्येन विधीयते, प्रत्येकं शतदण्डने संख्यान्तरोपजननाच्छतसंख्या विरुध्यते।

न चाप्यत्र द्विधा वाक्यं समाप्यते। यत एकेन प्रधानकर्मणः सम्बन्धोऽपरेण गुणकर्मणामिति वाक्यार्थज्ञैः पर्यालोच्य सङ्घ एव शतादानमवतिष्ठत इत्युच्यते॥ ३८७॥

अथ भुजिक्रियायाः प्रत्येकं परिसमाप्तावपि यत्र देवदत्तयज्ञदत्तविष्णुमित्रैः सह भोक्तव्यमित्युच्यते, तत्र द्विधापि प्रत्येकं समुदाये च वाक्यार्थश्च परिसमाप्यत इत्याह—

**भुजिद्वन्द्वैकशेषाभ्यां यत्रान्यैः सह शिष्यते।**
**तत्रापि लक्षणार्थत्वाद् द्विधा वाक्यं समाप्यते॥ ३८८॥**

---

नन्ववस्त्वविशेषादत्र प्रत्येकं वाक्यपरिसमाप्तिः समुदाये च वाक्यपरिसमाप्तिरिति पक्षद्वयमपि वृषलैर्न प्रवेष्टव्यमितिवदित्याशङ्क्याह—**द्विधा समाप्त्ययोगाच्चेति**।

अथ तृतीयो हेतुः। अत्र द्विधा वाक्यपरिसमाप्तेरयोगोऽनौचित्यम्। तथाहि—अत्र प्रत्येकं वाक्यपरिसमाप्तिपक्षेऽनर्थिकैव शतावृत्तिकल्पना कृता स्यात्, आवृत्तिं विनैव समुदाये वाक्यपरिसमाप्त्या निर्वाहात्। वृषलैर्न प्रवेष्टव्यमित्यत्र तु लोकव्यवहारानुरोधेनोभयथा वाक्यपरिसमाप्तिः कल्प्यते, अत्र प्रत्येकं शतावृत्तौ लोकव्यवहारविरोधः प्राक् प्रदर्शित एव शासनातिक्रमः, प्रजासु विद्वेषश्च कृतः स्यादित्येवंरूप इति।

यदप्युक्तम्—'न चाप्यत्र द्विधा वाक्यं समाप्यते। यत एकेन प्रधानकर्मणः सम्बन्धोऽपरेण गुणकर्मणाम्'' इति।

अस्यार्थः—एकेन = दण्ड्यतामित्याख्यातरूपेण वाक्येन प्रधानकर्मणः शतस्य सम्बन्धः, अपरेण च तेनैव गुणकर्मणां गर्गाणां सम्बन्ध इति। यद्यप्यस्मिन् व्याख्याने प्रत्येकं समुदाये च शतदण्डनं सम्भवति, द्विधा समाप्त्ययोगोऽप्याख्यातावृत्तरस्वारसिकत्वा-दप्रामाणिकत्वाच्च सम्भवति, तथापि द्विधासमाप्तिपदेनात्र प्रत्येकं वाक्यपरिसमाप्तिः, समुदाये वाक्यपरिसमाप्तिरिति पक्षद्वयमेव ग्रहीतव्यम् तस्यैव प्रकृतत्वेन त्वरित-तरोपस्थितेरिति॥ ३८७॥

अथ यद्यपि भुजिक्रियायास्तृप्तिफलायास्तृप्तिरूपफलभेदेन भेदाद् देवदत्तयज्ञदत्त-विष्णुमित्रा भोज्यन्तामित्यादौ प्रत्येकमेव परिसमाप्तिः, तथापि यत्र देवदत्तयज्ञदत्तब्रह्मदत्त-विष्णुमित्रैः सह भोक्तव्यमिति स शब्दप्रयोगेणोच्यते, तत्र भोक्तव्यमिति क्रियापदमावर्त्यते, तत्रैकस्य द्वन्द्वनिर्दिष्टेन कर्तृपदेन सम्बन्धे भुजिक्रियाविशेषार्थकत्वेन प्रत्येकं वाक्यं परिसमाप्यत, अपरस्य तु सहशब्देन सम्बन्धे लक्षणया भुजिक्रियासामान्यार्थकत्वेन समुदाये वाक्यपरिसमाप्तिरिति प्रतिपादयितुमाह—**भुजिरिति**।

लक्षणार्थत्वादिति यस्मादत्र सह भोजनं सहैव वा तत्प्रतिषेध इत्येव तावल्लक्ष्यते। तत्र बहुभिः सह भोक्तव्यम् द्वाभ्यां त्रिभिर्वा न वेत्येतदत्राभिधीयते। एवं च सहैव भोक्तव्यं न वेति समुदाय एव विधिर्वा प्रतिषेधो वा विधीयते, केवलं सह भोजनविधिस्तत्प्रतिषेधो वाऽभीष्ट इति प्रत्येकं समुदाये च वाक्यार्थोऽत्र समाप्यत इति बोद्धव्यम् ॥ ३८८ ॥

एव वाक्यार्थाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिः समुदाये च वाक्यपरिसमाप्तिरिति प्रदर्शितम्। इदानीं वाक्यसमाश्रयणेन प्रतिपादयितुमाह—

**वाक्यान्तराणां प्रत्येकं समाप्तिः कैश्चिदिष्यते।**
**रूपान्तरेण युक्तानां वाक्यानां तेन संग्रहः ॥ ३८९ ॥**

---

अयमर्थः—न केवलम् 'वृषलैर्न प्रवेष्टव्यम्' इत्यत्रैव द्विधा वाक्यं समाप्यते, किन्तु यत्र देवदत्तयज्ञदत्तब्रह्मदत्तविष्णुमित्रैः सह भोक्तव्यमित्यादौ द्वन्द्वेन, ब्राह्मणैः सह भोक्तव्यमित्यादावेकशेषेण चैकस्य भुजि न्यैः सह शिष्यते = उपदिश्यते, तत्रापि लक्षणार्थत्वाद् भोक्तव्यमित्यत्र भुज्धातोर्भुजिसामान्यलक्षकत्वात्, लक्षण भुजिक्रियासामान्यस्य लक्षणया बोधनमर्थः प्रयोजनं यस्य भोक्तव्यमिति पदैकदेशस्य भुज्धातोः, तत्तादृशं तत्त्वादिति विग्रहः। द्विधा = प्रत्येकं समुदाये च, वाक्यं समाप्यते = भोक्तव्यमिति पदस्य वृत्त्या देवदत्तयज्ञदत्तब्रह्मदत्तविष्णुमित्रैर्भोक्तव्यमिति, सह भोक्तव्यमिति च द्विधा सम्बन्धेन स्वार्थबोधने निराकाङ्क्षं भवतीति।

यत्तु पुण्यराजेनोक्तम्—"एवञ्च सहैव भोक्तव्यं न वेति समुदाय एव विधिर्वा प्रतिषेधो वा विधीयते, केवलं सहभोजनविधिस्तत्प्रतिषेधो वाभीष्ट इति प्रत्येकं समुदाये च वाक्यार्थोऽत्र समाप्यत इति बोद्धव्यम्" इति।

अत्रेदं बोध्यम्—भुजिक्रियायास्तृप्तिरूपफलभेदेन भेदात् प्रत्येकं भुजिर्न्यायत एव प्राप्त इति तदंशो न विधिः, किन्त्वनुवाद इत्यावृत्तपरवाक्ये भुजधातोर्भुजिसामान्ये लक्षणया सहेत्यनेन सम्बन्धेऽनेन वाक्येन समुदाय एव विधिर्वा प्रतिषेधो वा विधीयत इति। अग्रे च—'अभीष्ट' इत्यस्य तात्पर्यविषयीभूत इत्यर्थः। एवं चानेन तात्पर्यानुपपत्तिरूपं प्रागुक्तार्थे लक्षणाबीजं प्रदर्शितमिति ॥ ३८८ ॥

पूर्वं वाक्यार्थाश्रयणेन = वाक्यार्थगतार्थाधारूपयोग्यताश्रयणेन, प्रत्येकं वाक्यपरिसमाप्तिः, समुदाये च वाक्यपरिसमाप्तिरिति प्रदर्शितम्, इदानीं वाक्यमहावाक्ययोस्तत्तत्परिसमाप्तार्थबोधकत्वरूपस्वरूपयोग्यतासमाश्रयणेन तद् द्वयं प्रतिपादयितुमाह—**वाक्यान्तराणामिति।**

अयमर्थः—वाक्यान्तराणाम् = वाक्यापेक्षया भिन्नानां तद्घटितानां महावाक्यानाम्, प्रत्येकम् = प्रत्येकमपि, अपिना समुदायेऽपि समाप्तिः = पर्यवसायिता, पर्याप्तता कैश्चिदिष्यते। अतस्तेन महावाक्येन, रूपान्तरेण युक्तानाम् = परस्परं भिन्नानाम्,

इहैकं यद्वाक्यं श्रुतं तेन वाक्यान्तराणां वाक्यरूपाणां संग्रहो लक्षणं प्रत्यायनमिष्यते। तानि वाचकानि। तस्मान्महावाक्यं प्रत्येकं समाप्यते। ततश्च तथैवार्थावगतिरिति ॥ ३८९ ॥

अथ वाक्यान्तराणां कमेकमेव तन्महावाक्यमभिधायकमुच्यत इत्याशङ्क्याह—

**न वाक्यस्याभिधेयानि भेदवाक्यानि कानिचित्।**
**तस्मिंस्तूच्चरिते भेदांस्तथान्यान् प्रतिपद्यते ॥३९०॥**

---

वाक्यानाम् = अङ्गवाक्यानाम्, संग्रहः = सम्यगुपादानं भवति।

अयं भावः—अङ्गवाक्यानि प्रत्येकपर्याप्तान्येव, अङ्गिवाक्यं तु समुदायपर्याप्तं च प्रत्येकपर्याप्तञ्च। तथाहि—वेदे "समिधो यजति" इत्यादीनि प्रयाजानुयाजवाक्यानि प्रत्येकं परिसमाप्तान्येव, तान्येव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्याद्यङ्गिवाक्येन सहैकवाक्यत्वमापन्नानि महावाक्यरूपाण्यङ्गाङ्गिकर्मसमुदाये परिसमाप्तानि, तदेव महावाक्यमपोद्धृत्य योजितं प्रत्येकपरिसमाप्तमपि भवति। लोके यथा –

अभ्युद्धृता वसुमती दलितं रिपूरः प्रत्याहृता बलवता बलिराजलक्ष्मीः।
एकत्र जन्मनि कृतं तदनेन यूना जन्मत्रये यदकरोत् पुरुषः पुराणः॥

अत्र हि पूर्वार्धे त्रीणि वाक्यानि प्रत्येकं परिसमाप्तानि, उत्तरार्धे तु तृतीयपादे तच्छब्देन परामृष्टं वाक्यत्रयात्मकमेकं महावाक्यं समुदाये परिसमाप्तम्। एकत्र जन्मन्यनेन यूनेति कर्त्रैक्यनिर्देशात्, चतुर्थपादे तु तदेव यच्छब्देन परामृष्टं प्रत्येकं परिसमाप्तम्, 'जन्मत्रये' इत्यनेन कर्तृभेदनिर्देशात्। एवं चाङ्गवाक्यानां फलाकाङ्क्षयाऽङ्गिवाक्येन सह संबन्धेऽङ्गिवाक्यानां चेतिकर्तव्यताकाङ्क्षयाऽङ्गवाक्यैः सह सम्बन्धेऽङ्गवाक्येनाङ्गिवाक्यस्य संग्रहः, अङ्गिवाक्येन चाङ्गवाक्यानां संग्रह इत्यवधेयम्। स च तत्तद्वाक्यानां तदितरवाक्याभिधायकत्वादिति पद्यकृतो भावः।

एवं चाभ्युद्धृतेत्यादिपद्ये यत्तद्घटितमुत्तरार्धं पूर्वार्धवाक्यत्रयस्याभिधायकमिति।

पुण्यराजेन त्विदं पद्यमेवं व्याख्यातम्—'इहैक यद् वाक्यं श्रुतं तेन वाक्यान्तराणां वाक्यरूपाणां संग्रहो लक्षणं प्रत्यायनमिष्यते, तानि वाचकानि, तस्मान्महावाक्यं प्रत्येकं समाप्यते। ततश्च तथैवार्थावगतिः" इति।

अस्यायमाशयः—वृषलैर्न प्रवेष्टव्यमित्येकं यद् वाक्यं श्रुतं तेन वाक्यान्तराणाम् = यतो वृषला जङ्गमानि श्मशानानि, यतश्चेदं देवगृहम्—इत्यादीनां वाक्यरूपाणां संग्रहो लक्षणम् = अभिधया प्रत्यायनमिष्यत इति वृषलैर्न प्रवेष्टव्यमित्यादीनि श्रुतानि वाक्यानि वाचकान्यश्रुतानां वाक्यान्तराणाम्, तस्मान्महावाक्यम् = तस्माद् वाक्यान्तरवाचकत्वात् वृषलैर्न प्रवेष्टव्यमिति वाक्यं महावाक्यं भूत्वाऽपोद्धारे प्रत्येकमपि परिसमाप्यते, तदभावे समुदाये परिसमाप्यते, ततश्च तथैव = प्रत्येक समुदाये च परिसमाप्तिपूर्वकमर्थावगतिरिति ॥ ३८९ ॥

तस्मादुच्चरितादर्थप्रतिपत्तावर्थपर्यालोचनावशेनावान्तरवाक्यप्रतिपत्तिः सम्पद्यत इत्युच्यते, न पुनस्तेन तान्यभिधीयन्त इति ॥ ३९० ॥

अत्राखण्डवाक्यवादी प्रौढवादितया पदवादिमतं निराकर्तुमाह—

**येषां समस्तो वाक्यार्थः प्रतिभेदं समाप्यते।**
**तेषां तदानीं भिन्नस्य किं पदार्थस्य सत्तया ॥ ३९१ ॥**

प्रत्येकमखण्डस्यैव वाक्यार्थस्य परिसमाप्तेः पदार्थानामनुपयोगात् पदार्थकल्पना वृथैव ॥ ३९१ ॥

वाक्यवादी विकल्पयितुमाह—

**अथ तैरेव जनितः सोऽर्थो भिन्नेषु वर्तते।**
**पूर्वस्यार्थस्य तेन स्याद्विरोधः सह वा स्थितिः ॥ ३९२ ॥**

अथोच्यते पदार्थैरेव वाक्यार्थो जनितो भिन्नेषु वर्तते। पूर्वस्य तेन सह विरोधः सहानवस्थानलक्षणो वा स्यात्, अथवा सहावस्थितिरिति द्वयी गतिः ॥ ३९२ ॥

---

ननु वाक्यान्तराणाम् = अङ्गवाक्यानाम्, किमिति तन्महावाक्यम् = अङ्गिवाक्यम्, अभिधायकमुच्यते तत्र तस्य सकेतग्रहाभावादित्याशङ्क्याह—न **वाक्यस्येति**।

अयमर्थः—वाक्यस्य = महावाक्यस्य, भेदवाक्यानि = भिन्नमनान्यङ्गवाक्यानि, कानिचित् = कान्यपि, नाभिधेयानि तत्र तस्यासकेतितत्वात्। तस्मिन् महावाक्ये उच्चरिते तु, अन्यान् भेदान् = अन्यान्यङ्गवाक्यानि, तथा = महावाक्यार्थप्रतिपत्तिप्रकारेण, अङ्गवाक्याना प्रतिपत्तौ महावाक्यार्थप्रतिपत्तिसादृश्य च महावाक्योच्चारणान्तरभावित्वरूपम्।

अयं भावः—उच्चारितात् महावाक्यादर्थप्रतिपत्तौ सत्यामर्थपर्यालोचनावशेन तदन्वययोग्यार्थाभिधायकावान्तरवाक्यप्रतिपत्तिः संपद्यते, न पुनर्महावाक्येनावान्तरवाक्यान्यभिधीयन्त इति ॥ ३९० ॥

अत्राखण्डवाक्यवादी प्रौढिवादितया पदवादिमतं निराकर्तुमाह—**येषामिति**।

अयमर्थः—यदा येषाम् = अखण्डवाक्यवाक्यार्थवादिनाम्, समस्तः = समुदितः, अखण्ड इति यावत्। वाक्यार्थः प्रतिभेदम् = प्रत्येकं समाप्यते = सबध्यते, तदानीं तेषां मते वाक्यार्थघटकस्य भिन्नस्य पदार्थस्य सत्तया किं प्रयोजनम्? नास्ति प्रयोजनमनुपयोगादित्यर्थः। अत्राखण्डवाक्यवादिनः प्रौढिवादित्वमहेतुकं स्वमतोपन्यासादिति ॥ ३९१ ॥

अथाखण्डवाक्यवाद्येव पदवादिमतं विकल्प्य प्रत्याख्यातुमाह—**अथ तैरेवेति**।

अयमर्थः—अथ = यदि, तैरेव = पदार्थैरेव, परस्परं संसृज्यमानैर्जनितः सोऽर्थः = वाक्यार्थः, भिन्नेषु प्रत्येकं वर्तत इत्युच्यते, तदा पूर्वस्यार्थस्य = पदार्थरूपस्य वाक्यार्थजनकस्य, तेन = वाक्यार्थेन सह, विरोधः = सहानवस्थानलक्षणः स्यात्, वा = अथवा, सहस्थितिः स्यादिति ॥ ३९२ ॥

तत्र सहस्थितौ चोद्यमाह—

**सहस्थितौ विरोधित्वं स्याद् विशिष्टाविशिष्टयोः।**
**व्यभिचारी तु सम्बन्धस्त्यागेऽर्थस्य प्रसज्यते ॥ ३९३ ॥**

भेदसंसर्गौ विरुद्धावत्रानुषज्येयातामित्यर्थः। अथ पदार्थवाक्यार्थयोरत्र सहानवस्थानं यत्पूर्वः पदार्थो वाक्यार्थो वाक्यार्थे तत्र समाप्ते विनिवर्तते, तदायं दोष इत्याह—व्यभिचारीति। वाक्यार्थफलानां पदानामुपात्तार्थपरित्यागे शब्दार्थसम्बन्धो व्यभिचार्यनित्यः प्राप्नोति। अतः प्रत्येकं वाक्यपरिसमाप्तिपक्षे सत्यभूतपदपदार्थासम्भव एव ॥ ३९३ ॥

अथ समुदायवाक्यपरिसमाप्तिपक्षे किं समुदायार्थेन सङ्घ एवार्थवान् नावयवाः, आहोस्वित्तदवयवा अपीति विचारयितुमाह—

**एकः साधारणो वाच्यः प्रतिशब्दमवस्थितः।**
**सङ्घे सङ्घिषु चार्थात्मा संनिधाननिदर्शकः ॥ ३९४ ॥**

सोऽर्थात्मा वाच्यः सत्यभूतो वाक्यार्थलक्षण एकोऽखण्डः प्रतिशब्दमवस्थितो बोद्धव्यः। यतोऽसौ साधारणः सर्वेषां वाच्यभूतः स्थितः। अथ तेष्वेव स्थितोऽसौ नेत्याह—सङ्घिषु चेति। साधारणत्वात् समुदायेऽप्युच्यते तदवयवेष्वपीति।

---

तत्र सहस्थितौ दोषमाह—**सहस्थिताविति**।

तत्र पदार्थवाक्यार्थयोर्जन्यजनकयोर्विशिष्टाविशिष्टयोः सहस्थितावभ्युपगम्यमानायां विरोधित्वं स्यात् = विरोधिनोः पदार्थभेदपदार्थसंसर्गयोः सहस्थित्यभ्युपगन्तृत्वं स्यात्, तच्चानुचितम्। तथा हि—विरोधे न सहभावः, सहभावे वा न विरोध इति। यदि तु पदार्थवाक्यार्थयोर्वाक्ये सहानवस्थानलक्षणो विरोध इत्युच्यते। तथाहि—पूर्वः पदार्थोऽसंसृष्टः, स च संसृष्टपदार्थरूपे वाक्यार्थे तत्र = प्रत्येकं पदार्थे, समाप्ते विनिवर्तते तदा न प्रागुक्तविकल्पदोष, किन्त्वयं दोष इत्याह—व्यभिचारीति।

अयमर्थः—अर्थस्य त्यागे तु = वाक्यार्थे पदार्थस्य त्यागे तु, सम्बन्धः = शब्दार्थयोः सम्बन्धः, व्यभिचारी = अनित्यः, प्रसज्यते = प्राप्नोति।

अयं भावः—पदार्थप्रतिपादनद्वारा वाक्यार्थजननफलानां पदानां वाक्यार्थे जनिते सति स्वोपात्तार्थपरित्यागे तत एव शब्दार्थसम्बन्धोऽनित्यः स्यात्। अतः प्रत्येकं वाक्यपरिसमाप्तिरिति पक्षे परमार्थयोः पदपदार्थयोरसंभव एवेत्यखण्डवाक्यवाक्यार्थसिद्धिरिति ॥३९३॥

अथ समुदाये वाक्यपरिसमाप्तिरिति पक्षे किं पदार्थसमुदायरूपेण वाक्यार्थेन पदसंघातरूपं वाक्यमेवार्थवत्, न तदवयवाः पदानि, अथवा तदवयवा अपीति विचारयितुमाह—एक इति।

यदि प्रतिशब्दमवस्थितः, तत एकपदोपलम्भकाले किमित्यसौ नावगम्यत इत्याह—संनिधाननिदर्शक इति। इतरपदसंनिधानं निदर्शकं यस्यासौ तथाभूतः।

यथोक्तं पुरस्तात्—"प्रत्येकं तु समाप्तोऽर्थः सहभूतेषु वर्तते" (११५) इति। अतः सकलपदोपलम्भकाले प्रतीयत इति न कश्चिद्दोषः ॥ ३९४ ॥

एतद् दृष्टान्तद्वारेण व्यक्तीकर्तुमाह—

**यथा साधारणे स्वत्वं त्यागस्य च फलं धने।**
**प्रीतिश्चाविकला तद्वत् सम्बन्धोऽर्थेन तद्वता ॥ ३९५ ॥**

धने बहूनां साधारणे स्वत्वं स्वस्वामिभाव आत्मीयत्वं वा सर्वेषां त्यागस्य च दानलक्षणस्य फलम्। तदपि सर्वेषामस्माकं बहु धनमस्तीति। चेतसश्च प्रीतिनिर्वृत्तिलक्षणा साप्यविकला साधारणत्वादेव सर्वेषां भवति। तद्वत्तेनार्थेन समं कृत्वा तद्वतां सङ्घसङ्घिनां सम्बन्धो बोद्धव्यः ॥ ३९५ ॥

---

अयमर्थः—सोऽर्थात्मा वाक्यार्थरूपः, वाच्यः सत्यभूत एकोऽखण्डः प्रतिशब्दं संघे संघिषु च पदसंघातरूपे वाक्ये तदवयवेषु पदेषु चावस्थितो बोद्धव्यः। यतोऽसौ वाक्यार्थः साधारणः सर्वेषां पदानां वाक्यस्य च वाच्यभूतः स्थितः। साधारणत्वादेव संघेन संघिभिरपि वाक्यार्थ उच्यत इति भावः।

यदि प्रतिशब्दमवस्थितस्तदैकपदोपलम्भकाले किमित्यसौ नावगम्यत इत्याशङ्क्याह—सन्निधाननिदर्शक इति। इतरपदसन्निधानं निदर्शकं ज्ञापकं यस्येति बहुव्रीहिः।

एतच्चोक्तं प्राक्—'प्रत्येकं तु समाप्तोऽर्थः सहभूतेषु वर्तते' (११५) इति। अतः सकलपदोपलम्भकाल एव प्रतीयत इति न कश्चिद् दोषः ॥ ३९४ ॥

वाक्यार्थो वाक्ये तदवयवेषु पदेषु च वाच्यवाचकभावसम्बन्धेन वर्तत इत्येतत्पूर्वपद्योक्त दृष्टान्तद्वारेण व्यक्तीकर्तुमाह—**यथेति**।

अयमर्थः—यथा बहूनामेकपरिवारसमवेतानामेकश्रेणीसमवेतानां साधारणे धने स्वत्वम् = स्वस्वामिभावः = आत्मीयत्वं वा सर्वेषां भवति, त्यागस्य च दानरूपस्य फल स्वर्गापूर्वादिक सर्वेषाम्, अस्माकं बहुधनमस्तीति मतिजनिता चेतसः प्रीतिश्च निर्वृतिरूपा अविकला = सकला, न तु न्यूना सकलानामेव भवति, धनस्य साधारणत्वात्। तद्वत् = तेन धनेन तुल्यम्, तद्वताम् = वाचकतासबन्धेन वाक्यार्थवतां संघसंघिनामर्थेन सह सम्बन्धः साधारणो बोद्धव्य इति। अत्र बुधिक्रियागतं तुल्यत्वमादाय तुल्यार्थ वतिस्तद्वदिति।

यत्तु पुण्यराजेनोक्तम्—'तेनार्थेन सम कृत्वा तद्वता संघसंघिनां संबन्धो बोद्धव्यः" इति। तस्यार्थः—तेन बहूनां साधारणेनार्थेन = धनेन वाक्यार्थे पदवाक्यसाधारणं साधारणत्वादेव समं कृत्वा तद्वतां संघसंघिवता वाक्यार्थेन संबन्धस्तद्वद् बोद्धव्य इति। अत्र 'समं कृत्वा' इत्युक्त्या तद्वदित्यत्र न कृधात्वर्थक्रियातुल्यत्व वतिः, धनवाक्यार्थयोः समत्वस्यात्र सत्त्वेन क्रियातुल्यत्वाभावात्। तथा च बोद्धव्य इति बुधिक्रियासाम्यमादायैव तद्वदित्यत्र वतिर्बोद्धव्य इति ॥ ३९५ ॥

इदानीमेतत्प्रसङ्गेन सङ्घातस्यैकार्थ्यात् सुबभावो वर्णादित्येतद् व्याख्यातुमाह—

**वर्णानामर्थवत्तायां तेनैवार्थेन तद्वति ।**
**समुदायेन चैकत्वं भेदेन व्यवतिष्ठते ॥ ३९६ ॥**

यदा वर्णा अप्यर्थवन्तः समुदायेऽप्यर्थवत्ता, तदा तत्रार्थवत्त्वस्य साधारण्येनैवैकत्वात् समुदायादेवैकत्वप्रतिपादनायैकवचनमुत्पद्यते, न प्रत्येकं वर्णेभ्य इति ॥ ३९६ ॥

एतदेव दृष्टान्तप्रदर्शनपूर्वकं दर्शयितुमाह—

**एकेनैव प्रदीपेन सर्वे साधारणं धनम् ।**
**पश्यन्ति तद्वदेकेन सुपा संख्याऽभिधीयते ॥ ३९७ ॥**

सन्तमसे साधारणधनस्वरूपपरिज्ञानं यथैकेनैव प्रदीपेन सम्पद्यते, तद्वदत्रापि साधारणार्थवत्ताऽभिव्यक्तये एकेनैव समुदायादुत्पन्नेन सुपा एकत्वलक्षणा संख्या समुदायाङ्गताऽभिधीयत इति न पृथक् पृथक् सुबुत्पत्तिः ॥३९७॥

---

पूर्वं वाक्यार्थेनार्थवत्ता वाक्यस्य पदानां चेत्युक्तम् । इदानीमेतत्प्रसङ्गेन—"संघातस्यैकार्थ्यात् सुबभावो वर्णात्" संघातस्य = वर्णसंघातरूपस्य प्रातिपदिकस्य, ऐकार्थ्यात् वर्णैः सहैकार्थवाचकत्वात्, उभयोरर्थवत्त्वेऽपि वृक्षप्रचलनन्यायेन वर्णसमुदायरूपात् प्रातिपदिकादेव सुबुत्पद्यते, वर्णेभ्यस्तु सुबभाव इत्यर्थकं भाष्यवाक्यमभिप्रेतार्थप्रदर्शनेन व्याख्यातुमाह—**वर्णानामिति** ।

अयमर्थः—वर्णानामर्थवत्तायां सत्यां तेनैवार्थेन तद्वति = वर्णवति वर्णसमुदायरूपे प्रातिपदिके चार्थवत्ताया सत्याम्, समुदायेन च = वर्णसमुदायरूपेण प्रातिपदिकेनैव, चकार एवकारार्थः । एकत्वं संख्या; एकवचनोत्पत्तिद्वारा प्रतिपाद्यत इति शेषः । भेदे वर्णसमुदायात् परस्परस्माद् वा भिद्यमाने वर्णे, न व्यवतिष्ठते = स्वाश्रयार्थवाचकत्वसंबन्धेन व्यवस्थायापि प्रतीतं न भवति अतो वर्णेभ्यः प्रत्येकमेकवचनं नोत्पद्यत इति भावः ।

पुण्यराजेन त्वियं कारिकैवं व्याख्याता—"यदा वर्णा अर्थवन्तः समुदायेऽप्यर्थवत्ता, तदा तत्रार्थवत्त्वस्य साधारण्येनैवैकत्वात् समुदायादेवैकत्वप्रतिपादनायैकवचनमुत्पद्यते, न प्रत्येकं वर्णेभ्यः" इति । अत्र 'अर्थवत्ता' इत्यन्तं वाक्यं पूर्वार्धस्य व्याख्यानम् । इतरत्तु उत्तरार्धस्येत्यवधानेन प्रतीयत इति ॥ ३९६ ॥

पूर्वकारिकोक्तमेवार्थं दृष्टान्तप्रदर्शनेन प्रसाधयितुमाह—**एकेनैवेति ।**

अत्रोत्तरार्धे तद्वदिति पदश्रुत्या पूर्वार्धे यथेति पदमध्याहार्यम् । अयमर्थः—यथा रात्रौ संतमसे सर्वासां प्रजाना साधारणम् = सामान्यं धनं राष्ट्रियं साम्प्रतं प्रजातन्त्रशासने, यथा

अत एवं साधारणैवासावर्थवत्ता एकेनैव सुपाऽभिहिता, तस्मादसौ वर्णपदयोरपि वाक्ये च भवन्तीति न विशिष्यते न पृथगभिधातुमुपयुज्यत इति बोद्धव्यमित्यभिधातुमाह—

**नार्थवत्ता पदे वर्णे वाक्ये चैवं विशिष्यते ।**
**अभ्यासात् प्रक्रमोऽन्यस्तु विरुद्ध इव दृश्यते ॥३९८॥**

ननु पूर्वं वाक्यस्यैवार्थवत्त्वं महता प्रबन्धेन व्यवस्थापितम्, पदान्यनर्थकान्येवाभिहितानि। वर्णानामर्थवत्त्वे कैव कथा? इदानीं वर्णे पदे वाक्ये च समं कृत्वैवार्थवत्तोद्घोष्यत इति किमेतदुच्यत इत्याशङ्क्याह—अभ्यासादिति। इह भिन्नान्यागमदर्शनानि लौकिकैश्चावाग्दर्शिभिस्तत्राभिनिविष्टैः परस्परं शास्त्राणां पृथक् पृथक् प्रक्रमाः परिपाट्यो दृश्यन्ते विरुद्धा इव, परमार्थतस्तत्त्वं सत्यरूपमेकमविरुद्धमेव सर्वत्र स्थितमिति। अतश्च सर्वपार्षदत्वादेतदनुषङ्गात् कथञ्चिदाश्रितम्, नैतावताऽभ्युपेतस्याखण्डपक्षस्य त्याग आयात इति बोद्धव्यम् ॥ ३९८ ॥

---

वा सदस्यानां प्रजानां साधारण श्रेणीधनं प्रागपि राजशासने, एकेनैव प्रदीपेन साम्प्रत महता विद्युदालोकेन, प्रागपि महताऽतैलपूरेण मण्यादिप्रदीपेन तैलपूरेण वा काञ्चनादिप्रदीपेन सर्वे जनाः पश्यन्ति। अत्र लडर्थो वर्तमानत्वमविवक्षितम्, अत्र दर्शनक्रियायाः कालत्रयसाधारणत्वेनोपन्यासात्। तद्वदत्रापि समुदायावयवसाधारणार्थाभिव्यक्तये एकेनैव सुपा समुदायादुत्पन्नेनैकत्वसंख्या समुदायावयवार्थगताऽभिधीयत इति न पृथक् पृथक् समुदायाद् वर्णेभ्यश्च सुबुत्पत्तिरिति ॥ ३९७ ॥

यतः पूर्वकारिकोक्तरीत्या वर्णपदयोः साधारणैवासावर्थवत्ता एकेनैव समुदायादुत्पन्नेन सुपाऽभिहिता, तस्मादसौ वर्णपदयोरपि = वाक्ये पदे च भवतीति न वर्णपदयोः पदवाक्ययोर्वा सा विशिष्यते = विलक्षणाऽस्तीति न पृथगभिधातुमुपयुज्यत इति बोधयितुमाह—**नार्थवत्तेति**।

अयमर्थः—एवम् = पूर्वकारिकोक्तरीत्या वर्णे पदे वाक्ये चार्थवत्ता न विशिष्यते = न भिद्यते, किन्तु तत्त्रितयसाधारणमर्थवत्त्वमेकमेवेति।

ननु पूर्वमखण्डस्य वाक्यस्यैवाखण्डार्थवत्त्वं महता प्रबन्धेन व्यवस्थापितम्, ततः कल्पनयाऽपोद्धृतानि पदान्यसत्यान्यनर्थकान्येव चाभिहितानि, तथा च वर्णानामानर्थक्यं तु कैमुतिकन्यायेनैव समायातम्। इदानीं तु वर्णे पदे वाक्ये च समैवार्थवत्तोद्घोष्यत इत्येवं किमेतत् परस्परविरुद्धमुच्यत इत्याशङ्क्याह—अभ्यासादिति।

अयमर्थः—यद्यपि परमार्थतस्तत्त्वं सत्यरूपमेकमेवाखण्डं वाक्यं वाक्यार्थश्च तथाविध इत्यविरुद्धमेव सर्वत्र व्याकरणे स्थितम्, तु = किन्तु, भिन्नेषु व्याकरणागमदर्शनेषु तत्र तत्राभिनिविष्टैर्लौकिकैरर्वाग्दर्शिभिः परस्परं शास्त्राणां पृथक् पृथक् प्रक्रमाः। तद्यथा—अखण्डवाक्यवाक्यार्थप्रक्रमादन्यो वर्णार्थवत्ताप्रक्रमः, पदार्थवत्ताप्रक्रमश्च परिपाटीरूपोऽतात्पर्येण

इदानीं शब्दस्यार्थाभिधाने स्वव्यापारं विचारयितुकाम आह—

**विनियोगादृते शब्दो न स्वार्थस्य प्रकाशकः ।**
**अर्थाभिधानसम्बन्धमुक्तिद्वारं प्रचक्षते ॥३९९॥**

इहैक एव शब्दो बह्वर्थः । स यदा वक्त्रा प्रतिनियत एवार्थे विनियुज्यते, तदा तमर्थं प्र ाशियतीति दृष्टम् । अतः शब्दस्यार्थप्रतिपादनयोग्यता उक्तिद्वारैवे- त्याहुः ॥३९९॥

---

पाठादविरुद्धोऽप्यभ्यासात् पौनःपुन्येन पाठाद् विरुद्ध इव दृश्यते । अतो व्याकरणस्यास्य सर्व- पार्षदत्वादेतद्वर्णानामर्थवत्त्वं पदानाञ्चार्थवत्त्वमागमान्तरानुसारि प्रसङ्गात् कथञ्चिदाश्रितम्, न तु तात्पर्येणेति नैतावताऽभ्युपगतस्य वाक्यवाक्यार्थयोरखण्डत्वाभ्युपगमपक्षस्य त्याग आयात इति मन्तव्यमिति ॥३९८॥

अथेदानीं शब्दस्यार्थाभिधाने व्यापार विचारयितुमुपक्रमते । स च व्यापारः शब्दार्थयोः संबन्धरूपोऽभिधाख्यः । सा चाभिधा प्रतिभातो भिन्नाऽभिन्ना वेत्यस्ति पक्षद्वयम् । प्रतिभा चोक्तिविनियोगपदाभ्यामभिधेया वाग्धर्मः । अनुसन्धानाभिसन्धानपदाभिधेया मनो धर्मः । प्रणिधानपदाभिधेया चक्षुषो धर्मः । तदुक्तम्

"उक्तिः करणविन्यासो न विना शब्दभावनाम्" इति । (१।१२२)

अत्रोक्तिर्विनियोगः । करणविन्यासः प्रणिधानम् । शब्दभावना अनुसन्धानमभिसन्धा- नञ्च । तत्राभिधाप्रतिभयोर्भेदपक्षे शब्दस्य स्वार्थप्रतिपादनयोग्यतारूपाभिधाशब्दस्य स्वार्थऽभि- धानपूर्वकविनियोगरूपामुक्तिपदाभिधेयां प्रतिभा द्वारीकृत्यैव शब्दार्थस्य प्रकाशिका, शब्दो वोक्तिमद्वारीकृत्य नार्थस्य प्रकाशक इत्याह—**विनियोगादृत इति** ।

अयमर्थ—इहैक एव शब्दो बह्वर्थः । स यदा प्रयोक्त्रा प्रतिनियत एवार्थ विनि- युज्यते = प्रतिनियतमेवार्थमभिसन्धाय प्रयुज्यते, तदा तमर्थं प्रकाशयतीति दृष्टम् । एवञ्च विनियोगादृते = प्रतिनियतस्वार्थाभिसन्धानपूर्वको यः शब्दस्य प्रतिनियतेऽर्थे प्रयोगरूपो विनियोगस्तं विना, शब्दोऽनेकार्थकः स्वार्थस्य = प्रतिनियतस्य निजार्थस्य प्रकाशको न भवति । अतोऽर्थाभिधानसम्बन्धम् = अर्थाभिधानयोः—अर्थशब्दयोः सम्बन्धम्, शब्दस्यार्थप्रतिपादन- योग्यतारूपं सम्बन्धमिति यावत् । उक्तिद्वारम्, उक्तिः = प्रागुक्तो विनियोगः प्रतिभारूपो द्वार यस्मिस्तत् तथाभूतं प्रचक्षते । शब्दमर्यादाविदो वैयाकरणा इति कर्तृपदमध्याहार्यम् । शब्द- स्वार्थप्रतिपादनयोग्यतारूपोऽभिधाख्यः सबन्ध उक्तिद्वारैव प्रतिनियतस्वार्थविषयकं बोधं जनयतीत्याहुरिति भावः ॥३९९॥

अथ कि शब्दस्यार्थेन सह सम्बन्धः स्वाभाविकः, अहेतुको नित्य इति यावत् । अथव

अथ किं स्वाभाविकः शब्दार्थसम्बन्धोऽथेदृशीं दशामुपेतो यदमी शब्दा वक्तृ-विनियोगमुखप्रेक्षणसम्बन्धाः । हन्तैवंवादिना भवता विभूषितैव वैयाकरणधुरेत्याशङ्क्यैतत्समर्थनार्थमाह—

**यथा प्रणिहितं चक्षुर्दर्शनायोपकल्पते ।**
**तथाऽभिसंहितः शब्दो भवत्यर्थस्य वाचकः ॥४००॥**

यथा सहजयैव योग्यतया चक्षुरिन्द्रियमर्थविषये दर्शनमुपकल्पयद् द्रष्टृ-सम्बन्धि प्रणिधानमपेक्षते, अन्यथा सर्वदा दर्शनोपजननप्रसङ्गात्; तथैव शब्दः स्वाभाविकेनैव सम्बन्धेनार्थप्रत्यायकोऽप्यभिधातृसम्बन्ध्यभिसन्धानमपेक्षत एव ।

एतदुक्तं भवति —वाक्यानि स्वव्यापारे प्रतिनियतस्वार्थभाञ्जि भवन्त्यभिधेयार्थं प्रकाशयन्त्यभिधाख्यं स्वव्यापारं पुरस्कृत्यार्थप्रकाशनं कुर्वन्तीति बोद्धव्यम्, स चाभिधाख्यो व्यापारः प्रयोक्तृ-सम्बन्ध्यभिसन्धाननिमित्तक इत्यभिसन्धानत्वेनोपचर्यते । यदाह-तथाभिसंहितः शब्दोऽर्थस्य वाचको भवतीत्यभिसन्धानमेव ह्यत्र शब्दस्योक्तिलक्षणव्यापारतयाऽतिदिशति । यदा त्वभेदपक्षस्तदा वक्तुरन्तरुल्लसिता प्रतिभैवाभिसन्धिरूपा शब्दमयी भवति । स्पष्ट एवाभिसन्धानोक्तेर-

---

कृत्रिमः कालवशाद् दशाविशेषमुपागतोऽर्थाविबोधने वक्तृविनियोगसापेक्षः संवृत्त इति विकल्प्यान्ते वैयाकरणसिद्धान्तहानिम्, "सिद्धे शब्दार्थसम्बन्धे" इत्यादिवार्त्तिकतद्भाष्यविरोधादाशङ्क्याद्यपक्षसमर्थनार्थमाह—**यथा प्रणिहितमिति** । पुण्यराजीयस्य अस्यावतरणग्रन्थस्य मदुक्तार्थे एव तात्पर्यम् । हन्तैवंवादिना विभूषितैव वैयाकरणधुरा, इति वाक्यं विपरीतलक्षणयोपहासपरम्, एवञ्च-हन्तैवंवादिना न विभूषितैव वैयाकरणधुरा इत्यर्थः संपद्यत इति ।

अयं तु कारिकार्थः—यथा स्वाभाविकेन रूपग्रहणयोग्यतारूपेण संबन्धेन सपन्नमपि चक्षुरूपादिविषये प्रणिहितमेव दर्शनायोपकल्पते—समर्थं भवति, नाप्रणिहितम्, अन्यथा सर्वदा दर्शनोपजननप्रसङ्गात् । नहि चक्षुषोऽप्रणिधानदशायां दर्शनमुपजायत इति । तथाऽभिसंहित एव-प्रतिनियते तत्तदर्थेऽभिधातुरभिसंधानेन प्रतिभारूपेण गोचरीकृत एव शब्दस्तत्तदर्थस्य वाचको भवति, नानभिसंहित इति ।

अयं भावः-वाक्यान्यनेकार्थान्यपि स्वव्यापारमभिधाख्यं पुरस्कृत्यैव प्रतिनियतस्वार्थप्रकाशनं कुर्वन्ति, स चाभिधाख्यो व्यापारस्तत्राभिधातुस्तत्तच्छब्दस्य तत्तदर्थेऽभिसन्धानमपेक्षते, अन्यथा प्रतिनियतस्वार्थाभिधानासंभवादित्येवमभिधाऽप्यभिसन्धानत्वेनोपचर्य = आरोप्य व्यवह्रियते ।

एतदेवोक्तमत्रैव-"तथाभिसंहितः शब्दो भवत्यर्थस्य वाचकः" इति । अत्राभिसन्धानम् उक्तिलक्षणाभिधैवातिदिष्टा । इदं चाभिसन्धानाभिधयोर्भेदपक्षे द्रष्टव्यम् । यदा तु तयोरभेदपक्षस्तदा तत्तदर्थे तत्तच्छब्दविवक्षया वक्तुरन्तरुल्लसिता प्रतिभैवाभिसंधिरूपा सूक्ष्मा शब्दमयी-स्थानकरणाभ्यां सहकृतेन वायुनाऽभिव्यज्यमाना वैखरीभावमापद्याभिधया स्वार्थं प्रकाशयतीति

भेदनिर्देशः। अतः प्रचारश्चक्षुषोऽपि व्यापारः प्रणिधानात्मक एव "उक्तिः करण-विन्यासो न विना शब्दभावनाम्" इत्यनुसन्धानकारणकः शब्दस्य स्वव्यापारोऽभिधाऽनुसन्धानमेव वा शब्दमयी भूतमभिधेति विज्ञयेम् ॥४००॥

ननु चाभिधानमभिधेयं सम्बन्धश्च तयोरित्येतावदेव सुप्रसिद्धम्, यत्त्वत्र विनियोग उक्तिरभिसन्धानमभिधेत्येवंरूपस्य चतुष्कस्योपयोगः प्रतिपाद्यते तदप्रसिद्धमेवेत्याशङ्क्याह—

**क्रियाव्यवेतः सम्बन्धो दृष्टः करणकर्मणोः।**
**अभिधा नियमस्तस्मादभिधानाभिधेययोः ॥४०१॥**

इह कारकाण्ययःशलाकाकल्पानि परस्परमसम्बद्धान्येव। तेषां च यथा क्रियाव्यवधानेन क्रियासमाश्रयणेन सम्बन्धो दृश्यते, तथैवाभिधानाभिधेययोर्वाच्यवाचकभावलक्षणः सम्बन्धोऽभिधाख्येन शब्दव्यापारेण नियम्यत इति नापूर्वमत्राभिहितमिति ॥४०१॥

---

स्पष्ट एवाभिसन्धानोक्त्योरभेदनिर्देशः—तथाभिसंहितः शब्द इत्यत्र। एवं घटादिप्रत्यक्षे चाक्षुषः प्रचाराख्यो व्यापारोऽपि प्रणिधानात्मकः प्रतिभैव। तथा च—"उक्तिः करणविन्यासो न विना शब्दभावनाम्" इति प्रागुक्तेर्भेदपक्षेऽनुसन्धानकारणकोऽनुसन्धानाभिव्यंङ्ग्यो वा शब्दस्यानित्यो वा स्वव्यापारोऽभिधा। अभेदपक्षे त्वनुसन्धानमेव परिणामक्रमेण शब्दमयीभूतम्—वैखरी-भावमापन्नम् अभिधेति विज्ञेयमिति ॥४००॥

नन्वभिधानं शब्दः, अभिधेयं संबन्धश्च, तयोरित्येतावदेव सुप्रसिद्धं "सिद्धे शब्दार्थ-सम्बन्धे" इति वार्तिके तद्भाष्ये च, लोकेऽपि सर्वेषु व्यवहारेषु, यत्त्वत्र—विनियोगः, उक्तिः, अभिसन्धानम्, अभिधा इत्येवंरूपस्य भिन्नप्रवृत्तिनिमित्तकपदचतुष्टयप्रतिपाद्यस्य पदार्थ-चतुष्कस्य परस्परं भिन्नस्य वाक्येन वाक्यार्थबोधे जननीये यदुपयोगः प्रतिपाद्यते, तदप्रसिद्ध मेवेत्याशङ्क्याह—**क्रियाव्यवेत** इति।

अयमर्थः—उत्तरार्धे तस्मादित्यस्य दर्शनात् पूर्वार्धे यत इत्यध्याहार्यम्। यतः करणकर्मणोरयशलाकावत् परस्परमसंबद्धयोरपि क्रियाव्यवेतः—क्रियया व्यवहितः क्रिया-द्वारकः संबन्धो दृष्टः। तद्यथा—रामेण बाणेन हतो बालिरिति। अत्र हननक्रियायां कर्मत्वकरणत्वाभ्यामन्वितयोर्बालिबाणयोः सामानाधिकरण्याख्यः परस्पर सम्बन्धः। तस्मात् प्रकृतेऽभिधानाभिधेययोरपि करणकर्मणोः सम्बन्धे वाच्यवाचकभावलक्षणोऽभिधारूपः शब्द-व्यापारो नियमः=नियम्यतेऽनेनेति व्युत्पत्त्या नियमसाधनं भवति, अभिधानाभिधेययो-र्वाच्यवाचकभावलक्षणः संबन्धोऽभिधाख्येन शब्दव्यापारेण नियम्यत इति यावत्। अतो नात्र शब्दस्याभिधाख्यो व्यापारोऽर्थावबोधेऽपूर्वोऽभिहित इति भावः।

एवं चात्राभिधानाभिधेययोः करणकर्मणोर्वाच्यवाचकभावलक्षणः संबन्धोऽभिधारूप-क्रियाद्वारक इति फलितम्। तथा चाभिधैव विनियोगः, उक्तिः, अभिसन्धानमिति पदत्रयेणापि

एतदेव स्फुटीकर्तुमाह—

**बहुष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु ।**
**यत्प्रयोक्ताभिसन्धत्ते शब्दस्तत्रावतिष्ठते ॥४०२॥**

तथा च बहुष्वर्थेषु गवादिषु वस्तुष्वेकाभिधानेष्वेकशब्दप्रतिपाद्येषु शब्देषु च तत्रार्थेषु सजातीयत्वादेकार्थकारिषु सन्निहितेषु सत्सु प्रयोक्ता यत्तत्रार्थरूपमभिसन्धत्तेऽभिसन्धानेन विनियोगेनाभिधाविषयीकरोति, तत्रैवार्थे वाचकत्वेन शब्दोऽवतिष्ठते नान्यत्रेति स्फुटमेव परिदृष्टम् ॥ ४०२ ॥

प्रकरणान्तरेणाप्येतदेव स्फुटयितुमाह—

**आम्नायशब्दानभ्यासे केचिदाहुरनर्थकान् ।**
**स्वरूपमात्रवृत्तींश्च परेषां प्रतिपादने ॥ ४०३ ॥**
**अभिधानक्रियाभेदादर्थस्य प्रतिपादकात् ।**
**नियोगभेदान्मन्यन्ते तानेवैकत्वदर्शिनः ॥ ४०४ ॥**

तथा चाम्नायशब्दा वैदिका अभ्यासवेलायां न कञ्चिदप्यर्थमभिदधति, तदाऽनर्थकानेव तानाहुः । यदा त एव स्वरूपग्रहणाय शिष्याणां प्रतिपाद्यन्ते, तदा स्वरूपप्रधानास्त इति तत्र तदर्था एवोच्यन्ते । यदा पुनः कुत्रचिद्याज्ञे कर्मणि

---

प्रतिपाद्यत इति न पदचतुष्टयाभिधेयस्याभिधाख्यस्य शब्दव्यापारस्याप्रसिद्धस्य प्रतिपादनमत्रेति बोध्यम् ॥४०१॥

एतत्कारिकाशयमेव स्फुटीकर्तुमाह – **बहुष्विति ।**

अयमर्थः—बहुष्वर्थेषु गोक्षितिकिरणादिषु वस्तुषु, एकाभिधानेषु = एकमभिधानं शब्दो वाचको येषा तेषु, गवाद्येकशब्दप्रतिपाद्येषु, गावो दृश्यन्तामित्यादौ सर्वेषु चार्थेषु दर्शनादिरूपैकार्थक्रियाकारिषु सन्निहितेषु सत्सु, अतो नार्थक्रियाभेदेनापि शब्दस्यैकत्रार्थेऽवस्थानं संभाव्यत इति भावः प्रयोक्ता तत्र यदर्थरूपमभिसन्धत्ते = अभिसन्धानेन विनियोगाख्येनाभिधाविषयीकरोति, तत्रैवार्थे वाचकत्वेन शब्दोऽवतिष्ठते, नान्यत्रार्थ इति स्फुटमेव लोके परिदृष्टमिति भावः ॥४०२॥

प्रकारान्तरेणाप्यभिधा साधयितुमाह—**आम्नायशब्दानभ्यास इति ।**

अयमर्थः—केचिदेकत्वदर्शिनः = प्रत्युच्चारणं प्रत्यर्थञ्च शब्दैकत्वदर्शिनः, अभ्यासे = अभ्यासवेलायाम्, अभ्यासः = शब्दाना ग्रहणार्थं पुनः पुनरुच्चारणम् । आम्नायशब्दान् वैदिकशब्दान् अनर्थकान् आहुः, तदानी तेषामर्थाभिधानाभावात् । परेषाम् = शिष्याणाम्, प्रतिपादने च = तु शिष्यान् प्रति तेषामेवोपदेशे तु, तानेव स्वरूपमात्रवृत्तीन् = स्वस्वरूपमात्र-

नियोगभेदेनाभिसन्धानभेदेन त एव विनियुज्यन्ते, तदा स्वव्यापारेणाभिधाख्येन तत्तर्थप्रतिपादकास्तदर्थनिष्ठाः सम्पद्यन्त इति स्फुटमेवाभिधेयव्यतिरिक्तोन्मज्जन्त्य भिधा प्रतिभात्येवेति न तदपह्नव उपपन्नः ॥ ४०३-४०४ ॥

एवमेकशब्ददर्शनेऽभिसन्धाननिमित्ताभिधालक्षणव्यापारसमाश्रयणेन शब्दस्य तत्तदर्थाभिधानं समुपपादितमिदानीं शब्दे भेदं समाश्रित्यैषां प्रकरणादिभिरेव तत्तदर्थप्रकाशनमुपपादयितुमाह—

तेषामत्यन्तनानात्वं नानात्वव्यवहारिणः ।
अक्षादीनामिव प्राहुरेकजातिसमन्वयात् ॥ ४०५ ॥

तेषां शब्दानां भेदवादिनो नानात्वमाहुः । केवलमेकजातिसमन्वयस्तेषां सादृश्यरूपोऽस्ति । उदाहरणमाह— अक्षादीनामिवेति । यथाऽक्षादयः शब्दा भिन्ना एव स्थिताः । सादृश्यात्त्वभेदेनैव प्रतीयन्त इति ॥ ४०५ ॥

---

प्रतिपादकान् आहुः । तदानीं तेषां शिष्यान् प्रति स्वरूपग्रहणायैव प्रतिपादनेन तेषां तदा स्वरूपमात्रप्रधानत्वादिति भावः । यागकर्मणि तु यदा त एव शब्दा विनियोगभेदेनाभिसंधानभेदेन विनियुज्यन्ते, तदा तानेव शब्दान् नियोगभेदात् = विनियोगभेदात्, अभिसन्धानभेदात् = अभिधानक्रियाभेदाद् अभिसन्धानभेदप्रयुक्तमभिधानक्रियाभेदमाश्रित्य, अत्र पञ्चम्यन्तद्वयं परस्परं व्यधिकरणं प्रयोज्यप्रयोजकभावापन्नार्थवाचकम् । अर्थस्य तत्तदर्थस्य प्रतिपादकानाहुरित्येवं स्फुटमेवाभिधानाभिधेयव्यतिरिक्तोन्मज्जन्ती अभिधा प्रतिभात्येवेति न तदपलापः कर्तुं शक्य इत्यवधेयम् ॥ ४०३-४०४ ॥

एवमर्थभेदेऽपि शब्दैकत्वमेवेति दर्शनेऽभिसन्धाननिमित्तकाभिधारूपव्यापारभेदसमाश्रयणेन शब्दस्य प्रतिनियततत्तदर्थाभिधानं समुपपादितम् । अस्मिन् दर्शनेऽर्थप्रकरणादीनां शब्दस्य तत्तदर्थाभिधाने नियामकत्वं तु न संभवति, तेषां शब्दतद्व्यापाराभिधाभेदयोर्ज्ञापकत्वात्, अत्र दर्शने च तयोरभावात् । अत एव विशेषस्मृतिहेतव इत्यनेन विशेषार्थस्मारकत्वरूपं ज्ञापकत्वमेवोक्तमर्थप्रकरणादीनाम्, न तु कारकत्वम् । अथेदानीमर्थभेदेन शब्दभेदं समाश्रित्यैषां प्रकरणादिभिरेव तत्तदर्थप्रकाशनमुपपादयितुमाह—**तेषामिति** ।

अयमर्थः—नानात्वव्यवहारिणः = अर्थभेदेन शब्दभेद इति व्यवहरन्तः, एकजातिसमन्वयात् = एकानुपूर्वीरूपधर्मसंबन्धात्, अक्षादीनामिव—अक्षा भज्यन्ताम्, भुज्यन्ताम्, दीव्यन्ताम्—इत्यादा भिन्नार्थत्वेन भिन्नानामप्यानुपूर्वीसाम्यादभेदेन, प्रतीयमानानामक्षादिशब्दानामिव, तेषाम् = नानार्थकानां शब्दानामानुपूर्वीसाम्यादभेदेन प्रतीयमानानामप्यर्थभेदेनात्यन्तनानात्वं प्राहुरिति ॥ ४०५ ॥

अतश्च किमित्याह—

**प्रयोगादभिसन्धानमत्पदेषु न विद्यते ।**
**विषये यतशक्तित्वात् स तु तत्र व्यवस्थितः ॥ ४०६ ॥**

प्रयोग उच्चारणम् । तस्मादन्यत्तेष्वभिसन्धानमुक्तिरभिधा नैव विद्यते । कथं तर्हि नियतमेवार्थमभिदधातीत्याह विषय इति । तत्र तत्र विषये नियतशक्तित्वाद्भिन्नशक्तित्वादेव स शब्दस्तत्र तत्र व्यवस्थित इति ॥ ४०६ ॥

तथा भिन्नत्वं सादृश्येऽपि सत्यर्थप्रकरणादिभिर्निगृहीतार्थाभिधानादवगम्यत इत्याह—

**नानात्वस्यैव संज्ञानमर्थप्रकरणादिभिः ।**
**न जात्वर्थान्तरे वृत्तिरन्यार्थानां कथञ्चन ॥ ४०७ ॥**

युक्तं चैतदन्यथैकत्रार्थान्तरवृत्तित्वं शब्दस्योपलब्धम् , पुनस्तस्यैवान्यार्थत्वं कथमुपपद्यतेत्यभिधातुमाह—न जात्वित्यादि ॥ ४०७ ॥

---

अर्थभेदेन शब्दनानात्वाभ्युपगमाच्च प्रकृते किमायातमिति जिज्ञासायामाह—**प्रयोगादिति** ।

अयमर्थः—प्रयोगादन्यत् = प्रयोग उच्चारणं तस्मादन्यत् , तेषु = नानार्थकेषु शब्देषु, अभिसन्धानमुक्तिरभिधा वा न विद्यते, कथं तर्हि प्रयुज्यमानोऽनेकार्थकः शब्दः प्रतिनियतमेवार्थमभिदधातीत्याशङ्क्याह—विषय इति ।

अयमर्थः—स तु = अनेकार्थकः शब्दस्तु विषये यतशक्तित्वात् = विषये विषये नियतशक्तिकत्वाद् भिन्नशक्तिकत्वादेव तत्र प्रतिनियतेऽर्थे व्यवस्थित इति । तत्तदर्थे भिन्नाऽपि शक्तिः प्रकरणादिभिर्नियम्यत इत्येवमर्थभेदेन शब्दभेदेऽपि प्रतिनियतार्थबोधः शब्दादिति हृदयम् ॥ ४०६ ॥

शब्दानामानुपूर्वीसाम्येऽपि नैकत्वम् किन्तु नानात्वमेव । अर्थकरणादिभिरभिधाया नियमनेन निगृहीतार्थाभिधानादित्याह— **नानात्वस्यैवेति** ।

अयमर्थः—अर्थप्रकरणादिभिरभिधानियामकैः शब्दानामर्थभेदेन नानात्वस्यैव संज्ञानम् = सम्यग् ज्ञानम् अनुमित्यात्मकं प्रमाज्ञानं भवति । अनेकार्थकाः शब्दा अर्थभेदप्रयुक्तपरस्परभेदवन्तः, अर्थप्रकरणादिनिगृहीततत्तदर्थाभिधायित्वात्, व्यतिरेके घटादिशब्दवदिति । युक्तं चैतदित्याहोत्तरार्धेन—न जात्विति ।

अयमर्थः—यतोऽन्यार्थानाम् = एकत्रान्यार्थवृत्तित्वेन प्रतीतानां शब्दानाम्, अर्थान्तरे = तदन्यस्मिन्नर्थे, वृत्तिः = तदन्यार्थाभिधानरूपा प्रवृत्तिः, शब्दैकत्वे कथञ्चन = कथमपि, जातु = कदाचिदपि, न संभवति । तथाहि—वैधर्म्यमेव भेदो भेदहेतुर्वाऽभ्युपेयते, अतोऽर्थभेदेन भिन्नाभिधारूपधर्माभ्युपगमे शब्दभेदाभ्युपगम आवश्यक इति भावः ॥ ४०७ ॥

इदानीं पूर्वोक्तग्रहणाय पुनरखण्डवाक्योपक्रमेण वाक्यवाक्यार्थनिर्णयं संक्षेपेण कर्तुमाह—

**पदरूपं तु यद्वाक्यमस्तित्वोपनिबन्धनम् ।**
**कामं विमर्शस्तत्रायं न वाक्यावयवे पदे ॥ ४०८ ॥**

योऽयमत्र विमर्शो विचारः, कामं स पदे तदेकपदरूपमेव वाक्यं वाचकं तत्रोपपन्नः । कीदृशं तत्पदरूपं वाक्यमित्याह—अस्तित्वोपनिबन्धनमिति। अस्तित्व-मस्तिक्रिया वाक्यत्वे वाचकत्वे उपनिबन्धनं यस्य । यद्वक्ष्यति—"अस्तित्वे-नानुषक्तो वा" (४२३) इत्यादि । अथवा प्रकरणादिनास्तित्वोपनिबन्धनमित्येतच्चोप-लक्षणं कदाचिन्निवृत्त्यात्मतया चेति बोद्धव्यम् । तत्रैष विचारो यदुताभिधाव्यापार-द्वारकं वाचकत्वं प्रतिनियतशक्तिकृतं चेति, न तु वाक्यावयवभूतेऽपोद्धारे परिकल्पिते पद इति, तस्यार्थवत्ताविरहादित्यभिप्रायः ॥ ४०८ ॥

तस्मात् स्फोटरूपमखण्डमेव वाक्यं निराकाङ्क्षं वाचकमभ्युपगन्तव्यमिति दृष्टान्तद्वारेणाभिधातुमाह—

**यथैवानर्थकैर्वर्णैर्विशिष्टार्थोऽभिधीयते ।**
**पदैरनर्थकैरेवं विशिष्टार्थोऽभिधीयते ॥ ४०९ ॥**

---

नन्वेवमर्थप्रकरणादिभिर्निगृहीततत्तदर्थाभिधानात् पदानां भेदाभ्युपगमे पूर्वाभ्युपेता-खण्डवाक्यवाक्यार्थत्वपक्षहानिरित्याशङ्कां मनसिकृत्य पुनरखण्डवाक्योपक्रमेण वाक्यवाक्यार्थ-निर्णयं संक्षेपेण कर्तुमाह —**पदरूपमिति** ।

अयमर्थः—अयं विमर्शः = अर्थभेदेन शब्दभेदो न वेत्ययं विचारः, वाक्यावयवे पदेन वाक्याखण्डत्वस्यैवाभ्युपगमेन पदेऽर्थवत्ताविरहात् । तु = किन्तु. अस्तित्वोपनिबन्धम् = अस्तित्वम् = अस्तिक्रिया, उपनिबन्धनम् = वाक्यत्वसंपादकतया वाचकत्वे निमित्तं प्रयोजकं यस्य तत् तथाभूतं यत् पदरूपं वाक्यं तत्र स विमर्शः काममुपपन्नः । एतच्चोपलक्षणम् । कदाचिन्निवृत्त्युपनिबन्धनमित्यपि बोध्यम्, घट इत्यत्रास्तिपदप्रतीतिवद् निवर्तत इति क्रियापदस्यापि प्रकरणादिना प्रतीतेः । एतच्चाग्रे वक्ष्यति—

अस्तित्वेनानुषक्तो वा निवृत्त्यात्मनि वा स्थितः ।
अर्थोऽभिधीयते यस्मादतो वाक्यं प्रयुज्यते ॥ इति । (२।४२४)

अयं भावः—अस्त्यादिक्रियामादाय वाक्यरूपे एकपद एवैष विचारो यत्राखण्डार्थ-विषयकाभिधाद्वारकार्थप्रकरणादिभिः प्रतिनियतशक्तिकृतं च वाचकत्वमिति, न तु वाक्याव-यवभूतेऽपोद्धारपरिकल्पिते पदे, तस्यार्थवत्ताविरहादिति ॥ ४०८ ॥

यथा त्वन्मते वर्णैरनर्थकैरभिव्यक्तो विशिष्टार्थः पदरूपः स्फोटात्मा वाचकोऽभिधीयते, एवं पदैरनर्थकैरभिव्यक्त एव विशिष्टार्थः स्फोटात्मा वाचकोऽभिधीयत इति ।। ४०९ ।।

ननु पदार्थसम्प्रत्ययस्तत्रोपजायत एव, पदानां त्वनर्थत्वे कथं तत्सद्भाव इत्याह—

यदन्तराले ज्ञानं तु पदार्थेषूपजायते ।
प्रतिपत्तेरुपायोऽसौ प्रक्रमानवधारणात् ।। ४१० ।।

यदेतत्पदपदार्थज्ञानं विभ्रमरूपमन्तराले वाक्यवाक्यार्थप्रतिपत्तेरेवोपायभूतं बोद्धव्यम् । तस्मान्निरंशत्वेऽपि वाक्यवाक्यार्थयोः प्रक्रम एव प्रथमसमय एव रूपं तयोर्नावधार्यत इति ।। ४१० ।।

---

तस्माद् = एकपदरूपस्याप्यर्थवतः प्रागुक्तरीत्या वाक्यत्वाभ्युपगमात् स्फोटरूपमखण्डमेव वाक्यं निराकाङ्क्षं = स्वार्थे परिसमाप्तम्, वाचकमभ्युपगन्तव्यमिति दृष्टान्तद्वारेणापि प्रसाध्याभिधातुमाह—यथैवेति ।

अयमर्थः—यथैव पदवादिमतेऽनर्थकैर्वर्णैरभिव्यक्तो विशिष्टार्थः = विशिष्टो विलक्षणः = अर्थप्रकरणादिना प्रतिनियतः पदान्तरार्थाद्विलक्षणो वा, प्रवृत्तिनिमित्तविशिष्टो वाऽर्थो यस्य स तथा, विशिष्टार्थवाचक इति यावत् । पदरूपः स्फोटात्माऽभिधीयते । एवं पदैरनर्थकैरभिव्यक्त एव विशिष्टार्थः = विशिष्टो विलक्षण एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थाद् विलक्षणोऽखण्डोऽर्थो यस्य स तथाभूतः स्फोटात्मा वाक्यरूपो वाचकोऽभिधीयते वैयाकरणैरिति ।। ४०६ ।।

ननु वाक्याद् वाक्यार्थसंप्रत्यये जायमाने मध्ये पदार्थसंप्रत्ययस्तत्रोपजायत एव, पदानां भवद्रीत्याऽऽनर्थक्येऽभ्युपगम्यमाने तु कथं तत्सद्भाव उपपद्यते । अत एव पदार्थोपस्थितिपूर्वकत्वं वाक्यार्थप्रत्ययस्य विशिष्टकार्यकारणभावाभ्युपगमेनोच्यते सर्वैरपि दार्शनिकैः । अत एव च वाक्यघटकस्य कस्यचित् पदस्यार्थापरिज्ञाने वाक्यार्थासंप्रत्ययो दृश्यत इत्याशङ्क्याह—यदन्तराल इति ।

अयमर्थः—यत्तु अन्तराले = वाक्यप्रतिपत्तेर्वाक्यार्थप्रतिपत्तेश्चान्तराले मध्ये पदार्थेषु पदेषु च ज्ञानमुपजायते असौ = तज्ज्ञानम्, विधेयस्योपायस्य लिङ्गमाश्रित्य पुंस्त्वनिर्देशः । प्रतिपत्तेरुपायः = अखण्डवाक्यप्रतिपत्तेरखण्डवाक्यार्थप्रतिपत्तेश्चोपायो द्वाग्भूतं साधनम् । तत्र हेतुमाह—प्रक्रमानवधारणादिति । प्रक्रमे प्रथमसमय एव वाक्यवाक्यार्थयोरखण्डयोरपि रूपस्यानवधारणात्, मध्ये तदवधारणहेतुतया पदपदार्थयोरपोद्धृतयोः कल्पितयोः प्रतिपत्तिरपेक्ष्यत इति ।। ४१० ।।

एवं वाचकाश्रयणे प्रकारत्रितयमुक्त्वेदानीं वाच्यसमाश्रयणेन तथैव प्रतिपादयितुमाह—

**पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः ।**
**संसर्ग एव प्रक्रान्तस्तथाऽन्येष्वर्थवस्तुषु ॥ ४११ ॥**

अनेन श्लोकेनान्विताभिधानसमाश्रयणेन संसृष्टं वाक्यार्थप्रदर्शनं क्रियते । तथा त्वभिहितान्वयवादिनः पूर्वपूर्वार्थानुगतः संसर्गो वाक्यार्थः, अन्विताभिधानवादिनस्तूत्तरोत्तरपदार्थावगतः प्रथमतरमेव संसृष्ट एव । यदि परमत्र सन्निधानं निदर्शकं यस्येतीतिकर्तव्यतामात्रस्वरूपावगतावपेक्षन्त इति बोद्धव्यम् ॥ ४११ ॥

---

एवम् = अस्तित्वोपनिबन्धनमेकपदरूपमखण्डं वाक्यमिति, पदैरनर्थकैरभिव्यक्तं विशिष्टार्थवाचकं स्फोटात्मकं वाक्यमिति, प्रक्रमे वाक्यवाक्यार्थयोः स्वरूपानवधारणात्तत्प्रतिपत्त्युपायभूतमन्तरालेऽसत्ययोरपोद्धारेण कल्पितयोः पदपदार्थयोर्विभ्रमरूपं ज्ञानम्, परमार्थौ त्वखण्डौ वाक्यवाक्यार्थावेवेति वाचकाश्रयणेन प्रकारत्रितयमुक्त्वा साम्प्रतं वाच्यसमाश्रयणेन तथैवानन्विताभिधानवादिनां मते उत्तरोत्तरपदार्थावगतः प्रथमतरमेव संसृष्ट एव वाक्यार्थ इति, क्रियैव विशिष्टा सर्वत्र प्रथमतरमेव वाक्यार्थत्वेन प्रक्रान्ता क्रियान्तराद् भिन्ना वाक्यार्थः, अक्रम एव निर्विभागः पानकरसादिवत् प्रतिभात्मको वाक्यार्थ इति प्रकारत्रयेण वाक्यवाक्यार्थावखण्डौ प्रतिपादयितुमाह—**पूर्वैरर्थैरिति** ।

अयमर्थः—यथाभिहितान्वयवादे पूर्वैरर्थैरनुगतः = संसृष्टः, परः पर एव पदार्थः = उत्तरोत्तर एव पदार्थः, अर्थात्मा वाक्यार्थः, तथान्विताभिधानवादेऽन्येष्वर्थवस्तुषु = उत्तरोत्तरेषु पदार्थेषु प्रतीतेषु सत्सु प्रतीयमानः, प्रक्रान्तः = प्रक्रम एव पूर्वमेव स्थितः संसर्ग एव पूर्वपदार्थसंसृष्ट उत्तरपदार्थ एव वाक्यार्थ इति ।

इदं तु बोद्धव्यम्—यद्वि परमत्र सन्निधानम् = प्रथमतरपदेनैव संसृष्टस्य वाक्यार्थस्यावगतिसंभवे परपदसन्निधानम् । निदर्शकं तद्वाक्यस्येतीतिकर्तव्यतामात्रस्वरूपावगतावपेक्षितमिति वाक्यार्थस्य संसृष्टस्य स्वरूपावगतौ परपदसन्निधानमितिकर्तव्यतामात्रं प्रथमतरपदेनापेक्षितमिति न परपदसन्निधानवैयर्थ्यमिति ।

इदं चापरं बोद्धव्यम्—अयं श्लोकोऽन्विताभिधानसमाश्रयणेन पूर्वपदार्थसंसृष्टपरपदार्थरूपवाक्यार्थप्रदर्शनपर एव, वर्ण्यस्यैवोपमेयत्वेन निर्देशादिति ॥ ४११ ॥

यदि पूर्वं व्यवस्थापितेऽन्विताभिधानवादे पूर्वपदार्थसंसृष्टपरपदार्थरूपो वाक्यार्थ एकेनैव पदेन प्रथमतरमेव प्रतीतस्तदा निःसाधना क्रिया न भवतीति लोकप्रसिद्ध्यापि साध्यपदेनैव स्ववाच्यसाध्यसंसृष्टसाधनानामपि प्रथमतरमेवावगतिसंभवे किमर्था साधनानां पुनः श्रुतिरित्याशङ्क्याह—**अङ्गीकृत इति** ।

**अङ्गीकृते तु केषाञ्चित् साध्येनार्थेन साधने ।**
**आधारनियमार्थैव साधनानां पुनः श्रुतिः ॥ ४१२ ॥**

यदा केषाञ्चिन्मते तत्र साध्येनार्थेन साध्यार्थनिष्ठेन संसर्गेणेति यावत् । साधने उपकारलक्षणेऽङ्गीकृत आश्लिष्टेऽविनाभावितया स्वयमवधृते सति या तत्र वाक्ये साधनानां पुनः श्रुतिः, सा नियमार्थैव बोद्धव्या कारकाणाम्, यदि तत्र परमाधारनियमः क्रियत इति बोद्धव्यम् । इन्धनधारा करणशक्तिः स्थाल्याधारैवाधिकरणशक्तिरेवमन्यत्र ॥ ४१२ ॥

तत्र निस्साधना क्रिया न भवतीति साधनमात्रमनियताधारमाक्षिप्तं न त्वाधारसहितमित्याह—

**आधारनियमाभावात् तदाक्षेपो न विद्यते ।**
**सामर्थ्यात्सम्भवस्तस्य श्रुतिस्त्वन्यनिवृत्तये ॥ ४१३ ॥**

---

अयमर्थः—केषाञ्चिद् अन्विताभिधानवादिनां मते साध्येनार्थेन क्रियारूपेण, तत्संसर्गेणेति यावत् । साधने साध्यस्योपकारलक्षणे = उपकारके, सामान्यरूपेण करणत्वाधिकरणत्वादिनाऽङ्गीकृते = आश्लिष्टे = अविनाभावितया स्वयं निर्धारिते सति, तु = अपि, तत्र वाक्ये या साधनाना पुनः श्रुतिः सा आधारनियमार्थैव = करणाधिकरणादिशक्तीनां ये आधारविशेषास्तन्नियमार्थैव । इन्धनाधारैव करणशक्तिः स्थाल्याधारैवात्राधिकरणशक्तिरित्यादिरूपो नियमोऽत्र बोध्यः ॥ ४१२ ॥

ननु निःसाधना क्रिया न भवतीति लोकेऽदृष्टव्यभिचाराव्याप्तिः, एवञ्च क्रिययैव साधनानामाक्षेपसंभवे साधनानां पुनः श्रुतिर्व्यर्थैव न त्वाधार नियमार्थेत्याशङ्क्य क्रियया साधनशक्तिसामान्यमनियताधारमाक्षिप्यते, न त्वाधारविशेषसहितमिति "आधारनियमार्थैव साधनानां पुनः श्रतिः" इति युज्यत एव प्रतिवचनमिति समाधातुमाह—**आधारनियमाभावादिति ।**

अयमर्थः—साध्येन साधनशक्तिसामान्यानामाक्षेपेऽप्याधारनियमाभावात् = तत्तच्छक्तिसामान्यानाम् = आधारसामान्येनाक्षिप्तेनाधारविशेषाणां नियमनाभावात्, तदाक्षेपः = साध्येन तेषामाधारविशेषाणामाक्षेपो न विद्यते, अतः सामर्थ्यात् साधनसामान्यस्य साधनविशेषं विनाऽनुपपत्तिरूपात् सामर्थ्यात्, तस्य = साधनविशेषस्य तत्र संभवो यद्यप्युच्यते, तथापि पुनः श्रुतिस्तु = साधनविशेषवाचकशब्दस्तु, तत्रान्यसाधननिवृत्तये क्रियत इति ।

इदं च व्याख्यानम्—"तत्र परमाधारनियमः क्रियत इति बोद्धव्यम् । इन्धनाधारा

साधनानामाधारनियमो नास्ति। करणादिशक्तयो हि नियताधारा दृश्यन्त इत्याधाराक्षेपः। तत्र साधनं नास्ति। सामर्थ्याद्यदि परं तस्य साधनस्य तत्र सम्भव एवाभ्यूह्यते, ततः क्रियाधारा एताः साधनशक्तयः स्युरिति दण्डेन गामित्यादिका श्रुतिरन्याधारनिवृत्तये तासां पर्यवस्यतीति बोद्धव्यम् ॥ ४१३ ॥

अथ क्रियां वाक्यार्थमाश्रित्याह—

**क्रिया क्रियान्तराद्भिन्ना नियताधारसाधना।**
**प्रक्रान्ता प्रतिपत्तॄणां भेदाः सम्बोधहेतवः ॥ ४१४ ॥**

क्रियैव विशिष्टा सर्वत्र प्रथमतरमेव वाक्यार्थत्वेन प्रक्रान्ता क्रियान्तराद्भिन्नेत्यनेन विशेषकथनम्। एतदेव स्फुटीकर्तुमाह—नियताधारसाधनेति। तत्र वाक्ये भेदानां विशेषाणां प्रयोगोऽसौ सम्बोधनोपायमात्रमिति बोद्धव्यम् ॥ ४१४ ॥

---

करणशक्तिः, स्थाल्याधारैवाधिकरणशक्तिरेवमन्यत्र" इति पुण्यराजस्य पूर्वकारिकाव्याख्यानवाक्यमाश्रित्य कृतमिति बोद्धव्यम्।

पुण्यराजेन त्वियं कारिका व्याख्याता—"साधनानामाधारनियमो····बोद्धव्यम्" इति।

अस्यायमाशयः—क्रियारूपस्य साधनाधारस्य साधनरूपाधेयनियमसत्त्वेऽपि साधनानां क्रियारूपाधारनियमो नास्ति, दण्डेन गामिति साधनमात्रोक्तौ चारय, भापय, ताडयेत्यादीनां बहूनामाधाराणां प्रतीतेः। अत्र क्रियाणां साधनाधारत्वञ्च साधनप्रतियोगिकसंबन्धानुयोगित्वरूपं बोध्यमिति। "करणादिशक्तयो हि नियता दृश्यन्ते इत्याधाराक्षेपः" इत्यत्राधारपदद्वयमपि करणादिशक्तीनामाश्रयभूतेन्धनादिपरम्।

एवं चैतत्कारिकापूर्वार्धस्यायमर्थः संपद्यते - साधनानां क्रियारूपाधारनियमाभावात् तदाक्षेपः=केवलैः प्रयुज्यमानैः साधनपदैस्तस्य क्रियारूपाधारस्याक्षेपो न विद्यत इति। परम् = परन्तु, यत्र साधनं नास्ति न प्रयुज्यते, तत्र सामर्थ्यात् =उपात्तसाध्यपदसामर्थ्यात्, यदि तस्य साधनस्य संभव आक्षेप एवाभ्यूह्यते, ततः क्रियाद्या एताः साधनशक्तय आक्षिप्ताः स्युरिति दण्डेन गामित्यादिका साधनश्रुतिर्व्यर्था सती तासाम् =करणादिशक्तीनाम्, अन्याधारनिवृत्तये=प्रयुक्तान्यसाधनरूपाधारनिवृत्तये पर्यवस्यतीति।

एवञ्च—"तत्र निःसाधना क्रिया न भवतीति साधनमात्रमनियताधारमाक्षिप्तं न त्वाधारसहितमित्याह" इत्येतच्छ्रीपुण्यराजावतरणवाक्यस्य मदुक्तावतरणवाक्यैकार्थ्यमेवेति बोध्यमिति ॥ ४१३ ॥

अथ क्रियां वाक्यार्थमाश्रित्य द्वितीयं प्रकारमाह—**क्रियेति**।

अयमर्थः— क्रिया=क्रियाविशेषः फलरूपो व्यापाररूपश्च, यतो नियताधारसाधना = नियतान्याधाररूपाणि साधनानि कर्तृकर्मादीनि यस्याः सा तथाभूता, अतः क्रियान्तराद् भिन्ना=क्रियान्तरविशेषाद् व्यावृत्तस्वरूपा, प्रक्रान्ता=प्रथमतरमेव प्रतीतेति क्रियाविशेषबोधकपदोपादानं वाक्ये व्यर्थमेवेत्याशङ्क्याह—भेदाः=क्रियाविशेषा वाक्ये उपादीयमानाः,

अथ स्वपक्षानुसारेण वाक्यार्थप्रदर्शनं कर्तुमाह—

**अविभागं तु शब्देभ्यः क्रमवद्भ्योऽपदक्रमम् ।**
**प्रकाशते तदन्येषां वाक्यं वाक्यार्थ एव च ॥ ४१५ ॥**

अक्रम एव निर्विभागः पानकरसादिवत् प्रतिभात्मको वाक्यार्थः स्फोटात्मकं च वाक्यमित्येकयोगक्षेमत्वादेवमुक्तम् वाक्यं वाक्यार्थ एव चेति ॥ ४१५ ॥

इदानीमसत्योपाधिः सत्यरूपः शब्दार्थ इति विचारपूर्वकं निदर्शयितुमाह—

**स्वरूपं विद्यते यस्य तस्यात्मा न निरूप्यते ।**
**नास्ति यस्य स्वरूपं तु तस्यैवात्मा निरूप्यते ॥ ४१६ ॥**

---

प्रतिपत्तृणां संबोधहेतवः=वाक्यार्थविशेषस्य सम्यग् बोधनोपायमात्रमिति । पुण्यराजेन तु क्रियैव विशिष्टेत्यादिकमत्रोक्तम् । तत्र 'विशिष्टा' इत्यस्य क्रियाविशेषान्तराद् विलक्षणेत्यर्थः ॥ ४१४ ॥

अथ स्वपक्षानुसारेण पानकरसादिवदक्रममविभागं च प्रतिभात्मकं वाक्यार्थं समानन्यायतया तथाविधमेव स्फोटात्मकं वाक्यं च प्रदर्शयितुमाह—**अविभागमिति** ।

अयमर्थः—तदन्येषाम्=प्रागुक्तवाक्यार्थद्वयाभ्युपगन्तृभिन्नानां मते, क्रमवद्भ्यः शब्देभ्यः=क्रमेण जायमानेभ्यो ध्वनिभ्यो वर्णरूपेभ्यः पदरूपेभ्यश्च । अपदक्रमम् । पदपदं वर्णस्याप्युपलक्षणम् । अवर्णमपदमक्रमं चेत्यर्थः । अविभागं तु=अविभागमेव, तुशब्द एवकारार्थोऽयोगव्यवच्छेदार्थः, विशेषणसंगतत्वात् । वाक्यं वाक्यार्थ एव च । अत्रैवकारोऽप्यर्थः । वाक्यं वाक्यार्थोऽपि चेत्यर्थः । संभेदेनान्यतरवैयर्थ्यमिति न्यायेन द्वौ ब्राह्मणावित्यादिवन्नैवकारचकारयोरन्यतरवैयर्थ्यम् । प्रकाशते=अभिव्यक्तं भवतीति । वाक्यं वाक्यार्थ एव वेति पाठेऽपि वाशब्दः समुच्चयार्थको बोध्यः, तथैवार्थानुगमादिति ॥ ४१५ ॥

इदानीमसत्यरूपेणोपाधिना रेखागवयादिना यथा सत्यरूपो गवयादिः परिचीयते, तथैवासत्यरूपैः पदार्थैरुपाधिभिः सत्यरूपोऽविभागः प्रतिभात्मको वाक्यार्थः परिचीयत इति विचारपूर्वकं निदर्शयितुमाह—**स्वरूपमिति** ।

अयमर्थः—यस्य पदार्थस्य नीलं पीतमित्येवं प्रत्यक्षादिप्रमाणपरिच्छिन्नं स्वरूपं विद्यते वाक्यार्थात् संसर्गात् पृथग्भूतम, तस्य=पृथग्रूपस्य पदार्थस्य, आत्मा=स्वरूपम्, न निरूप्यते=क्रियासंसर्गविरहेण व्यवहारायोग्यत्वाद् वाक्येन न बोध्यते, यस्य तु=वाक्यार्थस्य पदार्थद्वयसंसर्गरूपस्य तु स्वरूपं प्रत्यक्षादिप्रमाणपरिच्छिन्नं नास्ति, वाक्यार्थस्य शाब्दबोधविषयस्यापूर्वत्वात् । तस्यैव=वाक्यार्थस्य, आत्मा=स्वरूपम्, निरूप्यते=वाक्येन प्रबोध्यत इति ।

गस्य वस्तुनः प्रत्यक्षादिप्रमाणपरिच्छिन्नस्वरूपं विद्यते नीलं पीतमिति, तस्य तावता नात्मा निरूप्यते न व्यवहारगोचरतां नीयते। एतदुक्तं भवति—पदार्थः पृथग्रूपः सन्नपि पङ्गुप्रायोऽसाविति व्यवहारपदवीं नेतुं वार्यते, संसर्गस्य त्वन्वयात्मनः प्रधानस्य तदितरोपपत्तेः पदार्थो यावदुपायो द्वारमिति तन्निरूपणमेव साफल्यं भजत इति तस्यैव सत्यत्वं युक्तम् ॥ ४१६ ॥

अथ पदार्थासत्यत्वप्रतिपादनपूर्वकं तदाच्छुरितस्यैव संसर्गस्य वाक्यार्थत्वं परिघटयितुमुपक्रमते—

**अशब्दमपरेऽर्थस्य रूपनिर्धारणं विदुः ।**
**अर्थावभासरूपा हि शब्देभ्यो जायते स्मृतिः ॥ ४१७ ॥**

अर्थस्य रूपनिर्धारणस्य स्वरूपपरिच्छेदोऽशब्द एव, न तत्र शब्द उपायभावमुपयाति। तद्धि निर्विकल्पकैकसमधिगम्यमित्यर्थः। तर्हि शब्दस्य तत्र क्वोपयोग इत्याह—अर्थावभासेत्यादि। अर्थप्रतिभाससदृशायां स्मृतावेव शब्दानामुपयोगः, शब्दस्यार्थेन सह सुदूरमेव विप्रकर्षः। ततश्च कथं शब्दोऽर्थमभिदधीतेत्यसत्य एव शब्दार्थः पर्यवस्यति ॥ ४१७ ॥

---

अयं भावः—पदार्थो वाक्यार्थात् पृथग्रूपः सन्नपि विद्यमानोऽपि, क्रियासंसर्गविरहेण व्यवहारायोग्यत्वात् पङ्गुप्रायोऽसाविति व्यवहारपदवीं नेतुं न पार्यते। संसर्गस्य त्वन्वयात्मकस्य प्रधानस्य तद्गोचरतोपपत्तेः = व्यवहारगोचरतोपपत्तेः, पदार्थो यावत् = यतः, उपायो द्वारम्, वाक्यार्थबोधे; इत्यतो वाक्येन तन्निरूपणमेव साफल्यं भजत इति वाक्यार्थस्यैव सत्यत्वं युक्तम्, न तु पदार्थस्येति ॥ ४१६ ॥

अथ पदार्थासत्यत्वप्रतिपादनपूर्वकं तदाऽऽलिङ्गितस्य संसर्गस्यैव वाक्यार्थत्वं युक्त्योपपाद्य प्रबोधयितुमुपक्रमते—**अशब्दमिति।**

अयमर्थः—अपरे = केचन वादिनः, अर्थस्य रूपनिर्धारणम् = वाक्यार्थस्य पदार्थद्वयसंसर्गरूपस्य स्वरूपपरिच्छेदम् = स्वरूपावधारणम्, अशब्दम् = शब्दरूपोपायशून्यम्, नास्ति शब्दो वाचकत्वेनोपायभूतो यस्य स तथाभूतस्तमिति व्युत्पत्तेः। विदुः = विदन्ति। वाक्यार्थत्वेनाभिमतः संसर्गो हि मानसनिर्विकल्पकप्रत्यक्षमात्रवेद्यः, तस्यापूर्वत्वेनाखण्डत्वेन च पदार्थाघटितस्य पदार्थोपस्थिति द्वारीकृत्य पदानभिधेयत्वात्। किञ्च, पदं वाक्यं वा शब्दरूपं गगनाश्रितं श्रोत्रवृत्ति वा, तत्तदर्थस्तु तत्तदधिकरणे स्थित इति शब्दार्थयोः सुदूरविप्रकर्षान्न शब्देनार्थस्याभिधानसंभव इति।

तर्हि प्रयुज्यमानस्य शब्दस्य क्वोपयोग इति प्रश्न आह—**अर्थावभासरूपेति।**

अयमर्थः—हि = यतः, शब्देभ्यः = पदेभ्यः, अर्थावभासरूपा = अर्थप्रतिभाससदृशी = अर्थानुभवसदृशी, अर्थावभासस्येव रूपं यस्याः सेति व्युत्पत्तेः। स्मृतिः = पदार्थस्मृतिर्जायत इति। तथा च पदार्थस्मृतावेव शब्दानामुपयोगः। पदार्थस्मृतिश्च मणिमन्त्रादि-

अतश्चैतदेव बोद्धव्यमित्याह्—

**अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोऽभिमन्यते ।**
**अन्यथा दाहशब्देन दाहाद्यर्थः प्रतीयते ॥ ४१८ ॥**

यदि शब्देन यथावद् बाह्योऽर्थः प्रत्याय्येत तदा शब्दसन्निधापितोऽसौ तामर्थक्रियां कथं न कुर्यात् यतश्चाग्निसम्बन्धाद्दग्धो दाहमन्यथाऽनुभवति दाहशब्देन च दाहमन्यथाऽवगच्छतीति शब्दार्थयोर्नास्ति कश्चिद्वास्तवः समन्वय इति बोद्धव्यम् ॥ ४१८ ॥

तदेवं पदार्थो विपरीतख्यातिरूपोऽसत्ख्यातिस्वरूपो वा बोद्धव्य इति पदार्थस्यासत्यत्वमभिधाय तदाच्छुरितस्य वाक्यार्थस्य सत्यत्वं प्रतिपादयितुमाह—

**पृथङ्निविष्टतत्त्वानां पृथगर्थानुपातिनाम् ।**
**इन्द्रियाणां यथा कार्यमृते देहान्न कल्पते ॥ ४१९ ॥**

पृथङ्निविष्टं तत्त्वं स्वरूपं पार्थिवत्वादिना भेदेन, अथवा प्रतिनियतस्थानसमाश्रयणेन निविष्टमभिव्यक्तं तत्त्वं स्वरूपं येषां तानि तथा तेषामिति तथा पृथक्

---

न्यायेन निर्विकल्पकमानसप्रत्यक्षरूपं वाक्यार्थबोधं प्रति स्वातन्त्र्येण कारणम्, न तु विशिष्टबुद्धिं प्रति विशेषणबुद्धिः कारणमिति रीत्या, वाक्यार्थस्य पदार्थाघटितत्वादित्यसत्य एव वाक्यार्थे पदार्थः पर्यवस्यतीति बोध्यम ॥ ४१७ ॥

शब्दार्थयोः सुदूरविप्रकृष्टयोर्वस्तुभूतस्य संबन्धस्याभावान्न शब्देनार्थाभिधानसंभव इत्यत्रैव हेत्वन्तरमाह्—**अन्यथैवेति** ।

**अयमर्थः**—यतो दग्धः पुरुषोऽग्निसंबन्धाज्जायमानं दाहमन्यथैवाभिमन्यते = अनुभवति, स्फोटाद्यर्थक्रियाकारित्वेनानुभवति । दाहशब्देन तु दाहाद्यर्थोऽन्यथा प्रतीयते, स्फोटाद्यर्थक्रियाकारित्वाभाववत्तयाऽनुभूयत इति नास्ति वस्तुभूतयोः शब्दार्थयोः कश्चिद् वास्तवः संबन्धः । यस्त्वर्थक्रियाकारित्वाभाववत्तयाऽसत्येन बुद्धिपरिकल्पितेन बौद्धेनार्थेन सह बुद्धिपरिणामतया वस्तुभूतस्य शब्दस्य संबन्धः, सोऽप्यवास्तव एवेति बोध्यम् ।

अयं भावः—यदि शब्देन वस्तुभूतो बाह्योऽर्थः प्रत्याय्येत, तदा स्वानुरूपामर्थक्रियां शब्दसन्निधापितोऽसौ कुर्यादेव, न च कुर्वन् दृश्यते, तस्मान्न सत्यः शब्दार्थ इति ॥ ४१८ ॥

तदेवं वाक्यार्थे प्रतीयमानः पदार्थो नैयायिकानां मते विपरीतख्यातिरूपः = विपरीतख्यात्याऽन्यथाख्यात्यपराभिधया रूप्यते = निरूप्यत इति तथाभूतः, माध्यमिकानां मतेऽसत्ख्यातिस्वरूपो वा = असत्ख्यातौ स्वरूपं यस्येति व्युत्पत्त्याऽसत्ख्यात्या गोचरीकृत इति तन्मतालम्बनेन पदार्थस्यासत्यत्वमभिधाय विशेषणतया तदालिङ्गितस्य वाक्यार्थस्य सत्यपि प्रतिपादयितुमाह—**पृथङ्निविष्टतत्त्वानामिति** ।

पृथगर्थं शब्दादिलक्षणमनुपतन्ति विषयीकुर्वन्ति तच्छीलास्ते तथा तेषाम्, यथा सत्यपि पृथक्स्वभावे देहाद्विना कार्यं प्रातिस्विकं नोपकल्पते, तथैव पदानां केवलानां वाक्यव्यतिरेकेण स्थितानामर्थवत्ताविरहः परिदृश्यत इति ॥ ४१९ ॥

प्रकृतं योजयितुमाह—

**तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।**
**वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते ॥ ४२० ॥**

वाक्यार्थस्वरूपं प्रतिपादयितुमाह—

**संसर्गरूपं संसृष्टेष्वर्थवस्तुषु गृह्यते ।**
**नात्रोपाख्यायते तत्त्वमपदार्थस्य दर्शनात् ॥ ४२१ ॥**

न पुनरत्र पृथक्पदार्थप्रतिभासावसरे तस्य तत्त्वमुपाख्यायते प्रकटीभवति, यस्मात् पदार्थरूपाद्विलक्षणमेव वाक्यार्थस्वरूपं दृश्यत इति ॥ ४२१ ॥

---

अयमर्थः—यथा पृथङ्निविष्टतत्त्वानाम् = पृथक् पार्थिवत्वतैजसत्वादिना भेदेन निविष्टम् = स्थितम्, तत्त्वम् = स्वरूपं येषां तानि, अथवा पृथक् प्रतिनियतगोलकरूपस्थानसमाश्रयणेन निविष्टमभिव्यक्तम् = निपूर्वकस्य विशेः स्थित्यर्थस्य तत्पूर्वकाभिव्यक्तौ लक्षणा-तत्त्वं स्वरूपं येषां तेषाम् । तथा पृथगर्थानुपातिनाम् = पृथक् पृथग् अर्थम् = स्वविषयं शब्दादिलक्षणमनुपतन्ति = विषयीकुर्वन्ति तच्छीलानि तानि तथा तेषाम् वृत्तौ वीप्सान्तर्भावेणैकार्थीभावस्य विवक्षितत्वादुक्तार्थत्वेन न द्वित्वम्। एतादृशशीलानामपीन्द्रियाणां कार्यम् = प्रतिनियतस्वस्वविषयग्रहणरूपम्, देहाद् ऋते = देहाधिष्ठानं विना न कल्पते = न संपद्यते, तथैव पदानां केवलानां वाक्यव्यतिरेकेण स्थितानामर्थवत्ता न कल्पते, अतो न लोकव्यवहारेऽपिपरिदृश्यत इत्येवंरीत्या 'तथा पदानाम्' इति वक्ष्यमाणपद्यार्थेन संबन्ध इति॥४१९॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयितुमाह—**तथा पदानामिति** ।

अयमर्थः—यथा इन्द्रियाणां देहसमाश्रयणेन स्वस्वविषयग्रहणसमर्थानामपि देहं विना तदसामर्थ्यं दृष्टम्, तथा वाक्ये सर्वेषां पदानां पृथगर्थनिवेशिनामपि पृथक् पृथगर्थं बोधयतामपि, वाक्येभ्यः प्रविभक्तानाम् = तेभ्यः प्रविभागेणावस्थितानाम्, अर्थवत्ता अर्थबोधकता न कल्पते = नोपपद्यते, अतो न विद्यत इति ॥ ४२० ॥

पदार्थाद् विलक्षणं पदार्थाघटितं च वाक्यार्थस्वरूपं प्रतिपादयितुमाह—**संसर्गरूपमिति** ।

अयमर्थः— अर्थवस्तुषु संसृष्टेषु सत्स्वेव संसर्गरूपं गृह्यते, नान्यदा । तथा हि—अत्र = पृथक्पदार्थप्रतिभासावसरे तत्त्वम् = वाक्यार्थस्य स्वरूपम्, नोपाख्यायते = नोपाख्यानेन प्रकटीभवति । अत्र हेतुमाह—अपदार्थस्य दर्शनादिति । पदार्थाद् विलक्षणस्य वाक्यार्थस्य दर्शनाद् = अनुभवादिति ॥ ४२१ ॥

ननु च शशो नास्ति विषाणमस्तीतिवदप्रतीतिकं कथं सर्वमभिधीयते, पदपदार्थप्रतिभासः संवेद्यमानोऽपि नाभ्युपगम्यते, पदार्थोपहितो वाक्यार्थस्तु सत्यत्वेन निरूप्यत इत्याशङ्क्य सर्वोपरि निरूपितमेव व्यवहारगोचरतामुपयाति, न स्वरूपेणेति प्रतिपादयितुमाह —

**दर्शनस्यापि यत्सत्यं न तथा दर्शनं स्थितम् ।**
**वस्तुसंसर्गरूपेण तदरूपं निरूप्यते ॥ ४२२ ॥**

इह सर्वोपरि बोध एव पारमार्थिकस्तद्व्यतिरेकेणान्यस्य विचार्यमाणस्यानुपपत्तेः । स च यथा सत्यत्वेन स्वच्छत्वादिरूपतया स्थितो न तथा तद्बोधस्वरूपदर्शनं पदार्थप्रतिभासावसरे स्थितम् । तदवसरे हि वस्तु संसर्गरूपेण

---

ननु यथा 'शशोऽस्ति' इति प्रतीतिसाक्षिके वक्तव्ये शशो नास्तीत्यप्रतीतिकं केनचिदुच्यते, एवं विषाण नास्तीति तथाविध एव वाच्ये विषाणमस्तीति, तथा भवताऽप्रतीतिकमेव सर्वमभिधीयते । तथा हि—वाक्यवाक्यार्थबोधावसरे परमार्थभूततदुपाधिपदपदार्थप्रतिभासः सवेद्यमानोऽपि नाभ्युपगम्यते । पदोपहितं वाक्यम्, पदार्थोपहितो वाक्यार्थस्तु घटाद्युपहिताकाशवदसत्यभूतः सत्यत्वेन निरूप्यत इत्याशङ्क्य प्रमाणैर्निरूपितमेव व्यवहारगोचरतामुपयाति, न तु स्वरूपसत्त्वेन स्थितम् । यच्च व्यवहारगोचरीभूतं तदेव सत्यम्, प्रमाणैरनिरूपितं तु स्वरूपेणास्तीति नोपगमयोग्यमिति सर्वोपरि मर्यादा । तथा च केवलः पदार्थः पदं वा तथाविधमव्यवहार्यत्वात् प्रतीतिगोचरीक्रियमाणमपि न प्रमाणनिरूपितम्, व्यापकाभावे व्याप्याभावनियमादित्यतोऽसत्यभूतमिति प्रतिपादयितुमाह–**दर्शनस्यापीति** ।

अयमर्थः—इह जगति दर्शनमेव = बोध एव, एकं पारमार्थिकं वस्तु परब्रह्मात्मरूपम्, तद्व्यतिरिक्तस्य वस्तुनो विचार्यमाणस्यानुपपन्नत्वेनानिरूप्यत्वेन चानिर्वाच्यत्वात् । एवञ्च, दर्शनस्यापि यत् सत्यं रूपं स्वच्छं पदार्थानुपहितम् = तत्पदार्थप्रतिभासावसरे दर्शनं तथा = स्वच्छरूपेण न स्थितम्, किन्तु पदार्थरूपोपाधिकलुषितमेव स्थितं प्रतीयते । एतदेवोक्तमुत्तरार्धेन—तद् दर्शनमरूपम् = निर्धर्मकत्वेन तादृक्त्वेदृक्ताभ्यामनिरूप्यमाणम्, वस्तुसंसर्गरूपेण = स्वविषयपदार्थसंसर्गरूपेण, विशिष्टं तादृक्तया ईदृक्तया च निरूप्यते । पदार्थानुपहितेन स्वेन स्वच्छेन रूपेण तु सर्वोपाधिविनिर्मुक्तमवाङ्मनसगोचरमेव ।

तदुक्तमृषिणा—'न तत्र चक्षुर्गच्छति न वाग् गच्छति न मनो न विद्मो न विजानीमो यथैतदनुशिष्यात् । अन्यदेव तद्विदितादथो अविदितादधि ॥' ( केनो० १।३ ) इति । एवमेव = दर्शनवदेव, तद् वाक्यं वाक्यार्थश्च, अरूपम् = अखण्डत्वादपूर्वत्वाच्च तादृक्त्वेदृक्त्वाभ्यामनिरूप्यमाणमपि, वस्तुसंसर्गरूपेण = पदार्थद्वयसंसर्गरूपेण निरूप्यत इति ।

अयं भावः—पदार्थप्रतिभासावसरे हि बोधो वस्तुतः पदार्थस्वरूपविरहितस्वरूपोऽपि पदार्थसंसर्गरूपेण = स्वविषयनीलपीतादिपदार्थोपसृष्टतया नीलबोधः पीतबोध इत्यादिरूपेण

नीलपीताद्युपसृष्टतया नीलबोधः पीतबोध इति तद्रूपविरहितमपि निरूप्यते। एवमेतत्संसर्गादिकं वस्तुसंसर्गरूपेण पदार्थोपहितं तथारूपं तद्रूपविरहितमपि निरूप्यत इति किमत्रापराद्धम्। तस्य तु सर्वथा केवलः पदार्थः पदं वाऽव्यवहार्यमेव, अतश्चैतदसत्यमित्युच्यते ॥ ४२२ ॥

वाक्यवाक्यार्थौ तु व्यवहार्यत्वात् सत्यभूतावित्यर्थप्रतिपत्तये वाक्यमेव प्रयुज्यत इत्याह—

**अस्तित्वेनानुषक्तो वा निवृत्त्यात्मनि वा स्थितः।**
**अर्थोऽभिधीयते यस्मादतो वाक्यं प्रयुज्यते ॥ ४२३ ॥**

---

यथा निरूप्यते व्यवह्रियते च, एवमेव वाक्यं वाक्यार्थभूतञ्च संसर्गप्रतिभादिकमखण्डत्वेन पदपदार्थरूपविरहितमपि वस्तुसंसर्गरूपेण पदपदार्थोपहितमिव निरूप्यते व्यवह्रियते च। एवं च यथा नीलपीतादिरूपाणां विषयाणां विज्ञानव्यतिरेकेणानिरूप्यत्वाव्यवहार्यत्वाभ्यामनिर्वाच्यत्वात् प्रतीयमानानामपि न वस्तुसत्त्वम्, तथा वाक्यार्थव्यतिरेकेण पदपदार्थयोः केवलयोरनिरूप्यत्वाव्यवहार्यत्वभ्या वाक्यवाक्यार्थबोधावसरे प्रतीयमानयोरपि तयोर्न वस्तुसत्त्वमिति।

यद्यप्येवं दर्शनस्यापि केवलस्य वाक्यार्थस्यापि च तादृशस्यानिरूपत्वाव्यवहार्यत्वाभ्यां न वस्तुसत्त्वमित्यापतति, तथापि व्यवहारनिरूपणयोर्योग्यताया सत्यामेवाव्यवहार्यत्वानिरूप्यत्वे वस्तुसत्त्वाभावसाधके, न तु केवले; न चास्ति केवलस्य दर्शनस्य केवलस्य वा वाक्यार्थस्य पदार्थरूपस्वोपाधिं विना व्यवहारनिरूपणयोर्योग्यतेति न तयोस्तेन हेतुना वस्तुसत्त्वाभावसिद्धिरिति हृदयम्। निरूपितञ्च विज्ञानस्य विषयाधीननिरूपणत्वं विषयपदव्युत्पत्तिं प्रदर्शयद्भिः श्रीवाचस्पतिमिश्रैरध्यासभामत्याम्—विषिन्वन्ति = अवबध्नन्ति = स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषया इति। किञ्च, वस्तूनां तत्तदर्थक्रियाकारित्वयोग्यता सर्वानुभवसिद्धस्वभावबलकल्प्येति न काचन क्षतिः ॥४२२॥

वाक्यवाक्यार्थौ तु व्यवहार्यत्वात् सत्यभूतौ। तत्र वाक्यार्थस्य व्यवहार्यत्वं प्रयोज्यप्रयोजकवृद्धव्यवहारे सुप्रसिद्धमेवेति तदुपपादनमुपेक्ष्य वाक्यस्यैव सर्वत्र प्रयुज्यमानत्वेन व्यवहार्यत्वमिति प्रदिदर्शयिषुः केवलस्यापि प्रयुज्यमानस्य पदस्य वाक्यरूपतां व्यवस्थापयति--**अस्तित्वेनेति**।

अयमर्थः:—घट इत्यादिकेवलपदप्रयोगेऽपि यस्माद् अस्तित्वेनानुषक्तो वा पदाध्याहारवादिमतेऽध्याहृतास्तिपदार्थेनान्वितो वा, अर्थाध्याहारवादिप्रभाकरमतेऽध्याहृतास्त्यर्थेनान्वितो वा। इदं चोपलक्षणमुत्पत्तेरपि स्थितिनिवृत्तिभ्यामुत्पत्तेरव्यभिचारेणाक्षेपात्। एवं चोत्पत्त्याऽन्वितो वेत्यपि बोध्यम्। निवृत्त्यात्मनि वा स्थितिः = निवृत्तिविनाशस्तदात्मनि तत्स्वरूपे प्रतियोगित्वेन स्थितो वाऽर्थोऽभिधीयते निवृत्तिप्रतियोगितयाऽभिधीयत इति यावत्। अतः केवलपदप्रयोगेऽपि वाक्यमेव प्रयुज्यते। एवञ्च वाक्यस्यैव सर्वत्र प्रयुज्यमानत्वेन व्यवहार्यत्वम्, व्यवहार्यत्वेन च तस्यैव सत्यत्वम्, न तु केवलस्य पदस्य, अव्यवहार्यत्वादिति भावः ॥४२३॥

एतदेव स्फुटयितुमाह—

**क्रियानुषङ्गेण विना न पदार्थः प्रतीयते।**
**सत्यो वा विपरीतो वा व्यवहारे न सोऽस्त्यतः॥ ४२४॥**

अतो व्यवहारे केवलः पदार्थो नास्त्येवेति बोद्धव्यम् ॥ ४२४ ॥

यत्राप्येकमेव पदं सदित्येतन्निराकाङ्क्षायाः सत्तायाः प्रतिपादकम्, तत्रापि तदभूदस्ति नाभून्नास्ति वेति क्रियापदसम्बन्धमन्तरेण परिसमाप्तार्थं न भवतीति सर्वथा केवलस्य पदमात्रस्य नास्त्यर्थवत्तेति प्रतिपादयितुमाह—

**सदित्येव तु यद्वाक्यं तदभूदस्ति नेति वा।**
**क्रियाभिधानसम्बन्धमन्तरेण न मन्यते॥ ४२५॥**

तत्र च वाक्ये साध्यसाधने परस्परमविनाभाविनी अन्योन्यापेक्षके स्पर्धयैव व्यवस्थिते। तथा हि—साधनं यथा निष्क्रियं न भवतीत्याकाङ्क्षावशात् क्रियापेक्षकमुच्यते। तथा क्रियापि निःसाधना न भवतीत्याख्यातपदप्रतिपाद्ये क्रियालक्षणे सत्त्वाभिधानेन विनाऽऽकाङ्क्षा न निवर्तत इति ॥ ४२५ ॥

---

पूर्वोक्तमेवार्थं स्फुटीकर्तुमाह—**क्रियानुषङ्गेणेति**।

अयमर्थः—यतः क्रियानुषङ्गेण विना=उपात्ताया अनुपात्ताया वाऽध्याहृतायाः क्रियायाः संबन्धं विना, पदार्थो सत्यो वा, विपरीतो वा=असत्यो वा, न क्वापि प्रतीयते, अतः सः=सत्योऽसत्यो वा पदार्थः, व्यवहारे नास्ति, योग्यताया सत्यामपि व्यवहारेऽसत्त्वाच्च शुक्तिरूप्यादिवदसन्निति भावः ॥ ४२४ ॥

यत्राप्येकमेव पदं सत्तायाः प्रतिपादकं प्रयुज्यते सदिति, तत्रापि सत्तायाः क्रियान्तरनिराकाङ्क्षाया अभावात् सदभूत्, सदस्ति, सन्नाभूत्, सन्नास्ति, ततो वै सदजायत, सज्जायत इत्यध्याहृतक्रियापदसंबन्धमन्तरेण तत्परिसमाप्तार्थम्=निराकाङ्क्षम् न भवतीति सर्वथा केवलस्य पदमात्रस्य नास्त्यर्थवत्तेति पदमात्रस्याव्यवहार्यत्वेनासत्यत्वं प्रतिपादयितुमाह—**सदित्येवेति**।

अयमर्थः—यत्तु सदित्येव केवलं पदरूपं वाक्य तद्=अभूत्, अस्तीति वा, नाभूत्, नास्तीति वा क्रियाभिधानसम्बन्धमन्तरेण=क्रियाया यदभिधानं वाचकं पदं तद्विना, न मन्यते=नावबुध्यते प्रतिपत्तेति।

अयं भावः—साध्यसाधने यतः परस्परनिष्पाद्यरूपे, अतः परस्परमविनाभाविनी, यतश्च ते अविनाभाविनी। अतस्ते स्पर्धयेवान्योन्यापेक्षके, अत एव वाक्ये वाक्ये नियमेन व्यवस्थिते। तथाहि—साधनं तथा निष्क्रियं न भवति=क्रियां विना साधनत्वाविष्टं न भवतीत्याकाङ्क्षावशात् क्रियापेक्षकमुच्यते, तथा क्रियापि निस्साधना न भवति=साधनं

तत्र सा क्रिया साधनमाकाङ्क्षत्येवेति प्रतिपादयितुमाह—

**आख्यातपदवाच्येऽर्थे साधनोपनिबन्धने ।**
**विना सत्त्वाभिधानेन नाकाङ्क्षा विनिवर्तते ॥ ४२६ ॥**

साधनमुपनिबन्धनं यस्याख्यातपदवाच्यस्यार्थस्य तस्मिंस्तथाभूते तस्मात् **सत्त्वाभिधानेन** विनाकाङ्क्षा न निवर्तते । साधनं हि **सत्त्वाभिधायि । ततस्तद्-वतिष्ठते ।** किं कृतस्तत्र गुणप्रधानभावस्तयोर्यदुच्यते साध्यस्यैव पूर्वं प्रविभाग इत्याशङ्क्याह—

**प्राधान्यात्तु क्रिया पूर्वमर्थस्य प्रविभज्यते ।**
**साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकम् ॥४२७ ॥**

अर्थस्य वाक्यार्थलक्षणस्याख्यातप्रतिपाद्यस्य क्रियाप्रधानत्वात् क्रियैव प्रधान्यात् पूर्वं प्रविभज्यते न साधनानि, यस्मात् साध्यार्थं साध्यनिष्पत्तये प्रयुक्तानि साधनानि, अतोऽङ्गात् प्रधानभूतानि तानीति न तेषां तत्र प्रविभागः ।

---

विना नोत्पद्यत इत्याख्यातपदप्रतिपाद्ये क्रियास्वरूपे उपात्ते सति सत्त्वाभिधानेन = साधन-रूपद्रव्याभिधानेन, विनाऽऽकाङ्क्षा न निवर्तत इति यत्रापि क्रियापदमेव केवलं प्रयुज्यते, तत्रापि नियताकाङ्क्षया साधनपदं नियमेनाध्याह्रियत इति ॥ ४२५ ॥

एवमेवार्थं स्फुटं प्रतिपादयितुमाह—**आख्यातपदवाच्य इति ।**

अयमर्थः—साधनोपनिबन्धने = साधनमुपनिबन्धनं निमित्त यस्याख्यातपदवाच्य-स्यार्थस्य तस्मिंस्तथाभूते, आख्यातपदवाच्ये = तिङन्तपदाभिधेयेऽर्थे शब्दत उपात्ते सति सत्त्वाभिधानेन = साधनरूपद्रव्याभिधानेन विना, उपात्तस्य क्रियापदस्याकाङ्क्षा न विनिवर्तते । यतः सत्त्वमेव क्रियासंबन्धेन साधनरूपतयाऽवतिष्ठत इति ॥ ४२६ ॥

नन्वेव साध्यसाधनयोर्द्वयोरपि परस्परापेक्षकत्वेन परस्पराक्षेपकत्वे समाने व्यवस्थिते सति वाक्ये किंकृतस्तयोर्गुणप्रधानभावः, येन प्रधान्यात् साधनस्यैव **पूर्वं** वाक्यार्थात् प्रविभागः कल्पनयोच्यते साधनस्य पश्चादित्याशङ्क्याह—**प्रधान्यादिति ।**

अयमर्थः—तुशब्दोऽवधारणे आख्यातप्रतिपाद्ये वाक्यार्थे । प्रधान्यात् क्रिया तु = **क्रियैव, अर्थस्य** वाक्यार्थाद्, अपादानस्य संबन्धित्वविवक्षया षष्ठी, पूर्वं प्रविभज्यते = **कल्पनयाऽपोद्ध्रियते,** साधनं स्वप्राधान्येन ततः पश्चादिति । तत्र साधनानामप्राधान्ये **हेतुमाह**—साध्यप्रयुक्तान्यङ्गानीति । यतः साधनानि साध्यार्थम् = साध्यनिष्पत्तये साध्येन स्वनिष्पत्तये प्रयुक्तानि, तस्मादङ्गानि = अप्रधानानि तानीति न क्रियायाः **प्राग्** वाक्यार्थात् प्रविभागस्तेषामिति ।

अथ प्रसङ्गात् क्रियाया अपि प्रयोजकमाह—फलं तस्याः प्रयोजकमिति । तस्याः = **क्रियायाः,** फलं तद्धात्वर्थभूतं प्रयोजकमिति ।

एवं क्रियाप्रयुक्तानि बोद्धव्यानि। प्रसङ्गात् क्रियाया अपि प्रयोजकमाह—फलं तस्याः प्रयोजकमिति। फलप्रयुक्ता क्रियाऽपीति फलापेक्षया क्रियाया अङ्गत्वं बोद्धव्यम् ॥ ४२७ ॥

इदानीं सर्वोऽयं साध्यसाधनव्यवहारः काल्पनिकः, तयोश्च साध्यसाधनयोः परस्परसम्बन्ध आपेक्षिक एव न वास्तव इति प्रतिपादयन् पुनरपि पदार्थासत्यत्वं व्यवस्थापयितुमाह—

**प्रयोक्तैवाभिसन्धत्ते साध्यसाधनरूपताम् ।**
**अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते ॥ ४२८ ॥**

इदं साध्यमिदं साधनं तयोश्चाभिसम्बन्धः सर्वमेतत्काल्पनिकम्। ततस्तत्त्वं च शून्यमेव प्रयोक्तृसमीहामात्रजीवितमिति यावत् ॥ ४२८ ॥

---

अयं भावः—आख्यातप्रतिपाद्यायाः क्रियाया वैयाकरणनये मीमांसकनये च शाब्दबोधे विशेष्यत्वाच्छब्दतः प्राधान्यं स्फुटमेव। साधनानां क्रियानिष्पत्तये प्रयुज्यमानत्वाच्चार्थतोऽपि तस्यास्तदपेक्षया प्राधान्यमिति तस्याः प्राग् वाक्यार्थात् प्रविभाग इति। साधनानां तु ततो विपरीतत्वादेव तद्वैपरीत्यमिति। फलस्य तु क्रियापेक्षया शब्देऽप्राधान्येऽपि क्रियायाः फलनिष्पत्त्यर्थत्वादार्थं तदपेक्षया प्राधान्यमव्याहतमेवेति फलापेक्षया क्रियाया आर्थमङ्गत्वं बोद्धव्यमिति ॥ ४२७ ॥

साम्प्रतं सर्वोऽयं साध्यसाधनव्यवहारः प्रयोक्तृबुद्धिपरिकल्पित एव, ईदृशयोश्च साध्यसाधनयोः परस्परं सम्बन्धोऽप्यापेक्षिक एव=प्रयोक्त्रपेक्षाबुद्धिपरिकल्पित एव, न वास्तव इति प्रतिपादनेन पुनरपि पदार्थासत्यत्वं व्यवस्थापयन्नाह—प्रयोक्तैवेति।

अयमर्थः—वाक्यप्रयोगात् प्राक् प्रयोक्तैव तत्तत्पदार्थानां साध्यसाधनरूपतामभिसंधत्ते=प्रकल्पयति—इदं साध्यमिदं साधनमिति, न तु प्रतिपत्ता, तदानीं तस्य तत्तत्पदार्थानामनुपस्थितेः। वाक्यश्रवणानन्तरं वाक्यार्थबोधात् प्राक्तु बोद्धाऽपि कल्पनया वाक्यादपोद्धृतेभ्यस्तत्तत्पदेभ्य उपस्थापितानां तत्तदर्थानां साध्यसाधनरूपतामभिसन्धत्त इत्यत्र तु न कापि विप्रतिपत्तिः। अत एव पदज्ञानपदार्थोपस्थित्योर्वाक्यार्थबोधं प्रति कारणत्वं स्वीक्रियते निखिलैरपि तान्त्रिकैः। किञ्च, अर्थस्य=साध्यसाधनरूपस्य, वा=च, अभिसंबन्धकल्पनां स एव तदानीं प्रसमीहते=वाञ्छतीति।

अयं भावः—इदं साध्यम्, इदं साधनम्, एष च तयोरभिसंबन्ध इत्येतत् सर्वं प्रयोक्तृबुद्धिपरिकल्पितमेव, न तु सत्यम्। एवं तत्त्वं च=स्वरूपञ्च, शून्यमेव=अपरपदार्थभूतमेव, सदसद्विलक्षणत्वेनानिर्वाच्यमेवेति यावत्। माध्यमिकानामिव सर्वशून्यत्वे निरधिष्ठानकविभ्रमानुपपत्तिः, 'दर्शनस्यापि यत्सत्यम्' इति कारिकाशयविरोधश्चेति प्रयोक्तृसमीहामात्रजीवितम्=प्रयोक्त्रिच्छामात्रस्थितिकमिति ॥ ४२८ ॥

यदि हि वास्तवमेतत् स्यात्तदा वस्तुस्वभावस्य ब्रह्मणाऽन्यथाप्यकर्तुमशक्यत्वाद् व्यवस्थितमेवैतद्भवेत्, न च तथा परिदृश्यत इति प्रतिपादयितुमाह—

**पचिक्रिया करोमीति कर्मत्वेनाभिधीयते ।**
**पक्तिः करणरूपं तु साध्यत्वेन प्रतीयते ॥४२९॥**

देवदत्तः पचतीत्यत्र या पाकक्रिया प्राधान्येनोपलब्धा, सैव पचिक्रिया देवदत्तः करोतीत्यत्र कर्मत्वेनैव पक्तिः पाकक्रिया व्यवस्थापिता, पचिक्रियाकरणं तु ? प्राधान्ये मज्जद्रूपं प्रतिपादितमिति नैषा वस्तुगतिः, साधनसमुद्देशे च सर्वमेतद्वैवक्षिकमिति विस्तरेण प्रदर्शयिष्यति । तथा सम्बन्धस्यापि काल्पनिकत्वमेव वक्ष्यतीति नेह प्रतन्यज्यते ॥४२६॥

---

यदि हि साध्यसाधनमभिसंबन्धश्चैतत् त्रयं वास्तवं स्यात्, तदा व्यवस्थितं स्यात्, वस्तुस्वभावस्य ब्रह्मणाऽप्यन्यथाकर्तुमशक्यत्वात्, व्यवस्थितत्वस्य वास्तवत्वसमनियतत्वात्, तदभावे तदभावात् । न चैतत् त्रिकं व्यवस्थितं परिदृश्यते । तथाहि—साधनानामव्यवस्थितत्वं तावत् सुज्ञानमेव; काष्ठं जायते, तिष्ठति, नश्यतीति, काष्ठैः पचतीति, काष्ठे स्थित इत्यादिप्रयोगदर्शनात् । उक्तञ्च—

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति । (३ सा० ६१)

तयोरभिसम्बन्धस्याप्यव्यवस्थितत्वम् । नहि 'रामेण बाणेन हतो वाली' इत्यत्र यः कर्तुः क्रिययाऽभिसंबन्धः स एव करणस्यापीति वक्तुं शक्यते, कर्तुर्व्यापारेण करणस्य तु फलेनाभिसंबन्धात् । एवं साध्यस्यापि क्रियारूपस्याव्यवस्थितत्वमेवेति प्रतिपादयितुमाह—**पचिक्रियेति** ।

अयमर्थः—या पचिक्रिया देवदत्तः पचतीत्यत्र वा क्यार्थबोधे प्राधान्येनोपलब्धा, सैव पचिक्रिया अहं पचामि = अहं पाकं करोमीति कर्मत्वेनाभिधीयते, तथाभिधीयमाना च शाब्दबोधेऽप्राधान्येनोपलभ्यते । एवम् 'ओदनं पचति' इत्यादौ पक्तेः = पचिक्रियायाः, साध्यत्वेन फलार्थमनुष्ठीयमानत्वेन हेतुना करणरूपं तु = फलं प्रति कारणरूपमपि प्रतीयते, पाकेनौदनं निर्वर्तयेदिति । तदुक्तं मीमांसकैः—

विधाने वानुवादे वा यागः करणमिष्यते ।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥ इति ।

अत एव—उद्भिदा यजेत, सोमेन यजेतेत्यादौ करणतृतीयान्तस्य आख्यातपदसामानाधिकरण्यं संगच्छत इति । श्रीपुण्यराजेन त्वियं कारिकैवं भावतो व्याख्याता—देवदत्तः पचतीत्यत्र या पाकक्रिया प्राधान्येनोपलब्धा, सैव पाकक्रिया देवदत्तः करोति' इत्यत्र कर्मत्वेनैव पक्तिः पाकक्रिया व्यवस्थापिता । पचिक्रियाकरणं तु प्राधान्येनोन्मज्जद्रूपं प्रतिपादितमिति नैषा वस्तुगतिरिति । अत्र 'प्राधान्येन' इत्यस्यादौ शाब्दबोधे' इति शेषः । 'पचि-

अथवाऽनेकशक्तिरर्थः स्थितोऽपि यद्यदुपकारवशाद् यथा प्रयोक्तृभिर्विवक्ष्यते तथैवात्मानमुपदर्शयतीत्याह —

**योऽसौ येनोपकारेण प्रयोक्तृणां विवक्षितः ।**
**अर्थस्य सर्वशक्तित्वात् स तथैव व्यवस्थितः ॥४३०॥**

तथा चेदमपि वस्तून्यनेकशक्तिखचितत्वात् महन्त इति प्रदर्शयितुमाह—

**आराद् वृत्तिषु सम्बन्धः कदाचिदभिधीयते ।**
**आश्लिष्टो योऽनुपश्लिष्टः स कदाचित् प्रतीयते ॥४३१॥**

आराद्वृत्तिष्वतिदूरमपि विप्रकृष्टेषु पदार्थेषु कदाचित् परस्परसम्बन्धः संश्लेषोऽभिधीयते, कदाचित्तु य आश्लिष्टः सम्बद्धोऽपि सोऽनुपश्लिष्टोऽसम्बद्धो दूरत इति विवक्षावशात् प्रतीयते ॥४३१॥

---

क्रिया रण तु' इत्यस्य पचिक्रियारूप करण तु' इत्यर्थः समस्ते व्यस्ते वा पाठे । प्राधान्येनोन्मज्जद्रूप प्रति ादितमित्यस्य पचतीत्यत्र शा० बोधे प्राधान्येनोन ज्जद्रूपम् = आविर्भवद्रूपम् पचिक्रियारूपमोदना े का ण प्रतिपादितमित्यर्थः । नैषा वस्तुगतिरित्यत्र एषामित्यस्य साध्यसाधनाभिसम्बन्धानामित्यर्थ. । क्वचित् तु 'एपा' इति प्रथमा तः पाठः । स तु न युक्तः तथा सति कर्माकाङ्क्षाया अनिवृत्तेः । वस्तुगतिरित्यस्य वस्तुरूपेण = सत्यरूपेण, गतिः = ज्ञ नमित्यर्थः ॥ ४२९ ॥

अथवैकोऽप्यर्थः कर्तृकरणादिरूपानेकशक्तिमानिति स्थितावपि यद् यदर्थरूत यदा यदा यद्यत्क्रियोपकारवशाद् यथा यथा = यद्यच्छक्तिमत्तया प्रयोक्तृभिर्विवक्ष्यते, तथा तथैव = तत्तच्छक्तिमत्त्वेनैव स्वस्वरूपमुपदर्शयतीत्येव साध्यसाधनरूपस्यार्थस्याव्यवस्थितत्व तेन चावास्तवत्वमपि प्रतिपादयितुमाह— **योऽसाविति** ।

अयमर्थ — योऽसावर्थो येनोपकारेण = येन येन क्रियाया उपकारेण हेतुना यद्यच्छक्तिमत्तया प्रयोक्तृणा विवक्षितः सोऽर्थः अर्थस्य सर्वशक्तित्वात् = कर्तृकर्मादिसर्वशक्तिकत्वात् तथैव = तच्छक्तिमत्तयैव तत्र व्यवस्थितः प्रतीयते । एव च वस्तुनः सर्वशक्तिकस्यार्थस्य साध्यसाधनरूपस्य तत्तच्छक्तिमद्रूपत्विव या तत्र तत्र व्यवस्थितत्वेऽपि स्वरूपतोऽव्यवस्थितत्वादवास्तवत्वमिति ॥४३०॥

एव च वस्तून्यनेकशक्तिकत्वादिदमपि = अनुपश्लिष्टस्य श्लिष्टत्वम् आश्लिष्टस्य चानुपश्लिष्टत्वमपि, सहन्त इति प्रदर्शयितुमाह—**आराद्वृत्तिष्विति** ।

अयमर्थः—आराद्वृत्तिषु = अतिदूरमपि स्थितेषु पदार्थेषु, कदाचित् संबन्धः = परस्पर संश्लेषो विवक्षावशादभिधीयते । यथा—इह वने धवखदिरपलाशा एव च्छिद्यन्ता नेतर इत्यत्र सुदूरव्यवहितानामपि धवखदिरपलाशाना द्वन्द्वे विवक्षावशादितरेतरयोगः = परस्परं

रूपान्तरमप्याह—

**संसृष्टानां विवेकित्वं संसर्गश्च विवेकिनाम् ।**
**नानात्मकानामेकत्वं नानात्वं च विपर्यये ॥४३२॥**

एकत्वेऽपि च कल्पनावशान्नानात्वं वस्तूनां दृश्यते राहोः शिर इति यथा, नानात्मकानां च धवखदिरपलाशादीनामकत्वमेकस्यां बुद्धौ सङ्कलनरूपं दृश्यते, वनमिति यथा; विवेकिना परस्परविलक्षणानां पदार्थानामयःशलाकाकल्पानां संसर्गो वाक्यार्थरूपो दृश्यते, यथा देवदत्तः काष्ठैरित्यादौ; संसृष्टानां च विभक्तत्वम्, यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ । एषां बुद्ध्या सङ्कलितानां सतां पश्चाद्विभागेनावस्थापनं क्रियते ॥४३२॥

तदेतत्कथमुपपद्यत इत्याह—

**सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ।**
**अत्यन्तयतशक्तित्वाच्छब्द एव निबन्धनम् ॥४३३॥**

---

संश्लेषः, अभिधीयते । कदाचित् तु य आश्लिष्टः = संबद्धोऽपि, सोऽनुपश्लिष्टः = दूरतोऽसबद्ध इति विवक्षावशात् प्रतीयते । यथा—तोयमत्स्ययोर्नैकत्वम् किन्तु महदन्तरमित्यत्यन्तसंश्लिष्टयोरपि तोयमत्स्ययोरत्यन्तमनुपश्लिष्टत्वं विवक्षावशात् प्रतीयत इति ॥४३१॥

न केवलं प्रागुक्तमेव पदार्थाना विरुद्धमव्यवस्थितं च रूपं विवक्षावशात् प्रतीयते, किन्तु रूपान्तरमपीति प्रतिपादयन्नाह—**संसृष्टानामिति** ।

अयमर्थः—संसृष्टाना वस्तूना विभागकल्पनामूलकविवक्षावशाद् विविक्तत्वम् = विभक्तत्वम् प्रतीयते । क्वचित् तु विवेकत्वमिति पाठः स चायुक्तः अर्थासंगतेः । **यथा** "माथुराः पाटलिपुत्रकेभ्य आढ्यतराः" इत्यादौ माथुराणा पाटलिपुत्रकाणा च पूर्वं बुद्ध्या **एकत्र** संकलितानां सता पश्चादनेन वाक्येन विभागेनावस्थापन क्रियते । विवेकिना च परस्परविलक्षणाना पदार्थानामयःशलाकावद् विप्रकीर्णरूपाणा वाक्यार्थरूपः परस्परं संसर्गो दृश्यते । यथा देवदत्तः काष्ठैः पचति' इत्यत्र परस्परविलक्षणयोरपि देवदत्तकाष्ठयोरेकक्रियान्वयित्वेन पचत्यर्थक्रियाद्वारक परस्परं संसर्गः प्रतीयते । नानात्मकाना च धवखदिरपलाशादीनामेकत्वमेकस्या बुद्धौ संकलनरूप दृश्यते यथा वनमिति । विपर्यये च = एकत्वेऽपि च, कल्पनावशाद् वस्तूना नानात्व दृश्यते, राहोः शिर इति यथा । अत्र ह्येकत्वेऽपि पदोपाधिकः पदार्थभेदः परिकल्प्यत इति ॥ ४३२ ॥

तदेतत्पदार्थाना विवक्षावशादन्यथाऽन्यथाप्रतीयमानस्वरूपमव्यवस्थितत्वं कथमुपपद्यत इत्याशङ्क्याह —**सर्वात्मकत्वादिति** ।

सर्वशक्तिरर्थस्तेनतेन रूपेण निरूपितस्तत्तद्व्यपदेशपात्रं भवतीति नियतशक्तिभिः शब्दैस्तथा तथा व्यपदिश्यत इति स्थितम्। अथवा निरात्मक एवासत्यभूतोऽसाविति यथा यथा विवक्षया निरूप्यते, तथा तथा अवस्थानमुपदर्शयतीति शब्दैस्तथैव व्यपदिश्यत इति बोद्धव्यम् ॥४३३॥

इदानीमर्थस्वरूपं शब्दा नैव स्पृशन्ति, केवलं तत्र दूरविप्रकर्षेणार्थस्योपलक्षणभावेन स्थिता व्यवहारोपयोगितामुपयान्तीत्यभिधातुमाह—

**वस्तूपलक्षणं शब्दो नापकारस्य वाचकः।**
**न स्वशक्तिः पदार्थानां संस्प्रष्टुं तेन शक्यते ॥४३४॥**

---

अयमर्थः—अर्थस्य सर्वात्मकत्वात् = सर्वशक्तिकत्वेन सर्वरूपत्वात्, एतदर्थस्यान्यथाऽन्यथाप्रतीयमानत्वं व्यवस्थितम् = उपपन्नं भवति। वा = अथवा, अर्थस्य नैरात्म्यात् = निःस्वरूपत्वात्, असत्यत्वादिति यावत्। एतद् व्यवस्थितं भवति। तत्र पक्षद्वयेऽपि शब्दस्य तेन तेन रूपेण प्रतीयमानेऽर्थेऽत्यन्तयतशक्तित्वात् = पदान्तरसमभिव्याहाररूपया आकाङ्क्षयाऽत्यन्तं नियतशक्तिकत्वात्, तेन तेन रूपेणार्थस्य प्रतीतौ शब्द एव निबन्धनम् = निमित्तं भवतीति।

अयं भावः—अर्थः सर्वशक्तिः, तेन च सर्वात्मकः, अतस्तेन तेन रूपेण प्रयोक्तृबुद्ध्या निरूपितः = प्रागुक्तरूपाङ्क्षानियतशक्तिकैः शब्दैस्तथा तथा व्यपदिश्यत इति स्थितम्। यद्वा निस्तत्त्व एवासत्यभूतोऽसाविति यथा यथा प्रयोक्तृबुद्ध्या विवक्षया च निरूप्यते = गोचरीक्रियते, तथा तथा स्वस्वरूपावस्थानमुपदर्शयतीति शब्दैस्तथा तथा व्यपदिश्यत इति ॥ ४३३ ॥

एव साध्यसाधनतदभिसंबन्धानामव्यवस्थितत्वेनावास्तवत्वमुक्त्वेदानीं शब्दार्थयोर्नैव साक्षात्संबन्धः कश्चित् सत्यः, तयोर्दूरविप्रकर्षस्याबाधितानुभवगोचरत्वात्; किन्तु केवल पदार्थेषु दूरविप्रकर्षेणोपलक्षणतया स्थिताः शब्दास्तेषां व्यवहारोपयोगितामुपयान्तीति प्रतिपादयन्नाह—**वस्तूपलक्षणमिति।**

अयमर्थः—शब्दो वस्तुनः = पदार्थस्य, उपलक्षणम्, न तु विशेषणम्, सुदूरविप्रकृष्टत्वेन तत्राविद्यमानत्वात्, तेन संबन्धासंभवाच्च। एवञ्च यथा गृहादावविद्यमानमपि काकादिकमुपलक्षणं सहजया योग्यतारूपया शक्त्या गृहादिकं परतो व्यावर्त्यावबोधयति तथा शब्दोऽपि पदार्थमुपलक्षणतयाऽवबोधयति, न तु पदार्थसंबन्धित्वादेकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन पदपदार्थयोः सुदूरविप्रकृष्टयोः संबन्धासभवस्य प्रागुक्तत्वात्।

किञ्च, शब्दो नोपकारस्य वाचकः, घटादिशब्दो घटादिपदार्थकृतस्य जलाहरणादिरूपस्योपकारस्य न वाचकः, असंबन्धात्। एवञ्च, यथा घटादिशब्दस्य घटादिकार्योपकारस्य वाचकत्वाभावेऽपि घटादिशब्दप्रयोगे तादृशोपकारप्रतीतिर्भवति, अनुमानात्, तथा शब्दादप्यर्थस्य प्रतीतिरनुमानाद् भविष्यति। तदेतदुक्तमन्यत्र—

शब्दार्थयोर्न वाच्यवाचकभाव उपपद्यते, तथा सति शब्दानामर्थस्वरूपं प्रकाश्यतामुपेयात्, न च तथा दृश्यत इत्याह—

**सम्बन्धिधर्मा संयोगः स्वशब्देनाभिधीयते।**
**सम्बन्धः समवायश्च सम्बन्धित्वेन गम्यते ॥४३५॥**

संयोगशब्दात् संयोगो द्रव्ययोरिति यथावत्परिनिष्ठितस्वरूपः, तत्र सम्बन्धिस्वभावः प्रतीयते, न च तस्य तद्रूपम्। एवं समवायशब्दात् समवायः प्रतीयत इत्याह-सम्बन्धः समवायः" इत्यादि। सम्बन्धित्वेन सम्बन्धस्वरूपविरहेण समवाय इत्यस्मात् प्रतीयते। अथवा यदा संयोगशब्देनासौ सम्बन्धः स्वतन्त्रोऽभिधीयते तदा तत्र समवायः सम्बन्धत्वेन गम्यत इति यदा सम्बन्धत्वेन गम्यत इति पाठस्तदैवं योजनीयम् ॥४३५॥

---

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥ इति।

किञ्च, घटादिपदार्थानां या जलाहरणादिविषया स्वशक्तिः = निजा शक्तिः, सा तेन घटादिशब्देन सम्प्रष्टु सम्बन्धमनुभवितु न शक्यते। एवञ्च यथा घटादिपदार्थशक्त्या सह घटादिपदानां सम्बन्धाभावेऽपि घटादिपदप्रयोगे घटादिपदार्थानां तत्तदर्थक्रियानुकूलाः शक्तयो घटादिपदार्थेषु प्रतीतेषु प्रतीयन्ते तथा घटादिपदाना घटादिपदार्थेष्वसंबद्धानामुपलक्षणतया स्थितानामपि घटादिपदार्थप्रत्यायकत्वमुपपत्स्यत इति पदपदार्थयोः संबन्धाभावेऽपि न किञ्चिदनुपपन्नमिति ॥४३४॥

यदि तु शब्दार्थयोर्वाच्यवाचकभावः संबन्ध इत्युच्यते तदा सोऽपि नोपपद्यते। तथा सति ह्यर्थस्वरूपं शब्दानां प्रकाश्यत्वमुपेयात्, न तु तथा दृश्यत इति प्रतिपादयितुमाह—**संबन्धिधर्मेति**।

अयमर्थः—संयोगः स्वशब्देन = स्वस्य वाचकेन संयोगशब्देन, द्रव्ययोः संयोग इत्यत्र संबन्धिधर्मा = संबन्धिनो धर्मः स्वभावो यस्येति ज्ञापकाद् व्यधिकरणो बहुव्रीहिः। संबन्धिस्वभावः, अभिधीयते। यथाहि—द्रव्ययोः सयोग इत्यत्र द्रव्यद्वयस्य निरूप्यनिरूपकभावः समवायो वा संबन्धः संयोगे प्रतीयत इति। संयोगोऽत्र यथावत्परिनिष्ठितस्वरूपः = संबन्धवत्प्रतियोग्यनुयोग्यनाकाङ्क्षस्वरूपः संबन्धिस्वभावः प्रतीत्या संवृत्तः, न च तस्य तद्रूपम्। एवं समवायश्च = समवायोऽपि, संबन्धः स्वशब्देनाभिधीयमानः--रूपघटयोः समवाय इत्यादौ प्रागुक्तरीत्या संबन्धस्वरूप विहाय संबन्धित्वेन गम्यते = प्रतीयते।

यदा तु 'संबन्धत्वेन गम्यते' इति पाठस्तदेत्थ व्याख्येयम्—यदा द्रव्ययोः संयोग इत्यादौ संयोगः संबन्धः संयोगशब्देन स्वतन्त्रोऽभिधीयते, तदा तत्र समवायश्च = समवायस्तु संबन्धः, संबन्धत्वेन = संयोगस्य संबन्धत्वेन गम्यत इति।

अथ भावः—भूतले घट इत्यादौ यत्राकाङ्क्षाभास्यः संयोगस्तत्र तस्य प्रतियोग्यनु-

पदार्थानां स्वतो रूपं न किञ्चिद् व्यवतिष्ठते यथा यथा निरूप्यन्ते तथा तथात्मानमासादयन्तीत्याह—

**लक्षणाद् व्यवतिष्ठन्ते पदार्था न तु वस्तुतः ।**
**उपकारात् स एवार्थः कथञ्चिदनुगम्यते ॥४३६॥**

---

योगिसापेक्षत्वेन संबन्धस्वभावत्वम् यत्र तु द्रव्ययोः संयोग इत्यादौ तस्य संयोगशब्देन स्वातन्त्र्येणाभिधानम्, तत्र तस्य विशेषणरूपसबन्ध्यंशे सापेक्षत्वे सबन्धिस्वभावत्वमेव, न तु संबन्धस्वभावत्वम्, प्रतियोग्यनुपेक्षत्वात्। न च सबन्धिस्वभावत्व तस्य रूपम्। एवञ्च शब्दस्य यथावदर्थस्वरूपप्रकाशकत्वाभावान्न शब्दार्थयोर्वास्तवः कश्चन सम्बन्ध इति ॥ ४३५ ॥

पदार्थाना न किञ्चिदपि रूप स्वतः = स्वरूपमात्रस्यालोचनात्मकेन निर्विकल्पकेन दर्शनेन व्यवतिष्ठते = व्यवस्थया प्रतीयते, किन्तु यथा यथा = येन येन प्रकारेण यं यम-साधारणधर्मरूपं प्रकारं लक्षणाख्यमाश्रित्य निरूप्यते, तथा तथा = तं तं प्रकारमाश्रित्य आत्मानम् = स्वस्वरूपम् आसादयन्ति = प्रतीत्या लभन्ते। यथा एक एव पदार्थे नानापर्यायशब्दैस्त तं योगार्थमाश्रित्य तेन तेन रूपेण निरूप्यमाणस्तत्र तत्र विवक्षाप्रयुक्तया व्यवस्थया प्रतीयत इति स्वरूपेणाव्यवस्थितोऽव्यवस्थितत्वाच्चासत्य इति प्रतिपादयितुमाह— **लक्षणादिति ।**

अयमर्थः—पदार्थाः, लक्षणात् = तत्तदर्थक्रियाकारित्वरूपात्, असाधारणधर्माद् व्यवतिष्ठन्ते = तत्र तत्र व्यवस्थया प्रतीयन्ते वस्तुतः = स्वरूपतस्तु न व्यवस्थया तत्र तत्र प्रतीयन्ते, व्यवस्थितस्य वस्तुस्वरूपस्यैकस्याभावात्। पूर्वार्धोक्तमेवार्थमुत्तरार्धेन विशदीकरोति–उपकारादिति। स एवार्थः = तत्र तत्रैक एवार्थः, उपकारात् = तत्तदर्थक्रियासु तेन तेन तत्तत्कारकशक्तिविशिष्टेन रूपेणोपयोगात्, तैस्तैः शब्दैः कथञ्चित् = कमपि योगार्थरूप प्रकारमाश्रित्य, अनुगम्यते = अनुसृत्य प्रत्याय्यत इति ।

अयं भावः—एक एवार्थ केनचिद् वक्त्रा कथञ्चिदुपयोगादन्यथा व्यपदिश्यते। अन्येन त्वन्यथेत्येवमनेकैः प्रकारप्रपञ्चैरसत्यभूत एव पदार्थः प्रतिपाद्यते इत्यनया कारिकया सर्वस्यापि पदार्थस्य सग्रहेण = संक्षेपेण व्यवस्था कृता ।

विशेषोदाहरणं तु यथा—एक एवार्थो लोके तत्तदर्थक्रियासु तं तमुपकार दृष्ट्वा तं तं योगार्थमाश्रित्याब्वार्वारिसलिलादिशब्दैस्तत्र तत्र व्यपदिश्यते। तत्र— आप्नुवन्ति निम्नं स्थलमित्यापः। 'आप्लृ व्याप्तौ' इत्यस्मात् कर्तरि बाहुलकात् क्विप्। पृषोदरादित्यादुपधाह्रस्वत्वम्। वारयति = अवरुणद्धि गन्तारं मार्गं वृति वार्वार वा। प्रवहज्जलमत्र कर्तृ। वारयतेः कर्तरि क्विप्, णलोपः। तत एव वा औणादिक इन्प्रत्ययो णिलोपश्च। लीलया अवगाहमानान जनाना जलकेलिरूपया सहितम्—सलिलम् पृषोदरादित्वाद् ह्रस्वत्वम्। कमलम् = अवगाहमानाना मूर्धानं मलते धारयतीति कमलम्, जले प्रविष्टाना मूर्धमात्र-

**स एवार्थः केनचित् कथञ्चिदुपयोगादन्यथा व्यपदिश्यत इत्येवमनेकप्रपञ्चैरसत्यभूत एव पदार्थो इति संगृह्य व्यवस्थापितम् ॥ ४३६ ॥**

दर्शनात्। पचाद्यच्, मूलविभुजादित्वात् कप्रत्ययो वा। जड जाड्यगुणयोगात्। डलयोरभेदः। पयः —पयते=अविच्छिन्नं गच्छतीति पयः। कीलालम् =कार्यते इति कीः=कीर्यमाणम्, लालया सह मुखशुद्ध्यवसरे इति कीलालम्। पृषोदरादित्वाद् रेफलोपः, नपुंसकह्रस्वत्वम्। अमृतम्—न मृतम्—मृत्यु, तृषार्त्तस्य यत् प्राप्य इति अमृतम्। जीवयति जगत्—ओषधितरुगुल्मादीनामुत्पादनेन पानावगाहनादिना चेति जीवनम्। नन्द्यादित्वाल्ल्युः, करणे वा ल्युट्। भुवनम्=भवत्यस्माज्जगदिति भुवनम्। भवतेरौणादिकः क्युप्रत्ययः। वनम्—वन षण सम्भक्तौ। वन्यते=सेव्यते इति वनम्। प्रस्थविघ्नादिवत् कप्रत्ययः कर्मणि। कबन्धम् कम्=तात्स्थ्याद् मूर्धस्थताः केशा बध्यन्ते येन संपृक्तेन, तत् कबन्धम्। प्रस्थादिवत् कः करणे बाहुलकात्।

उदकम्—उदच्यते कूपादित उदञ्चनादिनोद्ध्रियमाणमित्युदकम्। अत्र कर्मणि घञ् नलोपः पृषादरादित्वात्। उदकम्—उदच्यते पाथः—पथे गतौ। पथति=अविच्छिन्नं गच्छतीति पाथः। औणादिकः कर्तरि णस्- प्रत्ययः कल्पयितव्यः। पुष्करम्—पुषम् = पुष्टिम्, सस्यतरुगुल्मादीना करोतीति पुष्करम्। पुष्यतेः संपदादित्वाद् भावे क्विप्। पृषोदरादित्वकल्पनया पुषः षकारस्य इत्वाभावः। सर्वतो मुखम्—समे भूभागे सर्वतः प्रसरणशीलत्वेन सर्वता मुखम्। अम्भः—कौमुद्याम्—भृ शब्दे इत्येतदनन्तरम्—'अभिरभी क्वचित् पठ्यते' इति। अम्भते—मेघादौ स्थित वाय्वादिभिस्ताडित गर्जितादिरूप शब्द करोतीत्यम्भः। अम्भतेर्भौवा दिकाद् औणादिकोऽसुप्रत्ययः कर्तरि कल्पयितव्यः। अर्णः—ऋणु गतौ—तनादिः। अर्णोति—अविच्छिन्न गच्छतीत्यर्णः। ऋणधातोः कतर्यौणादि कोऽसुप्रत्ययः कल्पयितव्यः। तोयम्—परप्रेरणाया अभावेऽपि स्वतो याति=स्वतो गतिशीलम्—तोयम्। "आतोऽनुपसर्गे कः" इति यातेः कप्रत्ययः। पृषोदरादित्वात् स्व इत्यस्य लोपः। दृश्यन्ते च काव्येषु कविप्रयोगेषु सुबहुशश्च्युताक्षराः प्रयोगाः। तुधातोः सौत्राद् यत्प्रत्ययः, 'अचो यत्" इत्यनेन कर्तरि इति वा।

पानीयम्—पीयते इति कर्मण्यनीयर्। नीरम् =नितरामीरयति स्वस्मिन् पतितं तृणकाष्ठादिकमिति नीरम्। निपूर्वकादीरयतेः कर्तरि कः, मूलविभुजादिवद्वा प्रस्थादिवद्वा, बाहुलकात्। कर्तरि णिलोपः। क्षीरम्—स्वोपरि तरतः—पक्षिणः तरङ्गभङ्गैरीरयति प्रेरयतीति क्षीरम्। तोयशब्दे स्वशब्दस्येवात्र पक्षिशब्दस्य लोपः।

अम्बु—रबि लबि अबि शब्दे। प्रागुक्तरीत्या शब्दं करोतीत्यम्बु। अम्बतेरौणादिक उप्रत्ययः। शम्बरम्—वरम्=श्रेष्ठम् शम्=कल्याणं यस्मात् तत् शम्बरम्। प्रसिद्धं च लोके जलहेतुकं श्रेष्ठ कल्याणम्—साक्षात् परम्परया च लोकजीवनहेतुत्वात्। वेदे चापि तत् प्रसिद्धम्—"आपोमयः प्राणै इति। "शं नो देवीरभीष्टये आपो भवन्तु पीतये शं योरभिस्रवन्तु नः" इति च। मेघपुष्पम्=सूक्ष्म जलं वायुरूपाभिर्नाडीभिः सूर्यादागत्य मेघे पुष्यति=विकसति स्थूल भवतीति मेघपुष्पम्। पुष्प विकसने, पचाद्यच्। घनरसः—मेघस्य रसः=सारभूतो घनरसः। एते च जलपर्याया लोकशास्त्रयोरविरोधेन कथञ्चिद् व्याख्याताः। तथा चामरः— (१।१०।३-४)

इदानीं वाक्यार्थस्तु सत्यभूत इति प्रतिपादयितुमाह—

**वाक्यार्थे योऽभिसम्बन्धो न तस्यात्मा क्वचित् स्थितः ।**
**व्यवहारे पदार्थानां तमात्मानं प्रचक्षते ॥४३७॥**

परस्पराभिसम्बन्धस्वरूपः पानकरसादिवदनिर्विभागोऽनंश एव यो वाक्यार्थस्तस्य क्वचित् पृथग्रूपतयात्मा स्थितोऽवधारयितुं न शक्यत इति यावत् । पदार्थानां पुनरयःशलाकाकल्पानां व्यवहारावसरे तमात्मानं जीवितमिव प्रचक्षते, तद्वशात्तत्प्रतिपादितपदार्थोद्देशेन सर्वस्य कस्यचित् प्रवृत्तिनिवृत्तिसाफल्यात् । स चैकस्मिन् पदार्थे समुदाय एव वा परिसमाप्तो बोद्धव्यः ॥४३७ ॥

---

आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ॥
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥
मेघपुष्पं घनरसः ....... । इति ॥ ४३६ ॥

एवं पदार्थानामव्यवस्थितानामसत्यत्वं प्रतिपाद्येदानीं वाक्यार्थस्य प्रतिवाक्यमपूर्वत्वेन व्यवस्थितत्वात् सत्यत्वं प्रतिपादयितुमाह—**वाक्यार्थ इति** ।

अयमर्थः—परस्पराभिसंबन्धरूपः पानकरसादिवदनिर्विभाव्यभागोऽनंश एव यो वाक्यार्थस्तस्यात्मा पदार्थरूपोपाधिसंबन्धं विहाय पृथग्रूपतया स्थितोऽवधारयितुं न शक्यते । बोधस्येव तस्य पदार्थरूपोपाधिसंबन्धं विनाऽनिरूप्यत्वात् । पदार्थानां स्वयःशलाकाकल्पानां पृथग् विप्रकीर्णानां व्यवहारे = व्यवहारावसरे, तम् = वाक्यार्थम्, आत्मानम् = जीवितमिव प्रचक्षते, वाक्यप्रतिपादितवाक्यार्थघटकपदार्थोद्देशेन सर्वस्य कस्यचित्तद्वशात् प्रवृत्तिनिवृत्तिसाफल्यात् । स च वाक्यार्थ एकैकस्मिन् पदार्थे समुदाय एव वा पर्याप्तिवत् परिसमाप्तो वेदितव्यः ।

अयं भावः—यथात्मा कार्यकरणोपहितो वागादिगोचरो व्यवहार्यः प्रतिप्राणिशरीरं विभक्तः शरीरवदुत्पत्तिविनाशशीलोऽपरमार्थः प्रतीयते, अनुपहितस्तु वागाद्यगोचरोऽव्यवहार्योऽविभक्तोऽनंशः, तत एवोत्पत्तिविनाशरहितः परमार्थभूत उपनिषत्स्वतद्व्यावृत्त्या प्रतिपाद्यते, निर्धर्मकत्वेन विध्यगोचरत्वात् । तथा—वाक्यार्थोऽपि पदार्थद्वयोपहितः परस्पराभिसंबन्धरूपत्वेन प्रतीयमानोऽखण्डोऽपि सखण्ड इव पानकरसादिवदनिर्विभागोऽपि विभक्त इव व्यवहारे तत्तत्पदार्थेषु सर्वस्यापि जनस्य सफलप्रवृत्तिनिवृत्तिहेतुत्वात् पदार्थानामात्मभूतोऽव्यवस्थितत्वेनासतामपि परमार्थभूतोऽपि बुद्ध्या पदार्थेषु तत्तद्रूपैः परिकल्प्यमानेषु परिकल्पित इव स्थितः । एवं व्यवहारावसरे वाक्यार्थः पदार्थानामात्मा, वाक्यार्थस्य त्वनुपहितस्य व्यवहारागोचरत्वाद् न पदार्थानामिव तस्य कश्चिद् आत्मा क्वचित् स्थितः, येन तदुपाधितया कार्यकरणानामिव वाक्यार्थस्यासत्यत्वं परिकल्प्येत् इति ॥ ४३७ ॥

अथवा नैवासौ क्वचित् परिसमाप्त इदं तदिति पृथग्रूपतयानुपलक्षणात्. केवलं पदार्थसम्बन्धिना स्वरूपेणाखण्डस्य वाक्यार्थस्य स्वरूपं प्रतिपद्यत इति प्रतिपादयितुमाह—

**पदार्थे समुदाये वा समाप्तो नैव वा क्वचित् ।**
**पदार्थरूपभेदेन तस्यात्मा प्रविभज्यते ॥ ॥४३८॥**

एतदुक्तं भवति–न पृथगेव शृङ्गग्राहिकतया ( तस्य ) स्वरूपं विवेक्तुं शक्यते, परोपाधिद्वारकमेव सर्वदा तस्य निरूपणमवसातव्यमित्युच्यते ॥४३८॥

एतदेव स्फुटीकरणमा (णाया)ह—

**अन्वाख्यानाय यो भेदः प्रतिपत्तिनिबन्धनम् ।**
**साकाङ्क्षावयवं भेदे तेनान्यदुपवर्ण्यते ॥४३९॥**

तस्यान्वाख्यानाय यो भेदः पदार्थभेदोऽपोद्ध्रियते, स तस्यैव प्रतिपत्तिनिबन्धनं बोद्धव्यः। अतः पदार्थानां भेदे क्रियमाणे सति तेनापोद्धृतेन पदार्थभेदेनान्यदेव पदार्थव्यतिरिक्तं वाक्यार्थस्वरूपमुपवर्ण्यते प्रकटीक्रियते। कीदृशम्? 'साकाङ्क्षावयवम्' इति। भेदे सति साकाङ्क्षा अवयवाः पदार्थस्वरूपाः प्रतिपत्त्युपाया यस्य तत्तथाभूतमिति ॥४३९॥

---

वस्तुतस्तु वाक्यार्थो न पदार्थद्वयरूपोपाधिसंसृष्टः, सदसतोरुपरागासंभवात्, इदं तदिति पदार्थेभ्यः पृथग्रूपतयाऽनुपलक्षणात् = अप्रतीतेः, विभक्ततया प्रतीतयोरेव द्वयोः संसर्ग इति नियमात्, नित्यसंसर्गे मानाभावाच्च। एवञ्च नासावेकैकस्मिन् पदार्थे तत्समुदाये वा परिसमाप्तः। तथा च पदार्थसंबन्धविधुरोऽखण्डोऽपि वाक्यार्थः केवलं बुद्ध्या पदार्थसंबन्धं परिकल्प्य परिकल्पितेन पदार्थसंबन्धिना स्वरूपेण प्रतिपत्त्रा स प्रतिपद्यत इति प्रतिपादयितुमाह— **पदार्थे** इति।

अयमर्थः—वा = अथवा, वाक्यार्थः पदार्थे एकैकस्मिन् तत्समुदाये वा क्वचिदपि नैव समाप्तः, परिसमाप्य स्थितः, सदसतोरुपरागासंभवात्। एवं सत्यपि तत्र पदार्थरूपोपाधिसंबन्धकल्पनया **पदार्थरूपभेदेन** = कल्पितपदार्थरूपोपाधिभेदेन, **तस्य** = वाक्यार्थस्य, आत्मा = स्वरूपम्, प्रविभज्यते = अविभक्तोऽपि विभक्तः प्रतीयत इति।

अयं भावः—न वाक्यार्थस्य स्वरूपं पदार्थेभ्यः पृथक् पदार्थरूपोपाधिसंबन्धं विहाय एवं तदिति शृङ्गग्राहिकान्यायेन विवेकेन = भेदेन प्रतिपादयितुं शक्यते, किन्तु स्वस्वरूपानिविष्टपदार्थरूपोपाधिसंबन्धद्वारकमेव वाक्यार्थस्य निरूपणं भवति, न तु स्वतः तत्स्वरूपस्य प्रागुक्तरीत्याऽव्यवहार्यत्वादित्यवमातव्यमित्येतद् वस्तु एतया कारिकयोच्यत इति ॥ ४३८ ॥

पूर्वपद्योत्तरार्धोक्तमेवार्थं स्फुटीकर्तुमाह— **अन्वाख्यानायेति** ।

अयमर्थः— तस्य = वाक्यार्थस्य अन्वाख्यानाय = पदार्थप्रतिपादनमनु प्रतिपादनाय

तथाभूतस्य च वाक्यार्थस्य नानाशक्तिखचितस्य निर्विभागस्योपाधिकृतः पदार्थद्वारकः प्रविभागो नानारूपत्वमनुगम्यते। प्रतीयते परमार्थतस्त्वेक एवासावित्याह—

**अनेकशक्तेरेकस्य प्रविभागोऽनुगम्यते।**
**एकार्थत्वं हि वाक्यस्य मात्रयाऽपि प्रतीयते ॥४४०॥**

वाक्यस्य स्फोटात्मनो वाचकरूपस्यैकार्थत्वमेक एव निर्विभागस्वरूपो वाच्यार्थो यस्य तत्तथा, तस्य भावस्तत्त्वं प्रतीयते, कथम् 'मात्रयाऽपि' इति। यदा तस्य मात्रया नियतसंख्याकेनाल्पीयसा शब्देन योगोऽभिसम्बन्धो दृश्यते।

---

यो भेदः = पदार्थभेदः, वाक्यार्थादपोद्ध्रियते, सः = अपोद्ध्रियमाणः पदार्थभेदस्तस्य वाक्यार्थस्य प्रतिपत्तिनिबन्धनम् = वाक्यार्थप्रतिपत्तिहेतुभूतमेव = तत्फलकमेवेति यावत्। न तु वस्तुभूत इति कृत्वा सोऽपोद्ध्रियते इति बोद्धव्यम्। अतो भेदे = पदार्थानां भेदे क्रियमाणे सति, तेन कल्पनया अपोद्धृतेन अन्यद् = अपोद्धृतपदार्थव्यतिरिक्तमेव। वाक्यार्थस्वरूपमुपवर्ण्यते = वर्णनया प्रकटीक्रियते, तस्य परमार्थरूपं तु नोपवर्णयितुं शक्यमिति भावः। कीदृशं वाक्यार्थस्वरूपमुपवर्ण्यत इत्याकाङ्क्षायामाह—साकाङ्क्षावयवमिति। भेदे इति पदस्यावृत्याऽत्रापि संबन्धः। भेदे सति साकाङ्क्षा अवयवा अपोद्धृतपदार्थरूपाः प्रतिपत्त्युपाया यस्य तत्तथाभूतमिति ॥४३९॥

साम्प्रतं तथाभूतस्य च = सत्यस्य तु वाक्यार्थस्य = विज्ञानस्येव नानाशक्तिखचितस्य निर्विभागस्य पदार्थरूपोपाधिकृतः पदार्थभेदद्वारको नानात्वरूपः = प्रविभागोऽनुगम्यते = अपोद्धृतपदार्थभेदमनुप्रतीयते, परमार्थतस्त्वेक एवासौ वाक्यार्थ इत्याह—**अनेकशक्तेरिति।**

अयमर्थः—एकस्य = एकमविभागं यत् स्फोटात्मक वाक्यरूपं वाचकं तद्वाच्यत्वेन वस्तुत एकस्य, निर्विभागस्य, तथाप्यनेकशक्तेः = तत्तद्वाक्यार्थरूपैर्यअनेके विवर्तास्तदनुकूलानेकशक्तेः, यथा नैषधीयचरिते चतुर्दशे सर्गे पञ्चनलीवर्णनप्रसङ्गे एकैकपद्यानां नानाऽर्थाः प्रतीयन्ते, तत्र वस्तुभूतस्तु नृनलपर एक एव वाक्यार्थः। तदिदं व्यक्तीकृतम्—

शेषं नल प्रत्ययरेण गाथा या या समर्था खलु येन येन।
ता ता तदन्येन सहालगन्तीं तदा विशेषं प्रतिसंदधे सा ॥ (नै०च० सर्ग १४)

इति पद्येन।

सर्वाणि च = सैन्धवमानयेत्यादिवाक्यानि श्लेषवाक्यानि च प्रकरणादिसङ्कुचितवाक्यार्थावबोधकान्युदाहरणत्वेन द्रष्टव्यानि। प्रविभागः—पदार्थभेदोपाधिकमाविद्यकशक्तिभेदकृत नानात्वम्, अनुगम्यते = पदार्थभेदमनुप्रतीयते। वस्तुभूत तु वाक्यार्थस्यैकत्वमवेत्युत्तरार्धेनाभिधत्ते—एकार्थत्वमिति। हि = यतः, वाक्यस्य = स्फोटात्मनो वाचकरूपस्य, एकार्थत्वम् = एक एव निर्विभागस्वरूपो वाच्यार्थो यस्य तत्तथा, तस्य भावस्तत्त्वम्,

यथोक्तम्—इग्यण इति योगे स्थान्यादेशभावलक्षणो वाक्यार्थः स संप्रसारणमिति व्यपदिश्यते। अतः सम्प्रसारणमित्येवमेकसंख्येन लघीयस्त्वान्मात्रया व्यपदिश्यते तस्य योगो यदा न परिदृष्टस्तदैतदवगम्यते यदुतानंश एक एवाखण्डस्वरूपोऽसौ वाक्यार्थोऽन्यथा सम्प्रसारणमित्यनेनैकसंख्याकेन कथं युज्येत वक्तुम्॥४४०॥

तदिदं वाक्यार्थः सत्यरूपः पदार्थस्त्वसत्य एवेति निर्णीतम्। स च वाक्यार्थो बौद्ध एवाबहीरूप इति प्रतिपादयितुमाह—

**संप्रत्ययार्थाद् बाह्योऽर्थः सन्नसन्वा विभज्यते।**
**बाह्यीकृत्य विभागस्तु शक्त्यपोद्धारलक्षणः॥४४१॥**

सम्प्रत्ययो बुद्धिर्विज्ञानमित्यनर्थान्तरम्। सम्प्रत्ययोऽर्थोऽभिधेयरूपो यस्यासौ तथा तथाभूतात्तस्माद्बौद्धाद्वाक्यार्थाद्बाह्यार्थः सन् बहीरूपतया विद्यमान एवाथवाऽसन्बहिरसत्यभूत एव विभज्यते विभागेनानुगम्यते व्यवस्थाप्यते। कथं कृत्वेत्याह-

---

मात्रयापि प्रतीयते। यथा "इग्यणः" इति वाक्यात् पदद्वयलक्षणात् प्रतीयमानः स्थान्यादेशभावलक्षणो वाक्यार्थः संप्रसारणमिति पदेन एकसख्येन पदसंख्याकृतलघीयस्त्वाल्लेसार्थबोधकमात्रापदव्यपदेश्येन व्यपदिश्यमानः प्रतीयते। यदि त्वत्र स्थान्यादेशभावलक्षणो वाक्यार्थोऽखण्ड एक एव न स्यात्, स्याच्च पदार्थभेदघटितस्तदा स संप्रसारणमित्येकस्मात् पदान्न प्रतीयेत, पदभेदाभावेन तदुपस्थाप्यपदार्थभेदाभावादिति।

अय भावः—यत्र स्थान्यादेशभावलक्षणस्य वाक्यार्थस्य बोधिका योगशक्तिः संप्रसारणपदे पदभेदाभावाद् न परिदृश्यते, तत्रैतदवगम्यते यदुतानंश एक एवाखण्डस्वरूपोऽसौ वाक्यार्थोऽन्यथा सम्प्रसारणमित्यनेनैकसंख्याकेन पदेन कथं युज्येत वक्तुमिति॥ ४४०॥

वाक्यार्थः सत्यरूपः पदार्थस्त्वसत्य एवेतीदमिदानीं यावन्निर्णीतम्, स च वाक्यार्थो बौद्ध एवाबहीरूपो बहिरदर्शनेनापूर्वत्वात्। पदार्थस्तु बहिरुपलभ्यत इति न तेन बौद्धस्य वाक्यार्थस्य घटना सम्भवतीति वाक्यार्थघटकतया प्रतीयमानः पदार्थोऽसत्य एवेति प्रतिपादयितुमाह—संप्रत्ययार्थादिति।

अयमर्थः—संप्रत्ययार्थात् =संप्रत्ययो बुद्धिर्विज्ञानमिति पर्याया भावप्रत्ययान्ताः। संप्रत्ययः=कर्मण्यण् संप्रतीयमानोऽर्थोऽभिधेयरूपः=पदार्थः यस्य वाक्यार्थस्य घटकत्वेन प्रतीयमानतया संबन्धी स तथाभूतो वाक्यार्थ, तस्मात् =वाक्यार्थात् अस्य 'विभज्यते' इति क्रियापदेनान्वयः। बाह्यः=बहिरुपलभ्यमानः, अर्थः=पदार्थः सन्—नैयायिकादिमते, असन्—विज्ञानवादिनाम्, माध्यमिकानामद्वैतवेदान्तिनाञ्च मते, विभज्यते=विभागेनानुगम्यते=व्यवस्थाप्यते। कथं कृत्वेत्याकाङ्क्षायामाह—बाह्यीकृत्येति। अबाह्यं बाह्यं कृत्वेत्यर्थः।

अय भावः—संप्रत्ययमात्रशरीरतयाऽबाह्य एवासौ वाक्यार्थघटकत्वेनोपलभ्यमानः पदार्थो बाह्यरूपतया प्रथते, विवेकानवधारणात्। एवं पदार्थाना वहिरबाधं प्रतीयमानानां

''बाह्यीकृत्य' इति । अबाह्य एवासौ बाह्यरूपतया प्रथते, विवेकानवधारणाद् दृश्यविकल्पैकीकारेण वाक्यार्थं प्रतिपद्य पश्चादसौ विभागेनानुगम्यत इति यावत्। विभागस्तत्र कीदृश इत्याह—'शक्त्यपोद्धारलक्षणः' इति । शक्तीनां पदार्थसम्बन्धिनीनामपोद्धारः पृथक्करणं लक्षणं यस्यासौ तथा । पदार्थशक्तयस्तस्मादपोद्ध्रियन्त इत्यर्थः। अत्र तु बौद्धे वाक्यार्थे समाश्रिते शक्तीनां तत्राविद्यमानत्वात् तस्मादपोद्धारस्तासां कीदृशः स्यात् । ताः पदार्थव्यक्तयो न (तत्र) व्यवस्थिताः । यदि हि तत्र ताः स्युः, तदा ह्यतीतेऽवगतेऽर्थे स्यादेवार्थक्रियावाप्तिः । तस्माद् बौद्धादर्थादन्यत्र बाह्य एवार्थे ताः शक्तयो व्यवस्थिताः, ततश्च बौद्धादर्थादन्यत्र बाह्येऽर्थे विद्यमानमपि तासां रूपं निराकारेण विज्ञानेनोपलभ्यते । तस्माद्विज्ञानाकारस्य बाह्यस्य चार्थस्य शक्तित एकाकारेण विना व्यवहारो नोपपद्यत एवेति बाह्यीकृत्येत्युक्तम् ।

---

वस्तुतो बुद्धावववर्तमानत्वेऽपि बुद्धौ तेषा संप्रत्ययमात्रशरीरतया शुक्तिरूप्यादिवद् दृश्यविकल्पमात्ररूपत्वेन बौद्धेन वाक्यार्थेन सह विवेकानवधारणात्, तदेकीकारेण वाक्यार्थं प्रतिपद्य पश्चादसौ = पदार्थः वाक्यार्थाद् विभागेनानुगम्यते प्रतिपत्रा इति । विभागस्तत्र कीदृश इत्याह—शक्त्यपोद्धारलक्षण इति । शक्तीनाम् = पदार्थसंबन्धिनीनाम्, पदार्थबोधानुकूलानाम्, अपोद्धारः = पृथक्करणम्, लक्षणम् = स्वरूपम्, यस्यासौ तथा । पदार्थविषयाः शक्तयो वाक्यार्थादपोद्ध्रियन्त इत्यर्थः । अत्र क्वचिन्मूलपुस्तके—

प्रत्ययार्थात्मनियताः शक्तयो न व्यवस्थिताः ।
अन्यत्र च ततो रूपं न तासामुपलभ्यते ॥

इति श्लोकोऽधिक उपलभ्यते ।

अस्यार्थः—प्रत्ययाः = प्रतीयमानाः प्रत्ययमात्रशरीरा येऽर्थात्मानस्तद्विषया या नियताः शक्तयो वाक्यार्थे प्रतीयमानास्तास्तत्र न व्यवस्थिताः, विशेषरूपेण = सत्यरूपेण, अवस्थिताः । ततोऽन्यत्र च = वाक्यार्थादन्यत्र च, तासाम् = पदार्थशक्तीना रूपं नोपलभ्यते, केवलपदानामप्याकाङ्क्षितपदान्तराध्याहारेण वाक्यरूपत्वस्य प्राग्व्यवस्थापितत्वादिति वाक्यार्थेऽन्यत्र च पदार्थशक्तीनामविद्यमानत्वेनासत्यत्वमेव तासामिति तद्वशात् प्रतीयमानानां पदार्थानामप्यसत्यत्वमेवेति ।

अय भावः—बौद्धेऽखण्डे वाक्यार्थे समाश्रिते पदार्थशक्तीना तत्राविद्यमानत्वात् । तस्मादपोद्धारस्तासा कीदृशः स्यात् ? यतस्ताः पदार्थशक्तयो न तत्र व्यवस्थिताः । यदि हि तत्र ताः स्युस्तदाऽतीतेऽर्थे वाक्यार्थाद् विभज्यावगते सति स्यादेवार्थक्रियाप्राप्तिः, न च तथा दृश्यते । तस्माद् बौद्धादर्थादन्यत्र बाह्य एवार्थे ताः शक्तयो व्यवस्थिताः, ततश्च बौद्धादर्थादन्यत्र बाह्येऽर्थे विद्यमानमपि तासा स्वरूपं निराकारेण = प्रत्यक्षाद् व्यतिरिक्तेन, विज्ञानेन = अनुमानरूपेण उपलभ्यते । तस्माद् विज्ञानाकारस्य = बौद्धस्य बाह्यस्य चार्थस्य शक्तित एकीकारेण विना = विबेकानवधारणमूलकैकीकारेण उभयोरपि शक्तिमत्त्वा-

तथा चैकयोगक्षेमत्वाद् बौद्धार्थबाह्यार्थयोर्युक्तो बौद्धेऽप्यर्थे शक्त्यपोद्धारलक्षणो विभागः। तत्र यदि विज्ञानाकारस्य विकल्पवासनामाहात्म्याद् बाह्येनैकीकृतस्य सत्यतो बहिरर्थोऽस्ति, येनोपजन्यते; तदा बाह्य एव शब्दार्थः, न चेदसन्नेव बहि- बौद्ध एव शब्दार्थ इति निर्णयः ॥४४१॥

अथ वाक्यविचारप्रस्तावे वाक्यानामेकवाक्यत्वं वा वाक्यनानात्वमे.- वाक्यत्वं वा इति मतभेदेन प्रतिपादयितुमाह—

**बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता ।**
**तिङन्तेभ्यो निघातस्य पर्युदासस्तथार्थवान् ॥४४२॥**

---

पादनं विना व्यवहारो नोपपद्यत एव, अर्थक्रियासमर्थस्यैव व्यवहारोपयोगित्वादित्यभिप्रेत्य बाह्यीकृत्येत्युक्तम्। तथा च कल्पितेनाकल्पितेन वैकशक्तिमत्त्वेन एकयोगक्षेमत्वाद् बौद्धार्थ- बाह्यार्थयोर्युक्तो बौद्धेऽप्यर्थे वाक्यार्थात् शक्त्यपोद्धारलक्षणो विभागः। तत्र यदि विज्ञाना- कारस्यार्थस्य पूर्वपूर्वविकल्पवासनामाहात्म्यात् (विकल्पोऽत्र भ्रान्तिकल्पितोऽर्थः) बाह्येनार्थेन सहैकीकृतस्यासत्यत्वात् सत्यतो बहिरर्थोऽस्ति, येनोपजन्यते सः; तदा बाह्य एव शब्दार्थः सत्यः, न चेदेवम्, तदाऽसन्नेव बहिरर्थो बौद्ध एव शब्दार्थः सत्य इति विवेकः ॥ ४४१ ॥

अथ वाक्यविचारप्रस्तावे परस्परं साकाङ्क्षाणा प्रत्येकमेकतिङन्तघटितानां बहूनां वाक्यानामेकवाक्यत्वं नानावाक्यत्वं वेति मतभेदेन प्रतिपादयितुमाह— **बहुष्वपीति।**

अयमर्थः—एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति—सूत्रकारमते बहुष्वपि तिङन्तेषु परस्परं साकाङ्क्षेष्वेकवाक्यता इष्टा। पचति भवति, मृगो धावति पश्येत्यादौ यथा। तथा—बहुषु तिङन्तेषु परस्पर साकाङ्क्षेष्वेकवाक्यत्वस्वीकारे सत्येव, पूर्वोदाहृतेषु तिङन्ते- भ्यः परस्य तिङन्तस्य निघातस्य—अनुदात्तस्य, अतिङ इति प्रतिषेधः अर्थवान्= सार्थक इति।

अय भावः—इह व्याकरणे वार्त्तिककारेण—"आख्यातं साव्ययकारकविशेषणं वाक्यम्" इति वाक्यलक्षणप्रतिपादकं वार्त्तिकमुक्तम्। अत्र च वाक्यलक्षणवाक्ये—'असति बाधके सर्वं वाक्यं सावधारणं भवति" इति न्यायानुरोधेन एवकारार्थमुपगृह्य—आख्यातं साव्ययकारकविशेषणमेव वाक्यं भवतीति नाभिप्रेतम्। रथेन गच्छति चैत्रः' इत्यादाव- व्ययस्य कारकविशेषणस्य क्रियाविशेषणस्य चाभावेऽपि वाक्यत्वस्येष्टत्वात्। इह यद्यपि 'आख्यातं साव्ययकारकविशेषणं वाक्यमेव भवति' इतीदृशो नियमोऽत्र संभवति तथापि परिसंख्यारूपे नियमे स्वार्थहानिपरार्थकल्पनप्राप्तबाधरूपदोषत्रयसत्त्वेन विधिनियमसंभवे विधिरेव ज्यायानिति परिभाषानुरोधेन यथासंभवं साव्ययं सकारकं सविशेषणञ्चाख्यातं वाक्यं

इह वार्त्तिककारेणाख्यातं साव्ययकारकविशेषणं वाक्यमित्यत्रैकवचनस्य विवक्षितत्वादेकतिङिति वाक्यलक्षणान्तरप्रतिपादनादनेकाख्यातसद्भावे वाक्यभेद एवेष्यते सूत्रकारेण त्वतिङ् इति प्रतिषेधोपादानसामर्थ्यात् सत्स्वपि बहुषु तिङन्तेष्वर्थस्य साकाङ्क्षत्वात् तत्रैकवाक्यतैवेष्यत इति प्रदर्शितं बहुष्व-पीत्यनेन ॥४४२॥

वार्त्तिककारमतेन वाक्यभेदस्तत्रेत्युपदर्शयितुमाह—

**एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम् ।**
**तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥४४३॥**

नियतलक्षणमिति विवक्षितैकत्वमित्यर्थः ॥४४३॥

---

भवतीति विधिरेव ज्यायान् । एतादृशलक्ष्यदर्शनरूपबाधकसत्त्वाद् नावधारणम् । तत्र वाक्ये कारकसत्ता नियता । अव्ययविशेषणयोः सत्ता त्वनियतेति विवेकः ।

त्र वार्त्तिके— आख्यातम्' इत्येकवचनं विवक्षितम्, वार्त्तिककारेणैव—'एकतिङ् वाक्यम्' इति वाक्यस्य लक्षणान्तरकरणात् । तेन पचति भवति 'पश्य मृगो धावति' इत्यादौ अनेकतिङन्तघटिते वाक्यभेद एव तस्येष्टः । सूत्रकारेण तु 'पचति' 'भवति' इत्यादौ निघातनिवृत्तये "तिङ्ङतिङः" इति सूत्रेऽतिङ इति प्रतिषेधोपादानसामर्थ्यात् सत्स्वपि बहुषु तिङन्तेषु तदर्थानां परस्परं साकाङ्क्षत्वात्—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्' इति जरन्मीमांसकसम्मतं वाक्यलक्षणं लक्ष्यानुरोधेनानुरुध्य तत्रैक-वाक्यतैवेष्यत इति ।

इह यद्यपि सूत्रकारवार्त्तिककारमतयोर्वार्त्तिककारमतमेव ज्याय इति यथोत्तरं मुनीनां प्रामाण्यमिति परिभाषानुरोधेन प्रतीयते, तथापि—"ग्रामशब्दोऽयं बह्वर्थः, अस्ति गृहसमुदाये वर्तते" इत्यादिभाष्यप्रयोगदर्शनात्, 'पचति भवति, पश्य मृगो धावति' इत्यादौ भाष्य-कारेणातिस्फुटमेकवाक्यतास्वीकाराच्च यथोत्तरमिति न्यायानुरोधेनैव सूत्रकारमतमेव भाष्य-कारसमर्थितत्वाद् ज्याय इति विज्ञेयमिति ॥ ४४२ ॥

वार्त्तिककारमतेन पचति भवति' इत्यादौ साकाङ्क्षानेकतिङन्तघटिते वाक्यभेद एवेत्युपदर्शयितुमाह—**एकतिङिति** ।

अयमर्थः—यस्य तु वार्त्तिककारस्य मते व्याकरणशास्त्रे नियतलक्षणमेकतिङ् वाक्यम्—'आख्यातं साव्ययकारकविशेषणमि'ति लक्षणे आख्यातमित्येकवचनस्य विवक्षित-त्वान्नियतस्वरूपमेकतिङन्तघटितमेव वाक्यम्, तस्य मते पचति भवति' इत्यादौ—अनेक-तिङन्तघटिते वाक्यभेदात् समानवाक्य एव निघातप्राप्त्या "तिङ्ङतिङः" इति सूत्रे निघातप्रतिषेधार्थेनातिङ्ग्रहणेनार्थः प्रयोजनं न विद्यते इति ॥ ४४३ ॥

केषाञ्चित् पुनरनेकाख्यातसद्भावेऽपि वाक्यार्थस्य भेदाभेदौ व्यवस्थितावेवेत्याह—

**तिङन्तान्तरयुक्तेषु युक्तयुक्तेषु वा पुनः।**
**मृगः पश्यत यातीति भेदाभेदौ न तिष्ठतः ॥४४४॥**

इह मृगः पश्यत यातीत्यत्र तिङन्तान्तरसद्भावाद्वाक्यभेद एव, तथा च मृगशब्दस्य यातीत्यस्य च सम्बन्धादेकं वाक्यम्। अनन्तरं विभक्तिविपरिणामेन कर्मपदेन प्रत्यवमर्शादेतं मृगं पश्यतेति द्वितीयं वाक्यम्।

अन्यस्त्वाह—युक्तयुक्तत्वाद् बहुष्वपि तिङन्तेष्वभेद एव। तथा ह्यत्र मृगशब्देन यातिपदस्य योगः, तद्युक्तेन यातिपदेनाख्यातान्तरस्य योगः। तेनात्र पदेनाख्यातान्तरस्य योगः। तेनात्र मृगकर्त्तृकं सरणं पश्यतेति दृशिक्रियापेक्षया एकमेव वाक्यमिति केचित्। पश्यतेति बहुवचनं वृत्तानुरोधात्। वार्त्तिककारस्याप्येकतिङ्त्यत्रैकतिङ्त्वं प्रधानतिङन्तापेक्षया प्रतिपाद्यमानं सूत्रकारमतानुगुण्यं भजत एवेत्यनयोर्नास्ति मतभेदः। तदपरेषां मतभेद एव बोद्धव्यः ॥४४४॥

---

इह यद्यपि पूर्वश्लोकद्वयेन बहुष्वनेकतिङन्तयुक्तेषु साकाङ्क्षेषु वाक्येषु सूत्रकारमते एकवाक्यत्वम्, वार्त्तिककारमते तु वाक्यभेद इत्यापाततः प्रतीयते, तथाप्युभयोरपि मते तत्राभेद एव, तदन्येषां त्वाचार्याणामनेकाख्यातसद्भावेऽपि पूर्वपद्यद्वयप्रदर्शितपद्धत्या वाक्यभेदाभेदप्रयुक्तौ वाक्यार्थस्य भेदाभेदौ व्यवस्थितावेवेत्याह—तिङन्तान्तरयुक्तेष्विति।

अयमर्थः—'मृगः पश्यत याति' इत्यादौ तिङन्तान्तरयुक्तेषु यातीत्यादिरूपं यत्प्रधानक्रियाबोधकं तिङन्तपदं तदन्यद् यत् पश्यतेति तिङन्तं तद्युक्तेषु = तद्योगवत्सु मृग इत्यादिकेषु पदेषु सत्सु वाक्यभेद एव, तिङन्तान्तरसद्भावात्। तथाहि—मृग इत्यस्य यातीत्यस्य च सम्बन्धादेकं वाक्यम्। तदर्थबोधानन्तरं च मृग इति प्रथमान्तस्य द्वितीयान्ततया विभक्तिविपरिणामेन पूर्ववाक्ये कर्तृभूतस्य मृगस्योत्तरवाक्ये मृगमिति कर्मपदेन प्रत्यवमर्शाद् यान्तं मृगं पश्यतेति द्वितीयवाक्यम्। एवं कारकभेदात् तिङन्तभेदाच्च 'मृगः पश्यत याति' इति वाक्यद्वयमिति केषाञ्चिन्मतम्।

अन्येषां मतमाह—युक्तयुक्तेष्विति। वा = अथवा युक्तयुक्तेषु पुनः = युक्तयुक्तेषु तु पदेषु सत्सु बहुष्वपि तिङन्तेषु वाक्यभेद एव। तथाहि—'मृगः पश्यत याति' इत्यत्र प्रथमान्तमृगशब्देन युक्तं यातिपदम्, तद्युक्तेन यातिपदेन युक्त पश्यतेति पदम्। एवञ्च मृगकर्तृकं सरणं पश्यतेति दृशिक्रियायां 'मृगो याति' इति वाक्यार्थस्य कर्मत्वाद् मृगो याति' इत्यस्य दृशिक्रियाऽऽकाङ्क्षया परस्परं साकाङ्क्षत्वादेकमेव वाक्यमिति। 'मृगः पश्य याति' इति प्रथमोपस्थितत्वादेकवचनप्रयोगे मृगादाविव कर्तव्ये पश्यतेति बहुवचनप्रयोगो वृत्तानुरोधात् = छन्दोऽनुरोधात्, एकवचनप्रयोगे ह्येकाक्षरहान्या छन्दोभङ्गः। एवं 'मृगः पश्यत याति' इत्यादौ यद्यपि मतभेदेन व्यवस्थितौ भेदाभेदौ तिष्ठतः, तथापि

अथ वाक्यपरिसमाप्तिज्ञानपूर्विका नानावाक्यतैकवाक्यता वा ज्ञातुं शक्या, नान्यथेत्याशङ्क्य शब्दलक्षणा वाक्यपरिसमाप्तिर्बोद्धव्या, नार्थलक्षणेत्यत्र साकाङ्क्षत्वानाकाङ्क्षत्वविचारमाह—

**इतिकर्तव्यताऽर्थस्य सामर्थ्याद्यस्य काङ्क्ष्यते ।**
**अशब्दलक्षणाकाङ्क्षं समाप्तार्थं तदुच्यते ॥४४५॥**

अविद्यमाना शब्दलक्षणा शब्दाश्रिता आकाङ्क्षा यस्मिंस्तद्वाक्यं समाप्तार्थमुच्यते। तदवगतस्यार्थस्य तु यत्र सामर्थ्यादर्थतथाभावलक्षणात् तदीयायामितिकर्तव्यतायामाकाङ्क्षा जायते, तावता न तत्र तद्वाक्यमपरिसमाप्तमित्युच्यत इति बोद्धव्यम्, यथा व्रीहयो बहवोऽवहन्यन्तामित्यत्र शब्दापेक्षा तावन्नास्त्येव, व्रीहीणां त्ववहननमुलूखलमुसलकर्मकर्त्रादिसन्निधानमन्तरेण न सम्पद्यत इति तदपेक्षणाद्वाक्यं नात्र परिसमाप्तमिति न युक्तं वक्तुम्, शब्दलक्षणापेक्षाऽयोगादिति ॥४४५॥

---

सूत्रकारवार्त्तिककारयोर्मते तत्र व्यवस्थितौ भेदाभेदौ न तिष्ठतः। किन्तु—उभयोरपि मते तत्राभेद एव। तथाहि—वार्त्तिककारमतेऽप्येकतिङ्वाक्यमित्यत्र तिङ्पदस्य प्रधानतिङन्ते लक्षणया—एकं प्रधानतिङन्तं यत्रेति बहुव्रीहिसमाश्रयणेन व्याख्याने सूत्रकारमतानुगुण्यमेव संपद्यते इति नास्ति तयोर्मतभेदः। एवञ्च तत्र भेदाभेदौ तदन्याचार्यमतापेक्षया व्यवस्थितौ विज्ञेयाविति ॥ ४४४ ॥

अथ वाक्यपरिसमाप्तिज्ञानपूर्वकमेव नानावाक्यत्वज्ञानमेकवाक्यत्वज्ञानं वा संभवति, नान्यथा। तथाहि—यत्र वाक्यपरिसमाप्तिः=वाक्यस्य निराकाङ्क्षत्वसम्पत्तिः, तदेकं वाक्यम्, यत्र तु न तथा तद् नानावाक्यमिति। सा च वाक्यपरिसमाप्तिः शब्दलक्षणाऽर्थलक्षणा वेत्याशङ्क्य शब्दलक्षणैव=शब्दरूपाधारज्ञाप्यैव वाक्यपरिसमाप्तिर्नार्थलक्षणेति स्थिते वाक्ये साकाङ्क्षत्वानाकाङ्क्षत्वविचारमाह—**इतिकर्तव्यतेति**।

अयमर्थः—यस्य वाक्यस्य अर्थस्य अवगतस्य सामर्थ्याद् अर्थतथाभावलक्षणात्=अर्थस्वभावरूपात्, तदीया इतिकर्तव्यता=कर्तव्यताप्रकारः, व्रीहीणामवघातादौ मुसलोद्यमननिपातनादिरूपः काङ्क्ष्यते=अपेक्ष्यते, अशब्दलक्षणाकाङ्क्षम्=अविद्यमाना शब्दलक्षणा शब्दरूपाधारज्ञाप्या=शब्दाश्रितेति यावत्। आकाङ्क्षा यस्मिंस्तत्, शब्दाकाङ्क्षारहितम्, तद्वाक्यमर्थाकाङ्क्षासत्त्वेऽपि समाप्तार्थमुच्यत इति।

अयं भावः—यथा व्रीहयो बहवोऽवहन्यन्तामित्यत्र वाक्यस्य स्वार्थबोधे मुसलोलूखलादिशब्दान्तराकाङ्क्षा तावन्नास्त्येव, अवघाते मुसलोलूखलादीनां नान्तरीयकतयाऽर्थादेवोपस्थितेः। एवमपि व्रीहीणामवहननमुलूखलमुसलकर्मकर्त्रादिसन्निधानमन्तरेण न संपद्यते इत्युलूखलादिरूपकारकार्थापेक्षा त्वस्त्येव, तथापि तदर्थापेक्षणाद् वाक्यं नात्र परिसमाप्तमिति न वक्तुं युक्तम्, अर्थलक्षणाकाङ्क्षासत्त्वेऽपि शब्दलक्षणाकाङ्क्षाया

**तत्त्वान्वाख्यानमात्रे तु यावानर्थोऽनुषज्यते ।**
**विनाऽपि तत्प्रयोगेण श्रुतेर्वाक्यं समाप्यते ॥४४६॥**

व्रीहीणामवहननमात्रमत्रान्वाख्यायते, तस्मिंश्च सति उलूखलादिसन्निधानं यदत्रानुषज्यते तस्य प्रयोगेण शब्देन प्रतिपादनेन विनाऽपि तत्र तद्वाक्यं श्रुत्या शब्दव्यापारेण समाप्तमेवेति बोद्धव्यम् ॥४४६॥

इदानीमर्थप्रत्यायनाभेदेऽपि शब्दवृत्तेन गुणप्रधानरूपतयाऽभिधानं शब्देषु सम्भवतीति प्रसङ्गाच्छब्दधर्मप्रतिपादनं कर्तुमाह—

**चङ्क्रम्यमाणोऽधीष्वात्र जपंश्चङ्क्रमणं कुरु ।**
**तादर्थ्यस्याविशेषेऽपि शब्दाद्भेदः प्रतीयते ॥४४७॥**

चङ्क्रम्यमाणोऽत्र जपं कुरु अथवा जपंश्चङ्क्रमणं कुर्वित्यत्र उभयथा जपविधिः प्रतीयते, केवलं चङ्क्रम्यमाणो जपेत्यत्र जपः प्राधान्ये-

---

अभावात्, शब्दलक्षणाकाङ्क्षातदभावयोरेव वाक्यापरिसमाप्तितत्समाप्त्योर्नियामकत्वादिति ॥ ४४५ ॥

पूर्वग्रन्थोक्तमेवार्थमुपपत्त्या स्फुटीकर्तुमाह—**तत्त्वान्वाख्यानमात्रे इति** ।

अयमर्थः—यत्र व्रीहयो बहवोऽवहन्यन्तामित्यादौ बहुव्रीहिकर्मकावघातरूपवाक्यार्थस्य स्वरूपमात्रविवक्षयेदं वाक्यमन्वाख्यायते तत्र तत्त्वान्वाख्यानमात्रे तु = वाक्यार्थस्वरूपान्वाख्यानमात्रे तु यावानर्थ = मुसलोद्यमननिपातनादिरूपेतिकर्तव्यतारूपः उलूखलादिसन्निधानरूपश्चार्थः, अनुषज्यते = वाक्यार्थबोधमनु नान्तरीयकतया सम्बध्यते तत्र प्रयोगेण विनाऽपि = तस्यार्थस्य प्रयोगेण = व्रीहय उलूखले संस्थाप्य मुसलेनावहन्यन्तामिति शब्दतः प्रतिपादनेन विनाऽपि, बहवो व्रीहयोऽवहन्यन्तामिति वाक्यम्—श्रुतेः—अभिधारूपं शब्दव्यापारमपेक्ष्य समाप्यते = परिसमाप्तं भवति, न तु तत्र नान्तरीयकेतिकर्तव्यतारूपार्थापेक्षणाद् वाक्यस्यापरिसमाप्तिरिति बोद्धव्यमिति ॥ ४४६ ॥

एवमखण्ड एव वाक्यार्थः, ततश्चापोद्धारकल्पिताः पदार्था बहिरसन्तः सन्तो वा व्यावहारिका इति स्थितम् । साम्प्रतं पदार्थाना कल्पितत्वेऽपि चङ्क्रम्यमाणोऽधीष्वात्र जपंश्चङ्क्रमणं कुरु इति वाक्ययोर्जपचङ्क्रमणपदार्थौ भिन्नावभिन्नौ वा । नाद्यः; नहि गुणप्रधानभावभेदेनार्थभेदः संभवति, नहि राजसन्निधौ गुणभावमाप्नुवन् अमात्य इतरत्र प्राधान्यमाप्नुवन् भिद्यते । नान्त्यः अर्थभेदाभावे प्रतीतिभेदानुपपत्तेः, अर्थभेदस्यैव प्रतीतिभेदप्रयोजकत्वात् ।

तदुक्तम्—'अर्थेनैव विशेषो हि निराकारतया धियामि'ति इत्याशङ्क्य प्रागुक्तयोर्द्वयोरपि वाक्योरर्थप्रत्यायनाभेदेऽपि = अभिन्नार्थप्रत्यायनेऽपि शब्दवृत्तेन = शब्दस्वभावेन

नाभिधीयते, चङ्क्रमणं गुणवृत्त्या; जपश्चङ्क्रमणं कुर्वित्यत्र तु जपस्य गुणभावः, प्राधान्यं तु चङ्क्रमणस्य। अथवोभयथाऽपि जपयुक्तत्वाच्चङ्क्रमणस्यार्थभेदो न कश्चित्। शब्दप्रतिपादनवैलक्षण्यमात्रमेवावसीयत इति ॥४४७॥

एवमर्थाभेदेऽपि शब्दप्रतिपादनवैचित्र्यमुपदर्शितमिदानीं शब्दभेदात् सामर्थ्यादर्थप्रतिपत्तिवैचित्र्यं भवतीत्यत्राशाब्दमपि व्यापारं प्रदर्शयितुमाह—

**फलवन्तः क्रियाभेदाः क्रियान्तरनिबन्धनाः।**
**असंख्याताः क्रमोद्देशैरेकाख्यातनिदर्शनाः ॥४४८॥**

---

गुणप्रधानरूपतयाऽर्थाभिधानं शब्देषु संभवतीति प्रसङ्गाच्छब्दधर्मप्रतिपादनम् = शब्दस्वभावप्रतिपादन कर्तुमाह—**चङ्क्रम्यमाण इति**।

अयमर्थः—अत्र चङ्क्रम्यमाणोऽधीष्व, अत्र 'जपन् चङ्क्रमण कुरु' इति रीत्या मध्यस्थितस्यात्रेतिपदस्य काकाक्षिन्यायेन वाक्यद्वयेऽपि सबन्धः। अत्र वाक्यद्वये तादर्थ्यस्य = तदर्थबोधकत्वस्य, स एवार्थः = पूर्ववाक्योक्त एवार्थो यस्य तत्तदर्थम्, तस्य भावस्तादर्थ्यमिति विग्रहः। अविशेषेऽपि = अभेदेऽपि, यद्वा वाक्यद्वयेऽपि चङ्क्रमणे जपार्थत्वस्य तुल्यत्वेऽपि, शब्दात् = भिद्यमानात् शब्दस्वभावाद्, भेदः = गुणप्रधानभावमूलकोऽर्थभेदः प्रतीयत इति। कारिकायामधीष्वेतिपदं वृत्तानुरोधाज्जपे प्रयुक्तम्।

अयं भावः-- 'चङ्क्रम्यमाणोऽत्र जपं कुरु', अथवा 'अत्र जपन् चङ्क्रमणं कुरु' इति वाक्यद्वयेऽपि जपस्यैव विधिः प्रतीयते। चङ्क्रमणस्य जपार्थत्वात् तत्र प्रतीयमानोऽपि विधिर्जप एव पर्यवस्यतीति।

इयास्तु विशेषः-- पूर्ववाक्ये जपे विधिः शाब्दः, उत्तरत्र त्वार्थ इति। अयमप्यपरः शब्दस्वभावकृत एव विशेषः। चङ्क्रम्यमाणो जपेत्यत्र जपः प्राधान्येनाभिधीयते, चङ्क्रमणं गुणवृत्त्या, 'जपंश्चङ्क्रमणं कुरु' इत्यत्र तु जपस्य गुणभावः, प्राधान्यं तु चङ्क्रमणस्येति। यद्वा वाक्यद्वयेऽपि जपयुक्तमेव चङ्क्रमणं प्रतीयते इति नार्थभेदः किन्तु शब्दस्वभावप्रयुक्तमर्थप्रतिपादनवैलक्षण्यमात्रमेवात्र पर्यवस्यतीति ॥४४७॥

एवं वस्तुतोऽर्थाभेदेऽपि शब्दभेदात् = शब्दस्वभावात् तेनार्थप्रतिपादनस्य शाब्दस्य व्यापारस्य वैचित्र्यम्, तत्प्रयुक्तञ्च गुणप्रधानभावाभ्यामर्थप्रतिपत्तिवैचित्र्यं प्रदर्शितम्, इदानीं शब्दभेदेऽपि—अश्वमेधेन यक्ष्यन्ते राजान, सत्रमासते ब्राह्मणा इत्यादौ सत्यपि शब्दभेदे नाख्यातशब्दभेदादर्थप्रतिपत्तिवैचित्र्यम्, किन्तु शब्दभेदप्रयुक्तं यदर्थसामर्थ्यं तत्प्रयुक्तमर्थप्रतिपत्तिवैचित्र्यं भवति इत्येनमत्राशाब्दमपि व्यापारं प्रदर्शयितुं शब्दाभेदेऽपि यावज्जीवमग्निहोत्रं जुहोति तथा देवदत्तो यजते इत्यादावर्थसामर्थ्यात् क्रियाभेदा प्रतीयन्ते किमुत शब्दभेदे --यक्ष्यन्ते, आसते इत्यादावित्युपक्रमं आह-- **फलवन्त इति**।

"यावज्जीवमग्निहोत्रं जुहोति," तथा "यजते देवदत्तः" इत्यादावेकाख्यातनिदर्शनाः एकमाख्यातपदं निदर्शनं वाचकं येषां ते तथाभूताः क्रियाभेदा प्रतीयन्ते। भेदश्च स्वरूपेण फलेन च भवतीत्याह—"फलवन्तः" इति, फलभेदवन्त इत्यर्थः। स्वर्गकामः कदाचिद् यजते, कदाचिद्धस्तिकामः कदाचित्पुत्रकामो धनकामो वेति। फलभेदस्वरूपमाह— "क्रियान्तरनिबन्धनाः" इति। इतिकर्तव्यतायां क्रियान्तराणि निबन्धनं येषां ते तथाभूताः। किं च बहुना, क्रमेण प्रातिस्विकेनेतिकर्तव्यतयोद्देशेन फलस्वरूपेण च ते संख्यातुमशक्या एव, क्रियाभेदास्तेनाख्यातेनैकरूपेणाभिन्नेनैव निदर्श्यन्त इति बोद्धव्यम् ॥४४८॥

एतदेव स्फुटीकृत्य प्रतिपादयितुमाह—

**निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते।**
**श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥४४९॥**

आख्यातपदे क्रिया सर्वैव निवृत्तभेदा सामान्येनाभिधीयते, यस्माच्छ्रुतिमात्राच्छब्दमात्रात् सामान्येन श्रुताद्भेदानां प्रविभागरूपताऽवसातुमशक्या ॥४४९॥

---

अयमर्थः—याज्जीवमग्निहोत्रं जुहोति, उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति इति वाक्यद्वयेऽपि यद्यपि जुहोतिपदरूपमेकमेवाख्यातम्, सोमेन यजते, दर्शपूर्णमासाभ्यां यजेत इत्यादावपि यद्यपि यजेत इत्येकमेवाख्यातम्, तथापि तत्रैकाख्यातनिदर्शनाः=एकमेवाख्यातपदं जुहोत्यादिकं निदर्शनं वाचकं येषां क्रियाभेदानां ते तथाभूताः, क्रमोद्देशैरसख्याताः—क्रम इतिकर्तव्यतारूपः, उद्दिश्यते, अभिलष्यते इति उद्देशः फलम्, तैस्तद्भेदैरसंख्याताः=सख्यातुमशक्या अपि फलवन्त=भिन्नफलवन्तः, फलभेदप्रयुक्ता इति यावत्। क्रियान्तरनिबन्धनः, प्रधानीभूतोपात्तक्रियातोऽन्या तदुपकारिका च क्रिया इति कर्तव्यतारूपा क्रियान्तरम्, तन्निबन्धनाः=इतिकर्तव्यतारूपक्रियान्तरप्रयुक्ता इत्यर्थः। क्रियाभेदाः प्रतीयन्त इति।

अयं भावः—यद्यपि यावज्जीवमग्निहोत्रं जुहोति, मासमग्निहोत्रं जुहोति—इत्युभयत्रापि जुहोतिपदमेकमेव, तथाप्यस्त्युभयत्रापि नित्यत्वकाम्यत्वाभ्यां फलभेदः, इतिकर्तव्यताभेदश्च, तेनोभयत्रापि क्रियाभेद एव, न त्वेका क्रिया। ते च होमक्रियाभेदाः क्रमोद्देशभेदैः संख्यातुमशक्या अपि एकेनैवाख्यातपदेनाभिधीयन्ते इति सोऽयं तस्य स्वभाव इति ॥४४८॥

पूर्वपद्योक्तमेवार्थं स्फुटीकृत्य प्रतिपादयितुमाह—निवृत्तभेदा इति।

अयमर्थः—सर्वैव=सर्वाऽपि क्रिया निवृत्तभेदा=अवान्तरभेदरहितैव; आख्याते=तिङन्ते, अभिधीयते। यतःश्रुतेः=श्रुतिसामान्यात् शब्दमात्रात् श्रुतात् सामान्यार्थकाद् भेदानाम्=अवान्तरक्रियाविशेषाणाम्, प्रविभागप्रकल्पना=भेदप्रकल्पनाऽशक्या, शब्दस्य तत्रासामर्थ्यादिति ॥४४९॥

उदाहरणमाह—

**अश्वमेधेन यक्ष्यन्ते राजानः सत्रमासते ।**
**ब्राह्मणा इति नाख्यातरूपाद्भेदः प्रतीयते ॥४५०॥**

अत्र फलसाधनभेदाद् यजिक्रियायाः सत्यपि भेदे नैवाख्यातशब्दात् तत्प्रतीतिरस्ति, अर्थसामर्थ्यात्तु भेदस्तस्या अवगम्यते इति नाना शब्दधर्माः ॥४५०॥

वैदिकमप्युदाहरणमाह—

**सकृच्छ्रुता सप्तदशस्वनावृत्तापि या क्रिया ।**
**प्राजापत्येषु सामर्थ्यात् सा भेदं प्रतिपद्यते ॥४५१॥**

सप्तदश प्राजापत्यानेकवर्णानजांस्तूपरानालभेतेत्यत्रानावृत्ताप्यालम्भनक्रिया सकृच्छ्रुता शब्देनानावृत्तोनैकेनावगतोत्तरकालं त्वालभ्यभेदाद्भेदेनावतिष्ठत इति बोद्धव्यम् ॥४५१॥

---

फलसाधनभेदात् = फलेतिकर्तव्यताभेदात् सत्यपि यजिक्रियाणां परस्परं भेदे नासौ प्रयुक्तोऽसम्भवात्, किन्त्वर्थसामर्थ्यप्रयुक्तः, एवं सत्यपि शब्दभेदे यजिक्रियायाः क्रियातो भेदोऽर्थसामर्थ्यप्रयुक्त एव, नाख्यातशब्दभेदप्रयुक्तः, शब्दभेदाभावेऽपि क्रियाणां परस्पर भेदस्य दृष्टत्वेन व्यतिरेकव्यभिचारात् इत्येव नाना शब्दधर्माः = शब्दस्वभावाः, क्वचिच्छब्दभेदेनार्थभेदः, क्वचित् शब्दभेदाभावेऽप्यर्थभेद इति । एतदुदाहरण—**अश्वमेधेनेति** ।

अयमर्थः—राजानोऽश्वमेधेन यक्ष्यन्ते, ब्राह्मणाः सत्रमासते इत्यादौ वाक्यद्वये यद्यपि आख्यातशब्दभेदे नाख्यातरूपाद् भिद्यमानाद् भेदः = क्रियारूपार्थभेदः प्रतीयते, किन्त्वर्थसामर्थ्यात् स प्रतीयते प्रागुक्तहेतोरिति ॥४५०॥

शब्दाभेदेऽप्यर्थसामर्थ्यात् क्रियाभेद इत्यस्य वैदिकमप्युदाहरणमाह—**सकृदिति** ।

अयमर्थः—सप्तदश प्राजापत्यान् = प्रजापतिदैवतान एकवर्णान् अजान् तूपरान् ( तूपरः—कालेऽजातशृङ्गोऽजः ) । यद्यप्यमरकोशे—"अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ" इति कालेऽजातशृङ्गे गवि तूबरशब्द उपलभ्यते, तथापि वेदे तद्भाष्ये च तूपरशब्दः कालेऽप्यजातशृङ्गेऽजे प्रयुक्त उपलभ्यते । तथा च मन्त्रवर्णः—"अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो ररारटे" इत्यादिः ( शुक्लयजुः २४ अ०, १ कण्डिका ) ।

महीधरभाष्ये—तूपरः = शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः । आलभेतेत्यत्र सकृच्छ्रुता = अनावृत्तेनैकेनालभेतेति पदेनावगता, अनावृत्ताऽपि = तन्त्रैकशेषान्यतरेणोच्चारण इवावृत्तिरहिताऽपि याऽऽलम्भनक्रिया सा उत्तरकालं तु सामर्थ्यात् = आलभ्यपशुभेदसामर्थ्याद् भेदं प्रतिपद्यते = भेदेनावतिष्ठते इति ॥ ४५१ ॥

यस्माच्चाख्यातान्तर्गतो धातुर्निवृत्तभेदाया एव क्रियायाः प्रतिपादकः तस्माद् भेदासम्भवाद् यथासंख्येन सम्बन्धानुपपत्तेर्भुजिक्रिया देवदत्तादिषु प्रत्येकमवतिष्ठत इत्याह—

**देवदत्तादिषु भुजिः प्रत्येकमवतिष्ठते।**
**प्रतिस्वतन्त्रं वाक्यं वा भेदो न प्रविभज्यते ॥४५२॥**

देवदत्तादिकर्तृका भुजिर्वाक्यार्थरूपाऽत्र प्रत्येकमवतिष्ठत इत्यर्थसमाप्तिदर्शनं शब्दस्य समाप्तिमप्युपदर्शयितुमुक्तम् 'प्रतिस्वतन्त्रम्" इत्यादि। वाक्यमेवात्र प्रत्येकं देवदत्तादिषु भेदेनावतिष्ठत इति बोद्धव्यम् ॥४५२॥

ननु देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यभेदरूपमेव वाक्यं प्रयुक्तम्, अतः कथमस्माद् भेदेनावसायः स्यादित्याह—

**उच्चारणे तु वाक्यानामन्यद्रूपं निगृह्यते।**
**प्रतिपत्तौ तु भिन्नानामन्यद्रूपं प्रतीयते ॥४५३॥**

शब्दानामन्यथोच्चारणसमये स्वरूपवृत्तिः प्रतिपत्त्यवसरे त्वन्यथैव स्वरूपावसाय इति सत्यप्याख्यातस्याभेदेऽर्थपर्यालोचनेनात्र प्रत्येकं समाप्तिर्वाक्यवाक्यार्थयोः पर्यवस्यतीत्युच्यते ॥४५३॥

---

"निवृत्तभेदा सर्वैव" (४४६) इति पद्ये आख्यातान्तर्गतो धातुर्निवृत्तभेदाया एव क्रियायाः प्रतिपादक इत्युक्तम्, ततश्चाख्याते क्रियाभेदासंभवेन = देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादौ देवदत्तादिषु यथासंख्येन सम्बन्धानुपपत्तेर्भुजिक्रिया, तेषु प्रत्येकमवतिष्ठते इत्याह—देवदत्तादिष्विति।

अयमर्थः—देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादौ देवदत्तादिकर्तृका भुजिवाक्यार्थरूपाऽत्र प्रत्येकमवतिष्ठते इति पूर्वार्धेन प्रत्येकं वाक्यार्थपरिसमाप्तिरिति पक्षो दर्शितः। वा = अथवा वाक्यमेव—भोज्यते इति—आवृत्त्या प्रतिस्वतन्त्रम् = प्रतिकर्तृ, भेदेनावतिष्ठत इति प्रत्येकं वाक्यपरिसमाप्तिरिति पक्षो दर्शितः। एवं पक्षद्वयेऽपि भेदः = क्रियाभेदः—न प्रविभज्यते = भोज्यते इत्याख्यातेन न प्रत्येकं प्रविभज्य बोध्यत इति ॥ ४५२ ॥

ननु देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादावभेदरूपमेव = एकमेव वाक्यं प्रयुक्तमुपलभ्यते, अतः कथमस्मात् वाक्यार्थभेदेन वाक्यभेदेन वा प्रत्येकं वाक्यार्थावसायः स्यादित्याशङ्क्याह—उच्चारणे इति।

अयमर्थः—उच्चारणे तु = उच्चारणावसरे तु, वाक्यानाम् = क्रियापदानाम्, अन्यद्रूपम् = अभिन्नं रूपम्, क्रियासामान्यार्थबोधकम्, निगृह्यते = निगृह्योच्चार्यते। क्रियासामान्ये क्रियाविशेषान् निलीनीकृत्योच्चार्यते इति यावत्। प्रतिपत्तौ तु = वाक्यार्थप्रतिपत्त्यवसरे तु, भिन्नाना वाक्यानामन्यद्रूपम् = भिन्नमेव रूपम् प्रतीयत इति।

शास्त्रविषयमप्येतदेव प्रदर्शयितुमाह -

**एकं ग्रहणकं वाक्यं सामान्येनाभिधीयते ।**
**कर्तरीति यथा तच्च पश्वादिषु विभज्यते ।।४५४।।**

शास्त्रेऽपि च कर्तरि कृदित्येकं प्रत्ययार्थप्रतिपादकं सामान्येन ग्रहणकवाक्यमुपादीयते, तच्च प्रत्येकं प्रत्ययार्थोपाधिषु पश्वादिषु विभिन्नेषु विषयेषु विभागेन सम्बन्धमुपनीयाभिमतलक्ष्यनिष्पत्तये व्यापार्यत इति प्रत्येकमेव तत्परिसमाप्यते ।।४५४।।

यदि पुनः संयुक्तविधिर्नोपादीयेत तदाऽभिमतसिद्धये न स्यादित्याह—

**यद्याकाङ्क्षा निवर्तेत तद्भूतस्य सकृच्छ्रुतौ ।**
**नैवान्येनाभिसम्बन्धं तदुपेयात् कथञ्चन ।।४५५।।**

---

अयं भावः—यथाऽक्षा भज्यन्ताम्, भुज्यन्ताम्, दीव्यन्तामित्यादावक्षपदस्यैकस्य वक्त्रा तन्त्रेणैकशेषेण वोच्चारणम्, बोद्धुस्त्वावृत्त्या बोध इति स्थितिः । एवमेव--देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादावेकमेव वाक्यं क्रियासामान्यबोधक वक्त्रा तन्त्रेणोच्चार्यते वाक्यार्थप्रतिपत्त्यवसरे, प्रतिपत्तुस्तु क्रियापदावृत्त्या भिन्नवाक्यवाक्यार्थावसाय इति सत्यप्युच्चारणावसरे आख्यातस्याभेदे वाक्यार्थपर्यालोचनसामर्थ्यादेव वाक्यवाक्यार्थयोः प्रत्येकं समाप्तिः पर्यवस्यतीति ।। ४५३ ।।

शास्त्रेऽप्येकमेव ग्रहणकम् =विशेषाणां सग्राहकं वाक्यं, सामान्येनाभिधीयते, वाक्यार्थप्रतिपत्त्यवसरे तु विशेषार्थावसायेन वाक्यभेद इत्येतदेव प्रदर्शयितुमाह— **एकमिति** ।

अयमर्थः—कर्तरि कृदित्येकं सर्वेषां कृत्प्रत्ययानां कर्तृसामान्यरूपार्थप्रतिपादकं ग्रहणकम्, सर्वेषां कृत्प्रत्ययविशेषाणां कर्तृरूपार्थविशेषाणां च संग्राहकं वाक्यं सामान्येनाभिधीयते, यथा कर्तरीति=यथा कर्तरि कृदिति । तच्च सामान्येनाभिहितमप्येकं वाक्यं पश्वादिषु विभज्यते-- 'हरतेर्दृतिनाथयोः पशौ', स्तम्बकर्णयो रमिजपोः', हस्तिसूचकयोरिति वक्तव्यम्, इत्यादौ प्रत्ययार्थकर्त्रुपाधिषु पशुहस्तिसूचकादिषु विभिन्नेषु कर्तृरूपेषु विषयेष्ववाच्येष्वपि तादृशप्रकृतिप्रत्ययविशेषसमभिव्याहारमहिम्ना प्रतीयमानेषु सत्सु तेषु प्रत्येकं कर्तरीत्यस्य विभागेन संबन्धमुपनीय पशावेव दृतिहरिरित्यभिमतलक्ष्यसिद्धये प्रत्येकमेव व्यापार्यते इत्येवं तत्र प्रत्येकमेव तद्वाक्यं परिसमाप्यत इति । अत एव प्रतिलक्ष्यं लक्षणोपप्लव इति वैयाकरणवृद्धाः । उपाधिः—अवाच्योऽपि शब्दसमभिव्याहारमहिम्ना प्रतीयमानः विशेषणं तु वाच्यत्वेन प्रतीयमानं भवतीति व्याकरणशास्त्रे उपाधिविशेषणयोर्भेदः । तद् यथा—चित्रा गावो यस्य सन्ति स चित्रगुरित्यत्रास्त्यर्थः समासोपाधिः, न तु समासार्थ इत्यवधेयम् ।। ४५४ ।।

यदि सकृदेव प्रत्ययविधायकेनैव स बोपादायार्थपरिसमाप्तेराकाङ्क्षा निवार्येत, तदा तद्योगेन तत्रैव परिक्षीणशक्तित्वाद् ग्रहणकवाक्यताविरहादन्येन प्रत्ययविधायकेन सम्बन्धे (न्धं)नैवोपेयादित्यभिमतलक्ष्यानिष्पत्तिरेव ॥४५५॥

तस्मादेतदुपनिबन्धनभूतं सामान्येनासंयुक्तं विधिनैवोपात्तं सकृद्ग्रहण(क)-वाक्यं सद्विभागवाक्यानामवान्तरवाक्यानां योनिः कारणं बोद्धव्यमित्याह—

**एकरूपमनेकार्थं तस्मादुपनिबन्धनम् ।**
**योनिर्विभागवाक्यानां तेभ्योऽनन्यदिव स्थितम् ॥४५६॥**

अनेकेऽर्थाः प्रत्याय्या यस्य तत्तथा अवान्तरवाक्यान्युपनिबध्यन्तेऽस्मिन्नि-त्युपनिबन्धनम्। अथ तेभ्योऽनन्यदिवाभिन्नमिव स्थितम्। अथ च प्रत्येकं भेदेन सम्बन्धमुपगत्य यथावल्लक्ष्यसिद्धये विभवतीति ॥४५६॥

---

यदि पुनः कर्तरि कृदिति ग्रहणकमेकं वाक्यं विशेषविधिभिः प्रत्येकं वाक्यभेदेन न संबध्येत, किन्तु सामान्यविधिना संयुक्त एवोपादीयेत, स्वतन्त्रमेव सामान्येन कर्तृरूपप्रत्ययार्थ-विधायकं स्यात्, तदा इतिहरिः पशुरित्यभिमतसिद्धये न स्यात्, पशोरन्यत्रापि कर्तरि इतिहरिरिति प्रयोगप्रसङ्गादित्याह—यद्याकाङ्क्षेति।

अयमर्थः—यदि तद्भूतस्य = त सामान्यविधि भूतस्य = प्राप्तस्य सामान्येन विधाय-कस्येति यावत्। अत्र तच्छब्दो बुद्धिविषयार्थवाचकः। भूधातुश्च प्राप्तौ। कर्तरि कृदिति सूत्रस्य कृत्प्रत्ययानुवादेन कर्तृसामान्यरूपार्थविधायकत्वेन सकृच्छ्रुतौ = सकृत् श्रवण एव आकाङ्क्षा = विध्यन्तराकाङ्क्षा निवर्तेत, तदा तत् = कर्तरि कृदिति वाक्यम्—अन्येन = विशेषविधिभिः सह अभिसंबन्धं कथञ्चन = कथमपि नैवोपेयादिति इतिहरिः पशुरित्याद्य भिमतलक्ष्यासिद्धिरेवेति।

पुण्यराजमते त्वन्या व्याख्या—तद्भूतस्य = तं य कञ्चन विशेषविधिंभूतस्यैकवा-क्यतया प्राप्तस्य कर्तरि कृदिति सामान्यवाक्यस्य तेन सहैकवाक्यतया वाक्यार्थबोधजननात् सकृच्छ्रुतौ = तेन विशेषविधिना सहैव सकृच्छ्रुतौ यद्याकाङ्क्षा निवर्तेत तदाऽन्येन विशेष-विधिना सह कथमपि संबन्धं नैवोपेयात्, तत्संबन्धेनैव परिक्षीणशक्तिकत्वाद् ग्रहणकवाक्य-त्वाभावाच्चेत्येवमभिमतलक्ष्यासिद्धिरेवेति ॥ ४५५ ॥

यदि कर्तरि कृदिति वाक्यं सामान्येनैव स्वतन्त्रो विधिः स्यात्, केनचिद् विशेष-विधिना सहैकवाक्यतामनुभूय वा विधिः स्यात् तदाऽन्येन विधिना सहाभिसंबन्धं नोपेयात्, तस्माद् यदेतद् विभागवाक्यानामवान्तरवाक्यानामुपनिबन्धनभूतम् = उपन्यासाधिकरण-भूतम्, कर्तरि कृदिति वाक्यं तत्प्रकारद्वयेनाऽपि प्रागुक्तेन विधिनाऽसंयुक्तमेव सामान्ये-नोपात्तं सद् विभागवाक्यानां योनिः कारणं बोद्धव्यमित्याह—एकरूपमिति।

अयमर्थः—तस्मात् = प्रागुक्तपद्योक्तहेतोः, एकरूपम् = सामान्येनोपात्तत्वादेकरूप-मपि कर्तरि कृदिति वाक्यम्, अनेकार्थम् = अनेकेऽर्था यस्य तदनेकार्थम्, उपनिबन्धनम् = विभागवाक्यानि = अवान्तरवाक्यान्युपनिबध्यन्तेऽस्मिन्नित्युपनिबन्धनम्, विभागवाक्यानां

अथाख्याते धातुवाच्याऽसत्त्वभूता पूर्वापरीभूतावयवा साध्यमानावस्था क्षणप्रचयात्मिका या क्रिया तस्याः कीदृशो जातिव्यक्तिव्यवहार समाश्रीयत इत्याह—

**क्वचित् क्रिया व्यक्तिभागैरुपकारे प्रवर्त्तते।**
**सामान्यभाग एवास्याः क्वचिदर्थस्य साधकः ॥४५७।**

"क्वचित्" इति बाधविकल्पसमुच्चयातिशयप्रशंसादौ विषये क्रिया व्यक्तिभागैः समीहितार्थसिद्धौ प्रवर्त्तते, जातिसमाश्रयेण विकल्पसमुच्चयाद्यनुपपत्तेः। न हि देवदत्त पचति, यज्ञदत्तः पचतीत्यादौ जातेः समुच्चयादिरुपपद्यते। क्वचित्तु यजते पचत इत्यादौ देशकालसाधनादे (रनुपन्यासेनै) कव्यक्तिव्यवहारोऽवास्तवः स्यादिति संवृत्त्या लोकव्यवहारसिद्धये तत्र क्वचित्क्रियापरामर्शात् सामान्यभाग एव वाक्यार्थमुपकरोति ॥४५७॥

---

योनिः, मृदिव घटादेरुपादानकारणम्। अथ च तेभ्योऽनन्यदिव = अभिन्नमिव स्थितम्, नत्वभिन्नम्। तेन च प्रत्येकं विधिवाक्यैः सह भेदेन संबन्धमुपगत्य यथावल्लक्ष्यसिद्धये प्रभवतीति ॥४५६॥

अथाख्याते या धातुवाच्याऽसत्त्वभूता = लिङ्गसंख्याद्यनन्विताऽद्रव्यस्वभावा पूर्वापरीभूतावयवा = अवान्तरव्यापारसमूहरूपा, साध्यमानावस्था, क्षणप्रचयात्मिका = क्षणप्रचयवर्तिविग्रहा क्रिया तस्या जातिव्यक्तिरूपाभ्यां कीदृशो व्यवहारः समाश्रीयते लोके इति विवेकेन दर्शयितुमाह—**क्वचिदिति**।

अयमर्थः—क्रिया = पचत्यादिरूपा क्वचित —अत्रेदानीं देवदत्तस्तण्डुलं स्तोकं पचतीत्यादौ देशकालसाधनक्रियाविशेषणादिसमुपन्यासे, मा एवं पच, न पचेति वा बाधे, पच वा गच्छ वेति विकल्पे, चैत्रः पचति, स्तौति चेति समुच्चये, चैत्रः शाकं पचतितरामित्यतिशये, साधु पचतीति प्रशंसायाम् एवंविधेषु विषयेषु च व्यक्तिभागैः = व्यक्तिरूपैभागैः, उपकारे = बाधादिरूपाणा समाहितार्थाना सिद्धौ व्यवहारोपकारे प्रवर्तते, जातिसमाश्रयणेन विकल्पसमुच्चयाद्यनुपपत्तेः। न हि दवदत्तः पचति, यज्ञदत्तः पचतीत्यादौ जातेः समुच्चयादिरुपपद्यते, जातेर्नित्यायाः साधनादिसबन्धासभवात्। क्वचित् = क्वचित्तु यजते पचति इत्यादौ देशकालसाधनादेरनुपन्यासे अस्याः = क्रियायाः सामान्यभाग एव, अर्थस्य = वाक्यार्थस्य साधकः = उपकारकः।

अयं भावः—सवृत्या लोकव्यवहारसिद्धये = संव्रियते वस्तुस्वरूपं यया सा संवृतिरविद्या, तया = तद्विषयीभूतया क्रियागतया जात्या लोके क्रियासामान्यव्यवहारसिद्धये तत्र क्वचित् क्रिया परामर्शात् क्रियायाः सामान्यभाग एव वाक्यार्थमुपकरोतीति सांवृतिक एव तत्र क्रियाविषयको लोकव्यवहारः देशकालसाधनादेरुपन्यासे त्वेकव्यक्तिव्यवहारो वास्तवः स्यात्, न चात्र सोऽस्तीति ॥ ४५७ ॥

इहापि जातिभागमेव क्रियासम्बन्धिनं शब्दाः प्रत्याययन्तीत्याह—

**कालभिन्नाश्च भेदा ये ये चाप्युष्ट्रासिकादिषु ।**
**प्रक्रमे जातिभागस्य शब्दात्मा तैर्न भिद्यते ॥४५८॥**

ये क्रियाभेदाः क्रियाविशेषाः कालभिन्नाः पचत्यपाक्षीत्पक्ष्यतीत्येवमादयो ये चाप्युष्ट्रासिकादिषु विषये साधनभिन्ना उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते इत्यादौ तेषु क्रियासम्बन्धतो जातिभागस्य प्रक्रमे सामान्येनैवापर्यालोचित-देशकालसाधनतया प्रक्रमे च शब्दात्मा शब्दस्वरूपं न भिद्यते साधनसम्बन्ध-कृतस्तत्र भेदो न प्रथत इति यावत् ॥४५८॥

तदेवं "देवदत्तादिषु भुजिः प्रत्येकमवतिष्ठते" इत्यादिना शब्दलक्षणभेदमाश्रि-त्यैका क्रियाऽनेकैः साधनैः प्रत्येकमर्थसमाप्त्या वाक्यसम्बन्धमुपयातीति प्रदर्शितम् । इदानीं यत्र विजातीया विभिन्नपदवाच्या क्रिया, एकशब्दवाच्यानि च साधनानि तत्र कथं भिन्नाभिः क्रियाभिस्तेषां साधनानां सम्बन्धः स्यादित्याशङ्क्य तत्रापि प्रति-पत्तिकालसमाश्रयणेन भिन्नान्येव साधनान्यवगतानीति तथैवैताः क्रियास्तैर्भिन्नैरेव साधनैः प्रत्येकमर्थसमाप्त्या वाक्यसम्बन्धमुपयान्तीति प्रतिपादयितुमाह—

**एकसंख्येषु भेदेषु भिन्ना जात्यादिभिः क्रियाः ।**
**भेदेन विनियुज्यन्ते तच्छब्दस्य सकृच्छ्रुतौ ॥४५९॥**

---

अथ ये कालभिन्नाः साधनभिन्नाश्च क्रियाभेदास्तेष्वपि जातिभागमेव क्रियासंबन्धिन-माख्यातशब्दाः प्रत्याययन्ति, न तु व्यक्तिभागमित्याह—कालभिन्नाश्चेति ।

अयमर्थः-ये भेदाः = क्रियाभेदाः—क्रियाविशेषाः, कालभिन्नाः = कालभेदप्रयुक्तभेद-वन्तः, पचत्यपाक्षीत् पक्ष्यतीत्यादौ, ये चाप्युष्ट्रासिकादिषु शब्देषु विषयभूताः साधनभेदभिन्नाः क्रियाविशेषा उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते ( उष्ट्रकर्तृकासनानीव आसनानि, हतकर्तृकशयनानीव शयनानि ) इत्यादौ, तेषु वाक्यार्थे क्रियामात्रसम्बन्धतो जातिभागस्य प्रक्रमे = उपक्रमे प्रतीतौ, अपर्यालोचितदेशकालसाधनतया सामान्येनैव क्रियायाः प्रक्रमे च, तैः = क्रियाविशेषैः, तद्बोधनाय शब्दात्मा = शब्दस्वरूपम् , न भिद्यते = साधनसंबन्ध-कृतस्तत्र भेदो न प्रथत इति यावत् ॥ ४५८ ॥

तदेवं देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादौ—"देवदत्तादिषु भुजिः प्रत्येकमव-तिष्ठते" इत्यादिना साधनशब्दभेदप्रयुक्तस्वभेदमाश्रित्य एकशब्दोपात्तत्वेनैकजातीयत्वेन चैकापि क्रियाऽनेकैः साधनैः प्रत्येक वाक्यार्थसमाप्त्या वाक्यसंबन्धमुपयातीति प्रदर्शितम् ।

इदानीं यत्र—अक्षा भज्यन्तां भुज्यन्ता दीव्यन्तामित्यादौ विजातीया विभिन्नपद-वाच्या च क्रिया, साधनानि त्वेकशब्दोपात्तानि, तत्र कथ भिन्नाभि. क्रियाभिः साकं तेषाम् =

सामानसंख्येषु भेदेषु साधनविशेषेषु तेषु "जात्यादिभिः" इति। जात्या आदिग्रहणादितिकर्त्तव्यतादिभिश्च याः क्रिया भिन्ना असम्बद्धा उपात्तास्ताः साधनाभिधायिनः शब्दस्य सकृदभेदेन श्रुतावपि प्रतिपत्तिभेदसमाश्रयणेन भेदेनैव विनियुज्यन्ते सम्बन्धमुपगच्छन्तीति बोद्धव्यम् ॥४५९॥

उदाहरणमाह—

**अक्षादिषु यथा भिन्ना भञ्जिभक्षिदिविक्रियाः।**
**प्रयोगकालाभेदेऽपि प्रतिभेदं पृथक् स्थिताः ॥ ४६० ॥**

अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामिति या भिन्नजातिका भिन्नशब्दवाच्याश्च क्रिया यास्ता वाक्यभेदोपादानरहिता अपि प्रत्येकं समाप्त्या भेदेनैव स्थिता इति। यस्मादन्यसाधनानि तत्र निबद्धानि भेदेनैवोपात्तानीति प्रतिपत्तिवेलायां भेदेनैव क्रिया यथास्वं सम्बन्धमुपयान्तीति ॥ ४६० ॥

---

एकशब्दोपात्तानाम्, साधनानां संबन्धः स्यात्, साधनशब्दभेदाभावात्। शब्दानां परस्पर-सम्बन्धपूर्वको ह्यर्थानां परस्परं संबन्ध इति नियमादित्याशङ्क्य तत्रापि वक्तुराम्रेडितोच्चारणम्, बोद्धुस्त्वावृत्त्या बोध इति नियमस्थित्या प्रतिपत्तिविषयशब्दभेदेन प्रतिपत्तिभेदप्रयुक्तस्वभेद-समाश्रयणे स्वप्रतिपत्तिकालनिष्ठभेदप्रयुक्तस्वभेदसमाश्रयणेन च भिन्नान्येव साधनान्यवगता-नीति भिन्नशब्दोपात्ता अप्येताः क्रियास्तथैव = प्रागुदाहृतभुजिक्रियावदेव तैर्भिन्नैरेव साधनैः सह प्रत्येकं वाक्यार्थसमाप्त्या वाक्यसंबन्धमुपयान्तीति प्रतिपादयितुमाह— **एकसंख्येष्विति।**

अयमर्थः—अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादावेकसंख्येषु = समानसंख्येषु— प्रत्येकं बहुसंख्येषु इति यावत्। अन्यथा साधनेषु प्रत्येकमेकत्वे क्रियाभेदेषु बहुवचनं न स्यात्। भेदेषु = साधनविशेषेषु एकशब्दोपात्तेषु, जात्यादिभिर्भिन्नाः = जातिदेशकालेति-कर्तव्यतादिभिर्भिन्नाः परस्परमसंबद्धाः, उपात्ताः, भिन्नशब्दोपात्ताश्च क्रियास्तच्छब्दस्य सकृच्छ्रुतौ—तस्य साधनाभिधायिनः शब्दस्य, सकृच्छ्रुतौ = सकृदभेदेन श्रुतावपि, तन्त्रा-वृत्ती अनुसृत्य प्रतिपत्तिविषयशब्दभेदसमाश्रयणेन, प्रतिपत्तिभेदप्रयुक्तभेदसमाश्रयणेन, प्रतिपत्तिकालनिष्ठभेदप्रयुक्तभेदसमाश्रयणेन च भेदेनैव विनियुज्यन्ते = साधनैः सह सम्बन्ध-मुपगम्यन्ते, तत एव च तैः संबन्धमुपगच्छन्ति चेति बोद्धव्यमिति ॥ ४५९ ॥

पूर्वपद्यार्थस्योदाहरणमाह—**अक्षादिष्विति।**

अयमर्थः—यथा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादौ अक्षादिष्वेकशब्दो-पात्तेषु साधनेषु सत्स्वपि भिन्नाः = भिन्नजातीया भिन्नशब्दवाच्याश्च क्रियाः साधनभेदप्रयुक्त-वाक्यभेदोपादानरहिता अपि, प्रयोगकालाभेदेऽपि = प्रयोगकालाभेदे शब्दाभेदेऽपि च, यद्वा प्रयोगाभेदे कालाभेदेऽपि—अत्र प्रयोगकालाभेदे इत्युक्त्या न कालभेदप्रयुक्तस्यापि शब्दभेदस्यात्र संभव इति प्रदर्शितम्। प्रतिभेदं पृथक् स्थिताः = प्रत्येकं वाक्यपरिसमाप्त्या प्रतिभेदं प्रतिविशेषं प्रत्येकमिति यावत्। पृथक् स्थिताः भेदेनैव स्थिता इति।

तन्त्रन्यायप्रतिपादनपूर्वकमभिधातुमाह--

**अक्षाणां तन्त्रिणां तन्त्रमुपायस्तुल्यरूपता ।**
**एषां क्रमो विभक्तानां तन्निबद्धा सकृच्छ्रुतिः ॥ ४६१ ॥**

तुल्यरूपतेत्यनेन तन्त्रं व्याचष्टे । युक्तं चैतत् । यस्माच्छब्दाः क्रमेण विभागेनैव कदाचित् प्रयुज्यन्ते कदाचित्तान्त्रन्यायसमाश्रयणेन युगपदेवेति शब्दानां प्रयोगवेलायां क्रमयौगपद्ये उपायस्तदत्र तन्त्रेण युगपदेव भिन्नाः प्रयुक्ता अक्षा इति क्रियाभेदेनैवैषां सम्बन्धं गच्छन्ति ॥ ४६१ ॥

अथ क्रमयौगपद्यस्वरूपमत्रोद्दिश्य व्याख्यातुमाह—

**द्वावभ्युपायौ शब्दानां प्रयोगे समवस्थितौ ।**
**क्रमो वा यौगपद्यं वा यौ लोको नातिवर्त्तते ॥ ४६२ ॥**

---

अयं भावः—यस्माद् अक्षा भज्यन्तामित्यादौ सर्वाणि साधनान्येकशब्दोपात्तान्यपि तत्र तन्त्रादिना निबद्धानि भेदेनैवोपात्तानि, तस्मात् प्रतिपत्तिवेलायां क्रियास्तेषु प्रत्येकं यथा स्वं संबन्धमनुभवन्तीति ॥ ४६० ॥

अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादौ तन्त्रावृत्ती आश्रित्य प्रयोगकालाभेदेऽपि प्रत्येकं साधनेषु वाक्यपरिसमाप्तिरिति तन्त्रन्यायप्रतिपादनपूर्वकमभिधातुमाह—**अक्षाणामिति।**

अयमर्थः—अक्षा भज्यन्तामित्यादिवाक्येऽक्षाणाम् = रथाक्षविभीतकाक्षविदेवनाक्षाणाम्, तन्त्रिणाम् = अनेकेषामर्थानां सकृदुच्चरितेन शब्देन युगपत्प्रतिपादनं तन्त्रम्, तद्वतां तद्विषयाणामित्यर्थः तुल्यरूपता = शब्दानां तुल्यरूपतारूपं तन्त्रमुपायः, तन्त्रिणामक्षाणां यौगपद्येन प्रतिपादने उपायः । विभक्तानाम् = अक्षा भज्यन्ताम्, अक्षा भुज्यन्ताम्, अक्षा दीव्यन्ताम् इत्यादौ विभागेन भेदेन प्रतिपादितानाम् एषाम् = अक्षाणाम्, भेदेन प्रतिपादने क्रमः = शब्दानां क्रमः—क्रमेण पूर्वोदाहृतेनोच्चारणम् उपायः, सकृच्छ्रुतिः = अक्षशब्दस्य युगपत्प्रयोगफलभूता तस्य सकृच्छ्रुतिस्तन्त्ररूपा तु तन्त्रिबद्धा = तन्त्रिभिस्तन्त्रविषयैरक्षैः संबद्धा, अक्षशब्दस्य युगपत्प्रयोगेऽक्षाणां भेदेन प्रतीतौ तेषां प्रत्येकं वाक्यपरिसमाप्तौ च तन्त्रमुपाय इति यावत् ।

अयं भावः—शब्दाः - कदाचित् अक्षा भज्यन्ताम्—अक्षा भुज्यन्ताम्, अक्षा दीव्यन्तामित्येवं क्रमेण विभागेनैव प्रयुज्यन्ते, विवक्षावशात् । कदाचित्तु तन्त्रन्यायमनुसृत्य—अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामिति युगपदेवेति शब्दानां प्रयोगवेलायां क्रमयौगपद्येऽर्थानां भेदेन प्रतिपादने उपायः, एवञ्चात्र तन्त्रेण युगपदेव भिन्ना अक्षाः प्रयुक्ता इति क्रिया भक्षिभञ्ज्यादिरूपा भेदेनैवैषां संबन्धमनुभवन्तीति ॥ ४६१ ॥

अथ क्रमयौगपद्यस्वरूपे अग्रे व्याख्यातुमत्र तयोः स्वरूपं प्रागुद्दिशति—**द्वावभ्युपायाविति।**

तत्र--

क्रमे विभिद्यते रूपं यौगपद्ये न भिद्यते ।
क्रिया तु यौगपद्येऽपि क्रमरूपानुपातिनी ॥ ४६३ ॥

रूपविभागेनैव क्रमः, साधारण्येन यौगपद्यं तत्र भिन्नाक्रिया यौगपद्येति (पि) शब्दानां प्रयोगे क्रमरूपमेवानुपततीत्यर्थतथाभावात्क्रमरूपानुपातिन्येव बोद्धव्येति प्रतिपादयितुमाह—क्रियेति । तथा च शकटाक्षस्यैव भञ्जनं न विभीतकदेवनाक्षयोः, तथा विभीतकाक्षस्यैव भक्षणं नेतरयोः, देवनाक्षस्यैव देवनं न पूर्वयोरित्यर्थतथाभावाद्यौगपद्येऽपि क्रमानुपातिन्येवासाविति । ततश्च ते क्रमयौगपद्ये भेदसंसर्गशक्तिरूपे शब्दव्यापाररूपे अपि शब्देभ्यो भिन्ने इव व्यतिरिक्ते इव स्थिते लक्ष्येते ॥ ४६३ ॥

परमार्थतस्तु शब्दशक्ती एव क्रमयौगपद्ये इत्यभिधातुमाह—

भेदसंसर्गशक्ती द्वे शब्दाद्भिन्ने इव स्थिते ।
यौगपद्येऽप्यनेकेन प्रयोगे भिद्यते श्रुतिः ॥ ४६४ ॥

---

नाममात्रेण वस्तुसंकीर्तनमुद्देशः । अयमत्र पदार्थः—भेदेनार्थानां प्रतिपत्तिफले शब्दानां प्रयोगे क्रमो वा यौगपद्यं वेति द्वावभ्युपायौ समवस्थितौ यौ लोकोऽतिरिक्तमुपायमाश्रित्य नातिवर्तते इति । तत्र तौ द्वावेवोपायाविति भावः ॥ ४६२ ॥

तत्र क्रमयौगपद्याभ्यां शब्दानां प्रयोगे तयोर्विशेषमाह—क्रमे इति ।

अयमर्थः—क्रमे = शब्दानां क्रमेण प्रयोगे, तेषां रूपम् = स्वरूपम्, विभिद्यते = विशेषेण भिन्नमनुभूयते, योगपद्ये = यौगपद्येन तेषां प्रयोगे तु तेषां रूपं न भिद्यते = न भिन्नतयाऽनुभूयते । एवमपि तत्र साधनशब्दानां यौगपद्येन प्रयोगेऽपि भिन्नाः—क्रियाः साधनानां क्रमरूपमेवानुपतन्तीत्यर्थतथाभावात् = वस्तुस्वभावात्, तत्रापि क्रमरूपानुपातिन्य एव क्रिया बोद्धव्या इति । इममेव पूर्वार्धे निगूढमर्थं विशदीकर्तुमाह—क्रिया त्विति ।

अयमर्थः - यौगपद्येऽप्यक्षाणां युगपत्प्रयोगेऽपि, क्रियात्वर्थतथाभावात् = वस्तुस्वभावात्, क्रमरूपानुपातिनी = भिन्नानां शब्दानामर्थानां च यत् क्रमरूपम् = क्रमेण प्रतीयमानं रूपं तदनुसारिण्येव । तथा च शकटाक्षस्यैव भञ्जनं न विभीतकाक्षदेवनाक्षयोः, तथा विभीतकाक्षस्यैव भक्षणम्, नेतरयोः; देवनाक्षस्यैव देवनम्, न पूर्वयोरिति ॥ ४६३ ॥

अथ ते क्रमयौगपद्ये द्वे शब्दस्य भेदसंसर्गशक्तिरूपे, यतोऽक्षशब्दमेदेनाक्षपदार्थाना भेदेन भानम् भेदशक्तिमहिम्ना = अनेकेषामक्षपदार्थाना चैकस्मिन् अक्षशब्दे संसृष्टतया भानं संसर्गशक्तिबलेनेति, एवं शब्दस्य भेदसंसर्गशक्तिरूपतया शब्दव्यापाररूपत्वेन च शक्ति-

किन्तर्हि, शब्दस्यैवैते द्वे शक्ती, यद्भेदशक्त्या क्रमेणावभाति, संसर्गशक्त्या तु युगपदिति । नन्वेवं भेदप्रयोगेऽनेकेन क्रियापदेन सम्बन्धाद्भिद्यत एव साधारण्याद् यौगपद्यक्रमस्वरूपयोर्भेदात् कथं युगपत्प्रयोगे क्रमरूपानुपातित्वमेव क्रियायाः श्रुतेरुक्तमित्याह–यौगपद्य इति । यौगपद्येऽपि साधनस्य प्रयोगे भेदेन क्रियापदसम्बन्धाद्भिद्यत एव साधारणी श्रुतिरिति, तन्त्रे हि सा भिन्नैवोपात्तेत्यर्थः ॥ ४६४ ॥

अथवा अक्षा इत्यत्रोद्भूतावयवभेदः समुदाय एव प्रतिनिर्दिश्यते, तत्रावयवधर्मेण समुदायो व्यपदिश्यते इत्येवं भेदमुपपाद्य यथायोगं प्रत्येकमर्थसमाप्त्या वा क्रियाणां भिन्नानां विनियोगः क्रियत इत्याह—

**अभिन्नो भेदरूपेण य एकोऽर्थो विवक्षितः ।**
**तत्रावयवधर्मेण समुदायोऽनुगृह्यते ॥ ४६५ ॥**

---

शक्तिमतोर्धर्मधर्मिणोश्चाभेदात् शब्देभ्योऽभिन्ने अपि ते शब्देभ्यो भिन्ने इव, व्यतिरिक्ते इव स्थिते लक्ष्येते । वस्तुतस्तु शब्दशक्ती एव क्रमयौगपद्ये नार्थशक्ती, अर्थानां क्रमयौगपद्यप्रतीत्योः शब्दान्वयव्यतिरेकानुविधायित्वाद् इत्यभिधातुमाह—**भेदसंसर्गशक्ती इति ।**

अयमर्थः—नार्थस्यैते द्वे क्रमयौगपद्ये भेदसंसर्गशक्ती, किं तर्हि, शब्दस्यैवैते द्वे शक्ती, यत् शब्दस्य भेदशक्त्याऽर्थः क्रमेणावभाति तस्य संसर्गशक्त्या स्वर्थो युगपद् विभाति । ते च द्वे अपि शब्दस्य शक्ती शब्देभ्योऽभिन्ने अपि शब्दाद् भिन्ने इव स्थिते लक्ष्येते इति । नन्वक्षशब्दस्य भेदेन प्रयोगेऽनेकेन क्रियापदेन संबन्धाद् भिद्यत एवाक्षशब्दः, युगपत्प्रयोगे तु न भिद्यते एकस्यैवाक्षशब्दस्यानेकार्थसाधारण्यादिति रीत्या क्रमयौगपद्यस्वरूपयोर्भेदात् कथं शब्दस्य युगपत्प्रयोगेऽपि साधनक्रमरूपानुपातित्वमेवानेकपदोपात्तायाः क्रियायाः श्रुतेः= क्रियावाचकानेकपदश्रवणसामर्थ्यात्, क्रियावाचकानेकपदसामर्थ्याद्वा उक्तमित्याशङ्क्याह— **यौगपद्येऽपीति ।**

**अयमर्थः—यौगपद्येऽपि** प्रयोगे=साधनशब्दस्य तन्त्रेण युगपत्प्रयोगेऽपि, तन्त्रेण युगपन्निर्दिष्टस्य साधारणस्य साधनशब्दस्यावृत्त्यानेकेन=अनेकत्वमापन्नेन साधनशब्देन सह क्रियापदस्य भेदेन संबन्धात् श्रुतिः—युगपत्प्रयुक्तः साधारणः साधनशब्दः, भिद्यते एव । तन्त्रेण भिन्ना एवाक्षशब्दा उपात्तास्तत्रेति भावः ।। ४६४ ॥

अथवा तन्त्राभावेऽप्यक्षा इत्यत्र यौगपद्येन प्रयोगे उद्भूतावयवभेदोऽक्षसमुदाय एव प्रतिनिर्दिश्यते । तत्रावयवधर्मेण भेदेन समुदायो व्यपदिश्यते इत्येव भेदं तत्प्रयुक्तमक्षा इत्यत्र बहुवचनञ्चोपपाद्य यथायोगं प्रत्येकं साधने वाक्यार्थसमाप्त्या भिन्नानां क्रियाणा विनियोगः क्रियते इत्याह—**अभिन्न इति ।**

अभिन्नः समुदायस्वरूपो भेदरूपेणोद्भूतावयवभेदतया योऽत्रार्थो विवक्षितस्तत्रावयवधर्मेण भेदेन क्रमेणेति यावत्समुदायोऽनुगृह्यते उपोद्बलीक्रियत इति भेदप्रतिपत्तौ भेदेनैव क्रियाणां सम्बन्धः। अतश्चास्य समुदायस्य भेदप्रतिपादने प्रत्येकं वाक्यार्थः परिसमाप्यते ॥ ४६५ ॥

अथवा वचनभिन्न एकशब्द एवाक्षो भुज्यताम्, अक्षो दीव्यतामित्येवमवान्तरवाक्योपप्लाविनी साधनश्रुतिर्भेदेनैवावतिष्ठत इत्याह—

**भेदनिर्वचने त्वस्य प्रत्येकं वा समाप्यते।**
**श्रुतिर्वचनभिन्ना वा वाक्यभेदेऽवतिष्ठते ॥ ४६६ ॥**

शब्दपरिसमाप्तेर्भेदप्रकारमाह—

**तत्रैकवचनान्तो वा सोऽक्षशब्दः प्रयुज्यते।**
**प्रत्येकं वा बहुत्वेन प्रविभागो यथाश्रुति ॥ ४६७ ॥**

---

अयमर्थः—अक्षा इत्यत्राभिन्नाः = स्वयंभेदरहितोऽपि समुदायस्वरूपो य एकोऽर्थो भेदरूपेण = अवयवगतेन भेदरूपेण, उद्भूतावयवभेदतया विवक्षितः; तत्रावयवधर्मेण = भेदेन—क्रमेणेति यावत्। समुदायः = अक्षसमुदायः अनुगृह्यते = उपोद्बलीक्रियते। उद्भूतावयवभेदतया प्रतिपाद्यते इत्येवमवयवभेदस्य समुदाये प्रतिपत्तौ भेदेनैव क्रियाणां साधनेषु प्रत्येकं सम्बन्ध इति ॥४६५॥

एवमस्य समुदाय उद्भूतावयवभेदतया भेदप्रतिपादने प्रत्येकं वाक्यार्थः परिसमाप्यत इति। अथवा शब्दतन्त्रमाश्रित्यैकवृन्तावलम्बिफलत्रयन्यायेन अक्षा इत्यत्र बहुवचनभिन्ने एकशब्दे एवाक्षो भज्यताम्, अक्षो भुज्यताम् अक्षो दीव्यतामित्येवमवान्तरवाक्यरूपेणोपप्लाविनी बहुवचनान्ताक्षरूपसाधना श्रुतिर्भेदेनैवावतिष्ठत इत्याह—**भेदनिर्वचने** त्विति।

अयमर्थः—वा = अथवा, अस्य = अक्षा इति बहुवचनान्तेन प्रतिपाद्यमानस्य समुदायस्य, भेदनिर्वचने तु = उद्भूतावयवभेदतयावयवभेदप्रतिपादने तु, प्रत्येकं वाक्यार्थः परिसमाप्यते। वा = अथवा वचनभिन्ना श्रुतिः = अक्षा इति बहुवचनान्तत्वेन भिन्ना साधनश्रुतिः, अक्षो भज्यताम्, अक्षो भुज्यताम्, अक्षो दीव्यताम् इत्येवं वाक्योपप्लवमासाद्य वाक्यभेदेऽवतिष्ठते व्यवस्थिता भवति, पर्यवस्यतीति यावदिति ॥ ४६६ ॥

श्रुतिर्वचनभिन्ना वा वाक्यभेदेऽवतिष्ठते इत्युत्तरार्धेन प्रत्येकं वाक्यपरिसमाप्तिरूपा शब्दपरिसमाप्तिरुक्ता, तस्या भेदप्रकारम् = प्रकारभेदम् आह—**तत्रैकवचनान्त इति**।

अयमर्थः—वा = अथवा, तत्र = अक्षा भज्यन्तामित्यादिवाक्ये, सः = यो बहु-

एकस्माद्वाक्याद्वाक्यभेदेन सम्बन्धिनी व्यवह्रियमाणे सत्यक्षो भक्ष्यतामित्याद्येकवचनस्यैवाक्षाशब्दस्य प्रयोगः कदाचित्। अथवा यथाश्रुति प्रत्येकं बहुवचनान्तेनैव वाक्यभेद इत्याह प्रत्येकमिति। अक्षा भज्यन्तामित्यादिकः प्रविभागः श्रुत्यनतिक्रमेणैव वाक्यानां करणीयः ॥४६७॥

इदानीमभेदवादिनामपि मते द्विष्ठानां वाक्यानां शक्तिभेदेनैव विभागमभिधातुमाह—

**द्विष्ठानि यानि वाक्यानि तेष्वप्येकत्वदर्शिनाम्।**
**अनेकशक्तेरेकस्य स्वशक्तिः प्रविभज्यते ॥४६८॥**

द्वयोरर्थयोस्तिष्ठन्तीति द्विष्ठानि शास्त्रीयाणि लौकिकानि च यानि वाक्यानि **तेष्वपि** शब्दैकत्वदर्शिनां मते एकस्यैव तस्य प्रतिपादकस्य शब्दस्यानेकशक्तेरसौ **स्वशक्तिरेव** प्रविभज्यते। यथा "इग्यणः सम्प्रसारणम्" "द्विर्वचनेऽचि" तद्वरति

---

वचनान्तत्वेन प्रयुज्यते स एवाक्षशब्दः, एकस्माद् वाक्यादपोद्धृत्य वाक्यभेदेन साधनरूपे सम्बन्धिनि व्यवह्रियमाणे सति कदाचिद् एकवचनान्तः प्रयुज्यते, अक्षो भज्यतामित्यादिरूपेण। वा = अथवा, अक्षा भज्यन्तामित्यादिकः प्रत्येकं प्रविभागः, यथाश्रुति अक्षा इति बहुवचनान्तशब्दानतिक्रमेणैव, बहुत्वेन = बहुत्वविशिष्टाक्षबोधकबहुवचनान्ताक्षशब्दप्रविभागेणैव करणीय इति।

अयं भावः—प्रत्येकं वाक्यपरिसमाप्तिरिति पक्षे शब्दतन्त्रसमाश्रयणेनैकवृन्तावम्बिफलत्रयन्यायेन 'अक्षा भज्यन्ताम्' इति वाक्ये 'अक्षाः' इति बहुवचनान्ते एकस्मिन्नक्षशब्दे एकवचनान्तमक्षशब्दत्रयं संश्लिष्टं बहुवचनान्तं वाक्षपदमपोद्धर्तव्यमिति ॥४६७॥

'प्रत्यर्थं शब्दाभिनिवेशः' इत्यस्ति वैयाकरणानामागमसमायातं सूत्रकल्पं राद्धान्तवाक्यम्। इदञ्च वाक्यम्—अर्थमर्थं प्रति प्रत्यर्थम्, अर्थावर्थौ प्रति, अर्थान् अर्थान् प्रति यत् तदपि प्रत्यर्थमेव, इत्येवं रीत्या भाष्ये व्याख्यातम्। तत्र प्रथमव्याख्यानेऽर्थभेदेन शब्दभेद इत्यस्ति यद्यपि सिद्धान्तः, तथापि द्वितीये तृतीये च व्याख्यानेऽर्थभेदेऽपि न शब्दभेद इत्ययमस्ति सिद्धान्तः। एवञ्चार्थभेदेऽपि शब्दाभेदवादिनां मतेऽक्षा भज्यन्तामित्यादौ द्विष्ठानां त्रिष्ठाना वा वाक्यानां न शब्दतन्त्रमाश्रित्य शब्दभेदेन साधारणवाक्याद् विभागः संभवतीति तत्र पक्षे तत्र वाक्येऽर्थभेदेन शक्तिभेदमादाय शक्तितन्त्रञ्चाश्रित्य शक्तिभेदेनैव विभागमभिधातुमाह—**द्विष्ठानीति।**

अयमर्थः—द्विष्ठानि = द्वयोरर्थयोर्वाचकतया तिष्ठन्तीति द्विष्ठानि शास्त्रीयाणि लौकिकानि च यानि वाक्यानि तेष्वपि प्रागुपदर्शितरीत्या शब्दैकत्वदर्शिनाम् = अर्थभेदेऽपि शब्दाभेदं पश्यतां मतेऽनेकशक्तेरनेकार्थप्रतिपादकस्य च तस्यैकस्य द्विष्ठवाक्यस्य—न स्वरूपं प्रविभज्यते, अपि तु स्वशक्तिरेव प्रविभज्यते = प्रविभागेण भेदेन ज्ञायते। यथा—"इग्यणः

वहत्यावहति भाराद्वंशादिभ्यः 'तदस्य ब्रह्मचर्यम्" इत्यादीनि शास्त्रीयाणि। तथा श्वेतो धावति अलम्बुसानां पातेत्यादीनि लौकिकानि वाक्यानि। तेष्वप्यर्थद्वयप्रतिपादनाय शक्तिर्विभज्यत इति शक्तितन्त्रप्रतिपादनम् ॥३६८॥

भेददर्शिनां पुनर्मते भिन्नावेव शब्दौ तन्त्रेणोपात्ताविति शब्दतन्त्रं प्रतिपादयितुमाह—

**अत्यन्तभिन्नयोर्वा स्यात् प्रयोगस्तन्त्रलक्षणः।**
**उपायस्तत्र संसर्गः प्रतिपत्तृषु भिद्यते ॥४६९॥**

तत्रैवं तन्त्रेण द्व्यर्थे तस्मिन् प्रयोगे प्रतिपत्त्ययोगे प्रतिपत्त्यनुसारेणोभयात्मासौ संसर्गो वाक्याभिधेयलक्षणो भिद्यते। यथा यणस्थानिकस्येग्लक्षणस्य वर्णस्य का संज्ञा स्यादित्येकेन पृष्टम्, तदपरेण यणि कोऽर्थः? स्थान्यादेशभाव-

---

संप्रसारणम्" (१।१।४५) "द्विवचनेऽचि", (१।१।५९) "तद्धरति वहत्यावहति भाराद्वंशादिभ्यः', (५।१।५०) "तदस्य ब्रह्मचर्यम्" (५।१।९४) इत्यादीनि शास्त्रीयाणि द्विष्ठानि वाक्यानि। तथाह—इग्यण इति वाक्यं संप्रसारणसंज्ञं स्यादित्येकोऽर्थो वाक्यस्य संज्ञेतिपक्षे। वर्णसंज्ञापक्षे तु यणः स्थाने प्रयुज्यमान इक्संप्रसारणसंज्ञः स्यादित्यपरोऽर्थः। "द्विर्वचनेऽचि" (१।१।५९) इत्यत्रापि अचि' इत्यस्यावृत्त्या—अचि द्विर्वचने, अचि न स्यादित्यर्थद्वयम्। तद्धरति इत्यत्रापि—'तद्' इत्यस्य 'हरति' इत्यादिके क्रियापदत्रये प्रत्येकं सम्बन्धः।

अत्र च द्विष्ठत्वमनेकार्थस्थितत्वस्योपलक्षणम्। "तदस्य ब्रह्मचर्यम्" इत्यत्रापि तत्पदस्य मासार्धमासवर्षाद्यर्थेषु शक्तिरित्यनेकार्थनिष्ठता। तथा लौकिकानि वाक्यानि श्वेतो धावति, अलबुसानां पातेत्यादीनि। अत्र 'श्वेतवर्णोऽश्वादिर्धावति, 'श्वा इतो धावति' इत्यर्थद्वयम्। अलंबुसाना देशविशेषाणां पाता = रक्षकः। बुसानां तृणविशेषाणामलमत्यर्थं पाता = रक्षक इत्यर्थद्वयम्, अत्र बोध्यम् इत्येतेष्वप्यर्थद्वयप्रतिपादनाय शक्तिर्विभज्यत इति शक्तितन्त्रप्रतिपादनमेतेन पद्येन कृतमिति ॥ ४६८ ॥

प्रत्यर्थं शब्दाभिनिवेश इत्यस्यार्थमर्थं प्रति प्रत्यर्थमिति व्याख्यामाश्रित्याक्षा इत्यादौ शब्दभेददर्शिनां मते त्वक्षा इत्यादौ भिन्ना एव शब्दास्तन्त्रेणोपात्ता इति शब्दतन्त्रं प्रतिपादयितुमाह—अत्यन्तभिन्नयोरिति।

अयमर्थः—वा = अथवा अक्षा इत्यादावत्यन्ताभिन्नयोर्द्वयोरक्षशब्दयोस्तन्त्रलक्षणः = एकेन शब्देनानेकार्थस्य विवक्षातन्त्रम्—तन्निमित्तकः, वक्तृकर्तृकः प्रयोगः स्यात्। वक्तुस्तन्त्रोच्चारणं स्यादित्यर्थः। तत्र 'अक्षाः' इत्यादौ द्विष्ठादिषु वाक्येषु, प्रतिपत्तृषु त्वत्यन्ताभिन्नयोः शब्दयोर्वाक्ये संसर्गरूपः पदार्थयोः संसर्गरूपो वा, उपायः भिन्नार्थप्रतिपत्त्युपायः, अक्षपदावृत्त्याऽभिधीयत इति। तत्र प्रतिपत्तुरावृत्त्या बोध इत्यर्थः पर्यवसितः।

लक्षणः सम्बन्धः; स किं संज्ञ इति, लाघवादाचार्यस्तन्त्रन्यायसमाश्रयणात् सम्प्रसारणमित्येकेनैव शब्देनोत्तरमाह। तथैकेन पृष्टं किञ्जातीयो धावतीत्यपरेण किंवर्णो धावत्यनयोर्लाघवात् प्रतिवक्ति श्वेतो धावतीति। तत्रासौ वाक्यार्थः प्रतिपत्तृषु भिद्यते, येन पृष्टं किञ्जातीयस्तस्य श्वा इतो धावतीत्येवंरूपतया व्यवतिष्ठते। येन च किंवर्ण इत्युक्तं तस्य श्वेतगुणयुक्तो धावतीत्यर्थरूपोऽसौ जायत इति तन्त्रनिबन्धना द्विधात्रार्थव्यक्तिरुपजायत इति। एवमन्यत्र व्याख्येयम् ॥४६९॥

एतदेव व्याख्यातुमाह—

**भेदेनावगतौ पूर्वं शब्दौ तुल्यश्रुती पुनः।**
**तन्त्रेण प्रतिपत्तारं प्रयोक्त्रा प्रतिपादिताः ॥४७०॥**

पूर्वं यौ शब्दौ भेदेन रूपवैलक्षण्येनाधिगतौ श्वा इतः श्वेत इति तावेव तुल्यश्रुती भिन्नावेव तन्त्रेण प्रतिपत्तारः, यस्मात्तन्त्रन्यायसमाश्रयणेनात्र प्रयोक्त्रा प्रतिपादिताः प्रतिबोधिताः ॥४८०॥

---

अयं भावः—तत्राक्षा इत्यादावत्यन्तभिन्नयोः शब्दयोस्तन्त्रेण द्व्यर्थे तस्मिन् प्रयोगे प्रतिपत्तुरावृत्तिं विना प्रतिपत्त्ययोगे प्राप्ते प्रतिपत्त्यनुसारेणावृत्त्योभयात्मकोऽसौ वाक्याभिधेयरूपः संसर्गो भिद्यते। यथा यणस्थानिकस्येग्रूपस्य वर्णस्य का संज्ञेति प्रश्नस्योत्तरम् आहाचार्यः—संप्रसारणम् इति। यथा वा-- यणिकोऽर्थः स्थान्यादेशभावलक्षणः संबन्धस्तद्बोधकस्य वाक्यस्य का संज्ञेत्यस्यापि प्रश्नस्योत्तरमाहाचार्यः—संप्रसारणमिति। अत्र द्वयोरपि प्रश्नयोर्लाघवात् तन्त्रन्यायसमाश्रयणादेकेनैव संप्रसारणशब्देनोत्तरमाह—तथा 'किञ्जातीयो धावति किंवर्णो धावति' इति द्वयोरपि प्रश्नयोर्लाघवात् तन्त्रेणैकमेवोत्तरम्—'श्वेतो धावति' इति। तत्र जिज्ञासानुसारेण वाक्यार्थो व्यवस्थित एव प्रतिपत्तृषु भिद्यते—'श्वा इतो धावति, श्वेतगुण युक्तो धावति' इति। यस्य त्वेकस्यैवोभयथा प्रश्नस्तस्य तु तन्त्रावृत्त्योभयथा बोध इति रीत्या तन्त्रन्यायसमाश्रयणेन प्रयोगनिबन्धनोऽत्र द्विधार्थबोध उपजायत इति ॥ ४६९ ॥

पूर्वपद्योक्तमेव निगूढमर्थं व्याख्यातुमाह—**भेदेनेति**।

अयमर्थः—पूर्वम् = लाघवात् तन्त्रन्यायसमाश्रयणेन प्रयोगात् पूर्वम्, एकैकार्थविवक्षया प्रयुक्ते वाक्यद्वये भेदेनावगतौ = परस्परं भिन्नतया रूपवैलक्षण्येन ज्ञातौ यौ श्वा इतः, श्वेतः' इति शब्दौ तावेवात्रोभयार्थविवक्षया प्रयुक्ते वाक्ये पुनः परस्पर भिन्नावपि समानानुपूर्वीकत्वेन तुल्यश्रुती प्रयोक्त्रा तन्त्रेण प्रतिपत्तारः प्रतिपादिता इति वक्तुर्निजेच्छया प्रयोज्यकर्मणि प्रत्यय इति ॥ ४७० ॥

इदानीं यत्र वक्तुरेकस्यैव शब्दस्य विवक्षा एकार्थप्रतिपिपादयिषयोपजायते, तत्रापरार्थविवक्षाया अभावेऽपि शब्दस्य तुल्यश्रुतित्वेन साधारणत्वादेकशब्दोच्चारणेऽप्यनुरण-

इदानीमत्र वक्तुरेकस्यैव शब्दस्य प्रतिपादने विवक्षोपजायते, तस्यां सत्याम-परोऽनुनिष्पद्यत इति शब्दभेदमते प्रकारान्तरेण तन्त्रमुपपादयितुमाह—

**एकस्यापि विवक्षायामनुनिष्पद्यते परः ।**
**विनाऽभिसंधिना शब्दः शक्तिरूपः प्रकाशते ॥४७१॥**

वक्त्रिच्छाविरहादपि साधारणत्वादपरस्य निष्पत्तिस्ततोऽर्थद्वयप्रतिपत्तिः । अभेदवादिनामपि मते तन्त्रस्य प्रकारान्तरमाह—विनेति । प्रयोक्त्रभिसन्धान-मन्तरेण तत्रासौ शब्दः साधारणत्वाच्छक्तिद्वययुक्तः प्रकाशते ।

एतदुक्तं भवति—शुक्लजातीयप्रत्यायनशक्तिः प्राणिविशेषप्रत्यायनशक्तिर्वा श्वैतशब्दस्तत्रोदीरितः, स तत्रैकमर्थं प्रत्याययंस्तन्त्रेण सामर्थ्यादर्थान्तरप्रकाशनं करोत्येव ॥४७१॥

अथवा तुल्यकक्षतया शक्तिद्वययोगाद्युगपदेव अर्थद्वयप्रकाशनं करोतीति शक्तितन्त्रताभाश्रित्याह—

**अनेकशक्तिरेकस्य युगपच्छ्रूयते क्वचित् ।**
**अग्निः प्रकाशदाहाभ्यामेकत्रापि नियुज्यते ॥४७२॥**

---

नन्यायेनापरोऽपि शब्दस्तुल्यश्रुतिस्तत्रानुनिष्पद्यत इति शब्दभेदवादिमते प्रकारभेदेन शब्द-तन्त्रमुपपादयितुमाह—**एकस्यापीति** ।

अयमर्थः—एकस्यापि = एकार्थबोधकस्यापि, तुल्यश्रुतेः शब्दस्य विवक्षायां सत्यां परः = परार्थबोधकः शब्दः अनुनिष्पद्यते = अनुरणनन्यायेन निष्पद्यत इति ।

अयं भावः—एकार्थबोधकशब्दविवक्षायां सत्यामपरार्थे वक्त्रिच्छाविरहेऽपि तुल्य-श्रुतित्वेन साधारणत्वादपरस्य शब्दस्यानुरणनन्यायेन निष्पत्तिरित्येवमर्थद्वयप्रतिपत्तिस्तत्रेति । शब्दाभेदवादिनामपि मते शक्तितन्त्रस्य प्रकारान्तरमाह—**विनाऽभिसन्धिनेति** ।

अयमर्थः—'श्वेतो धावति' इति यत्रोभयार्थविवक्षया न प्रयोगस्तत्राभिसन्धिना विनाऽपि वक्तुरपरार्थविवक्षा विनाऽपि, श्वेत इति शब्दः शक्तिरूपः = अर्थद्वयनिरूपिताभ्यां शक्तिभ्यां युक्ततया रूप्यते विज्ञायत इति शक्तिरूपः, अर्थद्वयबोधने साधारणत्वात् शक्तिद्वय-युक्तः, प्रकाशते । तेनार्थद्वयबोधस्तत्रापीति भावः ।

अयं भावः—यत्र शुक्लवर्णप्राणिविशेषयोरन्यतरशक्तियुक्तः श्वेतशब्दो विवक्षयोदी-रितस्तत्र विवक्षितमर्थं प्रत्याययन् श्वेतशब्दोऽनन्तरमर्थतन्त्रमाश्रित्य सामर्थ्यादर्थान्तर-प्रकाशनं करोत्येवेति शब्दाभेदवादेऽर्थतन्त्रमेवात्र शक्तितन्त्रपदेनाभिप्रेतमिति वेदितव्य-मिति ॥ ४७१ ॥

पूर्वं यत्र श्वेतो धावतीत्यादावन्यतरार्थविवक्षा तत्र श्वेतशब्दो विवक्षितमर्थं प्रत्याय्य पश्चात् शक्तितन्त्रेणार्थान्तरमपि प्रत्याययतीत्युक्तम् । इदानीं तु यत्रोभयार्थविवक्षा तत्र

एकस्यैव शब्दस्य क्वचित् श्वेतो धावतीत्यादौ विषये युगपदेवार्थद्वय-प्रत्यायनसमर्थं शक्तिद्वयमाश्रीयते, यथा क्वचिदवसरे दाहप्रकाशाभ्यां युक्तोऽग्निरेकत्रापि प्रकाशे दाहे वा नियुज्यते उपयोगवशाद्धर्मद्वयायाप्युपादीयत इत्यर्थः। तथैवानेकशक्तियोगाद्युगपदर्थद्वयप्रकाशनाय शब्दः समाश्रीयत इति ॥४७२॥

इदानीं शास्त्रविषयमप्येतदुपदर्शयितुमाह—

**आवृत्तिशक्तिभिन्नार्थे वाक्ये सकृदपि श्रुते।**
**लिङ्गाद्वा तन्त्रधर्माद्वा विभागेनावतिष्ठते ॥४७३॥**

इग्यणः सम्प्रसारणमित्येतस्मिन् वाक्ये सकृदपि श्रुते कीदृशे शब्दभेदवादिनां मते आवृत्तिभिन्नार्थे, एकत्ववादिनां मते शक्तिभ्यां भिन्नार्थे। तत्र हि शक्तिभेदादर्थभेदः, अनन्तरं तद्वाक्यं प्रतिपत्तिशब्दभेदमते लिङ्गाद्

---

तुल्यकक्षतया शक्तिद्वययोगाद् युगपदेव विवक्षावशादर्थद्वयप्रकाशनं श्वेतशब्दः करोतीति शब्दाभेदवादे शक्तितन्त्रतामाश्रित्याह—**अनेकशक्तिरिति**।

अयमर्थः—क्वचित् 'श्वेतो धावति' इत्यादौ लाघवादुभयार्थविवक्षायाम्, **एकस्य**=शब्दाभेदवादे एकस्यैव श्वेतशब्दस्य, युगपदुभयार्थबोधायानेकशक्तिः=अनेका शक्तिरिति कर्मधारयः, शक्तिद्वयम् श्रीयते=आश्रीयत इति। एकस्यानेकशक्तियोगेन युगपदनेकार्थकरत्वे उदाहरणमाहोत्तरार्धेन—**अग्निरिति**।

तद्यथा—क्वचित् प्रदीपरूपोऽग्निः प्रकाशरूपायैव फलाय विनियुज्यते, क्वचित्तु शीतापनोदनपाकादिफलकदाहरूपफलायैव स विनियुज्यते। क्वचित्त्वेकत्रापि=एकत्रैव विषये, अग्निः प्रकाशदाहाभ्यां फलाभ्यां विनियुज्यते। यथा साम्प्रतं वैद्युतेनाग्निना प्रकाशोऽपि क्रियते, सुवर्णताम्रवङ्गादिधातूनां दाहोऽपि भस्मनिष्पत्तये क्रियत इति।

अयं भावः—यथा दाहप्रकाशोभयशक्तियुक्तोऽग्निरन्यत्र एकैकस्मै फलाय विनियुज्यमानोऽपि क्वचित् फलद्वयायाप्युपादीयते तथैवानेकशक्तियोगादर्थद्वयप्रकाशनाय श्वेतशब्दः समाश्रीयत इति ॥ ४७२ ॥

इदानीमेकस्य शब्दस्यानेकशक्तियुक्तस्य युगपदनेकार्थबोधकत्वं श्वेतो धावतीत्यादौ लोके दृष्टम्, शास्त्रविषयमप्युपदर्शयितुमाह—**आवृत्तीति**।

अयमर्थः—सकृदपि श्रुते "इग्यणः संप्रसारणम्" इत्यस्मिन् वाक्ये, आवृत्तिशक्तिभिन्नार्थे=शब्दभेदवादिमते आवृत्त्या भिन्नार्थे, शब्दैकत्ववादिनां मते शक्तिभ्यां भिन्नार्थे भिन्नार्थावबोधके सति, तद्वाक्यं प्रत्यर्थप्रतिपत्तिशब्दभेद इति मते लिङ्गात्=ज्ञापकाद्, विभागेन=शब्दभेदेन, वर्णप्रत्यायकतया वाक्यार्थप्रत्यायकतया चावतिष्ठते। शब्दैकत्ववादिमते तु—तन्त्रधर्माद्वा—तन्त्रं शक्तितन्त्रमेव धर्मः शब्दस्यैकस्य शक्तिद्वययोगलक्षणात् तन्त्रधर्माद्वा विभागेन शक्तिभेदेनावतिष्ठते।

ज्ञापकाद्विभागेनावतिष्ठते वर्णवाक्यार्थप्रत्यायकतयाऽवतिष्ठत इत्यर्थः। यस्मात्सम्प्रसारणस्येति भूतविभक्तिनिर्देशं पश्यति, ततोऽवस्यति वर्णः सञ्ज्ञीति वसोः सम्प्रासरणमित्यादौ भाविविभक्तिनिर्देशाद्वाक्यार्थस्यापि संज्ञित्वमवस्यतीत्यावृत्तिमेव शब्दभेदवाद्यनुमिनोति। अभेदवादी तु शक्तिभेदं तन्त्रधर्माच्छक्तितन्त्रलक्षणादनुमिनोतीत्यत्र सम्प्रसारणशब्दः शक्तिद्वयवशाद्युगपद्वर्णवाक्यलक्षणस्यार्थद्वयस्यापि प्रतिपादनं करोत्येव ॥४७३॥

**सम्प्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः।**
**प्रविभागस्तत्र सूत्रे एकस्मिन्नेव कल्पते ॥ ४७४ ॥**

लिङ्गाभ्यामुपदर्शिताभ्यां भाविभूतविभक्तिनिर्देशलक्षणाभ्यां तत्र एकस्मिन्नेव सूत्रे वर्णवाक्यार्थयोः संज्ञिनोः प्रयोगो लभ्यत इति ॥ ४७४ ॥

---

तथाहि—यदा संप्रसारणात् संप्रसारणस्येति भूतविभक्तिनिर्देशम् = भूतत्वाविनाभूतार्थकविभक्तिनिर्देशम्, पश्यति तदा तेन लिङ्गेन संप्रसारणपदस्य वर्णः संज्ञीत्यध्यवस्यति। यदा तु वसोः संप्रसारणम्, ष्यङः संप्रसारणमित्यादौ भाविविभक्तिनिर्देशम् = साध्यत्वेन भावित्वाविनाभूतार्थकविभक्तिनिर्देशम्, पश्यति, तदा तेन लिङ्गेन तस्य = इग्यण इति वाक्यार्थः संज्ञीत्यवस्यतीत्येवं संज्ञाप्रदेशादन्यत्र संप्रसारणपदस्य, अर्थद्वयदर्शनरूपेण लिङ्गेन इग्यणः संप्रसारणमिति संज्ञाप्रदेशे संप्रसारणपदस्यावृत्तिमेव शब्दभेदवादी अनुमिनोति। शब्दैकत्ववादी तु शक्तितन्त्ररूपात् तन्त्रधर्मात् शक्तिभेदमनुमिनोतीत्येवमत्र संप्रसारणशब्दो मतभेदेन आवृत्त्या शक्तिद्वययोगेन वा युगपद् वर्णवाक्यलक्षणमर्थद्वयं प्रतिपादयतीत्यवधेयम् ॥ ४७३ ॥

पूर्वपद्योक्तमर्थमुदाहरणेन विशदीकर्तुमाह—**संप्रसारणसंज्ञायामिति**।

अयमर्थः—संप्रसारणसंज्ञायाम् = संप्रसारणस्य, संप्रसारणमित्येवं विभक्तिभेदेन निर्दिष्टे संप्रसारणपदे, वर्णवाक्ययोर्लिङ्गाभ्याम् = प्रागुपदर्शिताभ्या भाविभूतविभक्तिनिर्देशरूपाभ्यां हेतुभ्याम्, तत्र एकस्मिन्नेव सूत्रे प्रविभागः = वर्णवाक्यार्थयोः संज्ञिनोः प्रयोगः कल्पते = लभ्यत इति पुण्यराजः।

वस्तुतस्तु तत्र सूत्रे—'इग्यणः संप्रसारणम्' इत्यत्र एकस्मिन्नेव संप्रसारणपदे आवृत्त्या शक्तितन्त्रेण वा प्रविभागः = वर्णवाक्यार्थयोः संज्ञिनोर्भेदावगमः कल्पते प्रसिध्यतीति व्याख्येयम्। उक्तञ्च भाष्ये—विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्येति।

अयमर्थः—संप्रसारणस्य = संप्रसारणमिति भाविभूतविभक्तिविशेषनिर्देशस्तु उभयसंज्ञात्वस्य = संप्रसारणपद उभयोर्वर्णवाक्यार्थयोः संज्ञात्वस्य ज्ञापक इति। तन्त्रं चेदं शब्दतन्त्रं शक्तितन्त्रं वा यद्यप्येकशेषसमानफलकमिति शास्त्रे एकशेषं विधिपुरस्सरं समाश्रीयमाणे प्रकृते तन्त्रविचारानुपयोगस्तथापि यत्रैकवचनान्तप्रयोगः संप्रसारणस्य संप्रसारणमिति, तत्रैकशेषासंभवात् तन्त्रनिर्देश एव भाष्ये संप्रसारणविधिप्रदेशेषूपन्यस्त इत्यस्ति तद्विचारावसर इति ॥ ४७४ ॥

उक्तं च 'विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य' इति। तन्त्रं चेदमेकशेषसमानफलं भाष्ये प्रदेशेषूपन्यस्तमिति भाष्यकाराभ्युपगमेनार्थतन्त्रसिद्धिमुपपादयितुमाह—

**तथा द्विर्वचनेऽचीति तन्त्रोपायादिलक्षणः।**
**एकशेषेण निर्देशो भाष्य एवोपवर्णितः॥ ४७५॥**

इह द्विर्वचनेऽचीत्यत्र द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचन एव कर्तव्ये स्थानिवदिति सूत्रार्थो व्याख्यायते, तत्रोक्तं यत्पुनर्द्वितीयं द्विर्वचनग्रहणं कर्त्तव्यं न कर्त्तव्यमित्याह—एकशेषनिर्देशात् सिद्धम्" इति। यद्येकशेषस्तदा द्विर्वचनं प्राप्नोतीत्यत एकशेषसमानफलसाधारणलक्षणं तन्त्रमेवात्रैकशेषशब्देनोक्तम्। तेन तन्त्रोपायाद्धेतोर्लक्षण एवैकशेषनिर्देशः प्रदर्शितः। तस्मादेकशेषमन्तरेणापि तन्त्रन्यायसमाश्रयणाद् द्विर्वचनेऽचीत्यत्रार्थसङ्गतेरेकशेषसमानफलशास्त्रप्रवृत्त्युपायभूतं तन्त्रमभ्युपगतं भाष्य इति सिद्धम्॥४७५॥

अथ महाभाष्यस्यावतारान्वाख्यानपूर्वकं टीकाकारो महत्तामुपवर्णयन् स्वरचितस्य ग्रन्थस्य गुरुपूर्वक्रममभिधातुमाह—

**प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।**
**संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते॥४७६॥**

---

भाष्यकाराभ्युपगमेन शक्तितन्त्राख्यार्थतन्त्रसिद्धमेकशेषागतार्थत्वेनोपपादयितुमाह— **तथेति**।

अयमर्थः—यथा संप्रसारणपदे भाविभूतविभक्तिनिर्देशरूपेण लिङ्गेन वर्णवाक्यार्थयोः सञ्ज्ञित्वसिद्धिफलकस्तन्त्रावृत्तिलक्षण उपायोऽनुमीयते, तथा द्विर्वचनेऽचीति सूत्रे भाष्य एव तन्त्रोपायादिलक्षणस्तन्त्रावृत्तिरूप एकशेषेण निर्देश उपवर्णितः। तेनैकशेषाद् विलक्षणस्तन्त्रावृत्तिलक्षणोऽनेकार्थप्रतिपत्त्युपायो भाष्यकारस्यापि संमत इति गम्यते। तथा हि—द्विर्वचनेऽचीत्यत्र द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचन एव कर्तव्ये स्थानिवदिति सूत्रार्थो भाष्ये व्याख्यायते।

तत्रोक्तं भाष्ये—'यत्पुनर्द्वितीयं द्विर्वचनग्रहणं कर्तव्यम्, न कर्तव्यमित्याह—'एकशेषनिर्देशात् सिद्धम्' इति। यद्यत्र भाष्यवाक्ये एकशेषपदेन शास्त्रीय एकशेषोऽभिप्रेतः स्यात, तदा द्विर्वचन इत्यत्र द्विवचनं प्राप्नोतीत्यत एकशेषसमानफलकत्वेनैकशेषसाधारणलक्षणकत्वेनात्रैकशेषपदेन तन्त्रमेवात्रोक्तमिति। तस्मादेकशेषं विनाऽप्यत्र तन्त्रन्यायसमाश्रयणाद् द्विर्वचनेऽचीत्यत्रार्थसंगतेः पदसंगतेश्चात्रैकशेषसमानफलकं शास्त्रवाक्यार्थसिद्ध्युपायत्वेन शास्त्रप्रवृत्त्युपायभूतं तन्त्रमभ्युपगतं भाष्यकारेणापीति सिद्धम्॥ ४७५॥

इह पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपरचितं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं निबन्धनमासीत्। तच्च कालवशात् सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतम्। तस्मात् क्लेशभीरुत्वात् संक्षेपरुचयस्ते जनाः। अत एवाल्पो विद्यासु परिग्रहः स्वीकारो येषां ते तथा। ततस्तैः संग्रहाध्ययन उपेक्षिते सत्यस्तं यातः संग्रहः ॥४७६॥

साधुत्वज्ञानौपयिकतया धर्मसाधनत्वेनोपजातोपयोगाय व्याकरणस्मृतेरविच्छेदाय करुणाप्रयुक्तेनाथ भगवता पतञ्जलिना वार्त्तिकव्याख्यानपुरःसरं महाभाष्यनिबन्धनमुपरचितमित्यभिधातुमाह—

**कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।**
**सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥४७७॥**

गुरुणेति भाष्यकर्त्तुः पूजापदे। तीर्थान्यागमविशेषाः। तान् पश्यति विजानातीति तीर्थदर्शी। अनेन गुरुत्वनिबन्धनः प्रभावातिशयो भगवत उक्तः। तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत्सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशेष्य महाभाष्यमित्युच्यते लोके ॥४७७॥

---

अथ महाभाष्यस्य टीकाकारो भर्तृहरिर्महाभाष्यं कदा केन कथं निर्मितम्, किञ्च तत्र बीजमित्येतत्सर्वं महाभाष्यस्यैतद्ग्रन्थमूलतयाऽऽख्यायिकामुखेन प्रदर्श्य तस्य महत्तामुपवर्णयन् स्वरचितस्यास्य वाक्यपदीयाख्यस्य ग्रन्थस्य गुरुपूर्वक्रमम् = गुरुसंप्रदायमभिधातुमाह— **प्रायेणेति**।

अयमर्थः—इह महाभाष्यनिर्माणात् प्रागस्य पाणिनीयव्याकरणस्योपपत्त्योपोद्बलकः श्रीव्याड्युपरचितोऽनुष्टुभा श्लोकलक्षेण परिमेयः संग्रहाभिधानो महानिबन्ध आसीत्। स च कालवशात् सुकुमारमतीन् अत एव क्लेशभीरुत्वात् संक्षेपरुचीन् = ग्रन्थसंक्षेपे रुचिमतः, अत एवाल्पविद्यापरिग्रहान् = अल्पो विद्यासु व्याकरणोपयुक्तास्वितरविद्यासुपरिग्रहः = स्वाध्यायपूर्वकः स्वीकारो येषां ते तथाभूतास्तान्, अत एव संग्रहाध्ययनेऽरुच्या उपेक्षावतो वैयाकरणान् संप्राप्य संग्रहेऽस्तमुपागते सति, अथ पतञ्जलिना महाभाष्ये कृत इत्युत्तरेण संबन्धः ॥४७६॥

अथ शब्दसाधुत्वज्ञानौपयिकतया फलतः साधुशब्दप्रयोगप्रयोजकतया च धर्मसाधनत्वेन सप्रयोजनाया व्याकरणस्मृतेः संप्रदायसंततेरविच्छेदाय करुणाप्रयुक्तेन भगवता पतञ्जलिना संग्रहे वार्त्तिकस्याव्याख्यानात् तां न्यूनतां परिजिहीर्षता वार्तिकस्यापि व्याख्यानप्रत्याख्यानपुरस्सरं महाभाष्यरूपं महानिबन्धनमर्थतोऽगाधमपि शब्दसौष्ठवेन श्रोतृचित्ताकर्षकमुपरचितमित्यभिधातुमाह—**कृतेऽथेति**।

अथ महत्त्वमेव विशेषणद्वारेणास्योपपादयितुमाह—

**अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।**
**तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ॥४७८॥**

गाधो निष्ठापरिच्छेद इयत्तेति यावत् । असावलब्धो यस्य । कस्मादित्याह—गाम्भीर्यात् इति । गाम्भीर्यं गहनता प्रमेयबाहुल्येन दुर्वगाहत्वम् । अतिगम्भीरं हि भाष्यमुपरचितं भगवता पतञ्जलिनेति न तस्याभिधेयं व्यवच्छेत्तुं केनचिच्छक्यत इति । किमेवमेकान्तं गहनमिदं भाष्यम्? नेत्याह—उत्तान इव इत्यादि । उत्तानं स्पष्टं सौष्ठवं परिपाटी यस्मादेतद्भाष्यं परिपाटिलक्षणादत्र सौष्ठवादुत्तानं स्पष्टप्रायं यत एव प्रतिभाति । अतो नेदमसेव्यं सज्जनमानसमिव निसर्गसुकुमारमतिगम्भीरं चैतदत एव महाभाष्यमित्युच्यत इत्यर्थः । एतेन संग्रहानुसारेण भगवता पतञ्जलिना संग्रहसंक्षेपभूतमेव प्रायशो भाष्यमुपनिबद्धमित्युक्तं वेदितव्यम् । तदेवं ब्रह्मकाण्डे "कायवाग्बुद्धिविषया ये मलाः" इत्यादिश्लोकेन भाष्यकार-

---

अयमर्थः—अथ = संग्रहप्रणाशानन्तरम्, गुरुणा पूज्येन गुरुणेति भाष्यकर्तुः पूजापदम् । तीर्थदर्शिना = तीर्थानि व्याकरणस्यान्यदर्शनानां चागमविशेषास्तान् पश्यति विजानातीति तीर्थदर्शी, तेन । अनेन गुरुत्वहेतुभूतः प्रभावातिशयो भगवतः पतञ्जलेरुक्तः । पतञ्जलिना न केवलं व्याकरणस्यैवाष्टकस्य निबन्धने, किन्तु सर्वेषां न्यायबीजानाम् = न्यायाश्च बीजानि चेति द्वन्द्वः । न्याया लौकिक्यो व्याकरण उपयोगिन्यो युक्तयः, बीजानि परिभाषाणां लिङ्गानि सूत्रे निगूढानि निबद्धानि, तेषां निबन्धने ज्ञापके हेतौ, सर्वन्यायबीजहेतुत्वादेव च महाभाष्ये = महति भाष्ये कृते सति, 'तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः' इत्युत्तरेण संबन्धः ॥४७७॥

अथ महाभाष्यस्य महत्त्वमेव विशेषणनिर्देशेनोपपादयितुमाह—**अलब्धगाधे** इति ।

अयमर्थः—गाम्भीर्यात् = अर्थगाम्भीर्यात्, गाम्भीर्यं चात्र प्रमेयबाहुल्येन दुर्ज्ञानत्वम् । अतिगम्भीरं हि भाष्यमुपरचितं भगवता पतञ्जलिनेति न तस्याभिधेयं येन केनचित् परिच्छेत्तुं शक्यते, किन्तु कृतबुद्धिभिरेवेति हृदयम् । अलब्धगाधे = न लब्धो न ज्ञातो गाधो गाधनं निष्ठा अवसानं परिच्छेद इयत्ता वा यस्य तद् अलब्धगाधम्, तस्मिन् तथाभूते । किमेवमेकान्तेन गहनमेवेदं भाष्यं नेत्याह—**उत्तान इवेति** । सौष्ठवात् = सकुमारशब्दरचनापरिपाटीलक्षणात् शब्दसौष्ठवात्, उत्तान इव = स्पष्टप्राय इव, अतो नेदमसेव्यम् । किन्तु सज्जनमानसमिवातिगम्भीरमपि निसर्गसुकुमारशब्दरचनयाऽतिनिर्मलतया च कृतबुद्धिभिः सुखेनोपलभ्यमानार्थजातम्, अत एवेदं महाभाष्यमित्युच्यत इत्यर्थः ।

एतेनेदमुक्तं भवति—संग्रहेऽस्तमुपागते संग्रहानुसारेणैव भगवता पतञ्जलिना संक्षेपरुचीनां वैयाकरणानां कृते सग्रहसंक्षेपभूतमेव प्रायशो महाभाष्यमुपरचितमिति ।

प्रशंसोक्ता। इह चैवं भाष्यप्रशंसेति शास्त्रस्य शास्त्रकर्तुश्च टीकाकृता महत्त्वोपवर्णिता। अत एवेदं महाभाष्यमकृतबुद्धयो नैव बोद्धुमलमित्याह—तस्मिन्निति। कृता व्युत्पत्त्या प्रकर्षं प्राप्ता महती बुद्धिर्येषां ते, तथा तद्रूपवैकल्येनाकृतबुद्धयः स्वल्पप्रज्ञा उच्यन्ते। तेषां निश्चयो निर्णयपर्यन्तो बोधो नैवात्रावास्थित न प्रतिष्ठामलभत। न तेनास्मद्गुरोस्तत्रभवतो वसुरातादन्यः कश्चिदिमं भाष्यार्णवमवगाहितुमलमित्युक्तं भवति ॥४७८॥

तथा च संग्रहप्रतिपक्षभूतैराचार्यैस्तर्कविद्यामात्रवेदिभिर्बुद्धयपाटवादिदमासावितमाभासीकृतमित्याह—

**बैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः।**
**आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥४७९॥**

शुष्कतर्कः केवल एवान्यशास्त्रपरिमलरहितो भण्यते। तमेवानुसरन्ति प्रमेयनिर्णयायेति तदनुसारिणः। महाभाष्यं हि बहुविधविद्यावादबलमार्षं व्यवस्थितम्,

---

तदेवं ब्रह्मकाण्डे—"कायवाग्बुद्धिविषया ये मलाः" इत्यादिश्लोकेन भाष्यकारप्रशंसोक्ता। इह चैवं भाष्यप्रशंसेति महाभाष्यरूपस्य शास्त्रस्य तादृशशास्त्रकर्तुः पतञ्जलेश्च महाभाष्यटीकाकृता हरिणा महत्त्वोपवर्णिता। तेन च तन्मूलकस्यास्य स्वग्रन्थस्यापि महत्त्वोपवर्णितेति। अत एवेदं महाभाष्यमप्राप्तगुरुवृद्धशास्त्रोपदेशा असंस्कृतबुद्धयो नैव बोद्धुं शक्ता इत्याह—**तस्मिन्निति**। कृता=गुरूपदेशानुगतशास्त्राभ्यासजनितया व्युत्पत्त्या प्रकर्षं प्राप्ता, महती बुद्धिर्येषां ते तथाभूताः, तादृशव्युत्पत्तिवैकल्येन चाकृतबुद्धयः स्वल्पप्रज्ञा उच्यन्ते। तेषां तस्मिन् महाभाष्ये निश्चयः=निर्णयपर्यन्तो बोधः नैवावास्थित नैव प्रतिष्ठामलभत।

तेनेदमुक्तं भवति—अस्मद्गुरोस्तत्रभवतो वसुरातादन्यः कश्चिदिमं भाष्यार्णवमवगाहितुमलमिति ॥ ४७८ ॥

महाभाष्यस्याकृतबुद्धयगम्यत्वादेव संग्रहप्रतिपक्षभूतैस्तर्कविद्यामात्रवेदिभिराचार्यैर्बैजिप्रभृतिभिर्बुद्धयपाटवादिदं महाभाष्यमाभासीकृत्य विप्लावितमित्याह—**बैजिसौभवहर्यक्षैरिति**।

अयमर्थः—शुष्कतर्कानुसारिभिः शुष्कतर्कः=अन्यशास्त्रपरिमलरहितोऽनालम्बनः केवल एव भण्यते, तमेवानुसरन्ति ये प्रमेयनिर्णयाय ते तदनुसारिणस्तैः शुष्कतर्कानुसारिभिः। वैजिसौभवहर्यक्षैः=एतन्नामभिराचार्यैः। अयं च नामनिर्देशस्तेषां मन्दप्रज्ञत्वप्रख्यापनार्थः। तथा हि—बीजस्य शुक्रस्यापत्यं बैजिरिति। अनेन तदुत्पत्तौ पितुः शुक्रमेव पश्वाद्युत्पत्ताविव कारणम्, न तु तत्र पितुस्तपोवृत्तविद्यादिसंस्कारोऽपीत्युक्तं भवति। सौभवः=सुखेनैव स्त्रीपुंससमागमजन्मना भवति, न तु कृच्छ्रतपःप्रभृतिजन्यपुण्यपरिपाकेनेति सुभूः पिता, तस्यापत्यं सौभवः। एतेन पितर्यपि विद्यादिव्यतिरेकः सूचितः। हर्यक्षः=हरेरिव मर्कटस्येवाक्षिणी

ततश्चान्वाक्षिकीमात्रकुशलः कथं तन्निश्चिनुयादिति तर्कमात्रानुसारिभिस्तैस्तद्विप्ला-वितम्। तर्कश्च पुरुषाणां स्वबुद्धिमात्रनिर्मितविग्रहोऽव्यवस्थित एव। यदुक्तम्—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते" ॥ इति ४७९ ॥

इत्थं च परस्परवैमत्यादागमसंज्ञात्यागाच्च यथावस्थितो व्याकरणागमः पतञ्जलिशिष्येभ्यः कालपरिवासाद् भ्रष्टः सन् ग्रन्थमात्रे पाठमात्र एव व्यवस्थितो दाक्षिणात्येष्वित्याह—

**यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।**
**काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥४८०॥**

तदेवमुत्सन्नकल्पः संजातो व्याकरणागमः ॥४८०॥

---

यस्येति हर्यक्षः। अनेन मर्कटसादृश्येनानवस्थितचित्तत्वं सूचितम्। तथा च सुन्दरकाण्डे सीतावाक्यम्—"एतदेव हि ते मन्ये कपित्वं हरियूथप" इति, तैः। आर्षे ऋषिणा पतञ्जलिना सर्वार्थदर्शिना कृते संग्रहप्रतिकञ्चुके=संग्रहग्रन्थस्य सिद्धान्तरक्षार्थं कञ्चुकसदृशे। यथा देह-रक्षार्थं कञ्चुकं भवति, तद्वत् स्थिते ग्रन्थे महाभाष्ये, विप्लाविते=आभासीकृत्य विनाशिते सति, यः पतञ्जलिशिष्येभ्य इत्युत्तरेणान्वयः।

महाभाष्यं हि—बहुविधविद्यावादबलानुगतं स्वयं चालौकिकार्षदृष्टिप्रभवं व्यवस्थितम्। ततश्चान्वीक्षिकीमात्रकुशलः=तर्कमात्रशरणः, कथं तन्निश्चिनुयादिति तर्कमात्रानुसारिभि-स्तैस्तद् विप्लावितम्। तर्कश्च पुरुषाणां स्वबुद्धिमात्रप्रभवः पुरुषबुद्धीनामनवस्थितत्वेना-व्यवस्थित एव। तदुक्तं प्राक्—यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्तैरन्यै-रन्यथैवोपपाद्यते ॥ इति ॥ ४७९ ॥

इत्थं चाचार्याणा परस्परवैमत्यादागमसंज्ञात्यागाच्च=तत्तदागमजन्या याः संज्ञा ज्ञानानि तेषां त्यागाद् लोपाच्च, यथावस्थितः=पाठमात्रेणावस्थितः, व्याकरणागमः पतञ्जलिशिष्येभ्यः कालपरिवासात्=कालपरिवर्तनाद् भ्रष्टः सन् ग्रन्थमात्रे एव पाठमात्रे एव व्यवस्थितो दाक्षिणात्येष्वित्याह—य इति।

अयमर्थः—यः कस्मिंश्चित् काले, पतञ्जलिशिष्येभ्यः=ज्ञानदुर्बलान् पतञ्जलिशिष्यान् प्राप्य, भ्रष्टः=भ्रंशं सम्प्रदायलोपं प्राप्तः, व्याकरणागमः स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः, न त्वध्ययनाध्यापनपरम्परायां गुरुपूर्विकायां संप्रदायरूपायाम्। तदेवमुत्सन्नकल्पः=विनष्टप्रायः सञ्जातो व्याकरणागम इति ॥ ४८० ॥

अथ कालान्तरेण केनचिद् ब्रह्मरक्षसा लङ्कात आनीय दत्तं रावणविरचितं मूलभूतं व्याकरणागमं लब्ध्वा तेन चोपायभूतेन चन्द्राचार्यवसुरातादिभिः सकलानि न्यायबीजानि

अथ कालान्तरेण चन्द्राचार्यादिभिरागमं लब्ध्वा तेन चोपायभूतेन सकलानि भाष्यावस्थितानि न्यायबीजानि तान्यनुसृत्य व्याकरणागमः पुनरपि स्फीततां नीत इत्यभिधातुमाह –

**पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।**
**स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥४८१॥**

पर्वतात् त्रिकूटैकदेशवर्त्तित्रिलिङ्गैकदेशादिति । तत्र ह्युपलतले रावणविरचितो मूलभूतव्याकरणागमस्तिष्ठति, केनचिच्च ब्रह्मरक्षसाऽऽनीय चन्द्राचार्यवसुरातगुरुप्रभृतीनां दत्त इति । ते खलु यथावद् व्याकरणस्य स्वरूपं तत उपलभ्य सततं च शिष्याणां व्याख्याय बहुशाखित्वं नीतो विस्तरं प्रापित इत्यनुश्रूयते ॥ ४८१ ॥

अथ कदाचिद् योगतो विचार्य तत्र भगवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात् प्रणीत इति स्वरचितस्यास्य गुरुपूर्वक्रममभिधातुमाह—

**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।**
**प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः ॥४८२॥**

---

भाष्यावस्थितानि विज्ञाय तान्यनुसृत्य च पुनरपि व्याकरणागमो गुरुशिष्यसंप्रदायप्रवर्तनेन स्फीततां नीतः वृद्धिप्रकर्षं प्रापित इत्याह—**पर्वतादीति** ।

अयमर्थः—सः = पतञ्जलिशिष्येभ्यो भ्रष्टो ग्रन्थमात्रे व्यवस्थितो व्याकरणागमः, चन्द्राचार्यादिभिः = चन्द्राचार्यवसुरातगुरुप्रभृतिभिः, पर्वतात् = लङ्कावस्थितत्रिकूटपर्वतैकदेशत्रिलिङ्गपर्वतैकदेशात्, आगमम् = मूलभूतं रावणविरचितं व्याकरणागमम्, केनचिद् ब्रह्मरक्षसा आनीय दत्तं लब्ध्वा तेन चोपायभूतेन भाष्यावस्थितानि न्यायबीजानि सकलानि विज्ञाय भाष्यबीजानुसारिभिः = भाष्ये यानि न्यायबीजानि तदनुसारिभिस्तैः पुनरपि व्याख्याय गुरुशिष्यसंप्रदायप्रवर्तनेन बहुशाखत्वं नीतः = बहुमार्गत्वं विस्तरं प्रापित इति ।

इदमत्रानुश्रूयते—लङ्कायां त्रिलिङ्गपर्वतैकदेशे शिलातले रावणविरचितो मूलभूतो व्याकरणागम उट्टङ्कितस्तिष्ठति । स च केनचिद् ब्रह्मरक्षसा तत आनीय चन्द्राचार्यवसुरातगुरुप्रभृतिभ्यो दत्त इति । ते च खलु ततो यथावद् व्याकरणागमस्य स्वरूपमुपलभ्य शिष्येभ्यो व्याख्याय च बहुभिः प्रकारैर्विस्तरं प्रापित इति ॥४८१॥

अथ कदाचिद् योगतः = मनःप्रणिधाने , कस्मै अयं व्याकरणागमो देय इति विचार्य भगवता वसुरातगुरुणा ममैतदागमसंप्रदानाधिकारं संज्ञायायमागमो वाक्यपदीयेऽनुसृतो वात्सल्यात् प्रणीय दत्त इति स्वरचितस्यास्य ग्रन्थस्य गुरुसंप्रदायपूर्वकत्वमभिधातुमाह—**न्यायप्रस्थानेति** ।

न्यायस्य प्रतिष्ठा प्रस्थानं तस्य मार्गान् न्यायप्रस्थानमार्गान् न्यायप्रतिष्ठितैर्बहुभिर्मार्गैरिति यावत्। न्यायप्रस्थानमार्गास्तांस्तान् स्वं च दर्शनं व्याकरणसिद्धान्तलक्षणमभ्यस्यायं प्रणीतः। अनेन गुरुणा संज्ञाय न तथा ममायमागमसंग्रहः प्रणीतः, येन सन्देहो भवेदपि तु सावधानेनेत्युक्तं भवति। अस्माकमिति बहुवचनादन्येषामपि सहाध्यायिनां ग्रहणम्। अथवा मया तु तदनुच्छेदायायमुपनिबन्धः कृत इत्यात्मनो बहुमानः प्रकटितः ॥४८२॥

नन्वेतावानेव किमयं काण्डद्वयप्रोक्तो व्याकरणागम इत्याशङ्क्याह—

**वर्त्मनामत्र केषाञ्चिद् वस्तुमात्रमुदाहृतम्।**
**काण्डे तृतीये न्यक्षेण भविष्यति विचारणा ॥४८३॥**

अत्रास्मिन् वाक्यकाण्डे काण्डद्वये वा केषाञ्चिदेव न्यायवर्त्मनां वस्तुमात्रं बीजमात्रं प्रदर्शितमिव। शिष्टे तु तृतीयेऽस्य ग्रन्थस्य पदकाण्डद्वयनिष्यन्दभूते न्यक्षेणादरविशेषेण स्वसिद्धान्तपरसिद्धान्तवर्तिनां विचारणा युक्तायुक्तविचारपूर्वकनिर्णीतिर्भविष्यति। ततो नायमेतावान् व्याकरणागमसंग्रह इति ॥४८३॥

---

अयमर्थः - तान् = मूलभूतव्याकरणागमतो ज्ञातान् भाष्येऽवस्थितान्, न्यायप्रस्थानमार्गान् = न्यायस्य प्रतिष्ठा प्रस्थानं तस्य मार्गान, स्वञ्च दर्शनं व्याकरणसिद्धान्तलक्षणमभ्यस्य अयं वाक्यपदीयरूपः काण्डत्रयात्मक आगमसंग्रहोऽस्माकं गुरुणा तत्रभवता वसुरातेन प्रणीत इति।

पूर्वार्धेनैतदुक्तं भवति—गुरुणाऽसंज्ञाय न तथाऽयमागमसंग्रहः प्रणीतो येन सन्देहो भवेत्, अपि तु सावधानेनेति। अयमागमसंग्रहो गुरुणाऽस्माकं कृते प्रणीत इति वा योजना। तान् तान् न्यायप्रस्थानमार्गान् स्वं दर्शनं चाभ्यस्येत्यप्यपरो व्याख्याप्रकारः। अत्र व्याख्याने तानित्यस्यावृत्तिः कार्या। अस्माकं गुरुणेति योजनायामन्येषामपि सहाध्यायिनां ग्रहणं भवति, बहुवचननिर्देशात्। अथवाऽस्माकमयमागमसंग्रहः = मत्कर्तृकत्वेन प्रसिद्धोऽयमागमसंग्रहो वाक्यपदीयाख्यो गुरुणा प्रणीतो न तु मया; मया तु तदनुच्छेदायायं ग्रन्थरूपेणोपनिबन्धः कृत इत्यात्मनो गुरौ बहुमानः प्रकटित इति ॥४८२॥

ननु किमयमेतावानेव व्याकरणागमः, योऽत्र काण्डद्वयेन प्रोक्त इत्याशङ्क्यावशिष्टोऽपि सुमहानस्तीत्याह—वर्त्मनामिति।

अयमर्थः—अत्र = अस्मिन्, वाक्यकाण्डे = काण्डद्वये वा, केषाञ्चिदेव वर्त्मनाम् = न्यायमार्गाणाम्, वस्तुमात्रम् = बीजभूतं वस्तुमात्रम्, उदाहृतम् = उपलक्षणतयोक्तम्, न त्वेतावदेवेति परिगणितम्। शिष्टे तु तृतीयकाण्डे = अस्य ग्रन्थस्य पदकाण्डे प्रागुक्तकाण्डद्वयनिष्यन्दभूते, न्यक्षेण = नियतानि, नियन्त्रितानि अक्षाणि इन्द्रियाणि यस्मिन् कर्मणि तन्न्यक्षं मनसोऽवधानम्, तच्च विचारक्रियायामादरविशेषे स्वहेतुभूते पर्यवस्यति। एवञ्च न्यक्षेण = आदरविशेषेणेत्यर्थः। विचारणा = स्वसिद्धान्तपरसिद्धान्तवर्तिनां पदार्थानां युक्ता-

ननु तत्तन्न्यायप्रस्थानमार्गाभ्यासेन किं कृत्यं स्वदर्शनमेव निश्चितं किं न विचार्यत इत्याह—

**प्रज्ञाविवेकं लभते भिन्नैरागमदर्शनैः ।**
**कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता ॥४८४॥**

नानाविधैरागमदर्शनैरागमसिद्धान्तैः खलु प्रज्ञा विवेकं लभते वैशारद्यमाप्नोति । ततश्च निःसंदिग्धं स्वसिद्धान्तमेव संपरिष्कर्तुर्भिन्नागमदर्शनैः शक्तिर्जायते । अन्यथाऽदृष्टपरकीयागमस्वरूपेण प्रतिपत्त्रा स्वोत्प्रेक्षामेव तेषु तेषु चावस्थानेष्वनुसरता कियच्छक्यमुन्नेतुं प्रतिविधातुम् । कदाचित्परमर्षयो योगजधर्मोत्पन्नसामर्थ्याद् यथावत्पदार्थान् पश्यन्तः सिद्धान्तमलमिति शोभते । ये त्वारुरुक्षवः प्राथमकल्पिका मलिनचित्तवृत्तयः शास्त्रादेवातीतानागतव्यवहितपदार्थस्वरूपं निश्चिन्वन्ति, तेषां नानागमोपसेवयैवानुप्रसीदति भगवती प्रतिभेति युक्तम् ॥ ४८४ ॥

एतदेव निरूपयितुमाह—

**तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना ।**
**अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ ४८५ ॥**

---

युक्तत्वविचारपूर्वकनिर्णीतिर्भविष्यति । अतोऽयमेतावानेव व्याकरणागमसंग्रह इति भ्रमो न कार्य इति सूचितम् ॥ ४८३ ॥

ननु तत्तदागमप्रोक्तन्यायप्रस्थानमार्गाभ्यासेन किं प्रयोजनम् ? स्वदर्शनमेव विचार्य किं न निश्चीयत इत्याशङ्क्याह—प्रज्ञेति ।

अयमर्थः—भिन्नैः = नानाविधैः, आगमदर्शनैः = आगमसिद्धान्तैः, अभ्यासेन सुपरिदृष्टैः, प्रज्ञा = बुद्धिः, विवेकम् = वैशद्यम्, लभते = आप्नोति । अन्यथाऽदृष्टपरकीयागमस्वरूपेण तेषु तेष्ववस्थानेषु = अवसरेषु, स्वसिद्धान्तनिर्णयार्थं स्वतर्कमेव = स्वोत्प्रेक्षामेवानुधावताऽनुसरता प्रतिपत्त्रा, कियद्वा । अत्र वाशब्दो वाक्यालङ्कारे । कियच्छक्यमुन्नेतुम् = परसिद्धान्तं प्रत्याख्याय स्वसिद्धान्तमुत्प्रेक्षितुं कियच्छक्यम् । ततश्च स्वसिद्धान्तमेव संपरिष्कर्तुर्भिन्नागमदर्शनैः सामर्थ्यं स्वसिद्धान्तनिर्णयानुगुणं जायत इति निःसंदिग्धं भवति ।

अयं भावः—कस्मिंश्चित् समये परमर्षयो योगजधर्मोत्पन्नसामर्थ्याद् यथावत्पदार्थान् पश्यन्ति स्म, अतस्तेषां सिद्धान्त उद्देशमात्रेण कीर्तितोऽप्यलमिति शोभते । ये तु योगमारुरुक्षवः प्राथमकल्पिकाः अप्राप्तयोगैश्वर्याः प्राग्भवीयेन मलिनकर्माशयेन मलिनचित्तवृत्तयः शास्त्रादेवातीतानागतव्यवहितपदार्थस्वरूपं निश्चिन्वन्ति, तेषां नानागमोपसेवयैवानुप्रसीदति भगवती प्रतिभेति युज्यते वक्तुमिति ॥ ४८४ ॥

प्रतिष्ठामुपगतैः पूर्वैरागमैर्बहुविधैर्विना स्वयमेव तत्तदित्ययथायथमेवोत्प्रेक्षमाणानां विकल्पयतां प्रतिपत्तॄणां शास्त्रोपज्ञमेधाविरहिणां पण्डितम्मन्यानामभिमानाग्रहाघातानां तेषां भगवती विद्या विशुद्धप्रज्ञा प्रतिभालक्षणा न प्रसीदति अत्यर्थम्, किं तर्हि वृद्धोपसेवाशालिनामागमजुषां विगलिताभिमानानामेवैषा भगवती प्रज्ञा प्रसादमुपयातीति सिद्धः ॥ ४८५ ॥

तदयमत्र मेयसमुच्चयः—

वाक्यानामष्टधैवादौ विभागः परिकीर्तितः ।
शास्त्रीयमैमांसकयोः कीर्तनं वाक्ययोस्ततः ॥ १ ॥
बलाबलविचारोऽपि शास्त्रीयो व्याप्तिनिर्णयात् ।
ततश्चात्र समासेन वाक्यलक्षणनिर्णयः ॥ २ ॥
सन्देहश्चागमेनापि वाक्यभेदस्य दर्शितः ।
स्फोट एव तु सिद्धान्ते वाक्यं वाक्येषु साधितम् ॥ ३ ॥
पदवादस्त्वनुमतो नेति व्याकरणे स्थितम् ।
ततोऽन्विताभिधानस्याभिहितान्वयकस्य च ॥ ४ ॥
शब्दभागार्थभागाभ्यां दूषणव्रातकीर्तनम् ।
प्रसङ्गेनापरेऽप्यत्र वाक्यार्थाः षट् प्रदर्शिताः ॥ ५ ॥
अखण्डवाक्यपक्षे च चोद्यपञ्चककीर्तनम् ।
उपपत्तिः प्रतिनिधेर्नास्तीति प्रथमं यथा ॥ ६ ॥
पिकादिपदसन्देहो नोपपद्यत इत्यपि ।
श्रुतिवाक्यविरोधे तु श्रुतिरेव बलीयसी ॥ ७ ॥
प्रतिष्ठितस्य न्यायस्याप्येवं त्यागः प्रसज्यते ।
अवान्तराणां वाक्यानामुपपत्तिर्विरुध्यते ॥ ८ ॥
प्रासङ्गिकादिषु तथा लक्षणेष्वप्यसम्भवः ।
प्राप्नोत्येवमखण्डेऽस्मिन्वाक्ये दोषा उदाहृताः ॥ ९ ॥

---

पूर्वपद्योक्तमेवार्थं विशदीकृत्य निरूपयितुमाह—तत्तदिति ।

अयमर्थः—पुराणैः परीक्षापूर्वकं प्रतिष्ठामुपगतैः पूर्वैरागमैर्बहुविधैर्विना, स्वयमेव तत्तदित्ययथार्थमेव सति बाधे पूर्वं पूर्वं विहायोत्तरमुत्तरमुत्प्रेक्षमाणानां विविधं कल्पयतां प्रतिपत्तॄणां शास्त्रोपज्ञातार्थानुसारिमेधाविरहिणां पण्डितम्मन्यानामभिमानाग्रहाहतानामत एवानुपासितवृद्धानामत एव संप्रदायानभिज्ञानां तेषां भगवती विद्या = अविद्ययाऽतिरस्कृता = विशुद्धप्रज्ञा प्रतिभालक्षणा नात्यर्थं प्रसीदति, किन्तर्हि वृद्धोपसेवाशालिनामागमजुषां विगलिताभिमानानामेवैषा भगवती प्रज्ञा प्रसादमुपयातीति सिद्धम् ॥ ४८५ ॥

अपोद्धारं समाश्रित्य दोषास्त्वेते निराकृतः ।
संहितायां विभागेऽथ पदयोर्विलयं गते ॥ १० ॥
उपादानावधिं कर्त्तुं तयोरर्थः प्रकल्प्यताम् ।
इति दूषणमत्राधात्पदे वाक्ये च वाक्यवित् ॥ ११ ॥
तत्र न्यायवशादत्र स्वपक्षे दोषसंवृतिः ।
वाक्यार्थस्यात्र भेदोऽपि विकल्प्य परिकल्पितः ॥ १२ ॥
प्रतिभेदं च सिद्धान्ते वाक्यार्थ उपपादितः ।
प्रविभागाश्रयादत्र पदार्थस्यापि सम्भवः ॥ १३ ॥
स च द्वादशधा भिन्न इत्यत्रोपपादितम् ।
प्रतिभालक्षणं सम्यग्विधातुं संहितं कृतम् ॥ १४ ॥
पदभागार्थभागाश्च वितत्य प्रतिपादिताः ।
अन्वयव्यतिरेकाभ्यां विविक्ततोपपादिता ॥ १५ ॥
सनिमित्ता च साऽप्यत्र नामाख्यातसमाश्रया ।
उपसर्गनिपाताश्च कर्मप्रवचनीयकाः ॥ १६ ॥
पदभेदाः प्रसङ्गेन लक्षणेनोपलक्षिताः ।
सार्थकानर्थकत्वाभ्यां विचारे वर्णनिष्ठिते ॥ १७ ॥
कृतेऽप्यखण्डपक्षोऽत्र प्रतिष्ठामुपनामितः ।
पदवादेऽथ दोषाणां चतुर्णां परिकीर्तनम् ॥ १८ ॥
समासेषु विरुद्धार्थप्राप्तिरादावुदाहृता ।
अध्यादीनां तथा वाक्ये साधनस्याभिधायिता ॥ १९ ॥
अर्थासङ्गतिरप्यत्र बहुव्रीहेरुदाहृता ।
प्रज्ञुसंख्यादिषु तथा नास्त्यर्थोऽवयवेष्वपि ॥ २० ॥
इति चोद्यचतुष्केण पदवादः पराकृतः ।
स्थापितेऽखण्डपक्षेऽपि चोद्यसप्तकमाहितम् ॥ २१ ॥
द्वन्द्वे समासेनैव स्याद् बह्वर्थस्याभिधायिका ।
विभक्तिरिति दोषोऽत्र प्रथमं परिकीर्त्तितम् ॥ २२ ॥
वाक्यस्यार्थसमाप्तिस्तु प्रत्येकं नोपपद्यते ।
परामर्शश्च नैव स्यात् सर्वनामभिरेव च ॥ २३ ॥
अनुष्ठानं क्रमेणाथ वाक्यार्थस्य न जातुचित् ।
स्यादक्रमे त्वनुष्ठानं शक्यते न कथञ्चन ॥ २४ ॥

---

महता पुण्यपुञ्जेन पुण्यराजकृतां शुभाम् ।
विवृतिं प्राप्य संतीर्णो वाक्यकाण्डमहोदधिः ॥ १ ॥
तत्र संप्लवमानस्य जरसा मूढचेतसः ।
स्खलितं मे समाधातुं सज्जीभवत सज्जनाः ॥ २ ॥

एकदेशस्य करणे समुदायेऽर्थकारिता ।
अभिमन्यत इत्येतदखण्डे नोपपद्यते ॥ २५ ॥
एतानि पञ्च चोद्यान्यपोद्धारस्य समाश्रयात् ।
समर्थितानि वै सम्यगखण्डं वाक्यमिच्छता ॥ २६ ॥
अथाखण्डं यदा वाक्यं समासेष्वर्थवर्णना ।
पृथक् पृथक् तदा तस्याः सा च शास्त्रे प्रकीर्तिता ॥ २७ ॥
नञ्समासे पदार्थस्य विकल्पैर्बहुभिः पुनः ।
प्राधान्यं परिकल्प्याथ भाष्ये पक्षाः परीक्षिताः ॥ २८ ॥
यद्यखण्डमिदं वाक्यं नैषा स्यात् कल्पना क्वचित् ।
दोषावेतावपि शब्दप्रक्रियामात्रमेव च ॥ २९ ॥
शास्त्रप्रवृत्ताविति च निराकरणमेतयोः ।
ततश्चाखण्डपक्षस्य स बाध उपदर्शितः ॥ ३० ॥
जहत्स्वार्थविकल्पेन बहुव्रीह्यादिगामिना ।
प्रत्युत प्रश्नदोषश्च पदवादे प्रकीर्त्तितः ॥ ३१ ॥
प्रकृत्यर्थः प्रत्ययार्थ इति भिन्नौ परस्परम् ।
यावत् स्थितौ तयोरेकापायेनावगतिः कथम् ॥ ३२ ॥
इहाऽहं नास्तीति च सा दृष्टा स्याद्वास्तवे कथम् ।
पदार्थं प्रति दोषोऽयं पदवादे समुद्धृतः ॥ ३३ ॥
प्रत्ययद्वयगम्येऽर्थे एकस्मादेव तन्मते ।
अक्षीत्यादौ कथं च स्यात् सत्यता पदपद्धतेः ॥ ३४ ॥
सत्यत्वेऽथ पदानां स्यात् प्रकृतिप्रत्ययार्थयोः ।
कथं लक्षणशास्त्रेषु साङ्कर्येण व्यवस्थितिः ॥ ३५ ॥
पदार्थमन्यथैवादौ प्रतिपद्यान्यथा पुनः ।
वाक्यार्थप्रतिपत्तिश्च दृष्टा नैतत्समञ्जसम् ॥ ३६ ॥
सत्यभूतेष्वथ पदेष्विति वाक्यविदो जगुः ।
नव्यर्थानुपपत्तेश्च नास्ति वादः पदाश्रयः ॥ ३७ ॥
उपात्तात्यागसंप्राप्ते सर्वत्रेति च दूषणम् ।
सह प्रागुक्तदोषैश्चाप्येकादश समीरिताः ॥ ३८ ॥

---

शून्याश्विशून्याक्षिमिते वत्सरे वैक्रमे शुभे ।
मार्गशीर्षासिते पक्षे क्षयमासत्वमागते ॥ ३ ॥
चित्राभमनुसम्प्राप्ते बुधेऽथ हरवासरे ।
परप्रसादादम्बाया अम्बाकर्त्री व्युपारमत् ॥ ४ ॥

पदवादेऽत्र दोषास्तु पृथक् पक्षद्वयं पुनः ।
शब्दभागार्थभागाभ्यां विस्तरेण विचक्षणैः ॥ ३९ ॥

निराकृतमतो युक्तो वाक्यवादपरिग्रहः ।
दोषः संक्षिन्यतिक्रान्तः सूत्रकाराभिसंमतः ॥ ४० ॥

अपोद्धाराश्रयादत्र गौणमुख्यविचारणा ।
ततः कृता सुनियतं टीकाकारेण सादरम् ॥ ४१ ॥

सत्यासत्यविभागोऽपि ज्ञानानामुपपादितः ।
मुख्यानान्तरीयकयोरर्थयोरनिवर्तनम् ॥ ४२ ॥

ततस्त्वर्थचतुष्कस्य चिन्तनं विहितं क्रमात् ।
शब्दार्थनिर्णयोपायाः सादरं परिकीर्त्तिताः ॥ ४३ ॥

तात्पर्यं परिपाट्याश्चार्थतात्पर्यमपीति च ।
वाक्यनिष्ठं समासेन विचारितमतः पृथक् ॥ ४४ ॥

उत्सर्गस्याऽपवादस्य विवेकः परिकीर्तितः ।
संज्ञाशब्देष्वथ कृता निर्णय· परिवत्सरान् ॥ ४५ ॥

प्रत्येकं समुदाये च समाप्त्या वाक्यनिश्चितिः ।
न्यायः सञ्चिन्तितश्चात्र लक्षितोऽप्यभिधीयते ॥ ४६ ॥

अथ पूर्वोक्तसंक्षेपद्वारेणाप्युपपादितः ।
वाक्यवाक्यार्थनिष्ठश्च पदनिष्ठश्च निर्णयः ॥ ४७ ॥

वाक्यैकवाक्यतायाश्च विचारोऽपि निरूपितः ।
साकाङ्क्षत्वं निराकाङ्क्षा वाक्यानां परिकीर्तिता ॥ ४८ ॥

यद्वा चिन्तासमासेऽप्यन्यस्माद्वस्तुनिरूपिता ।
अथात्र तन्त्रन्यायस्य सिद्धिर्भाष्यानुगा स्मृता ॥ ४९ ॥

अवतारोऽपि भाष्यस्य संग्रहेऽस्तमुपागते ।
निबन्धहेतौ शास्त्रस्य टीकाकारेण कीर्तितः ॥ ५० ॥

संग्रहार्थाद्यनुगुणरूपत्वं चोपपादितम् ।
विप्लावनमथैतस्य संग्रहप्रतिपक्षतः ॥ ५१ ॥

---

काशीनाथतनूजेन हरिनाथानुजन्मना ।
बलियामण्डलान्तःस्थे छाताग्रामे जनुर्भृता ॥ ५ ॥

सौभद्ररघुनाथेन कृतेयं कृतिरुत्तमा ।
शिवापादयुगे न्यस्ता स्थेयादाचन्द्रतारकम् ॥ ६ ॥

कृतमाचार्यदेवज्ञैरावेशविवशैस्ततः ।
भ्रष्टस्याम्नायसारस्य वैयाकरणगामिनः ॥ ५२ ॥
मूलभूतमवाप्याथ पर्वतादागमं स्वयम् ।
आचार्यवसुरातेन न्यायमार्गान्विचिन्त्य सः ॥ ५३ ॥
प्रणीतो वि॰ ॰र्यं मम ०्याकरणागमः ।
मयापि गुरुनिर्दिष्टाद्भाष्यान्न्यायाविलुप्तये ॥ ५४ ॥
काण्डत्रयक्रमेणायं निबन्धः परिकीर्तितः ।
ग्रन्थकारेण ग्रन्थेऽस्मिन् स्वस्मिन्गुर्वागमः स्फुटम् ॥ ५५ ॥
इत्येवं वाक्यकाण्डस्य प्रमेयविषया स्फुटम् ।
सङ्गतिः कीतिता लघ्वी समासेन निराकुला ॥ ५६ ॥
विद्वज्जनानां यः खलु सर्वत्र गीयते जगति ।
तत उपसृत्य विरचिता राजानकशूरवर्मनाम्ना वै ॥ ५७ ॥
शशाङ्कशिष्याच्छ्रुत्वैतद्वाक्यकाण्डं समासतः ।
पुण्यराजेन तस्योक्ता सङ्गतिः कारिकाश्रिता ॥ ५८ ॥
गुरवे भर्तृहरये शब्दब्रह्मविदे नमः ।
सर्वसिद्धान्तसन्दोहसारामृतमयाय च ॥ ५९ ॥

इति श्रीपुण्यराजकृता वाक्यपदीयद्वितीयकाण्डटीका समाप्ता ॥

---

बीजत्रयस्तुतपदं त्रिनेत्रपरिजीवनम् ।
लोकत्रयानितिकरं मुदेऽस्तु परमं महः ॥ ७ ॥

इति श्रीरघुनाथशर्मकृतायामम्बाकर्त्रीसमाख्यायां व्याख्यायां वाक्यकाण्डं परिपूर्णम् ॥



# श्लोकानुक्रमणी

